PATAÑJALI'S

# VYĀKARAṆA MAHĀBHĀṢYA

WITH

## KAIYAṬA'S PRADĪPA

AND

## NĀGEŚA'S UDDYOTA

---

**Vol. V**



---

Edited with foot-notes etc.,



BY

Pt. BHĀRGAVAS'ĀSTRĪ JOS'I S'ĀSTRĀCĀRYA

PANDIT, WILSON COLLEGE, BOMBAY.



PUBLISHED
BY
SATYABHĀMĀBĀĪ PĀṆḌURAṄG
FOR THE 'NIRNAYA-SAGAR' PRESS,
BOMBAY.

1945.




Price 7 Rupees.



श्रीमद्भगवत्पतञ्जलिमहर्षिप्रणीतस्य

# पाणिनीयव्याकरणमहाभाष्यस्य

## षष्ठोऽध्यायः ॥

स च ऋषिकल्पोपाध्यायकैयटप्रणीतेन महाभाष्यव्याख्यानेन प्रदीपेन परिवृतः

सर्वतन्त्रस्वतन्त्रनागोजीभट्टकृतेन भाष्यप्रदीपव्याख्यानेनोद्द्योते-

त्यन्वर्थनामधेयेन समुल्लासितश्च ॥



प्रथमतः

## स्थानेविधिरूपं पञ्चमं खण्डम् ॥

काशीस्थप्रधानविद्यालयाधीतसकलशास्त्रेण

मुम्बापुरीयविल्सन्महाविद्यालयसंस्कृताध्यापकेन

परशुरामग्रामाभिजनजोशीकुलावतंसश्रीभिकाजीपन्तात्मजेन

**भार्गवशास्त्रिणा शास्त्राचार्येण**

प्राचीनानेकग्रन्थसाहाय्यं समवलम्ब्य विषमस्थलटिप्पण्या

पाठभेदादिपूरणेन च सम्भूष्य संस्कृतम् ॥



मुम्बापुर्यां

**सत्यभामाबाई पाण्डुरङ्ग**

निर्णयसागरमुद्रणालयार्थं तत्रैव मुद्रायित्वा प्रकाशितम् ।

शकाब्दाः १८६७, खिस्ताब्दाः १९४५





## प्रकरणसूचिः ।


| प्रकरणानि. | पृष्ठाङ्काः |
|---|---|
| प्रस्तावना. .... .... .... .... | १–१८ |
| विषयानुक्रमः. .... .... .... | १९–३२ |
| ग्रन्थः. .... .... .... .... | १–३७२ |
| सूत्रवार्तिकपाठः .... .... .... | ३७३–३९२ |
| श्लोकवार्तिकपाठः .... .... .... | ३९३–४०० |
| सूत्रसूचिः .... .... .... .... | ४०१–४०४ |




**योगेश्वरस्य** भगवतः परमकारुणिकस्य परमानुग्रहेणाद्य प्रदीपोद्भासित उद्द्योतपरिवृढः प्रभाभासुरो **महाभाष्यस्य** पतञ्जलिप्रणीतस्य **षष्ठोऽध्यायो** मुद्रणविधानेन शाणोल्लीढो मणिरिव चकास्तितराम् । अचिरोद्गतोऽयं महाभाष्यभागो न चिराद्विद्वज्जनकरकमलान्यधितिष्ठतीति साभिमानं विज्ञापयामः ।

अद्य यावत् कैय्यटनागोजीभट्टसदृशैः शब्दशास्त्रपारावारीणैः पदवाक्यप्रमाणकुशलैर्विद्वदग्रेसरैर्महाभाष्याब्धिर्नितरां परमादरेणालोडित इति नास्मादृशैरुदरम्भरैस्तत्र किञ्चिद्वक्तव्यमवशिष्यते, तथापि कविकुलगुरुणाऽऽदिकविना भगवता वाल्मीकिना सुस्तुतोऽपि रघुकुलभूषणो भगवान् रामचन्द्रः किम्भवभूतिप्रभृतिभिः कविभिः पुनः पुनर्न स्तूयते ?

न वाऽष्टादशपुराणनिर्माणचातुरीवैदग्ध्यवता भगवता व्यासेन बहुशो वर्णितोऽपि यशोदानन्दनः कविभिरनेकैः किमिव तोष्टूयते ? विदग्धवरैः सर्वैः संस्तूयमानस्य परब्रह्मणो यथा न किञ्चिद्धीयते तथा शब्दब्रह्मणोऽपि–इति असत्परिश्रमो न पुनरुक्तः स्यात् ।

**अपि च** कस्मिंश्चित्काले प्रसिद्धतरस्यापि पदार्थस्य कालान्तरेणाप्रसिद्धिमागतस्य पुनः पुनः संशोधनमपि न पुनरुक्तदोषमावहति । प्राचीनटीकाकृत्समये च प्रसिद्धतरस्य तस्यार्थस्य टीकायामनुपपादनमप्यत एव युज्यते । इदानीं महाभाष्ये यानि वार्तिकानि संगृहीतानि तान्येतान्येवेति निश्चयो महता प्रयत्नेनाप्यशक्य इति विदुषां नाविदितम् । तथा **श्लोकवार्तिकानि** यानीह दृश्यन्ते तानि किं महर्षिणा कात्यायनेन कृतानि उतान्येन केनापि महत्तरेणेत्येतदपि बहुतरकालव्यवायाज्ज्ञातुमशक्यमिवावभासते ।

अथायमत्र प्रश्न उपपद्येत यत्–वार्तिककर्तुरनभिधानेऽपि तदनुसारेण कृताः प्रयोगाः साधव एव, भाष्यपरिगृहीतत्वादखिलानि तानि प्रमाणान्येव–इति किमु तत्कर्तुरभिधानानभिधानेन ? व्याकरणस्य चेन्द्रचन्द्रादिमहर्षिभेदेन भिन्नत्वात्तत्तन्महर्षिकर्तृकाण्यपि वाक्यानि भाष्यपरिगृहीतानि भवेयुरिति न स विषयः क्षोदक्षेममर्हति–इति । सत्यम् । न वयमिन्द्रचन्द्रादिमहर्षिवचसां द्रोहं कुर्मः किन्तु यद्यत्र कश्चिच्चतुर्थोऽपि मुनिः प्रमाणत्वेनाश्रीयेत तदा **त्रिमुनिव्याकरणमित्येषा प्रसिद्धिर्विलयं यायात् ।**

**ननु** सूत्रकृतैव बहुषु सूत्रेषु 'लङः शाकटायनस्यैव' 'ऋतो भारद्वाजस्य' इत्यादिप्रक्रमेण शाकटायनप्रभृतीनामाचार्याणां प्रामाण्यमाश्रितमिति त्रिमुनिव्याकरणमित्येषा प्रसिद्धिः कविकल्पनैव । भाष्यकृताऽपि 'अपर आह' 'भारद्वाजीयाः पठन्ति' इत्येवंविधस्य ग्रन्थस्योक्तत्वात्त्रिमुनिव्याकरणमित्येतन्नैवाश्रयणीयमिति चेत्, **न**; सूत्रकृता न शाकटायनप्रभृतीनामाचार्याणां वचनान्यत्रोपनिबद्धानि किन्तु तेषां नामग्रहणेनैव तन्मतोल्लेखः क्रियते । स च नैतत्प्रसिद्धेः प्रतिकूलः, प्रत्युतास्य व्याकरणस्य निर्मूलत्वशङ्कां व्यपनुदति । व्याकरणञ्चैतत् 'कलौ पाराशरी स्मृतिः' इतिवदिदानीं प्रमाणम्, तच्च प्राचीनपरम्परानुबद्धमित्येघानेन ज्ञायत इत्यपरमनुकूलम् । भाष्यकृताऽपि यदि तत्तन्नामपुरस्कार एव कृत इत्याश्रीयते तदाऽनुकूलमेव । यदि चान्येषामपि महर्षीणां वचसामत्र प्रमाणत्वेनोपन्यासस्तदा शङ्केयं समुदेति–त ऋषयोऽप्यत्र प्रमाणमिति, तदा च त्रिमुनिव्याकरणमित्येषा प्रसिद्धिर्भज्येत ।

भाष्यकृदुपन्यस्तवचसामिदानीं पठनपाठनशैलीशैथिल्येन भेदावबोधदुरूहत्वात्तद्रक्षनविवेकोऽत्र गुरुचरणशुश्रूषाप्तसन्मतिभिर्दृढतरभाष्याभ्यासवशात्तद्वचःपरिशीलनप्राप्तविचारविभवैश्च प्रस्तूयत इति **तदनुसन्धानमभ्यर्थ्यते ।**

एतत्तु तत्र विचारकक्षामापतति यत्–यद्यत्रान्येऽपि ऋषयः प्रभवन्ति तदा रामायणाद्यार्षग्रन्थेषु परिदृश्यमानान् 'कृत्य' इत्यादिप्रयोगान्परिपश्यन्तो वयं तादृशप्रयोगान् परिकल्पयितुं समर्था इति 'आर्षत्वात्साधु' इत्यादि टीकाकृदुल्लेखः प्रामादिक एव स्यात् । तत्तुल्यन्यायात् 'अवैहि मां किंकरमष्टमूर्तेः' इति कालिदासोक्तौ विविदिषन्तो विद्वांसोऽपि परास्ता भवेयुः । 'चेष्टा व्यनेशन्निखिलास्तदाऽस्याः' इति श्रीहर्षस्य तु प्रमाद इति नागोजीभट्टोक्तिः प्रामादिकैव स्यात् । यथाऽपभ्रष्टभाषाव्याकरणेषु असाधुत्वेन परिगणिता अपि प्रयोगा यत्रकुत्रापि परिदृश्यमानाः शनैः शनैः साधुत्वकक्षामारोहन्ति तद्वदत्रापि मुनित्रयवचोविरुद्धा

 

अपि प्रयोगाः शनैः शनैः साधुत्वमापद्येयुः । तथा च पाणिनीयव्याकरणस्यैव विलोपप्रसङ्गः, गीर्वाणवाणीविलयप्रसङ्गश्चेति **व्याकरणप्रणेतारः परिगणिताः कतिपय एवाभिमन्तव्याः** । अत एव त्रिमुनिव्याकरणमित्यभियुक्तोक्तिः संगच्छते । भगवता भाष्यकारेणापि तत्र तत्रापाणिनीयं तु भवतीत्यादि वदताऽस्य शास्त्रस्य परिमितऋषिकर्तृकत्वमेव स्वीक्रियते ।

तत्र भगवान् **पाणिनिः** सूत्राणि प्रणिनाय । **कात्यायनश्च** स्वीयैर्वार्तिकैस्तत्सूत्ररूपं व्याकरणं समुपबृंहयांचकार । भगवान् भाष्यकारः **पतञ्जलि**र्महता यत्नेनापि दुरवगाहमेतत्समवलोक्य व्याख्यानानां चानेकविधत्वं सम्परिपश्यन् शब्दसाधुत्वे सुपरिनिष्ठितानामपि भ्रान्तिं समुपलभ्य च परमकृपालुतया सूत्रवार्तिकव्याख्यानं चिकीर्षुर्गोनर्ददेशेऽवतीर्य दर्भपवित्रपाणिः प्राङ्मुख आसीनो महता यत्नेनासन्दिग्धं सुपरिष्कृतं सुश्लिष्टं मधुरतराक्षरसन्ततिसन्ततं गीर्वाणभाषाभूषणभूतं वाक्यप्रमाणाभ्यामन्वितं सांख्यदर्शनानुगतं साहित्यसंमुद्रितं प्राचीनपरम्परानुविद्धं सर्वप्रमाणानामपि प्रमाणभूतं **महाभाष्यं** विचरयामास । यमवष्टभ्याद्यत्वेऽपि शफरीवत्फर्फरायमाणा मादृशाः शब्दसाधुत्वविषये निःशङ्कं ब्रुवते, भाष्यव्यासङ्गेन प्रतिष्ठां लभन्ते च ।

भाष्यप्रणयनपद्धतिश्च भगवतः—येन क्रमेणाष्टाध्याय्यां सूत्राणि प्रणीतानि तं क्रममनतिक्रम्य व्याख्येयसूत्राणि संगृह्य प्रश्नोत्तररूपेण पदकृत्यं व्याख्यां च विधाय तत्र तत्र व्याख्यानसम्बद्धानि वार्तिकान्युपन्यस्य कात्यायनप्रणीतानि वार्तिकानि कुण्डलनाभाष्येण विभूष्य वार्तिकपरिचयार्थं तद्गौरवनियन्त्रणया वा वार्तिकानि चावतरणदानैर्विशेषविचारपरभाष्यैश्च संयोज्य व्याख्यानरीतिरभिनवैव काचित्समुद्भासिता दरीदृश्यते । पुष्कलानि चोदाहरणानि प्रसिद्धतराणि वैदिकलौकिकानि तत्तत्स्थलेषु सूपयुक्तानि भाष्यकृतां **सर्वज्ञत्वमभिव्यञ्जयन्ति ।**

अत्र च प्रसङ्गवशात् केषुचित्सूत्रेषु वार्तिकप्रणयनाभावात् स्वाशयप्रकटनाभिप्रायाद्वा क्वचित् श्लोकवार्तिकानि अपि प्रयुज्यन्ते। **वार्तिकश्लोकवार्तिकयोस्तारतम्यं** तु भगवता निपुणतरमुपपादितम्। तद्यथा—'भ्रस्जो रोपधयो रमन्यतरस्याम्' (६।४।४७) इति सूत्रे 'भ्रस्जादेशात् सम्प्रसारणं विप्रतिषेधेन' इति वार्तिकं 'भ्रस्जादेशात्सम्प्रसारणं भवति विप्रतिषेधेन' इति अन्यूनैर्भाष्याक्षरैर्व्याख्यातम् । एतदेव कुण्डलनाभाष्यमित्युच्यते । श्लोकवार्तिकञ्च 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' (६।४।१४९) इति सूत्रे 'तथाऽयौ येऽन्त्यथर्वसु' इत्येतत् 'अन्ति ये च दूरके' इत्युदाहरणदानेनैव संभूषितम् । उदाहरणमात्रं चैतद्वार्तिकश्लोकवार्तिकविषये प्रदर्श्यते । एवञ्च वार्तिकानि भाष्यकृताऽन्यूनाक्षरकुण्डलनया सम्भाव्यन्ते, श्लोकवार्तिकानि च यथाकथञ्चित्कुण्डलनामात्रेणेत्ययं महान् भेदोऽनयोर्वार्तिकश्लोकवार्तिकयोः पर्यवतिष्ठते । तानि चेमानि वाक्यभूतानि वार्तिकानि कात्यायनप्रणीतानीत्यत्र तु न विवादावसरः ।

**श्लोकवार्तिकविषये** च श्रीमन्नागोजीभट्टसमयपर्यन्तं तत्कर्तुरुपलम्भ आसीदित्यनुमीयते यतो भट्टैस्तद्विषये न विशेषतः किमप्युक्तं, न वा तद्विषये विशेषो विशयः कश्चिदापादितः । शक्यते चैतदविच्छिन्नभाष्यपठनपाठनशैलीसमृद्धेऽस्मिन् भारते वर्षे वार्तिकश्लोकवार्तिककर्तृपरिचयो दृढतरपठनपाठनसम्प्रदायप्रसिद्ध इति न तद्विषये कश्चित्सन्देहः—इत्यध्यवसातुम् । इदानीं सम्प्रदायलोपात् तान्युभयविधान्यपि वार्तिकानि कात्यायनस्यैव, अन्यकर्तुरनभिधानात् । तथा चैवमनुमातुमपि शक्येत— श्लोकवार्तिकानि कात्यायनकर्तृकाण्येव, अन्यस्य कस्यचन कर्तृत्वेनाप्रसिद्धत्वात् । यदि कश्चिदन्यः कर्ता स्यात्तदा कात्यायनवत् सोऽपि प्रसिद्धः स्यात्, तदभावादेककर्तृकाण्येवेति । तदेतच्चात्रानुसन्धीयते यत्—वार्तिकान्युभयविधान्यपि कात्यायनप्रणीतानि, उतान्येन केनापि, अथवा कात्यायनकृतानि प्रतिसूत्रमुपलभ्यमानानि वाक्यभूतानि, श्लोकवार्तिकानि चान्यकृतानीति । तत्र वाक्यरूपाणि वार्तिकानि कात्यायनकृतानीत्यत्राद्य यावद्विवाद एव नास्तीति 'अन्येन केनापि कृतानि' इत्ययं पक्षो नावतिष्ठते । उभयविधान्यप्येतानि कात्यायनकृतान्येवेति पक्षस्तु विचारसहः । यद्यपि वाक्यरूपे वार्तिके भाष्यकृताऽन्यूनाक्षरैः कुण्डलना क्रियते न तथा श्लोकवार्तिकेष्विति भाष्यकृद्व्यवहारभेददर्शनान्नैतान्येककर्तृकाणीति वक्तुं शक्यम्, तथापि वाक्येषु वार्तिकमेवैतदिति प्रज्ञभिज्ञोपोद्बलकप्रमाणाभावात्कुण्डलनया तत्साध्यते, श्लोकेषु तु छन्दोबद्धत्वाद्वार्तिकपरिमाणग्रहस्य सुग्रहत्वेन यथाकथञ्चिदेव कुण्डलनया निर्वाह्यत इति कुण्डलनान्यूनाधिकभावस्तयोर्न भिन्नकर्तृकत्वसाधकः । व्याकरणे चास्मिन् पाणिनिकात्यायनपतञ्जलीनां स्वातन्त्र्येण प्रामाण्यं नान्यस्य कस्यचन ऋषेः । यदि श्लोकवार्तिककारो भिन्नः कश्चनाश्रीयेत तदा तस्य प्रामाण्यं न स्यादतस्तान्यपि तत्कृतान्येवेति वक्तुं युक्तम् । एवञ्च यदि श्लोकवार्तिककृत् प्रबलतरप्रमाणपरम्पराभिरन्यः कोऽपि प्रमेयः स्यात्तर्ह्येव तद्भेद आश्रयितुं युक्तो नान्यथा—इति चेत्, सत्यम्; पाणिन्युपज्ञे व्याकरणे शाकटायनभारद्वाजादीनां प्रामाण्यं पाणिनिद्वारैव सम्भवति, न तु स्वातन्त्र्येण सर्वतन्त्रस्वतन्त्राणामपि तेषां प्रामाण्यमाश्रयितुं युक्तम् । तथा श्लोकवार्तिककारस्य मुनित्रयादन्यत्वेऽपि भाष्यपरिगृहीतत्वात्प्रामाण्यं सुशकम् । अत एव 'अपर आह' 'भारद्वाजीयाः पठन्ति' इत्यादिभिरवतरणैरुपभूषितान्यपि तत्तदृषिवराणां मतानि भाष्यपरिगृहीतत्वात्प्रमाणानीति भाष्ये तदुपस्कारो युज्यते । एवञ्च श्लोकवार्तिककारस्य वाक्यकाराद्भेदेऽपि तत्प्रामाण्याप्रामाण्यविषये न कश्चिद्विवाद आस्थीयते, सूत्रपरिगृहीतत्वाच्छाकटायनादीनां प्रामाण्यवत् भाष्यपरिगृहीतत्वादेतेषामपि प्रामाण्यमित्येव चकास्तितराम् । अतश्च तान्येवोभयविधानि वार्तिकानि स्थलविशेषजातानि प्रदर्श्य **तयोर्भिन्नकर्तृकत्वं** प्रसाध्यते ।

**अथ स्त्रियाम्** ( ४।१।२ ) इति सूत्रे भाष्ये—

**'संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान् । तस्योक्तौ लोकतो नाम गुणो वा लुपि युक्तवत् ॥'**

इति श्लोकवार्तिकमुक्त्वा 'स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टावादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः' इति वार्तिकमुच्यते। तत्र 'तस्योक्तौ लोकतो नाम' इत्यस्य 'तस्योक्तौ=वचने लोकतो नामैतद्भवति-स्त्री पुमान् नपुंसकमिति' इत्येवं सम्पुटीकरणाद्वार्तिकमेवैतदित्यत्र न शंकालेशः। यद्येतद्भाष्यवचनमेव स्यात्तदा सम्पुटीकरणं पुनरुक्तत्वाद्भाष्यकारो नाकरिष्यत्। येषु वचनेषु सम्पुटीकरणं दृश्यते तानि वचनानि न भाष्यकारस्य, किन्तु अन्यस्य कस्यचन तानि-इति नागोजीभट्टैरभ्यधायि-'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे' ( ४।१।७८ ) इति सूत्रे 'शब्दान्तरमिदं विद्यात् दृष्टमभ्यन्तरं त्रिषु' इति श्लोकभाष्यव्याख्यानावसरे 'एते श्लोका भाष्यकृत एव, न वार्तिककृतः, सम्पुटीकरणाभावात्' इति । एवञ्च येषां वचनानां भाष्ये सम्पुटीकरणं दृश्यते तानि भाष्यकृदन्यस्य वार्तिककारस्येति स्थितम्। अत एव 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री-' इति वार्तिकमेवेति निर्विवादम्। यदि च कात्यायनस्यैवेदं श्लोकवार्तिकं स्यात्तदा 'गुणो वा लुपि युक्तवत्' इत्येतमंशं व्याख्याय 'न चैतन्मन्तव्यं स्वमनीषिकयोच्यत इति। पठिष्यति ह्याचार्यः-लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति' इत्येवं कात्यायनवार्तिकेन तस्य प्रामाण्यं न वदेद्भाष्यकारः। 'तस्योक्तौ लोकतो नाम गुणो वा लुपि युक्तवत्' इत्यस्य च लिङ्गस्योक्तौ लोकत एतद्भवति-स्त्री पुमानिति, वध्रिकादिषु तु गुणः=लिङ्गं लुपि युक्तवदिति भवतीत्यर्थः। यद्यपि नागोजीभट्टैः 'गुणो वा लुपि युक्तवत्' इति व्याख्यानावसरे-'भाष्ये-**गुणो वेति।**' इत्युक्तम्, तेन च श्लोकोऽयम्भाष्यकारस्य नान्यस्येति प्रतिभाति, तथापि केवलं प्रतीकप्रदर्शनार्थमेव तादृगुक्तिः। उद्द्योते प्रदीपस्थितान्येव प्रायः प्रतीकानि गृह्यन्ते, यत्र च भाष्यवार्तिकस्थानि प्रतीकानि गृह्यन्ते तत्र 'भाष्ये' इत्युक्तिः स्थलविशेषप्रदर्शनार्थैवेति शैलीसिद्धोऽयं सम्प्रदायो भट्टानाम् । अन्यथाऽस्य भाष्यकारवचनत्वे 'तस्योक्तौ लोकतो नाम' इत्यंशस्य 'तस्योक्तौ वचने लोकतो नामैतद्भवति स्त्री पुमान् नपुंसकमिति' इत्येतादृशं सम्पुटीकरणं पुनरुक्तत्वादयुक्तमेव स्यात्, अतो नैतद्भाष्यकारस्य। एवञ्च 'न चैतन्मन्तव्यं स्वमनीषिकयोच्यते' इत्युक्त्वा 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वार्तिकप्रामाण्यं ब्रुवता भाष्यकारेणैतत्साधितं यत्-अत्र मुनित्रयादन्यस्य वचनमत्रोद्धृतं तत् न स्वातन्त्र्येण प्रमाणम्, किन्तु मुनित्रयवचनानुकूलत्वेनैवेति नात्र **मुनित्रयादन्यः कश्चित्प्रभवतीति** । यद्येद्भाष्यकारस्यैव वचनं स्यात्तदा तस्य स्वतःप्रमाणत्वेन वार्तिककारमुखप्रेक्षणमयुक्तमेव स्यात् । यदि चायं श्लोको वार्तिककारस्य तदा तु स्वस्यैव स्ववचनप्रामाण्योपन्यासोऽयुक्ततरः स्यादिति सुस्पष्टमेव तद्विदाम्।

ननु लिङ्गविषये स्वसिद्धान्तप्रदर्शनोपक्रमे 'अवश्यं कश्चित्स्वकृतान्त आस्थेयः। कोऽसौ स्वकृतान्तः' इति भाष्यकारोक्त्या भाष्यकारस्यैवायं 'संस्त्याने स्त्यायतेः-'इत्यादिः श्लोको नान्यस्य कस्यचनेत्यवशिष्यते। यदि चायमभाष्यकृत एवेत्याश्रीयेत तदा 'न चैतन्मन्तव्यं स्वमनीषिकया-' इत्याद्युक्तिरपि स्वरसतः संगच्छते । अन्यथोपक्रमे 'स्वकृतान्त आस्थेयः' इति स्वशब्दमुपपाद्योपसंहारेऽपि स्वशब्दोक्तिः स्वरसतो न संगच्छेतेति चेत्, **न** । भगवतो भाष्यकारस्य स्वतःप्रमाणत्वात् 'न चैतत्स्वमनीषिकया-' इत्याद्युक्तिः परकीयवचनोपन्यास एव तस्य प्रामाण्यप्रदर्शनायोपयुक्ता सूपपादिता स्यात्। अन्यथा स्वकीयेष्टिमवलम्ब्य तत्र तत्र सूत्रवार्तिकप्रत्याख्यानं भाष्यकृत्कृतमप्रमाणमेव स्यात् । अथ च 'स्त्रियाम्' इति सूत्रोपक्रमे 'लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रुकुंसे टाप् प्रसज्येत' इत्येतदपि भाष्यवचनमेवेति स्वीक्रियमाणे तस्य व्याख्यानमन्यूनाक्षरैर्भाष्यकृद्भिः प्रदर्शितं 'लिङ्गात्स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप्प्राप्नोति' इत्येवं द्विरुक्तमयुक्तञ्च स्यात्। एवमेव 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री-' इत्यादेरपि सम्पुटीकरणदर्शनादयं श्लोको न भाष्यकारस्य, किन्तु तत्समये प्रसिद्धस्य विदुषोऽन्यस्यैवेति सुनिश्चितं ब्रूमः। तस्य च प्रामाण्यप्रदर्शनाय 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वार्तिकाश्रयणमपि स्वरसत उपपद्यते। एवञ्च **मुनित्रयादन्यः कोऽपि नात्र प्रमाणमित्यपि भाष्यकारैः प्रदर्शितम्।**

वार्तिकश्लोकवार्तिकविषये प्रदीपोद्द्योतादिदर्शनादस्माभिरेवं सिद्धान्तितम्-यस्य वाक्यस्यान्यूनाक्षरैः सम्पुटीकरणं भाष्ये दृश्यते तत्कात्यायनप्रणीतं वार्तिकम् । यस्य च श्लोकस्य यथाकथञ्चित्सम्पुटीकरणं न तत्कात्यायनप्रणीतम्, अपि तु श्लोकवार्तिककारस्यान्यस्य कस्यचन। यस्मिंश्च सम्पुटीकरणं नैव दृश्यते ते भाष्यकारस्य अन्यस्य वा श्लोकाः, न वार्तिकानीति ॥

येषु च श्लोकेषु सम्पुटीकरणं न दृश्यत एतादृशानि स्थलान्यबहून्यपि अनेकानि वर्तन्ते, तद्यथा—'वित्तो भोगप्रत्यययोः' ( ८।२।५८ ) इति सूत्रे—

**'यस्य विदेः श्नशकौ तपरत्वे तनवचने तदु वा प्रतिषेधौ।**
**श्यन्विकरणान्नविधिश्छिदितुल्यो लुग्विकरणो वलि पर्यवपन्नः ॥'**

इति श्लोकवार्तिकमुपपाद्य 'एष एवार्थः-**ययोर्विदोः श्नशावुक्तौ तयोर्नत्वस्य वा नञौ । ययोस्तु श्यंल्लुकौ ताभ्यां छिदिवच्चेड्ढ इष्यते ॥**' इत्येवं वार्तिकार्थप्रतिपादकः श्लोक उक्तः । ततश्च 'अपर आह—**वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः।**' इति श्लोकद्वयमुक्तम्। अनयोश्च सम्पुटीकरणाभावान्नैतौ वार्तिकश्लोकौ। तयोराद्यः कदाचित् भाष्यप्रणेतुरपि स्यादित्येवानुमातुं शक्यम्, द्वितीयस्त्वपरस्यैव कस्यचनेति सुस्पष्टमेवोक्तं भगवता।

तथा-'वाक्यादेरामन्त्रितस्यासूया-' (८।१।८) इति सूत्रे असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थ्यत्वमालक्ष्य तद्ग्रहणे विप्रतिपत्तिं प्रदर्श्य तत्पदसार्थक्यमेवं प्रसाधितम्-'एवं तर्ह्याह- **साम्तैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः।**

**लाडनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ।'** इत्यादिना । श्लोकश्चायं न वार्तिककारस्य, किन्तु तद्भिन्नस्यान्यस्येति प्रतीयते । अत्र च न सम्पुटीकरणलेशोऽपि ।

तथा–'शाच्छोरन्यतरस्याम्' (७।४।४१) इति सूत्रे–श्यतेरित्वं व्रते नित्यमिति वक्तव्यं संशितव्रतादिसिद्ध्यर्थम् । तन्न वक्तव्यमित्युक्त्वा **'देवत्रातो गलो ग्राह इति योगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥'** इति श्लोक उक्तः । अयञ्च भाष्यकारस्य प्रायः सम्भवति । न चात्र कथमपि सम्पुटीकरणम् ।

तथा–'युष्मदस्मद्भ्यां ङसोऽश्' (७।१।२७) इति सूत्रे **'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वं नोपपद्यते ।'** इत्ययं श्लोक उक्तः । नायं वार्तिकसंज्ञां लभते, सम्पुटीकरणाभावात् । एतादृशकतिपयोदाहरणदर्शनादेव निश्चयेनैतज्ज्ञातुं शक्यं यत्—विभिन्नस्थलेषु वैचित्रीकरणं भाष्यकृतां नैतत्स्वाभाविकम्, अपि तु अभिप्रायविशेषेण वैचित्रीकरणं तत्र तत्र युज्यते–इति । एवञ्च श्लोकवार्तिकरूपः कश्चित् प्रकारविशेषो भाष्ये परिदृश्यते स न भाष्यकारस्य न वा वार्तिककृत इति 'न चैतन्मन्तव्यं स्वमनीषिकयोच्यते' इति भाष्यदर्शनात् प्रतीयते । उभावपीमौ वार्तिककारस्येति स्वीकुर्मस्तदा स्वस्य स्वेनैव प्रामाण्याश्रयणमयुक्तं स्यात् । भाष्यकारस्यायं श्लोक इत्याश्रयणं तु सुतरामशक्यम् । सर्वतन्त्रस्वतन्त्रस्य भाष्यकारस्य वार्तिकमुखेन प्रामाण्याश्रयणं कल्पतरुमूले उपविष्टस्य भोजनार्थं सत्राश्रयणमिव नातीव रुचिकरमिति **अन्यस्यैवायं कस्यचन श्लोक** इति सुव्यवस्थितम् ॥

यद्ययं वार्तिककारः कश्चिदन्यः स्यात्तदा तस्य प्रामाण्यं वार्तिकमुखेनोपपादयता भाष्यकृता स्वसम्मतिरिव वार्तिककारसम्मतिरपि प्रदर्शितेति न काचित्सन्दर्भाशुद्धिः ।

ननु 'स्त्रियाम्'इति सूत्रस्थोऽयं श्लोको भाष्यकारस्यैव, नान्यस्य, स्वमतप्रामाण्यप्रदर्शनायैव 'न चैतन्मन्तव्यं' इत्याद्युक्तिः प्रौढ्या भाष्यकारेण प्रदर्शितेति चेदाग्रहस्तदाऽत्रावधेयम्—'अकथितञ्च' (१।४।५१) इति सूत्रे भाष्ये 'किमुदाहरणम्' इत्युक्त्वा

**'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।**
**ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥'**

इति स्वकीयः श्लोकः प्रदर्श्यते । स्वकीयत्वं चास्य व्याख्यारूपकुण्डलनादर्शनाभावादवगम्यते । ततश्चास्मिन् सूत्रे वाक्यरूपवार्तिकाभावात् 'कथिते लादयश्चेत्स्युः–' इत्यादिश्लोकवार्तिकमुपपाद्य 'अपर आह–प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इत्युक्तम् । अत्र 'कथिते लादयश्चेत्स्युः' इत्यस्य 'अपर आह' इत्यादेश्च कुण्डलनादर्शनान्नेमौ भाष्यकारस्येति वर्णयितुं शक्यम् । अतश्चैतावन्यकर्तृकावित्याश्रीयमाणे 'अपर आह' इत्याद्युक्त्या पूर्ववार्तिककर्त्रपेक्षयाऽन्यकर्तृकत्वमुत्तरस्येति सुस्पष्टमेव । एवञ्चैतत्सूत्रावलोकनात् श्लोकवार्तिकानि नैककर्तृकाणि–इत्यप्यापतितम् । 'कथिते लादयश्चेत्स्युः' इति श्लोकवार्तिकं कात्यायनमहर्षेरेवेत्याश्रीयमाणेऽपि 'अपर आह' इत्युक्त्या 'प्रधानकर्मण्याख्येये' इत्येतत्तदन्यस्येत्याश्रयणं गले पतितमेव ।

ननु 'कथिते लादयश्चेत्स्युः' इति 'प्रधानकर्मण्याख्येये' इति च श्लोकद्वयमपि भाष्यकारस्यैव । अत एव 'आगम एवायं न स्वमतिपरिकल्पनेति दर्शयितुमाह—**अपर इति'** इत्येवमवतरणं 'अपर आह' इत्यादिग्रन्थस्य कैयटः परिकल्पयति । अत एव च 'कारकं चेत्तुना कथा' इत्यस्यावतरणमुद्द्योते 'एतदेव व्यतिरेकमुखेनोपपादयति–भाष्ये—**कारकं चेत्तुना कथेति'** इतीदृशमुपपद्यते । अन्यथा 'उपपादयति वार्तिके' इति हि उद्द्योतकृतोच्येत । अत एव गतिबुद्धिप्रत्यवसानार्थेति सूत्रे मनोरमायां 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम्—इत्युक्त्वा 'ण्यन्ते कर्तुश्च' कर्मण इति वदतो भाष्यकृत एव तत्र प्रमाणत्वात्' इत्युक्तं सङ्गच्छते । तथा तस्मिन्नेव सूत्रे शब्दरत्नस्य 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । इत्युक्तेः' इत्यस्य व्याख्यायां भैरवमिश्रेण **'इत्युक्तेरिति** । इति भाष्योक्तेरित्यर्थः' इत्युक्तं स्वरसतः संगच्छते । पायगुण्डोपाह्ववैद्यनाथेन भावप्रकाशे 'इत्युक्तेति' इति शब्दरत्नप्रतीकमुपादाय 'इति भाष्योक्तेरित्यर्थः' इति व्याख्यातमुपपद्यते । एवञ्च 'कथिते लादयश्चेत्स्युः' इत्यादि श्लोकद्वयमपि भाष्यकृत्कृतमेवेति कैयटादिप्रामाण्यात्प्रतीयत इति चेत्, **न** । टीकाकाराणां कैयटादीनां 'न स्वमतिपरिकल्पना' इत्यादिकथनेन 'प्रधानकर्मण्याख्येये–' इतिश्लोको न भाष्यकारस्येत्येव समर्थ्यते । तथा च तत्प्रदीपग्रन्थो भाष्यकृत एवेमौ श्लोकावित्यत्र न प्रामाण्यमादधाति । भाष्यकृत एवेमौ श्लोकावित्यत्र दृढतरप्रमाणाभावे प्राचीनाचार्याणामेतानि श्लोकवार्तिकानि भाष्यकृतोपात्तानीति कल्पनैव ज्यायसी । भैरवमिश्रादीनां 'भाष्ये' इति कथनं तु श्लोकवार्तिकं न वार्तिककृत्कृतमिति तस्य प्रामाण्यं भाष्याश्रयणादेवेति 'भाष्ये' इत्युक्तिर्नासङ्गता । उद्द्योते च 'भाष्ये' इत्युक्तिः शैलीसिद्धैवेति श्लोकयोरनयोरन्यकर्तृकत्वेऽपि नासङ्गतेति स्पष्टं तद्विदाम् ।

**एतावत्त्वत्र निर्णेतुं शक्यं** यत्–व्याकरणभाष्ये श्लोकवार्तिककारो न एक एव । किन्तु प्राचीनाचार्याणामनेकेषां वार्तिकत्वेन प्रसिद्धाः श्लोकाः स्थलविशेषे भाष्यकृता स्वकल्पनायाः सागमकत्वप्रदर्शनवेलायां तत्र तत्रोपनिबद्धास्त एवात्र श्लोकवार्तिकत्वेन व्यवह्रियन्ते ।

ननु स्वतःप्रमाणस्य भाष्यकारस्यान्यप्रमाणाश्रयणं कथं युज्येतेति चेत्, **न** । अस्य शास्त्रस्य प्राचीनपरम्परानुबन्धित्वं ध्वनयितुं तथोक्तिरिति तन्नासङ्गतम् । अत एव सूत्रकारेणापि प्राचीनशास्त्रकृत्कृताभिः प्रथमादिसंज्ञाभिरत्र व्यवहृतं संगच्छते । एवञ्च 'अकथितञ्च'इति सूत्रे प्राचीनव्याख्यासु परिदृश्यमानः 'कथिते लादयश्चेत्स्युः' इत्यादिः श्लोकोऽन्यस्याचार्यस्य, तस्मिन्नेव

च 'प्रधानकर्मण्याख्येये' इत्यादिरपरस्येति व्याख्यानवैचित्र्यप्रदर्शयितुकामेन भाष्यकारेण द्वावपीमावत्रोपात्तौ—इति **कल्पनमेव ज्यायः** । अत एव 'अपर आह' इत्युक्तिस्तत्र स्वरसतः संगच्छते । अत एव च तयोः श्लोकयोरन्यूनाक्षरभाष्येण व्याख्यानं सामञ्जस्येनोपपद्यत इति वक्तुं शक्यम् । अन्यथा 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इत्यस्य 'प्रधानकर्मण्यभिधेये द्विकर्मणां धातूनां कर्मणि लादयो भवन्तीति वक्तव्यम्' इति व्याख्यानं द्विरुक्तत्वेनायुक्तं स्यात् । अनयोः श्लोकयोः सर्वांशेऽपि व्याख्यानं भाष्ये सन्दृश्यते तत्तत एवावगन्तव्यम् । भाष्यकृद्व्याख्यानपुनरुक्तिबलान्नेमौ श्लोकौ भाष्यकारस्येत्यनुमीयते । अनुमीयते च श्लोकवार्तिककारो न कश्चिदेक एव किन्तु भाष्यसमयात् प्राक् सूत्रव्याख्याने बद्धादराः प्राचीनाचार्याः कतिपयाः संभवन्ति । अत एव 'अपर आह' इत्यादिना तेषां भेदो भाष्यकृता प्रादर्शि ।

यदि चैतावताऽप्याग्रहः—श्लोकोऽयं वार्तिककारस्यैव—इति, तत इतो दत्तदृष्टिभिर्भवितव्यम् । तथाहि—'अदो जग्धिर्ल्यप्ति किति' (२।४।३६) इति सूत्रे ल्यब्ग्रहणप्रयोजनमाविष्कुर्वता भाष्यकृता—

**'जग्धिविधिर्ल्यपि यत्तदकस्मात्सिद्धमदस्ति कितीति विधानात् ।**
**हि प्रभृतींस्तु सदा बहिरङ्गो ल्यब्भरतीति कृतं तदु विद्धि ॥'**

इति श्लोकवार्तिकमुपन्यस्तम् । ल्यपि परतो यो जग्धिविधिः सोऽकस्मात्सिध्यति, तिकिति ग्रहणात् । एवञ्च ल्यप्ग्रहणं निष्फलमित्युक्त्वा हिप्रभृतीन् ल्यब्बाधत इति ज्ञापनार्थं ल्यब्ग्रहणमिति वार्तिकार्थः । अस्मिंश्च वार्तिके कुण्डलनाभाष्यमपि न दृश्यते । अस्य च वार्तिकत्वमुद्द्योतकारेण 'वार्तिके यत्—तत्—इति सामान्ये नपुंसकम्' इत्येवं स्पष्टमुक्तम् । प्रदीपेऽपि 'अयमेवार्थो व्याघ्रभूतिनाऽप्युक्त इत्याह—जग्धिविधिरिति' इत्यनेन व्याघ्रभूतिवचनत्वमस्य स्पष्टमेवोक्तम् । तदग्रे भाष्ये 'एष एवार्थः—

**जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥** इति'

इत्युक्तम् । अनेन पूर्ववार्तिकापेक्षया भिन्नोऽयं समानार्थः श्लोकः, तेन च भिन्नकर्तृकत्वमस्य व्यज्यते । एतच्च 'एष एवार्थ इति' इति प्रतीकमुपादाय 'अन्येन निबद्ध इति शेषः । मया निबध्यत—इति वा' इति व्याख्यानेनोद्द्योतकृता सुस्पष्टमेवोक्तम् । 'जग्धौ सिद्धेऽन्तरङ्गत्वात्' इत्ययं श्लोको भाष्यकारस्यान्यस्य वेति निर्णेतुं न प्रभवन्ति उद्द्योतकाराः । तत्समयेऽप्यस्मिन् विषये सन्देह आसीदित्यवधार्यते । अस्माभिस्त्वत्रैतत्प्रसाध्यते—**कात्यायनाच्छ्लोकवार्तिककारोऽन्य एवेति** । स च एको वाऽनेको वेत्यन्यदेतत् । अत्र च समानार्थकवार्तिकद्वयप्रदर्शनेन तन्नैकस्येति सिद्धम् । प्रथमस्य च व्याघ्रभूतिकर्तृकत्वं प्रदीपे प्रदर्शितमिति कात्यायनादन्यस्यैव तदिति सिद्धम् । द्वितीयश्च श्लोकः कदाचिद्भाष्यकारस्यापि संभवेत्—इति पूर्वोदाहृतोद्द्योतदर्शनादवसीयते ।

ननु अनयोः श्लोकयोः संपुटीकरणाभावान्नैतौ वार्तिकसंज्ञां लभेते । एतौ च प्राकरणिकौ श्लोकाविति नानयोर्विषये कश्चिद्विवाद इति नैतौ प्रस्तुतार्थसाधकाविति चेत्, इदमप्यपरं पश्यत—'भृञोऽसंज्ञायाम्' (३।१।११२) इति सूत्रे भाष्ये 'असंज्ञायामिति किमर्थम्' इत्याक्षिप्य 'भार्या' इति प्रत्युदाहरणमुक्तम् । भार्याशब्दो हि गृहिण्याः संज्ञेति तत्र क्यब्न भवति, किन्तु ण्यत्प्रत्ययः । ततो वार्तिककृता 'भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात्' इति 'अन्येन='संज्ञायां समज—'इत्यादिसूत्रेण भृञः क्यब्विधानात् संज्ञाप्रतिषेधेऽपि स्त्रियां प्रतिषेधो न भवति' इत्यर्थकमुक्तम् । ततश्च 'प्रतिषेधः किमर्थं इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः' इति 'भार्या नाम क्षत्रिया याऽस्त्रीसंज्ञा तदर्थं 'असंज्ञायाम्' इत्युक्तम्' इत्यर्थकं वार्तिकमभिधाय 'सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात्' इति सिद्धान्तो न्यासान्तरेण वार्तिककृता साधितः । सिद्धान्तिनो वार्तिककारस्य चायमाशयः—'भृञोऽसंज्ञायाम्' इति सूत्रमकृत्वा 'संज्ञायां समजनिषद—' इत्यस्याग्रे 'न स्त्रियां भृञः' इति न्यासः कर्तव्यः, तेन गृहिणीवाचकभार्याशब्दे ण्यतः सिद्धिः । एवं कृते सूत्रभेदो भवतीति दोषमुक्त्वा 'भावे इति तत्रानुवर्तते' इत्यादिना भाष्यकृता स निवारितः । तमेवार्थं भाष्यकारः 'अपर आह—

**'संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति । स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति ॥**
**अथवा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम् । यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा ॥'**

इति श्लोकवार्तिकाभ्यां प्रत्यपिपादयत् । अत्र हि वार्तिककारादन्य एवायं श्लोकवार्तिककार इति स्पष्टमेव । न त्वनयोः वार्तिकश्लोकवार्तिकयोः कर्त्रैक्यमुद्भावयितुं शक्यम्, 'अपर आह' इति भाष्यविरोधात्, वार्तिकव्याख्यानप्रक्रमभेदाच्च ।

**अपिच** वार्तिककृता सूत्रभेदेनाक्षेपे विनिवारितेऽपि सूत्रभेदवारणार्थं प्रयतमानेन भाष्यकारेण स्वकीयैरेव शब्दैस्तमर्थं साधयित्वा तादृशार्थसंग्राहकवार्तिकं 'अपर आह' इत्यादिनाऽन्ते विनियोजितम् । वाक्यभूतेषु वार्तिकेषु नेयं रीतिर्भाष्यकाराणां क्वापि दृष्टचरीत्यनुमीयते—**कात्यायनमहर्षेरन्यकृतान्येवेमानि श्लोकवार्तिकानीति** । अन्यच्च श्लोक्तार्थस्य संग्राहकत्वेन प्रयुक्तानि श्लोकवार्तिकानि स्वानुमत्यैव प्रमाणानि, नैषां पाणिनीये शास्त्रे स्वातन्त्र्येण प्रामाण्यमित्यप्यत्र भगवता ध्वन्यते । एवञ्च **त्रिमुनिव्याकरणमित्येषाऽभियुक्तोक्तिर्निराबाधैव ।**

**इदमप्यपरमत्रावधेयम्**—सर्वत्र यानि कात्यायनवार्तिकानि वाक्यरूपाणि दृश्यन्ते तानि च विधायकत्वेनैव संप्रवर्तन्ते न त्वनुवादकत्वेन । श्लोकवार्तिकानि च प्रायः **सर्वाण्यप्यनुवादकान्येव** न तु विधायकानि । तथा च 'अमावस्यदन्यतरस्याम्', (३।१।१२२) इति सूत्रे भाष्ये 'तकारः कस्मानुबन्धः' इति प्रस्तुत्य 'श्रोत्रियंश्छन्दोऽधीते' इति व्यपवर्गाभावात् ञ्नितीत्याद्युदात्तत्वं न प्राप्नोतीत्युक्त्वा 'एवं तर्हि—

**'अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् । तथैकवृत्तिता तयोः स्वरश्च मे प्रसिद्ध्यति ॥'**

इति श्लोकवार्तिकमुक्तम् । अस्मिन् सूत्रे हि वाक्यरूपं वार्तिकं नैव दृश्यते, यच्च श्लोकवार्तिकं दृश्यते तत्केवलं सूत्रे किं निपात्यत इत्येतत्प्रदर्शनपरमेव, न त्वनेन किञ्चिद्विधीयते । अयं च वार्तिकार्थः–अमापूर्वो यो वस्धातुस्तस्मादृशात्प्रकृतिद्वयाण्ण्यतो विधानं क्रियते, तत्रैकस्याश्च प्रकृतेर्वृद्ध्यभावो निपात्यते । तथा सति 'अमावास्यत्'शब्दस्य प्रकृतित्वममावस्यदित्यस्य च विकृतित्वमिति एकवृत्तिता सिध्यति स्वरश्चेष्टस्तिप्रत्ययनिमित्तो मे प्रसिध्यति–इति । एवञ्चात्रोभयोर्निपातनं सूत्रकृता कथं साधितमित्येवानेन श्लोकवार्तिकेन प्रतिपादितमिति नास्यापूर्वविधित्वमिति सुस्पष्टमेव ।

तथा 'छन्दसि निष्टर्क्य देवहूय–' (३।१।१२३) इति सूत्रे भाष्ये निष्टर्क्य इति किं निपात्यते ? निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि, यथा कृतेस्तर्क इत्यादिना निपातनमुपपाद्य 'अपर आह—

**'निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् । ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥**

**ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः । ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥**

इत्येवं साकल्येन सूत्रनिपातनोपपादकं श्लोकवार्तिकं भाष्यकार उदाजहार । अनेनोदाहरणद्वयदर्शनेन सूत्रशेषार्थप्रतिपादकमेव श्लोकवार्तिकमिति भाष्यकारीयसिद्धान्तः समुद्भासितोऽवतरति । 'छन्दसि–' इति सूत्रे वाक्यरूपं वार्तिकं नास्त्येव । क्वचित् 'निष्टर्क्ये कृतेः–' इत्यादिमुद्रितपुस्तकेषु वार्तिकचिह्नैः परिस्तीर्यते तत्प्रामादिकमेव ।

तथा 'परोक्षे लिट्' ( ३।२।११५ ) इति सूत्रे भाष्ये परोक्षशब्दव्युत्पत्तौ आक्षेपमुपपाद्य 'नैष दोषः—

**परो भावः परस्याक्षे परोक्षे लिटि दृश्यताम् । उत्वं वादेः परादक्ष्णः सिद्धं वाऽस्मान्निपातनात् ॥'**

इति श्लोकवार्तिकमुखेन तच्छब्दव्युत्पत्तौ पराक्रान्तं भाष्यकृता । न चायं श्लोको भाष्यकारस्य सम्भवति । तच्छ्लोकसम्पुटीकरणभाष्येण 'परशब्दस्याक्षशब्द उत्तरपदे परो भावो वक्तव्यः, अथवा परशब्दादुत्तरस्याक्षिशब्दस्योत्वं वक्तव्यम्, अथवा निपातनादेव सिद्धं परोक्षे लिडिति' इत्येवं रूपेणान्यस्यायं श्लोको भाष्यकृताऽत्रोदाहृत इति निश्चेतुं शक्यम् । अन्यथा सरलार्थस्य श्लोकस्य सम्पुटीकरणमनावश्यकं पुनरुक्तं च स्यात्–इति सुधीय एवात्र प्रमाणम् । अत्र हि अनेन श्लोकेन नापूर्वं किञ्चिद्विधीयते, सूत्रोक्तपरोक्षशब्दश्च प्रकारत्रयेण साध्यत इत्येव । एवञ्च श्लोकवार्तिकविषये पूर्वोक्तः सिद्धान्त एव स्फुटमनेन व्यज्यते । अस्मिन् सूत्रे च 'परोक्षे लिडत्यन्तापह्नवे च' इति कात्यायनवार्तिकं तु अत्यन्तापह्नवे सूत्रेणाप्राप्तं लिटं विधत्ते, न तु तत्पूर्ववार्तिकवदनुवादकम् । 'लट् स्मे' ( ३।२।११८ ) इति सूत्रे भाष्यकृता पूर्वं कात्यायनकृतं 'स्मपुरा भूतमात्रे । न स्मपुराऽद्यतने' इति वार्तिकद्वयमुक्त्वा तत्र चासङ्गतिरूपमाक्षेपं प्रदर्श्य—

**'स्मादिविधिः पुरान्तो यद्यविशेषेण किङ्कृतं भवति । न स्म पुराऽद्यतन इति ब्रुवता कात्यायनेनेह ॥**

**अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति नञ्कार्यम् । अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ ॥**

**न पुराद्यतन इति भवेदेतद्वाच्यन्तत्र चापि लुङ्ग्रहणम् ।'** इति श्लोकवार्तिकैः कात्यायनवार्तिकार्थोऽन्यथा साधितः । अनेन श्लोकवार्तिकेनैतन्निश्चीयते–श्लोकवार्तिकानि सवार्तिकस्य सूत्रग्रन्थस्य व्याख्याभूतानि भाष्यकारात्प्राक् बहुभिर्विरचितानि बहुरूपाण्यासन् । तेषु यानि प्रस्तुतोपयोगीनि तान्यत्र भाष्यकृता गृहीतानि–इति प्रतीयते । अत्र हि 'लट् स्मे' 'अपरोक्षे च' 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' 'पुरी लुङ् चास्मे' इति सूत्रपञ्चकेन प्रत्ययाः कस्मिन् काले विधेया इति 'स्मपुरा भूतमात्रे । न स्मपुराऽद्यतने' इति वार्तिकाभ्यां निर्णीयते । वार्तिकयोश्चायमर्थः—स्मपुराशब्देन स्मपुराघटितसूत्राद्यन्तसमुदायः पञ्चसूत्रात्मको लक्ष्यते । तेन च स्मपुराघटिता पञ्चसूत्री भूतमात्रे भवति–इति प्रथमस्यार्थः । द्वितीयस्य च–तत्र स्मघटितं पुराघटितं च यत्सूत्रद्वयं 'लट् स्मे–पुरि लुङ् चास्मे' इति तदनद्यतने न भवति । प्रथमे च वार्तिके स्मपुराशब्दस्य लक्षणा पञ्चसूत्र्याम् । द्वितीये च न लक्षणा । तत्र भाष्यकृता पूर्वस्मिन् लक्षणेतोत्तरत्रेति पक्षद्वयमुपस्थाप्य श्लोकवार्तिकेन समाहितम् । तच्च स्मादिविधिः पुरान्तो यद्यविशेषेण भूतमात्रे भवन्ति तदा 'न स्मपुराऽद्यतने' इति वार्तिकं ब्रुवता कात्यायनेन किं कृतम् ? यतः पूर्वसूत्रात् 'लट् स्मे' इति सूत्रेऽनद्यतन इत्यनुवर्त्य तत्साधयितुं शक्यम् । उत्तरत्र चानद्यतन इत्यस्यानुवृत्तिर्न । एवञ्च 'पुरि लुङ् चास्मे' इति सूत्रं भूतमात्रे प्रवर्तेत तदर्थं न पुराद्यतन इति वाच्यम् । तथाचाऽनद्यतन इत्यस्यानुवृत्तौ स्वरितत्वप्रतिज्ञा स्वीकार्या, उत्तरत्र च तन्नानुवर्तेत इति व्याख्यानमप्याश्रयणीयम्, तदपेक्षया द्वितीये वार्तिके स्मग्रहणमेव लघु इति चेत्, **न** । 'पुरि लुङ् चास्मे' इति सूत्रेऽनद्यतन इत्यनुवर्तेत इति लुङ्ग्रहणेन ज्ञाप्यते । **तथाहि**–यदि भूतमात्रेऽयं विधिः स्यात्तदा 'नन्वोर्विभाषा' इति सूत्राद्विभाषाग्रहणमनुवर्त्य विकल्पेन लटो विधानात् पक्षे लुङ् भविष्यतीति लुङ्ग्रहणं व्यर्थं सदत्रानद्यतनानुवृत्तिं ज्ञापयति । यद्यनद्यतनपदमत्रानुवर्तेत तदाऽनद्यतने लुङ् प्राप्त इति लुङ्ग्रहणं चरितार्थं स्यात् । एवञ्च लुङ्ग्रहणसामर्थ्यादत्राऽनद्यतन इत्यनुवर्तेत इति 'न स्मपुराऽद्यतने' इति कात्यायनस्य वार्तिकं व्यर्थमेवेति टीकाकर्तुः श्लोकवार्तिककारस्याशयः । अनेन ग्रन्थेन वाक्यकारः कात्यायन एव, श्लोकवार्तिककारश्च ततोऽन्यः कश्चिदाचार्य इति सिद्धम् ।

ननु च श्लोकवार्तिकमिदं भाष्यकारस्येति वक्तुं युक्तमित्यपि न । **'न पुराऽद्यतन इति भवेदेतद्वाच्यं तत्र चापि लुङ्ग्रहणम् ।'** इति वार्तिकांशस्य भाष्यकृता 'तत्रैतावद्वक्तव्यं स्यात्–न पुराद्यतन इति । तत्र चापि लुङ्ग्रहणं ज्ञापकम्' एतावद्भिरक्षरैः पुनरुक्त इव व्याख्यानात् । पुनरुक्तशब्दैर्वार्तिकत्वेनाभिप्रेतस्य सम्पुटीकरणं भाष्यकारशैलीसिद्धत्वाच्च । एवञ्च

नेदं श्लोकवार्तिकं कात्यायनस्य, 'इति ब्रुवता कात्यायनेनेह'इत्युक्तेरसांगत्यापत्तेः । भाष्यकारस्य नेत्यपि सम्पुटीकरणात्सिद्धम् । अत एव भाष्यवार्तिककाराभ्यामन्य एवायं श्लोकवार्तिककारोऽभ्युपगन्तव्यः । स च कात्यायनवार्तिकप्रत्याख्याने यत्नमाचरन् सूत्रवार्तिकयोर्व्याख्याता भाष्यकारापेक्षया प्राक् समुद्भूत इत्येतत्सर्वमप्यनेन वार्तिकेन सुस्पष्टमुच्यते ।

'श्नसोरल्लोपः' (६।४।१११) इति सूत्रे भाष्ये तपरकरणं किमर्थमित्याक्षिप्य 'आस्ताम्—आसन्' इत्यत्राडागमाकारस्यापि तपरत्वाभावे लोपः स्यादिति प्रयोजनमुक्त्वा 'आटोऽसिद्धत्वान्न भविष्यति' इति समाहितम् । कैयटेन च 'नैतदस्तीति' इति प्रतीकमुपादाय 'अत्र प्रत्याख्यातं तपरकरणम्, परस्तात्तु ज्ञापकत्वमस्य वक्ष्यते' इत्यादि व्याख्यातं, ततश्च 'अत एकहल्मध्ये-नादेशादेर्लिटि' ( ६।४।१२० ) इति सूत्रे भाष्ये 'दम्भ एत्वं नलोपस्यासिद्धत्वात्' इति कात्यायनेवार्तिकं व्याख्याय—

**'नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि । अनेशंमेनकेत्येतद्येमानं लिङि पेचिरन् ॥**
**यजायेजे वपावेपे दम्भ एत्वमलक्षणम् । श्नसोरत्त्वे तकारेण ज्ञाप्यते त्वेत्त्वशासनम् ॥'**

इति श्लोकवार्तिकम्भाष्यकार उदाजहार । पूर्वत्र निष्फलस्यापि तपरत्वस्यात्र 'श्नसोरत्त्वे तकारेण' इति तपरत्वफलं ब्रुवतः श्लोकवार्तिकादेतज्ज्ञायते—भाष्यकृता तपरत्वम्प्रत्याख्यातम्, सूत्रवार्तिकव्याख्यानकारेण च श्लोकवार्तिकेन तत्तपरत्वं ज्ञापक-मुक्तं 'असिद्धवदत्राभात्'इति विधिरनित्य इति । एतच्च पूर्वापरविरुद्धमिव यदुच्यते तेन श्लोकवार्तिककारस्य भाष्यकारतो भेद-माचक्षते । वस्तुतस्त्वत्र 'दम्भ एत्वं नलोपस्यासिद्धत्वात्' इति वार्तिकमेव सिद्धान्तो भाष्याभिप्रेतः, न तु तपरकरणस्य ज्ञापकत्वं सिद्धान्तः । 'असिद्धवदत्राभात्'इत्यस्यासिद्धत्वे देभतुरित्यस्य सिद्धिरेव भाष्यकृता प्रदर्श्यते, न त्वन्यत्फलान्तरं किञ्चिदिति । एवञ्च 'श्नसोरल्लोप' इति सूत्रस्थतपरकरणस्य वैयर्थ्यं ज्ञापकत्वञ्चेति विप्रतीपमिव ब्रुवता भाष्यकारेणैतत्प्रतिपाद्यते यत्—श्लोकवार्तिककारो भाष्यकारादन्य एव कश्चिट्टीकाकृदिति । ततश्च भिन्नकर्तृकत्वात्तादृश्युक्तिः संगच्छते ।

ननु प्रत्याख्यानं ज्ञापकत्वञ्चोभयमपि भाष्ये सन्निविष्टमिति अन्यतरदत्राप्रमाणमिति वक्तव्यं स्यात् । तत्र भाष्यस्या-प्रामाण्यं तु सुदूरापेतम् । श्लोकवार्तिकस्याप्रामाण्यञ्चेत् भाष्यपरिगृहीतत्वात तदपि प्रमाणम् । एवञ्च असङ्गतिरत्रोपवर्ण्ये-तेति चेत्, न । भाष्यकृता हि पूर्वं प्रत्याख्यानस्योक्तत्वेन तदेव स्वीयंमतमित्युपन्यस्तम् । ततश्च 'दम्भ एत्वम्' इति वार्तिक-प्रत्याख्यानाय प्रवृत्तमपि श्लोकवार्तिकं न तथाऽभिप्रेतं यतस्तस्य 'असिद्धवदत्राभात्-' इत्यस्यानित्यत्वेन नैतदन्यत्किञ्चिल्लक्ष्यं साध्यते । तपरकरणं तु प्रत्याख्येयं फलान्तरे वाऽभिनिवेशः कार्य इत्युभयमपि भाष्यकृतां समानमित्यवसेयम् । अत एव न पूर्वापरविरोधः ।

अन्यच्च 'त्यदादीनामः' ( ७।२।१०२ ) इति सूत्रे 'त्यदादीनां द्विपर्यन्तानामकारवचनम्' इति वार्तिककृताऽभिहितम् । ततश्च भाष्यकृता तत्तर्हि वक्तव्यम्—न वक्तव्यमित्युक्त्वा—

**'त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः । शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ॥'**

इति श्लोकवार्तिकं 'शेषे लोपः' इति सूत्रेण लोपविधानसामर्थ्यात् 'त्यदादीनामः' इति सूत्रं ततः प्राक्प्रवर्तेत इति 'द्विपर्यन्ता-नाम्—'इति न वक्तव्यमित्यर्थकमुक्तम् । अत्र **कैय्यटः**—'ततोऽदिति'इति प्रतीकमुपादाय वृत्तपूरणार्थस्तपरनिर्देशः । सूत्रे त्वतपर एवाकारो निर्दिष्ट इत्याह । **नागोजीभट्टाश्च**—'सूत्रे त्वतपर एवेति—इति प्रतीकमुपादाय न तु वार्तिकदर्शनेन सूत्रे तपरपाठ इति भ्रमितव्यमित्यर्थः । भाव्यमानस्य सवर्णाग्राहकत्वेन तपरत्वे फलाभावादिति तात्पर्यम्' इत्याहुः । भाष्यसंपुटी-करणेन, अनेनोद्द्योतग्रन्थेन च वार्तिकमेवैतदित्यत्र न विनिगमनाविरहः । वाक्यरूपवार्तिकखण्डनाय प्रवृत्तमेतन्न कात्यायनस्ये-त्येतदपि स्फुटतरमेव । संपुटीकरणभाष्यदर्शनेन च नैतद्भाष्यवार्तिकम् । एवञ्च कस्यचन पूर्वाचार्यस्यैतद्वार्तिकं सूत्रवार्तिकयो-रर्थबोधनाय प्रवृत्तं मुनित्रयादन्यस्यैवेति निश्चप्रचम् । 'त्यदादीनामः' इति सूत्रे तपरकरणाभावेऽपि श्लोकवार्तिके तपरत्वोल्लेखः प्राचीनव्याकरणवासनानिर्व्यूढोऽनवधानतामूलको वा । पाणिनीयव्याकरणप्रणेतारः पाणिनिकात्यायनपतञ्जलयः प्राचीनव्याक-रणवासनानिर्व्यूढा न भवितुमर्हन्तीति तदन्यस्यैव । अनवधानश्च भाष्ये ह्येतादृशं क्वाप्यदृष्टपूर्वमिति नैतद्वचनं भाष्यकारस्येति सिद्धम् । भाष्यकृच्छैलीविरुद्धश्चायमुपन्यासः । एतावदेवास्य पर्याप्तं निदर्शनं **मुनित्रयादन्यस्यैवैतद्वचनमित्यर्थे ।**

अपि च 'कौमारापूर्ववचने' ( ४।२।१३) इति सूत्रे भगवता कात्यायनेन सूत्रस्य व्यापकत्वोपपत्तये 'कौमारापूर्ववचन इत्यु-भयतः स्त्रिया अपूर्वत्वे' इति वार्तिकमभ्यधायि । तत्र—

**'कौमारापूर्ववचने कुमार्या अण्विधीयते । अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥'**

इति श्लोकवार्तिकमुपन्यस्तम् । एतच्च वाक्यवार्तिकसमानार्थकमिति नैतत्कात्यायनस्य भवितुमर्हति । भाष्यकारस्येदमित्यपि न, 'अथवा कुमार्यां भवः कौमारः' इति संपुटीकरणप्रयोगात् । नागोजीभट्टैः—'कुमार्यां भवतीति वा—इति वार्तिकव्याख्यानं—कुमार्यां भव इति' इत्युक्तम् । तेनास्य वार्तिकत्वम्, कात्यायनपतञ्जलिभ्यामन्यकृतत्वञ्चावगम्यते । 'कुमार्या अण्विधीयते' इति सूत्रार्थमात्रप्रदर्शनमपि कात्यायनशैलीविरुद्धमेव । अत एव वाक्यवार्तिकसमानाक्षरमेतत्सुस्पष्टार्थकमत्र भाष्यकृतोपात्तमित्यनु-मातुं शक्यम् ।

'अनितेः' 'अन्तः' ( ८।४।१९,२० ) इति सूत्रे श्लोकवार्तिकैकचरणोपादानेन भाष्यकृतैतत्प्रदर्श्यते—सूत्रव्याख्यानभूता ये श्लोकाः प्राचीनव्याख्याकाराणां सन्दृश्यन्ते तेऽत्रोपयुक्ताः श्लोकाः—श्लोकार्धाश्चोपादीयन्ते, न तु साकल्येन सर्वे संगृह्यन्ते ।

अत एव 'अन्तः' इति सूत्रे 'भो वा तस्मादनन्तरः' इत्येव श्लोकचरणः संगृहीतः न तु समग्रः श्लोकः। 'उपसर्गादनोत्परः' (८।४।२८) इति सूत्रे 'भाविन्यप्योति नेष्यते' इति श्लोकचरण एवोपात्तः, तावदेवात्रोपयुक्तमिति न समग्रः श्लोकः संगृहीतः।

एवञ्च श्लोकवार्तिकानि यानि भाष्ये दृश्यन्ते तानि न मुनित्रयप्रणीतानि, किन्तु सूत्रवार्तिकव्याख्याने बद्धादरैस्तत्र भवद्भिर्मुनिभिः प्रणीतानीत्यस्माभिरनुमीयते। भाष्ये येषां श्लोकानां संपुटीकरणं न दृश्यते तादृशा अपि बहवः श्लोकाः संगृहीतन वार्तिकसंज्ञां लभन्ते। तेषु च केचिद्भाष्यकृताम्, केचित्तदन्येषामाचार्याणाम्, केचिच्च संग्रहकाराणां व्याडिचरणानाम्, ते ते श्लोका भाष्ये समादृताः संभवन्ति। तथा च 'तदस्यास्त्यस्मिन्निति मतुप्' (५।२।९४) इति सूत्रे भाष्ये व्याख्यानान्ते—

**'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥'**

इति श्लोक उदाहृतः। संपुटीकरणाभावान्नायं वार्तिकपदवीमर्हति। उद्योते च नागोजीभट्टैः श्लोकस्यास्य व्याख्यानावसरे 'एवञ्चायं श्लोकः कस्यचिच्छात्रस्येति बोध्यम्' इत्युक्तम्। अतश्च या भाष्ये मुक्तकोक्तयो दृश्यन्ते तासां कर्तुरनुपलम्भेऽपि अनेककर्तृकत्वं प्रसिध्यतितराम्।

**अत्रेत्थमवधेयम्**—श्लोकवार्तिकानि न कात्यायनकृतानि न वा भाष्यकारप्रणीतानीत्यनुमानादिभिः प्रमाणान्तरैः प्रसाधितेऽपि च तेषु कानिचन कात्यायनकृतानि नैव सन्तीति निश्चयेन वक्तुं न पारयामः। यतस्तानि श्लोकवार्तिकानि प्रायोऽपूर्वविधायकानि न सन्ति, यानि च विधायकानि दृश्यन्ते तत्कर्तृविचारे सन्दिह्यते चेतः। यथा—'स्त्रीभ्यो ढक्' (४।१।१२०) इति सूत्रे—

**'वडवाया वृषे वाच्येऽण् कुञ्चा कोकिलात्स्मृतः। आरक् पुंसि ततोऽन्यत्र गोधाया ढृक्विधौ स्मृतः॥'**

इति वार्तिकेन यद्विधीयते तदपूर्वमिति कृत्वा मुनित्रयोक्तिः कदाचिदयं स्यात्—इति। वस्तुतस्तु 'वडवाया वृषे वाच्ये' इत्यनेनार्थविशेषे नियमनमेव शब्दस्य क्रियते न त्वपूर्वं किञ्चिद्विधीयते। अण् कुञ्चाकोकिलात्स्मृत इत्यनेनाणो विधानं क्रियते। स चाण् सूत्रान्तरैरप्राप्त इति विधिवार्तिकमेतत्स्यादिति सन्देहः। परन्तु शिवादिगणे कुञ्चाकोकिलाशब्दयोः पाठदर्शनान्नेदं विधायकम्। उद्योते 'एवञ्च शिवादिगणे कुञ्चाकोकिलपाठोऽनार्ष इति बोध्यम्'इति ग्रन्थदर्शनादस्य विधायकत्वसापन्नमपि नैतद्विचारसहम्। यतः पाणिनिमहर्षिभिः पूर्वं प्रणीतो गणपाठः कुञ्चाकोकिलाशब्दाभ्यां संभूषित इति नैतद्विरुद्धम्। ततः पश्चात्संभूतेन 'अण् कुञ्चाकोकिलात्स्मृतः' इति वार्तिकेन शिवादिगणपठितयोः शब्दयोः कुञ्चाकोकिलयोरनार्षत्वकथनमुद्योतकाराणामयुक्तमेव। 'अकः सवर्णे दीर्घः' इत्यादौ यथा 'अकोऽकि दीर्घ इत्येव सुवचम्' इत्युच्यते तद्वदत्रापि 'शिवादिगणे कुञ्चाकोकिलशब्दयोः पाठाभावेऽपि न क्षतिः' इत्येवात्र वक्तुमुचितम्। यथोत्तरं मुनीनां प्रामाण्यमिति तु मुनित्रयविषयकमेव। श्लोकवार्तिककाराश्च न मुनित्रयघटका इति श्लोकवार्तिकबलात् गणे पठितयोः शब्दयोः प्रत्याख्यानमयुक्तमेव।

**इदन्त्वत्र सुनिश्चितम्**—भाष्ये श्लोकवार्तिकानामेषां परिग्रहणेनान्यकृतान्यपि तानि प्रामाण्यकक्षामावहन्तीति 'अण् कुञ्चाकोकिलात्स्मृतः' इति वार्तिकेन गणपठितयोः शब्दयोः प्रत्याख्यानं युज्येत, न तु वार्तिकदर्शनेन गणे कुञ्चाकोकिलशब्दयोः पाठोऽनार्ष इति वक्तुं युज्यते। विशेषतो विचार्यमाणे नागोजीभट्टसमयेऽपि प्राचीनग्रन्थानामनुपलम्भाद्भाष्यविवेचनावसरे इदानीन्तनानामिव भट्टचार्याणामपि भाष्यवचनविवेचनविषये निरालम्बनतैवेति **सुधीभिरत्र दत्तचित्तैर्भवितव्यमित्यभ्यर्थ्यते**। अत एव तत्र तत्र 'भाष्ये' 'वार्तिके' इत्यादिवचनविपर्यासो दृश्यत उद्योते। 'त्यदादीनामः'इति सूत्रे त्यदादीनामकारेणेत्यादिव्याख्य नावसरे नागोजीभट्टैः क्वचित् 'भाष्ये' क्वचिच्च 'वार्तिके' इत्याद्युल्लेखः कृतः। इदं चोदाहरणमात्रम्, बहुषु स्थलेषु विपर्यासदर्शनात्। भाष्ये क्वचित् 'भारद्वाजीयाः पठन्ति—**भ्रस्जोरोपधयोर्लोप आगमो रम्विधीयते**।' इति श्लोकवार्तिककर्तृनिर्देशोऽप्युपपद्यते। एतन्निर्देशादेव श्लोकवार्तिकानि अन्यकृतान्यपीति निश्चयेन वक्तुं पारयामः। अत्रार्थे कैयटोऽपि स्वसंमतिं शब्दत आह—'असिद्धवदत्राभात्' (६।४।२२) इति सूत्रभाष्यव्याख्यानवेलायां प्रदीपे—'वार्तिककारोक्तेषु प्रयोजनेषु प्रत्याख्यातेषु श्लोकवार्तिककारोक्तप्रयोजनोपक्षेपः—उत्तु कृत्न इति।' भाष्ये कृतभूरिपरिश्रमो नागोजीभट्टोऽपि तद्व्याख्यानावसरे 'वार्तिककारः—कात्यायनः। श्लोकवार्तिककारस्त्वन्य एवेति भावः' इति कण्ठतः स्वानुमतिमनुमनुते। श्लोकवार्तिककारः कात्यायनाद्भिन्नः प्रायो बहुषु स्थलेषु, तथा भाष्यकारतोऽपि भिन्न एव। अत एव तत्र तत्र स्पष्टार्थानामप्येषां भाष्याक्षरैः संपुटीकरणं दृश्यते। 'भारद्वाजीयाः पठन्ति' 'अपर आह' इत्यादीनि च तत्पर्याप्तं निदर्शनम्। शब्दकौस्तुभेऽपि 'सुपां कर्मादयोऽप्यर्थाः संख्या चैव—' इत्यादि श्लोकवार्तिकोद्धारप्रसङ्गे 'भाष्यकार आह—सुपां' इत्याद्युक्तम्। न चैतेन ग्रन्थेन भाष्यकारस्यैवैतानि वार्तिकानीति विज्ञेयम्, 'अपर आह' इत्यादिभाष्योक्तिविरोधात्। शेखरेऽपि **शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा**—इति वैयाघ्रपद्यवार्तिके 'शर्पूर्वाः' इति सूत्रे कैयटे च 'औजढत्' इति प्रयोगो दृश्यते' इत्युक्तम्॥

नन्वेतावन्त्युदाहरणान्यपलोक्यैतन्निर्धारयितुं शक्यं यत्—मुनित्रयादन्यस्य मतमप्यत्र प्रमाणत्वेनाश्रीयत इति त्रिमुनिव्याकरणमित्येषोक्तिर्विफलैवेति चेत्, **न**। कात्यायनप्रणीतानि वार्तिकानि यथा स्वातन्त्र्येण विधायकानि तथा श्लोकवार्तिकानि न क्वचिदपि विधायकानि किन्तु सूत्रवार्तिकव्याख्यानरूपाण्येव। तादृशाश्च श्लोका भाष्ये द्विधा संगृहीता दृश्यन्ते। एकत्र संपुटीकरणम्, अन्यत्र तदभावः। यत्र संपुटीकरणं न दृश्यते ते श्लोका भाष्यकारस्यान्यस्य वा भाष्यकृतोपात्ताः। 'लङः शाकटायनस्यैव' 'ऋतो भारद्वाजस्य' इत्यादौ शाकटायनादीनामपि मतं सूत्रकृतोपात्तमिति यथा प्रमाणं भवति तथा भाष्यकृदुपात्तत्वात्

श्लोका अपि प्रमाणमेव । यत्र च संपुटीकरणं दृश्यत एतादृशानि श्लोकवार्तिकानि केवलं सूत्रार्थानुवादकानि, न स्वतःप्रमाणानि; तेषां प्रामाण्यं सूत्रवार्तिकप्रामाण्येनैवाभिमृष्टमिति न तेषु कश्चिदभिनवपदार्थावतारः । भाष्ये 'अपर आह—भारद्वाजीयाः पठन्ति' इत्यादि भिन्नमतसंग्रहान्न तस्य काचिन्न्यूनता, प्रत्युत तत्काले सूत्रव्याख्यानरूपेण यैरत्र व्याकरणे पराक्रान्तं सूरिभिस्तत्सम्यक् समवधार्यैव पारदृश्वना भाष्यकारेण युक्तायुक्तं विचार्य येषां शब्दानां प्रयोगेण साधुत्वसंप्रयोगो जायते तेऽत्र सूत्रवार्तिकनिग्रहानुग्रहेण साधिता इति विद्वदनुग्रहोऽप्युपपत्स्यते । अत एव वार्तिकेषूपलभ्यमानस्य स्वातन्त्र्यस्य श्लोकवार्तिकेष्वाभासोऽपि न । अत एव श्लोकवार्तिकानि अखिलानि सूत्रवार्तिकव्याख्यानरूपाणि पदकृत्यप्रयोजनपराण्येव । अत एव तेषु सूत्रवार्तिकव्याख्यानभूतेषु न क्वाप्यपूर्वं विधानम् । यथा–'आन्महतः' इति सूत्रे–

**अन्यप्रकृतिस्त्वमहान् भूतप्रकृतौ महान् महत्येव । तस्मादात्वं न स्यात्पुंवत्तु कथं भवेदत्र ।**
**अमहति महान् हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् । तस्मात्सिध्यति पुंवन्निवर्त्यमात्वं तु मन्यन्ते ॥**

इत्यादिभिः श्लोकवार्तिकैः सूत्रव्याख्यानमेवाकारि । तत्रैव च 'महदात्वे घासकारविशिष्टेषूपसंख्यानं पुंवद्वचनञ्च' इत्यादिना भगवान् कात्यायनः 'महतो महत्या वा घासो महाघासः' इत्यादीन् प्रयोगान् सूत्रेणानुपपन्नानप्याज्ञापयति । उदाहरणञ्चैतद्दिङ्मात्रप्रदर्शनम् । श्लोकवार्तिकानामेकत्रानुसन्धानार्थमेवास्मिन् पुस्तके सकलभाष्यगतानि तानि ग्रन्थान्ते निबध्यन्ते ।

अपि च श्लोकवार्तिकानि मुनित्रयान्यप्रणीतान्यपि यदि स्वातन्त्र्येण साधुत्वप्रयोजकानीत्यभिमन्येत तदा सूत्रवार्तिकवदखिलानामप्युपादानं तेषामनिवार्यं स्यात् । न च तानि समग्राण्यत्र गृहीतानि-इति-अस्य शास्त्रस्यापूर्णत्वमेव स्यात् । न चैतत्तथा । अत एव 'अपर आह' इत्यादिना क्वचिच्छ्लोकस्य क्वचित्तदर्धस्य क्वचित्पादमात्रस्यापि संग्रहो दृश्यते भाष्ये । श्लोकवार्तिकानां सर्वेषामसंग्रहेऽपि नास्य शास्त्रस्य काचिन्न्यूनता, न वा तानीतरत्र दृश्यमानानि शब्दसाधुत्वार्थमुपादेयानि । पादमात्रिकस्य श्लोकवार्तिकस्य संग्रहश्चेतरत्रापि दृश्यते, यथा—'अम्बार्थनद्योर्ह्रस्वः' इति सूत्रे 'अम्बार्थं ह्यक्षरं यदि' इति पादमात्रमेवोपसञ्जग्राह भाष्यकारः । अत्र सम्पूर्णस्य तस्य व्याख्याने ग्रहणे वा फलाभावेन नैतदुल्लिखितमिति नैषां श्लोकवार्तिकानां स्वातन्त्र्येण प्रामाण्यमित्यर्थतः **संसिध्यति** ॥

## ( सन्दिग्धवार्तिकानि )

**भगवता** कात्यायनेन प्रणीतानि वार्तिकान्यपि भाष्यतो विविच्य निर्धारणे भृशं सन्दूयमानानीदानीं संवृत्तानि, पठनपाठनशैलीसम्प्रदायलोपात् । तन्निर्द्धारणविषये किञ्चिद्वक्तव्यमवशिष्यते । तत्र च भाष्यसम्पुटीकरणयुतानि वार्तिकानीति तु सर्वसम्मतः पन्थाः । सम्पुटीकरणसत्त्वेऽपि तद्वचनं वार्तिकमेवेति वक्तुं न शक्नुमः । यतः—'नान्तः पादमव्यपरे' ( ६।१।११५ ) इति सूत्रे भाष्ये–'नान्तः पादमिति सर्वप्रतिषेधः.। नान्तः पादमिति सर्वस्यायं प्रतिषेधः । कथम् ? अचीति वर्तत इत्युक्तम् ।' इत्युक्तम् । तत्र 'नान्तः पादमिति सर्वप्रतिषेधः' इति भाष्यांशः समानार्थकभाष्यसम्पुटीकरणसत्त्वाद्वार्तिकमिति भ्रमः सम्प्राप्नोति । अस्य वार्तिकत्वे 'नान्तः पादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः' इति उत्तरवार्तिके नान्तः पादमिति सर्वप्रतिषेधश्चेदित्यंशो विफलः स्यात् । पूर्वस्य वार्तिकत्वे हि 'तथा चेदतिप्रसङ्गः' इत्येव वार्तिककृतोक्तं स्यात् । वार्तिकेऽनुवादस्य वैय्यर्थ्यान्नेदं वार्तिकमिति निर्णीयते ।

इदं **वार्तिकमित्याग्रहे** तु तस्मिन्नेव सूत्रे भाष्ये 'एवं तर्हि—अतीति वर्तते । अकाराश्रयं यत्प्राप्नोति तस्य प्रतिषेधः' इत्यत्र 'अतीति वर्तते' इत्यस्यापि वार्तिकत्वमापद्येत, तस्याप्युत्तरेण भाष्येण सम्पुटीकरणात् । ननु च तस्याप्यस्तु वार्तिकत्वं, का हानिः ? इति चेत्, वार्तिकानि च प्रायः **उपसंख्यानपराणि सूत्रस्थपदाक्षेपसमाधानपराणि सूत्रार्थनिर्द्धारकाणि वा** सम्भवन्ति—इति भगवतः कात्यायनस्य शैलीसिद्धः सम्प्रदायः । अनूदितवचसामपि वार्तिकत्वेऽनुवादवैय्यर्थ्यं शैलीविरुद्धं च स्यादिति नास्य वार्तिकत्वम्, तत्समानन्यायेन 'नान्तः पादमिति सर्वप्रतिषेधः' इत्यस्यापि न वार्तिकत्वमित्यापतति । अपि च वार्तिकावतरणमवतारयता भाष्यकृता तदंशं कंचिदनूद्य तदुपपादनमनूदितांशस्य वार्तिकत्वाभावमेव द्योतयति । तथा च 'एङ्प्रकरणात्सिद्धम् । एङोऽतीति वर्तते । एङोऽति यत्प्राप्नोति तस्य प्रतिषेधः' इत्यत्र 'एङ्प्रकरणात्सिद्धम्' इत्यस्यापि न वार्तिकत्वम्, उत्तरत्र 'एङ् प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेधः' इति वार्तिकेऽनुवादवैय्यर्थ्यात् । एतान्यपि वार्तिकानीति वदता 'इदं लुप्तं स्यात्' इत्यादि टिप्पणमारचयता च गौडेन 'अब्धिर्लङ्घित एव वानरभटैः' इत्युक्तिः स्मारितेति किमु परच्छिद्रान्वेषणेन ? । वार्तिकविषये पूर्वाचार्याणामपि क्वचित्सन्देह आसीदिति तत्तद्ग्रन्थावलोकनतोऽवभासते । यथा—'इन्द्रे च' (६।१।१२४) इति सूत्रे भाष्ये 'इन्द्रादाविति वक्तव्यम्, इहापि यथा स्यात्' इत्युक्तम् । तद्व्याख्यानावसरे नागोजीभट्टैः 'वाक्ये गोशब्दस्येन्द्रपरत्वासम्भवेन समासाक्षेपात्प्रत्यासत्त्येन्द्रस्योत्तरपदत्व एव प्रवृत्तिः स्यादिति वार्तिकारम्भः' इत्युक्तम् । तच्च 'वार्तिकारम्भः' इति कथनं भट्टाचार्याणां 'इन्द्रादाविति वक्तव्यम्' इति भाष्यमुद्दिश्यैव । तच्च न कात्यायनप्रणीतं वार्तिकम्, सम्पुटीकरणाभावात् । इदानीञ्च ससम्पुटीकरणपाठस्यानुपलम्भाद्भाष्यमेव वार्तिकत्वेन भट्टाचार्यैर्गृहीतमित्यवगम्यते । ज्ञ.पुस्तके 'इन्द्रादौ' इति वार्तिकं

प्रदर्श्य 'इदं लुप्तम्' इति टिप्पण्या परिष्कृतम् । तादृशपाठश्च भट्टाचार्येभ्योऽपि प्राचीने भाष्यपुस्तके नोपलभ्यत इति भाष्यांशस्यैव वार्तिकत्वेन ग्रहणमुद्द्योते विराजत इति वयं विद्मः। विद्वत्तमैरत्रावधानं देयमित्यभ्यर्थ्यापरत्र दृष्टिं सञ्चारयामः ।

**तथा** 'सुट्कात्पूर्वः' ( ६।१।१३५ ) इति सूत्रे 'सुटि कात्पूर्वग्रहणमककारादौ कात्पूर्वार्थम्' इत्यपि वार्तिकं न, सम्पुटीकरणाभावात् । तदुत्तरं च 'सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि तत्सिद्धम्' इति वार्तिके तदनुवादवैयर्थ्याच्च । अस्मिन् सूत्रे झ. पुस्तके वार्तिकत्वेनास्य संग्रहः, तदुत्तरञ्च सम्पुटीकरणमपि तत्र कल्प्यते तत्सर्वमरुचिग्रस्तम् । अनुपलब्धस्य सम्पुटीकरणस्य सत्त्वं प्रकल्प्यास्य वार्तिकत्वेनोल्लेखः सिकतासेतुरिव राजत इति विद्वांस एवात्र प्रमाणम् । वयं तु नैतद्वार्तिकमिति सम्प्रधारयामः, किन्तु **अग्रिमवार्तिकस्यावतरणभाष्यमेवैतदिति** ।

**तथा** 'अनुदात्तं पदमेकवर्जम्' ( ६।१।१५८ ) इति सूत्रे भाष्ये 'प्रकृतिस्वरे प्रत्ययस्वराभावः' इति ग्रन्थो दृश्यते । एतच्च वार्तिकमिति सुपरिष्कृते छ. पुस्तके दरीदृश्यते । झ. पुस्तकेऽपि तथैव । वस्तुतस्तु नैतद्वार्तिकमिति संप्रधारयामः । यतोऽस्य वार्तिकत्वे नैतदुपसंख्यानपरम्, न चाक्षेपसमाधानपरम्, न वा सूत्रार्थनिर्धारकम् । प्रायः कात्यायनस्य भगवतः शैलीविरुद्धोऽयं संप्रदाय इति भाष्यमेवैतदिति निर्णीयते । अन्यच्च प्राचीनतमपुस्तकेष्वस्य संपुटीकरणभाष्यमपि नोपलभ्यते । अपि चास्य व्याख्यानावसरे नागोजीभट्टैरेवमुपन्यस्तम्—'प्रकृतिस्वरोऽन्तेत्यस्य परत्वादित्याशयं बुद्ध्वा शङ्कते भाष्ये—प्रकृतिस्वरे प्रत्ययस्वराभाव इति ।' अस्य च वार्तिकत्वे 'भाष्ये' इत्युपन्यास उद्द्योतकर्तां न संगच्छेत । प्रतीकमपि 'प्रकृतिस्वरे प्रत्ययस्वराभावः' इत्येव तैरुपात्तम् । यच्च भाष्ये संपुटीकरणमत्रोपक्षिप्तं कैश्चित् तत् 'प्रकृतिस्वरे प्रत्ययस्वरस्याभावः' इति । तथा च संपुटीकरणभाष्यसत्त्वे 'भाष्ये—प्रकृतिस्वरे प्रत्ययस्वरस्याभावः' इत्युपादेयं स्यात् । तदभावादेव च निश्चयेन वयं ब्रूमो नैतद्वार्तिकमिति ।

**तथा** 'पृषोदरादीनि यथोपदिष्टम्' (६।३।१०९) इति सूत्रे 'उत्तरपदादेः ष्टुत्वञ्च' इति वार्तिकं झ. पुस्तकेऽभिहितम् । तत्प्रामादिकम् । कैयटे 'उत्तरशब्देनात्र भाष्ये धात्प्रत्ययोऽभिधीयते' इति ग्रन्थे 'भाष्ये' इति कथनान्नैतद्वार्तिकम् । उद्द्योतेऽपि 'धासु वा, धासु वेति वक्तव्यम् । उत्तरपदादेः ष्टुत्वञ्च वक्तव्यम्' इति भाष्यव्याख्यावसरे भाष्यकृत उत्तरपदादेरिति वचनस्य वैयर्थ्यमाक्षिप्य 'अत एव भाष्ये ष्टुत्ववचनं वाशब्दघटितं पृथगेवोक्तम्' इत्युक्तम् । तेन 'उत्तरपदादेः ष्टुत्वञ्च' इति न वार्तिकं किन्तु भाष्यमेवेति सूर्यप्रकाशवत्स्पष्टम् । **केचित्** तस्मिन्नेव सूत्रे 'धासु वा' इति वार्तिकोत्तरं 'दुरोदाशनाशदभध्येषु' इति वार्तिकं छ. पुस्तके निर्दिष्टम् । पूर्ववार्तिकाच्चोत्वमत्रानुवर्तते । उत्तरपदादेश्च ष्टुत्वमिति भाष्यकृतोच्यते—इति **आहुः,** तदसमीचीनम्; यदि पूर्ववार्तिकादुत्वानुवृत्तिः स्वीक्रियेत तदा विकल्पानुवृत्तिरपि संभावनीया। यदि च वाशब्दे स्वरितत्वप्रतिज्ञानाभावात्तन्नानुवर्तेत इति कल्प्यते तदा तत्सन्नियोगशिष्टस्योत्तरपदादेः ष्टुत्वञ्चेत्यस्याप्यननुवृत्तौ दूडाश इत्यादीनामसिद्धिः स्यात् । उत्तरवार्तिके च 'स्वरो रोहतौ छन्दसि' 'स्वरो रोहतौ छन्दस्युत्वम्' इति द्विप्रकारकः पाठो दृश्यते । छन्दस्युत्वमिति पाठे दुरोदाशनाशेत्यस्य न वार्तिकत्वम् । तत उत्वस्यानुवृत्तावत्रोत्वग्रहणमनर्थकं स्यात् । तत्र छन्दसि—इत्येव पाठे पूर्वस्य वार्तिकत्वं स्वीकरणीयम्, तथापि संपुटीकरणभाष्याभावेन दुरोदाशनाशेत्यस्य तत्त्वाश्रयणमयुक्तम् । अस्मिन् पुस्तके दु षष उत्वमित्यादिवार्तिकोत्तरं 'धासु वा' इत्येव वार्तिकम्, उत्तरपदादेः ष्टुत्वञ्चेति भाष्यमेव । भाष्यकृता च विकल्पासंबन्धाय तत्पृथगुक्तम् । दुरोदाशनाशेत्यपि भाष्यमेव । ततश्च 'स्वरो रोहतौ छन्दस्युत्वम्' इति वार्तिकमित्याश्रितम् । तथा च न कोऽप्यनुवृत्तिनिवृत्त्यादिकथाप्रसङ्ग इति ।

**एवमेव** 'उपसर्गादृति धातौ' ( ६।१।९१ ) इति सूत्रे भाष्ये 'उत्तरपदविकाराश्च' इति वार्तिकमस्माभिः स्वीकृतम्, छ. पुस्तके नेदं दृश्यते । अस्मदाश्रितानि अ. क. ट. ड. इत्येतानि भाष्यपुस्तकानि अस्य वार्तिकत्वे सम्मतानि । उद्द्योतकाराश्च 'एतद्वार्तिकप्रयोजनान्यपि वार्णस्यान्तरङ्गत्वात् वार्णादाङ्गमिति परिभाषयैव सिद्धानीति बोध्यम्' इति प्राहुः, तेनाप्यस्य वार्तिकत्वं प्रामाणिकमिति प्रतीयते ।

**तथा** 'भ्रस्जो रोपधयो रमन्यतरस्याम्' ( ६।४।४७ ) इति सूत्रे 'रसोर्वचनात्सिद्धम्' इति वार्तिकमाश्रित्य तदुत्तरं रसोर्वचने सिचि वृद्धेर्भ्रस्जादेशो वक्तव्यः' इत्यस्य च तत्वं नाश्रितम्, तादृशस्य पाठस्यानुपलम्भात् । छ. पुस्तके एतद्विपरीतः पाठो दृश्यते ।

**एवमेव** 'ल्यपि लघुपूर्वात्' ( ६।४।५६ ) इति सूत्रे 'अल्लोपे च गुरुपूर्वात्प्रतिषेधः' इति वार्तिकं च. छ. झ. ढ. पुस्तकेषु दृश्यते । नैतत्तदत्राद्रियते, प्रामाणिकान्यपुस्तकेषु तादृशपाठानुपलम्भात् । उद्द्योते च 'भाष्ये दोषान्तरमाह—अल्लोपे चेति' इति भाष्योक्तोऽयं दोष इत्युक्तत्वाच्च । एतच्च तस्मिन्नेव सूत्रे टिप्पणे स्फुटमुक्तमिति तत एवावगन्तव्यम् ।

**इदञ्चाप्यवधेयम्**—प्रामाणिकपुस्तकेषु यादृशः पाठ उपलभ्यते प्रायस्तादृश एवात्र सन्निवेशितः । आदर्शत्वेनाश्रितपुस्तकेष्वनुपलभ्यमानः पाठो न कल्प्यते । तादृशस्थलेषु टिप्पणे एव वैचित्र्यं प्रदर्श्यते न ग्रन्थेषु इति ।

**तथा** 'हुश्नुवोः सार्वधातुके' ( ६।४।८७ ) इति सूत्रे भाष्ये मुद्रितपुस्तकेषु 'यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम्' इति वार्तिकमुपन्यस्तम् । सम्पुटीकरणविशिष्टपाठानुपलम्भान्नैतदत्राश्रीयते

**तथा** 'ऊदुपधाया गोहः' (६।४।८९) इति सूत्रे 'अयादेशप्रतिषेधार्थञ्च' इति वार्तिकं दृश्यते मुद्रितपुस्तकेषु। अस्माभिस्तु तथा पाठानुपलम्भान्नाश्रितम्। अथ च 'ह्रस्वादेशे ह्ययादेशप्रसङ्गः' इति वार्तिकस्यावतरणपरत्वेनैतद्भाष्यं संगच्छत इति नास्य वार्तिकत्वमिति सुधियो विदाङ्कुर्वन्तु।

**एवमेव** 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' ( ६।४।९४ ) इति सूत्रे 'चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे च' इति वार्तिकं च. छ. पुस्तकयोर्न दृश्यते तदुत्तरं च 'चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्' इति वार्तिकं पठ्यते। तादृशपाठस्यानुपलम्भान्नैतदत्राश्रितम्।

कात्यायनकृतवार्तिकस्यापि व्याख्या श्लोकवार्तिके दृश्यते। यथा–'अष्टाभ्य औश्' ( ७।१।२१ ) इति सूत्रे—

**'आत्त्वं यत्र तु तत्रौत्वं तथा ह्यस्य ग्रहः कृतः। स्वमोर्लुक्च त्यदादीनां कृते ह्यत्वे न लुग्भवेत् ॥'**

इति वार्तिकमुक्त्वा तदुत्तरं 'स्वमोर्नपुंसकात्' ( ७।१।२३ ) इति सूत्रे 'स्वमोर्लुक् त्यदादिभ्यश्च'इति वार्तिकोत्तरं किं पुनः कारणं न सिध्यतीति प्रश्नस्य पूर्वोक्तश्लोकवार्तिकांशेन 'कृते ह्यत्वे न लुग्भवेत्' इत्यनेनोत्तरितम्। 'स्वमोर्लुक् च त्यदादीनां' इत्यंशस्य व्याख्या भाष्ये न दृश्यते। स एवार्थो वार्तिकेनोच्यत इति न पुनस्तद्व्याख्यातम्। एवञ्च 'स्वमोर्लुक् त्यदादिभ्यश्च' इत्येतद्वार्तिकं श्लोकवार्तिके 'स्वमोर्लुक् त्यदादीनां'इत्यादिनोपसंगृह्य तस्यानुपपत्तिः श्लोकवार्तिकेन दूरीकृतेति वार्तिककारादन्यस्तदुत्तरभावी च श्लोकवार्तिककारः सिध्यतीति निर्विवादम्।

'इकोऽचि विभक्तौ' ( ७।१।७३ ) इति सूत्रे—

**'इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्। स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ॥**
**रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि। नुड्वाच्य उत्तरार्थं तु इह किञ्चित्त्रपो इति ॥'**

इत्येवं वार्तिकसंज्ञकं श्लोकद्वयमुच्यते। तत्र प्रथमश्लोकस्य च भाष्ये तत्तदंशोपादानेन व्याख्या कृता। उत्तरश्लोकस्य च तत्तदंशमनुपादाय केवलं सामान्यव्याख्यैव कृता, अन्ते च तत्समुपवेशितमित्यनेन वार्तिकविषये भाष्यकाराणामादरातिशयः सूच्यते। श्लोकवार्तिकविषये च न तादृशी प्रामाण्यबुद्धिरित्यनया भङ्ग्या ज्ञायते। उदाहरणं चैतत्। एतादृशान्युदाहरणानि सुबहून्यपि विस्तरभयान्नैवात्राश्रियन्ते, तत्तत्स्थले टिप्पण्यां च संसूचितानीति तत एवावगन्तव्यम् ॥

वार्तिकनिर्धारणादिविषये भाष्यपाठ एव प्रमाणम्, अतः शुद्धतरः प्राचीनतमो भाष्यपाठ एव संरक्षणीयः। पाठेषु वर्णमात्रवैपरीत्याधानेनापि ग्रन्थस्योच्छेदोऽर्थवैपरीत्यं चादधाति–इति तदर्थं द्वित्राणि स्थलानि प्रदर्श्यन्ते—

## पाठभ्रंशकराणि स्थलानि

'र ऋतो हलादेर्लघोः' ( ६।४।१६१ ) इति सूत्रभाष्यव्याख्यानावसरे उद्द्योतकृता 'टिलोपोऽपीति' इति प्रतीकमुपादाय 'ऋकाररूपायाष्टेर्लोपो भवतीत्युक्ते सामर्थ्यादनन्त्यस्य ऋभावः फलतीति भावः' इति ( ३६५ ) तमे पृष्ठे उक्तम्। तत्र झ. ढ.संज्ञकयोर्मुद्रितपुस्तकयोः 'सामर्थ्यादनन्त्यस्य रभावः फलतीति भावः' इति पाठो दृश्यते। लिखितेषु प्रामाणिकेषु प्राचीनतमपुस्तकेषु अखिलेष्वपि 'ऋभावः' इति एकविध एव पाठोऽस्तीति अस्माभिः स आदृतः। अन्यच्च 'र ऋतो हलादेः–'इति सूत्रे ऋतः स्थाने रेफ इत्येवोक्तम्, न तु ऋकारोऽन्त्योऽनन्त्यो वेति निर्धारितम्। अतो भाष्यकृता 'इह कस्मान्न भवति–मातयति, भ्रातयति' इत्याशङ्क्य परत्वादत्र रभावः प्राप्नोतीत्युक्त्वा 'यदि पुनरवशिष्टस्य रभाव उच्यते' इति पक्ष उपस्थापितः। तस्य चायमर्थः–'टेः'इति सूत्रं लोपपदं चात्रानुवर्त्य हलादेष्टेर्लोपो विधेयो ऋतश्च रेफः करणीयः। तथा चान्त्यस्य लोपेऽनन्त्यस्यैव ऋतो रभावो भविष्यतीति मातयतीत्यादौ न दोष इति भाष्याशयः। तदेतत्कैयटेनोच्यते—'टिलोपोऽप्यनुवर्तते, ततश्चान्त्यस्य तृशब्दस्य टिलोपोऽनन्त्यस्य तु रभाव इति मातयतीत्यादौ रादेशाभावः' इति। अस्य ग्रन्थस्य समर्थनं मातयतीत्यादौ वारणञ्च 'ऋकाररूपायाष्टेर्लोपो भवतीत्युक्ते मातृशब्दे ऋकारस्य लोपे सामर्थ्यात्–टिलोपविधानसामर्थ्यात् अनन्त्यस्य ऋभावः फलतीति भावः' इत्यनेन ग्रन्थेन नागोजीभट्टैः क्रियते। तत्र टेर्लोपो भवतीति टिलोपविधानसामर्थ्यादनन्त्यस्य ऋभावः–ऋत्वं फलतीति न्याय्योऽर्थः। सूत्रेऽनुक्त एवार्थः 'फलति'इति शब्देन बोद्धव्यः। रभावस्तु सूत्रेण प्राप्त एवेति न स फलितः। ऋकारश्चान्त्योऽनन्त्य इत्युभयविधोऽपि प्राप्तस्तत्र टिलोपविधानसामर्थ्यादनन्त्यस्य ऋत्वं फलतीति निष्कृष्टोऽर्थः। एवञ्च फलतीत्यंशोऽप्युपपन्नो भवति। मुद्रितपुस्तकानुरोधेन 'रभावः' इति पाठे स्वीकृते रभावोऽनन्त्यस्य ऋकारस्य फलतीति 'ऋकारस्य'इत्यध्याहृत्य कथंचिदन्वयः स्वीकार्यः स्यात्। तत्र च रभावे फलितत्वमनुपपन्नमिति **रभाव** इति पाठः प्रामादिकः। अत्र चापाततोऽवलोक्यमाने रभावः फलतीति पाठः समीचीन इति प्रतीयते, ऋभाव इति पाठस्तु समर्पकोऽपि द्राक् तस्य प्रतीतिर्न भवतीति शनैः शनैः स पाठो लुप्तः स्यादतस्तत्संरक्षणाय तत्र सूत्रे यत्नोऽस्माभिः कृत इति मूलग्रन्थसंशोधने ग्रन्थस्य वास्तवं स्वरूपं न हार्यमिति सुधियोऽत्र प्रमाणम्। तदग्रे 'मातयतीत्यादाविति' इति प्रतीकमुपादाय 'अनन्त्यऋकारस्याभावादित्यर्थः' इति व्याख्यानमारचयद्भिः शेखरकृद्भिः 'ऋभावः फलति' इत्येव पाठः स्वाभिमत इति स्फुटं प्रतिपाद्यते।

**तत्रैव प्रदीपे** 'ततश्चान्त्यस्य तृशब्दस्य टिलोपोऽनन्त्यस्य तु रभावः' इति ग्रन्थे ङ. ढ. पुस्तकयोः 'ततश्चान्त्यस्य ऋशब्दस्य' इति पाठ उपलभ्यते सोऽपि प्रामादिक एव, तादृशपाठस्य प्राचीनपुस्तकेषु प्रामाणिकेषु क्वापि अनुपलम्भात्। अपि चात्र सूत्रे लोपपदस्य 'बह्वोर्लोपो भू च बह्वोः' इति सूत्रादनुवृत्तिः सम्भवति, तस्मिन् तदग्रे च 'इष्ठस्ययिट्‌च' इति सूत्रे लोपपदस्य पञ्चम्यन्तेन सहान्वयो दृश्यते, तादृशोऽप्यत्र यदि स्वीक्रियेत तदा दोषवारणाय कैयटेन तदनुकूलोऽर्थः स्वीकृतः। स चैवम्—हलादेः परस्यान्त्यस्य तृशब्दस्य टेर्लोपो लघोर्ऋशब्दस्य च र इति। मातृशब्दे हलादेर्माशब्दात्परस्तृशब्द एव सम्भवतीति तृशब्दोपादानं स्वरसतः संगच्छते। तत्र हलादेः परो ऋशब्दस्तु न सम्भवति, तकारेण व्यवधानादिति तृशब्दोपादानम्। अन्यच्च तद्व्याख्यानभूते नागोजीभट्टग्रन्थे 'तृशब्दस्यान्त्यस्य टिलोप इत्यन्वयः' इति दर्शनात्स एव प्रामाणिकः पाठ इति पांशुलपादस्यापि न सन्देहलेशः। एवं स्थिते 'ततश्चान्त्यस्य ऋशब्दस्य' इति लेखनं जामातृसंशोधनमेवेति विदाङ्कुर्वन्तु।

**तथा** 'भ्रस्जो रोपधयोरमन्यतरस्याम्' (६।४।४७) इति सूत्रेण रमागमे विधीयमाने भ्रस्जादेशात्सम्प्रसारणं विप्रतिषेधेन इति वक्तव्यं स्यादिति दोषमापाद्य रसोर्वा ऋभवतीति वक्ष्यामीत्युक्तं भाष्यकृता। ऋकरणपक्षे च सिचिवृद्धेर्भ्रस्जादेशो विप्रतिषेधेनेति वक्तव्यं स्यादिति दोषान्तरमुक्तम्। तद्भाष्यव्याख्यानावसरे प्रदीपे ( ३११ )तमे पृष्ठे ऋभावे परत्वाद्वृद्धिः प्राप्नोति तद्वारणाय यत्नः कर्तव्यः, रम्भावे तु क्रियमाणे पुनः प्रसङ्गविज्ञानाद्वृद्धि सति सिद्धमिष्टमित्युक्तम्। तत्र 'रम्भावे इति' इति प्रतीकमुपादाय "इदमुपलक्षणम्, बरीभृज्यत इत्यत्र नित्यतया जद्वयश्रवणार्थं ऋभावात्सम्प्रसारणं विप्रतिषेधेनेत्यस्यावश्यकत्वात्। किञ्चापिल्लिटि ऋभावेऽसंयोगात्परत्वेन कित्त्वे गुणाभावे बभृज्जतुरिति स्यात्, इष्यते तु बभर्जतुरिति" इत्युक्तमुद्द्योतकारेण। अयञ्च पाठः प्रामाणिकपुस्तकेषु सुस्पष्टं समुपलभ्यते। अत्र मुद्रितपुस्तकेषु 'बरीभृज्यते' 'बभर्जतुः' इत्येवं जद्वयवत्पाठो दृश्यते स प्रामादिकः। बभर्जतुरित्यस्य सिद्धये रम्भावः कार्यः, रम्भावे च जद्वयघटितं रूपं न सिद्ध्यतीति दोष एव। अत एवैकजकारघटितः पाठः सम्यक्। बरीभृज्यत इत्येतच्च भ्रस्जधातोर्यङन्तस्योपलक्षणम्, तत्र ऋभावात्सम्प्रसारणं विप्रतिषेधेनेत्यस्याभावे रसोर्वा ऋवचनमित्यस्य नित्यतया एकजकारघटितं रूपं स्यात्, जद्वयघटितरूपासिद्धये च तदावश्यकमित्याशयः। अत्रत्यप्रदीपोद्द्योतयोः सङ्गतिस्तु तस्मिन्नेव सूत्रे टिप्पण्यां स्फुटमुक्तेति नेह प्रपञ्च्यते। एवञ्चोभयत्रापि जद्वयघटितरूपोल्लेखस्तु लेखकप्रमादादेवेत्यवगन्तव्यम्॥

**प्रदीपे अनवधानकल्पम्—**

क्वचिच्च टीकायामपि भाष्यान्वयविपर्यासो दृश्यते। तथाहि–'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' ( ६।४।१४९ ) इति सूत्रे भाष्ये 'अन्तिकस्य तसि कादिलोपे आद्युदात्तत्वञ्च' इत्युक्तं वार्तिककृता। तदुदाहरणञ्च 'अन्तितो न दूरात्' इति प्रदर्श्यते। ततश्च भाष्यकृता तसे तादेश्च कादेश्चेत्युक्त्वा 'अग्ने त्वन्नो अन्तमः' 'अन्तितमेऽवरोहति' इत्युदाहरणे प्रदर्शिते। अस्योभयस्यापि प्रत्याख्यानाय—

**'तसीत्येष न वक्तव्यो दृष्टो दाशतयेऽपि हि। द्यौ लोपोऽन्तिषदित्यत्र तथाऽद्यौ येऽन्त्यथर्वसु॥'**

इति श्लोकवार्तिकमुपन्यस्य 'अन्ति ये च दूरके' इत्युदाहरणं दत्तं भगवता। अयं चैतद्वार्तिकार्थः–तसि प्रत्यये परतो यः कादिलोप उच्यते स न वक्तव्यः, यतो दाशतये–ऋग्वेदेऽपि 'अन्तिषत्'इत्यत्र द्यौ–उत्तरपदे परतो लोपो दृश्यते, तथाऽद्यौ-अनुत्तरपदेऽपि ये शब्दे परतोऽथर्ववेदेऽन्तिकशब्दस्य कादिलोपो दृश्यतेऽतस्तद्रूपसिद्धयेऽन्तिकस्य तसि कादिलोप इत्याद्युक्त्वा 'अन्तिकस्य कादिलोपो बहुलम्' इत्येव वक्तव्यमिति। भाष्येऽवलोक्यमानं 'अन्ति ये च दूरके' इत्याथर्वणिकमुदाहरणं चेदानीं समुपलभ्यमानशौनकीयशाखायां काण्ड. १० सू. ४ मं. ९ 'अ॒र॒सास॑ इ॒हाह॑यो॒ ये अन्ति॒ ये च॑ दू॒र॒के। घ॒ने॑न हन्मि॒ वृश्चि॑क॒महिं॑ द॒ण्डेना॑गतम्॥' इत्येवं दृश्यते। अथर्ववेदस्य पैप्पलादशाखाऽपि कतिपयमन्त्ररहिता स्वररहिता चेदानीं पुस्तकमात्रावशेषा पाठभेदबहुला समुपलभ्यते। तस्यामप्ययं मन्त्रः का. १६ सू. १५ मं. ९ इत्यत्रान्यूनानतिरिक्ताक्षरो दृश्यते। अस्योभयत्रापि 'इह अरसासः अहयः ये अन्ति–समीपे ये च दूरके तत्र घनेन हन्मि वृश्चिकम्, आगतमहिञ्च दण्डेन हन्मि' इत्यर्थः। अत्र 'ये' इति पदं पृथग्भूतमिति वैय्याकरणनये उत्तरपदव्यवहारभाक् न भवति, तन्नये उत्तरपदशब्दस्य चरमावयवे रूढत्वात्। अतो ऋग्वेदे उत्तरपदपरतोऽपि लोपो दृश्यते–अथर्ववेदे चानुत्तरपदेऽपि लोपो दृश्यत इति 'तथाऽद्यौ येऽन्त्यथर्वसु' इति पार्थक्येनोक्तं श्लोकवार्तिककृता। कैयटे च तथाऽद्या येऽन्त्यथर्वसु इति व्याख्यानावसरे 'अद्याविति' इति प्रतीकमुपादाय "अनुत्तरपद इत्यर्थः। ये–यत्प्रत्यये परतः अन्ति–इति कृतकादिलोपोऽन्तिकशब्दो गृह्यतेऽथर्ववेदे। अन्तिके भव इति 'भवेच्छन्दसि' इति यति कृतेऽन्तिय इति भवति। कादिलोपस्यासिद्धवदत्राभादित्यसिद्धत्वाद्यस्येति लोपो न भवति" इत्युक्तम्। तत्र 'ये–यत्प्रत्यये परतः' इत्याद्यर्थकरणमथर्ववेदसंहिताया असान्निध्यात्तदनवलोकनमूलमेव। यत्प्रत्ययोपपादनार्थञ्च 'अन्तिके भव इति भवेच्छन्दसि–इति यति कृते' इत्युक्तिरपि तदनवलोकनमूलिकैव। यत्प्रत्यये परतश्च भत्वात्प्राप्तस्य लोपस्य वारणाय कादिलोपस्यासिद्धत्वादित्याद्युक्तिरपि तथैव।

ननु 'अन्ति ये च दूरके' इति भाष्योदाहरणेऽन्तियेशब्दस्य यत्प्रत्ययान्तत्वे का हानिः ? तथा च कैयटग्रन्थोऽप्युपपद्येतेति चेत्, न । अन्तिकशब्दाद्भवार्थे यति 'अन्तियेे' इत्यस्य 'अन्तिकोत्पन्नाधिकरणे' इत्यर्थः स्यात्, स चात्रानुपपन्न इति मन्त्रदर्शनादवगम्यते । अत एव 'ये' इत्यस्य पृथक्पदत्वम् । यत्प्रत्ययान्तत्वे स्वरसिद्धिश्च न स्यात् । तथाहि—शौनकीयशाखायां 'ये अन्ति ये च दूरके' इत्येवं स्वरो दृश्यते । अन्तिशब्दस्वरविषये पाठभेदोऽप्युपलभ्यते, स चेत्थम्—'अन्ति' 'अन्ती' इति । यत्प्रत्ययान्तत्वस्वीकारे पाठत्रयेऽपि प्रसिद्धस्य स्वरस्य सिद्धिर्न स्यात् । प्रथमो येशब्द उदात्तः, ततः परस्य—अन्तियेशब्दस्य 'यतोऽनावः' इत्याद्युदात्तत्वम्, चशब्दस्य 'चादयोऽनुदात्ताः' इत्यनुदात्तत्वम् । तत्र स्वरसंचारसमये—उदात्तादकारात्परस्य 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन स्वरितत्वे तस्यैव श्रवणं प्रसज्येत । 'ये' इत्यस्य पृथक्पदत्वे च तस्योदात्तत्वम् । ततः परस्य चशब्दस्य 'चादयोऽनुदात्ताः' इति फिट्सूत्रेणानुदात्तत्वे तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वे 'अन्ति'शब्दस्याद्युदात्तत्वेनान्तानुदात्तत्वे च 'उदात्तादनुदात्तस्य'इति न प्राप्नोति किन्तु 'उदात्तस्वरितपरस्य सन्नतरः' इत्यनेनानुदात्ततरत्वं 'न्ति'शब्दस्य । तथाच 'ये अन्ति ये च' इत्येवं स्वरश्रुतिः सिध्यति । एवञ्च 'तथाऽयौ येऽन्त्यथर्वसु' इत्यस्य व्याख्यानावसरे 'ये—यत्प्रत्यये' इत्यादिव्याख्यानं नैवोपपद्यते । यदि च गोपथब्राह्मणादिदर्शनेनाथर्ववेदस्य शाखाबाहुल्यमनुमीयते, श्रूयते च । तत्र क्वचिच्छाखायां यत्प्रत्ययान्तस्यान्तियेशब्दस्य तादृशस्वरानुकूलपाठानुमानेन कैयटव्याख्यानं तदनुकूलमिति कल्प्यत इति चेत्, तदपि न । तादृशपाठसत्वकल्पनेऽपि समुपलभ्यमानतद्विरुद्धपाठस्य भाष्योदाहृतस्य साधुत्वार्थं ये—यशब्दे परत इत्येवार्थो युक्तः । 'यदन्ति यच्च दूरके' इति ऋग्वेदमन्त्रे यच्छब्दे परत एव कादिलोपो दृश्यते । न त्वत्र यत्प्रत्ययोऽयमिति वक्तुं शक्यम् । तदेतच्च तस्मिन्नेव सूत्रे टिप्पण्यां विस्तरेणाभिहितमिति तदवलोकनेन **सफलयन्तु यत्नमिति विज्ञाप्यन्ते विद्वच्चरणाः ।**

पांशुलपादसुलभेऽस्मिन् विषयेऽनवधानमाचरद्भिः कैयटचरणैर्महदुपकृतं यत्—भाष्यस्य पादमात्रस्यापि निर्दुष्टं व्याख्यानं मादृशैः कर्तव्यमिति । अन्यथा 'अत्यतिष्ठद्दशाङ्गुलम्' इतिवत् भाष्याब्धिरखिलोऽपि परिवृत एव **कैयटचन्द्रेणेति** क्व व्याख्यानकथाऽप्यवशिष्यते ? यदि च क्वचिद्व्याख्यातो भाष्यांशोऽवशिष्येत तत्र सर्वतन्त्रस्वतन्त्रा **नागोजीभट्टा** बद्धपरिकरा एवेति न तादृशोऽवकाशः । अस्मत्सुभाग्यवशादत्र नागोजीभट्टैरप्युदासितम् । तथाहि—एतत्प्रदीपव्याख्यानावसरे भाष्योदाहरणमविविच्य प्रदीपे विश्वास्य चान्तिकशब्दाद्यति कादिलोपे इकारलोपः प्राप्नोतीति 'अन्तिये' इत्यस्यासिद्धिमाशङ्क्य कैयटोक्तां कादिलोपस्येत्यादिसमाधिं संसाधयद्भिर्भट्टैः 'अन्तिकशब्दाद्यत्यन्तिये' इत्येवानुमोदितमिति भाष्यव्याख्यानावसरोऽस्माभिः समासादितः । एतच्च सर्वतन्त्रपारदृग्भिर्विद्वद्भिर्यद्यनुमोद्येत तदैवात्मनि प्रत्ययमाधास्यतीति **तदनुमतिः संप्रार्थ्यते ।**

एवञ्च सूत्रपाठस्यान्यविधस्यानुपलब्ध्या तद्विषये संदेहलेशावताराभावेऽपि भाष्ये वार्तिकश्लोकवार्तिकभाष्यवार्तिकादीनां संप्रधारणाक्लेशात्तान्यनयैव रीत्योह्यानीत्यवधार्य प्रामाण्याप्रामाण्यविषये मुनित्रयादन्यस्यासामर्थ्यमत्रेति निश्चाय्य चान्यतो दृष्टिं सञ्चारयामः ॥

## भाष्यपुस्तकेषु पारम्पर्येणाशुद्धिदर्शनम्—

प्रत्यग्रग्रथितेऽस्मिन् षष्ठाध्यायभाष्ये पारम्पर्येणाशुद्धिभ्रमोऽवगम्यते स विदुषां समाजे समुपस्थापनीय इति स्वावगतमत्रोपस्थाप्यते—'गमः क्वौ' ( ६।४।४० ) इति सूत्रे भाष्ये 'गमादीनामिति वक्तव्यम् । इहापि यथा स्यात्—परीतत् सहकण्ठिका' इति दृश्यते । तत्र तनोतेर्लोप एव भाष्यकृत्कल्पितादिपदविषयः । तावत्येव प्रदर्शनीये 'सहकण्ठिका' इत्येतत्पर्यन्तं प्रदर्शनमस्य वाक्यस्यान्यत्र प्रसिद्धतरस्यात्रोपादानमित्यवगमयति । अन्यथा भाष्यकारः परीतदित्येव ब्रूयात् । तच्चेदमनुकरणं न लौकिकवाक्यस्य सम्भवति । लोके हि सहशब्दयोगे तृतीयाया दुर्वारत्वात् । सहशब्देन सह समासश्च द्विविधः, अव्ययीभावो बहुव्रीहिश्च । सहकण्ठिकेत्यत्राव्ययीभावो न भवितुमर्हति, आबन्तत्वात्, पुरीतदित्यस्य तद्विशेष्यत्वाच्च । न चायं 'तेन सहेति तुल्ययोगे' इति विधीयमानो बहुव्रीहिः, तस्यान्यपदार्थप्राधान्यात् 'वोपसर्जनस्य' इत्यनेन सहस्य सादेशापत्तिः । तस्य वैकल्पिकत्वात् तदभावे तु 'गोस्त्रियोः—' इति ह्रस्वापत्तिः । ननु ह्रस्वे कृतेऽपि पुरीतदित्येतद्विशेष्यसन्निधानाट्टाबन्तत्वं बहुव्रीह्याश्रयणे सूपपादमिति चेत्, न । 'पुरीतदस्त्रियाम्' इति वाचस्पतिकोशप्रामाण्यात् 'अन्त्रं पुरीतत्' इत्यमराच्च पुरीतच्छब्दस्य स्त्रीत्वाभावान्न तद्विशेषणे टाबन्तत्वं युज्यते । एवञ्च लोके 'सहकण्ठिका' इत्यस्यासम्भवाद्वेदं लौकिकप्रयोगानुकरणम् । तदर्थञ्च द्वितीयो वैदिकः प्रयोग उपास्यः । सहकण्ठिकाशब्दघटितप्रयोगश्चाथर्वणवेदे पैप्पलादसंहितायां "यत्ते क्लोमा यद्धृदयं पुरीतत्सहकण्ठिका । आमिक्षां दुन्हतां दात्रे क्षीरं सर्पिरथो मधु" ।१६।१३७।५। इति दृश्यते । तस्य च शौनकीयशाखासंहितायां काण्ड० १०।९।१५। इत्यत्रायमेव मन्त्रस्तदानुपूर्वीक एव दृश्यते । उभयत्र दृश्यमाने प्रयोगे पुरीतदित्येव । परीतत्सहकण्ठिकेतिप्रयोगश्चेदानीं समुपलभ्यमाने वेदे नोपलभ्यते । अतः पारम्पर्येणायमशुद्धः प्रयोगः इति कल्पनीयम्, उत परीतत्सहकण्ठिकेतिप्रयोगः क्वचिदन्यत्रान्वेषणीय इति वा विज्ञेयमिति **सुधियो विभावयन्तु । वयं त्वत्रैवं विद्मः**—'इहापि यथा स्यात्'इतिभाष्याक्षरस्वारस्येनान्यत्र प्रसिद्धस्य प्रयोगस्यात्रोपादानम् । तच्च लौकिकस्यासम्भवाद्वैदिकमेवेतीदानीं दृश्यमानः

प्रयोगः पुरीतत्सहकण्ठिका-इत्याथर्वणे समुपलभ्यमान एव भाष्यकृतोपलक्षितः स्यात् । तस्य वाक्यस्यार्थानुसन्धानेऽपि पुरीतदिति पदमेव तत्र स्वरसतोऽनुषज्यते । यतः कण्ठेन साहित्यं पुरीततो हृदयस्य, अथवा तादृशस्यैवान्यस्य पदार्थस्य कल्पयितुं योग्यम् । न च तादृशः पदार्थः परीतदितिपदेन कश्चित्प्रसिद्धतरः। **न चाथर्वणे** बहुत्र पाठभेदस्यापि दर्शनात्परीतदिति पाठः कल्पयितुं **युक्तः**, तादृशेनार्थानुसन्धानाभावात्। एवञ्च भाष्ये 'पुरीतत्सहकण्ठिका' इत्येव परिगृहीतम्। पुरीतदित्यत्र पूर्वपदस्य दीर्घः 'नहिवृतिवृषिव्यधि-' इति सूत्रेण क्रियते । तस्मिंश्च सूत्रे प्रायः सोपसर्गोदाहरणदर्शनबलात् आधुनिकवैयाकरणानां वेदाभ्यासानादरात् लेखकप्रमादाद्वा **'परीतत्'**इति विपर्यासः कल्पनापथमवतरति । अन्यच्च 'गमः क्वौ' इति सूत्रस्य सर्वलोकवेदसाधारण्येन स्वरविषयकविप्रतिपत्तेस्तत्राभावेन 'तत्'इत्येव रूपविषयकत्वेन च तादृशेन पाठभ्रंशेन न टीकाकाराणां यशः परिहास्यते । एतत्पुस्तके च 'परीतत्सहकण्डिका' 'परीतत्सहकण्ठिका' 'परीतत्सहकण्ठिकया' इत्यादि तत्तत्पुस्तकेषूपलभ्यमानाः पाठाः प्रदर्शिताः । पुरीतदिति पाठस्य क्वाप्यदर्शनादस्मत्कल्पनाकलितसाम्राज्यं सम्प्रदायविरोधात् पुस्तकेऽस्मिन्नारोप्यते । अत एव प्राचीनपुस्तकेषु ये पाठाः सन्दृश्यन्ते त एवात्र प्रदर्शिताः ।

**एवमेव** 'दीर्घात्' 'पदान्ताद्वा' (६।१।७५,७६) इति सूत्रव्याख्यानावसरे 'दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि' इति वार्तिकोदाहरणं–'न च्छायां कुरवोऽपरम्' इति दृश्यते । छान्दसमेतदुदाहरणमित्यत्र तु विवाद एव न । छन्दसि न ह्येतादृशन्तदुपलभ्यते । उपलभ्यते चाथर्वणसंहितायां 'न च्छायां करवोऽपरम्' ( कां. १३ सू. १ मं. ५६।५७ ) इति । अत्रापि अनुपलभ्यमानस्यास्योदाहरणस्योपलब्धौ यत्नः क्रियतामुत लेखकप्रमादात्प्रामादिकमेतदिति निर्णीयताम्, 'कुरवोऽपरम्' इत्यंशे सूत्रस्यानुद्देश्यत्वेन विदुषामनवधानात्पाठभ्रंशोऽयमिति वा कल्प्यताम् । अत्र हि तुग्विकल्पोदाहरणप्रदर्शनार्थमेतदुपन्यस्तम् । ततः परोंऽशो न सूत्रोद्देश्य इत्यनवधानमेव तत्र सन्दृश्यते । एवञ्च 'न च्छायां करवोऽपरम्' इत्येवोदाहरणमुचितम् । अस्माभिस्तु समुपलभ्यमानप्राचीनार्वाचीनाखिलपुस्तकदृष्टः पाठ एव संरक्षितः । अत्रत्यं तत्त्वं **सुधीभिरूहनीयम्** ॥

## आदर्शपुस्तकेष्वेकविध एवासङ्गतः पाठः–

आदर्शपुस्तकेषु सर्वेष्वप्येकविधस्यास्यासङ्गतपाठस्य दर्शनं क्वचिदेव । तदेवम्–'ग्रन्थान्ताधिके च' ( ६।३।७९ ) इति सूत्रे भाष्योद्योते 'काष्ठादय इति' इति प्रतीकमुपादाय 'अष्टादशनिमेषाः काष्ठाः, तास्त्रिंशत्कलाः, त्रिंशत्कलाः क्षणः' इत्युक्तम् । तत्राष्टादशनिमेषाणामेका काष्ठा भवतीति 'अष्टादशनिमेषाः काष्ठाः' इति काष्ठाशब्दाद्बहुवचनमनुपपन्नम् । तथैव 'तास्त्रिंशत्कलाः' इति कलाशब्दादपि । एवमेव च सर्वेषूपलब्धपुस्तकेषु पाठो दृश्यते । स चात्यन्तमसङ्गत इत्यस्माभिरेकवचनान्त एव पाठः काष्ठाकलाशब्दयोः प्रदर्शितः । अयञ्च पाठविभ्रमो न भाष्यस्थः किन्तूद्द्योतटीकायाम्परिदृश्यमान इति तथा प्रयतितम् । टिप्पण्यां च तादृशपाठस्यानुपलम्भोऽप्युपलम्भितः । कलाकाष्ठाशब्दयोश्च बहुवचनान्तत्वमेवेति भ्रमस्तु 'अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला' इति कोशदर्शनात्सुदूरापेतः । एवं चादर्शपुस्तकेष्वखिलेष्वपि सन्दृश्यमानः कलाकाष्ठाशब्दयोर्बहुवचनान्तपाठः कथमनुस्यूत इति शङ्काकुलं चेतः ॥

## भाष्यविषयककिंवदन्तीपरिहारः—

भाष्यकाराणामयं शैलीसिद्धः सम्प्रदायो यत्तैर्न साकल्येन सूत्राणि व्याख्यायन्ते। सामान्यतोऽवलोक्यमानेऽर्धांऽशः सूत्राणां व्याख्यातः, अर्धश्च कृतेन व्याख्यानेन गतार्थ इति न पुनरत्रोपगृहीतः । क्वचिच्च सूत्रद्वयमुपादाय यत्नेनैकेनैव व्याख्यातम् । यथा–'ह्वः सम्प्रसारणम्' 'अभ्यस्तस्य च' (६।१।३१।३२) इति, इदानीं सूत्रद्वयमेतत्प्रसिद्धतरम् । भाष्ये च योगविभागमाश्रित्य योगविभागस्य 'णौ च संश्चङ्विषयार्थः' इत्यादीनि फलानि प्रदर्श्यन्ते । अनुमीयते चानेन यत्नेन भाष्यतः पूर्वं योगविभागो नासीत् किन्तु संहितयैव सर्वाऽष्टाध्यायी पठ्यते स्म, अतो भाष्यकृत्कृतोऽयं यत्नः । एवञ्च सूत्रद्वयमेकत्रोपादीयमानमपि योगविभागस्य भाष्यकृदधीनत्वादेकेन यत्नेन सूत्रद्वयं व्याख्यातमिति वक्तुं न पार्यते । प्रत्युतैकत्रोपादीयमानं सूत्रद्वयमेकमेवेति भाष्यकृत्संमतं स्यात् । तदेतत्सर्वमपि 'विप्रतिषेधे परं कार्यम्' 'पूर्वत्रासिद्धम्' इत्यादिसूत्रदर्शनादापातरमणीयमित्यवभासते । परत्वपूर्वत्वव्यवहारश्च संहितायामनुपपन्न इति तत्राष्टाध्यायी संहितयैव सूत्रकृता प्रणीता स्यात्, परन्तु वाक्यभेदे प्रयतमानैः पूर्वतनाचार्यैर्यदनुपसंहृतं तद्भाष्ये समीकृतमिति कल्पना ज्यायसी । सूत्राणां संहितयैव पाठेऽपि पूर्वोक्तसूत्रद्वयदर्शनेन सूत्रभेदः सूत्रकाराभिमत एवेति निष्प्रत्यूहम् । तदेवं स्थितेऽपि यत्र भिन्नस्थलजे सूत्रे एकत्र समाहृत्य व्याख्यायेते तद्दर्शनान्नूनमयं भाष्यकाराणामभिसन्धिर्यदेकेन यत्नेन व्याख्यातव्यानि सूत्राणि न पुनर्व्याख्यायन्त–इति। **एतेन** भाष्येऽव्याख्यातानि सूत्राणि न भाष्यकृत्सम्मतानि, **अजाभक्षं** वा तद्भाष्यमित्यादि कुकल्पनाजालं **परास्तम्** । अस्मिन्नध्याये भिन्नस्थलानि सूत्राणि स्थलद्वये एव तथा व्याख्यायन्ते । यथा–'चेलखेटकटुककाण्डं गर्हायाम्' ( ६।२।१२६ ) 'अकधारये राज्यम्' (६।२।१३०) एतद्द्वयं सहैव व्याख्यातम्। अस्मिन् सूत्रे वार्तिककृता 'चेलराज्यादिभ्योऽव्ययम्' इति वार्तिकेन सूत्रद्वयविषयकोऽयं विप्रतिषेध उक्तः। तेन भाष्ये सूत्रद्वयोपादानलेखः सङ्गच्छते । विप्रतिषेधप्रकथनातिरिक्तं व्याख्यानं

तु सूत्रद्वयेऽपि नास्त्येव। एवञ्चाक्रमेण व्याख्यादर्शनात् येषु सूत्रेषु न कश्चिद्विशेषतो व्याख्यानावसरस्तत्र भाष्यपरिगृहीतत्वाभावेऽपि स्वतःप्रमाणत्वेन सूत्राणां प्रामाण्यं निर्विवादमेव ॥

ननु चेलखेटकटुककाण्डं गर्हायामकर्मधारये राज्यमिति सूत्रद्वयं समानविषयत्वादेकत्र व्याख्यातमपि न तथा चमत्कृतिमादधाति इति चेत्, न । 'समः समि' (६।३।९३) 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (६।३।११६) इति सूत्रद्वयं न केवलं विभिन्नस्थानोद्भवं किन्तु विभिन्नविषयमपि सहैव व्याख्याय सूत्राणि क्रमेणैव व्याख्यायन्त इति **भ्रमो निराकृतः ।**

## व्याकरणस्य सर्ववेदलोकविषयत्वम्—

तत्रभवान् भाष्यकारो लौकिकालौकिकोदाहरणैर्भाष्यमिमं विभूषयाञ्चकार । तत्र वैदिकोदाहरणानि सर्ववेदगतानि दृश्यन्ते । यद्यपि सकलभाष्यस्योदाहरणप्रदर्शनस्य नायं समयस्तथाप्येतदध्यायगतोदाहरणविवेचनवेलायामपि ऋग्यजुःसामाथर्वगतान्युदाहरणानि भाष्यकृतः 'सर्ववेदपारिषदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुम्' इति प्रतिज्ञां पारयन्ति । 'तत्पुरुषे कृति बहुलम्' ( ६।३।१४ ) इत्यादौ भाष्यकृता ह्येतदुक्तम् । अस्यार्थश्च तदुद्द्योते—'इदन्तु सर्वेषां वैदिकानां लौकिकानाञ्च शब्दानामनुशासनमित्यर्थः'इत्युक्तः । प्रदीपे च—'वेदेषु वैचित्र्येण व्यवहारात्तदङ्गव्याकरणेऽपि तथैव बहुलादिशब्देन व्यवहारः । तेनैतन्न चोदनीयम्–वाग्रहणमेव क्रियतां व्यवस्थितविभाषा वा आश्रीयतां किं बहुलग्रहणेन' इत्युक्तम् । एवञ्च प्रातिशाख्यादिषु तत्तच्छाखागतशब्दानामेव केषाञ्चन प्रतिपादनात्प्रकृतिप्रत्ययविभागानां स्वराणाञ्चासंग्रह इति व्याकरणस्यास्य वैदिकः प्राधान्येन विषयः, लोके चैतदानुकूल्येनैव शब्दप्रतिपत्तिरिति सर्ववेदपारिषदं शास्त्रमिति भाष्यकृत्प्रतिज्ञातं स्वरसत उपपद्यते । वैदिकोदाहरणानां सर्ववेदविषयताया दिङ्मात्रमत्र प्रदर्श्यते—

| | | |
|---|---|---|
| 'दाश्वान् साह्वान् मीढ्वांश्च' ( ६।१।१२ ) इति सूत्रे | 'दाश्वांसो दाशुषः सुतम्' | ( ऋ. १।१।६ ) |
| तस्मिन्नेव सूत्रे | 'मीढ्वः स्तोकाय तनयाय' | ( ऋ. २।७।१८ ) |
| " | 'यथेयमिन्द्र मीढ्वः' | ( ऋ. ८।३।२४ ) |
| 'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु' ( ६।१।६ ) | 'न ते दिवो न पृथिव्या अधिस्नुषु' | ( यजु. ४।६।१/४ ) |
| 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' ( ६।१।६८ ) | 'हरि वो मेदिनं त्वा' | ( यजु. ४।७।१४/४ ) |
| 'एङि पररूपम्' ( ६।१।९४ ) | 'अत्रैव त्वमिह वयं सुशेवाः' | ( यजु० अर० ६।१०।३ ) |
| " | 'अपां त्वेमन्सादयाम्यपां त्वोद्मन्सादयामि' | ( यजु० ४।३।१/१ ) |
| 'नान्तः पादमव्यपरे' ( ६।१।११५ ) | 'शुक्रं ते अन्यत्' | ( साम० प्र० १ अर्ध० २ द० ८ मं० ३ ) |
| 'अज्झनगमां सनि' ( ६।४।१६ ) | 'स्वर्गं लोकं सज्जिगांसत्' | ( साम० प्र० १ द० २ सं० ६ ) |
| 'शीर्षंश्छन्दसि' ( ६।१।६० ) | 'तद्वा अथर्वणः शिरः' | ( अथ० (पै०) १६।५९ ) |
| 'गमः क्वौ' ( ६।४।४० ) | 'पुरीततसहकण्ठिका' | ( अथ० (शौ०) १०।९।१५ ) |
| 'सन्यङोः' ( ६।१।९ ) | 'इयक्षमाणाभृगुभिः सजोषाः' | ( अथ० (पै०) ३।८।३ ) |

उदाहरणानां दिङ्मात्रमेवैतत्प्रदर्शितम् । प्रायश्च सर्ववेदसम्भूतोदाहरणदर्शनान्न कस्मिंश्चिद्वेदे भाष्यकाराणां विशेषाभिनिवेशो निर्द्धारयितुं शक्यः । विशेषाभिनिवेशश्च भाष्योपक्रमे 'वैदिकाः खल्वपि–शन्नोदेवीरभिष्टये। इषे त्वोर्जे त्वा । अग्निमीळे पुरोहितम् । अग्न आयाहि वीतये ।' इति विपर्यस्तोदाहरणदर्शनादध्यवसातुं शक्यः । तथाहि–प्रामाणिकग्रन्थेषु ऋग्यजुःसामाथर्वणमितिक्रमदर्शनाद्वेदावयवप्रतीकनिर्देशावसरे स एव क्रमो ग्रहीतुं युक्तः। 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इत्यादिदर्शनादृग्वेदोदाहरणस्यैव प्राथम्यं प्रशस्यते । भाष्ये चाथर्वणिकोदाहरणस्य प्राथम्यदर्शनाद्भाष्यकाराणामाथर्वणिकत्वमुपयुज्येत । एतद्विषये कैयटनागोजीभट्टाभ्यामुदासितम् । छायाकारेण पायगुण्डोपाभिधेन विदुषा **'न चैवमपि** प्रसिद्धऋगादिक्रमेण तत्वोक्तिरुचितेति **वाच्यम् ।** तथैव तदुपादेयमित्यत्र मानाभावात् । भाष्यकारस्याथर्वणत्वाच्च । शुद्धछान्दसयोर्द्वयोस्तत्र सत्त्वाच्च' इति समाहितम् । अस्मिन् समाधानग्रन्थे 'तथैव तदुपादेयमित्यत्र मानाभावात्' इति समाधानमेव ज्यायः, अतस्तदुपादानं बलवत्त्वात्पूर्वमुक्तम् । भाष्यकारस्याथर्वणत्वाच्चेत्येतत्समाधानं बलवत्तरप्रमाणाप्रदर्शनान्न सन्तोषयति चेतः । अस्मद्गुरुचरणानां पूज्यपादास्तत्रभवन्तो बालसरस्वत्यपरनामधेया **बालशास्त्रिचरणाः** स्वीये भाष्यटिप्पणे **'शन्नो देवी०'** इति प्रतीकमुपादाय **'अथ क्रमेण ऋग्यजुःसामाथर्वणां प्रदर्शनमकृत्वाऽथर्वयजुर्ऋक्साम्नां शन्न इत्यादिक्रमेण प्रदर्शयतो भगवतः क आशयः ?** उच्यते–त्रेतासाध्यानुश्राविके कर्मणि अथर्ववेदस्याभिचारादिनिरासासाधनीभूतानां मन्त्रविशेषाणां कर्मविशेषाणां च तत्र सद्भावेगादौ तस्योपयोगात् प्रथममुपस्थितिः' इत्याशयं प्रकटीचक्रुः । एवञ्चास्मत्परमगुरुचरणानामपि भाष्यकाराणामाथर्वणिकत्वं प्रबलतरप्रमाणाभावान्नाभिप्रेतमित्येव प्रतीयते । अस्मिन्विषये छायायां 'तथैव तदुपादेयमित्यत्र मानाभावात्' इति प्रदर्शनेन बहूपकृतं समाजस्य, येन तत्तच्छाखाध्येतारः कस्य वेदस्य पूर्वं पाठः करणीय इत्याद्यर्थे विवदमानाः सर्वेऽपि परास्ताः ।

वस्तुतस्तु शन्नो देवीत्यस्य पूर्वमुपादानाद्भाष्यकाराणामाथर्वणिकत्वाश्रयणेऽपि तत्तदुदाहरणप्रदर्शनवेलायामृग्यजुः-सामाथर्वगतान्युदाहरणान्यविशेषेणोदाहरद्भिर्भाष्यकृद्भिर्न तथा क्वापि प्रदर्शितम्, प्रत्युतोदाहरणावसरे ऋगादयोऽपि बहुत्र पूर्वमुपस्थाप्यन्ते-इति साकल्येन भाष्याभ्यासवतां नैतदविदितम् ॥

## भाष्यगृहीतांशस्येदानीमनुपलब्धिः—

**अत्रेत्थमाकूतम्**-इदानीं समुपलभ्यमानाथर्ववेदे शन्नोदेवीत्यनेनारम्भो न दृश्यत इत्यनेन महता हृच्छल्येन भृशमवसीदामो वयं वैदिकसंप्रदायानुयायिनः। अथर्ववेदस्येदानीं शौनकीया शाखा सुप्रसिद्धतरा, तस्याश्च 'ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः' इत्यनेनारम्भः। तस्य च द्वितीया पैप्पलादशाखा क्वचित्समुपलभ्यते। तदध्येतारश्च समुचितगवेषणेनापि नोपलभ्यन्ते। अस्याश्च प्राथमिकानि कानिचन सूक्तानि महता यत्नेनापि नोपलभ्यन्त इतीयं गण्डस्योपरि पिटिका संवृत्ता। ननु शन्नोदेवीति नारम्भवाक्यम्, किन्तु शौनकीयशाखायां का. १ सू. ६ 'शन्नो देवीरभिष्टय आपो भवन्तु पीतये' इति प्रसिद्धतरमेव मङ्गलार्थकसर्वपदघटितत्वात्तदादावुच्यते। अत एव भगवता लौकिकशब्दप्रस्तावावसरे शास्त्रान्तरोदाहरणप्रसिद्धानपि घटपटादीन् विहाय गौरश्वः पुरुष इत्यादीनां मङ्गलकामनया कृतमुपादानमुपयुज्यते-इति चेत्, **न**। शन्नोदेवीत्यस्य ऋगादिसाधारण्येनाथर्वणिकमेवैतदित्यत्र विनिगमनाविरहः स्यात्। इषेत्वेत्याद्यारम्भवाक्यसाहचर्याच्चैतदप्यारम्भकमेवेति कल्पना ज्यायसी। 'किं पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किंचित्, ॐ-इत्युक्त्वा वृत्तान्ततः शमित्येवमादीन् शब्दान् पठन्ति' इति भाष्ये शमादिशब्दोपादानाच्च शन्नोदेवीत्यस्य प्राथमिकत्वं निर्विवादमेव। अथ च ब्रह्मयज्ञादिषु चतुर्वेदाध्यायिभिस्त्रैवर्णिकैर्नित्यमुद्घोष्यमाणस्य शन्नोदेवीत्यस्याप्यनुपलम्भेन भृशमुद्वेजिता विद्वच्चरणांस्तदुपलब्धौ यत्नः क्रियता**मित्यभ्यर्थयामः**। यथामति निरूपयिष्यते चेदमन्तिमभागप्रस्तावनावसरे-इत्यभिधाय सर्वसंहारकाय कालाय तस्मै नम इत्यभ्युदीर्य च प्रकृतमनुसरामः ॥

## भाष्यकाराणां सर्वज्ञत्वम्—

महाञ्छब्दस्य विषयः, सप्तद्वीपा वसुमती···एकशतमध्वर्युशाखाः, नवधाथर्वणो वेद इत्याद्युद्घोषयन्तो भाष्यकाराः 'देवताद्वन्द्वे च' (६।३।२६) इति सूत्रे 'द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणस्यैतत्प्रयोजनं लोकवेदयोर्यो द्वन्द्वस्तत्र यथा स्यात्। कश्च लोकवेदयोर्द्वन्द्वः? वेदे ये सह निर्वापनिर्दिष्टाः, न चैते वेदे सहनिर्वापनिर्दिष्टाः' इत्यभ्युच्चार्य 'ब्रह्मप्रजापत्यादीनाञ्च' इति वार्तिकस्य प्रत्याख्यानमकार्षुः। अनेन च सर्वज्ञत्वमेषां सुस्पष्टं प्रतीयते। सर्वज्ञत्वे विवदिषमाणानामप्याधुनिकानां सुगूढमेतदुत्तरितं यत्, सप्तद्वीपाऽपि वसुमती यावती उपलभ्यते तावत्यैव निर्वाहः कार्यस्तदन्योपलब्धौ च यत्नः कार्य इति।

'आशितः कर्ता' (६।१।२०७) इति सूत्रे वार्तिककृता 'आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वञ्च' इत्यनेनाशितशब्दस्योपधादीर्घत्वमाद्युदात्तत्वं च निपात्यते। भाष्ये च तत्खण्डनमाङ्पूर्वस्याशितशब्दस्य प्रयोगमुपपाद्य कृतम्। वार्तिककारश्च 'अश् व्याप्तौ' इति धातोस्तद्रूपमाश्रित्योपधादीर्घं निपातनेन साधयामास। भाष्यकृता-आङ्पूर्वकोऽयं प्रयोग इत्याश्रित्य निपातनस्य वैफल्यं प्रदर्शितम्। एवञ्च 'आशितः' इत्यत्र पदपाठे भाष्यकृत्सरणिमनुरुध्यावग्रहः प्राप्नोति, तत्र चैतदुक्तं भगवता-'यद्येवमवग्रहः प्राप्नोति। न लक्षणेन पदकारा अनुवर्त्याः। पदकारैर्नामलक्षणमनुवर्त्यम्। यथालक्षणं पदं कर्तव्यम्' इति। अनेन पदकारापेक्षयाऽपि लक्षणस्य प्राबल्यप्रकथनेन व्याकरणमननुरुध्य वेदार्थमधिजिगांसमानाः परास्ताः। अन्यच्च पूर्वतनैः कृतो वेदार्थः कृतानि च पदानि स्वीकृता च व्युत्पत्तिस्तथैवास्माभिः स्वीकर्तव्येति नाग्रहः, किन्तु शास्त्रसरणिमनुरुध्य पूर्वतनानां प्रमादप्रदर्शनमपि न दोषाय-इति। तदेतच्च यथार्थवस्तुसंशोधनदक्षैः कामक्रोधाद्युपाध्यनधीनैरभिनिवेशानभिनिविष्टैः शिष्टैरेव कर्तुं युज्येतेति तल्लक्षणं भाष्यकृतं प्रवर्त्यते।

## शिष्टार्यावर्तलक्षणे—

भाष्ये शिष्टलक्षणं भगवतोक्तं यथा—'पृषोदरादीनि यथोपदिष्टम्' ( ६।३।१०९ ) इति सूत्रे शिष्टैर्यथोपदिष्टाः शब्दाः साधव इति प्रतिपाद्य शिष्टाश्च वैय्याकरणा इत्युक्तम्। तेषाञ्च शिष्टत्वं शास्त्रपूर्वकत्वादेव। शास्त्रं च शिष्टाधीनमित्यन्योन्याश्रयशङ्कया शिष्टत्वं निवासत आचारतश्च भवतीत्युक्तम्। 'स च आचार आर्यावर्त एव। कः पुनरार्यावर्तः? प्रागादर्शात्प्रत्यक्कालकवनात् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारंगतास्तत्रभवन्तः शिष्टाः।' इत्यनेन शिष्टलक्षणमार्यावर्तलक्षणञ्चोभयमपि साधितम्। भगवान् मनुर्हि—

**आसमुद्रात्तु पूर्वस्मादासमुद्राच्च पश्चिमात्। तयोरेवान्तरा गिर्योरार्यावर्तं प्रचक्षते।**

इत्यार्यावर्तलक्षणमाह, उभयलक्षणदर्शनेनैतत्पर्यवस्यति यन्मध्यदेश एवार्यावर्तः स च नार्यैरध्युषितत्वात्तत्पदवीमर्हति, किन्तु आर्यावर्तसम्बन्धादार्यपदव्यवहारस्तद्देश्याभिजनानाम्। एतेनोत्तरध्रुवतः समायातैरार्यैरेवात्राध्युषितमिति प्रवादः परास्तः। तस्मिन्नार्यावर्ते कुम्भ्यामेव येषां धान्यन्न त्वधिका समृद्धिः, ये च लौकिकालौकिकवस्तुजातेष्वलोलुपाः, ये च सदाचारानुष्ठानकृतान्तःकरणशुद्ध्याऽविद्यापगमाद्दिव्यज्ञानवन्तः सर्वविद्यापारंगता ब्राह्मणास्ते शिष्टास्तेषामेव वचनं प्रमाणम्, न तुदरम्भरिणां प्रतिष्ठां कामयमानानां कतिपयग्रन्थावलोकनेन सर्वज्ञत्वभ्रमवतामिति भावः। तदुक्तं हरिणा—

**आविर्भूतप्रकाशानामनुपप्लवचेतसाम् । अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥**
**अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा । ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥** इति ।

एवञ्च धर्मशास्त्रविषये पुण्यपापरूपे शब्दैकसमधिगम्ये नवीनाविष्कारं स्वकपोलकल्पितमाविष्कुर्वद्भिरत्र विशेषतोऽवधेयमिति विज्ञाप्य कतिपयान् मानुष्यसहजान्दोषान् प्रदर्श्यादर्शपुस्तकपरिचयादिप्रदर्शनेनेदमुपसंहरामः ।

**पुस्तकेऽस्मिन्नशुद्धिराहित्याय प्रकामप्रयत्नवतां सुचित्तानामप्यस्माकं दीपो नेत्रातुरस्येव क्वचित् दोषाः प्रतीपतामुपयान्ति । ते च प्रायः कीदृशाः सन्तीति परिचयार्थं कतिपयाः समुदाह्रियन्ते—**

| अशुद्धम् । | पृष्ठम् । | पङ्क्तिः । | शुद्धम् । |
|---|---|---|---|
| **एकवर्जे पदस्वरः ।** | **१४५** | **७** | **एकवर्जं पदस्वरः ।** |
| **परमने इति ।** | **२१२** | **८१** | **परमनेति ।** |
| **ईच भवतीति ।** | **३०७** | **१५** | **ईच्च भवतीति ।** |
| **सामर्थ्यात्-यत्यर्थः ।** | **३३३** | **३५** | **सामर्थ्यात्-इत्यर्थः ।** |

**वर्णमात्रविपर्यासेन प्रत्यूहप्रसङ्गेऽपि विलम्बेनाप्यर्थोपस्थितिर्भवत्येव सुधियामिति न तथा व्याकोपप्रसङ्गो यथा त्र्यधिकत्रिशततमे (३०३) पृष्ठे 'अनुदात्तोपदेश०' (६।४।३७) इति सूत्रे 'वामः' इति वार्तिकतद्व्याख्यानभाष्योत्तरमपेक्षितयोः प्रदीपोद्द्योतयोः पूर्वं पाठोऽनवधानवशादेव व्याकोपयति । एवञ्च परदोषोद्धाटनसमय एव स्वदोषा दृष्टिपथमवतरन्तीति दोषराहित्याभिमानोऽल्पमतीनां वृथैवेति नाविदितं विद्यावतामित्यभ्यर्थ्यते ।**

अथास्मिन् समुद्योगे अ. क. ख. ग. घ. ङ. च. छ. ज. झ. ञ. ट. ठ. ड. ढ. इत्येतानि पञ्चदशपुस्तकान्यादर्शत्वेन परिगणितानि । चतुर्थपञ्चमाध्यायसंयोजनसमये क. ख. ग. घ. ङ. च. छ. ज. झ. संज्ञकानि यानि पुस्तकान्यासादितानि तानि तु तत्तन्महाभागानामौदार्येणेदानीं सन्निहितान्येव । तेषां पुस्तकानां गुणवर्णनमपि न द्विरुच्यते । इदञ्च न विस्मरणीयं यत् क. घ. संज्ञकपुस्तकप्रदातृभिः पण्डितैः पाटणकरोपाह्वरघुनाथशास्त्रिभिः स्वयमेव ट. ठ. संज्ञके पुस्तके सम्प्रेष्य बहूपकृता वयमित्यत्र न संदेहः । ट. संज्ञकं पुस्तकं भाष्यस्य । पुस्तकञ्चैतत्प्राचीनं सुगमाक्षरमशुद्धिबाहुल्यरहितमादर्शपुस्तकगुणान्वितम् । ठ. संज्ञकञ्च प्रदीपस्य । उभयोर्लेखक एक एवेति न पृथक् गुणवादप्रकथनोपयोगः ।

ड. संज्ञकं च भाष्यप्रदीपोद्द्योतयुतम् । पुस्तकं चैतत्स्वर्गीय पं. **मोतीराम**शास्त्रिभिः प्रदत्तं सुश्लिष्टाक्षरमशुद्धिरहितमनेकैरभ्यासिभिरभ्यस्तं प्राचीनतरमनेकविधाधिकपाठभेदाद्यापूरितं पुस्तकरत्नमेव । लेखनशैली चास्य सुमृशमुपवर्णनीया । तदेतच्च पुस्तकं षष्ठाध्यायचतुर्थपादमारभ्यैवावशिष्टमिति भृशं दूयते चेतः । महता प्रयत्नेनैतत्सम्पाद्य शास्त्रिचरणैरिहानीतमिति परलोकगतानामपि तेषां शान्तिलाभार्थं शब्दब्रह्मात्मा भृशमभ्यर्थ्यते ।

ढ. संज्ञकञ्च पुण्यपत्तने मुद्रितम् । तत्साहाय्यसम्पादनेन तदादर्शपुस्तकसाहाय्यमपि संपादितं स्यादिति तदनुरोधः ।

अ. संज्ञकञ्च भाष्यप्रदीपयुतम् । एतच्च नागपुरभूषायमाण पं. कृष्णशास्त्रि घुलेमहाशयस्वामिकं वर्णाश्रमस्वराज्यसङ्घाध्यक्षैः 'रावबहादुर'बिरुदलङ्कृत **श्री० सदाशिव** माधव **पराण्डे** महोदयैः परमकृपालुभिर्महता यत्नेनासाद्य दत्तम् । अस्य पुस्तकस्य वर्णनेऽसमर्था वयम् । एतदेवास्य वर्णनं पर्याप्तं यत्संशयितेषु स्थलेषु नेत्रे निमील्येदमेवैकमवलम्बनमिति । पुस्तकञ्चैतत् सं. १७४९ वैक्रमीये लिखितमिति ततोऽववोध्यते । तृतीयाध्यायान्ते १७४९ संवदुल्लिखितः, ग्रन्थान्ते च १७५० तमः सुस्पष्टं निर्दिष्टः । एकेनैव लेखकेन सुविशदं सुस्पष्टञ्च लिखितमित्यक्षरसाम्येन ज्ञायते । अस्य निःसन्दिग्धाक्षरवर्णनविषये सुलिखितमपि दुर्लिखितं स्यात् । एतच्च वारं वारं बहुभिर्विद्वद्भिः पुनः पुनरप्यधीतमनेकाक्षरशुद्धिसंयुतं विशिष्टाक्षरेषु गैरिकरञ्जितमत्यन्तं विशुद्धमनक्षररहितं शेखरहृदयसर्वस्वभूतायाः सदाशिवभट्टीत्यभिख्यायाष्टीकायाः प्रणेत्रा विद्वत्सार्वभौमेन नागपुराधीश्वरभोंसलेकुलसुपूजितेन सदाशिवभट्टेन सुचिरमभ्यस्तम् । नूनमनेन पुस्तकेन बहूपकृतमिति तद्दानेन घुलेकुलभूषणानां पण्डितकृष्णशास्त्रिणां सुचिरं वयमधमर्णाः । ईदृशानि प्राचीनतराणि सुललितानि पुस्तकानि महता यत्नेन संरक्ष्य तत्तदुपयोगेषु ददतामुदारमतीनां धन्यवादान् वितरामः ।

अत्र च वारं वारं विविधवेदाद्यनेकविधदुर्लभतरपुस्तकसंग्रहश्च समये समये मुम्बापुरीभूषायमाणानां विलसन्महाविद्यालये प्रधानाध्यापकानां वेलणकरोपाह्व**हरिशर्मणां** ( प्रो. हरि दामोदर वेलणकर एम्. ए. ) साहाय्येन सुचिरं हस्तगत एवासीत् । वैदिकवचनावचयश्च वेदशीलनदक्षैस्तैर्दर्शितदिशाऽनायासेनासादयितुं शुशक इति धन्यवादवितरणमेव स्वाधीनमिति तदेवोपहारीक्रियते ।

यैश्च विद्वद्भिर्निर्णसागरास्थानपण्डितैः प्रतिपदमनुसन्धानमाचरद्भिर्यदुपकृता वयं तत्तैरेव कर्तुं शक्यमित्येव निर्दिश्यते ।

टङ्कसंयोजकहिराजीप्रभृतीनां कौशलं शीघ्रकारित्वं चास्मिन्नवसरेऽनुपेक्षणीयम् ।

कठिनतरेऽप्यस्मिन् काले महता धैर्येण निर्णयसागरधुरमुद्वहतां श्री **रामचन्द्र येसू शेडगे** महोदयानां **तदधिपतीनाञ्च** सत्वोत्कर्षेण बहुतरवित्तव्ययसाध्यमेतत्पुस्तकं विद्वज्जनकरकमलान् रञ्जयतीति विदुषामाशीस्ततिभिर्निर्णयसागरः साधिपश्चिरं **विजयतात् ।**

भागेऽस्मिन्नभ्याससौलभ्याय षष्ठाध्यायसूत्रवार्तिकपाठोऽन्ते सन्निवेशितः । ततश्च समग्रभाष्यगतानि श्लोकवार्तिकान्येकीकृत्य निवेशितानि । सूत्रसूचिरप्यन्ते सन्निवेशिता । विषयानुक्रमः संक्षेपेणादौ व्यासङ्गसौलभ्याय संगृहीतः ।

अनल्पमतिभिरुपक्रमणीयेऽस्मिन् कर्मणि यद्धाष्टर्यादस्माभिरुपक्रान्तं तदुदाराशयाः सफलयन्तु विद्वच्चरणाः ।

**यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे नहि । यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्नहि ॥** इति

श्रीमधुसूदनसरस्वतीनिष्यन्दैरत्रत्यसत्यतत्त्वप्रथनेन विद्वदनुग्रहं संप्रार्थयामो वयं

अक्षय्यतृतीया
शाके १८६७

काशीविश्वविद्यालयविनेयाः
म. म. जयदेवमिश्रचरणान्तेवासिनः
**श्रीभार्गवशास्त्रिणः ।**



॥ श्रीः ॥

# ॥ षष्ठाध्यायस्थविषयानुक्रमः ॥


विषयाः पृष्ठाङ्काः

**एकाचो द्वे प्रथमस्य ॥ ६ । १ । १ ॥**

एकाच्पदार्थसंशयः ... ... १

एकाच्पदे बहुव्रीहित्वनिर्णयः ।

अधिकारत्वनिर्णयः । वैय्यधिकरणान्वयश्च ।

धातोरित्येषाऽवयवषष्ठी । प्रथमत्वस्य सापेक्षत्वादाक्षेपः ।

(प्रदीपः) वैय्यधिकरण्यान्वये ज्ञापकम् ।

(उद्द्योतः) अस्याधिकारत्वे ज्ञापकम् । व्याप्तिन्यायदर्शनम् । ... ... ... २

व्यपदेशिवद्भावेन समाधानम् । उद्द्योताभिप्रायेण पाठभेदः ।

योगविभागेन समाधानम् ।

(प्रदीपः) व्यपदेशिवद्भावनिर्वचनम् ।

(उद्द्योतः) व्यपदेशिवद्भावफलम् । कैयटोक्तपक्षस्य खण्डनम् । ... ... ... ३

योगविभागफलम् ।

योगविभागे दोषोपपादनम् ।

(प्रदीपः) अर्थवत्परिभाषाऽनुपस्थानम् । व्यपदेशिवदित्येतन्न वचनं किन्तु न्यायः । ... ४

योगविभागे दोषाः ।

(उद्द्योतः) लक्ष्ये लक्षणन्यायप्रवृत्तिः । ... ५

योगविभागप्राप्तदोषवारणम् । समुदायस्यावयवानतिरेकः ।

एकाच्पदे बहुव्रीहौ दोषोपपादनम् । तद्गुणसंविज्ञानवर्णनम् । ... ... ६

द्विर्वचने पक्षद्वयोपपादनम् । स्थाने द्विर्वचनपक्षे दोषः ।

(प्रदीपः) सूत्राक्षरैः पक्षद्वयोपपादनम् । ... ७

स्थाने द्विर्वचनपक्षे दोषोपन्यासः । द्विःप्रयोगोपपादनम् ।

द्विःप्रयोगपक्षे आक्षेपः, तन्निरासश्च । ... ८

द्विःप्रयोगपक्षे दोषस्तन्निरासश्च । ... ९

द्विःप्रयोगपक्षे दोषस्तन्निरासश्च । ... १०

द्विःप्रयोगपक्षे दोषस्तन्निरासश्च । एतत्पक्षोपोद्बलकं श्लोकवार्तिकञ्च । ... ... ११

**अजादेर्द्वितीयस्य ॥ ६ । १ । २ ॥**

अजादेरित्यत्र कर्मधारयोपपादनम् । प्रथमनिवृत्तिर्वक्तव्या । असति खल्वपि सम्भवे बाधनं भवतीति न्यायः ।

विषयाः पृष्ठाङ्काः

(उद्द्योतः) कर्मधारय योग्यपदानां समासाभावे ।

सिद्धेऽपि कर्मधारयसमर्थनम् । ... १२

प्रथमस्य द्विर्वचने क्रियमाणे द्वितीयस्याप्राप्तिः ।

नानिष्टार्था शास्त्रप्रवृत्तिः । ... ... १३

अलोऽन्त्यनिदर्शनेन प्रथमद्विर्वचनाप्राप्तिः ।

सत्यपि सम्भवे बाधनं भवति, दधिब्राह्मणेभ्यो दीयताम् । १४

व्यञ्जनस्यानिवृत्तिः । न्द्रादिप्रतिषेधदृष्टान्तेन व्यञ्जनानिवृत्तिः ।

द्वितीयाभावे प्रथमाद्विर्वचनम् । सति द्वितीये प्रथमस्य प्रतिषेध इत्याश्रयणे हलादिशेषे दोषः । १५

ग्रामाद्ग्रामान्मनुष्या आनीयन्तामिति दृष्टान्तेन वारणम् । ... ... ... १६

**न न्द्राः संयोगादयः ॥ ६ । १ । ३ ॥**

ईर्ष्यतेस्तृतीयस्य । कण्ड्वादीनाम् । यथेष्टं नामधातूनाम् ।

**पूर्वोऽभ्यासः ॥ ६ । १ । ४ ॥** ... ... १७

लौकिकदृष्टान्तेन द्वे इति पुरस्तात्प्रथमानिर्दिष्टं सदर्थात् षष्ठीनिर्दिष्टं भविष्यति ।

**उभे अभ्यस्तम् ॥ ६ । १ । ५ ॥**

सहग्रहणं कर्तव्यमाद्युदात्तत्वे दोषाभावाय । ... १८

उभेग्रहणस्य फलाभावः, तस्य सहार्थकत्वम् । १९

प्रत्येकं वाक्यपरिसमाप्तिः, समुदाये—गर्गाः शतं दण्ड्यन्ताम् । प्रत्येकमिति वचनवत्सहग्रहणस्य नार्थः ।

**जक्षित्यादयः षट् ॥ ६ । १ । ६ ॥**

वेवीत्यर्थं सप्तग्रहणं कर्तव्यम् । ... ... २१

स्वरातिरिक्तमभ्यस्तकार्यं परस्मैपदे न । अतद्गुणसंविज्ञानो बहुव्रीहिः ।

**तुजादीनां दीर्घोऽभ्यासस्य ॥ ६ । १ । ७ ॥**

छन्दोग्रहणं कर्तव्यम् । ... ... २२

अन्येषां दीर्घदर्शनात्तुजादीनां क्वचिददर्शनान्नारम्भणीयं सूत्रम् ।

**लिटि धातोरनभ्यासस्य ॥ ६ । १ । ८ ॥**

धातुपदप्रयोजनम् । जागर्तेर्वावचनम् । अनभ्यासग्रहणाक्षेपः । छन्दसि वावचनम् ।

(प्रदीपः) चङीत्येतदर्थमभ्यासप्रतिषेधोपयोगः । भाष्यस्य चिन्त्यत्वम् ।

(उद्द्योतः) प्रतिषेधानर्थक्यवचनात्सन्नन्तायङन्ताद्वा लोके चङन्तस्यानभिधानम् । ... २३

विषयाः पृष्ठाङ्काः

**सन्यङोः ॥ ६ । १ । ९ ॥**

सूत्रे षष्ठी सप्तम्योर्विचारः । सप्तम्यन्तत्वे दोषोपन्यासः । प्रकृतदोषस्योभयसाधारण्यम् । ... २४

षष्ठ्यन्तत्वे दोषः । धातूनामनेकार्थत्वम् । ... २५

द्विर्वचने समुदायादेशे दोषः ।... ... २६

**दाश्वान् साह्वान् मीढ्वांश्च ॥ ६ । १ । १२ ॥**

निपातनसाधनम् । क्वादीनां के उपसंख्यानम् । २८

उपसंख्यानम् । विप्रतिषेधोपसंख्यानम् । ... २९

**अथ द्वितीयमाह्निकम् ।**

**ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ॥६।१।१३॥**

संप्रसारणे अतिप्रसङ्गः । ... ... ३१

वर्णग्रहणात्सिद्धिः । वर्णग्रहणसिद्धौ दोषः । सिद्धं तूत्तरपदवचनात् । ... ... ३२

निर्दिश्यमानस्यादेशाभवन्ति । अनन्त्यविकारेऽन्त्यसदेशस्य । अनन्त्यविकार इत्यस्य प्रयोजनम् । ३३

यचि भमित्यस्य विषये कार्यकालपक्षोपस्थापनम् ।

मृजेर्वृद्धिविधौ प्रयोजनम् ।

(उद्योतः) विधौ परिभाषोपतिष्ठते–इत्यस्याभावः ।

आकडारसंज्ञासु कार्यकालपक्षाभावः ।

एकदेशयुक्तिकथनञ्च । ... ... ३४

अनन्त्यविकार इत्यस्य प्रयोजनम् । अनन्त्यविकार इत्यस्याश्रयणे दोषोपपादनम् । ... ३५

अनन्त्यविकार इत्यस्याः स्थापनम् ।

**बन्धुनि बहुव्रीहौ ॥ ६ । १ । १४ ॥**

मातच्मातृकमातृषु संप्रसारणविधिः ।

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ ६ । १ । १६ ॥**

वयि ग्रहणाक्षेपः । ... ... ३६

वयिग्रहणप्रयोजनम् । न विकृतिः प्रकृतिं गृह्णाति, प्रयोजनाक्षेपः । ... ... ३७

**लिट्यभ्यासस्योभयेषाम् ॥ ६ । १ । १७ ॥**

ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः । वृश्चतिविषये भाष्यविरोधः । उभयेषां पदप्रयोजनम् । हलादिशेषात्संप्रसारणं विप्रतिषेधेन । संप्रसारणन्तदाश्रयं च बलवत् । ... ३८

बलवत्त्वप्रयोजनम् । प्रयोजनान्यथासिद्धिः । उभयेषां ग्रहणस्य प्रयोजनम्–उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात् । व्यचेः कुटादिष्वुपसंख्यानम् । ... ... ३९

**स्वापेश्चङि ॥ ६ । १ । १८ ॥**

चङ्ग्रहणं निष्फलम् ।

**न वशः ॥ ६ । १ । २० ॥**

अत्र यङोऽनुवृत्तिः ।

विषयाः पृष्ठाङ्काः

**शृतं पाके ॥ ६ । १ । २७ ॥**

श्राश्रप्योः शृभावः क्षीरहविषोः । ... ४०

श्रपेः शृतमन्यत्र हेतोः ।

**प्यायः पी ॥ ६ । १ । २८ ॥**

आङ्पूर्वादन्धूधसोः । ... ... ४१

'आङ्पूर्वाच्चैष नियमः' इति भाष्यस्य प्रदीपोद्योतयोर्व्याख्यानभेदः ।

**विभाषा श्वेः ॥ ६ । १ । ३० ॥**

श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः । ... ४२

**ह्वः संप्रसारणम् । अभ्यस्तस्य च ॥ ६।१।३२–३३ ॥**

योगविभागः । योगविभागफलम् । ... ४३

**अपस्पृधेथामानृचुरानृहुश्चिच्युषे तित्याज श्राताः श्रितमाशीराशीर्तः ॥६।१।३६॥**

निपातनविषयदर्शनम् । ... ... ४५

**न संप्रसारणे संप्रसारणम् ॥ ६ । १ । ३७ ॥**

सूत्रप्रयोजनम् । ... ... ४६

संप्रसारणपदप्रयोजनम् । ... ... ४७

ऋचि त्रेरुत्तरपदादिलोपः । ... ... ४८

**वश्चास्यान्यतरस्यां किति ॥ ६ । १ । ३९ ॥**

वश्चास्यप्रत्याख्यानम् ।

**अथ तृतीयाह्निकम् ।**

**आदेच उपदेशेऽशिति ॥ ६ । १ । ४५ ॥**

एच उपदेशपदान्वयः । ... ... ४९

नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । ५०

अशितिपदे पर्युदासप्रसज्यप्रतिषेधवर्णनम् । पक्षद्वये दोषदर्शनम् । ... ... ५३

पर्युदासे दोषोद्धारः । प्रातिपदिकस्यात्वाप्राप्तिवर्णनम् । ... ... ... ५४

**क्रीङ्जीनां णौ ॥ ६ । १ । ४८ ॥**

आत्वे णौ लीयतेरुपसङ्ख्यानम् । ... ५५

**सिध्यतेरपारलौकिके ॥ ६ । १ । ४९ ॥**

सिध्यतेरज्ञानार्थस्य । अन्यथाऽनिष्टप्रसङ्गः ।

(प्रदीपः) तपः सेधयतीत्यत्र ज्ञानार्थत्वम्, राजकुले देवदत्तं साधयतीत्यत्राज्ञानार्थत्वम् । ... ५६

**मीनातिमिनोतिदीङां ल्यपि च ॥ ६।१।५० ॥**

आत्वे उपदेशवचनमिष्टप्रत्ययसिद्ध्यर्थम् । ... ५७

उपदेशपदानुवृत्त्या सिद्धम् । न चान्यार्थं प्रकृतमन्यार्थं भवति, न हि गोधासर्पन्ती सर्पणादहिर्भवति ।

अन्यार्थमपि प्रकृतमन्यार्थं भवति, शाल्यर्थं कुल्याः प्रणीयन्ते पानीयञ्च पीयते ।

| विषयाः | पृष्ठाङ्काः |
|---|---|
| पूर्वोत्तरसूत्रद्वयविषयकं वार्तिकम्–निमिमीलियां खलचोः प्रतिषेधः । ... ... | ५८ |
| **विभाषा लीयतेः ॥ ६ । १ । ५१ ॥** | |
| (उद्द्योतः) शित्करणसामर्थ्यादिति प्रदीपोक्तेश्चिन्त्यत्वप्रदर्शनम् । | |
| **बिभेतेर्हेतुभये ॥ ६ । १ । ५६ ॥** | |
| हेतुभये हेतुरेव भयमिति विग्रहः । | |
| **स्फुरतिस्फुलत्योर्घञि ॥ ६ । १ । ४७ ॥** | |
| **सृजिदृशोर्झल्यमकिति ॥ ६ । १ । ५८ ॥** | |
| अमि सङ्कहणम् । ... ... | ५९ |
| धातोः स्वरूपग्रहणे तत्प्रत्ययविज्ञानम् । | |
| **शीर्षं श्छन्दसि ॥ ६ । १ । ६० ॥** | |
| तद्वा अथर्वणः शिरः । | |
| **ये च तद्धिते ॥ ६ । १ । ६१ ॥** | |
| अच्चि शीर्ष इति वार्तिकस्य सूत्रेषु प्रक्षेपः । ... | ६० |
| **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६ । १ । ६३ ॥** | |
| ककुद्दोषणी याचते महादेवः । मांस्पृत्स्नूनामुपसङ्ख्यानम् । ... ... | ६१ |
| नस् यत्तस्क्षुद्रेषु । | |
| **धात्वादेः षः सः ॥ ६ । १ । ६४ ॥** | |
| धातुग्रहणप्रयोजनम् । सादेशे सुब्धात्वादीनाम्प्रतिषेधः । ... ... ... | ६२ |
| षकारोपदेशे प्रयोजनम् । अज्दन्त्यपराः षोपदेशाः स्मिङ्स्वदिस्विदिस्वञ्जिस्वपश्च, सृप्यादिवर्जम् । | |
| **णो नः ॥ ६ । १ । ६५ ॥** | |
| णकारोपदप्रयोजनम् । | ६३ |
| सर्वे णोपदेशाः, नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनृवर्जम् । | |
| **लोपो व्योर्वलि ॥ ६ । १ । ६६ ॥** | |
| व्योर्लोपे क्वावुपसंख्यानम् । ... ... | ६४ |
| वर्णाश्रये नास्ति प्रत्ययलक्षणम् । असिद्धं बहिरङ्गमन्तरङ्गे । ... ... ... | ६५ |
| अनारम्भो वा पुनर्वलोपस्य न्याय्यः, आसेमाणं छान्दसाद्वर्णलोपात् । | |
| **वेरपृक्तस्य ॥ ६ । १ । ६७ ॥** | |
| दविजागृव्योः प्रतिषेधः । अनुनासिकः परोऽस्मिन् सोऽयमनुनासिकपरः । ... ... | ६६ |
| अनुनासिकवकारग्रहणं वेरिति । | |
| **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६ । १ । ६८ ॥** | |
| अपृक्तलोपः संयोगान्तलोपश्चेन्न लोपाभावः पचन्नित्यादौ । ज्ञापकेन सिध्यति । ... | ६७ |
| **एङ्ह्रस्वात्सम्बुद्धेः ॥ ६ । १ । ६९ ॥** ... | ६९ |
| (प्रदीपः) अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते । | |



| विषयाः | पृष्ठाङ्काः |
|---|---|
| **शेश्छन्दसि बहुलम् ॥ ६ । १ । ७० ॥** | |
| जसादिषु छन्दसि वावचनं प्राङ्णौचङ्युपधायाः । | |
| **ह्रस्वस्य पिति कृति तुक् ॥ ६ । १ । ७१ ॥** ... | ७२ |
| असिद्धं बहिरङ्गमन्तरङ्गे । निर्दिश्यमानस्यादेशा भवन्ति । नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।... ... ... | ७३ |
| **संहितायाम् ॥ ६। १ । ७२ ॥** | |
| अयं योगः शक्यो वक्तुम् । अधिकरणं त्रिविधम्–व्यापकमौपश्लेषिकमभिव्यापकं च । | |
| (प्रदीपः) संहितालक्षणम् । निर्दिष्टग्रहणवैफल्यम् । अधिकरणोदाहरणानि । | |
| (उद्द्योतः) निर्दिष्टग्रहणप्रयोजनम् । व्यापकाधारस्य मुख्यत्वम् । नैषा परसप्तमी, किन्तर्हि ? सत्सप्तमी । ... ... ... | ७४ |
| अवग्रहे तु सम्प्रदाय एव शरणम् । | |
| **आङ्माङोश्च ॥ ६ । १ । ७४ ॥** | |
| आङ्माङोः सानुबन्धकनिर्देशः कर्तव्यः । | |
| (उद्द्योतः) अङिन्माशब्दो नास्ति तेन 'मास्तु' इति प्रामादिकम् । | |
| **दीर्घात् । पदान्ताद्वा ॥ ६ । १ । ७५-७६ ॥** | |
| विश्वजनादीनां विकल्पः । | |
| **इको यणचि ॥ ६ । १ । ७७ ॥** | |
| इग्ग्रहणप्रयोजनम् । जश्त्वं न सिद्धं यणमत्र पश्य । | ७५ |
| यश्चापदान्तो हलचश्च पूर्वः । दीर्घस्य यण् । ह्रस्व इति प्रवृत्तम् । सम्बन्धवृत्त्या । | |
| (उद्द्योतः) वैकल्पिकेष्वनुष्ठानपक्ष एव ज्यायान् । ... | ७६ |
| गुणवृद्धिबाध्यम् । यणादेशः प्लुतपूर्वस्य । ... | ७७ |
| सामर्थ्ययोगान्नहि किञ्चिदस्मिन्पश्यामि शास्त्रे यदनर्थकं स्यात् । | |
| **वान्तो यि प्रत्यये ॥ ६ । १ । ७९ ॥** | |
| वान्तादेशे स्थानिनिर्देशः । ... ... | ७८ |
| योगविभागनियमात्सिद्धिः । गोर्यूतौ छन्दसि । अध्वपरिमाणे च । | |
| **धातोस्तन्निमित्तस्यैव ॥ ६ । १ । ८० ॥** | |
| एवकार इष्टतोऽवधारणार्थः । | |
| **क्रय्यस्तदर्थे ॥ ६ । १ । ८२ ॥** | |
| तत्पदार्थनिर्वचनम् । | |
| (प्रदीपः) भाषायां वैशब्दोऽसाधुः ।... ... | ७९ |
| (उद्द्योतः) क्रयविक्रययोर्लक्षणम् । | |
| **भय्यप्रवय्ये च छन्दसि ॥ ६ । १ । ८३ ॥** | |
| हदय्यादीनामुपसंख्यानम् । | |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| **अथ चतुर्थमाह्निकम् ।** | |
| **एकः पूर्वपरयोः ॥ ६ । १ । ८४ ॥** | |
| एकपदप्रयोजनम् । ... ... | ८० |
| पृथगादेशप्रतिषेधार्थम् । अनयोः पूलयोः कटं कुरु । एकवाक्यभावात् । अर्थात्प्रकरणाद्वा लोकवत् । | |
| (उद्द्योतः) भूतभव्यन्यायः । ... ... | ८१ |
| अवयवे शास्त्रार्थसम्प्रत्ययः । वसन्ते ब्राह्मणोऽग्नीनादधीत । गर्भाष्टमे ब्राह्मण उपनयेः । | |
| (उद्द्योतः) गुणः कृतात्मसंस्कारन्यायः । अनुवाद्यगता संख्याऽविवक्षिता, विधेयगता विवक्षितैवेति मीमांसकसरणिरेवास्माकम् । ... | ८२ |
| धर्मोपदेशनेऽनवयवविज्ञानात् । लोके ह्युभयथा दर्शनं-अवयवेनानवयवेनापि । | |
| (उद्द्योतः) धर्मशब्देन नित्यनैमित्तिककाम्यानां ग्रहणम्, तेषां लक्षणानि च । ... | ८३ |
| पूर्वपरग्रहणप्रयोजनम् । ... ... | ८५ |
| **अन्तादिवच्च ॥ ६ । १ । ८५ ॥** | |
| सूत्रप्रयोजनम् । | ८६ |
| अन्तवत्त्वे प्रयोजनानि । ... ... | ८७ |
| आदिवत्त्वे प्रयोजनानि । ... ... | ९१ |
| अन्तादिवद्भावनिषेधवचनानि । ... | ९२ |
| न वा ताद्रूप्यातिदेशात् । | |
| **षत्वतुकोरसिद्धः ॥ ६ । १ । ८६ ॥** | |
| सूत्रप्रयोजनम् । सूत्राक्षेपः, समर्थनञ्च । ... | ९३ |
| (उद्द्योतः) षत्वस्य त्रैपादिकत्वात्तत्र बहिरङ्गपरिभाषाप्राप्तिरेव न । तस्या अनित्यत्वं तुक्यसिद्धवचनात् । | |
| नाजानन्तर्यपरिभाषा तु नास्त्येव । | |
| **आद्गुणः ॥ ६ । १ । ८७ ॥** | |
| पदकृत्यम् । ... ... ... | ९५ |
| गुणपदप्रयोजनम् । तपरपदस्यार्थः । ङिशीटासुपसंख्यानम् । ... ... | ९६ |
| न वा बहिरङ्गलक्षणत्वात् । | |
| **एत्येधत्यूठ्सु ॥ ६ । १ । ८९ ॥** | |
| रूपग्रहणं धातुग्रहणं वा । धातुग्रहणे इणीकारादौ प्रतिषेधः । योगविभागात्सिद्धम् । | |
| (उद्द्योतः) मा भवान्प्रेदिधदित्यादेरनभिधानम् । ... | ९७ |
| येन ना प्राप्तिन्यायः । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते । अक्षरादूहिन्याम् । प्रादूहोढोढ्येषैष्येषु । स्वादीरेरिणोः । ऋते च तृतीयासमासे । | |
| (प्रदीपः) स्वशब्दाण्णिनिस्त्वनभिधानान्न । ... | ९८ |
| प्रवत्सतरकम्बलवसनानां चर्णे । ऋणदशाभ्यां च । | |
| **आटश्च ॥ ६ । १ । ९० ॥** | |
| चकारप्रयोजनम् । | |
| **उपसर्गादृति धातौ ॥ ६ । १ । ९१ ॥** | |
| धातुग्रहणप्रयोजनम् । यत्क्रियायुक्ताः प्रादयस्तं प्रति । विप्रतिषेधप्रतिपादनम् । ... | ९९ |
| अत्रत्यः कुण्डलपरिवृतो भाष्यकैयटपाठः प्रक्षिप्त इति उद्द्योतः । विप्रतिषेधः । ... | १०२ |
| **औतोम्शसोः ॥ ६ । १ । ९३ ॥** | |
| तिङि प्रतिषेधः । समासाच्च प्रतिषेधः । ... | १०४ |
| एकयोगे चैकदेशानुवृत्तिरन्यत्रापि । योश्च सर्वनामस्थाने वृद्धिविधिः । ... ... | १०५ |
| यद्याव इन्द्रेति दर्शनात् । | |
| **एङि पररूपम् ॥ ६ । १ । ९४ ॥** | |
| एकनिपातत्वं-त्वै, न्वै । एवे चानियोगे इत्याद्युपसंख्यानम् । ... ... ... | १०६ |
| **ओमाङोश्च ॥ ६ । १ । ९५ ॥** | |
| चकारोऽनर्थक इति सौनागाः । | |
| **उस्यपदान्तात् ॥ ६ । १ । ९६ ॥** | |
| अथवद्ग्रहणे नानर्थकस्य । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव । | |
| **अव्यक्तानुकरणस्यात इतौ ॥ ६ । १ । ९८ ॥** | |
| अनेकाज्ग्रहणं कर्तव्यम् । | |
| (प्रदीपः) प्रयोजनानुवर्तिप्रमाणम् । अर्थवत्परिभाषाऽनित्यत्वम् । अनागमकानां सागमका आदेशाः । यदागमन्यायः । | |
| (उद्द्योतः) आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वम् । अर्थवतो ह्यागम इत्यस्यागमाभावेऽर्थवतः । ... ... ... | १०७ |
| **अथ पञ्चममाह्निकम् ।** | |
| **नाम्रेडितस्यान्त्यस्य तु वा ॥ ६ । १ । ९९ ॥** | |
| नित्यमाम्रेडिते डाचि । विचित्रास्तद्धितवृत्तयः । | |
| **अकः सवर्णे दीर्घः ॥ ६ । १ । १०१ ॥** | |
| सवर्णे ऋति ॠ वा, ऌति ॡवा । | |
| **प्रथमयोः पूर्वसवर्णः ॥ ६ । १ । १०२ ॥** | |
| प्रथमपदार्थनिरूपणम् । ... ... | १०८ |
| प्रथमपदार्थे विप्रतिपत्तयः । | |
| (उद्द्योतः) छत्रिन्यायः । ... ... | १०९ |
| प्रथमयोर्विभक्त्योर्ग्रहणम् । सवर्णपदप्रयोजनम् । | ११० |
| अमि पूर्वं इति पृथक्करणफलम् । योगविभागोपन्यासः । ... ... ... | १११ |
| योगविभागफलम् । योगविभागे दोषाः । | ११२ |
| ज्ञापकेनेष्टसिद्धिः । | ११३ |
| **तस्माच्छसो नः पुंसि ॥ ६ । १ । १०३ ॥** | |
| अव्याप्ति-अतिव्याप्तिपरिहारः श्लोकेन । ... | ११५ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **अमि पूर्वः ॥ ६ । १ । १०७ ॥** | |
| वा छन्दसि । | |
| **सम्प्रसारणाच्च ॥ ६ । १ । १०८ ॥** | |
| वा छन्दसि । ... ... ... | ११६ |
| सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम् । असम्प्रसारणात्सिद्धम् । कार्यकृतत्वाद्वा । वसन्ते ब्राह्मणोऽग्नीनादधीत । वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत । ... ... | ११७ |
| दीर्घत्वे दोषवारणम् । एकादेशप्रकरणे–विप्रतिषेधोपसंख्यानम् । ... ... | ११८ |
| अन्तरङ्गबलीयस्त्वज्ञापनम् । | १२० |
| ज्ञापकप्रयोजनानि । | १२१ |
| **ख्यत्यात्परस्य ॥ ६ । १ । ११२ ॥** | |
| विकृतनिर्देशप्रयोजनम् । | |
| (प्रदीपः) ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति । | |
| (उद्योतः) समासान्तविधौ लिङ्गविशिष्टपरिभाषाभावः । ग्रहणवतेत्यस्याः प्रत्ययविधिविषयत्वम् । अभिव्यक्तपदार्थन्यायः । ... | १२२ |
| **अतो रोरप्लुतादप्लुते ॥ ६ । १ । ११३ ॥** | |
| अप्लुतादप्लुते प्रयोजनम् । | |
| (प्रदीपः) प्रकृतिभावविधानज्ञापकात्स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्वम् । | |
| (उद्योतः) ज्ञापनस्य फलाभावाच्चिन्त्यत्वम् । ... | १२३ |
| **नान्तः पादमव्यपरे ॥ ६ । १ । ११५ ॥** | |
| प्रतिषेधविषयनिर्वचनम् । | |
| (उद्योतः) अनन्तरस्य विधिरितिन्यायः । व्याप्तिन्यायः । ... ... ... | १२५ |
| **अवङ्स्फोटायनस्य ॥ ६ । १ । १२३ ॥** | |
| गोग्रवचनं स्वरसिध्यर्थम् । ... ... | १२६ |
| **इन्द्रे च ॥ ६ । १ । १२४ ॥** | |
| इन्द्रादाविति वक्तव्यम् । | |
| (प्रदीपः) व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्य प्रत्ययविधिविषयत्वम् । ... ... | १२७ |
| **प्लुतप्रगृह्या अचि नित्यम् ॥ ६ । १ । १२५ ॥** | |
| नित्यग्रहणप्रयोजनम् । अज्ग्रहणफलम् । ... | १२८ |
| **आङोऽनुनासिकश्छन्दसि ॥ ६ । १ । १२६ ॥** | |
| आङोऽनर्थकस्येति बहुलग्रहणान्न वक्तव्यम् । ... | १२९ |
| **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ ६ । १ । १२७ ॥** | |
| चकारप्रयोजनम् । अकृतकारि खल्वपि शास्त्रमग्निवत् । कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । | १३० |
| **ऋत्यकः ॥ ६ । १ । १२८ ॥** | |
| सूत्रप्रयोजनम् । | |
| **अप्लुतवदुपस्थिते ॥ ६ । १ । १२९ ॥** | |
| उपस्थितोऽनार्ष इतिशब्दः । ... ... | १३१ |
| वत्प्रयोजनम् । | |
| **ईश्चाक्रवर्मणस्य ॥ ६ । १ । १३० ॥** | |
| ईग्रहणेन नार्थः । अविशेषेण चाक्रवर्मणस्याप्लुतवत् । | १३२ |
| **दिव उत् ॥ ६ । १ । १३१ ॥** | |
| तपरप्रयोजनम् । | |
| **सुट् कात्पूर्वः ॥ ६ । १ । १३५ ॥** | |
| कात्पूर्वग्रहणप्रयोजनम् । ... ... | १३३ |
| स्थाने द्विर्वचनपक्षः, द्विःप्रयोगो द्विर्वचनमिति पक्षश्च । | |
| उपदेशिवद्भावोपसंख्यानम् । धातूपसर्गयोः कार्यमन्तरङ्गम् । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण । | |
| पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन । ... | १३७ |
| सुट् कात्पूर्वान्तपक्षः । अथवा परादिः करिष्यते । | |
| अभक्तः करिष्यते । ... ... | १३९ |
| **अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ ६ । १ । १४२ ॥** | |
| सूत्रस्य विषयविशेषेऽवस्थापकं वार्तिकम् । | |
| **अपरस्पराः क्रियासातत्ये ॥ ६ । १ । १४४ ॥** | |
| सातत्यशब्दाक्षेपः । ... ... | १४० |
| सातत्यशब्दसाधकवार्तिकम् । | |
| **गोष्पदं सेवितासेवितप्रमाणेषु ॥ ६ । १ । १४५ ॥** | |
| असेवितग्रहणप्रयोजनभाष्यम् । | |
| **विष्किरः शकुनौ वा ॥ ६ । १ । १५० ॥ ...** | १४१ |
| **आश्चर्यमनित्ये ॥ ६ । १ । १४७ ॥** | |
| 'आश्चर्यमद्भुते' इति वार्तिकार्थसंग्राहकभाष्यम् । | |
| **मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥६।१।१५४॥** | |
| मस्करिन्शब्दव्युत्पत्तिः । ... ... | १४२ |
| **पारस्करप्रभृतीनि च संज्ञायाम् ॥ ६ । १ । १५७ ॥** | |
| अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः । | |


---

### अथ षष्ठमाह्निकम् ।


| | |
|---|---|
| **अनुदात्तं पदमेकवर्जम् ॥ ६ । १ । १५८ ॥** | |
| पदे येषामुदात्तप्रसङ्गस्तेऽनुदात्ता भवन्ति, एकमचं वर्जयित्वा । ... ... | १४३ |
| अनुदात्ताः पदे–अनुदात्ताः पदस्येति न्यासो मतुब्लोपेन मत्वर्थीयाकारेण वारितः । ... | १४४ |
| सूत्रप्रयोजनभाष्यम् । ज्ञापकेन सूत्रवैयर्थ्यम् । | १४५ |
| सूत्रारम्भे दोषाः । अस्याधिकारत्वे दोषवारणम् । | |
| (प्रदीपः) 'नानेनोदात्तत्वं क्रियते' इति भाष्यपाठभेदः । | १४६ |

विषयाः पृष्ठाङ्काः

अस्याधिकारत्वे न्यासान्तरेण दोषवारणम् ।
अस्य परिभाषात्वस्वीकारः । ... ... १४७
'प्रकृतिस्वरे प्रत्ययस्वराभावः' इत्येतद्वार्तिकमिति केषाञ्चिदभिप्रायः । ... ... १४८
उपसंख्यानानि । सतिं शिष्टस्वरबलीयस्त्वम् ।
(उद्योतः) फिट्सूत्राणां पाणिन्यपेक्षयाऽऽधुनिकत्वम् । १४९
स्वरबलीयस्त्वम् । ... ... १५०
**कर्षात्वतो घञोऽन्त उदात्तः ॥ ६ । १ । १५९ ॥**
'कर्ष' इति विकृतनिर्देशप्रयोजनम् । मतुब्प्रयोजनम् ।
**अनुदात्तस्य च यत्रोदात्तलोपः ॥ ६ । १ । १६१ ॥**
अनुदात्तस्येति पदवैयर्थ्यम् । ... ... १५१
अनुदात्तपदाभावे दोषापादकवार्तिकम् । १५२
**धातोः ॥ ६ । १ । १६२ ॥**
अत्रान्तग्रहणमनुवर्तत उतादिग्रहणम् ।
अन्तग्रहणानुवृत्तिरिति सिद्धान्तः । ... १५४
**चितः ॥ ६ । १ । १६३ ॥**
सप्रकृतेरिति वक्तव्यम् । पूर्वसूत्रनिर्देशश्च ।
पूर्वव्याकरणे प्रथमया कार्यी निर्दिश्यते । ... १५५
**तिसृभ्यो जसः ॥ ६ । १ । १६६ ॥**
वार्तिककृता प्रत्याख्यातमपि जस्ग्रहणं 'उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति' इत्याश्रयः । १५६
**चतुरः शसि ॥ ६ । १ । १६७ ॥**
शसि स्त्रियां प्रतिषेधमुपदेशिवद्भावश्चाक्षिप्य समाधानम् । ... ... ... १५७
**सावेकाचस्तृतीयादिर्विभक्तिः ॥ ६ । १ । १६८ ॥**
एकाक्षरात्कृतो जातेः सप्तम्याञ्च न तौ स्मृतौ । १५८
**अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ ६ । १ । १६९ ॥**
उत्तरपदग्रहणप्रयोजनम् ।
**ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ ६ । १ । १७१ ॥**
ऊठ्युपधाग्रहणम् ।
**अष्टनो दीर्घात् ॥ ६ । १ । १७२ ॥**
दीर्घग्रहणाक्षेपः । ... ... १६०
अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम् ।
**शतुरनुमो नद्यजादी ॥ ६ । १ । १७३ ॥**
नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् ।
**उदात्तयणो हल्पूर्वात् ॥ ६ । १ । १७४ ॥**
हल्पूर्वात्पदाक्षेपः । ... ... १६१
हल्पूर्वग्रहणप्रयोजनम् । १६२
**ह्रस्वनुड्भ्यां मतुप् ॥ ६ । १ । १७६ ॥**
मतुबुदात्तत्वे रेग्रहणम् । विप्रतिषेधश्च ।
**नामन्यतरस्याम् ॥ ६ । १ । १७७ ॥**
नाम्स्वरे मतौ ह्रस्वग्रहणम् । नाम्स्वरे मतौ ह्रस्वादिति वर्तते । ... ... १६३
**न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ ६।१।१८२ ॥**
'सौ' इति प्रथमैकवचननिर्णयः । ... १६४
**तित्स्वरितम् ॥ ६ । १ । १८५ ॥**
तिति प्रत्ययग्रहणम् । भाव्यमानेन सवर्णानां ग्रहणं न । ... ... ... १६५
भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ।
तपरस्तत्कालस्येति सूत्रे दकारोऽपि निर्दिश्यते ।
**तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ ६ । १ । १८६ ॥**
अदुपदेशादित्यस्यार्थः । अर्थवता व्यपदेशिवद्भावः । १६६
तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः । तास्यादिभ्य इति पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयिष्यति । ... ... १६७
चित्स्वरादनुदात्तत्वं विप्रतिषेधेन ।
मुकश्चोपसङ्ख्यानम् । ... ... १६८
इतश्चोपसंख्यानम् । अनेकान्ता अनुबन्धाः ।
ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् । १६९
**आदिः सिचोऽन्यतरस्याम् ॥ ६ । १ । १८७ ॥**
सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् ।
**स्वपादिर्हिंसामच्यनिटि ॥ ६ । १ । १८८ ॥**
स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन ।
**अनुदात्ते च ॥ ६ । १ । १९० ॥**
अनुदात्तेति बहुव्रीहिनिर्देशः ।... ... १७०
**सर्वस्य सुपि ॥ ६ । १ । १९१ ॥**
सर्वस्वरोऽनकच्कस्य ।
**भीह्रीभृहुमदजनधनदरिद्रा० ॥ ६ । १ । १९२ ॥**
भ्यादिग्रहणप्रयोजनम् । ... ... १७१
प्रत्ययग्रहणप्रयोजनम् । पूर्वग्रहणप्रयोजनम् । १७२
पिद्ग्रहणप्रयोजनम् ।
**अचः कर्तृयकि ॥ ६ । १ । १९५ ॥**
यकि रपरउपसंख्यानम् । उपदेशवचनात्सिद्धम् । १७३
**थलि च सेटीडन्तो वा ॥ ६ । १ । १९६ ॥**
इड्ग्रहणप्रयोजनम्—यथाथ ।
**संज्ञायामुपमानम् ॥ ६ । १ । २०४ ॥** ... १७४
सूत्रप्रयोजनम् । अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवति । स्वरे प्रत्ययलक्षणं न भवति ।
सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणं न । ... १७५
**निष्ठा च द्व्यजनात् ॥ ६ । १ । २०५ ॥**
निष्ठायां यञि दीर्घत्वे प्रतिषेधः । न वा बहिरङ्गलक्षणत्वात् । ... ... १७६

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **आशितः कर्ता ॥ ६।१।२०७॥** | |
| आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वञ्च। न लक्षणेन पदकारा अनुवर्त्याः। पदकारैर्लक्षणमनुवर्त्यम्। | |
| **रिक्ते विभाषा ॥ ६।१।२०८॥** | |
| **विभाषा वेण्विन्धानयोः ॥ ६।१।२१५॥** | |
| वेणुरिक्तयोरप्राप्ते विभाषा, प्राप्ते नित्यो विधिः। | |
| **उपोत्तमं रिति ॥ ६।१।२१७॥** | |
| उपोत्तमपदाक्षेपः। ... | ... १७७ |
| उपोत्तमग्रहणमुत्तरार्थम्। | |
| **अन्तोऽवत्याः ॥ ६।१।२२०॥** | |
| **ईवत्याः ॥ ६।१।१२१॥** | |
| सूत्रद्वयप्रणयनप्रयोजनम्। | |
| **चौ ॥ ६।१।२२२॥** | |
| चोरतद्धित इति वक्तव्यम्। ... | ... १७८ |
| **समासस्य ॥ ६।१।२२३॥** | |
| हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्। उदात्ताच्च स्वरितविधौ व्यञ्जनमविद्यमानवत्। | ... १८० |
| स्वरविधौ व्यञ्जनमविद्यमानवत्। परिभाषाज्ञापकम्। ... ... | ... १८१ |
| **प्रथमः पादः समाप्तः।** | |
| **अथ द्वितीयः पादः।** | |
| **बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ ६।२।१॥** | |
| सूत्रप्रयोजनम्। | |
| (प्रदीपः) विधिनियमसम्भवे विधेर्बलवत्त्वम्। | ... १८३ |
| असति खल्वपि सम्भवे बाधनं भवति। सत्यपि सम्भवे बाधनं भवति, दधि ब्राह्मणेभ्यो दीयताम्। ज्ञापकादिना तत्पुरुषादिषु दोषवारणम्। | १८४ |
| **तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ ६।२।२॥** | |
| लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य। अव्यये परिगणनं नञ्कुनिपातानाम्। ... | ... १८६ |
| **सदृशप्रतिरूपयोः सादृश्ये ॥ ६।२।११॥** | |
| सदृशग्रहणाक्षेपः। ... | ... १८७ |
| **इगन्तकालकपालभगालशरावेषु द्विगौ ॥ ६।२।२९॥** | |
| इगन्तप्रकृतिस्वरत्वे यणुगुणयोरुपसंख्यानम्। | |
| **परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ६।२।३३॥** | |
| परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन। ... | १८८ |
| **आचार्योपसर्जनश्चान्तेवासी ॥ ६।२।३६॥** | |
| लोकेऽमीषां ब्राह्मणानां पूर्वमानयेति सर्वपूर्वमानीयते। | |
| **महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ ६।२।३८॥** | |
| सूत्रप्रयोजनम्। ... | ... १८९ |
| **कुरुगार्हपतरिक्तगुर्वसूतजरत्य० ॥ ६।२।४२॥** | |
| कुरुवृज्योर्गार्हपते। दासीभारादीनामिति च। पण्यकम्बलःसंज्ञायाम्। ... | ... १९० |
| **अहीने द्वितीया ॥ ६।२।४७॥** | |
| अहीने द्वितीयाऽनुपसर्ग इति वक्तव्यम्। | |
| **गतिरनन्तरः ॥ ६।२।४९॥** | |
| अनन्तरग्रहणाक्षेपः। ... | ... १९१ |
| अनन्तरपदप्रयोजनम्। ज्ञापकादिना साधनम्। | |
| अनन्तरपदस्य कृद्ग्रहणे गतिकारकपूर्वस्य ग्रहणार्थत्वम्। ... ... | ... १९२ |
| परिभाषाप्रयोजनम्। | |
| **तादौ च निति कृत्यतौ ॥ ६।२।५०॥** | |
| कृद्ग्रहणं कृदुपदेशे तायर्थमिडर्थं च। | ... १९५ |
| **अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ६।२।५२॥** | |
| अनिगन्तपदाक्षेपप्रयोजनम्।... | ... १९६ |
| चोरनिगन्तोऽञ्चतावप्रत्यये विप्रतिषेधेन। विभक्तीषत्स्वरात्कृत्स्वरो विप्रतिषेधेन। चित्स्वराद्धारिस्वरो विप्रतिषेधेन। | ... १९७ |
| कृत्स्वराद्धारिस्वरो विप्रतिषेधेन। युक्तस्वरश्च कृत्स्वराद्भवति विप्रतिषेधेन। | ... १९८ |
| **उपमानं शब्दार्थप्रकृतावेव ॥ ६।२।८०॥** | |
| पदकृत्यभाष्यम्। एवकार इष्टतोऽवधारणार्थः। | |
| **दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ६।२।८२॥** | |
| जे दीर्घान्तस्यादिरुदात्तो भवतीत्येतस्मादन्त्यात्पूर्वं बह्वचो विप्रतिषेधेन। | |
| **न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ ६।२।९१॥** | |
| आद्युदात्तप्रकरणे दिवोदासादीनां छन्दसि उपसंख्यानम्। ... ... | ... १९९ |
| **अन्तः। सर्वं गुणकार्त्स्न्ये ॥ ६।२।९२,९३॥** | |
| गुणात्तरेण समासस्तरलोपश्च। | |
| **उत्तरपदवृद्धौ सर्वं च ॥ ६।२।१०५॥** | |
| सूत्रनिर्देशोपपादकभाष्यम्। ... | ... २०० |
| **बहुव्रीहौ विश्वं संज्ञायाम् ॥ ६।२।१०६॥** | |
| विप्रतिषेधोपसंख्यानम्। | |
| अन्तोदात्तप्रकरणे मरुद्वृधादीनामुपसंख्यानम्। | |
| **उदराश्वेषुषु ॥ ६।२।१०७॥** | |
| **क्षेपे ॥ ६।२।१०८॥** | |
| उदरादिभ्यो नञ्सुभ्यां विप्रतिषेधेन। | |
| **सोमनसी अलोमोषसि ॥ ६।२।११७॥** | |
| सोमनसोः कपि पूर्वं विप्रतिषेधेन। | |
| **कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ ६।२।१२१॥** | |
| पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन। | २०१ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **चेलखेटकटुककाण्डं गर्हायाम् ॥६।२।१२६॥** | |
| **अकर्मधारये राज्यम् ॥ ६ । २ । १३० ॥** | |
| चेलराज्यादिस्वराद्व्ययस्वरो विप्रतिषेधेन । | |
| **कुण्डं वनम् ॥ ६ । २ । १३६ ॥** | |
| कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् । | |
| **अथ द्वितीयमाह्निकम् ।** | |
| **गतिकारकोपपदात्कृत् ॥ ६ । २ । १३९ ॥** | |
| पदकृत्यभाष्यम् । ... ... | २०२ |
| कृद्ग्रहणाक्षेपः । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः । ... ... ... | २०३ |
| कृदभिहितो भावो द्रव्यवत् भवति, क्रियावदपि । | २०४ |
| **अन्तः ॥ ६ । २ । १४३ ॥** | |
| समासस्यान्त उतोत्तरपदस्येति प्रश्नः । | |
| समासस्यान्ते दोषाः । ... ... | २०५ |
| उत्तरपदस्यान्ते दोषाः । प्रकरणाच्च समासान्तोदात्तत्वम् । तस्मिन् पक्षे दोषाः, वारणञ्च । ... | २०६ |
| **कारकाद्दत्तश्रुतयोरेवाशिषि ॥ ६ । २ । १४८ ॥** | |
| उभयतो नियमः क्रियते-कारकाद्दत्तश्रुतयोरेवाशिषि, आशिष्येव कारकाद्दत्तश्रुतयोरिति । | |
| **संज्ञायां मित्राजिनयोः ॥ ६ । २ । १६५ ॥** | |
| ऋषिप्रतिषेधो मित्रे । | |
| **बहोर्नञ्वदुत्तरपदभूम्नि ॥ ६ । २ । १७५ ॥** | |
| बहोर्नञ्वदतिदेशः । ... ... | २०७ |
| बहोर्नञ्वदतिदेशो विदेशस्थमपि नञः कार्यं बहोर्यथा स्यात् । | |
| **उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ॥ ६ । २ । १७७ ॥** | |
| मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं विप्रतिषेधेन । | |
| **अभेर्मुखम् । अपाच्च ॥ ६ । २ । १८५,१८६ ॥** | |
| अभेर्मुखमपाच्चाध्रुवार्थमबहुव्रीह्यर्थं च । ... | २०८ |
| **स्फिगपूतवीणा० ॥ ६ । २ । १८७ ॥** | |
| स्फिगपूतग्रहणमध्रुवार्थमबहुव्रीह्यर्थं च । | |
| **अतेरकृत्पदे ॥ ६ । २ । १९१ ॥** | |
| अतेर्धातुलोपे । | |
| **द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ ६ । २ । १९७ ॥** | |
| मूर्धनि अकारान्तग्रहणमुत नकारान्तग्रहणम् । | |
| पक्षद्वये दोषाः । ... ... | २०९ |
| यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । | |
| एवं तर्हि ज्ञापयति-विभाषा समासान्तो भवति । | २१० |
| **परादिश्छन्दसि बहुलम् ॥ ६ । २ । १९९ ॥** | |
| परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । | |
| पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यतः । ... | २११ |
| **इति द्वितीयः पादः ।** | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **अथ तृतीयः पादः ।** | |
| **अलुगुत्तरपदे ॥ ६ । ३ । १ ॥** | |
| अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्रागङ्गाधिकारात् । उत्तरपदाधिकारप्रयोजनानि । | २१२ |
| उपसंख्यानवार्तिकानि । ... ... | २१३ |
| अपो योनियन्मतुषु । | |
| **पञ्चम्याः स्तोकादिभ्यः ॥ ६ । ३ । २ ॥** | |
| ब्राह्मणाच्छंसिन उपसंख्यानम् । | |
| **ओजः सहोम्भस्तमसस्तृतीयायाः ॥ ६ । ३ । ३ ॥** | |
| अञ्जस उपसंख्यानम् । | |
| पुंसानुजादीनामुपसंख्यानम् । ... ... | २१४ |
| **आज्ञायिनि च ॥ ६ । ३ । ५ ॥** | |
| आत्मनश्च पूरणे, अन्यार्थे च । | |
| **वैयाकरणाख्यायां चतुर्थ्याः ।** | |
| **परस्य च ॥ ६ । ३ । ७,८ ॥** | |
| आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् । ... | २१५ |
| **हलदन्तात्सप्तम्याः सञ्ज्ञायाम् ॥ ६ । ३ । ९ ॥** | |
| उपसंख्यानम् ।... ... ... | २१६ |
| निपातनेनोपसंख्यानप्रत्याख्यानम् । | |
| **कारनाम्नि च प्राचां हलादौ ॥ ६ । ३ । १० ॥** | |
| प्राप्तविभाषायां दोषः । ... ... | २१७ |
| अप्राप्तविभाषायान्दोषो वारणञ्च । | |
| प्राप्तविभाषायां दोषवारणम् ।... ... | २१८ |
| **मध्याद्गुरौ ॥ ६ । ३ । ११ ॥** | |
| गुरावन्ताच्च । | |
| **बन्धे च विभाषा ॥ ६ । ३ । १३ ॥** | |
| अत्र घञन्तस्य बन्धशब्दस्य ग्रहणम्, प्रतिषेधे च धातुग्रहणम् । | |
| तेन घञन्ते विभाषाऽन्यत्र प्रतिषेधः । | |
| **तत्पुरुषे कृति बहुलम् ॥ ६ । ३ । १४ ॥** | |
| बहुलवचनादकर्मधारय इति न वक्तव्यम् । ... | २१९ |
| बहुलवचनस्याकृत्स्नत्वम् । | |
| सर्ववेदपारिषदं हीदं शास्त्रम् । | |
| **षष्ठ्या आक्रोशे ॥ ६ । ३ । २१ ॥** | |
| उपसंख्यानम् । ... ... | २२० |
| **ऋतो विद्यायोनिसंबन्धेभ्यः ॥ ६ । ३ । २३ ॥** | |
| विद्यासम्बन्धेभ्यो विद्यासम्बन्धेषु, योनिसम्बन्धेभ्यो योनिसम्बन्धेष्विति नियमो न । | |
| **आनङ् ऋतो द्वन्द्वे ॥ ६ । ३ । २५ ॥** | |
| आनङि नकारप्रयोजनं रपरो माभूत् । ... | २२१ |
| ऋकारान्तानां द्वन्द्वे आनङित्यर्थनिर्णयः । | |
| **देवताद्वन्द्वे च ॥ ६ । ३ । २६ ॥** | |
| वायोः प्रतिषेधः । ... ... | २२२ |
| पुनर्द्वन्द्वग्रहणाल्लोके वेदे च ये सहनिर्वापनिर्दिष्टास्तेषां दीर्घः । | |

विषयाः पृष्ठाङ्काः

(उद्योतः) भाष्ये लोकपदेनात्र कल्पसूत्रम् ।

**इद्वृद्धौ ॥ ६ । ३ । २८ ॥**

विष्णोः प्रतिषेधः ।

**मातरपितरावुदीचाम् ॥ ६ । ३ । ३२ ॥**

**पितरामातरा च च्छन्दसि ॥ ६ । ३ । ३३ ॥**

पूर्वोत्तरपदयोर्ऋकारस्यारारौ निपात्येते । ... २२३

## अथ द्वितीयमाह्निकम् ।

**स्त्रियाः पुंवद्भाषितपुंस्कात्० ॥ ६ । ३ । ३४ ॥**

समानायामाकृतौ भाषितपुंस्कमुत यथाकथञ्चित् ।

पूर्वोत्तरपक्षयोर्दोषश्च । ... ... २२४

अनूङिति न प्रसज्यप्रतिषेधः, पर्युदास एव ।

पुंवद्भावे–स्त्रीप्रत्ययग्रहणं, स्त्रीशब्दग्रहणं, स्त्र्यर्थस्य वा । ... ... ... २२५

प्रथमपक्षे दोषाः । पुंवदित्यत्र वतिनिर्देशः कामचारश्च वतिनिर्देशे, उशीनरवन्मद्रेषु यवाः सन्ति न सन्तीति । ... ... ... २२६

स्त्रीशब्दग्रहणे दोषाः । ... ... २२८

तृतीये स्त्र्यर्थस्य ग्रहणे दोषाः । मध्यमपक्षाक्षेपः । प्रथमे दोषवारणम् । ... ... २२९

पट्वीमृदुभार्य इत्यत्र पुंवद्भावाभावस्थापनम् ।

**तसिलादिष्वा कृत्वसुचः ॥ ६ । ३ । ३५ ॥**

परिगणनं कर्तव्यम् । ... ... २३१

परिगणनवार्तिकानि । ... ... २३२

**क्यङ्मानिनोश्च ॥ ६ । ३ । ३६ ॥**

मानिन्ग्रहणप्रयोजनम् ।

**न कोपधायाः ॥ ६ । ३ । ३७ ॥**

अयं निषेधः पुंवद्भावमात्रस्य ।... ... २३४

**स्वाङ्गाच्चेतः ॥ ६ । ३ । ४० ॥**

स्वाङ्गाच्चेतोऽमानिनि । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ।

**पुंवत्कर्मधारयजातीयदेशीयेषु ॥६।३।४२॥**

सूत्रप्रयोजनम् । ... ... २३५

कुक्कुटाण्डं मृगक्षीरमित्यादौ सतोऽप्यविवक्षा । यथा– अलोमिका एडका, अनुदरा कन्या । विप्रतिषेधवार्तिकम् । ... ... ... २३६

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु० ॥ ६ । ३ । ४३ ॥**

ङीग्रहणाक्षेपः ।... ... ... २३७

ईतः पदानुवर्तनेन ङीग्रहणप्रत्याख्यानम् । नद्याः शेषस्यान्यतरस्यामिति सूत्रस्थशेषग्रहणप्रत्याख्यानम् । २३८

## अथ तृतीयमाह्निकम् ।

**आन्महतः समानाधिकरणजातीययोः ॥ ६।३।४६ ॥**

महद्भूते आत्वाभावसाधकम् । ... ... २३९

महद्भूते पुंवद्भावसाधनम् ।

विषयाः पृष्ठाङ्काः

(उद्योतः) हरिकारिकामुखेन च्व्यन्तार्थः । २४०

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य । गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः । अर्थाश्रये एतदेवं भवति, शब्दाश्रये वृद्ध्यात्वे । ... ... २४१

(प्रदीपः) पदान्तरसम्बन्धे हि पदस्य गौणार्थत्वप्रतीतिः, न प्रातिपदिककार्ये ।

(उद्योतः) गौणमुख्यपरिभाषार्थः साकल्येन । ... २४२

उपसंख्यानवार्तिकानि । ... ... २४३

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥६।३।४७॥**

प्राक्शतादिति वक्तव्यम् ।

**विभाषा चत्वारिंश० ॥ ६ । ३ । ४९ ॥**

मण्डूकानुवृत्तिः ।

**हृदयस्य हृल्लेखयदण्लासेषु ॥ ६ । ३ । ५० ॥**

उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं न ।

(उद्योतः) प्रत्ययग्रहणे चापञ्चम्याः । ... २४४

उत्तरपदाधिकार इत्यस्या ज्ञापकम् ।

(प्रदीपः) संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं न ॥

**पादस्य पदाज्यातिगोपहतेषु ॥ ६ । ३ । ५२ ॥**

पदादेशोऽन्तोदात्तनिपातनम् ।... ... २४५

उपदेशिवद्वचनञ्च ।

**पद्यत्यतदर्थे ॥ ६ । ३ । ५३ ॥**

इके चरतावुपसंख्यानम् ॥

**वा घोषमिश्रशब्देषु ॥ ६ । ३ । ५६ ॥**

निष्के चोपसंख्यानम् । ... ... २४६

**उदकस्योदः संज्ञायाम् ॥ ६ । ३ । ५७ ॥**

संज्ञायामुत्तरपदस्य क्षीरोदः सिद्ध्यर्थम् ॥

**एकहलादौ पूरयितव्ये० ॥ ६ । ३ । ५९ ॥**

वर्णाः क्रमेणोच्चार्यन्ते नैकदा ॥

**इको ह्रस्वोऽङ्यो गालवस्य ॥ ६ । ३ । ६१ ॥**

ह्रस्वत्वमुत्तरपदमात्रे । ... ... २४७

इयङुवङ्व्ययप्रतिषेधः । अभ्रूकुंसादीनाम् ॥

**एकतद्धिते च ॥ ६ । ३ । ६२ ॥**

एकतद्धित उदाहरणम् । उत्तरपद उदाहरणम् । २४८

**खित्यनव्ययस्य ॥ ६ । ३ । ६६ ॥**

ह्रस्वानुवर्तनेन सूत्रार्थसाधनम् । ... २४९

कार्यकालं संज्ञापरिभाषम् ॥

**इच एकाचोऽम्प्रत्ययवच्च ॥ ६ । ३ । ६८ ॥**

प्रत्ययवद्भावप्रयोजनम् । ... ... २५०

सामान्यातिदेशे विशेषानतिदेशः ।

श्रियम्मन्यमित्यस्य सिद्धिः । ... ... २५१

येन नाप्राप्ते तस्य बाधनम् । मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते । असिद्धं बहिरङ्गमन्तरङ्गे ।

उत्तरपदाधिकारेऽन्तरङ्गपरिभाषाऽप्रवृत्तिकल्पनम् ॥

विषयाः पृष्ठाङ्काः

**कारे सत्यागदस्य ॥ ६ । ३ । ७० ॥**
अस्तुशब्दोपसंख्यानम् । ... ... २५२
उपसंख्यानानि । ... ... २५३
**रात्रेः कृति विभाषा ॥ ६ । ३ । ७२ ॥**
प्राप्ताप्राप्तविभाषानिर्णयः ॥
**नलोपो नञः ॥ ६ । ३ । ७३ ॥**
नञो ग्रहणे सानुबन्धकप्रयोजनम् ।
उपसंख्यानञ्च ।
**तस्मान्नुडचि ॥ ६ । ३ । ७४ ॥**
'अनुणः'इत्यादिसिद्धये नुट् परादिः कर्तव्यः,
पदादौ च क्रियमाणे 'तस्मात्' इति वक्तव्यम् । २५४
**एकादिश्चैकस्य चादुक् ॥ ६ । ३ । ७६ ॥**
यरोऽनुनासिके-इति पदान्तस्यैवं तत् । यं विधि-
म्प्रत्यकारोच्चारणमनर्थकं स विधिर्बाध्यते । ... २५५
**सहस्य सः संज्ञायाम् ॥ ६ । ३ । ७८ ॥**
सादेशे आद्युदात्तनिपातनस्योपदेशिवद्भावो वक्तव्यः ।
**ग्रन्थान्ताधिके च ॥ ६ । ३ । ७९ ॥**
ग्रन्थान्तेवचनं कालोत्तरपदार्थम् ।
**वोपसर्जनस्य ॥ ६ । ३ । ८२ ॥**
बहुव्रीहिनिर्देशः कर्तव्यः । ... ... २५६
अकारो मत्वर्थीयः, अथवा मतुब्लोपोऽत्र द्रष्टव्यः ।
**प्रकृत्याशिषि ॥ ६ । ३ । ८३ ॥**
अगवादिष्विति वक्तव्यम् ।
**चरणे ब्रह्मचारिणि ॥ ६ । ३ । ८६ ॥** ... २५७
ब्रह्मचारिणि निपातनप्रदर्शनम् ।
**दृग्दृशवतुषु ॥ ६ । ३ । ८९ ॥**
दृक्ष उपसंख्यानम् ।
**समः समि ॥ ६ । ३ । ९३ ॥**
**नहिवृतिवृषि० ॥ ६ । ३ । ११६ ॥**
क्विब्ग्रहणाक्षेपः । ... ... २५८
यस्मिन्विधिस्तदादावल्ग्रहणे एव भवति ।
क्विग्रहणेन ज्ञाप्यते–धातुग्रहणे तदादिविधिः ।
**विष्वग्देवयोश्च० । सहस्य सध्रिः ॥ ६।३।९२,९५ ॥**
छन्दसि स्त्रियां बहुलम् ।
**द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ६ । ३ । ९७ ॥**
ईत्वमनवर्णादिति वक्तव्यम् ।
**ऊदनोर्देशे ॥ ६ । ३ । ९८ ॥**
दीर्घग्रहणाक्षेपः । ... ... २५९
दीर्घग्रहणाभावेऽवग्रहे दोषः स्यात् ।
**अषष्ठ्यतृतीयास्थस्यान्यस्य० ॥ ६ । ३ । ९९ ॥**
अन्यस्य कारक इत्यत्र दुक्सिद्ध्यर्थं सूत्रभेदः ।
**कोः कत्तत्पुरुषेऽचि ॥ ६ । ३ । १०१ ॥**
कद्भावे त्रावुपसंख्यानम् ।

विषयाः पृष्ठाङ्काः

**पृषोदरादीनि यथोपदिष्टम् ॥ ६ । ३ । १०९ ॥**
सूत्रावयवार्थबोधः । ... ... २६०
शिष्टलक्षणम् । आर्यावर्तलक्षणम् ।
शिष्टज्ञानार्थाऽष्टाध्यायी । ... ... २६१
उपसंख्यानानि । ... ... २६२
**ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ६ । ३ । १११ ॥**
पूर्वग्रहणेनानन्तर्यमात्रे यथा स्यात्–औदुम्बरी राजा ।
**सहिवहोरोदवर्णस्य ॥ ६ । ३ । ११२ ॥**
अवर्णग्रहणाक्षेपः । ... ... २६३
अवर्णग्रहणफलम् । यस्य च लक्षणान्तरेण
निमित्तं विहन्यते न तदनित्यम् ।
**इको वहेऽपीलोः ॥ ६ । ३ । १२१ ॥**
अपील्वादीनामिति वक्तव्यम् ।
**उपसर्गस्य घञ्यमनुष्ये० ॥ ६ । ३ । १२२ ॥**
अमनुष्यादिति वक्तव्यम् ।
(उद्योतः) कृत्रिमः–पुरुषव्यापाराभिनिर्वृत्तः । ... २६४
**दस्ति ॥ ६ । ३ । १२४ ॥**
तिपदार्थनिर्णयः । सुदत्तमित्यादि थकारान्तम् ।
**चौ ॥ ६ । ३ । १३८ ॥**
न चौ प्रत्यङ्ग भवतीत्यनेन ज्ञाप्यते ।
**सम्प्रसारणस्य ॥ ६ । ३ । १३९ ॥**
विप्रतिषेधवार्तिकम् । ... ... २६५
सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ २६६
**तृतीयः पादः समाप्तः ॥**

**अथ चतुर्थः पादः ।**

**अङ्गस्य ॥ ६ । ४ । १ ॥**
प्रागभ्यासविकारेभ्योऽङ्गाधिकार उतासप्तमसमा-
प्तेरङ्गाधिकारः । आसप्तमेति निर्णयः । ... २६७
अङ्गस्येति स्थानषष्ठ्याश्रयणे पञ्चम्यन्तस्य चाधि-
कारः । अवयवषष्ठ्यादीनामप्रतिपत्तिः । ... २६८
परस्परं प्रत्ययाङ्गप्रत्ययसंज्ञाभावात् । अङ्गस्येति
सम्बन्धषष्ठीनिर्देशः । ... ... २६९
यत्रान्ययोगं नापेक्षते षष्ठी सा स्थानषष्ठी ।
यत्रान्ययोगमपेक्षते सा विशेषणषष्ठी । अङ्गाधि-
कारप्रयोजनानि । ... २७०–२७१
अर्थवद्ग्रहणे नानर्थकस्य । प्रत्ययाप्रत्यययोः प्रत्य-
यस्यैव । प्रत्ययग्रहणे यस्मात्स तदादितदन्तवि-
ज्ञानम् । ... ... २७२
(उद्योतः) प्रत्ययग्रहणे चापञ्चम्या ॥
**हलः ॥ ६ । ४ । २ ॥**
ऋकारस्य दीर्घोऽणप्रकरणाच्च । ... २७३
यथा लक्षणमप्रयुक्ते ॥

विषयाः पृष्ठाङ्काः

**नामि ॥ ६ । ४ । ३ ॥**

नामि दीर्घं आमिचेत्स्यात्कृते दीर्घे न नुड्भवेत् । २७४

वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्मणाम् ॥

**इन्हन्पूषार्यम्णां शौ ॥ ६ । ४ । १२ ॥**

**सौ च ॥ ६ । ४ । १३ ॥**

हनः क्वावुपधादीर्घत्वप्रसङ्गः । ... २७५

नियमस्वरूपसाधनम् । इन्हन्पूषार्यम्णामित्येको योगः । 'शौ' इति द्वितीयः । ... २७६

अथवाऽविशेषेण नियमः । उपधालक्षण-दीर्घत्वस्य नियमः । ... ... २७७

अविशेषेण नियमेऽपि दोषाभावः ॥

**अत्वसन्तस्य चाधातोः ॥ ६ । ४ । १४ ॥**

दीर्घत्वे पित उपसंख्यानम् । अननुबन्धकग्रहणे न सानुबन्धकस्य । ... ... २७८

तदनुबन्धकग्रहणेऽतदनुबन्धकस्य । ... २७९

अर्थवद्ग्रहणे नानर्थकस्य ॥

**अज्झनगमां सनि ॥ ६ । ४ । १६ ॥**

इङो गमेरिति वक्तव्यम् । ... ... २८०

'अचः सनि' इत्येको योगः । 'हनिगम्योश्च'-अचः स्थाने जातयोरित्यर्थको द्वितीयः । अच इत्युप-स्थानादुपधाया नोपयोगः । ... ... २८१

**च्छ्वोः शूडनुनासिके च ॥ ६ । ४ । १९ ॥**

ऊठछित्वसाधनम् । 'एत्येधत्यूठ्सु' इत्यस्यापि ठित्वेनाक्षेपपरिहारः । ... ... २८२

क्ङिद्ग्रहणानुवर्तनाक्षेपः ।

**(प्रदीपः)** वार्णादाङ्गम्बलीयः । नानर्थकेऽलोन्त्यविधिर-नभ्यासविकारे । ... ... २८३

क्ङिद्ग्रहणाननुवर्तने दोषपरिहारौ ।

**(प्रदीपः)** भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति-इति 'ऋत उत्' इति तपरकरणात् । ... २८४

**अथ द्वितीयमाह्निकम् ।**

**असिद्धवदत्राभात् ॥ ६ । ४ । २२ ॥**

**(प्रदीपः)** सूत्रनिर्देशोपपत्तिः । ... ... २८५

**(उद्योतः)** अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्या-निवृत्तिः ।

**(भाष्यम्)** असिद्धवचनप्रयोजनम् ।... ... २८६

अत्रग्रहणप्रयोजनम् । सूत्रप्रयोजनानि । २८७-८९

असिद्धवदित्यस्याभावे श्लोकवार्तिककारोक्त-दोषाः । ... ... ... २९०-९१

सूत्रारम्भे वसुसंप्रसारणमज्विधौ सिद्धम् ।

समानाश्रयवचनात्सिद्धम् । ... ... २९२

अधिकारादप्येतत्सिद्धमिति-अत्रग्रहणं व्यर्थं

विषयाः पृष्ठाङ्काः

सत्समानाश्रयत्वं ज्ञापयति तत्तु यथा कथञ्चित् । २९३

उपसंख्यानवार्तिकानि ।... ... २९४-९५

आङोऽर्थप्रतिपादनम् ।

आङो मर्यादार्थत्वे दोषाः । ... २९६-९७

आङोऽभिविध्यर्थत्वे दोषाः । ... ... २९८

**श्नान्नलोपः ॥ ६ । ४ । २३ ॥**

श्नमि शकारग्रहणप्रयोजनम् । ... ... २९९

**अनिदितां हल उपधायाः क्ङिति ॥ ६ । ४ । २४ ॥**

लङ्गिकम्प्योरुपसंख्यानम् । बृंहेरच्यनिटि । ३००

बृहिः प्रकृत्यन्तरम् । रञ्जेर्णौ मृगरमणे ।

घिनुणि रजकरजनरजःसु चोपसंख्यानम् । ३०१

**शास इदङ्हलोः ॥ ६ । ४ । ३४ ॥**

आशासः क्वावुपसङ्ख्यानम् । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । सूत्रस्य नियामकत्वोपपादनम् । ३०२

नियमस्वरूपदर्शनम् ।

**अनुदात्तोपदेश० ॥ ६ । ४ । ३७ ॥**

'वाऽमः' इति वार्तिकेन 'वा ल्यपि' इति सूत्र-प्रत्याख्यानम् ।

**गमः क्वौ ॥ ६ । ४ । ४० ॥**

गमादीनामिति वक्तव्यम् । ऊङ् च गमादीनाम् । ३०३

**जनसनखनां सञ्झलोः ॥ ६ । ४ । ४२ ॥**

सञ्झलोरिति समुच्चयः । योगविभागेन झलग्रहण-प्रत्याख्यानम् । विप्रतिषेधवार्तिकम् ।... ३०४

विप्रतिषेधाक्षेपः । पूर्वत्रासिद्धे नास्ति विप्रतिषेधो-ऽभावादुत्तरस्य । घुमास्थेतिज्ञापकेन विप्रतिषेध-स्थापनम् । ... ... ... ३०५

हल्ग्रहणस्य व्यवस्थार्थत्वम् । ... ... ३०६

हल्ग्रहणस्य विप्रतिषेधज्ञापकत्वम् ।

**सनः क्तिचि ॥ ६ । ४ । ४५ ॥**

अन्यतरस्यां ग्रहणं शक्यमकर्तुम् । अन्यमते लोपपदस्यापि प्रत्याख्यानम् ।

**आर्धधातुके ॥ ६ । ४ । ४६ ॥**

अधिकारप्रयोजनम् । ... ... ३०७

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।

अल्लोप ईत्वमेत्वञ्च चिण्वद्भावश्च सीयुट् । ३०८-०९

**भ्रस्जो रोपधयोरमन्यतरस्याम् ॥६।४।४७॥**

भ्रज्जो रोपधयोर्लोप आगमो रम्विधीयते ।

संप्रसारणं विप्रतिषेधेन । ... ... ३१०

विप्रतिषेधाक्षेपे न्यासान्तरम् । ... ३११

विप्रतिषेधप्रत्याख्यानम् ।

**अतो लोपः ॥ ६ । ४ । ४८ ॥**

पूर्वविप्रतिषेधः ।... ... ... ३१२

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः, न, इष्टवाची परशब्दः ।

विषयाः पृष्ठाङ्काः

**यस्य हलः ॥ ६ । ४ । ४९ ॥**
यलोपे वर्णग्रहणे दोषाः । ... ... ३१३
यग्रहणे सङ्घातग्रहणम् । सङ्घातग्रहणे दोषाः । ३३४
पक्षद्वयेऽपि दोषाभावः ।
**णेरनिटि ॥ ६ । ४ । ५१ ॥**
अनिटिग्रहणप्रत्याख्यानम् । ... ... ३१५
**निष्ठायां सेटि ॥ ६ । ४ । ५२ ॥**
सेड्ग्रहणप्रयोजनम् । ... ... ३१६
सेट्ग्रहणाभावे दोषाः । उपसंख्यानवार्तिकम् । ३१७
वृधादीनां छन्दोविषयत्वात्सिद्धम् ।
**अयामन्ताल्वाय्ये० ॥ ६ । ४ । ५५ ॥**
इत्नुः क्त्नुरिति पक्षद्वयोपस्थापनम् ।
पक्षद्वयेऽपि दोषप्रदर्शनम् । ... ... ३१८
दोषद्वयनिराकरणम् ।
**ल्यपि लघुपूर्वात् ॥ ६ । ४ । ५६ ॥**
लघुपूर्वस्येति न्यासं प्रकल्प्य दोषकथनम् । ३१९
पञ्चम्यन्तपक्षस्थापनम् ।
**विभाषाऽऽपः ॥ ६ । ४ । ५७ ॥**
आपः सानुबन्धकग्रहणम् । ... ... ३२०
सानुबन्धकनिर्देशो लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्यनेन प्रत्याख्यातः ।

अथ तृतीयमाह्निकम् ।

**स्यसिच्सीयुट्तासिषु० ॥ ६ । ४ । ६२ ॥**
भावकर्मणोर्ये स्यादयः । भावकर्मवाचिनि ये स्यादयः । पक्षद्वयेऽपि दोषः ।... ... ३२१
पक्षद्वयेऽपि दोषोद्धारः । कस्यायमिट् भवति । ३२२
भावकर्मणोरिडिति पक्षे सीयुटो न प्राप्नोति ।
यावानिण्णाम स वलादेरार्धधातुकस्येति पक्षे चिण्वद्भावश्चाविशेषितः । ... ... ३२३
उदात्तानुदात्तेभ्योऽप्यनेनैवेड् भवति । ... ३२४
सूत्रप्रयोजनानि । उपदेशपदप्रयोजनम् । ... ३२५
विप्रतिषेधवार्तिकम् । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव । ... ... ३२६
**आतो लोप इटि च ॥ ६ । ४ । ६४ ॥**
इड्ग्रहणाक्षेपः ।
(प्रदीपः) इड्ग्रहणे चत्वारः पक्षाः । इड्प्रयोजनम् । ३२७
**घुमास्थागापाजहातिसां हलि ॥ ६ । ४ । ६६ ॥**
ईत्वे वकारप्रतिषेधो घृतपावान इति दर्शनात् ।
धीवरी पीवरीति ध्याप्योः सम्प्रसारणम् । ... ३२८
**न माङ्योगे ॥ ६ । ४ । ७४ ॥**
अस्मिन् सूत्रे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यतोऽटोऽनुवर्तनात् अडाटोरयं प्रतिषेधः । अटोऽनुवर्तने दोषाः । ... ... ... ३२९

विषयाः पृष्ठाङ्काः

अटा सिद्धे आङ्वचनप्रयोजनानि । ... ३३०
**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ६ । ४ । ७७ ॥**
इयङादिप्रकरणे तन्वादीनाञ्छन्दसि बहुलम् ॥ ३३१
**एरनेकाचोऽसंयोगपूर्वस्य ॥ ६ । ४ । ८२ ॥**
गतिकारकपूर्वस्यैवेष्यत इति परमनियावित्यत्र न दोषः । यणादेशः स्वरपदपूर्वोपधस्य, असंयोगपूर्वे ह्यनिष्टप्रसङ्गः । धातुना संयोगस्य विशेषणादिष्टार्थसिद्धिः । ... ... ३३२
**वर्षाभ्वश्च ॥ ६ । ४ । ८४ ॥**
वर्षादन्कारपुनःपूर्वस्य भुव इति वक्तव्यम् ॥
**हुश्नुवोः सार्वधातुके ॥ ६ । ४ । ८७ ॥**
हुश्नुग्रहणमनर्थकमन्यस्याभावात् । ... ३३३
यङ्लुकश्छान्दसत्वात् हुश्नुग्रहणानर्थक्यम् ।
हुश्नुग्रहणसामर्थ्याद्यङ्लुग्भाषायामपि ॥
**ऊदुपधाया गोहः ॥ ६ । ४ । ८९ ॥**
गोहिग्रहणं विषयार्थं यत्रास्यैतद्रूपम् । अयादेशप्रतिषेधार्थञ्च । ... ... ३३४
विकृतनिर्देशस्य प्रयोजनाभावः ॥
**दोषो णौ ॥ ६ । ४ । ९० ॥**
अत्रापि विकृतग्रहणस्य समानाश्रयवचनात्फलाभावः । ... ... ... ३३५
**चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ६ । ४ । ९३ ॥**
चिण्णमुलोर्णिज्व्यवेतानां यङ्लोपे च समानाश्रयवचनान्नोपसंख्यानम् ।
**छादेर्घेऽद्व्युपसर्गस्य ॥ ६ । ४ । ९६ ॥**
अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । ... ३३६
**घसिभसोर्हलि ॥ ६ । ४ । १०० ॥**
अचीत्यधिकाराद्धलीत्युक्तम् । हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात् ।
**हुझल्भ्यो हेर्धिः ॥ ६ । ४ । १०१ ॥**
हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । ... ३३७
निर्दिश्यमानस्यादेशा भवन्ति । शब्दान्तस्य च प्राप्नुवन्विधिरनित्यो भवति । हेरित्यत्र हकारमात्रं निर्दिश्यत इकारस्तूच्चारणार्थः । ... ... ३३८
**चिणो लुक् ॥ ६ । ४ । १०४ ॥**
चिणो लुकि तग्रहणम्, तलोपस्य चासिद्धत्वम् ।
अथवा क्ङितीति वर्तते । ... ... ३३९
**उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ६ । ४ । १०६ ॥**
उकारात्प्रत्ययादिति, उकारान्तात्प्रत्ययादिति वा ।
यथेच्छसि तथाऽस्तु । एकत्र तदन्तविधिना, अपरत्र व्यपदेशिवद्भावेन । 'छन्दसि वा' इति च वक्तव्यम् । ... ... ३४०
**अत उत् सार्वधातुके ॥ ६ । ४ । ११० ॥**
सार्वधातुकपदप्रयोजनम् । तस्योत्तरार्थत्वञ्च । ३४१–४२

| विषयाः | पृष्ठाङ्काः |
|---|---|
| सार्वधातुकग्रहणं स्पष्टार्थम्, भूतमात्रेऽपि सार्वधातुके यथा स्यादित्यर्थञ्च ॥ | |
| **श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥** | |
| अत्र तपरकरणं प्रत्याख्यातम् । | |
| **इद्दरिद्रस्य ॥ ६ । ४ । ११३ ॥** | |
| दरिद्रातेरार्धधातुके लोपः स च सिद्धः प्रत्ययविधौ । दरिद्रस्येति सौत्रोऽयं निर्देशः । ... | ३४३ |
| अद्यतन्यां वेति वक्तव्यम् । अद्यतनीशब्दः पूर्वाचार्यप्रसिद्ध्या लुङ्वाचकः । | |
| **अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६ । ४ । १२० ॥** | |
| लिण्निमित्तो य आदेशस्तदादेर्न । ... | ३४४ |
| अभ्यासादेशस्यासिद्धत्वाद्भणतुरित्यादावेत्वं प्राप्नोति । फलिभजिग्रहणं ज्ञापकमभ्यासादेशसिद्धत्वस्य । शसिदद्योः प्रतिषेधात्पेचतुरित्यादौ न दोषः । दम्भ एत्वं नलोपस्यासिद्धत्वात् । ... | ३४५ |
| श्नसोरत्त्वे तकारेण ज्ञायते–अनित्योऽयं विधिरिति । | |
| **थलि च सेटि ॥ ६ । ४ । १२१ ॥** | |
| थल्ग्रहणं समुच्चयार्थं–थलि च सेटि क्ङिति च सेटीति । तॄफलभजेति ज्ञापनात्–'शशरिथ' इत्यादौ न । ... ... ... | ३४६ |
| **राधो हिंसायाम् ॥ ६ । ४ । १२३ ॥** | |
| राधादिषु स्थानिनिर्देशः । अनर्थकेऽलोन्त्यविधिर्न, नैतस्याः प्रयोजनानि । अत इति वर्तत इति अकारस्य भविष्यति । | |
| **अर्वणस्त्रसावनञः । मघवा बहुलम् ॥ ६ । ४ । १२७,१२८ ॥** | |
| अर्वणस्तृमघोनश्च न शिष्यं छान्दसत्वात्, छन्दस्युभयदर्शनात् । ... ... | ३४७ |


अथ चतुर्थमाह्निकम् ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| **पादः पत् ॥ ६ । ४ । १३० ॥** | |
| पाद उपधाह्रस्वत्वं वक्तव्यं, सर्वादेशप्रसङ्गात् । न वा निर्दिश्यमानस्यादेशात् । निर्दिश्यमानपरिभाषाप्रयोजनानि ।... ... ... | ३४८ |
| निर्दिश्यमानपरिभाषा नापूर्वा किन्तु 'षष्ठी स्थानेयोगा' इत्यनेनोच्यते । | |
| **वाह ऊठ् ॥ ६ । ४ । १३२ ॥** | |
| संप्रसारणेन कृतत्वादूड्वचनमनर्थकम् । तच्चान्तरङ्गपरिभाषां ज्ञापयति । ... ... | ३५० |
| **श्वयुवमघोनामतद्धिते ॥ ६ । ४ । १३३ ॥** | |
| नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् । छान्दसत्वात्सिद्धम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य । | ३५१ |
| **षपूर्वहन्धृतराज्ञामणि ॥ ६ । ४ । १३५ ॥** | |
| षपूर्वादीनां पुनर्वचनमल्लोपार्थमुतनियमार्थमिति विकल्प्याल्लोपार्थमिति निश्चितम् । | |
| **आतो धातोः ॥ ६ । ४ । १४० ॥** | |
| आतो नाप इति वक्तव्यम् । ... ... | ३५२ |
| 'आतः' 'धातोः' इति योगविभागेन क्त्वाया-मित्यादीनां सिद्धिः ॥ | |
| **मन्त्रेष्वाङ्यादेरात्मनः ॥ ६ । ४ । १४१ ॥** | |
| आदिग्रहणानर्थक्यमाकारप्रकरणात् । ... | ३५३ |
| **तिविंशतेर्डिति ॥ ६ । ४ । १४२ ॥** | |
| तिग्रहणेऽन्त्यस्य कस्मान्न भवति ? निर्दिश्यमानस्यादेशा भवन्तीति । | |
| **टेः ॥ ६ । ४ । १४३ ॥** | |
| डित्यभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति । | |
| **नस्तद्धिते ॥ ६ । ४ । १४४ ॥** | |
| उपसंख्यानवार्तिकानि । ... ... | ३५४ |
| **यस्येति च ॥ ६ । ४ । १४८ ॥** | |
| इवर्णस्य-ईकारे किं प्रयोजनकथनम् ? । ... | ३५५ |
| इवर्णस्य-ईकारे प्रयोजनम् । | |
| (प्रदीपः) यत्राङ्गवार्णयोर्युगपत्प्रसङ्गस्तत्र वार्णादाङ्गं बलीयो भवति । अन्तरङ्गं बलीयः । | |
| (प्रदीपः) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं, तच्चानित्यम् । | |
| (उद्द्योतः) समासान्तविधिरनित्यः । अतिदेशे चातिदिश्यमानधर्मविरुद्धस्वाश्रयधर्माभावस्य सर्वसंमतत्वम् । संज्ञाविधौ तदन्तग्रहणे मानाभावः । कार्यकालपक्षे विभक्तौ लिङ्गविशिष्टाग्रहणम् । इयाम्प्रतिषेधः । ... ... | ३५६ |
| विप्रतिषेधवचनानि । | |
| **सूर्यतिष्यागस्त्य० ॥ ६ । ४ । १४९ ॥** | |
| सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् । ... | ३५७ |
| स्थानिवत्प्रतिषेधान्नाङ्गान्यत्वम् । स्थानिवद्भावे प्रतिषिद्धे उपधाग्रहणानर्थक्यञ्च । अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकारः । विषयपरिगणनवार्तिकानि । ... ... ... | ३५८ |
| उपसंख्यानवार्तिकानि । उपसंख्याने श्लोकवार्तिकम् । दाशतयः–ऋग्वेदः । ... | ३५९ |
| **बिल्वकादिभ्यश्छस्य लुक् ॥ ६ । ४ । १५३ ॥** | |
| छग्रहणेन सन्नियोगशिष्टानामन्यतराभाव उभयोरप्यभाव इति ज्ञाप्यते । ... ... | ३६० |
| **तुरिष्ठेमेयःसु ॥ ६ । ४ । १५४ ॥** | |
| अन्त्यलोपवचनानर्थक्यात्सर्वलोपविज्ञानम् । | |
| **टेः ॥ ६ । ४ । १५५ ॥** | |
| णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः पुंवद्भावरभावटिलोपयणादिपरार्थम् । ... ... | ३६१ |
| भारद्वाजीयाः–णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थम् । | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **इष्ठस्य यिट् च ॥ ६ । ४ । १५९ ॥** | |
| यकारमात्र आगमः, इकारविशिष्टो वा । लोपानुवर्तने यकारमात्रः, तदनुवर्तने इकारविशिष्टः । | |
| **ज्यादादीयसः ॥ ६ । ४ । १६० ॥** | |
| ज्यात्परस्य लोपविधानेनापि सिद्धावात्वविधानं ज्ञापयति–अङ्गवृत्ते पुनर्वृत्तावविधिः । ... | ३६२ |
| अकारविधानेनोपपत्तावाकारविधानं ज्ञापयति–भाव्यमानेन सवर्णानां नेति । | |
| **र ऋतो हलादेर्लघोः ॥ ६ । ४ । १६१ ॥** | |
| हलादेरिति विशेषणमङ्गस्य, ऋकारस्य वा । आदिशब्दस्य सामीप्यावयववाचित्वेनोभयथा सम्भवः । | ३६३ |
| पक्षद्वयेऽपि दोषवारणम् । ... ... | ३६४ |
| सिद्धान्तपक्षस्थापनेन सूत्रस्योपसंहारः ॥ | |
| **प्रकृत्यैकाच् ॥ ६ । ४ । १६३ ॥** | |
| किमयमविशेषेण, उत–इष्ठेमेयःसु । ... | ३६५ |
| **न मपूर्वोऽपत्येऽवर्मणः ॥ ६ । ४ । १७० ॥** | |
| वा हितनाम्न इति वक्तव्यम् । | |
| **ब्राह्मोऽजातौ ॥ ६ । ४ । १७१ ॥** | |
| अयं विधिर्नियमो वा । इदं नियमार्थं विध्यर्थं वेति पक्षद्वयम् । ... ... | ३६८ |
| योगविभागेन सर्वेष्टसिद्धिः । ... ... | ३६९ |
| **कार्मस्ताच्छील्ये ॥ ६ । ४ । १७२ ॥** | |
| 'नस्तद्धिते' इत्यनेनैव सिद्धे कार्म इति निपातनं ज्ञापयति–ताच्छीलिकेऽणकृतानि भवन्ति ॥ | |
| **दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेय० ॥ ६ । ४ । १७४ ॥** | |
| भ्रौणहत्ये निपातनवर्णनम् । सामान्येनैवात्र तत्वं सिद्ध्यतीति तत्वनिपातनं ज्ञापयति–तद्धिते तत्वं न भवतीति । ... ... ... | ३७० |
| मैत्रेये यादिलोपनिपातनम् । मित्रयुशब्दस्य द्विर्ग्रहणं शक्यमकर्तुम् । ... ... | ३७१ |
| हिरण्मये यलोपवचनम् । हिरण्मये छन्दसि मलोपो निपात्यते । हिरण्ययाः पन्थान आसन् ॥ | ३७२ |


**समाप्तश्चतुर्थः पादः ।**

॥ विषयानुक्रमः समाप्तः ॥





# श्रीमद्भगवत्पतञ्जलिमुनिविरचितं
# महाभाष्यम् ।

## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः,
## तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतश्च प्रारभ्यते ।
## षष्ठाध्यायस्य प्रथमपादस्य प्रथममाह्निकम् ।

( स्थानेविधिप्रकरणम् )

( १०३५ अधिकारसूत्रम् ॥ ६ । १ । १ आ. १ )

### २४३८ एकाचो द्वे प्रथमस्य ॥ ६।१।१ ॥

( द्वित्वाधिकरणम् )

( एकाच्पदार्थबोधकवार्तिकावतरणभाष्यम् )

**एकाच इति किमयं बहुव्रीहिः-एकोऽच् यस्मिन् स एकाच्-एकाचः-इति,**

**आहोस्वित् तत्पुरुषोऽयं समानाधिकरणः-एकोऽच्-एकाच्-एकाच इति ?**

**किं चातः ?**

**यदि बहुव्रीहिः, सिद्धम्-पपाच, पपाठ । इयाय, आर-इति न सिद्ध्यति ।**

**अथ तत्पुरुषः समानाधिकरणः, सिद्धम्—इयाय, आर-इति । पपाच, पपाठ-इति न सिद्ध्यति ॥**

**अत उत्तरं पठति—**

**( प्रदीपः ) एकाच इति किमयमिति** । निर्देशस्य समानत्वाद्भिन्नार्थत्वाच्च, एकवचननिर्देशाच्च द्वयोर्युगपदाश्रयितुमशक्यत्वात्, 'हलादिः शेषः' इत्यादेर्बहुव्रीहिलिङ्गस्य दर्शनात् 'दीर्घ इणः किति' इति तत्पुरुषलिङ्गोपलम्भात्, स्वरस्य[2] दुरवधारणत्वादेकश्रुत्या वा सूत्रपाठात् स्वरान्निश्चयाभावात्प्रश्नः । बहुव्रीहितत्पुरुषयोर्विग्रहप्रदर्शनं विरुद्धार्थप्रतिपादनार्थम् । न हि संज्ञाभेदमात्राद्दोषः, किन्तु विरुद्धार्थप्रतिपादनात् ॥

**किं चात इति** । द्वयोर्विशेषं पृच्छति ॥

**सिद्धं पपाचेति** । प्रथम[3]त्वाभावेऽपि व्यपदेशिवद्भावात्, वक्ष्यमाणाद्योगविभागाद्वा बहुव्रीहिपक्षे पचेर्द्विर्वचनं सिद्ध्यति न तु तत्पुरुषपक्षे ॥

**( उद्द्योतः ) निर्देशस्य समानत्वादिति**—अनेन सन्देहबीजं साधारणधर्मदर्शनमुक्तम् ॥ ननूभयोरप्याश्रयणमस्त्वत आह—**भिन्नार्थत्वादिति** । न ह्येकशब्देन भिन्नयोरभिधानमुपपद्यत इति भावः ॥ नन्वक्षादिवदेकशेषोऽस्त्वत आह—**एकवचनेति** । सम[4]ाहारे एकशेषस्तु नास्त्येवेति भावः ॥ लिङ्गमप्युभयोरस्तीति न तेनापि निर्णय इत्याह—**हलादिरिति** । एतेन 'निषादस्थपत्यधिकरणन्यायेन तत्पुरुषत्वनिर्णयः' इत्यपास्तम् ॥ **इणः कितीति** । बहुव्रीहिपक्षे इणो द्वित्वासंभवादिति भावः ॥ स्वराद[2]पि न निर्णय इत्याह—**स्वरस्येति** ॥ तत्र हेतुः—**एकश्रुत्या वेति** । एवं च एकश्रुत्या पाठपक्षे स्वरो दुरवधारण इति भावः ॥

'किञ्चातः' इति प्रश्नविषयः प्रश्नोऽनुपपन्नोऽत आह—**द्वयोरितीति** ॥ ननु बहुव्रीह्यर्थैकाच्त्वेऽपि प्रथमत्वाभावात्कथं द्वित्वमत आह—**प्रथमत्वाभावेऽपीति** ॥ **योगविभागः**—'एकाचो द्वे' इत्येवंरूपः ॥

---

जयदेवगुरून्नत्वा षष्ठाध्यायानुवर्तिनाम् ।
भाष्यप्रदीपोद्द्योतानां प्रभां पुष्णाति भार्गवः ॥

१ बहुव्रीहिपक्षे पपाचेत्यादौ एकोऽच् यस्मिन्निति समुदायस्य संभवाद्द्वित्वमुपपद्यते । इयायेत्यादौ च तादृशसमुदायस्यासंभवेन द्वित्वं न प्राप्नुयात् ॥

२ स्वरस्य दुरवधारणत्वादिति । एकाच्पदे बहुव्रीहौ पूर्वपदस्य प्रकृतिस्वरत्वे एकशब्दस्यान्तोदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इति ककाराकार एवोदात्तः, तत्पुरुषपक्षेऽपि अन्तस्योदात्तत्वे स एवोदात्त इति स्वरात् बहुव्रीहितत्पुरुषयोर्निश्चयाभाव इति भावः ॥

३ एकोऽच् यस्मिन्निति बहुव्रीह्याश्रयणे 'पच्' इत्यस्यैकाच्त्वेऽपि तस्य प्रथमत्वाभावेन कथं तत्र द्वित्वप्राप्तिस्तदाह—प्रथमत्वाभावेऽपीत्यादिना ॥

४ ननु समाहारे एकशेषे एकाच्पदादेकवचनमप्युपपद्येत । ततश्च बहुव्रीहितत्पुरुषयोर्निर्देशस्योपपत्तौ न कोऽपि दोष इत्यत आह—समाहारे इति ॥

( ५९४७ एकाचूपदार्थबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः ॥ * ॥**

**( भाष्यम् ) एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशोऽयम् ॥**

**एकवर्णेषु च कथम् ?**

**( प्रदीपः ) बहुव्रीहिनिर्देश इति ।** बहुव्रीहेर्निर्देशः=उच्चारणम्, बहुव्रीहिणा वा[1]ऽर्थस्य निर्देशः=प्रतिपादनमित्यर्थः । व्याप्तिन्यायाश्रयेण बहुव्रीहिराश्रीयते, वक्ष्यमाणव्यपदेशिवद्भावात्तत्पुरुषफलस्य बहुव्रीहिणा कृतत्वात् । अत एव प्रयोजनाभावात् तन्त्रावृत्त्येकशेषाणामन्यतमानाश्रयणम् । लिङ्गमप्यनेकं बहुव्रीहेरस्ति 'हलादिः शेषः', 'शर्पूर्वाः खयः', 'लिट्यभ्यासस्योभयेषाम्' इति । अ[2]ज्मात्रस्य द्विर्वचनेऽभ्यासस्य हलभावाच्छेषसंप्रसारणाद्ययोगात् ॥

**( उद्योतः )** बहुव्रीहिशब्दस्य निर्देशाभावादाह—**बहुव्रीहेरिति ।** बहुव्रीहिपदेन तत्संज्ञकमुच्यते । **निर्देशः**—उच्चारणम्, प्रतिपादनं वेत्यर्थः ॥ ननु स्वपदार्थप्रधानत्वेनान्तरङ्गत्वात्तत्पुरुषो न्याय्योऽत आह—**व्याप्तीति** ॥ व्याप्तिमेव दर्शयति—**वक्ष्यमाणेति** ॥ **तन्त्रावृत्त्येकशेषाणामिति** । सौत्रो विभक्त्यन्तानामेकशेष **इत्यभिमानः** ॥ **अनेकमिति** । तत्पुरुषस्य तु एकमेव लिङ्गं 'दीर्घ इणः' इतीति भावः । वस्तुतो व्यपदेशिवद्भावेन सिद्धत्वात्तस्य लिङ्गत्वमेव नास्ति ॥

( ५९४८ अनुपपत्तिपरिहारकवार्तिकम् ॥ २ ॥ )

**॥*॥ एकवर्णेषु[3] च व्यपदेशिवद्वचनात् ॥*॥**

**( भाष्यम् ) व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम् । एवमेकवर्णेषु द्विर्वचनं भविष्यति ॥**

**( प्रदीपः ) एकवर्णेषु चेति ।** मुख्य एकाज्व्यपदेशो येषामस्ति ते व्यपदेशिनः पचादयस्ते यथा द्विर्वचनं प्रतिपद्यन्ते तथैकवर्णा अपि ॥

( अधिकारत्वनिर्णायकभाष्यम् )

**एकाचो द्वे भवत इत्युच्यते, तत्र न ज्ञायते—कस्यैकाचो द्वे भवत इति ।**

**वक्ष्यति 'लिटि धातोरनभ्यासस्य' (६।१।८) इति, तेन धातोरेकाच इति विज्ञायते ।**

**यदि धातोरेकाच इति, सिद्धम्—पपाच, पपाठ । जजागार, पुपुत्रीयिषति—इति न सिध्यति ।**

**धातोरिति नैषैकाच्समानाधिकरणा षष्ठी—धातोरेकाच इति ।**

**किं तर्हि ?**

**अवयवयोगैषा षष्ठी—धातोर्य एकाजवयव इति ॥**

**अवयवयोगैषा षष्ठी चेत्सिद्धम्—जजागार—पुपुत्रीयिषतीति । पपाच—पपाठेति न सिध्यति ।**

**एषोऽपि व्यपदेशिवद्भावेन धातोरेकाजव[4]यव इति भविष्यति ॥**

**( प्रदीपः ) कस्यैकाच इति ।** विधिं मत्वा विशेषानुपादानात् पृच्छति ॥

**वक्ष्यतीति ।** नायं विधिः, किं तर्हि ? अधिकार इत्यस्वातन्त्र्यादस्योत्तरवाक्येष्वर्थविशेषस्य व्यवस्थानम् ॥ **धातोरेकाच इति**—वैयधिकरण्येन संबन्धोऽभिमतः, धातोरवयवस्यैकाचो द्वे भवत इत्यर्थः ॥

इतरस्तु सामानाधिकरण्येन संबन्धं मत्वाऽऽह—**यदि धातोरिति ॥ नैषेति ।** सर्वानुग्रहाय वैयधिकरण्यमाश्रीयते । तस्मिन्ननेकविषयता[5] लक्षणस्य, प्रथमग्रहणाच्च । सामानाधिकरण्ये च व्यवच्छेद्याभावात्प्रथमग्रहणमनर्थकं स्यात् ॥

**( उद्योतः )** नन्वस्याधिकारत्वात्तत्र त[6]त्र कार्यिनिर्देशोऽस्त्येवेति तत्प्रश्नानुपपत्तिरत आह—**विधिं मत्वेति ।** स्वा[7]र्थत्वे संभवति पारार्थ्यकल्पनं न युक्तमिति भावः ॥ भाष्ये **कस्येत्यस्य**—धातोः, प्रातिपदिकस्य वेत्यर्थः ॥

**नायं विधिरिति ।** विधित्वे हि 'लिटि धातोः—' इत्यादेर्विधेयानिर्देशात्पूर्वेणैव सिद्धत्वाच्च वैयर्थ्यं स्यादतोऽधिकार एवायमिति भावः ॥ **व्यवस्थानमिति ।** 'धातोरेकाचः—' इत्येवमर्थविशेषस्य व्यवस्थितिरित्यर्थः ॥ जजागारेत्यादिसिद्धये आह—**वैयधिकरण्येनेति ॥**

संभवति सामानाधिकरण्ये वैयधिकरण्यस्यायुक्तत्वादाह—**सर्वेति ।** एकाजनेकाज्धात्वनुग्रहायेत्यर्थः, तदेवाह—**तस्मिन्निति ।** 'अनेकविषयता' इत्यनेन व्याप्तिन्यायः सूचितः । यतस्तस्मिन्वैयधिकरण्ये सत्यनेकविषयता लक्षणस्य भवतीत्यक्षरार्थः । 'अनेकविषयत्वाल्लक्षणस्य' इति क्वचित्पाठः, तत्रान्वयश्चिन्त्यः ॥ वैयधिकरण्याश्रये ज्ञापकमप्याह—**प्रथमग्रहणाच्चेति ॥ इति भविष्यतीति** । इति व्यवहारविषयो भविष्यतीत्यर्थः ॥

( प्रथमाक्षेपभाष्यम् )

**एकाचो द्वे प्रथमस्येत्युच्यते तेन यत्रैव प्रथमश्चाप्रथमश्चास्ति तत्र द्विर्वचनं स्यात्—जजागार, पुपुत्रीयिषतीति ।**

**पपाच—पपाठेत्यत्र न स्यात् ॥**

---

१ 'वाऽर्थनिर्देशः' इति झ. पाठः ॥

२ बहुव्रीहिलिङ्गमुपपादयति—अज्मात्रस्येति ॥

३ 'एकवर्णेषु व्यप—' इति चरहितः पाठः 'छ.' पुस्तके ॥

४ 'रेकाजवयवो भवति' इति च. छ. झ. क. दर्शितः पाठः ॥

५ 'विषयत्वाल्लक्षणस्य' इति च. पाठः ॥

६ तत्र तत्र—विधिप्रदेशे, अस्य सूत्रस्याधिकारत्वेनात्र कार्यिनिर्देशाभावेऽपि विधिप्रदेशे कार्यिनिर्देशान्नायं प्रश्नः संभवतीति भावः ॥

७ अस्याधिकारापेक्षया विधित्वकल्पने हेतुमाह—स्वार्थत्व इति ॥

८ तस्मिन्ननेकविषयत्वाल्लक्षणस्य—इत्येवं पाठे तस्मिन्निति सप्तम्या अन्वयो न स्यादिति चिन्त्योऽयं पाठ इति भावः ॥

९ उद्द्योते 'इति भविष्यतीति' इति प्रतीकमुपगृह्य व्याख्यानं प्रामाणिकेष्वपि पुस्तकेषु दृश्यते परंतु तादृशः पाठः केवलं टसंज्ञके एव पुस्तके दृश्यते नान्यत्र । कैय्यटे च नायं ग्रन्थः । उद्द्योते भाष्यस्थप्रतीके गृह्यमाणे प्रथमतो—भाष्ये—इत्युक्त्वाऽन्तरं प्रतीकमुच्यते तथा नात्रेति सुधीभिर्विचारणीयम् ॥

( प्रदीपः ) **यत्रैव प्रथमश्चेति** । प्राथम्यस्य द्वितीया[1]द्यपेक्षत्वात् ॥

**( ५९४९ समाधानवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ प्रथमत्वे च ॥ * ॥**

**( भाष्यम् ) प्रथमत्वे च[2] ।**

**किम् ?**

**व्यपदेशिवद्भावात्सिद्धमित्येव ॥**

**स तर्हि व्यपदेशिवद्भावो वक्तव्यः ।**

**न [3]वक्तव्यः ॥**

**( उद्द्योतः )** भाष्ये—प्रथमत्वे चाप्रथमत्वे च-इत्यस्योक्तमिति शेषः ॥ किमुक्तमिति पृच्छति—**किमिति** ॥ तदाह—**व्यपदेशिवदिति** । 'स तर्हि वक्तव्यः' इति काक्का प्रश्नः ॥

**( ५९५० समाधानसाधकवार्तिकम् ॥ ४ ॥ )**

**॥ * ॥ उक्तं वा ॥ * ॥**

**( भाष्यम् ) किमुक्तम् ?**

***तत्र व्यपदेशिवद्वचनम्* *एकाचो द्वे प्रथमार्थम्* *षत्वे चादेशसंप्रत्ययार्थम्* ।**

**नैष दोषः ।**

***अवचनाल्लोकविज्ञानात्सिद्धम्* इत्येव ॥**

**( प्रदीपः ) अवचनादिति** । वचनरहितं यल्लोकविज्ञानं वचनेनानिबद्धं लोकव्यवहारात्मकम्, तस्मात्सिद्धमित्यर्थः । **तथा हि**—लोके शिलापुत्रकस्य शरीरमिति बहिर्वस्तुभेदेऽसत्यपि भेदस्य व्यवहारोऽवस्थाभेदाश्रयो दृश्यते । शिलापुत्रो विक्रीयमाणत्वाद्यनेकावस्थायुक्तो यो दृष्टस्तस्येदं शरीरमिति परिदृश्यमानावस्था भेदेन निर्दिश्यते । एकमेव हि वस्तु 'तदेवेदम्' इति प्रत्यभिज्ञानादेकत्वम[4]त्यजदप्यवस्थाभेदान्नानारूपमाभाति । [5]यथा 'हन्त्यात्मानमात्मना' इत्येकस्यापि बुद्ध्यवस्थापितावस्थाभेदाश्रयः कर्तृकर्मकरणभावः । इयाय-इत्यत्रापि प्रयोगभेदात्—एति-इतः-यन्ति-आयन्-जिगमिषति-इत्याद्यनन्तरूपस्येण एकोऽयमिकारोऽजिति व्यपदिश्यते ।

**अथ वा**[6]ऽन्वयव्यतिरेकाभ्यां परिकल्पितार्थत्वाच्छब्दार्थसमुदायस्याविवक्षितार्थ एको वर्णोऽजिति व्यपदिश्यते । एवं पचेरनन्तप्रयोगविषयस्य प्रयुज्यमानं लिडादिपरं रूपमवयव इति व्यपदिश्यते । प्रथमव्यपदेशोऽपि प्रयोगभेदादेवेति 'प्रथमगर्भेण हता' इत्यादिलोकव्यवहार एकस्मिन्नपि दृश्यते । असतोऽपि द्वितीयादीन् **बुद्ध्या परिकल्प्य** व्यवहारान्मुख्यसाधर्म्याद्वा ।

प्रसिद्धत्वाच्चैवंविधस्य व्यवहारस्य नास्ति **गौणत्वम्** । सत्यपि वा गौणत्वे 'लिट्यभ्यासस्योभयेषाम्' 'दीर्घ इणः किति' इत्यादेर्ज्ञापकाद्भवति शास्त्रीयकार्यप्रवृत्तिः ॥

**( उद्द्योतः )** 'न वक्तव्यः' इत्येतद्गर्भमुत्तरयति—(भाष्ये) **उक्तं वेति** । 'आद्यन्तवत्-' इति सूत्रे इति शेषः ॥ **षत्वे चादेशेति** । 'आदेशप्रत्यययोः' इति सूत्रे प्रत्ययांशेऽवयवषष्ठीसत्त्वात् 'पक्षत्-वक्षत्' इत्यादौ सकारमात्रस्य प्रत्ययस्य षत्वार्थमित्यर्थः ॥

**वचनेनानिबद्धं**—वचननिबन्धनत्वाभाववत् । लोकव्यवहाराच्छास्त्रेऽपि मुख्यप्रथमादिवत्सिद्धं तत्र कार्यमित्यर्थः ॥ **अवस्थाभेदाश्रय इति** । अवस्थाकृतभेदा[10]श्रय इत्यर्थः ॥ **भेदेनेति** । दृश्यमानावस्था पूर्वावस्थातो भेदेन निर्दिश्यते इत्यर्थः ॥ नन्वेवं भेदे सति प्रत्यभि[11]ज्ञा न स्यादत आह—**एकमेव हीति** । यथा नटादिशरीरमिति भावः ॥ **बुद्ध्यवस्थापितेति** । बुद्धिकल्पितेत्यर्थः । **अवस्था**—अन्तःकरणाद्युपाधिसम्बन्धरूपा, न तु वास्तव आत्मन्यवस्थाभेदोऽस्तीति भावः । वस्तुतः 'शि[12]लापुत्रस्य शरीरम्' इत्यादि वस्तुशून्यं विकल्पात्मकं ज्ञानं, शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः, 'पुरुषस्य चैतन्यम्' इति वत् । प्रकृते एकाच्त्वज्ञानमपि तथैव । 'इणो दीर्घः' इत्यादिज्ञापकाल्लोकनिरूढत्वाद्वा तादृशस्यापि शास्त्रीयकार्यनिमित्तता ।

**'अथ वा'** इत्यादिपक्षश्चिन्त्य इत्याद्यन्तवत्सूत्रे उक्तम्, तद्ध्वनयन्नाह—**एवं पचेरिति** ॥ **प्रयोगभेदादेवेति** । भाविप्रयोगान्तरस्यापेक्षया प्रथमव्यवहार इति भावः ॥ **प्रथमगर्भेणेति** । प्रागसूतायामग्रेऽसोष्यमाणायां चायं व्यवहारः । **गर्भः**=अपत्यम् ॥ **साधर्म्याद्वेति** । अपत्यान्तराभाववत्कालिकापत्यत्वेन सादृश्यम्, तस्माद्वा एकस्मिन्नपि लोके व्यवहारो दृश्यत इत्यन्वयः ॥

नन्वेवं सति गौणत्वादस्य ग्रहणं न स्यादित्यत आह—**प्रसिद्धत्वाच्चेति** । [13]द्वितीये सादृश्यमूलकत्वाद्गौणत्वं दुर्वारमत आह—**सत्यपि वा गौणत्वे इति** ॥

**( ५९५१ समाधानसाधकान्तरवार्तिकम् ॥ ५ ॥ )**

**॥ * ॥ योगविभागो वा ॥ * ॥**

**( भाष्यम् ) अथवा योगविभागः करिष्यते—एकाचो द्वे भवतः ॥**

१ 'द्वितीयापेक्षत्वात्' इति च. पाठः ॥

२ इदानींतनोपलब्धभाष्यपुस्तकेषु 'प्रथमत्वे च' इत्येवं भाष्यपाठो दृश्यते । 'प्रथमत्वे चाप्रथमत्वे चेत्यस्योक्तमिति शेषः' इत्युद्द्योतदर्शनात् 'प्रथमत्वे चाप्रथमत्वे च' इत्येवं पाठोऽनुमीयते ॥

३ 'स तर्हि वक्तव्य इति काक्का प्रश्नः । न वक्तव्य इत्येतद्गर्भमुत्तरयति' इत्युद्द्योतदर्शनात् 'स तर्हि व्यपदेशिवद्भावो वक्तव्यः' इत्युत्तरं 'न वक्तव्यः' इति ग्रन्थ उद्द्योतकारैर्न दृष्ट इति प्रतीयते । इदानींतनोपलब्धेषु सर्वेष्वपि पुस्तकेषु तथा पाठ दर्शनादत्रास्माभिस्थापितः ॥

४ 'एकत्वप्रत्ययः । तदप्यवस्था-' इति च. पाठः ॥

५ 'तथा' इति झ. पाठः ॥

६ प्रदीपे वचनरहितं यल्लोकविज्ञानमित्यादिनोपपादितः पक्ष एव श्रेयान् । अथवा-इत्यादिपक्षस्तु व्यपदेशिवद्भावायोग्यत्वादयुक्त इत्यादि परिभाषेन्दुशेखरे स्पष्टमिति ततोऽवधार्यताम् ॥

७ 'मुख्यप्रथमसाधर्म्याद्वा' इति झ. पाठः ॥

८ पक्षत्-वक्षदिति । पच्वच्धातुभ्यां लेट्, तिप्, इतश्चेति लोपः, लेटोऽडाटौ इत्यडागमः, सिप्, कुत्वम् । अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययावयवः सकार इति षत्वं न स्यादिति षत्वे चादेशसंप्रत्ययार्थं व्यपदेशिवद्भावो वक्तव्य इति वार्तिककृतोक्तम् ॥

९ 'सिद्धं तत्तत्कार्यमित्यर्थः' इति झ. पाठः ॥

१० 'अवस्थाकृतभेदाश्रयेत्यर्थः' इति पाठः ख. ज. पुस्तकयोः ॥

११ 'प्रत्यभिज्ञानं न स्यात्' इति झ. पाठः ।

१२ 'शिलापुत्रकस्य' इति झ. पाठः ॥

१३ द्वितीये-मुख्यसाधर्म्यात्तथाकल्पिते । यत्र तु बुद्ध्या परिकल्प्य व्यवहारस्तत्र प्रसिद्धत्वान्न गौणत्वम् । यत्र च मुख्यसाधर्म्यात्तथा व्यवहारस्तत्र सादृश्यमूलकारोपाद्गौणत्वं स्यादतस्तदुपपादयति—**द्वितीय इत्यादिना** ॥

**किमर्थो योगविभागः?**[1]

( प्रदीपः ) **योगविभागो वेति** । तेन[2] प्राथम्यार्थो व्यपदेशिवद्भावो नाश्रयितव्यः । तत्र हि योगविभागसामर्थ्यात् 'लिटि धातोरनभ्यासस्य' इत्यादौ 'एकाचः' इति 'प्रथमस्य' इति च वाक्यभेदेन सम्बध्यते, एकवाक्यतायां तस्यैव दोषस्य प्रसङ्गात् । तस्मादेतस्माद्ग्रहणकवाक्यात् प्रक्रियावाक्यानि लक्ष्यसंस्कारकाणि उपप्लवन्ते—

धातोरनवयवस्यैकाचो लिटि द्वे भवत इत्येकं वाक्यम् ।

धातोः प्रथमस्यैकाच[3] इति नियमार्थं द्वितीयम् ।

अजादेर्धातोर्द्वितीयस्यैकाच[4] इति तृतीयम् ॥

( उद्योतः ) नन्वधिकारार्थत्वादस्य विभागेऽविभागे वा न विशेषोऽत आह—**तत्र हीति** ॥

वाक्यभेदेन सम्बन्धप्रकारमाह—**तस्मादिति** ॥ **नियमार्थमिति** । प्रथमाप्रथमसद्भावविषये इति भावः ॥

**( ५९५२ साधकान्तरसमर्थकवार्तिकम् ॥ ६ ॥ )**

**॥ * ॥ एकाज्मात्रस्य द्विर्वचनार्थः ॥ * ॥**

( भाष्यम् ) **एकाज्मात्रस्य द्विर्वचनं यथा स्यात् । इयाय, पपाच ।**

**ततः—**

## प्रथमस्य ।

**प्रथमस्यैकाचो**[5] **द्वे भवतः ।**

**इदमिदानीं किमर्थम्?**

**नियमार्थम् । यत्र प्रथमश्चाप्रथमश्चास्ति तत्र प्रथमस्यैकाचो द्विर्वचनं यथा स्यात्, अप्रथमस्य मा भूदिति । जजागार-पुपुत्रीयिषतीति ॥**

( प्रदीपः ) **एकाच इति** । अवयवा अप्येकाचः, समुदायोऽपि व्यपदेशिवद्भावाद्धातोरवयवश्च । ततो विशेषानुपादानात्सर्वेषां द्विर्वचनप्रसङ्गः ॥

**( ५९५३ आक्षेपवार्तिकम् ॥ ७ ॥ )**

**॥ * ॥ एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनं प्राप्नोति । नेनिजतीत्यत्र निज्शब्दोऽप्येकाच्, इज्शब्दोऽप्येकाच्, इकारोऽप्येकाच्, निशब्दोऽपि ।**

**तत्र निज्शब्दस्य द्विर्वचने रूपं सिद्धम्, दोषाश्च न सन्ति**[6] **।**

**इज्शब्दस्य द्विर्वचने रूपं न सिध्यति, दोषा**[7] **अपि न सन्ति ।**

**इकारस्य द्विर्वचने रूपं न सिध्यति, दोषाश्च सन्ति ।**

**निशब्दस्य द्विर्वचने रूपं सिद्धम्, दोषास्तु सन्ति ॥**

**तत्र को दोषः?**

( प्रदीपः ) **निज्शब्दोऽपीति** । यथा येनैव हस्तेन बाहुर्हस्तवानुच्यते तेनैव देवदत्तोऽपि, एवमिकारेण सर्वे एकाज्व्यपदेशभाज इति भावः ॥ **इकारोऽपीति** । व्यपदेशिवद्भावादिति भावः । 'अर्थवता व्यपदेशिवद्भावः' इत्यनाश्रित्य 'इकारोऽपि' इत्युक्तम् । न ह्येतद्वचनम्[8], अपि तु न्यायः । अर्थवतो भेदकल्पनसंभवादनर्थकोऽपि यदि भेदेनाश्रयितुं शक्यते ततस्तत्रापि भवत्येव व्यपदेशिवद्भावः । शक्यते चेकारोऽप्यनेकसमुदायान्तर्भावान्नानारूप इवोपलभ्यमानेन रूपेण—एकाज्—इति व्यपदेष्टुम् ।

नन्वर्थवत्त्वात्समुदायस्यैव द्विर्वचनं भविष्यति, नावयवानामनर्थकानाम् । नैतदस्ति । यत्र विशिष्टं शब्दस्वरूपमुपादीयते तत्रार्थवत्परिभाषोपतिष्ठते । यथा 'शे' इत्यत्र । अन्यथा 'अर्थवदधातुः—'[9] इत्यत्रार्थवद्ग्रहणमनर्थकं स्यात् । **अधातुरप्रत्यय** इति पर्युदासाश्रयणात्तत्सदृशशब्दग्रहणादर्थवत्परिभाषोपस्थानादनर्थकस्य ग्रहणाप्रसङ्गात्, 'धातोरवयवस्यैकाचः' इत्यवयवत्वेनाश्रयणाच्चानर्थकस्याप्यङ्गीकरणान्नास्तीहैतत्परिभाषोपस्थानम् । अत्र च पर्यायेण सर्वेषां द्विर्वचनप्रसङ्गश्चोद्यते, न तु युगपत् । न ह्येकोऽवयवो युगपदनेकस्यावयविनोऽवयवत्वेन शक्योऽपेक्षितुम्, अवयवस्य गुणत्वात्-परार्थत्वात्-एकं प्रति गुणभावादपरं प्रति गुणभावायोगात् । पर्यायेण त्वपेक्षाया अविरोधात्सर्वप्रसङ्ग उच्यते । एकस्य चैकाचो[10] द्विर्वचने कृते एकाज्व्यपदेशहेतोरचोऽपि द्विरुक्तत्वात्तस्मिन्नेव प्रयोगेऽपरस्यैकाचो द्विर्वचनाप्रसङ्गः, प्रवृत्तत्वाल्लक्षणस्य । तस्मात् प्रयोगान्तरे पर्यायेण सर्वेषां द्विर्वचनप्रसङ्गः ॥

**इज्शब्दस्येति** । इकारस्य लघूपधगुणे सति 'अभ्यासस्यासवर्णे' इति इकारस्य इयङि 'नियेज' इति रूपं स्यात् । इकारस्यापि द्विर्वचन एतदेव रूपम् ॥ **दोषा अपि न सन्तीति** । रूपासिद्धेरन्यस्य जुस्भावाद्यसिद्धिदोषस्याप्रसङ्गात् ॥

---

१ 'किमर्थं योग-' इति च. पाठः ॥

२ तेन—योगविभागाश्रयणेन । योगविभागसामर्थ्याच्च नैतेषामेकवाक्यता । एकवाक्यत्वे च पूर्वोक्ता दोषाः प्रसज्येरन् ॥

३ 'प्रथमस्यैवैकाच' इति झ. पाठः ॥

४ एकाच इति । अजादेर्द्वितीयस्येत्यनेनैकाच इति पदस्यैकवाक्यतया तृतीयं वाक्यं संपद्यते । अत्र द्वितीयस्येति पदग्रहणात् प्रथमस्येति न संबध्यते ॥

५ 'प्रथमस्यैवैकाचो' इति च पाठः ॥

६ 'दोषाश्च न' इति झ. पाठः ॥

७ 'स्तु भवन्ति' इति च. पाठः ॥

८ ननु 'अर्थवता व्यपदेशिवद्भावः' इत्यस्य प्रामाणिकवचनत्वे कथं तदनाश्रित्य वक्तुं शक्यमत आह—न ह्येतदिति ॥

९ 'र्थवद्ग्रहणपरि-' इति झ. पाठः ॥

१० 'एकस्यैवैकाचो' इति झ. च. पाठः ॥

( उद्योतः ) नन्वेक इकारः कथं सर्वेषामवयवः स्यादित्याशङ्क्य दृष्टान्तेनोपपादयति—यथेति ॥ इत्यनाश्रित्येति । असहाये एव व्यपदेशिवद्भाव इत्यनाश्रित्येत्यपि बोध्यम्, आद्यन्तवत्सूत्रे 'व्यपदेशिवदेकस्मिन्' इत्युक्तेः । तस्मात्त्रयाणामापत्तावेव तात्पर्यम् । पूर्वपक्षत्वात्तु भगवता न क्षोदः कृतः । वक्ष्यमाणेन सर्वसमाधानाच्चेति दिक् ॥ **अर्थवत इति** । अर्थस्य त्यागोपादानाभ्यां भेदकल्पनायाः सुकरत्वादित्यर्थः । सति संभवेऽर्थवत्त्वकृतभेदेन भेदः, असति तु प्रकारान्तरेणापीति तद्भावः ॥

**अन्यथेति** । ज्ञापकमिदं च्चिन्त्यम्, पर्युदासेनैवार्थवत्त्वलाभे परिभाषाऽनुपयोगात्, अर्थवद्ग्रहणस्य विशिष्टार्थग्रहणायावश्यकत्वाच्चेत्याहुः ॥

अर्थवत्परिभाषाऽनाश्रयणे हेत्वन्तरमाह—**धातोरवयवस्येति** । अर्थवत्त्वाद्धातोस्तदवयव इत्युक्तेऽवयवोऽनर्थक एव प्रतीयत इति भावः । अत एव जजागारेत्यादौ जाग्–इत्यस्य द्वित्वं भवति ॥ ननु सर्वेषां द्वित्वमेकत्रैव प्रयोगे युगपच्चोद्यते, उत प्रयोगभेदात्पर्यायेण? तत्राद्यः पक्षो नोपपद्यते, प्रमित्यनुष्ठानयोरसंभवात्–इत्याह—**अत्र चेति** ॥ तत्र प्रमितेस्तावद्युगपदसम्भवमाह—**नह्येक इति** ॥ **शक्योऽपेक्षितुमिति** । प्रमातुमित्यर्थः । एकस्य तद्वैशिष्ट्येन प्रमाकालेऽपरस्य तद्वैशिष्ट्येन प्रमाया असम्भवादिति भावः । तदाह—**अवयवस्येत्यादिना** ॥ युगपदनुष्ठानासम्भवादपि पर्यायप्रसङ्ग इत्याह—**एकस्य चेति** ॥ लक्ष्यभेदात्पुनः प्रवृत्तिभ्रमं वारयति—**अचोऽपि द्विरुक्तत्वादिति** । एवञ्च तदंशमादाय 'लक्ष्ये लक्षणस्य' इति न्यायप्रवृत्तिरिति भावः । तदाह—**प्रवृत्तत्वाल्लक्षणस्येति** । अनभ्यासस्येति निषेधाच्चेत्यपि बोध्यम् । वाचः क्रमवृत्तित्वाच्च युगपदनुष्ठानाभाव इत्यपि बोध्यम् ॥

ननु रूपासिद्धेर्दोषस्य सत्त्वात् **'दोषा न सन्ति'** इत्ययुक्तमत आह—**रूपासिद्धेरिति** ॥

( ५९५४ आक्षेपसमर्थकवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ तत्र जुस्भाववचनम् ॥ * ॥

**( भाष्यम् ) तत्र जुस्भावो वक्तव्यः । अनेनिजुः, पर्यवेविषुः । अभ्यस्तात् झेर्जुस्भावो भवतीति जुस्भावो न प्राप्नोति, जकारेण व्यवधानात् ॥**

( ५९५५ आक्षेपसमर्थकवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ स्वरश्च ॥ * ॥

**( भाष्यम् ) स्वरश्च न सिध्यति । नेनिजति–यत्परिवेविषतीति । अभ्यस्तानामादिरुदात्तो भवत्यजादौ[1] लसार्वधातुक इत्येष स्वरो न प्राप्नोति ॥**

( प्रदीपः ) **स्वर इति** । स्वरविधौ व्यञ्जनस्याविद्यमानत्वात् स्वरसिद्धिरिति चेत्, **न**; 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इत्येव व्यवस्थापनात् ॥

( उद्योतः ) **हल्स्वरप्राप्ताविति—ने[2]** । विधेयस्वरविषये एतदेवेति भावः । एतेन–'स्वरोद्देश्यके विधौ व्यञ्जनस्याविद्यमानत्वाय [3]तदावश्यकम् । अत एव शौकम्–वाकमित्यादावनुदात्तादेरञ्सिद्धः । एवं च '**इत्येव व्यवस्थापनात्**' इत्ययुक्तम्' इत्यपास्तम् । अत्र च जकारादेर्हलः स्वरप्राप्त्यभावाद्विद्यमानत्वमेवेति तेन व्यवधानात्स्वरासिद्धिरिति बोध्यम् ॥

( ५९५६ आक्षेपसमर्थकवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ अड्भावश्च ॥ * ॥

**( भाष्यम् ) अड्भावश्च न सिध्यति । नेनिजति, परिवेविषतीति । 'अदभ्यस्तात्' ( ७।१।४ ) इत्यड्भावो न प्राप्नोति ॥**

( प्रदीपः ) **यत्परिवेविषतीति** । यच्छब्दप्रयोगः 'निपातैर्यद्यदि–' इति निघातप्रतिषेधार्थः ॥

( ५९५७ आक्षेपसमर्थकवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ नुम्प्रतिषेधश्च ॥ * ॥

**( भाष्यम् ) नुम्प्रतिषेधश्च न सिद्ध्यति । नेनिजत्, परिवेविषत् । 'नाभ्यस्ताच्छतुः' ( ७।१।७८ ) इति नुम्प्रतिषेधो न प्राप्नोति, जकारेण व्यवधानात् ॥**

( ५९५८ समर्थकवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ शास्त्रहानिश्च ॥ * ॥

**( भाष्यम् ) शास्त्रहानिश्च भवति । समुदायैकाचः शास्त्रं हीयते ॥**

( प्रदीपः ) **शास्त्रहानिश्चेति** । एकस्मिन्नेकाच्यवयवे द्विरुच्यमाने पूर्वोक्तेन न्यायेनान्येषां तस्मिन्नेव प्रयोगे द्विर्वचनाभावात्तद्विषयं[4] शास्त्रं त्यक्तं स्यात् ॥

---

१ 'भवतीत्यजादौ' इति च. पाठः ॥

२ हल्स्वरप्राप्ताविति–नेति । नेनिजति–इत्यत्र निशब्दस्य द्वित्वेऽभ्यस्तत्वं 'निने'शब्दस्य, तस्य च अजादिलसार्वधातुकपरत्वं नास्ति, जकारेण व्यवधानात् । तथा च नेनिजति–यत्परिवेविषतीत्यत्र स्वरो न प्राप्नोतीति भाष्याशयः । ननु 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यनया परिभाषया जकारादिव्यवधानं नेति चेन्न । तस्याः परिभाषाया स्वरत्वव्याप्यधर्मघटितधर्मनिमित्तताके विधावेव प्रवर्तनेन नात्र प्रवृत्तिः शक्या कल्पयितुम् । 'अभ्यस्तानामादिः' इत्यस्य च स्वरत्वव्याप्यधर्मघटितधर्मनिमित्तत्वाभावात् । सा च परिभाषा 'अनुदात्तादेरञ्' इत्याद्यञ्विधावेव प्रवर्तते, तस्य स्वरोद्देश्यकविधित्वात् । इयञ्च न स्वरविषये प्रवर्तते । स्वरविधौ च 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इत्येन व्यवस्थापितमिति 'नेनिजति' इत्यादौ स्वरो न सिद्ध्यतीति भाष्यमुपपद्यत इति प्रदीपाशयः । ननु 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इत्येव व्यवस्थापनादिति कैय्यटग्रन्थेन 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यस्या अभाव एव प्रतीयेत–इत्यत उद्द्योते प्रदीपाशयमाह–हल्स्वरप्राप्ताविति–नेति । हल्स्वरप्राप्ताविति वचनेनात्र जकारस्यात्राविद्यमानत्वं नेति भावः । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यस्य सत्त्वेऽपि विधेयस्वरविषये एतदेव प्रवर्तते, स्वरविधावित्यस्य स्वरोद्देश्यक एव प्रवर्तनादिति तात्पर्यम् । एवं च प्राचीनोक्तं खण्डनमकिञ्चित्करमित्युद्द्योताशयः ॥

३ तत्–स्वरविधौ व्यञ्जनमविद्यमानवदित्येतत् ॥

४ 'तद्विषयशास्त्रं' इति क. पाठः ॥

( उद्योतः ) पूर्वोक्तेनेति । 'लक्ष्ये लक्षणस्य' इति न्यायेन 'अनभ्यासस्य' इति निषेधेन चेत्यर्थः ॥ अन्येषामिति । अवयवान्तराणामित्यर्थः ॥ तदुक्तं भाष्ये—समुदायैकाच इति । समुदायरूप एकाच्–समुदायैकाच्, तस्य शास्त्रं–तद्विषयं शास्त्रमित्यर्थः । धातोः प्रथमैकाच्त्वावच्छेदेनाऽसति बाधके शास्त्रव्यापारादिति भावः ॥

( ५९५९ आक्षेपबारकवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ सिद्धं तु तत्समुदायैकाच्त्वात् शास्त्राहानेः ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**तत्समुदायैकाच्त्वात् ।**

**किमिदं तत्समुदायैकाच्त्वादिति ?**

**तस्य समुदायस्तत्समुदायः । एकाज्भाव एकाच्त्वम् । तत्समुदायस्यैकाच्त्वं तत्समुदायैकाच्त्वम्, तत्समुदायैकाच्त्वात् । तत्समुदायैकाचो द्विर्वचनं भविष्यति ॥**

**कुत एतत् ?**

**शास्त्राहानेः, एवं हि शास्त्रमहीनं भवति ॥**

**ननु च समुदायैकाचोऽपि द्विर्वचने क्रियमाणेऽवयवैकाचः शास्त्रं हीयते ।**

**न हीयते ।**

**किं कारणम् ?**

**अवयवात्मकत्वात्समुदायस्य । अवयवात्मकः समुदायः । अभ्यन्तरो हि समुदायेऽवयवः । तद्यथा—वृक्षः प्रचलन्[2] सहावयवैः प्रचलति ॥**

( प्रदीपः ) **सिद्धं त्विति** । समुदाये द्विरुच्यमानेऽवयवानामपि तत्रान्तर्भावाद् द्विर्वचनसंबन्धाच्च कस्मिंश्चिच्छास्त्र[3]हानमित्यर्थः ॥

**नन्विति** । शास्त्रेण साक्षात्समुदाय एवानुगृहीतः स्यात्, न त्ववयवा इति **प्रश्नः** ॥

**न हीयत इति** । यद्यपि स[4]मुदाये द्विरुच्यमाने साक्षादवयवेषु शास्त्रं न प्रवृत्तं तथापि शास्त्रीयफलसंपत्त्या शास्त्राहानिरुच्यते । अवयवे तु द्विरुच्यमाने तस्मिन् प्रयोगेऽवयवान्तराणां समुदायस्य च शास्त्रीयफलसंबन्धाभावाद्धीनमेव शास्त्रं स्यात् ॥

( उद्योतः ) भाष्ये—तस्य समुदाय इति—जातावेकवचनं, तेषां समुदाय इत्यर्थः । तत्समुदायैकाच्त्वात्–इति–ल्यब्लोपे पञ्चमी । तेषां[5] समुदायस्यैकाच्त्वमाश्रित्य द्वित्वप्रवृत्त्या सिद्धमित्यर्थः ॥

ननु समुदायद्वित्वेऽपि अवयवानामप्येकाच्त्वात्कथं न शास्त्रहानिरत आह—**समुदाये इति** । यथा सकृदनुष्ठितप्रयाजादिना शेषित्रयोपकारात्फलाभावात्पृथगननुष्ठानम्, एवं स[6]मुदाये द्विरुक्तेऽवयवानां तत्फललाभात्पृथगननुष्ठानमिति भावः । एतदेव स्पष्टयितुं भाष्ये चोद्यसमाधाने–इत्याह—**शास्त्रेणेति** ॥

**यद्यपीति** । 'अवयवे अद्विरुच्यमाने' इति च्छेदः । 'समुदाये द्विरुच्यमाने' इति पाठः क्वचित् ॥

( ५९६० आक्षेपवार्तिकम् ॥ १४ ॥ )

**॥ * ॥ तत्र बहुव्रीहिनिर्देशे अनच्कस्य द्विर्वचनमन्यपदार्थत्वात् ॥ * ॥**

( भाष्यम् ) **तत्र बहुव्रीहिनिर्देशेऽनच्कस्य द्विर्वचनं प्राप्नोति । आटतुः, आटुः[7] ।**

**किं कारणम् ?**

**अन्यपदार्थत्वाद् बहुव्रीहेः । अन्यपदार्थे बहुव्रीहिर्वर्तते, तेन यदन्यदचस्तस्य द्विर्वचनं स्यात् ।**

**तद्यथा–चित्रगुरानीयतामित्युक्ते यस्यता गावः सन्ति स आनीयते, न गावः ॥**

( प्रदीपः ) **अनच्कस्येति** । एकस्य वाऽनेकस्य वा हल एव द्विर्वचनप्रसङ्गः ॥ **तद्यथेति** ॥ चित्रगुशब्दस्यान्यपदार्थ एव वाच्यो न तु वर्तिपदार्थ इति न तस्य कार्येण सम्बन्धः ॥

( उद्योतः ) णलि टँकारस्य द्वित्वे व्यपदेशिवद्भावेनादित्वेऽपि मुख्यादित्वाभावाद्धलादिशेषेणाभ्यासटकारनिवृत्तौ 'अत उपधायाः' इति वृद्धावाटेत्यस्य सिद्धेर्भाष्ये–आटतुरित्याद्युक्तम्, तच्च प[8]पाचेत्यस्याप्युपलक्षणमित्याह—**अनेकस्य वेति** । अतद्गुणसंविज्ञानो बहुव्रीहिरिति भावः ॥

( ५९६१ समाधानवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ सिद्धं तु तद्गुणसंविज्ञानात्पाणिनेर्यथा लोके ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**तद्गुणसंविज्ञानाद्भगवतः पाणिनेराचार्यस्य, यथा लोके । तद्यथा—लोके शुक्लवाससमानाय लोहितोष्णीषा ऋत्विंजः[9] प्रचरन्तीति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति । एवमिहापि ॥**

---

१ 'तत्समुदायस्यैकाच्त्वादिति' इति च. झ. पाठः ॥

२ 'प्रचलन् सन् सहा–' इति च. पाठः ॥

३ 'कास्मिंश्चिच्छास्त्रं हीनमि–' इति झ. पाठः ॥

४ अत्र 'यद्यपि समुदाये द्विरुच्यमाने' इत्येवं पाठेऽपि 'अवयवेऽद्विरुच्यमाने' इति पाठ उद्द्योतदर्शनादवगम्यते ॥

५ ल्यब्लोपमेव प्रदर्शयति—तेषामिति ॥

६ 'समुदायेऽपि' इति झ. पाठः ॥

७ भाष्ये 'आट' इत्येतदनुक्त्वा 'आटतुः आटुः' इत्युक्तौ बीजमाह—णलि टकारस्य द्वित्व इति ॥

८ पपाचेत्यस्यापीति । एकाच्पदेऽतद्गुणसंविज्ञानबहुव्रीहौ 'आट–आटतुः' इत्यादौ यथा हल्भागस्य द्वित्वप्राप्तिस्तथा पपाचेत्यादावपि हल्भागस्याज्रहितस्य द्वित्वप्राप्तिरिति दोषः स्यादिति भावः । आटतुरित्यादावेकस्यैव हलः संभवः, पपाचेत्यादावनेकस्यापि हलः संभवोऽस्ति ॥

९ 'ऋत्विजः' इत्येतस्य छ. पुस्तके न पाठः ॥

( प्रदीपः ) **सिद्धं त्विति**। **तस्य**–अन्यपदार्थस्य **गुणः**–विशेषणं तस्य **संविज्ञानं, स** वर्तिपदार्थो **गुणो** वा यस्यान्यस्य पदार्थस्य तस्य **संविज्ञानम्**। संनिहितविशेषणस्यान्यपदार्थस्य विशिष्टसंबन्धाश्रयेण केनचिद्बहुव्रीहिणाऽभिधानादित्यर्थः ॥

**शुक्लवासससमिति** । अत्र सत्यपि स्वस्वामिभावे वासः संयोगाश्रयो बहुव्रीहिरिति शुक्लवासःसंयुक्तपुरुषानयने पृथगचोदितान्यपि वासांसि सामर्थ्यादानयनेन संबध्यन्ते । इह तु यः शुक्लवासा दृष्टस्तमानयेति दर्शनक्रियायां वासांस्युपलक्षणत्वेनोपात्तानि, तया च तानि युक्तान्येव । दर्शनक्रिया त्वानयनक्रियोपलक्षणत्वेन निर्दिष्टेति नावश्यं तत्र शुक्लानां वाससां संविज्ञानम् । चित्रगुशब्दस्तु स्वस्वामिभावविशिष्टमन्यपदार्थमाहेति नास्यानयने वर्तिपदार्थसंनिधानम् । इह तु एकोऽच् यस्य स एकाजिति विशिष्टावयवोपलक्षितस्यावयविनोऽन्यपदार्थत्वादपरित्यागेनावयविनोऽभावात्तस्य कार्यं विधीयमानं तत्रान्तर्भावात्संनिहितोऽवयव उपलक्षणभावेनाप्युपादीयमानः प्रतिपद्यते ॥

( उद्योतः ) **तस्य संविज्ञानमिति** । आनयनाद्यन्वयित्वेन ज्ञानमित्यर्थः ॥ **गुणो वेति**–वाशब्दः संविज्ञानेत्युत्तरं बोध्यः। **सन्निहितविशेषणस्येति** बहुव्रीहिः ॥ **विशिष्टसम्बन्धाश्रयेणेति** । संयोगसमवायान्यतरसम्बन्धाश्रयेणेत्यर्थः । तदन्यतरसम्बन्धसम्बन्ध्यन्यपदार्थकेन केनचिद्बहुव्रीहिणेति फलितम् । 'विशिष्टसम्बन्धाश्रयणे' इति पाठः क्वचित् ॥

'अत्र सत्यपि स्वस्वामिभावे' इति पाठः । सत्येवेति तदर्थः ॥ **वासःसंयोगाश्रय इति** । भूमादयो मतोरिव बहुव्रीहेरपि विषया इति भावः । 'असत्यपि' इति पाठस्तु मतुप्सूत्रस्थभाष्यस्वग्रन्थविरुद्धः । यद्वा तत्र पाठे 'वासःसंयोगाश्रय' इत्यस्य वासःसंयोगमूलक आधाराधेयभावे सप्तम्यर्थे बहुव्रीहिरित्यर्थः ॥ **केनचिद्बहुव्रीहिणे**त्युक्तं, तत्र 'केनचित्' इत्यस्य फलमाह—**इह त्विति** ॥ **उपलक्षणत्वेनेति** । दर्शनक्रियाकर्मोपलक्षणत्वेनेत्यर्थः ॥ **तया**–दर्शनक्रियया । **तानि**–वासांसि । **युक्तानि**–विषयतया संबद्धानीत्यर्थः ॥ **नावश्यं तत्रेति** । वर्तिपदार्थानां दर्शनक्रियायामुपलक्षणत्वाश्रयणादिति भावः ॥ **स्वस्वामिभावविशिष्टमिति** । देशान्तरस्थाभिरपि गोभिस्तत्त्वसंभवादिति भावः । सर्वथाऽतद्गुणसंविज्ञानत्वमेवेति तात्पर्यम् । प्रकृते तु तद्गुणसंविज्ञानत्वमेवेत्याह—**इह त्विति** ॥ **उपलक्षणभावेनापीति** । य एकाज् दृष्टस्तस्य द्वित्वमित्येवमुक्तावपीति भावः । तत्रापि तद्गुणत्वमेव किं पुनरत्र–इति तात्पर्यम् ॥

( स्थाने द्विर्वचनपक्षोपपादकभाष्यम् )

**अथ यस्य द्विर्वचनमारभ्यते किं तस्य स्थाने भवति, आहोस्विद् द्विःप्रयोग इति ।**

**कश्चात्र विशेषः?**

( प्रदीपः ) **अथ यस्येति** । सोपस्कारत्वात् सूत्राणां तन्निबन्धनानि लक्ष्यसंस्कारकाणि वाक्यान्तराण्युपप्लवन्ते । तत्र 'द्वे' इत्येतत् संख्येये वर्तते । तच्च संख्येयं शब्दानामन्वाख्येयत्वेन प्रस्तुतत्वाच्छब्दरूपं वा स्यात्तत्संबन्धि वोच्चारणम् । यदा शब्दरूपं संख्येयं तदा 'एकाचः' इति स्थानेयोगा षष्ठी, 'षष्ठी स्थानेयोगा' इति परिभाषोपस्थानात्, तदा स्थाने **द्विर्वचनमित्येष पक्षो** भवति । यथा–'अस्तेर्भूः' इति ।

यदा तूच्चारणं संख्येयं तदा तस्य क्रियारूपत्वात् क्रियायाः शब्दस्य च स्थान्यादेशभावायोगात् 'एकाचः' इति कर्मणि[6] षष्ठी विज्ञायते उच्चारणशब्दाध्याहारेण, शेषलक्षणा वा । यथा–मातुः स्मरति–इति **द्विःप्रयोगो द्विर्वचनमित्येष पक्षो** भवति । तत्र गुणदोषपरीक्षार्थो विचारः क्रियते ॥

( उद्योतः ) पक्षद्वयोपपत्तिं सूत्राक्षरैर्दर्शयति—**सोपस्कारत्वादिति** । 'द्वे' इत्यस्य सङ्ख्येयानुक्तेस्तस्य सापेक्षत्वादिति भावः ॥ **तन्निबन्धनानि**–तद्घटितानि ॥ **संख्येये इति** । 'आ दशतः सङ्ख्याः सङ्ख्येये' इत्युक्तेरिति भावः ॥

**स्थान्यादेशभावायोगादिति** । असंभवात् 'षष्ठीस्थाने' इत्यस्याप्रवृत्तेरिति भावः । तत्कार्यकारी हि तत्स्थाने भवति । न हि शब्दकार्यं बोधं क्रिया कर्तुमीष्टे इति तस्या आदेशत्वासम्भव इति तात्पर्यम् ॥ ननु कृद्योगाभावात्कथं कर्मणि षष्ठीत्यत आह—**उच्चारणशब्दाध्याहारेणेति** । 'एकाचो द्वे उच्चारणे' इत्येतद्वाक्यैकदेशोऽयमिति भावः । 'शेषलक्षणा वा' इत्यभ्युच्चयः ॥

( ५९६२ स्थाने द्विर्वचनपक्षे आक्षेपवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ स्थाने द्विर्वचने णिलोपवचनं समुदायादेशत्वात् ॥ * ॥**

( भाष्यम् ) **स्थाने द्विर्वचने णिलोपो वक्तव्यः । आटिटत्, आशिशत् ।**

**किं कारणम्?**

**समुदायादेशत्वात् । समुदायस्य समुदाय आदेशः, तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययसमुदायस्य नष्टो णिर्भवतीति 'णेरनिटि' ( ६।४।५१ ) इति णिलोपो न प्राप्नोति ।**

**इदमिह संप्रधार्यम्—द्विर्वचनं क्रियतां णिलोप इति, किमत्र कर्तव्यम्?**

**परत्वाण्णिलोपः ।**

**नित्यं द्विर्वचनम् । कृतेऽपि णिलोपे प्राप्नोत्यकृतेऽपि ।**

**अनित्यं द्विर्वचनम्[7] । अन्यस्य कृते णिलोपे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।**

---

१ 'असत्यपि' इति पाठः च. पुस्तके ॥
२ 'संविज्ञानमित्युत्तरं बोध्यः' इति झ. पाठः ॥
३ 'श्रयेणेत्यर्थः' इति झ. पाठः ॥
४ सर्वथाऽत्रेति । चित्रगुरित्यादौ ॥
५ तत्रापि–उपलक्षणत्वेन दृष्टेऽपि । यत्रोपलक्षणत्वेन दृष्टस्तत्रापि यदि तद्गुणत्वं तदा विशेषणत्वेन दृष्टे तद्गुणत्वं स्यादिति किमु वक्तव्यम् ॥
६ 'कर्मलक्षणा षष्ठी' इति झ. पाठः ॥
७ 'द्विर्वचनमप्यनित्यम्' इति छ. पाठः ॥

**नित्यमेव द्विर्वचनम् ।**

**कथम् ?**

**रूपस्य स्थानिवत्त्वात् ॥**

**( प्रदीपः ) आटिटदिति ।** प्राग्द्विर्वचनं भवति । 'द्विर्वचनं यणयवायावेकादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः' इति । अथ वा कृतेऽपि णिलोपे 'द्विर्वचनेऽचि' इति रूपस्थानिवद्भावात् कृताकृतप्रसङ्गित्वान्नित्यत्वाद् द्विर्वचनम्भवति । तच्चैकस्य टिशब्दस्य शब्दान्तरं समुदायरूपमादेशः, तत्र णेरभावादिकारलोपाप्रसङ्गः । न च स्थानिवद्भावाण्णिग्रहणेनादेशस्य ग्रहणम् । न ह्ययं णेरादेशः । किं तर्हि ? समुदायस्य टिशब्दस्य । यत्र च द्वौ स्थानित्वेन शब्देन निर्दिष्टौ यथा–'एकः पूर्वपरयोः इति, तत्रान्यतरेणादेशस्य व्यपदेशो भवति—खद्वर्श्य इति । इह तु समुदाये निरन्तर्भूतत्वादादेशेन संबध्यते, न तु साक्षादित्यविषयोऽयं स्थानिवद्भावस्य ॥

**अनित्यं द्विर्वचनमिति ।** 'द्विर्वचनेऽचि' इति कार्यस्थानिवद्भावं मन्यते ॥

**( उद्योतः )** नन्वाटिटदित्यत्र परत्वाण्णिलोपे स्थानिवत्त्वाद्द्वित्वमिति न दोषोऽत आह—**प्रागिति ।** त्वदुक्तप्रक्रियायां ह्यभ्यासे इकारश्रवणं न स्यादित्यर्थः । 'द्विर्वचनेऽचि' इत्यस्य कार्यातिदेशत्वादिति भावः ॥ **न च स्थानिवद्भावादिति ।** 'स्थानिवदादेशः–' इत्यनेन । **न ह्ययं णेरिति ।** अयं—द्विर्वचनरूपः । एवं चेकारे णित्वं दुर्लभं । न च ण्यन्ताङ्गान्त्यत्वेनेकारस्य लोपः सुलभः, अलोऽन्त्यपरिभाषया निर्दिश्यमानपरिभाषया च ण्यन्ताङ्गस्य निर्दिश्यमानोऽन्त्यश्च यो णिस्तस्य लोप इत्यर्थादिति भावः ॥

नन्वेवं खद्वर्श्य इत्यादौ रपरत्वं न स्यात्, समुदायादेशत्वेऽपि ऋवर्णादेशत्वाभावादत आह—**यत्र चेति ।** 'स्थानित्वेन' इत्यस्य 'प्रत्येकम्' इत्यादिः ॥

भाष्ये—**संप्रमुग्धत्वादित्यस्य**–विवेकानाकलनादित्यर्थः ॥

ननु 'द्विर्वचनेऽचि' इति रूपस्थानिवद्भावात्कथं शब्दान्तरे प्राप्तिरत आह—**कार्यस्थानिवद्भावमिति ॥** भाष्ये—**रूपस्य स्थानिवत्त्वादिति ।** स्थानिवत्त्वेन रूपस्यातिदेशादित्यर्थः ॥

**( ५९६३ आक्षेपवार्तिकम् ॥ १७ ॥ )**

**॥ * ॥ यच्च सन्यङन्तस्य द्विर्वचने ॥ * ॥**

**( भाष्यम् ) यच्च सन्यङन्तस्य द्विर्वचने चोद्यं तदिहापि चोद्यम्[३] ।**

**किं पुनस्तत् ?**

***सन्यङन्तस्येति चेदशेः सन्यनिटः* दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात्* आत्वृद्ध्योश्चाभ्यस्तविधिप्रतिषेधः *सन्यङाश्रये च समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेश आमिश्रत्वात्* इति ॥**

**( प्रदीपः ) अशेः सन्यनिट** इत्यादि 'सन्यङोः' इत्यत्र व्याख्यास्यते ॥

**( उद्योतः ) व्याख्यास्यत इति ।** चिचीषतीत्यादौ समुदायस्यादेशत्वेन संमोहाद्द्वित्वे कृते सनि परेऽजन्ताङ्गस्य दीर्घो न स्यादित्यादिदोषा अत्रापि बोध्याः । 'अशेः सन्यनिटः' इति दोषस्तु न प्रकृते इति बोध्यम् ॥

**( सिद्धान्तोपपादकभाष्यम् )**

**अस्तु तर्हि द्विःप्रयोगो द्विर्वचनम् ।**

**( ५९६४ सिद्धान्ताक्षेपवार्तिकम् ॥ १८ ॥ )**

**॥ * ॥ द्विःप्रयोग इति चेण्णकारषकारादेशादेरेत्त्ववचनं लिटि ॥ * ॥**

**( भाष्यम् ) द्विःप्रयोग इति चेण्णकारषकारादेशादेरेत्त्वं लिटि वक्तव्यम् । नेमतुः, नेमुः । सेहे, सेहाते, सेहिरे । अनादेशादेरिति प्रतिषेधः प्राप्नोति ।**

**स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशः, तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य[५] नष्टः स आदेशादिर्भवति ॥**

**( प्रदीपः ) नेमतुरिति ।** 'णो नः' इति नत्वे कृते धात्वादेशादिर्भवति । ततो द्विःप्रयोगेऽप्यादेशादित्वं न व्यावर्त्तते । स्थाने द्विर्वचने तु शब्दान्तरत्वादादेशादित्वाभावः । आदेशादिव्यपदेशस्य चात्रालाश्रयत्वात् स्थानिवत्त्वाभावः ॥

**( उद्योतः )** ननु स्थानिवत्त्वादादेशादित्वमत आह—**आदेशादिव्यपदेशस्येति ।** अप्राधान्येनाऽप्यलाश्रयणे स्थानिवत्त्वनिषेधस्तत्र स्थापित इत्यर्थः । अशास्त्रीयत्वाच्चास्य तदभाव इत्यपि बोध्यम् ॥ भाष्ये—**संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्येति ।** प्रकृतिज्ञानस्येत्यर्थः । अत एवाटिटदित्यत्रैव 'संप्रमुग्धत्वात्प्रकृतिप्रत्ययसमुदायस्य' इति अत्र नोक्तम् ॥

**( समाधानभाष्यम् )**

**द्विःप्रयोगेऽपि द्विर्वचने सति न दोषः । वक्ष्यति तत्र लिड्ग्रहणस्य प्रयोजनम्—'लिँटि य आदेशादिस्तदादेर्न' इति ॥**

**( प्रदीपः ) लिटीति ।** सत्वनत्वयोरनैमित्तिकत्वाल्लिण्निमित्तत्वाभावः ॥

---

१ प्रागिति । णिल्लोपात्प्रागित्यर्थः । तत्र हेतुमाह—द्विर्वचनमित्यादि ॥

२ धातोष्टकारो णेरिकारश्च तयोर्द्वयोः स्थाने जाते 'टिटि' शब्दादेशे णेः प्रत्यभिज्ञाभावादिकारलोपप्रसङ्ग इति भावः ॥

३ 'योज्यम्' इति च. पाठः ॥

४ स्थानिवत्त्वादिति । स्थाने द्विर्वचनपक्ष इत्यादिः ॥

५ ननु नेमतुः सेहे इत्यादौ प्रत्ययस्य संप्रमुग्धत्वाभावोऽत आह—प्रकृतिज्ञानस्येत्यर्थ इति । प्रकृतिप्रत्ययस्येतिभाष्ये प्रत्ययपदस्य ज्ञानमर्थः ॥

६ 'अत एकहल्मध्येनादेशादेर्लिटि' ( ६।४।१२० ) इति सूत्रे उक्तमेतत् ॥

( ५९६५ आक्षेपवार्तिकम् ॥ १९ ॥ )

**॥ * ॥ इड्वचनं च यङ्लोपे ॥ * ॥**

**( भाष्यम् ) इट् च[1] यङ्लोपे वक्तव्यः । बेभिदिता, बेभिदितुम् । 'एकाच उपदेशेनुदात्तात्' ( ७।२।१० ) इतीट्प्रतिषेधः प्राप्नोति ।**

**स्थाने पुनर्द्विर्वचने सति समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य[2] नष्टः स भवति य एकाजुपदेशेऽनुदात्तः ॥**

( प्रदीपः ) **बेभिदितेति** । बेभिद्यशब्दात्तृच्, अल्लोपयलोपयोः कृतयोरिट्प्रतिषेधः प्राप्नोति । 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इत्यनाश्रित्य चोद्यप्रतिसमाधाने ॥

( उद्द्योतः ) भाष्ये—**एकाच इति** । बेभिदितेत्यत्र भिदेरेव द्विःप्रयोगादुपदेशे एकाच्त्वाच्च ततः परस्येण्निषेधप्रसङ्ग इत्यर्थः ॥

( समाधानभाष्यम् )

**द्विःप्रयोगे चापि द्विर्वचने न दोषः । एकाज्ग्रहणेनाङ्गं विशेषयिष्यामः—एकाचोऽङ्गादिति ।**

**ननु चैकैकमत्राङ्गम् ।**

**समुदाये या वाक्यपरिसमाप्तिस्तयाऽङ्गसंज्ञा भविष्यति ।**

**कुत एतत् ?**

**शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति ॥**

( प्रदीपः ) **एकाचोऽङ्गादिति** । उपदेशग्रहणेनानुदात्त एव विशेष्यते, न त्वेकाजिति भावः । [3]आवृत्तिसंख्यया चैतद् द्व्यजङ्गं, नैकाच् ॥

**ननु चैकैकमिति** । एकमेव द्विरुच्यत इत्येकस्माद्यः प्रत्ययविधिः सोऽपरस्मादपीति द्वे अङ्गे भवतः, तत्र परं यदेकाजङ्गं तदाश्रय इट्प्रतिषेधः प्राप्नोतीत्यर्थः । आवृत्तिसंख्याश्रया चैकैकमिति वीप्सा ॥

**समुदाय इति** । एकैवाङ्गसंज्ञा समुदायस्य न तु पृथगवयवयोः, समुदायस्य प्राधान्यात् प्रधाने कार्यसंप्रत्ययात् समुदायव्यवहारोऽप्यावृत्तिसंख्याश्रयः ॥

( उद्द्योतः ) (भाष्ये) **एकाचोऽङ्गादिति** । अङ्ग[4]त्वस्य विधानप्रतिबद्धतया 'एकाचो विहितात्' इत्यर्थेन न दोष इत्याशयः । एवं चोपदेशग्रहणमनुदात्तांशे एव सम्बध्यते, न त्वेकाजंशेऽपि, विभित्सतीत्यादौ विहितविशेषणेनैवादोषात् । तदाह—**न त्वेकाजितीति** । भाष्यस्य यथा[5]श्रुतत्वे हि अन्तरङ्गत्वात्सन्नन्ते द्वित्वे कृते 'तावेव सुप्तिङौ' इति वक्ष्यमाणरीत्या समुदायस्यैवाङ्गत्वेन विभित्सतीत्यादावेकाचोऽङ्गात्परत्वाभावेनेडागमस्य दुर्वारत्वेनासङ्गतिः स्पष्टैव । [6]उपदेशग्रहणस्यैकाज्विशेषणत्वे तु बेभिदितेत्यादौ दोषस्तदवस्थ एवेति बोध्यम् ॥ ननु द्विः प्रयोगपक्षे उच्चारणभेदेन शब्दभेदे मानाभावात्कथमनेकाच्त्वमत आह—[7]**आवृत्तिसंख्यया चेति** ॥ भाष्ये—**ननु चैकैकमपीति** । स[8]मुदायोऽवयवश्चेत्यर्थः ॥ **अङ्गमिति** । प्रत्ययवि[9]धानावधिरित्यर्थः । इदमेव ध्वनयितुं सिषेचेत्यत्र वक्ष्यति—'एकैकस्मादप्यत्र सुप्तिङ्विधिः' इति । न त्वेकैकम[10]त्र पदमित्यर्थः । तेन हि एतस्य सर्वस्य तद्रीत्या[11] व्याख्यानमिति ध्वनितम् । तदाह—**एकमेवेति** ॥ **एकस्मात्**—समुदायात् । **अपरस्मात्**—अवयवात् । एवं चोत्तर'भिद्य' इत्यस्याप्यङ्गत्वम्, तस्यापि प्रत्ययविधानावधित्वात् । तत्राल्लोपयलोपयोः कृतयोरेकदेशविकृतन्यायेन 'भिद्' इत्यस्याप्यङ्गत्वम् । एवं चोपदेशेऽनुदात्तादेकदेशविकृतन्यायेन लोकदृष्टान्तमूलकेनैकाचो विहितत्वबुद्धिरपि तृचोऽस्त्येवेति इटः प्रतिषेधः स्यादेवेत्यर्थः ॥

**एकैवाङ्गसंज्ञेति** । अयंभावः—'धातोस्तृज्भवति' इत्यस्य धातुत्वावच्छिन्नात्तृज्भवतीत्यर्थः । तत्र तदवच्छिन्नं यद्यपि द्वयं—समुदायोऽवयवश्च, तथापि प्रधानसन्निधौ प्रधान एव कार्यप्रवृत्तेर्न्याय्यत्वेन प्रधानस्य समुदायस्यैव तद्विधानावधित्वं नावयवस्य । **एवं हि शास्त्रमहीनं भवतीत्यस्य** प्रधानन्यायेन हीनं न भवतीत्यर्थः ।

ननु क्रिया[12]वाचकत्वस्याभ्यासनैरर्थक्योक्त्या समुदाये एव पर्याप्तेर्धातुत्वमपि [13]तत्रैव—इति—अवयवविषयकवाक्यस्य वक्तुमशक्यतया 'समुदाये या वाक्यसमाप्तिः' इत्यसङ्गतं, द्वयोः संभवे ह्येवं वक्तुं योग्यमिति चेत्, न । उत्तरखण्डसाहित्यं विनाऽभ्यासमात्रादर्थ-

१ 'इड्भावश्च' इति च. पाठः ॥

२ प्रत्ययस्येति । अत्रापि पूर्ववत्प्रत्ययपदस्य ज्ञानमर्थः ॥

३ आवृत्तिसंख्यया—द्विःप्रयुक्तगतसंख्ययेत्यर्थः ॥

४ ननु 'एकाज्ग्रहणेनाङ्गं विशेषयिष्यामः—एकाचोऽङ्गात्' इति भाष्यमनुपपन्नम् । अत्राङ्गस्येति पदस्याभावादत आह—अङ्गत्वस्येति । अङ्गत्वस्य विधानेन प्रतिबद्धतयाऽत्र संबन्धाभावादेकाच इति विहितपञ्चमी । अङ्गत्वस्यात्र विधानं नास्तीति विहितपञ्चमीसमाश्रयणेनापीष्टसिद्धिः । भाष्यस्य तथैवाशय इति भावः ॥

५ यथाश्रुतत्वे हीति । यथाश्रुतत्वे हि—अङ्गविशेषणपरत्वे हि ॥ 'एकाचोऽङ्गात्' इति भाष्यस्याङ्गपदाध्याहारेण तदन्वयपरत्वे विभित्सतीत्यादावङ्गस्यैकाच्त्वाभावेन न निषेध इति दोषः प्राप्नुयात् । अत एव एकाचोऽङ्गादिति भाष्यस्य विहितपञ्चमीपरत्वमेवेति सुस्पष्टम् ॥

६ एकाच्पदस्योपदेशग्रहणेनान्वयेऽपि विहितपञ्चमीं विना नेष्टसिद्धिरित्याह—उपदेशेति । विहितपञ्चमीसमाश्रयणे तु एकाचा उपदेशपदान्वयस्य नोपयोग इति तात्पर्यम् ॥

७ आवृत्तिसंख्याश्रया—द्विःप्रयुक्तगतसंख्याश्रयेत्यर्थः ॥

८ समुदाय इति । सिचेर्विधानावधित्वात् समुदायस्य तदनतिरेकादिति तात्पर्यम् ॥

९ प्रत्ययविधानावधिरिति । 'ननु चैकैकमत्राङ्गम्' इति भाष्येऽङ्गपदं प्रत्ययविधानावधेरुपलक्षणं न तु अङ्गसंज्ञकपरम् । अन्यथा सिषेचेत्यादौ द्वित्वे कृते सिषेच्—इत्यस्यैवाङ्गसंज्ञेति 'ननु चैकैकस्मात्सुप्तिङ्विधिः' इति भाष्यमनुपपन्नं स्यादिति भावः ॥

१० 'न त्वेकैकमत्र पदमित्येव' इति ज. पाठः ॥

११ तद्रीत्येति । एकाचो विहितादित्येवमन्वयरीत्येत्यर्थः ॥

१२ क्रियावाचकत्वस्येति । अभ्यासस्योत्तरखण्डस्य च पृथक्पृथगर्थवत्त्वे क्रियावाचकत्वपर्याप्तिः प्रत्येके एवेति धातुत्वपर्याप्तिरपि प्रत्येके एव स्यात् । अभ्यासस्य नैरर्थक्येन च न तथेति भावः ॥

१३ तत्रैवेति । सिच्शब्दस्य द्वित्वे सकारेकारचकारातिरिक्तत्वाभावात्समुदायस्य समुदाये एव धातुत्वम् अभ्यासनैरर्थक्यात्पर्याप्तम् । बोधानावृत्तेस्त्वभ्यासनैरर्थक्यम् । एतेन समुदायस्यापाठात् कथं तत्र धातुत्वमित्यपास्तम् ॥

प्रत्ययाभावेन तस्य नैरर्थक्यम् । उत्तरखण्डस्य तु प्रत्ययाव्यवहितप्राग्वर्तिनः केवलस्याप्यर्थबोधकताया दृष्टत्वेनार्थवत्त्वमेव । [1]पेचतुरित्यादौ तदभावेऽप्युत्तरखण्डमात्रेणार्थबोधाच्च । [2]यातेर्यङन्तात्क्तिचि यातिरित्या[3]दावविशिष्टप्रत्ययादिव तत एवार्थबोध इति न तावताऽभ्यासस्यार्थवत्त्वं शक्यमिति दिक् ॥ **न तु पृथगवयवयोरिति ।** एकोऽवयवशब्दस्तद्घटितसमुदायपरः, तेन पृथक्समुदायावयवयोरित्यर्थः । न त्ववयवयोः पृथक् प्राप्तिरस्ति, अभ्यासस्य नैरर्थक्याद्धातुत्वाभावेन प्रत्ययविधानावधित्वाभावात् । [4]सत्वेऽपि तदादिग्रहणेन समुदायस्यैव प्राप्तिरिति यथाश्रु[5]तासङ्गतिरिति बोध्यम् ॥

( ५९६६ आक्षेपवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ इड्दीर्घप्रतिषेधश्च ॥ * ॥

**( भाष्यम् ) इटो दीर्घत्वस्य च प्रतिषेधो वक्तव्यः । जरीगृहिता, जरीगृहितुम् । 'ग्रहोऽलिटि दीर्घः' (७।२।३७) इति दीर्घत्वं प्राप्नोति । स्थाने पुनर्द्विर्वचने समुदायस्य समुदाय आदेशस्तत्र सम्प्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो ग्रहिः ॥**

**( प्रदीपः ) जरीगृहितेति ।** जरीगृ[6]ह्यशब्दात्तृच् ॥

**( उद्द्योतः ) जरीगृह्यशब्दादिति ।** [7]तत्राल्लोपयलोपयोः कृतयोर्ग्रहेः पर इडिति दीर्घप्रसङ्ग इतिभावः ॥

( समाधानभाष्यम् )

**द्विःप्रयोगे चापि द्विर्वचने न दोषः । ग्रहिणाऽङ्गं विशेषयिष्यामः—ग्रहेरङ्गादिति । ननु चैकैकमप्यत्राङ्गम् । समुदाये या वाक्यपरिसमाप्तिस्तयाऽङ्गसंज्ञा भविष्यति ।**

**कुत एतत् ?**

**शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति ॥**

**(प्रदीपः) ग्रहिणाऽङ्गमिति ।** अत्र तृचो जरीगृह्–इत्यङ्गम्, न तु ग्रहिः । विशेषणसामर्थ्याद्धि यथाश्रुतरूपाङ्गीकरणम् ॥

**( उद्द्योतः )** भाष्ये—**ग्रहिणाऽङ्गमिति ।** [8]उक्तरीत्या ग्रहेरिति विहितविशेषणं, तृचो जरीगृह्–इत्यङ्गं न केवलो ग्रहिः । एकदेशविकृतन्यायेनापि जरीगृह्[9]–इत्यस्यैवाङ्गत्वं न तु ग्रहेरिति भावः ॥ **ननु चैकैकमिति ।** [10]उक्त आशयः ॥

ननु द्विःप्रयोगे जरीगृहिर्ग्रहिरेव, [11]एकदेशविकृतन्यायेन चाङ्गत्वमपीति दोषस्तदवस्थ एवेत्यत आह—**विशेषणसामर्थ्याद्धीति ।** [12]अङ्गस्य विभक्तिविपरिणामेन विशेषणसामर्थ्यादित्यर्थः । अन्यथाऽङ्गनिमित्तावयवस्येट इति षष्ठ्यैव व्याख्यायेतेति भावः । ग्रहेरत्र विषयेऽङ्गत्वाव्यभिचाराच्च ।

[13]**यथाश्रुतेति ।** सूत्रश्रुतानुपूर्वीकग्रहेर्विहितस्येटो दीर्घ इत्यर्थ इति भावः । अत्र तु यङन्तादिड्विहितो न तु ग्रहेरिति तात्पर्यम् । अन्यथा नित्यत्वात्संप्रसारणे 'गृहीतम्' इत्यस्यासिद्धिरिति एतद्भाष्यकैयटयोर्विहितविशेषणत्व एव तात्पर्यम् । एकाचोऽङ्गादितिवदस्यापि भाष्यस्य तथैव व्याख्याया उचितत्वाच्च । **किञ्च** 'असिद्धवत्–'सूत्रस्थभाष्यसंमते 'लावस्थायामडाटौ' इति पक्षेऽग्रहीष्टामित्यादौ दीर्घानापत्तिः । [14]इदमेवाभिप्रेत्य कैयटेन 'यङ्लोपे चोक्तम्' इति 'ग्रहोऽलिटि–'इति सूत्रभाष्यस्थप्रतीकमुपादाय ग्रहेर्विहितस्येत्येवं विहितविशेषणाद्यङ्लोपे दीर्घाभावसिद्धिरिति उक्तम् । **भाष्य[15]कृता** तु अन्यत्रास्य दोषस्य सम्यक् परिहाराभिधानात् अनादरेण तद्वार्तिकं 'तदन्तद्विर्वचनात्' इति विवृतमिति चोक्तम् । अत एव ग्राहितमित्यादौ न दीर्घः । एवं च य[16]ङ्लुगन्ते यदि ग्रहेः प्रयोगोऽस्ति तदा ततः परस्येटो दीर्घो भवत्येव । अत एव स्थाने द्विर्वचनपक्षेण न फलभेदः । तत्पक्षे हि

---

१ केवलस्याप्युत्तरखण्डस्यार्थबोधकत्वं दर्शयति—पेचतुरित्यादाविति ॥

२ ननु केवलस्यापि पूर्वभागस्यार्थवत्वं दृश्यत इति अभ्यासेऽप्यर्थवत्वं स्यात्तदाशङ्कावारणायाह—यातेरित्यादि । क्वचित्पूर्वभागस्यार्थवत्त्वदर्शनेऽपि नाभ्यासस्यार्थवत्त्वं, अभियुक्तव्यवहाराभावादिति भावः ॥

३ 'त्यादावियानित्यादावविशिष्टप्रत्ययादिव तत' इति घ. झ. पाठः । ग. पुस्तके 'प्रत्ययादिवत् तत' इति पाठः ॥

४ सत्वेऽपि–तद्भिन्नत्वाभावात् प्रत्ययविधानावधित्वेऽपि ॥

५ यथाश्रुतासङ्गतिरिति । 'एकाचोऽङ्गात्' इति भाष्यस्य यथाश्रुतत्वेऽसङ्गतिरित्यर्थः ॥

६ जरीगृह्येति । ग्रहधातोर्यङन्तात्तृजित्यर्थः ॥

७ तृचो ग्रहेः परत्वमुपपादयति—तत्रेति ॥

८ उक्तरीत्येति । एकाचोऽङ्गादित्यत्रोक्तरीत्येत्यर्थः ॥

९ जरीगृह्–इत्यस्यैवाङ्गत्वमिति । असहाये एव एकदेशविकृतन्यायस्य प्रवर्तनात् । अत्र च ससहायत्वमिति भावः ॥

१० उक्त आशय इति । एकाचोऽङ्गादिति भाष्यव्याख्यानावसर इति भावः ॥

११ एकदेशविकृतन्यायेनेति । संप्रसारणेऽपि तन्न्यायेन ग्रहित्वमिति भावः ॥

१२ अङ्गस्येति । ग्रहोऽलिटीति सूत्रेऽनुवृत्तस्य षष्ठ्यन्तस्याङ्गस्येति शब्दस्य पञ्चम्या विपरिणामेन ग्रहेर्विशेषणसामर्थ्यादित्यर्थः । वस्तुतस्तु ग्रहेरिटो दीर्घविषयेऽङ्गत्वाव्यभिचारादङ्गस्यान्वयसामर्थ्यादित्यपि वक्तुं शक्यमिति भावः ॥

१३ ननु 'ग्रहेरङ्गात्' इति भाष्यस्य यत्र 'ग्रह' इति रूपमङ्गस्य तत्रैव ग्रहोऽलिटीति सूत्रं प्रवर्तत इत्यर्थस्वीकारे यत्र संप्रसारणं गृहीतमित्यादौ यत्र चाडागमो लावस्थायामेवाग्रहीदित्यादौ चायं दीर्घो न स्यात्तदर्थमाह—यथाश्रुतेतीति । एवं च ग्रहेरङ्गादिति भाष्यस्य विशेषणसामर्थ्याद्धीत्यादिकैयटग्रन्थस्य च ग्रहेरङ्गाद्विहितप्रत्ययावयवस्येटो दीर्घ इत्यत्रैव तात्पर्यम्, न तु सूत्रश्रुतानुपूर्वीकात्परस्येटो दीर्घ इत्यर्थ इति भावः । तथाच गृहीतमित्यत्र ग्रहेरङ्गाद्विहितस्येटः सत्वेन दीर्घस्योपपत्तिः, लावस्थामडागमेऽपि ग्रहेरेव विहितस्य लस्य सत्वेनाग्रहीदित्यत्रापि न दोष इति तात्पर्यम् ॥

१४ विहितविशेषण एव प्रदीपतात्पर्यमित्यत्रार्थेऽन्यसूत्रस्थप्रदीपसंवादं दर्शयति—इदमेवाभिप्रेत्येति ॥

१५ ननु भाष्यकृतामपि यदि विहितविशेषणे तात्पर्यं तदा ग्रहोऽलिटीति सूत्रे भाष्येऽपि तथा व्याख्यानमुचितं तच्च न दृश्यत इत्यत आह—भाष्यकृता त्विति । भाष्यकारैरेकाचो द्वे प्रथमस्येति सूत्रे विहितविशेषणकरणेन निर्दुष्टत्वं स्वीकृत्य तदन्तद्विर्वचनादित्येवोक्तमिति भावः ॥

१६ ननु यङ्लुगन्तात्तृचि 'जरीगृहीता' इत्यत्र स्थाने द्विर्वचनपक्षे दीर्घो दुर्वारः, यङ्लुगन्ते हि यङ्लुगनन्तरमेव द्वित्वप्रवृत्तेः स्थानिवद्भावेन साभ्यासस्य ग्रहित्वं सूपपादम् । एवं च ग्रहेरङ्गात्परत्वसत्वेनेटो दीर्घो भविष्यत्येव । द्विःप्रयोगो द्विर्वचनमिति पक्षे च 'जरीगृह'शब्दात्तृचः सत्वेन ग्रहेः परत्वाभावेन च दीर्घाप्राप्तिरिति फलभेदः स्यात् । तं निवारयति—एवं च यङ्लुगन्त इति । यङ्लुगन्ते हि जरीगृहशब्दात्परस्येटो ग्रहेरपि विहितस्यावयवत्वेन विहितविशेषणपक्ष एव न फलभेदः । परविशेषणत्वे तु द्विःप्रयोगाद्विर्वचनं स्थाने द्विर्वचनमिति पक्षयोश्च फलभेदः स्यादेव । अतोऽपि हेतोर्विहितविशेषणे एव भाष्यतात्पर्यमित्यूह्यम् ॥

तत्र दीर्घः प्राप्नोत्येव, स्थानिवत्त्वेन ग्रहित्वात् । यङ्लुगुत्तरमेव तत्र द्वित्वप्रवृत्तेः, तदुत्तरं प्रत्ययप्रवृत्तेश्च, पूर्वापरभाष्यच्छायया तत्पक्षे ग्रहेरङ्गादित्यस्याभावलाभाच्च । अत[1] एव स्थानेद्विर्वचनपक्षे एतद्दोषानुपन्यासाद्भगवतो न्यूनतेत्यपास्तम् ॥

( ५९६७ दोषवार्तिकम् ॥ २१ ॥ )

## ॥ * ॥ पदादिविधिप्रतिषेधश्च ॥ * ॥

**(भाष्यम्) पदादिलक्षणविधेः प्रतिषेधो वक्तव्यः। सिषेच, सुष्वाप । 'सात्पदाद्योः' (८।३।१११) इति षत्वप्रतिषेधः प्राप्नोति । स्थाने पुनर्द्विर्वचने सति न दोषः । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः स पदादिर्भवति ॥**

( प्रदीपः ) **सिषेचेति** । सिचेर्लिड्विहित इति लिङन्तं[2] पदमिति तदादेरेव पदत्वात्पदादिः सकार इति षत्वप्रतिषेधप्रसङ्गः ॥ **प्रकृतिप्रत्ययस्येति । प्रत्ययः**-ज्ञानम्, प्रकृतिविज्ञानस्येत्यर्थः । **अथ वा** प्रकृतेः प्रत्ययस्य चेत्यर्थः ॥

( उद्द्योतः ) नन्वभ्यासादुत्तरसकारस्य न पदादित्वमत आह—**सिचेरिति** ॥ **तदादेरेवेति** । उत्तरखण्डादेरेवेत्यर्थः ॥ ननु नात्र प्रकृतिप्रत्ययसंमोहः, किन्तु प्रकृतेरेवेत्यत आह—**प्रत्ययो ज्ञानमिति** ॥ **प्रत्ययस्य चेति** । प्रकृतेस्तत्त्वेनाज्ञाने तन्निरूपितत्वात्प्रत्ययत्वाज्ञाने प्रत्ययस्यापि संमोह इत्यर्थः ॥

( समाधानभाष्यम् )

**द्विःप्रयोगे चापि द्विर्वचने न दोषः । सुप्तिङ्भ्यां पदं विशेषयिष्यामः—सुप्तिङन्तं पदम्—यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च । ननु चैकैकस्मादप्यत्र[3] सुप्तिङ्विधिः । समुदाये या वाक्यपरिसमाप्तिस्तया पदसंज्ञा भविष्यति । कुत एतत्?**

**शास्त्राहानेः । एवं हि शास्त्रमहीनं भवति ॥**

**तावेव सुप्तिङौ यौ**
**ततः परौ सैव च प्रकृतिराद्या।**
**आदिग्रहणं च कृतं**
**समुदायपदत्वमेतेन ॥**

( प्रदीपः ) **तावेवेति**-परिहारान्तरम् । उच्चारणक्रियाया एव द्वित्वं न तूच्चार्यमाणस्य शब्दस्य । ततश्चैकस्मादेव प्रत्ययविधिः, न तु द्वाभ्यामित्येकैवाङ्गसंज्ञा पदसंज्ञा चेति नास्ति दोषः ॥ **आदिग्रहणं चेति** । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवति' इत्यत्र ॥ **समुदायपदत्वमिति** । सिषेच[4]शब्दस्य पदसंज्ञा न तु सेच[5]शब्दस्य तदवयवस्य ।

नन्वेवं बेभिदितेति स एवैकाज्[6]धातुरितीट्प्रतिषेधः प्राप्नोति । नैष दोषः । उच्चारण[7]भेदाद्विरोधिसंख्याप्रादुर्भावात् पूर्वसंख्याकृतव्यपदेशनिवर्तनात्। तथा च 'गिरिर्णा[8]' इत्यादौ 'सावेकाचः-' इति विभक्तेरुदात्तत्वं न भवति । तदत्रावृत्तिभेदाद्रूपद्वयमाश्रित्य 'समुदाये वाक्यपरिसमाप्तिः' इति परिहार उक्तः । रूपभेदानङ्गीकरणे[9] तु 'तावेव सुप्तिङौ-' इति द्वितीयः परिहारः ॥

( उद्द्योतः ) भाष्ये—**सुप्तिङ्भ्यां पदमिति** । पदसंज्ञासूत्रे पदं-पदसंज्ञोद्देश्यं—**सुबन्तं तिङन्तं च,** तत् सुप्तिङ्भ्यां यस्मा-

---

१ अत एव-द्विःप्रयोगपक्षेऽपि यङ्लुगन्तात्परस्येटो दीर्घसत्वादेवेत्यर्थः। अन्यथाऽनयोः पक्षयोः फलभेदेन स्थाने द्विर्वचनपक्षे तदनुपन्यासो न्यून एव स्यात् ॥

२ 'तिङन्तं' इति झ. पाठः ॥

३ अत्र कैय्यटः-पदादिविधिप्रतिषेधश्चेति वार्तिकोक्तदोषस्य भाष्यकृता परिहारद्वयमुक्तमित्यभिमन्यते । तद्यथा—द्विःप्रयोगे चापि द्विर्वचन इत्यादि भाष्योक्तमेकम्, तावेव सुप्तिङाविति भाष्यकारिकोक्तं द्वितीयम् । प्रथमस्य चायमर्थः—'लिटि धातोः-' इति सूत्रे 'लिटि' इति विषयसप्तम्याश्रयणे लिड्विवक्षायामेव द्विर्वचने उच्चारणभेदाच्छब्दभेदेऽपि सोऽयमिति प्रत्यभिज्ञानात् 'सिच्-सिच्' इत्यत्र खण्डद्वयस्यापि प्रत्येकं धातुत्वं सूपपादम्। तस्मात्प्रत्यये च विशिष्टस्यैव तिङन्तत्वं न तु प्रत्येकस्य । खण्डद्वयस्यापि धातुत्वप्रत्यभिज्ञायां खण्डद्वयादपि प्रत्ययोत्पत्तिप्राप्तिमाक्षिप्य वारयति भाष्यकारः—ननु चैकस्मादप्यत्रेति । समुदायादेकेनैव प्रत्ययेन कर्त्राद्यर्थबोधस्य सुकरत्वात्तस्मादेक एव प्रत्ययः, न तु प्रत्ययद्वयम् । ननु चैकैकस्मादित्यनेन 'सिच् सिच् लिट्' इति समुदाये 'सिच् लिट्' इति समुदायस्यैव पदसंज्ञास्यान्न तु 'सिच् सिच् लिट्' इत्यस्य-इत्याक्षिप्य समुदाये या-इत्यनेन समाहितम् । एवं च उच्चारणभेदाच्छब्दभेदेऽपि 'सिच् सिच् लिट्' इत्यस्य पदत्वे द्वितीयसिचः पदादित्वाभावेन न सात्पदाद्योरिति निषेध इत्याशयः । भाष्योक्ते एतस्मिन् समाधाने च सिच् सिच् इति खण्डद्वयस्यापि धातुत्वे प्रत्येकाल्लिडुत्पत्तिः प्रसज्येत खण्डद्वयाल्लिड्द्वयमुत्पद्येत वा-इत्यादि दोषमुपलक्ष्य तावेव सुप्तिङाविति द्वितीयसमाधानमुक्तम् । अस्मिंश्च पक्षे 'लिटि' इति परसप्तमीमाश्रित्य उच्चारणभेदाच्छब्दभेदमनाश्रित्य च पूर्वोक्तदोषनिस्तार इति प्रदीपाशयः । उद्द्योतकाराश्च द्विःप्रयोगे चापि द्विर्वचन इति भाष्योक्तार्थ एव तावेव सुप्तिङाविति कारिकयोक्त इति लिटीति परसप्तम्येवेति च प्रतिपादयन्ति । यदि च कैयटाभिप्रायानुसारेण द्विःप्रयोग इत्यादि भाष्यस्यार्थ आश्रीयेत तदा प्रत्येकादपि लिडुत्पत्तिः स्यादिति दोषानुपन्यसनाद्भाष्यकृतां न्यूनता स्यात् । ननूद्द्योताभिप्राये च 'ननु चैकैकस्मादप्यत्र' इति भाष्यशङ्काऽनुपपन्ना, लिटीति परसप्तम्याश्रयणात्पुनः प्रत्ययानापत्तेः-इति चेन्न। ननु चैकैकस्मादिति भाष्यस्य लिटि परे द्विर्वचने जाते यो लिट् स तत्वप्रत्यभिज्ञानादुभयप्रकृतिक इत्येवार्थ इति न दोषः । एवं च कारिकया पूर्वोक्तभाष्यार्थ एव प्रतिपाद्यत इति उद्द्योताशयः । अत्रत्यं तत्त्वं सुधीभिरूहनीयम् ॥

४ 'सिषेच्शब्दस्य' इति झ. पाठः ॥

५ 'सेच्शब्दस्य' इति झ. पाठः ॥

६ स एवैकाजिति । तावेव सुप्तिङौ याविति रीत्या द्विर्वचनेऽपि द्विरुच्चारणमात्रत्वाच्छब्दभेदाभावाद्बिद् इति एकाचः परस्य तृच इण्निषेधप्रसङ्ग इति भावः ॥

७ ननु बेभिदितेत्यत्र यङन्तात्तृचि शब्दभेदाद्यङन्तस्यैव धातुत्वाच्च यङन्तस्यैकाच्त्वाभावाच्च न दोष इति प्रकारान्तरेण संभावयति—उच्चारणभेदादिति ॥

८ गिरिणेति । उच्चारणभेदाद्यदि शब्दो न भिद्येत तदा इकारद्वयस्याप्येकत्वेन 'सावेकाचः-' इति तृतीयादिविभक्त्युदात्तत्वं स्यात्, तच्चोच्चारणभेदाच्छब्दभेदेन न प्राप्नोति । उच्चारणभेदाच्छब्दभेदे एव विरोधिसंख्याप्रादुर्भावो भवतीति 'गिरणा' इत्यत्र द्व्यच्कत्वेन न दोष इति भावः । विरोधिसंख्याप्रादुर्भावविषये दृष्टान्तार्थमिदमुक्तम् ॥

९ 'रूपभेदानङ्गीकरणेन तु' इति झ. पाठः ॥

द्विधिस्तदादित्वेन विशेषयिष्याम इत्यर्थः । तदाह—**सुप्तिङन्तं पदम्-यस्मादित्यादि** ॥

**एकैकस्मादिति** । समुदायादवयवाच्चेत्यर्थः ॥ **समुदाये येति** । लिटीत्यस्य विषयसप्तमीत्वेन पूर्वं द्वित्वे ततः समुदायाल्लिडित्याशयः । समुदायस्य धातुत्वं तु धातोरेव द्विःप्रयोगेण भेदाग्रहादिति बोध्यम् ॥ इत एव वाऽरुचेराह—**तावेवेति** । तदाह—**परिहारान्तरमिति** । न त्वयं पूर्वोक्तार्थसङ्ग्रहश्लोक इति भ्रमः कार्य इति भावः । 'लिङु-त्पत्त्यनन्तरमेव द्वित्वम्' इति पक्षेऽपि दूषणोद्धार इति तात्पर्यम् ।

**पूर्वोक्तार्थोपपादनपरमेवैतद्भाष्यम्** । 'नेनु[1] चैकैकस्मादप्यत्र' इत्यस्योभयोरपि तत्त्वप्रत्यभिज्ञानादुभाभ्यामपि तिङ्विधिरिति प्रत्यभिज्ञे-त्यर्थ इति **परे** ॥ **एकैवेति** । उच्चारणक्रियाद्वयविशिष्टस्येत्यर्थः । उच्चारणभेदेन शब्दभेदाभाव इति भावः ॥ **'एकैवाङ्गसंज्ञा'** इत्यपि प्रकृतविषयमेव[2], वेभिदितेत्यत्र तु कृतद्वित्वाद्यङन्तादुत्पत्त्या नास्य परिहारस्य विषयः ॥

**स एवेति** । 'यलोपाल्लोपयोः कृतयोः' इति शेषः ॥ **उच्चारण-भेदादिति** । उत्तरा सङ्ख्या पूर्वसङ्ख्यां निवर्तयतीति भावः ॥ **तद-त्रेति** । सिषेचेत्यत्र । अयमत्र **भाष्याक्षरार्थः**—यौ ततो विधानावधेः परौ तावेवेमौ सुप्तिङौ यतो विहितौ सा प्रकृतिराद्यैव न द्वितीयेत्यर्थः । 'आगन्तूनामन्ते निवेशः' इति न्यायात्, द्वितीयोच्चारणस्यैव विधेय-त्वात्, द्वितीयस्य प्रत्ययोत्पत्तिकालेऽभावात् । **आद्या**—आद्योच्चारण-विषया । कृते तु द्वित्वे द्वितीयोच्चारणेनार्थबोधादभ्यासस्य नैरर्थक्य-व्यवहारोऽपि ॥ नन्वेवमपि द्वितीयोच्चारणविषयतद्रूपेण व्यवधाना-त्प्रत्ययपरत्वाभाव आद्यस्येत्यत आह—**आदिग्रहणं चेति** ॥ **समु-दायपदत्वमिति** । उच्चारणक्रियाद्वयविषयत्वेन समुदायव्यवहारः ॥

( १०३६ अधिकारसूत्रम् ॥ ६ । १ । १ आ. २ )

## २४३९ अजादेर्द्वितीयस्य ॥ ६ । १ । २ ॥

( ५९९८ द्वितीयस्येति पदाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ द्वितीयस्येत्यवचनमजादेरिति कर्मधारयात्पञ्चमी ॥ * ॥

**( भाष्यम् ) द्वितीयस्येति शक्यमवक्तुम् ।**

**कथम् ?**

**अजादेरिति नैषा बहुव्रीहेः षष्ठी—अजू आदिर्यस्य सोऽयमजादिः—अजादेरिति ।**

**किं तर्हि ?**

**कर्मधारयात्पञ्चमी—अच् आदिः—अजादिः, अजादेः परस्येति । तत्रान्तरेण द्वितीयग्रहणं द्वितीय-स्यैव भविष्यति ॥**

( प्रदीपः ) **द्वितीयस्येति शक्यमवक्तुमिति** । अजा-[3]देरिति बहुव्रीहिपक्षे सामर्थ्यादप्रथमार्थे प्रारम्भे विज्ञायमाने तृतीयानामप्येकाचां द्विर्वचनप्रसङ्गाद् द्वितीयस्येति वक्तव्यम् । कर्मधारयपक्षे त्वजादेरिति पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' इति परिभाषोपस्थानादनन्तरस्यैव कार्येण भाव्यम्, न व्यव-हितस्य-इति नार्थो द्वितीयग्रहणेन । तत्र व्याख्यानात् स्वपदार्थ-प्रधानत्वादन्तरङ्गत्वाद्वा कर्मधारय एवाश्रयितव्य इति भावः ॥

**( उद्योतः )** ननु बहुव्रीहित्वपक्षेऽपि प्रथमस्य पूर्वेण सिद्धतया सामर्थ्येन द्वितीयस्यैव भविष्यतीति तत्रापि द्वितीयग्रहणं व्यर्थम्, अत आह—**अजादेरितीति** ॥

यद्यपि 'ईर्ष्यतेस्तृतीयस्य'इत्यस्य नियमार्थत्वेनापि तृतीयानां द्वित्वं वारयितुं शक्यं तथापि तस्य वार्तिकत्वाददोषः । 'न न्द्राः संयोगा-दयः' इति सूत्रेऽनुवृत्तस्याजादेरित्यस्येन्दिद्रीयिषतीत्यादौ दस्य द्वित्व-निषेधाभावाय पञ्चम्यन्तत्वकर्मधारयपरत्वावश्यकत्वादिति भावः, तदाह—**तत्र व्याख्यानादिति** । 'तत्पुरुषः समानाधिकरण–' इत्यादौ कर्मधारययोग्यपदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वे-ऽपीह व्याख्यानात्कर्मधारय इति भावः ॥ समासद्वयसम्भवे न्याय्यो-ऽप्ययमित्याह—**अन्तरङ्गत्वाद्वेति** । तद्बीजं स्वपदार्थप्रधानत्वम् ॥

( ५९९९ प्रत्याक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ द्वितीयद्विर्वचने[4] प्रथमनिवृत्तिः प्राप्तत्वात् ॥ * ॥

**( भाष्यम् ) द्वितीयद्विर्वचने प्रथमस्य निवृत्ति-र्वक्तव्या । अटिटिषति, अशिशिषतीति ।**

**किं कारणम् ?**

**प्राप्तत्वात् । प्राप्नोति 'एकाचो द्वे प्रथमस्य' ( ६।१।१ ) इति ॥**

**ननु च द्वितीयद्विर्वचनं प्रथमद्विर्वचनं बाधिष्यते ।**

**कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ?**

**असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात् ॥**

( प्रदीपः ) **प्राप्तत्वादिति** । यद्यपि सत्यामेव प्राप्तौ निवृत्तिरुच्यते न त्वसत्याम्, तथापि विशिष्टा[5] प्राप्तिरिह हेतुत्वेन विवक्षिता, प्राप्तेर्विघातकाभावादित्यर्थः ॥

**ननु चेति** । येन नाप्राप्तिन्यायात् ॥ **कथमन्यस्येति** । विरोधाद्बाध्यबाधकभावं मन्यते, यथा—काणोः । इह च विरोधाभावः । अविरोधे हि समुच्चयो दृश्यते, यथा—कृत्-कृत्यप्रत्ययसंज्ञानाम् । भिन्नफलत्वात् संज्ञानां समुच्चय इति चेत्, इहाप्यस्त्येव फलभेदः–एकेन प्रथमस्य द्विर्वचनविधानात् 'अजादेर्द्वितीयस्य' इत्यनेन तु द्वितीयस्य ॥

---

१ ननूच्चारणभेदाच्छब्दभेदमाश्रित्य 'द्विःप्रयोगे चापि–' इत्यादि समा-धानमिति कैय्यटपक्षे ननु चैकैकस्मादित्यादिग्रन्थो यथाश्रुतः सङ्गच्छते । तावेव सुप्तिङावित्यादिपूर्वस्यैवायं प्रपञ्च इति शेखरकृन्मते द्वित्वेऽपि शब्दभेदाभावेन 'ननु चैकैकस्मात्–' इति कथमुपपद्येत तदाह—ननु चैकैकस्मादित्यत्रे-त्यस्येति ॥

२ **प्रकृतविषयमेवेति** । एकैवाङ्गसंज्ञा पदसंज्ञा चेत्यादि सिषेचेत्येतद्विषय-मेव, वेभिदितेत्यत्र यङन्तस्याङ्गत्वेन प्रत्ययोपदेशेऽङ्गस्यैकाच्त्वाभावादिति भावः ॥

३ 'द्वितीयस्येति शक्यमवक्तुम्' इति भाष्यग्रन्थमुपपादयति—अजा-देरित्यादिना ॥

४ 'तत्र द्वितीय–' इति ट. क. पाठः ॥

५ क्वचित्-झ. पुस्तकादौ 'विशिष्टाऽप्राप्ति' इति पाठो दृश्यते, स लेखक-प्रमादः ॥

(उद्द्योतः) यद्यपीति । एवं च प्राप्तत्वादिति हेतुरसङ्गत इति भावः ॥ विशिष्टेति । निवर्तकान्तराभावविशिष्टेत्यर्थः ॥

यथा काणोरिति । परदेशस्यैकेनाक्रान्तत्वात्तदैव द्वितीयस्य परत्वायोगात्तत्र विरोध इति भावः ॥ भिन्नफलत्वादिति । समानफलकत्वे हि बाध्यबाधकभाव इत्यर्थः ॥

( ५९७० प्रत्याक्षेपसमाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ न वा प्रथम[1]विज्ञाने हि द्वितीयाप्राप्तिरद्वितीयत्वात् ॥ * ॥

(भाष्यम्) न वा वक्तव्यम् ।

किं कारणम् ?

प्रथमविज्ञाने हि सति द्वितीयस्याप्राप्तिः स्यात् ।

किं कारणम् ?

अद्वितीयत्वात् । न हीदानीं प्रथमद्विर्वचने कृते द्वितीयो द्वितीयो भवति ।

कस्तर्हि ?

तृतीयः । तद्यथा—द्वयोरासीनयोस्तृतीय उप[2]जायमाने न द्वितीयो भवति ।

कस्तर्हि ?

तृतीयः ॥

न[3] हि किंचिदुच्यते—अकृते द्विर्वचने यो द्वितीयस्तस्य भवितव्यमिति ।

किं तर्हि ?

कृते द्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं भविष्यति ॥

अनार[4]म्भसममेवं स्यात् । अटेः प्रथमस्य द्विर्वचनं स्यात्, हलादिःशेषः; द्वितीयस्य द्विर्वचनम्, हलादिः शेषः । त्रयाणामकाराणां पररूपत्वे—अटिषतीत्येवं रूपं स्यात् ॥

नानारम्भसमम् । अटेः प्रथमस्य द्विर्वचनम्, हलादिःशेषः, इत्वम्, द्वितीयस्य द्विर्वचनम्, हलादिःशेषः, इत्वम्, द्वयोरिकारयोः सवर्णदीर्घत्वम्, 'अभ्यासस्यासवर्णे' (६।४।७८) इतीयङादेशः, इयटिषतीत्येतद्रूपं यथा स्यात्, ओणेश्चोवोणिषतीति ॥

नानिष्टार्था शास्त्रप्रवृत्तिर्भवितुमर्हति ॥

(प्रदीपः) न वेति । अनेनासंभवः प्रदर्श्यते । यस्य द्वितीयस्यैकाचो द्विर्वचनं विधेयन्तस्य प्रथमद्विर्वचने कृतेऽद्वितीयत्वात् द्वितीयद्विर्वचनं न प्राप्नोतीत्यर्थः ।

ननु यदि नियोगतः प्राक् प्रथमद्विर्वचनं स्यात्ततोऽयं विरोधः स्यात्, यदा तु पूर्वं द्वितीयद्विर्वचनं तदा विरोधाभावात् स्यादेव प्रथमद्विर्वचनम् । नैतदस्ति । नि[5]त्यत्वात्प्राथम्यात् क्रमव्यतिक्रमे हेत्वभावात् पूर्वं प्रथमद्विर्वचनम्, तत्र कृतेऽद्वितीयत्वाद्द्वितीयद्विर्वचनाप्रसङ्ग इत्यनवकाशत्वात् द्वितीयद्विर्वचनेन प्रथमद्विर्वचनं बाध्यते ॥

तद्यथेति । य[6]दा द्वयोः पुरस्तान्मध्ये वा तृतीय उपजायते तदाऽयं दृष्टान्तः, यदा तु परत उपजायते तदा द्वितीयो द्वितीय एव भवति ॥ न हि किंचिदिति । द्वितीय[7]त्वनिर्देशात्, विशेषानुपादानात् ॥

सामर्थ्यादत्र विशेष आश्रीयत इति मत्वाऽऽह—अनारम्भसममिति । अटि स इति स्थिते प्रथमद्विर्वचनम्—अट् अट्, 'हलादिः शेषः' इति टकारस्य निवृत्तिः । द्वितीयद्विर्वचनम्—अट् अट्, ततः 'हलादिः शेषः' । तत्र द्वयोस्त्रयाणां वाऽकाराणां पररूपे विशेषाभावाद्द्वितीयद्विर्वचनमनर्थकं स्यादित्यर्थः ।

हलादिशेषो द्वितीयद्विर्वचनमित्ययं क्रमः कथं लभ्यते, विपरीतक्रमः कस्मान्न भवति ? उच्यते—नित्यत्वात्पूर्वं हलादिःशेषो भवति । द्वितीयद्विर्वचनं तु शब्दान्तरप्राप्त्याऽनित्यम् । त[8]द्धि कृते हलादिःशेषेऽटः प्राप्नोति, अकृते तु टट्शब्दस्य । अन्तरङ्गत्वात्तु 'अतो गुणे' इति पररूपं 'सन्यतः' इतीत्वस्य बाधकं मन्यते । इत्वं हि सनमभ्यासं चापेक्षत इति बहिरङ्गम् । 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षे इत्व[9]माङ्गं न भवतीति 'वार्णादाङ्गं बलवत्' इत्यपि नास्ति । स[10]त्यपि वेत्वस्याङ्गत्वे नानाश्रयत्वादाङ्गवार्णयोरत्र परिभाषाऽनुपस्थानमिति भावः । तस्मात्सामर्थ्यादकृते प्रथमद्विर्वचने यो द्वितीयस्तस्य द्विर्वचनेन भाव्यम् । स च प्रथमद्विर्वचने कृते द्वितीयो न भवतीति सामर्थ्यात्प्रथमद्विर्वचनं द्वितीयद्विर्वचनेन बाध्यते ॥

---

१ 'प्रथमस्य विज्ञाने' इति झ. च. पाठः ॥

२ 'उपजायते न द्वितीयो द्वितीयो भवति' इति छ. च. झ. ञ. पाठः ॥

३ द्वितीयस्य प्राप्तिमुपपादयति—न हि किञ्चिदिति । द्विर्वचने कृते यो द्वितीयः संभाव्येत तस्यापि द्वित्वं वक्तव्यमित्यर्थः ॥

४ यदि कृते द्विर्वचने यो द्वितीयः संभाव्येत तस्य द्विर्वचनमिति पक्षे दोषमाह—अनारम्भमिति । यदि च प्रथमस्य द्वितीयस्य च सहैव द्वित्वप्रवृत्तिः स्यात्तदा इष्टापत्तिरेव स्यादिति भावः ॥

५ पूर्वं द्वितीयद्विर्वचनाभावे हेतुमाह—नित्यत्वादिति । प्रथमस्य द्वितीयस्य च सहैव द्वित्वविधानाभावे हेतुमाह—प्राथम्यादिति ॥

६ 'द्वयोरासीनयोस्तृतीय-' इत्यादिभाष्योक्तदृष्टान्तसंभवमाह—यदा द्वयोरिति । यत्र प्रथमो देवदत्तो द्वितीयश्च यज्ञदत्तस्तत्र तृतीयो विष्णुमित्रो यदि देवदत्तात्पूर्वं तस्मात्परो वोपविष्टः स्यात्तदा यज्ञदत्तस्य द्वितीयत्वमुपहन्येत । यदि च तृतीयो विष्णुमित्रो यज्ञदत्तात्परः स्यात्तदा यज्ञदत्तो द्वितीय एवेति न तदा दृष्टान्त इति भावः ॥

७ द्वितीयत्वेति । अजादेर्द्वितीयस्येति सूत्रे केवलद्वितीयस्य द्विर्वचनमुक्तं न तु तत्र द्वित्वे कृतेऽकृते वेति विशेष उक्त इति भावः ॥

८ तद्धीति । नित्यत्वाद्धलादिः शेषे कृतेऽट एव द्वितीयद्विर्वचनं प्राप्नोतीत्यर्थः । हलादिशेषेऽकृते तु टट्शब्दस्येत्यर्थः ॥

९ इत्वमाङ्गमिति । इत्वस्याङ्गत्वाभावाद्वार्णादाङ्गमिति परिभाषयाऽपि न तस्य बलवत्त्वमिति भावः ॥

१० प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति पक्षास्वीकारे आह—सत्यपि वेति । तस्याः परिभाषाया हि द्वयोः समानाश्रयत्वे एव प्रवृत्तेरिति भावः ॥

कृतेऽपि प्रथमद्विर्वचने यो द्वितीयस्तस्य द्विर्वचनं नानर्थकमिति मत्वाऽऽह–**नानारम्भसममिति** ॥ **इत्वमिति** । आसप्तम-[1] परिसमाप्तेरङ्गाधिकारादाङ्गमित्वम् । सामान्येन च वार्णादाङ्गं बलवदित्याश्रीयते, न समानाश्रयाङ्गवार्णविषयमेव–इति इत्वमेव प्रवर्तते, न पररूपम् । तत्र कृते द्वितीयद्विर्वचनं प्राप्नोति, 'अभ्यासस्यासवर्णे' इतीयङादेशश्च । तत्र नित्यत्वाद्द्वितीयद्विर्वचनम् । इयङादेशो ह्यनित्यः, कृते द्वितीयद्विर्वचने नित्यत्वादित्वे च 'असवर्णे' इति वचनादियङोऽप्रसङ्गात् ।

ननु परस्य कृतेऽपीत्वे तस्य स्थानिवद्भावात्पूर्वस्येयङ् प्राप्नोति । नैष दोषः । 'सवर्णे न भवति' इति प्रसज्यप्रतिषेध आश्रीयते । सवर्णे च यो विधिः स सवर्णस्य विधिर्भवतीति सवर्णविधौ स्थानिवत्त्वप्रतिषेधादियङोऽप्रसङ्गात् ॥

**द्वयोरिकारयोरिति** । अथ परस्येयङादेशः कस्मान्न भवति ? अन्तरङ्गत्वात्पूर्वमेकादेशं मन्यते । एकादेशस्य त्वभ्यासह्रस्वत्वं विशेषाभावान्नोक्तम् ॥

**इयटिषतीति** । अस्यामपि प्रक्रियायां नास्ति द्वितीयद्विर्वचने विशेषः, अकृतेऽपि तस्मिन्नेतद्रूपलाभात् । प्रथमद्विर्वचने कृते हलादिशेषः–इत्वम्–इयङ्–इति कार्यप्रवर्तनात् । अत एवान्येषां ग्रन्थः–'इत्वं परस्येयङादेशो द्वयोरिकारयोः सवर्णदीर्घता —ईयटिषतीत्येतद्रूपं यथा स्यात्' इति । युक्त एवायं ग्रन्थः । वार्णादाङ्गं बलवदिति परस्येकारस्येयङा भाव्यं न त्वेकादेशेन, तस्मिन् कृते एकादेशः । तस्य त्वन्तवद्भावाद्ध्रस्वत्वं न भवति, 'नाभ्यासादीनां ह्रस्वत्वे' इत्यन्तादिवद्भावप्रतिषेधात् ॥

**ओणेश्चेति** । अत्रापि 'ऊवोणिषति'[2] इति पाठेन भाव्यम् । उवोणिषतीत्येतस्याकृते द्वितीयद्विर्वचने सिद्धत्वात् ॥

**नानिष्टार्थेति** । 'द्वितीयस्य' इति व्यक्तिराश्रीयते, न जातिः । या चाकृते प्रथमद्विर्वचने द्वितीयव्यक्तिः सा कृते तस्मिन् द्वितीया न भवतीति विरोधाद्द्वितीयद्विर्वचनेन प्रथमद्विर्वचनं बाध्यते ॥

( उद्द्योतः ) ननु 'अद्वितीयत्वात्' इत्यसिद्धो हेतुः, कृतेऽपि प्रथमद्विर्वचने द्वितीयस्यैकाचः सत्त्वात्; अत आह—**यस्येति** । अकृतद्विर्वचनकालिकी द्वितीया व्यक्तिराश्रीयत इति भावः ॥

प्राथम्यादित्यस्योपपादकं—**क्रमव्यतिक्रमे हेत्वभावादिति** ॥ **अनवकाशत्वादिति** । तद्बाधं विना चारितार्थ्याभावादिति भावः ॥ **द्वितीयत्वनिर्देशादिति** । तत्र विनिगमनाविरहात्सर्वद्वितीयव्यक्तिग्रहणमिति भावः ॥

**विशेष इति** । द्वितीयविशेष इत्यर्थः ॥

भाष्ये—**कृते द्विर्वचने इति** । अनभ्यासस्येत्येतत्[3] तत्पुरुषेणैकाज्विशेषणमिति भावः ॥ **पररूपे इति** । 'अत आदेः' इति तु न, तस्य लिट्येव प्रवृत्तेः ॥ **द्वयोस्त्रयाणामिति** । पररूपोत्तरं[4] द्वितीयद्वित्वे द्वयोः, अन्यथा त्रयाणामिति भावः ॥ **विपरीतक्रमः कस्मादिति** । एवं च टट्शब्दस्य द्वित्वे द्वितीयद्विर्वचनमर्थवदित्यर्थः ॥

ननु कृते प्रथमद्विर्वचने हलादिः शेषे च 'सन्यतः' इति इत्वं कस्मान्न ? इत्यत आह—**अन्तरङ्गत्वादिति** ॥ **इत्वं हीति** । पररूपं तु वार्णत्वादन्तरङ्गमिति भावः ॥ **सत्यपि चेति** । आसप्तमाध्यायसमाप्तेरङ्गाधिकार इति पक्षस्याकरे स्थितत्वादिति भावः ॥ ननु इत्वोत्तरं द्वितीयद्विर्वचनात्प्राक् 'अभ्यासस्यासवर्णे' इति इयङ् प्राप्नोतीत्यत आह—**तत्र कृत इति** ॥ **नैष दोष इति** । वस्तुतस्तु 'अभ्यासस्यासवर्णे' इति सूत्रारम्भसामर्थ्यात्तद्विषये स्थानिवत्त्वाप्रवृत्तिरित्याह्निकशेषे निरूपयिष्यामः । मूलोक्तसमाधानं तु चिन्त्यम्, 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य भाष्ये सवर्णग्रहणप्रत्याख्यानादित्याहुः[5] ॥ **मन्यत इति** । वार्णादाङ्गमिति समानाश्रयविषयम्–इति मन्यत इति भावः ।

**विशेषाभावादिति** । पर्जन्यवत्प्रवृत्त्या पूर्वप्रवृत्तेर्लक्ष्ये लक्षणस्येति न्यायेन न दोष इत्यन्ये ॥ **वार्णादिति** । समानाश्रय एवैतत्प्रवृत्तिरिति तु निर्मूलमिति भावः ॥ **पाठेनेति** । ससन्धिकार्यपाठे छेदेनेति बोध्यं ॥

**व्यक्तिरिति** । व्यक्तिविशेष इत्यर्थः ॥

**न जातिरिति** । व्यक्तिसामान्यमित्यर्थः । तदाह—**या चाकृते इति** । प्रथमस्य तादृशस्यैव ग्रहणेन तत्साहचर्यात्तदपेक्षत्वाच्च द्वितीयत्वस्य द्वितीयस्यापि तादृशस्यैव ग्रहणमिति भावः ॥

**( ५९७१ प्रत्याक्षेपसमाधाने दृष्टान्तवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ यथा वाऽऽदिविकारेऽलोन्त्यविकाराभावः ॥ * ॥

**( भाष्यम् ) यथा वा आदिविधावलोन्त्यविधिर्न भवति, एवं द्वितीयद्विर्वचने प्रथमद्विर्वचनं न भविष्यति ॥**

**विषम उपन्यासः । नाप्राप्तेऽलोन्त्यविधावादिविधिरारभ्यते स तस्य बाधको भविष्यति ॥**

**इदमप्येवंजातीयकम् । नाप्राप्ते प्रथमद्विर्वचने द्वितीयद्विर्वचनमारभ्यते तद्बाधकं भविष्यति ॥**

**यदप्युच्यते–असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यादिति,**

**नैतदस्ति ।**

**सत्यपि संभवे बाधनं भवति । तद्यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि दधिदानस्य संभवे तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनं बाधिष्यते ॥**

---

१ अङ्गाधिकारविषयकसिद्धान्तपक्षे आह—आसप्तमेति ॥

२ 'अत्रापि उवोणिषति' इति च. क. पाठः स च लेखकप्रमादात् ॥

३ अजादेर्द्वितीयस्येति सूत्रेण द्वितीयस्य द्विर्वचनमनभ्यासस्यैवेति सिद्धान्तात्प्रथमस्य द्वित्वे कृते कथं प्राप्तिरित्याह—अनभ्यासेति ॥

४ पररूपोत्तरमिति । अकिञ्चित्करमिदं व्याख्यानम्, यथाश्रुतकैयटस्यापि ज्ञापयितुं शक्यत्वात् ॥

५ 'सवर्णग्रहणस्य प्रत्याख्यानात्' इति झ. पाठः ॥

( प्रदीपः ) **यथा वेति** । भवतु 'द्वितीयस्य' इति जातिनिर्देशः, तथापि सामान्यविहितस्य विशेषविहितमसत्यपि विरोधे बाधकं भवति । यथा[2]—द्वीपमित्यादौ 'आदेः परस्य' इत्यादेर्विधीयमानमपीत्वमन्त्यस्य न भवति, एवमिहापि द्वितीयद्विर्वचनं विधीयमानं प्रथमस्य न भवति । नैनु[3] च 'अपः' इत्येका षष्ठी 'आदेः परस्य' इत्यादिमलमनुसंहृतेति कुतः 'अलोऽन्त्यस्य' प्रसङ्गः ? इह तु प्रथमस्येति द्वितीयस्येति च षष्ठीद्वयसंभवादुभयोः प्रसङ्गः । नैतदस्ति । 'अपः' इत्येकाऽपि षष्ठी वचनद्वयप्रामाण्यादाद्यन्तावुपसंहियेत—अप आद्यन्तयोरीत्वं भवतीति । एकस्माद्धि ग्रहणकवाक्याल्लक्ष्यसंस्कारकमनेकं प्रक्रियावाक्यमुपप्लवते ॥

(उद्द्योतः) ननु प्रमाणस्य प्रयोजनानुवर्तित्वाभावात् 'नानिष्टार्था' इत्ययुक्तमत आह—भाष्ये—**यथा वेति** । तद्व्याचष्टे—**भवत्विति** ॥ **जातिनिर्देश इति** । मा भूद्व्यक्तिविशेषनिर्देश इत्यर्थः ॥ **असत्यपि विरोध इति** । यथा दधिदानं तक्रदानेन । धातुरूप उभयोरप्येको विषयः । नन्वोदनसेकाख्यफलाभेदात्तत्र बाधेऽपि रूपविशेषाख्यफलभेदादत्र कथं बाध इति चेन्न; दधितक्रजन्यविजातीयतृप्तेस्तत्रापि भेदाद्बाधानापत्तेः । अत्राप्यर्थाभिधानाख्यफलस्याभेदाच्च ॥ **अप आद्यन्तयोरिति** । एकाऽपि षष्ठी तन्त्रादिन्यायाश्रयेण संबन्धिभेदाद्भिद्यते—अप आदेरीत्त्वं भवति, अपोऽन्त्यस्य चेतीति भावः । तदाह—**एकस्माद्धीति** । एवं च कृते प्रथमद्विर्वचने द्वितीयद्विर्वचनस्य चारितार्थ्येऽपि यत्र यत्र द्वितीयद्विर्वचनप्राप्तिस्तत्रावश्यं प्रथमद्विर्वचनप्राप्तेर्येन नाप्राप्तिन्यायेन बाधः, यथा आदेरित्यनेनान्त्यस्येत्यस्य । अन्यथा यॅस्यादेरपीत्त्वविधानेनादेरित्यस्य चारितार्थ्येनान्त्यांशबाधकत्वं न स्यादिति तात्पर्यम्[4] ॥

( वार्तिकावतरणभाष्यम् )

**तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिर्वक्तव्या । अटिटिषति—इति । यथैवाचो निवृत्तिर्भवत्येवं व्यञ्जनस्यापि प्राप्नोति ॥**

( प्रदीपः ) **यथैवाचो निवृत्तिरिति** । यथाभूतस्य प्रथमस्यैकाचो द्विर्वचनं प्राप्तं तथाभूतस्य द्वितीयद्विर्वचनेन बाध्यम्, सव्यञ्जनस्य च प्राप्तमिति व्यञ्जनानामपि द्विर्वचनबाधप्रसङ्ग इत्यर्थः ॥

( उद्द्योतः ) नन्वेकाच इत्युच्चयाऽचो विधानेन तस्य तन्निवृत्तावपि व्यञ्जनस्य तन्निवृत्तौ मानाभावोऽत आह—**यथाभूतस्येति** । 'एकाचः' इति बहुव्रीहिरिति[5] भावः ॥

( ५९७२ आक्षेपवारकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिरशासनात्पूर्वस्य ॥ * ॥**

( भाष्यम् ) **तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिः सिद्धा ।**

**कुतः ?**

**अशासनात्पूर्वस्य । नेह वयं पूर्वस्य प्रतिषेधं शिष्मः ।**

**किं तर्हि ?**

**द्वितीयस्य द्विर्वचनमारभामहे । व्यञ्जनानि पुनर्नटभार्यावद्भवन्ति । तद्यथा—नटानां स्त्रियो रङ्गगता यो यः पृच्छति कस्य यूयं कस्य यूयमिति तं तं तव तवेत्याहुः । एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यते तं तं भजन्ते ॥**

( प्रदीपः ) **अशासनात् पूर्वस्येति** । अप्राप्त्यनुमानं बाधः, न हि प्रमाणेन प्राप्तं बाधितुं शक्यते, प्रमाणत्वाविशेषात् । तस्मादजादिधातुद्वितीयद्विर्वचनविषये प्रथमद्विर्वचनं न विहितं न प्रतिषिद्धम् । नटभार्यावच्च व्यञ्जनानि भवन्तीति द्वितीयैकाजन्तर्भावात्तानि द्विरुच्यन्त इत्यर्थः ॥

(उद्द्योतः) भाष्ये—**अशासनात्पूर्वस्येति** । पूर्वस्य प्रतिषेधाशासनादित्यर्थः ॥ **अप्राप्त्यनुमानमिति** । द्वितीयैकाच्सहिताजादिधात्वतिरिक्तविषयं 'एकाचः' इतीति भावः ॥ **न प्रतिषिद्धमिति** । शब्दतः प्रतिषेधे हि तथा शङ्कितुमपि शक्येतेत्यर्थः ॥

( ५९७३ व्यञ्जनानिवृत्तौ[6] हेतुवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ न्द्रादिप्रतिषेधाच्च ॥ * ॥**

( भाष्यम् ) **यदयं 'न न्द्राः संयोगादयः' (६।१।३) इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—पूर्वनिवृत्तौ व्यञ्जनस्यानिवृत्तिरिति ॥**

( प्रदीपः ) न्यायसिद्धेऽर्थे लिङ्गदर्शनमाह—**न्द्रादिप्रति-**

---

१ अजादेर्द्वितीयस्येति सूत्रे द्वितीयपदस्य व्यक्तिविशेषवाचित्वे प्रथमस्य द्विर्वचने जाते यः पूर्वं द्वितीय आसीत्सोऽत्र तृतीयः संपन्न इति सुष्ठूपपन्नं पूर्ववार्तिकोक्तं '**द्वितीयाप्राप्तिरद्वितीयत्वात्**' इति । यदि च द्वितीयस्येति जातिवाचि स्यात्तदा द्वितीयत्वजातिमद्यद्भवेत्तस्य द्वित्वमुपजायेत । ततश्च विरोधाभावात्कथं बाध्यबाधकभावः सूत्रयोरनयोरित्यभिप्रायेणाह—**भवत्वित्यादि** । तथा च सत्यपि संभवे बाधनं भवतीति न्यायाद्बाधकत्वमित्यभिप्रायः ॥

२ **यथा द्वीपमिति** । द्वीपमित्यत्र '**द्व्यन्तरुपसर्गेभ्योऽप ईत्**' इत्यनेन एभ्योऽप ईत्स्यादित्यर्थकेनेत्वं विधीयते । तत्र विधीयमानमीत्वमाद्यन्तयोरुभयोरपि संभाव्यते । यथा तत्र '**अलोऽन्त्यस्य—आदेः परस्य**' इत्यनयोः संभवेऽपि बाधो भवति तथाऽत्रापीति भावः ॥

३ मकारान्तरेण द्वीपमित्यत्र आदेः परस्यालोऽन्त्यस्येत्यनयोः संभवाभावेन विरोधमुपपाद्य निरस्यति—**ननु चाप इत्येकेत्यादिना** ॥

४ सर्वेष्वपि प्रामाणिकेषु लिखितोद्द्योतपुस्तकेषु '**अन्यथा यस्यादेरपीत्व–**' इत्येवमक्षरविन्यासो दृश्यते । तच्च झ. संज्ञकमुद्रितपुस्तके '**अन्यथाऽपस्यादे–**' इत्येवमुद्घोषितं तल्लेखकप्रमादात् । तत्र '**अपस्य**' इत्यनुपपन्नम् । यदि च '**अन्यथा पस्यादेर–**' इत्येवं पदच्छेदः स्यात्तदा पस्येति षष्ठी अनुपपन्ना, आदिशब्दयोगात् । यस्यापशब्दस्येत्येवमर्थः सूपपन्नः ॥

५ **एकाच इति बहुव्रीहिरिति** । व्यञ्जनस्यानिवृत्तिर्वक्तव्येति संपादयितुं एकाच इति बहुव्रीहिराश्रयणीयः । तथा च एकोऽज्यस्मिन्निति व्यञ्जनसहितसमुदायस्य द्वित्वं पूर्वसूत्रेण प्राप्तमिति द्वितीयेनाजादेर्द्वितीयस्येतिसूत्रेण तं समुदायं परिहृत्य द्वित्वं कर्तव्यमिति व्यञ्जनस्य निवृत्तिः प्राप्ता साऽनिवृत्तिर्वक्तव्येति भावः ॥

६ '**व्यञ्जनानिवृत्ति–**' इति छ. पाठः ॥

षेधाच्चेति । न्द्राश्च ते आदयस्तेषां द्विर्वचनप्रतिषेधादन्यानि द्वितीयेनाचा सह द्विरुच्यन्ते ॥

( उद्द्योतः ) ननु न्द्रादीत्यत्र नदराणां ग्रहणादादिशब्दार्थाप्रसिद्धिरत आह—न्द्राश्च ते आदयश्चेति ॥

( ५९७४ पूर्वपक्षवार्तिकम् ॥ ७ ॥ )

॥ * ॥ तत्र द्वितीयाभावे प्रथमाद्विर्वचनं प्रतिषिद्धत्वात् ॥ * ॥

( भाष्यम् ) तत्र द्वितीयस्यैकाचोऽभावे प्रथमस्य द्विर्वचनं न प्राप्नोति । आटतुः, आटुः ।

किं कारणम् ?

प्रतिषिद्धत्वात् । अजादेर्द्वितीयस्येति प्रतिषेधात् ॥

( प्रदीपः ) तत्र द्वितीयाभाव इति । इह 'अजादेः' इत्यजादिसामान्यनिर्देशात्तत्र द्वितीयद्विर्वचनमारभ्यमाणं प्रथमद्विर्वचनस्य बाधकमिति यस्यामप्यजादिव्यक्तौ द्वितीयाभावात् द्वितीयद्विर्वचनाभावस्तस्यामपि प्रथमद्विर्वचनाप्रसङ्गः । अटिटिषतीत्यादावजाद्याकृतौ विधीयमानं द्वितीयद्विर्वचनमाटतुरित्यादावपि प्रथमद्विर्वचनं बाधेतेत्यर्थः । अप्राप्तिरेवात्र प्रतिषेधत्वेन विवक्षिता ॥

( उद्द्योतः ) नन्वाटतुरित्यादौ द्वितीयद्विर्वचनाप्रवृत्तेः कथं प्रथमस्य तद्बाधः ? इत्यत आह—इहाजादेरिति । जात्युद्देशेन विहितस्य जात्युद्देशेनैव तद्बाधकत्वम्, यथा हलादिः शेषे इति भावः ॥ अजादिसामान्येति । 'द्वितीयस्य' इति करणात्सूत्रकृतोऽजादिपदे बहुव्रीहिरेव संमत इति भावः । व्यपदेशिवद्भावेन द्वितीयत्वादजादेरित्येवात्र द्वित्वमिति तु न वाच्यम्, द्वितीयस्येत्युपादानात्प्रथमद्वितीययोः सत्तायामेवाजादेरित्यस्य प्रवृत्तेः ॥ ननु नानेन प्रतिषेधः क्रियत इति 'प्रतिषिद्धत्वात्' इत्ययुक्तमत आह—अप्राप्तिरेवेति ॥

( पूर्वपक्षसमाधानभाष्यम् )

नैष दोषः । सति तस्मिन्प्रतिषेधः । सति द्वितीयद्विर्वचने प्रथमस्य प्रतिषेधः ॥

( प्रदीपः ) सति तस्मिन्निति । 'अजादेः' इति व्यक्तिनिर्देशो न त्वाकृतिनिर्देशः । अतो नायमपवादोऽजादिमात्रनिबन्धनः, द्वितीयस्यैकाचः संभवमभिसमीक्ष्य प्रवर्तते । यत्रेदानीं द्वितीयो नास्ति तत्रानुपजातनिमित्तोऽपवाद एव न प्रवर्तत इति प्रथमैकाचो द्विर्वचनमुत्सर्गः प्रवर्तत एव । तेन यस्यामेवाजादिव्यक्तौ द्वितीयद्विर्वचनं प्रवर्तते तस्यामेव प्रथमद्विर्वचनं बाध्यते नान्यस्यामित्यर्थः । जात्युपलक्षिता व्यक्तिः प्राधान्येनाश्रीयते न तु जातिः, तेन सर्वस्यामेवाजादिव्यक्तौ द्वितीयवत्यामिदं शास्त्रं प्रवर्तते ॥

( उद्द्योतः ) ननु व्यक्तिनिर्देशे कस्यांचिद्व्यक्तावेव शास्त्रं प्रवर्ततेति शास्त्रस्य व्यक्त्यन्तरे प्रवृत्तिर्न स्यादत आह—जात्युपलक्षितेति । जात्युपलक्षितसर्वव्यक्तिविषयकत्वाच्छास्त्रस्य न दोष इति भावः ॥ ननु जातेः प्राधान्यं नाम न विशेष्यत्वं, तस्यां द्विरुच्चारणान्वयासंभवात् । किन्तु जातिगतामेकत्वसङ्ख्यां व्यक्तिष्वारोप्य प्रयोग इत्येव, तेन सकलव्यक्तिसङ्ग्रहसिद्धिः । किंच तज्जात्युपलक्षितव्यक्तित्वमटोऽप्यस्त्येव । एवञ्च कथमेतत् ? इति चेन्न; द्वितीयैकाज्सत्तासमानाधिकरणाजादित्वजातेराश्रयणम्, न तु तदसमानाधिकरणाया अपीति तात्पर्यात् । हलादिः शेषे त्वादिहल्सत्तासमानाधिकरणाभ्यासत्वस्यैव नेतरनिवृत्तिः शेषपदलभ्या, किन्त्वभ्यासत्वस्यैवेति । अत्र च लक्ष्यानुसारिव्याख्यानमेव प्रमाणमिति बोध्यम् ॥

( ५९७५ प्रत्याक्षेपवार्तिकम् ॥ ८ ॥ )

॥ * ॥ सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोषः ॥ * ॥

( भाष्यम् ) सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोषो भवति । हलादिशेषे सत्याद्ये हल्यनाद्यस्य हलो लोपः स्यात् ।

इहैव स्यात्-पपाँच पपाठेति ।

इह न स्यात्-आटतुः, आटुरिति ॥

(प्रदीपः) व्यक्तिपदार्थाश्रयणे दोषमाह-सति तस्मिन्निति ॥

( ५९७६ प्रत्याक्षेपवारकवार्तिकम् ॥ ९ ॥ )

॥ * ॥ लोकवद्धलादिशेषे ॥ * ॥

(भाष्यम्) लोकवद्धलादिशेषे सिद्धम् । तद्यथा—लोके ईश्वर आज्ञापयति—ग्रामाद्ग्रामान्मनुष्या आनीयन्ताम्, प्रागाङ्गं ग्रामेभ्यो ब्राह्मणा आनीयन्तामिति । येषु तत्र ग्रामेषु ब्राह्मणा न सन्ति न तर्हीदानीं ततोऽन्यस्यानयनं भवति । यथा तत्र क्वचिदपि ब्राह्मणस्य सत्ता सर्वत्राब्राह्मणस्य निवर्तिका भवति, एवमिहापि क्वचिदपि हलाद्यः सन् सर्वस्यानाद्यस्य हलो निवर्तको भवति ॥

( प्रदीपः ) लोकवदिति । आकृतिः पदार्थस्तत्राश्रीयत इति भावः ॥ प्रागाङ्गमिति । यथा ग्रामाकृतेराश्रयणाद्

---

१ न्द्राश्च ते आदयश्चेति । न्द्रा इति द्वन्द्वात्पर आदिशब्दः प्रत्येकैर्नदरैः संबध्यत इति भावः ॥

२ अजादिसामान्यनिर्देशादिति । अजादिधातुत्वावच्छेदेनास्य सूत्रस्य प्रवृत्तेस्तस्मिन् विषये न पूर्वस्य प्राप्तिरिति आटतुरित्यादौ प्रथमद्विर्वचनं न संबध्येतेति भावः ॥

३ ननु अजादेर्द्वितीयस्येति सूत्रेण प्रतिषेधो न विहित इति कथं तस्य प्रतिषेधत्वं तदाह—अप्राप्तिरेवेति ॥

४ व्यक्तिनिर्देश इति । अजादिधातुत्वावच्छेदेन नाजादेर्द्वितीयस्येत्यस्य प्रवृत्तिः किन्तु यत्र द्वितीयस्याचः संभवस्तत्रैवेत्याटतुरित्यादावप्रवृत्तिरिति न दोष इति भावः ॥

५ किन्त्वभ्यासवत्स्यैवेति । अजादेर्द्वितीयस्येत्यत्र द्वितीयाज्विशिष्टाजादिधातुत्वावच्छेदेन तस्य सूत्रस्य प्रवृत्तिः । तेनाट्धातोरजादित्वेऽपि द्वितीयाज्विशिष्टत्वाभावेन नात्रेदं सूत्रं प्रवर्तते किन्तु 'एकाचो द्वे–' इत्येव । 'हलादिः शेषः' इत्यत्र च अभ्यासत्वावच्छेदेन तस्य सूत्रस्य प्रवृत्तिर्न तु आदिहल्विशिष्टाभ्यासत्वावच्छेदेनेति भावः । एतच्च व्याख्यानं लक्ष्यानुसारादेव ॥

६ 'द्धलादिः शेषे दोषः' इति क. पाठः ॥

७ 'पपाचेति' इत्येव क. ट. पाठः ॥

८ 'ग्रामेभ्यो ग्रामेभ्यो' इति ट. पाठः ॥

९ 'तत्राकृतिः पदार्थ आश्रीयत–' इति क. ट. पाठः ॥

क्वचिदपि ग्रामे वर्तमानो ब्राह्मणो मनुष्यान्तरानयनं निवर्तयति तथाऽभ्यासजातेराश्रयणात् क्वचिदप्यभ्यासे वर्तमानो हलादिः सर्वत्रानादेर्हलो निवृत्तिं करोतीत्यर्थः ॥

( उद्द्योतः ) लोके जात्याश्रयणमुपपादयति—यथा ग्रामाकृतेरिति ॥ भाष्ये—सर्वत्राब्राह्मणस्येति । प्रागङ्गं[1]–'ग्राममात्रे' इत्यादिः ॥ सर्वस्यानादस्येति । सर्वाभ्याससंबन्धिन इत्यर्थः ॥

( ५९७७ प्रत्याक्षेपवार्तिकम् ॥ १० ॥ )

**॥ * ॥ क्वचिदन्यत्र लोप इति चेत् द्विर्वचनम् ॥ * ॥**

( भाष्यम् ) क्वचिदन्यत्र लोप इति चेद् द्विर्वचनमप्येवं प्राप्नोति । क्वचिदपि द्वितीयः सन् सर्वस्य प्रथमस्य निवर्तकः स्यात् ॥

( उद्द्योतः ) सर्वस्येति । सर्वधातुसंबन्धिन इत्यर्थः ॥

( सिद्धान्तभाष्यम् )

तस्मादस्तु सति तस्मिन् प्रतिषेध इत्येव ।

ननु चोक्तं सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोष इति ।

प्रतिविधास्यते हलादिशेषे ॥

( प्रदीपः ) तस्मादस्त्विति । इह व्यक्तिपक्ष आश्रीयते । हलादिशेषे तु जातिपक्षः । व्यक्तिपक्षेऽपि वा प्रतिविधास्यते—अहलभ्यासो भवति, तत आदिः शेष इति ॥

( उद्द्योतः ) अहलभ्यास इति । 'हस्वो हलादिः शेषः' इति संहितापाठेऽहलिति विभज्यते । तत्राभ्यासस्येति षष्ठ्यन्तं प्रकृतमपि सामर्थ्यात्प्रथमया विपरिणम्यते । तेनाभ्यासस्यस्य सर्वस्य हलो निवृत्तिः क्रियते । 'आदिः शेषः' इत्यनेन तु यत्रादौ हलः सम्भवस्तत्र सोऽभ्यनुज्ञायत इति भावः । लक्ष्यानुसारिपूर्वोक्तव्याख्यानापेक्षयेदमेव युक्तम् ॥

( १०३७ निषेधसूत्रम् ॥ ६ । १ । १ आ. ३ )

## २४४० न न्द्राः संयोगादयः ॥६।१।३॥

( सूत्राक्षेपभाष्यम् )

किमर्थमिदमुच्यते ?

( प्रदीपः ) किमर्थमिति । पूर्वस्याचो व्यञ्जनानीति पूर्वपक्षः, नटभार्यावद् व्यञ्जनानीत्युत्तरः पक्षः ॥

( ५९७८ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ न्द्रादेर्द्विर्वचनप्रसङ्गस्तत्र न्द्राणां प्रतिषेधः ॥ * ॥**

( भाष्यम् ) न्द्रादेरेकाचो द्विर्वचनं प्राप्नोति । तत्र न्द्राणां संयोगादीनां प्रतिषेध उच्यते ॥

( ५९७९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ईर्ष्यतेस्तृतीयस्य द्वे भवतः ॥ * ॥**

( भाष्यम् ) ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम् ।

केचिदाहुः[2]—एकाच इति । ईर्ष्यिषिषति ।

अपर आह—

व्यञ्जनस्येति । ईर्ष्यियिषति ॥

( ५९८० उपसंख्यानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ कण्ड्वादीनां च ॥ * ॥**

( भाष्यम् ) कण्ड्वादीनां[3] च तृतीयस्य द्वे भवत इति वक्तव्यम् । कण्डूयियिषति । असूयियिषति ॥

( उद्द्योतः ) भाष्ये—कण्ड्वादीनां तृतीयस्येति । 'तृतीयस्यैकाचः' इत्यर्थः । तत्र कण्ड्वादीनां तृतीयैकाचोऽसंभवात्तद्घटितसमुदायोपलक्षणं तत्[4] । तद्ध्वनयन्नुदाहरति–कण्डूयियिषतीति । एवञ्च चङ्यप्यस्य प्रवृत्तिरिति बोध्यं यद्यभिधानमस्ति ॥

( ५९८१ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ वा नामधातूनाम् ॥ * ॥**

( भाष्यम् ) वा नामधातूनां[5] तृतीयस्य द्वे भवत इति वक्तव्यम् । अश्वीयियिषति । अशिश्वीयिषति ॥

अपर आह—

**यथेष्टं वा ।**

यथेष्टं वा नामधातूनामिति । पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति ॥

( उद्द्योतः ) नामधातूनामिति । नामघटितधातूनामित्यर्थः । तत्संबन्धितृतीयैकाच इत्यर्थः । तृतीयस्य वा भवति, द्वितीयस्य वेत्यर्थः । तद्ध्वनयन्नाह—अशिश्वीयिषतीति । अजादिविषयमेतत् । 'अजादेः' इत्यनुवर्तत इति भावः ॥ तत्रानुवर्तत इति मतान्तरमाह—अपर आहेति ॥ यथेष्टमिति । उपस्थितप्रथमद्वितीयतृतीयानां पर्यायेणेत्यर्थः । युगपत्तु त्रयाणां न, बाध्यबाधकभावस्य निर्णीतत्वात् । अत एव पुनरत्र वाग्रहणं चरितार्थम् ॥

( १०३८ संज्ञासूत्रम् ॥ ६ । ६ । १ आ. ४ )

## २४४१ पूर्वोऽभ्यासः ॥ ६ । १ । ४ ॥

( अभ्याससंज्ञाधिकरणम् )

( सूत्रार्थसंयोजकभाष्यम् )

पूर्वोऽभ्यास इत्युच्यते, कस्य पूर्वोऽभ्याससंज्ञो भवति ?

---

१ 'प्रागङ्गम्' इति ज. पाठः ॥

२ 'केचिदाहुः–एकाचः, ई–' इति क. पाठः ॥

३ 'कण्ड्वादीनां च' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

४ तद्घटितसमुदाय इति । कण्ड्वादिघटितणिजन्तस्य सन्नन्तस्य चङन्तस्य वा समुदायस्योपलक्षणमित्यर्थः ॥

५ 'वा नामधातूनां' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

द्वे इति वर्तते । द्वयोरिति[1] वक्तव्यम् ॥

स तर्हि तथानिर्देशः कर्तव्यः । न कर्तव्यः । अर्थाद्विभक्तिविपरिणामो भविष्यति ।

तद्यथा—उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम् । देवदत्तमिति गम्यते ।

देवदत्तस्य गावोऽश्वा हिरण्यम्, आढ्यो वैधवेयः । देवदत्त इति गम्यते ।

पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति ।

एवमिहापि पुरस्तात् प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति ॥

( प्रदीपः ) कस्य पूर्व इति । अवध्यवधिमत्संबन्धे[2] दिग्योगलक्षणा पञ्चमी भवति । यथा—ग्रामात्पूर्वः । इह त्ववयवावयविसंबन्धो विवक्षितः—कस्य पूर्वोऽवयव इति पञ्चम्यभावः । यथा—पूर्वं कायस्येति ॥

विभक्तिविपरिणाम इति । पूर्वविभक्तित्यागेन सामर्थ्या[3]द्विभक्त्यन्तरस्योह इत्यर्थः ॥

( उद्योतः ) ननु 'कस्मात्पूर्वम्'[4] इति वक्तव्यमत आह—अवधीति ॥ इहेति । पूर्वशब्दोऽवयववाचीति भावः ॥ विभक्त्यन्तरस्येति । स्वरितत्व[5]प्रतिज्ञानाद्योग्यविभक्त्यन्तस्य तस्योह इति भावः । अयमेव 'प्रत्ययोहः' इत्युच्यते ॥

—————

( १०३९ संज्ञासूत्रम् ॥ ६ । १ । १ आ. ५ )

## २४४२ उभे अभ्यस्तम् ॥ ७ । १ । ५ ॥

( अभ्यस्तसंज्ञाधिकरणम् )

( ५९८२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अभ्यस्तसंज्ञायां सहग्रहणम्[6] ॥ * ॥

( भाष्यम् ) उभे अभ्यस्तं सहेति वक्तव्यम् ।

किं प्रयोजनम् ?

( प्रदीपः ) सहग्रहणमिति । सहभूतयोः परस्परापेक्षयोरेकाऽभ्यस्तसंज्ञा यथा स्यादित्येवमर्थं[7] सहेति कर्तव्यम् ॥

( उद्योतः ) सहभूतयोरिति । तद्व्याख्यानं—परस्परापेक्षयोरिति । प्रत्येकं[8] वाक्यपरिसमाप्तिन्यायाद्द्वयोर्द्वे संज्ञे स्याताम्, अतः सहग्रहणमिति भावः ॥

( ५९८३ सहपदप्रयोजनवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ आद्युदात्तत्वे पृथगप्रसङ्गार्थम् ॥ * ॥

( भाष्यम् ) आद्युदात्तत्वं सहभूतयोर्यथा स्यात्, एकैकस्य मा भूदिति ।

यस्मिन्नेवाभ्यस्तकार्येऽदोषस्तदेव पठितम् । 'अनुदात्तं पदमेकवर्जम्' ( ६।१।१५८ ) इति नास्ति यौगपद्येन संभवः ।

पर्यायस्तर्हि प्रसज्येत । पर्यायश्च पूर्वस्य तावत् परेण रूपेण व्यवहितत्वान्न भविष्यति ।

परस्य तर्हि स्यात् । तत्राचार्यप्रवृत्तिर्ज्ञापयति—न परस्य भवतीति, यदयं[9] बिभेत्यादीनां पिति प्रत्ययात्पूर्वमुदात्तं भवतीत्याह । एवं व्यवधानान्न पूर्वस्य, ज्ञापकान्न परस्य ।

उच्यते चेदं—अभ्यस्तानामादिरुदात्तो भवतीति । तत्र स एव दोषः—पर्यायः प्रसज्येत ।

तस्मात्सहग्रहणं कर्तव्यम् ॥

( प्रदीपः ) आद्युदात्तत्व इति । यस्यानुदात्तत्वे[10] क्रियमाणे उदात्तस्वरितविधानमनर्थकमापद्यते स वर्ज्य इति व्याख्याने प्रधानवाचिन्येकशब्दे यौगपद्यप्रसङ्गः । 'एकवर्जम्' इति संख्यावचने तु विरोधाद्यौगपद्यासम्भवात्पर्यायप्रसङ्गः ॥

( उद्योतः ) ननु 'अनुदात्तं पदमेकवर्जम्' इति वचनात्कथं द्वयोरुदात्तत्वमत आह—यस्यानुदात्तत्वे इति ॥ एवं व्याख्याने बीजमाह—प्रधानवाचिनीति । प्रधानमुदात्तस्वरितोद्देश्यं वर्जयित्वा शिष्टमनुदात्तमित्यर्थः ॥ यौगपद्याऽसंभवे हेतुमाह—सङ्ख्यावचन इति । प्रसिद्धत्वात्तस्यैव ग्रहणमिति भावः ॥

भाष्ये—पर्यायश्चेति । अस्य 'वक्तुमशक्यः' इति शेषः, उभयोरप्यप्राप्तेरिति भावः । तदेवाह—पूर्वस्य तावदिति ॥ यदयं बिभेत्यादीनामिति । अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्त इत्यर्थकेन 'अनुदात्ते च' इत्यनेनैव सिद्धेरिति भावः ॥

—————

१ 'द्वयोरिति च वक्तव्यम्' इति ट. पाठः ॥

२ अवध्यवधिमदिति । भाष्ये 'कस्य पूर्वोऽभ्याससंज्ञो भवति' इत्यत्र पूर्वशब्दस्यावयववाचित्वाद्दिग्योगलक्षणपञ्चम्याः प्राप्तिरेव नेति षष्ठ्यन्तप्रयोगस्योपपत्तिः ॥

३ सामर्थ्यादिति । पूर्वोऽभ्यास इत्यत्र 'द्वे' इत्यनुवर्तनात्प्रथमान्तस्य च तस्यानन्वयरूपात्सामर्थ्यादित्यर्थः ॥

४ कस्मादिति । भाष्ये 'कस्य पूर्वोऽभ्याससंज्ञो भवति' इत्यत्र कस्मात्पूर्वोऽभ्यास इत्येवं वक्तुं प्राप्तमिति भावः ॥

५ 'द्वे' इत्यनुवर्तनसामर्थ्याभावेऽपि सिद्धिमाह—स्वरितत्वेति ॥

६ 'सहवचनम्' इति छ. ट. पाठः ॥

७ 'स्यादित्येवमर्थं सहेति' इति ट. पाठः ॥

८ प्रत्येकमिति । एकः पूर्वपरयोरित्यत्र यथा 'एक'ग्रहणङ्क्रियते तद्वदत्रापि सहग्रहणमपेक्ष्यत इति भावः ॥

९ भाष्ये—यदयमिति । बिभेतीत्यादौ 'अनुदात्ते च' ( ६।१।१९० ) इत्यनेन परखण्डस्योदात्तत्वे सिद्धे 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पिति' ( ६।१।१९२ ) इत्यनेन प्रत्ययात्पूर्वस्य परखण्डस्योदात्तत्वविधानमनर्थकं सत्परस्य न भवतीति ज्ञापयतीत्यर्थः ॥

१० यस्यानुदात्तत्व इति । अनुदात्तं पदमिति सूत्रे एकशब्देन पदं गृह्येत तदा यस्य पदस्यानुदात्तत्वे क्रियमाणे उदात्तादिविधानमनर्थकं स्यात्तमेकं पदं वर्जयित्वाऽन्यस्मिन्ननुदात्तो विधीयते । अस्मिंश्च पक्षे एकशब्देन प्रधानं पदमेव गृह्यते । एवञ्च यत्रोदात्तविधानस्य वैयर्थ्यं नास्ति तत्र यौगपद्यप्रसङ्गोऽपि । यदा च एकशब्देन अजेव गृह्येत तदा न यौगपद्यसंभवः । एकवर्जमित्यस्य एकं पदं वर्जयित्वा—एकमचं वर्जयित्वा—इति वाऽर्थः । तत्र एकं पदमिति पक्षे खण्डद्वयस्यापि आद्युदात्तत्वं स्यादिति यौगपद्यप्रसङ्ग इति भावः ॥

एवमेकैकस्याग्राह्यत्वा पर्याये दूषिते तं समर्थयितुमाह—एव-मित्यादि ॥ तत्र स एवेति । विनिगमनाविरहादिति भावः ॥

( सहग्रहणप्रत्याख्यानभाष्यम् )

न कर्तव्यम् । उभेग्रहणं क्रियते तत्सहार्थं विज्ञास्यते । अस्त्यन्यदुभेग्रहणस्य प्रयोजनम् ।

किम् ?

उभेग्रहणं संज्ञिनिर्देशार्थम् ।

अन्तरेणाप्युभेग्रहणं प्रकृतः संज्ञिनिर्देशः ।

कथम् ?

द्वे इति वर्तते ॥

इदं तर्हि प्रयोजनम्—यत्रोभे शब्दरूपे श्रूयेते तत्राभ्यस्तसंज्ञा यथा स्यात्, इह मा भूत्—ईर्त्सन्ति-ईप्सन्तीति, ईर्त्सन्-ईप्सन्, ऐर्त्सन्-ऐप्सन् ।

किं च स्यात् ?

अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन् ॥

अद्भावे तावन्न दोषः । सप्तमे योगविभागः करिष्यते—इदमस्ति 'अदभ्यस्तात्' ( ७।१।४ ) इति । तत आत्मनेपदेषु । आत्मनेपदेषु चाद्भवति । अनत इत्युभयोः शेषः ॥

यदप्युच्यते—नुम्प्रतिषेध इति ।

एकादेशे कृते व्यपवर्गाभावान्न भविष्यति[1] ।

इदमिह संप्रधार्यं—नुम्प्रतिषेधः क्रियतामेकादेश इति, किमत्र कर्तव्यम् ?

परत्वान्नुम्प्रतिषेधः । नित्य एकादेशः, कृतेऽपि नुम्प्रतिषेधे प्राप्नोत्यकृतेऽपि । एकादेशोऽप्यनित्यः । अन्यस्य कृते नुम्प्रतिषेधे प्राप्नोति, अन्यस्याकृते; शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।

अन्तरङ्गस्तर्ह्येकादेशः ।

काऽन्तरङ्गता ?

वर्णावाश्रित्यैकादेशः, विधिविषये नुम्प्रतिषेधः । विधिश्च नुमः सर्वनामस्थाने, प्राक्च सर्वनामस्थानोत्पत्तेरेकादेशः । तत्र नित्यत्वाच्चान्तरङ्गत्वाच्चैकादेशः, एकादेशे कृते व्यपवर्गाभावान्नुम्प्रतिषेधो न भविष्यति ॥

यदप्युच्यते—जुस्भाव इति ।

एकादेशे कृते व्यपवर्गाभावान्न भविष्यति ।

एकादेश इत्युच्यते, केन चात्रैकादेशः ?

अन्तिना ।

नात्रान्तिभावः प्राप्नोति ।

किं कारणम् ?

जुस्भावेन बाध्यते ।

नात्र जुस्भावः प्राप्नोति ।

किं कारणम् ?

शपा व्यवहितत्वात् ।

एकादेशे कृते नास्ति व्यवधानम् ।

एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव ॥

किं पुनः कारणम् निमित्तवानन्तिरेकादेशं तावत्प्रतीक्षते, न पुनस्तावत्येव निमित्तमस्तीत्यन्तिभावेन भवितव्यम् ?

इहापि तर्हि तावत्येव निमित्तमस्तीत्यन्तिभावः स्यात्—अनेनिजुः, पर्यवेविषुः । अस्तु, अन्तिभावे कृते स्थानिवद्भावाज्झिग्रहणेन ग्रहणाज्जुस्भावो भविष्यति ॥

अथवा यद्यपि निमित्तवानन्तिरयं तस्य जुस्भावोऽपवादः, न चापवादविषये उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयमुत्सर्गः प्रवर्तते । न तावदत्र[2] कदाचिदप्यन्तिभावो भवति । अपवादं जुस्भावं प्रतीक्षते ॥

न खल्वपि क्वचिदभ्यस्तानां झेश्चानन्तर्यम्, सर्वत्र विकरणैर्व्यवधानम् । तेनावश्यं विकरणनाशः प्रतीक्ष्यः क्वचिल्लुका, क्वचित् श्लुना, क्वचिदेकादेशेन । स यथैव श्लुलुकौ प्रतीक्षते तथैकादेशमपि प्रतीक्षते[3] ।

एवं तर्हीदमिह व्यपदेश्यं सत् आचार्यो न व्यपदिशति ।

किम् ?

स्थानिवद्भावम् । स्थानिवद्भावाद्व्यवधानम्, व्यवधानान्न भविष्यति ।

पूर्वविधौ स्थानिवद्भावो न चायं पूर्वस्य विधिः ।

पूर्वस्मादपि विधिः पूर्वविधिः ॥

तदेतदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते ॥

( प्रदीपः ) उभेग्रहणमिति । सह[4]भावोपसर्जनद्वित्वमुभशब्दस्यार्थ इति भावः । 'द्वे' इत्यनुवृत्त्या द्विरुक्तस्याभ्यस्तसंज्ञायां लब्धायामुभेग्रहणं सहभूतयोरकाभ्यस्तसंज्ञार्थम् ॥

ईर्त्सन्तीति । कृते द्विर्वचनेऽकृत एवाभ्यासलोपेऽन्तरङ्गत्वादुभयोः प्रत्येकं प्रवृत्ताऽभ्यस्तसंज्ञा कृतेऽभ्यासलोपे परस्य न

१ 'व्यपवर्गान्न भविष्यति' इति च. छ. पाठः ॥

२ 'तन्न ताव-' इति ट. पाठः ॥

३ 'प्रतीक्षते' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

४ भाष्ये—'उभेग्रहणं क्रियते तत्सहार्थं विज्ञास्यते' इत्यस्योपपत्तिमाह—सहभावोपसर्जनेति । द्वेपदानुवृत्त्या द्वित्वमिति लब्धम्, उभे ग्रहणञ्च सहभावोपसर्जनत्वं बोधयति ॥

निवर्तेत, उभेग्रहणेन[1] तु निरस्यत इति भावः । ऋध आपश्च सन्[2] । 'सनीवन्तर्द्ध–' इतीडभावपक्षे द्विर्वचनात्परत्वात् प्रतिपदविधेर्बलवत्त्वात् 'आप्ज्ञप्यृधामीत्' इतीत्वं रपरत्वं च । 'न न्द्राः संयोगादयः' इति रेफस्य द्विर्वचनप्रतिषेधः । पूर्वत्रासिद्धीयमद्विर्वचन इति वचनात् धकारस्य चर्त्वेन तकारे कृते 'त्स' इत्यस्य द्विर्वचनम् ।

**अन्ये त्वाहुः**—अभ्यासलोपसंनियोगेनेत्वमुच्यमानं द्विर्वचनं प्रतीक्षत इति प्राग्द्विर्वचनम् । तच्च यदा पूर्वत्रासिद्धीयमद्विर्वचन इत्येतत् 'उभौ साभ्यासस्य' इति सूत्रारम्भादनित्यत्वात् नाश्रीयते तदा 'धृस' इत्यस्य, तदाश्रयणे तु 'त्स' इत्यस्य । तत ईत्वाभ्यासलोपौ, 'ईर्त्स–ईप्स' इति स्थिते, लेट्, झिः । अड्भावश्च प्राप्नोति शप् च । कृताकृतप्रसङ्गित्वानित्यत्वाच्छप् । अड्भावस्तु शपि कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः । ततः 'झोऽन्तः' इत्यन्तादेशश्च प्राप्नोति, पूर्वेण सह शप एकादेशश्च[3] । तत्र वर्णाश्रयत्वादन्तरङ्गत्वादेकादेशस्ततोऽड्भावः प्राप्नोति । **अथवा** शपः प्रागेव परत्वादड्भावः प्राप्नोति । सोऽपि हि नित्यः, शप एकादेशे कृतेऽन्तवड्भावात्तस्य प्रसङ्गात् ॥ **ईर्त्सन्निति** । शतरि कृते शप् च प्राप्नोत्येकादेशश्च । 'तत्र वर्णाश्रयत्वादन्तरङ्गत्वादेकादेशे कृते धातुसार्वधातुकयोर्व्यपवर्गाभावाच्छपोऽप्राप्तिः । तत्र सार्वधातुकमात्रापेक्षत्वाच्छबेवान्तरङ्गत्वात्पूर्वं भवति । तत्र शब्दपरविप्रतिषेधात्परयोरकारयोः पूर्वमेकादेशः, ततः पूर्वेण–इति प्रक्रियाश्रयः सिद्धान्तो भविष्यति । पूर्वपक्षे तु पूर्वयोरकारयोरेकादशे कृते नुम्प्रतिषेधप्रसङ्गश्चोद्यते' ॥ **ऐर्त्सन्निति** । ईर्त्स–लङ्–झिः–शप्[4] । अकारयोः पररूप एकादेशे कृते तस्यान्तवड्भावान्जुस् प्राप्नोति ॥

**अन्यस्याकृत इति** । मितः पूर्वभक्तत्वान्नुमि कृते शब्दान्तरत्वम् ॥

**निमित्तवानिति** । अन्तादेशे[5] कृते एकादेशे च व्यपवर्गाभावाज्जुसोऽप्रसङ्गः ॥

**पूर्वं हीति** । उत्सर्गाणां विषयान्तरस्यापि संभवादपवादविवर्जिते विषये प्रवृत्तेर्न्याय्यत्वात् ॥ **प्रकल्प्य चेति** । यथा 'न संप्रसारणे संप्रसारणम्' इति वचनात्परस्य यणः पूर्वं संप्रसारणं प्रवर्तते, पूर्वस्य तु तन्निमित्तः प्रतिषेधः । यदि तु परस्य यणः पूर्वं न प्रवर्तेत तदा पूर्वस्यापि प्रतिषेधो न स्यात् ॥

**(उद्योतः)** उभेशब्दस्य तादृशविशिष्टार्थवृत्तित्वे मानमाह—**द्वे इत्यनुवृत्त्येति** ॥ भाष्ये—**'विज्ञास्यते'** इत्युक्त्या तस्य तादृशार्थकत्वं न लोकसिद्धमिति सूचितम् ॥ ननु 'द्वे' इत्यनुवर्तनाद्द्वयोरेव संज्ञा स्यात्, नान्यतरापाये इति किमुभेग्रहणेन ? अत आह—**कृते द्विर्वचने इति** । ननु 'ईर्त्सन्ति' इत्यादिवारणायोभेग्रहणं नावश्यकम् । अड्भावनुम्निषेधजुस्भावेषु यथायथं 'अभ्यस्तरूपादङ्गात्' 'अभ्यस्तरूपाद्धातोः' इत्यर्थकरणेनादोषादिति चेन्न; ऊर्णोतेर्यङ्लुगन्तात्परस्य ईर्धादेरदायनापत्तेः[6] । अङ्गस्येत्यस्य षष्ठ्यन्ततयाऽङ्गावयवस्येत्यर्थस्यैवौचित्यात् । जुस्विधावपि धातोर्विहितस्याभ्यस्तात्परस्येत्यर्थस्यैवौचित्याच्च । अत एव न पूर्वपक्षसिद्धान्तयोर्निर्दलता ॥

**अन्तरङ्गत्वादिति** । द्विर्वचनमात्रापेक्षत्वात् । अभ्यासलोपस्तु ईकारसन्नियोगेन विधीयमानो बहिरङ्ग इति भावः । यथोद्देशपक्षं चाश्रित्येदम् ॥ परत्वादित्यस्योत्कृष्टत्वादित्यर्थः[7], तदाह—**प्रतिपदविधेरिति** । तत्रावश्यं प्राप्तेऽस्यारम्भादिति भावः । अभ्यासलोपस्तु पृथगेव विधीयते नैतत्सन्नियोगेन–**इत्यभिमानः** ॥

**सूत्रारम्भादिति** । अन्यथा कृतणत्वस्य द्वित्वे प्राणिणिषतीत्यादिसिद्धेस्तत्सूत्रानर्थक्यं स्पष्टमेवेति भावः ॥ प्रकृते तदनाश्रयणे फलाभावादाह—**तदाश्रयणे त्विति** ॥ तत्र **वर्णाश्रयत्वादिति** । 'वार्णादाङ्गम्–' इति तु न, समानस्थानिकत्वाभावादितिभावः ॥ **'एकादेशश्च'** इत्युत्तरं 'यद्यपि' इति शेषः । **शपोऽप्राप्तिरित्यस्य** 'तथापि' इति शेषः ॥ **शबेवान्तरङ्गत्वादिति** । एकादेशस्त्वपदान्तत्वविशिष्टं पूर्वमकारं गुणसंज्ञकमुत्तरं चापेक्षत इति बह्वपेक्षत्वाद्बहिरङ्ग इति भावः ॥ सिद्धान्तपूर्वपक्षयोराशयं दर्शयति—**तत्र शब्देति** ॥ **पूर्वयोरकारयोरिति** । अन्तरङ्गत्वादिदमेवोचितम् । वस्तुतस्तु **'तत्र शब्द–इत्यादि चोद्यते'** इत्यन्तोऽग्रन्थः[8] । सर्वनामस्थानोत्पत्तेः पूर्वं त्रयाणामेकादेशे कृते उभयत आश्रयणेऽन्तादिवद्भावाभावाद्व्यपवर्गाभाव इति हि सिद्धान्तभाष्ये वक्ष्यति । **किंच** तदा पूर्वं पूर्वयोः परयोर्वा एकादेशे न विशेषः, तस्मात्पदस्य विभज्यान्वाख्यानमिति **पूर्वपक्षः** । अन्यथा 'सिद्धान्ते' इति वक्तुमुचितम् ॥ भाष्ये—**अनत इत्युभयोः शेष इति** । अत एव प्रतीपिषन्तीत्यादौ नाड्भावः ॥ भाष्ये—**एकादेश इति** । पूर्वयोरेकादेशे कृते शतुरकारेणैकादेशस्य संप्रधारणेति बोध्यम् ॥

ननु नुम्प्रतिषेधे कृतेऽकृते च द्वयोरकारयोरेव पररूपमिति कथमनित्यत्वम् ? अत आह—**मित इति** । तत्राकृतेऽनवयवस्याकारस्य पररूपनिमित्तत्वम्, कृते तु वर्णग्रहणेऽपि क्वचिदागमा इति न्यायाङ्गीकारात्सावयवस्य–**इत्यभिमानः** । इदमपि 'अचोऽवयवो मित्' इत्यभ्युपेत्य । वस्तुतो यस्य विहितस्तस्यैवावयव इति **सिद्धान्तः** । इदमेव ध्वनयन्ननित्यत्वमेकादेशस्योक्त्वाऽपि उपसंहारे 'नित्यत्वाच्चैकादेशः' इति वक्ष्यति भाष्यकृत् । अत एव प्रतीपिषन्नित्यादौ न नुम्निषेधः ॥ भाष्ये—**एकादेशे कृते नास्ति व्यवधानमिति** । एवं च जुस्भावेन बाधादन्तिभावाप्राप्तावेकादेशे कृते व्यपवर्गाभावान्न भविष्यतीत्यसङ्गतमिति भावः । एतदुत्तरम्–'एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव' इति क्वचित्पाठो दृश्यते **सोऽग्रन्थः**[9] । एवं हि जुस्भावाप्राप्तावन्तिभावे कृते व्यपवर्गाभावान्न भविष्यतीत्यस्य स्थिरत्वे **'किं पुनः कारणम्'** इत्यग्रिमग्रन्थानुत्थानापत्तेः । **किञ्च 'इदमिह व्यपदेश्यं सदाचार्यः'** इत्यादेरप्यसङ्गत्यापत्तिरिति बोध्यम्[10] ॥ (भाष्ये) **अन्तिरेकादेशं तावदिति** । सनकारशबकारयोरेकादेशमित्यर्थः । यदि

---

१ 'उभेग्रहणात्तु' इति च. झ. पाठः ॥

२ ऋध आपश्चेति । ईर्त्सन्ति–ईप्सन्तीत्यादौ । रूपसिद्धिमाह—सनीवन्तर्द्धेति ॥

३ 'प्राप्नोति, शप एकादेशश्च' इत्येव पाठः क. ट. पुस्तकयोः ॥

४ 'ईर्त्सलङ् झिः शप्' इति च. झ. पाठः ॥

५ 'अन्तादेशे प्राकृते' इति च. झ. पाठः ॥

६ 'झादेरदाय–' इति झ. पाठः ॥

७ 'परत्वादित्यस्येष्टत्वादित्यर्थः' इति झ. पाठः ॥

८ एकोनविंशतितमे पृष्ठे एकोनविंशतिसंख्याकेऽनुक्रमे ग्रन्थोऽयम् ॥

९ त्रयोविंशतिसंख्याकानुक्रमे ग्रन्थोऽयम् ॥

१० त्रयस्त्रिंशत्तमानुक्रमे ग्रन्थोऽयम् ॥

तदुत्तरमन्तिः स्याज्जुसा वाधः संभाव्येत । ततः प्रागेव त्वन्तौ त्रयाणामकाराणां पररूपे व्यपवर्गाभावाज्जुसोऽप्राप्तिरिति भावः ॥ (भाष्ये) **न पुनस्तावत्येवेति** । एकादेशात्प्रागेवेत्यर्थः । [1]उपदेशिवद्वचनात् झोऽन्तस्यान्तरङ्गत्वमिति भावः ॥ (भाष्ये) **अन्तिभावेनेति** । 'सर्वे [2]सर्वपदादेशाः' इति न्यायेन झविशिष्टस्यान्तविशिष्ट आदेश इत्यर्थ इति भावः ॥ [3]**इहापि तर्हीति** । [4]द्वित्वात्पूर्वमेवेति भावः ॥ (भाष्ये) **अस्तु, अन्तिभावे इति** । '[5]झेर्जुस्' इत्यादौ प्रक्रियालाघवाय विशिष्ट एव स्थानीति भावः ॥ **केचित्तु**—'झेर्जुस्' [6]इत्यत्रेकारस्योच्चारणार्थत्वेनात्रेतो लोपेऽ[7]शिष्टस्याप्यल्विधित्वेन स्थानिवत्त्वाभावादन्तो झत्वाभावाज्जुसोऽप्राप्तिरित्यरुचेराह—**अथवा यद्यपीति**—आहुः ॥

**पूर्वं हीति**—हिशब्दसूचितमपवादान पूर्वं प्रवृत्तौ न्यायं दर्शयति—**उत्सर्गाणामिति** । यथा [8]कर्मण्यणो विषयान्तरे सावकाशस्याकारान्तेभ्यः सन्देहान्न पूर्वं प्रवृत्तिः, कस्तु निःसन्दिग्धत्वात्तत्र झटिति पूर्वं प्रवर्तेत इति तेन मुक्ते विषयेऽण्प्रवृत्तिरिति न्याय्यत्वमित्यर्थः । 'प्रकल्प्य वा–' इत्यस्य विषयं दर्शयति—**यथा नसंप्रसारण इति** । इदं तु 'न संप्रारणे–' इति सूत्रस्थभाष्यविरुद्धमिति[9]तत्रैव स्फुटं भविष्यति ॥ सहग्रहणवादी 'ऐत्सन्' इत्यादावपि जुसोऽपवादस्य विषयसत्त्वेन पूर्वमन्तिभावाप्रवृत्तिमाह—(भाष्ये) **न खल्वपीति** ॥ (भाष्ये) **पूर्वस्मादपीति** । अत एव 'प्रत्यैषिषन्' इत्यादौ न दोषः ॥

**( पक्षभेदेन सहपदप्रयोजनभाष्यम् )**

**कथं [10]तर्ह्येकैकस्याप्यभ्यस्तसंज्ञा प्राप्नोति ?**

**प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति । तद्यथा—प्रत्येकं वृद्धिगुणसंज्ञे भवतः ।**

**ननु चायमप्यस्ति दृष्टान्तः–समुदाये वाक्यपरिसमाप्तिरिति । तद्यथा—गर्गाः शतं दण्ड्यन्तामिति । अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति ।**

**सत्येतस्मिन् दृष्टान्ते तत्र यदि प्रत्येकमित्युच्यत इहापि सहग्रहणं कर्तव्यम् ।**

**अथ तत्रान्तरेण प्रत्येकमिति वचनं प्रत्येकं गुणवृद्धिसंज्ञे भवत इहापि नार्थः सहग्रहणेन ॥**

**( उद्द्योतः )** अथोभेग्रहणस्य सहार्थत्वमप्रसिद्धमिति बोधयन् तदपि प्रत्याख्यातुमाह–भाष्ये—**कथञ्चैकैकस्येति** ॥ **इहापि नार्थ इति** । लक्ष्यानुरोधादुक्तरीत्या 'अभ्यस्तानामादिः' इत्यस्य पूर्वपर[11]योरप्रवृत्त्या वैयर्थ्याच्चात्र समुदाये वाक्यपरिसमाप्तिन्यायस्यैवाश्रयणम् । पर्यायकल्पनापेक्षयाऽत्रैतन्न्यायाश्रयणकल्पनैवोचितेतिभावः ॥

**( १०४० संज्ञासूत्रम् ॥ ६ । १ । १ आ. ६ )**

## २४४३ जक्षित्यादयः षट् ॥ ६ । १ । ६ ॥

**( ५९८४ षट्पदाक्षेपवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम् ॥ * ॥**



**(भाष्यम्) जक्षित्यादिषु सप्तग्रहणं कर्तव्यम् । सप्त जक्षित्यादयोऽभ्यस्तसंज्ञका भवन्तीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**वेवीत्यर्थम् । वेवीतेरभ्यस्तसंज्ञा यथा स्यात् । वेव्यते । '[12]अभ्यस्तानामादिः' इत्याद्युदात्तत्वं भवति ॥**

**( प्रदीपः )** जक्षितिरादिर्येषां ते जक्षित्यादय इत्याश्रित्याह—**जक्षित्यादिष्विति** ॥

**वेव्यत इति** । 'अभ्यस्तानामादिः' इत्युदात्तत्वं भवति । अन्यथा धातुस्वरे ङित्वाल्लसार्वधातुकानुदात्तत्वे यणादेशे च कृते 'उदात्तस्वरितयोर्यणः–' इति स्वरितत्वं प्रसज्येत ॥

**( उद्द्योतः )** वक्ष्यमाणरीत्या सप्तग्रहणस्यानावश्यकत्वादाह—**जक्षितिरादिरिति** ॥ [13]ननु वेव्यत इत्यत्र 'आत्मनेपदेष्वनतः' इत्यदादेशस्य सिद्धेः किमभ्यस्तसंज्ञया ? इत्यत आह—**अभ्यस्तानामादिरिति** ॥ **स्वरितत्वं प्रसज्येतेति** । व्यशब्दाकारस्येत्यर्थः ।

---

१ उपदेशिवद्वचनादिति । 'आयनेयी–' ( ७।१।२ ) इति सूत्रे 'आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' इति वार्तिकं तस्यात्राप्यनुवृत्तिरिति भावः । उपदेशिवद्वचनेन च प्रथमोपस्थितत्वादन्तादेशस्यान्तरङ्गत्वमिति भावः ॥

२ ननु झकारमात्रस्थानेऽन्तादेशो विधीयते तथा च कथम् 'अन्तिभावेन भवितव्यम्' इति भाष्यमुपपद्येत ? तदाह—सर्वे सर्वपदादेशा इति ॥

३ ठ. पुस्तके 'इहापि तर्हीति । द्वित्वात्पूर्वमेवेति भावः' इति ग्रन्थो न दृश्यते, झ. पुस्तके 'द्वित्वात्पूर्वमेवेत्यर्थः' इति पाठः ॥

४ द्वित्वात्पूर्वमिति । अन्तादेशस्योपदेशिवद्वचनादन्तरङ्गत्वात्पूर्वं प्रवृत्तिरिति भावः ॥

५ ननु स्थानिवद्भावाज्झित्वेऽपि झकारमात्रादेशो जुस् न स्यादत आह—झेर्जुसित्यादाविति ॥

६ 'तत्रेकारस्य' इति पाठो ग. ज. पुस्तकयोः ॥

७ 'लोपे विशिष्टस्याल्विधित्वेन' इति झ. पाठः । 'विशिष्टस्याप्यल्विधित्वेन' इति ठ. पाठः । तत्र 'लोपेऽवशिष्टस्याप्य–' इति पाठस्तु साधुतरः । इकारस्योच्चारणार्थत्वेनावशिष्टस्य झमात्रस्य स्थानित्वेनाल्विधित्वमित्यर्थः । 'विशिष्टस्यापि' इति पाठे सूत्रे झेरिति विशिष्टस्य स्थानित्वेन निर्देशेऽपि तस्योच्चारणार्थत्वेनाल्विधित्वमित्यर्थः । 'विशिष्टस्याल्विधित्वेन' इति पाठस्तु प्रामादिकः ॥

८ यथा कर्मण्यण इति । कर्मण्यणिति सूत्रस्याकारान्तभिन्नधातुविषये चरितार्थस्य 'आतोऽनुपसर्गे कः' इत्येतस्य विषये सन्देहान्नपूर्वं प्रवृत्तिरिति भावः ॥

९ तत्रैव स्फुटमिति । तत्र हि भाष्ये—'नैतस्याः परिभाषायाः सन्ति प्रयोजनानि' इत्युक्तम् । उद्द्योते च—'एतद्विषयोदाहरणानि न परिभाषया सिद्ध्यन्ति, व्यधादौ यणोऽन्त्येन समानदेशत्वाभावात्' इत्येवं तद्भाष्यं व्याख्यातम् ॥

१० 'कथञ्चैकैकस्या–' इति उद्द्योतसंमतः पाठः ॥

११ पूर्वपरयोरप्रवृत्त्येति । अभ्यस्तानामादिरित्यस्य समुदाये वाक्यपरिसमाप्तिन्यायान्नोभयत्र प्रवृत्तिरिति अत्रापि प्रत्येकस्याभ्यस्तसंज्ञाया आनर्थक्यात्सहग्रहणस्य वैयर्थ्यमिति भावः ॥

१२ छ. पुस्तके नास्य पाठः ॥

१३ ननु वेवीङ्धातोरभ्यस्तसंज्ञाऽभावात् 'अदभ्यस्तात्' इत्यनेनादादेशाभावे रूपासिद्धिः स्यादत आह—ननु वेव्यते इति ॥

सिद्धान्तेऽपि 'उदात्तादनुदात्तस्य–' इति स्वरितस्यैवेष्टत्वाच्चिन्त्यमिदम्। तस्माद्देशब्दैकारे उदात्तश्रवणं न स्यादित्येव वक्तुं युक्तम् ॥

(५९८५ षड्पदप्रत्याख्यानवार्तिकम् ॥ २ ॥)

**॥*॥ अपरिगणनं वा गणान्तत्वात् ॥*॥**

**(भाष्यम्) न वाऽर्थः परिगणनेन । अस्त्वागणान्तमभ्यस्तसंज्ञा ॥**

**इहापि तर्हि प्राप्नोति—आङः शासु ।**

**अस्तु ।**

**अभ्यस्तकार्याणि कस्मान्न भवन्ति ?**

**भूयिष्ठानि [1]कार्याणि परस्मैपदेषु, आत्मनेपदी चायम् ।**

**स्वरस्तर्हि प्राप्नोति । यत्राप्यस्यात्मनेपदेष्वभ्यस्तकार्यं स्वरस्तत्राप्यनुदात्तेतः परं लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वे कृते नास्ति विशेषो धातुस्वरेणोदात्तत्वे सत्यभ्यस्तस्वरेण वा ॥**

**षसिवशी छान्दसौ । दृष्टानुवि[2]धेयश्छन्दसि भवन्ति ॥**

**चर्करीतमभ्यस्तसंज्ञमेव ॥**

**ह्नुङस्तर्हि प्राप्नोति ।**

**अस्तु ।**

**अभ्यस्तकार्याणि कस्मान्न भवन्ति ?**

**भूयिष्ठानि परस्मैपदेषु, आत्मनेपदी चायम् ।**

**स्वरस्तर्हि प्राप्नोति ।**

**'अह्नुङोः' इति प्रतिषेधविधानसामर्थ्यात्स्वरो न भविष्यति ॥**

(प्रदीपः) **आङः शास्विति** । वेवीङोऽनन्तरमयं कैश्चित्पठ्यत इति भावः ॥

**भूयिष्ठानीति** । बहुतराणीत्यर्थः ॥

**षसिवशी इति** । षस शास्ति स्वप्न इति ये न पठन्ति केवलं षस स्वप्ने वश कान्ताविति तन्मतेनैतदुक्तम् । **अन्ये त्वाहुः**–[3]शास्तीति धातुपाठ एव शासः श्तिपा निर्देशः कृतः, अर्थभेदात्तु द्विः [4]पठितः । **अन्ये तु**—षस स्वप्न इति न पठन्ति । वशेर्भाषायां वार्तिककारमतेन प्रयोगः साधुः ॥

**चर्करीतमिति** । यङ्लुगन्तस्य पूर्वाचार्यसंज्ञा ॥

**अन्ह्नुङोरिति** । यदि ह्नुङोऽभ्यस्तसंज्ञा स्यात् 'ह्नुवाते ह्नुवते' इत्यादौ कृतेऽभ्यस्तस्वरे लसार्वधातुकस्य भवितव्यमेव निघातेनेति प्रतिषेधोऽनर्थकः स्यात् । तस्मात्प्रतिषेधसामर्थ्यात् प्रत्ययस्वर एव भवति, नाभ्यस्तस्वरः । नन्वसति प्रयोजने ज्ञापकम् । अस्ति च प्रतिषेधस्य प्रयोजनम्—'ह्नुते–ह्नुषे' इत्यादावनुदात्तत्वं मा भूत्, प्रत्ययस्वर एव यथा स्यात् । अत्र हि 'अभ्यस्तानामादिः' इति न प्रवर्तते, अजादौ तस्य विधानात् । तत्रासति प्रतिषेधे 'अनुदात्ते च' इत्याद्युदात्तं पदं स्यात् । सति तु प्रतिषेधेऽन्तोदात्तं भवतीति ज्ञापकत्वं नोपपद्यते । एवं तर्हि 'अभ्यस्तानामादिः' इत्यत्र 'अन्ह्नुङोः' इत्यनुवृत्त्या प्रतिषेध[5]वचनसामर्थ्यादित्यर्थोऽभिप्रेतः ॥

(उद्योतः) ननु जक्षित्यादिभ्यः पूर्वमेव 'आस उपवेशने' इत्यनन्तरम् 'आङः शासु' इति पठ्यत इति कथं तस्याभ्यस्तसंज्ञा स्यात् ? अत आह—**वेवीङोऽनन्तरमिति** ॥

ननु मैत्रेयादयो वेवीङनन्तरं 'षस शास्ति स्वप्ने' 'वश कान्तौ' इति पठन्तीति 'षसिवशी' इति द्वयोरेव कथमुपादानम्? अत आह–**षस शास्तीति** । केचित्तु–'षस षस्ति' इति पठन्ति ॥ 'शास्ति' इति पाठेऽपि न पृथग्धात्वन्तरमिदं तकारान्तमिदित्, किन्तु शासः श्तिपा निर्देश इति मतेन भाष्यमित्याह—**अन्ये त्वाहुरिति ॥ शास इति** । आङः शास्विति–अनुदात्तेत इत्यर्थः ॥ ननु वशेश्छान्दसत्वे 'वष्टि भागुरिः–' इत्यादिप्रयोगाणां का गतिः ? अत आह–**वशेरिति** । यदि भाष्यवार्तिककारौ प्रमाणं तर्ह्यसाधुरेव स प्रयोग इति भावः ॥

**निघातेनेति** । शेषनिघातेनेत्यर्थः ॥ **अनुदात्ते चेति** । अनेनानुदात्तत्वे हि अविद्यमानोदात्तलसार्वधातुकमस्तीत्यभ्यस्तत्वे तत्प्रवृत्तिः स्यादिति भावः ॥ **अह्नुङोरित्यनुवृत्त्येति** । इङ् प्रसङ्गोच्चारितः ॥ **प्रतिषेधविधानसामर्थ्यादिति** । भाष्यस्वारस्यात्तत्राचीति नानुवर्तेत इत्यन्ये ॥

(षट्पदार्थकथनपरभाष्यम्)

**अथवा सप्तैवेमे धातवः पठ्यन्ते । जक्ष्–अभ्यस्तसंज्ञो भवति । इत्यादयश्च षट्, जक्षित्यादयः षडिति ॥**

(प्रदीपः) **अथवेति** । नायं श्तिपा निर्देशः । किं तर्हि? जक्ष्–इति पृथक् पदम् । **'इत्यादयः'** इत्यत्र इति शब्देन जक्षिः परामृश्यते । आदिशब्दश्च समीपवाची । तेन तत्समीपाः षडभ्यस्तसंज्ञा इति सप्तानामेवाभ्यस्तसंज्ञा सूत्रेण संगृहीतेत्यर्थः ॥

(उद्योतः) **नायं श्तिपेति** । श्[6]तिपि 'रुदादिभ्यः–' इटि तद्रूपं नेत्यर्थः ॥ **समीपवाचीति** । एवं चातद्गुणसंविज्ञानबहुव्रीहिणा जक्षेः परे षट्, जक्षिश्चेति सप्तानां सिद्धा संज्ञेत्यर्थः ॥

---

(१०४१ विधिसूत्रम् ॥ ६ । १ । १ आ. ७)

## २४४४ तुजादीनां दीर्घोऽभ्यासस्य ॥ ६ । १ । ७ ॥

(५९८५ उपसंख्यानवार्तिकम् ॥ १ ॥)

**॥*॥ तुजादिषु च्छन्दःप्रत्ययग्रहणम् ॥*॥**

**(भाष्यम्) तुजादिषु च्छन्दः प्रत्ययग्रहणं कर्तव्यम् । छन्दसि तुजादीनां दीर्घो भवतीति वक्तव्यम् ।**

१ 'कार्याणि' इत्यस्य छ. ट. पुस्तके न पाठः ॥
२ 'दृष्टानुविधिश्छन्दसि भवति' इति छ. ट. पाठः ॥
३ 'शासः श्तिपा निर्देशः' इत्येव क. पाठः ॥
४ 'द्विः पठ्यते' इति च. पाठः ॥
५ 'प्रतिषेधविधानसामर्थ्यात्' इति उद्द्योतसंमतः पाठः ॥
६ ननु श्तिपा निर्देशे 'जक्षितिः' इति निर्देशः स्यादित्याशङ्कां निरस्यन्नाह—श्तिपीति ॥

अस्मिंश्चास्मिंश्च प्रत्यय इति वक्तव्यम् । इह मा भूत्—तुतोज शबलान् हरीन् ॥

( ५९८६ उपसंख्यानानुपयोगकथने वार्तिकम् ॥ २ ॥ )

॥*॥ अनारम्भो वाऽपरिगणितत्वात् ॥*॥

( भाष्यम् ) अनारम्भो वा पुनश्छन्दसि दीर्घत्वस्य न्याय्यः ।

कुतः ?

अपरिगणितत्वात् । न हि च्छन्दसि दीर्घस्य परिगणनं कर्तुं शक्यम् ।

किं कारणम् ?

( ५९८७ उपसंख्यानानुपयोगसाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अन्येषां च दर्शनात् ॥ * ॥

( भाष्यम् ) येषामपि दीर्घत्वं नारभ्यते तेषामपि च्छन्दसि दीर्घत्वं दृश्यते । तद्यथा—पूरुषः, नारक इति ॥

( ५९८८ उपसंख्यानानुपयोगसाधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ अनेकान्तत्वाच्च ॥ * ॥

( भाष्यम् ) येषां चाप्यारभ्यते तेषामप्यनेकान्तः । यस्मिन्नेव च प्रत्यये दीर्घत्वं दृश्यते तस्मिन्नेव च प्रत्यये न दृश्यते—मामहान[1] उक्थपात्रम्, ममहान इति च ॥

---

( १०४२ द्वित्वविधिसूत्रम् ॥ ६ । १ । १ आ. ८ )

## २४४५ लिटि धातोरनभ्यासस्य ॥ ६ । १ । ८ ॥

( द्वित्वाधिकरणम् )

( पदकृत्यभाष्यम् )

धातोरिति किमर्थम् ?

ईहाञ्चक्रे ।

नैतदस्ति । लिटीत्युच्यते, न चात्र लिटं पश्यामः ।

प्रत्ययलक्षणेन ।

'न लुमता तस्मिन्' (१।१।६३) इति प्रत्ययलक्षणप्रतिषेधः ।

इदं तर्हि—सस्वांसो विशृण्विरे ॥

( उद्द्योतः ) भाष्ये—ईहाञ्चक्रे इति । आमन्तो न धातुरिति भावः ॥ विशृण्विरे इति । श्रुवो लिट इरेचि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् श्नुः शृभावः श्नुश्च । अत्र विकरणान्तसमुदायो लिट्परो न धातुरिति तदीयप्रथमैकाचो न द्वित्वमिति भावः ॥

( ५९८९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥*॥ लिटि द्विर्वचने जागर्तेर्वावचनम् ॥*॥

( भाष्यम् ) लिटि द्विर्वचने जागर्तेर्वेति वक्तव्यम् । यो जागार तमृचः कामयन्ते । यो जजागार तमृचः कामयन्ते ।

( पदकृत्यभाष्यम् )

अनभ्यासस्येति किम् ?

कृष्णो नोनाव वृषभो यदीदम् । नोनूयतेर्नोनाव ॥

( ५९९० अभ्यासप्रतिषेधानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ अभ्यासप्रतिषेधानर्थक्यं च छन्दसि वावचनात् ॥ * ॥

( भाष्यम् ) अभ्यासप्रतिषेधश्चानर्थकः ।

किं कारणम् ?

छन्दसि वावचनात् । अवश्यं छन्दसि वा द्वे भवत इति वक्तव्यम् ।

किं प्रयोजनम् ?

( प्रदीपः ) अभ्यासप्रतिषेधानर्थक्यमिति । जुगुप्सिषते लोलूयिषत इत्यादौ सकृत्प्रवृत्त्या लक्षणस्य[2] चरितार्थत्वात्पुनः प्रवृत्त्यभावादुत्तरार्थो[3]ऽप्यभ्यासप्रतिषेधो न कर्तव्यः । 'चङि' इत्येतदर्थस्तु कर्तव्यः[4] । यदा सन्यङन्ताण्णिचि कृते चङ् भवति—अजुगुप्सत्–अलोलूयत्–इति तदा द्विर्वचनं मा भूदिति चिन्त्यमेतत् ॥

( उद्द्योतः ) ननूत्तरार्थं तदावश्यकमत आह—जुगुप्सिषत इति । स्वार्थसन्नन्तादिच्छासन् । उत्तरत्र[5] यङन्तात्सन् ॥

तदा द्विर्वचनमिति । लक्षणभेदादित्यर्थः[6] । एवं यङन्तात्सन्यपि लक्षणाभेदो[7] द्रष्टव्यः । अत[8] एव 'स्तौतिण्योः—' इति सूत्रे भाष्ये यङन्तात्सनि सोषुपिषत इति प्रयुक्तं सङ्गच्छते । प्रकृतसूत्रे प्रयोजनाभावपरं तु भाष्यमिति भावः । 'अभ्यासप्रतिषेधानर्थक्यं छन्दसि वावचनात्' इति भाष्यवार्तिकस्वारस्याल्लोके एषां प्रयोगाणामसाधुत्वं कल्पयितुं युक्तमित्यपरे ॥

( ५९९१ विकल्पप्रयोजनवार्तिकम् ॥ ३ ॥ )

॥*॥ प्रयोजनमादित्यान्याचिषामहे ॥*॥

( भाष्यम् ) यियाच्चिषामह इति प्राप्ते । देवता नो दाति प्रियाणि, ददाति प्रियाणि । मघवा दातु,

---

१ मामहान इति । मह पूजायामित्यस्माल्लिटः कानचि द्वित्वेऽभ्यासस्य दीर्घे रूपम् । ममहानेत्यस्यापि दर्शनादेतत्सूत्रं नारम्भणीयमित्याशयः ॥

२ लक्षणस्य—सन्यङोरिति सूत्रस्य ॥

३ उत्तरार्थः—सन्यङोरित्युत्तरसूत्रेऽप्यभ्यासप्रतिषेधोऽनर्थक इति भावः ॥

४ 'कर्तव्य एव' इति च. पाठः ॥

५ उत्तरत्र—लोलूयिषत इत्यत्र ॥

६ लक्षणभेदादिति । सन्नन्ताण्णिचि चङि—अजुगुप्सत्—इत्यत्र 'सन्यङोः' 'चङि' इति लक्षणद्वयप्राप्तं द्वित्वमिति लक्षणभेद इत्यर्थः ॥

७ 'लक्षणभेदो द्रष्टव्यः' इति झ. ठ. पाठः । यङन्तात्सनि 'सन्यङोः' इत्येकेनैव सूत्रेण द्वित्वप्राप्तेर्लक्षणाभेद इत्यर्थः । लक्षणभेद इति पाठस्तु लेखकप्रमादात् ॥

८ अत एव—लक्षणाभेदादेव ॥

मघवा ददातु । स न स्तुतो वीरवद्धातु । वीरवद्धातु ॥

( धातुग्रहणप्रत्याख्यानभाष्यम् )

यावतेदानीं छन्दसि वा द्वे भवत इत्युच्यते धातुग्रहणेनापि नार्थः ।

कस्मान्न भवति—ससृवांसो विशृण्विर इति ?

छन्दसि वावचनात् ॥

तदेतद्धातुग्रहणं सान्यासिकं तिष्ठतु तावत् ॥

( उद्योतः ) भाष्ये—तदेतद्धातुग्रहणमिति । अयं भावः—धातुग्रहणाभावे लिटीत्यादि प्रथमैकाच[1] एव विशेषणं स्यात्, तथाच पपाचेत्यादावेव स्यान्न तु जजागारेत्यादौ, तस्य लिट्परत्वाभावादिति ॥

—॰—

( १०४३ द्वित्वविधिसूत्रम् ॥ ६ । १ । १ आ. ९ )

## २४४६ सन्यङोः ॥ ६ । १ । ९ ॥

( विभक्तिसन्देहभाष्यम् )

किमियं षष्ठी, आहोस्वित्सप्तमी ?

कुतः सन्देहः ?

समानो निर्देशः ।

किं चातः ?

यदि षष्ठी[2], सन्यङन्तस्य द्विर्वचनेन भवितव्यम् ।

अथ सप्तमी, सन्यङोः परतः पूर्वस्य[3] द्विर्वचनेन भवितव्यम् ।

कश्चात्र विशेषः ?

( प्रदीपः ) किमियं षष्ठीति । विभक्तिविचारद्वारेण तदर्थो विचार्यते ॥

किं चात इति । अर्थभेदप्रश्नः ॥

सन्यङन्तस्येति । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य' इति षष्ठीपक्षे तदन्तविधिः । सप्तमीपक्षे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानाद्धातोरित्यधिकाराच्च पूर्वस्य धातोः कार्यभाक्त्वम् ॥

कश्चात्र विशेष इति । लक्ष्यगतविशेषप्रश्नः ॥

( उद्योतः ) विभक्तिविचारस्य प्रकृतानुपयोगादाह—विभक्तीति ।

सप्तमीपक्षेऽपि तदन्तविधिर्दुर्वारोऽत आह—परिभाषोपस्थानादिति । एवञ्च सनि परे इत्यर्थे कस्मात्-इत्यवधिसाकाङ्क्षत्वेन यस्माद्विहितस्तस्मादित्यन्वये 'प्रत्ययग्रहणे चापञ्चम्याः' इति निषेधान्न तदन्तविधिरिति भावः ॥

अर्थकृतविशेषस्य स्पष्टमुक्तत्वात्प्रश्नानुपपत्तेराह—लक्ष्यगतेति ॥

( ५९९२ सप्तमीपक्षे दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सन्यङोः परत इति चेदिटो द्विर्वचनं परादित्वात् ॥ * ॥**

( भाष्यम् ) सन्यङोः परत इति चेदिटो द्विर्वचनं कर्तव्यम् । अटिटिषति, अशिशिषति ।

किं पुनः कारणं न सिद्ध्यति ?

परादित्वात् । इट् परादिः ॥

( ५९९३ सप्तमीपक्षे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ हन्तेश्चेटः ॥ * ॥**

( भाष्यम् ) हन्तेश्चेटो द्विर्वचनं कर्तव्यम् । जेघ्नीयते ॥

( प्रदीपः ) हन्तेश्चेति । 'गमहन–' इत्युपधालोपस्य स्थानिवद्भावात् हन एव द्विर्वचनप्रसङ्गः ॥

( उद्योतः ) हन्तेश्चेति । 'हन्तेरुत्तरस्य[4] यङ ईट्' इति पक्षे इदम् ॥ ननूपधालोपेऽनच्कत्वाद्धातोर्द्विर्वचनाप्रसङ्ग एवेत्यत आह—गमहनेति ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

ननु च यस्यापि सन्यङन्तस्य द्विर्वचनं तस्यापि स्थानिवद्भावप्रसङ्गः । ईटि स्थानिवद्भावादीटो द्विर्वचनं न प्राप्नोति ।

नैष दोषः ।

द्विर्वचननिमित्तेऽचि स्थानिवदित्युच्यते, न चासौ द्विर्वचननिमित्तम् । यस्मिन्नपि द्विर्वचनं यस्यापि द्विर्वचनं सर्वोऽसौ द्विर्वचननिमित्तम् ।

तस्मादीटो द्विर्वचनम् । तस्मादुभाभ्यामेव ईटो द्विर्वचनं कर्तव्यम्, यश्चोभयोर्दोषो न तमेकश्चोद्यो भवति ॥

( प्रदीपः ) यस्यापीति । सति तस्मिन् कार्यभावादस्त्येव निमित्तत्वमिति भावः । यद्यपि रूपस्थानिवद्भावादीटो न भवति द्विर्वचनं तथापि प्राप्तिमात्राश्रयणे द्विर्वचननिमित्तत्वमीकारस्योच्यते ॥

( उद्योतः ) ननु सन्यङन्तस्य द्वित्वे ईटः कार्यित्वेन निमित्तत्वाभावात्कथमुपधालोपस्य स्थानिवत्त्वम् ? अत आह—सतीति । तद्भावभावितामात्रेण निमित्तता । एवञ्च ईड्विशिष्टस्य प्रथमैकाच्त्वाभावेन तस्य द्वित्वं न स्यादिति भावः ॥ यद्यपीति । एवञ्च ईकारस्य द्वित्वनिमित्तत्वाभावात्स्थानिवत्त्वं दुर्लभमिति भावः ॥ प्राप्तिमात्राश्रयेणेति । 'यदि स्थानिवत्त्वं न स्यात् स्यादेवेटो द्विर्वचनम्' इति काल्पनिकप्राप्तिमात्राश्रयेणेत्यर्थः ॥

---

१ प्रथमैकाच एवेति । धातुग्रहणाभावे हि लिट्परस्य प्रथमैकाचो द्वे स्त इत्यर्थेन पपाचेत्यत्र लिट्परस्य तस्य सत्वेन द्वित्वमुपपद्येत, जजागारेत्यत्र तु लिट्परस्य प्रथमैकाचोऽसंभवाद्वित्वाभावः स्यादतो धातुग्रहणमिति भावः ॥

२ यदि षष्ठीति । सन्यङोरित्यस्य षष्ठ्यन्तत्वेऽनुवृत्तस्य धातोरित्यस्य विशेषणत्वेन तदन्तविधौ सन्यङन्तस्य धातोरित्यर्थः स्यादित्यर्थः ॥

३ 'पूर्वस्य द्विर्वचनम्' इति छ. पाठः ॥

४ ननु हन्तेर्हिंसायां यङि घ्नी भावो वाच्य इति वार्तिकेन जेघ्नीयत इति सिद्ध्यति, तत्रेटोऽभावात् 'हन्तेश्चेटः' इति वार्तिकमनुपपन्नमत आह—हन्तेरुत्तरस्येति ॥

( ५९९४ सप्तमीपक्षे दोषवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधः ॥ * ॥**

( भाष्यम् ) 'एकाच उपदेशेऽनुदात्तात्' (७।२।१०) इत्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधो वक्तव्यः । बिभित्सति, चिच्छित्सति । द्विर्वचने कृते उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति ॥

( प्रदीपः ) **अनुदात्तविशेषणं चेदिति** । यदा तूभयविशेषणं तदा न दोषः, उपदेश एकाच्त्वात् । सनन्तस्यापि द्विःप्रयोगे द्विर्वचने दोष एव । स्थाने द्विर्वचने तु प्रकृतिप्रत्ययस्य संप्रमुग्धत्वादिटः प्राप्तिरेव नास्तीति न दोषः ॥

( उद्योतः ) भाष्ये सप्तमीपक्षे दोषान्तरमाह—**अनुदात्तविशेषणं चेदिति** । 'एकाचः' इति परविशेषणं चेदित्यपि बोध्यम्, विहितविशेषणपक्षे दोषाभावात् ॥ **सन इट्प्रतिषेध इति** । अन्यथा आवृत्तिकृतद्वित्वेन[1] श्रूयमाणैकाच्त्वस्य बाधितत्वात्स न स्यादिति भावः ॥ षष्ठीपक्षेऽपि दोष एवेत्याह—**सनन्तस्यापीति** ॥

( षष्ठीपक्षावतरणभाष्यम् )

अस्तु तर्हि सन्यङन्तस्य ॥

( ५९९५ षष्ठीपक्षे दोषवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ सन्यङन्तस्येति चेदशेः सन्यनिटः ॥ * ॥**

( भाष्यम् ) सन्यङन्तस्येति चेदशेः सन्यनिटो द्विर्वचनं वक्तव्यम् । इयक्षमाणा भृगुभिः सजोषाः ॥

( प्रदीपः ) **इयक्षमाणा इति** । अश्नोतेः सन् । 'स्मिपूङ्रञ्ज्वशां सनि' इति प्राप्त इट् छान्दसत्वान्न भवति । द्विर्वचनम्, हलादिः शेषः, 'सन्यतः' इतीत्वम्, 'अभ्यासस्यासवर्णे' इतीयङ्, षत्वकत्वषत्वानि, 'पूर्ववत्सनः' इत्यात्मनेपदः शानच् । अचिक्षमाणा इति तु षष्ठीपक्षे प्राप्नोति ॥

( उद्योतः ) नन्वश्नातेः सनि परस्मैपदित्वात् 'इयक्ष्यमाणा' इति न सिध्यतीत्यत आह—**अश्नोतेरिति** ॥ **द्विर्वचनमिति** । अशेः–अश्–अश्–इतीति भावः ॥ **अचिक्षमाणा इति** । अश् स इत्यत्र 'पूर्वत्रासिद्धीयमद्वित्वे' इति परत्वात्षत्वादिषु कृतेषु द्वितीयैकाचः 'क्ष' इत्यस्य द्वित्वे हलादिः शेषः । ततः 'पूर्वत्रासिद्धीयम्' इत्यस्य 'द्वित्वे कर्तव्ये कृते च तदाश्रयस्य कार्यान्तरे कर्तव्येऽसिद्धत्वं न' इत्यर्थात् 'कुहोश्चुः' इति चुत्वे 'सन्यतः' इतीत्वमिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

यस्यापि सन्यङोः परतो द्विर्वचनं तेनाप्यत्रावश्यमिडभावे यत्नः कर्तव्यः ।

किं कारणम् ?

अशेर्हि[2] प्रतिपदमिड्विधीयते—'स्मिपूङ्रञ्ज्वशां सनि' ( ७।२।७४ ) इति । तेनैव द्वितीयद्विर्वचनमपि न भविष्यति ॥

( प्रदीपः ) **तेनैवेति** । यथा छान्दसत्वादिण्न भवति, एवं द्वितीयद्विर्वचनमपि । तदभावात्प्रथमद्विर्वचनम् ॥

( उद्योतः ) **तदभावादिति** । अपवादाभावादुत्सर्गप्रवृत्तिरिति भावः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

अथ वा नैतदशे रूपम् । यजेरेष च्छान्दसो वर्णलोपः ।

तद्यथा—तुभ्येदमग्ने, तुभ्यमिदमग्न इति प्राप्ते ।

अम्बानां चरुम्, नाम्बानां चरुमिति प्राप्ते ।

आव्याधिनीरुगणाः, सुगणा इति प्राप्ते ।

इष्कर्तारमध्वरस्य, निष्कर्तारमध्वरस्येति प्राप्ते ।

शिवा उद्रस्य भेषजी, शिवा रुद्रस्य भेषजीति प्राप्ते ॥

अश्यर्थो वै गम्यते ।

कः पुनरशेरर्थः ?[2]

अश्नोतिर्व्याप्तिकर्मा । एवं तर्हि[3]—यजिरप्यश्यर्थे वर्तते ।

कथं पुनरन्यो नामान्यस्यार्थे वर्तते ?

बह्वर्था अपि धातवो भवन्ति । तद्यथा—वपिः प्रकिरणे दृष्टश्छेदने[4]ऽपि वर्तते—केशान् वपति[5]।

ईडिः स्तुतिचोदनायाच्ञासु दृष्ट ईरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्ति ।

करोतिरयमभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते—पृष्ठं कुरु-पादौ कुरु, उन्मृदानेति गम्यते । निक्षेपणे चापि दृश्यते—कटे कुरु-घटे कुरु-अश्मानमितः कुरु, स्थापयेति गम्यते ॥

एवं तर्हि—

( प्रदीपः ) **वर्णलोप इति** । यियक्षमाणा इति प्राप्ते यकारस्य लोपः । उपेयप्राप्त्यर्थत्वादुपायानां धातूनां चानेकार्थत्वात्तन्नियमे[6] आदराभावः ॥

---

१ आवृत्तिकृतद्वित्वेनेति । द्विःप्रयोगो द्विर्वचनं पाठमिति स्वीकारेणेत्यर्थः । स्थाने द्विर्वचने तु प्रकृतिप्रत्ययसंमोहाच्छ्रूयमाणैकाच्त्वस्य बाधो न स्यात् ॥

२ 'पुनरश्नोत्यर्थः' इति ट. पाठः ॥

३ 'एवं तर्हि' इति छ. पुस्तके नास्ति ॥

४ 'छेदने चापि' इति छ. पाठः ॥

५ 'वपतीति' इति छ. पाठः ॥

६ उपेयेति । उपायानां–व्याकरणादिनियमानां प्रयोगार्थत्वेन यकारलोपाभावविषयकनियमानाश्रयणमित्यर्थः ॥

( ५९९६ षष्ठीपक्षे दोषवार्तिकम् ॥ ५ ॥ )

॥ * ॥ दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात् ॥ * ॥

(भाष्यम्) दीर्घत्वं द्विर्वचनाधिकस्य न सिध्यति । चिचीषति, तुष्टूषति । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टः सन् भवति । तत्राजन्तानां सनीति दीर्घत्वं न प्राप्नोति ॥

इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां द्विर्वचनमिति ।

किमत्र कर्तव्यम् ?

परत्वाद्दीर्घत्वम् ।

नित्यं द्विर्वचनम्, कृतेऽपि दीर्घत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति ।

दीर्घत्वमपि नित्यम् । कृतेऽपि द्विर्वचने प्राप्नोत्यकृतेऽपि प्राप्नोति ।

अनित्यं दीर्घत्वम् । न हि कृते द्विर्वचने प्राप्नोति ।

किं कारणम् ?

समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्याजन्तता नास्तीति दीर्घत्वं न प्राप्नोति ।

द्विर्वचनमप्यनित्यम् । अन्यस्य कृते दीर्घत्वे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति ।

उभयोरनित्ययोः परत्वाद्दीर्घत्वम् ॥

यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तत्र सिध्यति । जुहूषति[1] ॥

कुत्वं द्विर्वचनाधिकस्य न सिध्यति—जिघांसति, जङ्घन्यते ।

किं कारणम् ?

समुदायस्य समुदाय आदेशस्तत्र संप्रमुमुग्धत्वात् प्रकृतिप्रत्ययस्य नष्टो हन्तिर्भवति । तत्राभ्यासाद्धन्तिहकारस्येति कुत्वं न प्राप्नोति ॥

संप्रसारणं च द्विर्वचनाधिकस्य न सिद्ध्यति—जुहूषति, जोहूयते । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टो ह्वयतिर्भवति । तत्र ह्वोऽभ्यस्तस्येति संप्रसारणं न प्राप्नोति ।

नैष दोषः । वक्ष्यत्येतत्—ह्वोऽभ्यस्तनिमित्तस्येति[2] । यावता चेदानीं ह्वोऽभ्यस्तनिमित्तस्येत्युच्यते सोऽप्यदोषो भवति यदुक्तम्—यत्तर्हि नाकृते द्विर्वचने दीर्घत्वं तत्र सिद्धयतीति ॥

षत्वं च द्विर्वचनाधिकस्य न सिद्धयति—पिपक्षति, यियक्षति । समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः सन् भवति । तत्रेण्कुभ्यामुत्तरस्य प्रत्ययसकारस्येति षत्वं न प्राप्नोति ॥

इदमिह संप्रधार्यम्—द्विर्वचनं क्रियतां षत्वमिति ।

किमत्र कर्तव्यम् ?

परत्वात्षत्वम् । पूर्वत्रासिद्धे षत्वम्, सिद्धासिद्धयोश्च नास्ति संप्रधारणा ॥

( प्रदीपः ) **दीर्घकुत्वेति** । यस्माद्द्विर्वचनादाधिक्यमुपजायते तस्माद्दीर्घत्वादीनि न सिध्यन्ति, समुदायादेशत्वात् संप्रमुग्धत्वात् । यदा तु सन्यङोः परतो द्विर्वचनं तदा प्रत्ययसंमोहाभावाद्दीर्घत्वादीनि सिध्यन्ति ॥ **द्विर्वचनाधिकस्येति** । द्विर्वचनेन शब्दान्तरेणादेशेनाधिकत्वात् दीर्घाद्यप्रसिद्धिः । स्थाने द्विर्वचने चायं दोषः, न तु द्विःप्रयोगे । तत्र प्रकृतिप्रत्ययसंप्रमोहाभावात् । सर्वे 'सर्वपदादेशाः' इत्याश्रयेण संप्रमोहः ॥

प्रागेव दीर्घत्वं भविष्यति ततो द्विर्वचनमिति मत्वाऽऽह—**इदमिहेति** ॥

**नित्यं द्विर्वचनमिति** । आकृतिपक्षे शब्दान्तरप्राप्त्यभावात् ॥

**अनित्यमिति** । व्यक्तिपक्ष इति भावः ॥

**जुहूषतीति** । ह्वातुमिच्छतीति सन् । अत्राकृते द्विर्वचनेऽभ्यस्तत्वाभावात् संप्रसारणाभावाद्दीर्घाप्रसङ्ग इति पूर्वं द्विर्वचनम्, ततः संप्रसारणम्, ततः 'हलः' इति दीर्घत्वात्परत्वात् 'अज्झनगमां सनि' इति दीर्घत्वम् ॥

( उद्द्योतः ) 'अधिकस्य द्विर्वचनात्' इति हेतुगर्भमभिधानमित्याह—**यस्मादिति** ॥ आधिक्येऽपि द्विःप्रयोगद्विर्वचनेऽक्षतिरित्याह—**समुदायादेशत्वादिति** । षष्ठीतत्पुरुषः ॥ **संप्रमुग्धत्वादिति** । प्रकृतिप्रत्यययोरित्यर्थः ॥ **द्विर्वचनेनेति** । शब्दान्तररूपादेशरूपद्विर्वचनेनेत्यर्थः ॥ ननु प्रकृतिप्रत्ययैकदेशयोरयमादेश इति कथं प्रकृतिप्रत्ययसंमोहः? अत आह—**सर्वे इति** । अवयवसंमोहद्वारकस्तत्संमोह इत्यपि बोध्यम् ॥

**आकृतीति** । प्रथमैकाच्त्वाकृतेरेकत्वात् । वस्तुत इदमग्रे भाष्ये एवोच्यते इति न किञ्चिदेतत् ॥

भाष्ये—**अजन्तता नास्तीति** । अजन्ताङ्गता नास्तीत्यर्थः । प्रकृतिप्रत्ययसंमोहादङ्गत्वाप्रतीतिरिति भावः ॥

**व्यक्तीति** । व्यक्त्योर्दीर्घभावाभावाभ्यां भेदात् ॥

ननु जुहोतेः सनि दीर्घे द्वित्वे जुहूषतीत्यस्य सिद्धेः 'यत्र तर्हि' इत्याद्यसङ्गतमत आह—**ह्वातुमिति** ॥ **'अकृते द्विर्वचने'** इत्यस्य 'दीर्घाऽप्रसङ्गः' इत्यनेनान्वयः ॥ ननु द्वित्वे संप्रसारणे 'हलः' इति दीर्घत्वेन सिद्धिरत आह—**परत्वादिति** । वस्तुतः 'हलः'

१ 'जुहूषतीति' इतीतिशब्दघटितश्च. क्ष. पाठः ॥

२ 'ह्वः संप्रसारणमभ्यस्तस्येति' इति छ. पाठः ॥

इति दीर्घत्वमपि न, प्रकृतिप्रत्ययसंमोहात्सम्प्रसारणान्ताङ्गाभावात् । संप्रसारणं तु सामर्थ्याद्भविष्यतीति बोध्यम् ॥

भाष्ये—सोऽप्यदोष इति । द्वित्वात्प्राक् संप्रसारणे परत्वाद्दीर्घे च सिद्धेरिति भावः ॥

( भाष्ये ) नास्ति संप्रधारणेति । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनाश्रित्येदम् ॥

( ५९९७ षष्ठीपक्षे दोषवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ आवृद्ध्योश्चाभ्यस्तविधि-प्रतिषेधः ॥ * ॥

( भाष्यम् ) आवृद्ध्योश्चाभ्यस्ताश्रयो विधिः प्राप्नोति स प्रतिषेध्यः । ईप्सन्ति, ईर्त्सन्ति । ईप्सन्, ईर्त्सन् । ऐप्सन्, ऐर्त्सन् ।

किं च स्यात् ?

अद्भावो नुम्प्रतिषेधो जुस्भाव इत्येते विधयः प्रसज्येरन् ॥

नैष दोषः । उक्ता अत्र परिहाराः ॥

(उद्द्योतः) उक्ता अत्रेति । 'उभे अभ्यस्तम्' इति सूत्रे इति भावः ॥

( ५९९८ षष्ठीपक्षे दोषवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ सङाश्रये च[1] समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेश आमिश्रत्वात् ॥ * ॥

( भाष्यम् ) सङाश्रये च कार्ये समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेशः ।

किं कारणम् ?

आमिश्रत्वात् । आमिश्रीभूतमिवेदं भवति । तद्यथा—क्षीरोदके संपृक्ते आमिश्रत्वान्न ज्ञायते कियत् क्षीरं कियदुदकमिति, कस्मिन् वा अवकाशे क्षीरं कस्मिन्नवकाशे उदकमिति । एवमिहाप्यामिश्रत्वान्न ज्ञायते—का प्रकृतिः, कः प्रत्ययः, कस्मिन्नवकाशे प्रकृतिः, कस्मिन्नवकाशे प्रत्यय इति ।

तत्र को दोषः ?

सङि[2] झलीति कुत्वादीनि[3] न सिद्ध्यन्ति ।

इदमिह संप्रधार्यम्—द्विर्वचनं क्रियताम्, कुत्वादीनीति; किमत्र कर्तव्यम् ?

परत्वात्कुत्वादीनि । पूर्वत्रासिद्धे कुत्वादीनि, सिद्धासिद्धयोश्च नास्ति संप्रधारणा ॥

एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इति वक्तव्यम् । तच्चावश्यं वक्तव्यम् । विभाषिताः[4] प्रयोजयन्ति । दोग्धा-दोग्धा । द्रोढा-द्रोढा ॥

यावता चेदानीं पूर्वत्रासिद्धीयमद्विर्वचन इत्युच्यते सोऽप्यदोषो भवति यदुक्तं 'षत्वं न सिद्ध्यति' इति ॥

( प्रदीपः ) क्षीरोदके इति । व्यक्ति[5]विशेषविवक्षायां जातिपरत्वाभावादेकवद्भावो न कृतः । सप्तम्येक[6]वचनं वा । प्रत्ययसकारसहितस्य प्रथमस्यैकाचो द्विर्वचनादामिश्रत्वम् ॥

सङीति । सनः सकारादारभ्य महिङो ङकारेण प्रत्याहारः ॥

विभाषिता इति । विधय इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—झलाश्रये चेतिस्वरूपकथनम् ॥ प्रत्ययसकारसहितस्येति । अवयवसंमोहद्वारकस्तत्संमोह इत्यर्थः । झलादौ सङादौ प्रत्यये कुत्वादिविधानादिति भावः ॥ भाष्ये—कस्मिन्नवकाशे इति । सर्वथा प्रकृतिप्रत्ययसंमोहपरमेतद्द्रष्टव्यम् ॥

विधय इति । घत्वादयः । अत्र घत्वादिषु कृतेषु पश्चात् 'नित्यवीप्सयोः' इति द्वित्वे सतीष्टसिद्धिः । अन्यथा 'द्रोग्धा[7]–द्रोढा' इत्यनिष्टप्रसङ्ग इति भावः ॥

( सिद्धान्तकथनभाष्यम् )

इह स्थाने द्विर्वचने णिलोपोऽपरिहृतः । सन्यङोः परतो द्विर्वचने इटो द्विर्वचनं वक्तव्यम् । सन्यङन्तस्य द्विर्वचने हन्तेः कुत्वमपरिहृतम् ।

तत्र सन्यङन्तस्य द्विर्वचनं द्विःप्रयोगश्चेत्येष पक्षो निर्दोषः ।

तत्रेदमपरिहृतम्—सन इट्प्रतिषेध इति ।

एतस्यापि सप्तमे[8] परिहारं वक्ष्यति—उभयविशेषणत्वात्सिद्धमिति ।

कथं जेघ्नीयते ?

वक्ष्यत्येतत्[9]—यङ्प्रकरणे हन्तेर्हिंसायां घ्नीति ॥

( उद्द्योतः ) भाष्ये—इह स्थाने द्विर्वचन इति । तस्मात्तदाश्रयणमशक्यमिति भावः । 'सन्यङोः[10] परतः' इति पक्षे स्थाने द्विर्वचनत्वे द्विःप्रयोगत्वे चेटो द्वित्वं वक्तव्यमिति सोऽपि दुष्टः ॥ षष्ठीपक्षे—हन्तेः कुत्वमपरिहृतमिति । 'स्थाने द्विर्वचनत्वे' इति शेषः ॥

---

१ 'सङाश्रये च कार्ये समु–' इति च. झ. पाठः ॥

२ सङि–अयं प्रत्याहारो वार्तिककृता 'परेश्च घाङ्कयोः' इति सूत्रे 'सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि' इत्युक्तः । स च 'गुप्तिज्किद्भ्यः सन्' ३।१।५ इति सनः सकारमारभ्य 'तिप्तस्झि–' ३।४।७८ इति सूत्रस्थमहिङो ङकारेण साधितः ॥

३ कुत्वादीनि–'चोः कुः' ८।२।३० इत्यादिना ॥

४ विभाषिता इति । विभाषिताः—'वा द्रुहमुह–' ८।२।३३ इत्यादयो विधयः पूर्वत्रासिद्धीयमद्वित्वे इत्यस्य प्रयोजनम् । अन्यथा 'नित्यवीप्सयोः' ८।१।४ इति द्वित्वे कर्तव्ये वा द्रुहेत्यादीनामसिद्धत्वात्पूर्वं द्वित्वं स्यात् ॥

५ जातिरप्राणिनामित्यनेन क्षीरोदके इत्यत्र नित्य एकवद्भावे प्राप्त आह—व्यक्तीति ॥

६ सप्तम्येकेति । क्षीरोदके संपृक्ते सति न ज्ञायत आमिश्रत्वादित्यर्थः ॥

७ द्रोग्धा–द्रोढेति । यदि घत्वादिभ्यः प्राक् द्वित्वं स्यात्तदा एकत्र घत्वमपरत्र च ढत्वमिति दोषः स्यादिति भावः ॥

८ सप्तमे–एकाच उपदेशेऽनुदात्तात्' ७।२।१० इति सूत्रे ॥

९ वक्ष्यत्येतत्–'यङि च' ७।४।७० सूत्रे ॥

१० सूत्रे सन्यङोरित्यस्य सप्तम्यन्तत्वे पक्षद्वयेऽपि दोषमाह—सन्यङोः परत इति पक्ष इति ॥

भाष्ये—उभयविशेषणत्वादिति । 'एकाचः' इत्यस्य विहित-विशेषणत्वाद्वेत्यपि बोध्यम् ॥

कथं जेघ्नीयत इति । ईडागमपक्षेऽल्लोपस्य स्थानिवत्वात्—घने एव द्वित्वं प्राप्नोतीति भावः ॥

( १०४६ निपातनसूत्रम् ॥ ६ । १ । १ आ. १० )

## २४४९ दाश्वान् साह्वान्मीढ्वांश्च ॥ ६ । १ । १२ ॥

( वार्तिकावतरणभाष्यम् )

दाश्वानिति किं निपात्यते ?

( ५९९९ निपातनदर्शकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ दाशेर्वसौ द्वित्वेट्प्रतिषेधौ ॥ * ॥

(भाष्यम्) दाशेर्वसौ द्वित्वेट्प्रतिषेधौ निपात्येते । दाश्वांसो दाशुषः सुतम् ॥

दाश्वान् ।

साह्वानिति किं निपात्यते ?

( उद्योतः ) द्वित्वेट्प्रतिषेधाविति । द्वित्वेटोः प्रतिषेधावित्यर्थः ॥

( ६००० निपातनदर्शकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सहेर्दीर्घत्वं च ॥ * ॥

( भाष्यम् ) किं च ?

द्वित्वेट्प्रतिषेधौ च । साह्वान् बलाहकः ॥

साह्वान् ।

मीढ्वानिति किं निपात्यते ?

( प्रदीपः ) 'षह मर्षणे' इति चौरादिकस्य 'आधृषा द्वा' इति विभाषितणिचः क्वसौ 'साह्वान्' इति रूपम् ॥

( उद्योतः ) ननु भ्वादिपठितसहेरात्मनेपदित्वात्परस्मैपदमपि निपात्यमित्यत आह—चौरादिकस्येति । 'षह षुह चक्यर्थे' इति दैवादिकस्य त्वर्थासङ्गतिरिति भावः ॥ विभाषितणिच इति । अत्र णिच्पक्षे वृद्ध्या सिद्धेर्दीर्घत्वनिपातनं किमर्थमिति केचित् । सह्वांनित्यस्यासाधुत्वायेत्यन्ये ॥

( ६००१ निपातनदर्शकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ मिहेर्ढत्वं च ॥ * ॥

( भाष्यम् ) यच्च पूर्वयोः ।

किञ्च[3] पूर्वयोः ?

[1] घन एवेति । एवञ्चाभ्यासे 'जे' इति रूपं न स्यादिति भावः ॥

[2] सव्हानिति । णिचो विभाषितत्वेन तदभावे वृद्धेरभावात्सव्हानिति स्यात् । अतो दीर्घविधानं चरितार्थमिति भावः ॥

[3] 'किञ्च पूर्वयोः' इत्यस्य क. पुस्तके पाठो न ॥

द्वित्वेट्प्रतिषेधौ दीर्घत्वं च । मीढ्वस्तोकाय तनयाय मृडय[4] । यथेयमिन्द्रमीढ्वः ॥

( आक्षेपभाष्यम् )

मह्यर्थो वै गम्यते ।

कः पुनर्मह्यर्थः ?

मंहिर्दानकर्मा[5] ।

अतः किम् ?

इत्वमपि निपात्यम् ॥

( ६००२ आक्षेपनिरासवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ मह्यर्थ इति चेन्मिहेस्तदर्थत्वात्सिद्धम् ॥ * ॥

( भाष्यम् ) मह्यर्थ इति चेन्मिहिरपि मह्यर्थे वर्तते । कथं पुनरन्योनामान्यस्यार्थे वर्तते । बह्वर्था अपि धातवो भवन्तीति ॥

अस्ति पुनरन्यत्रापि क्वचिन्मिहिर्मह्यर्थे वर्तते ? अस्तीत्याह—मिहेर्मेघः ।

मेघश्च कस्माद्भवति ?

अपो ददातीति ॥

( उद्योतः ) भाष्ये—मेघः कस्मात्-अपो ददातीति । यद्यपि 'मिह सेचने' इति धात्वर्थानुसारात्सिञ्चतीति मेघ इति वक्तुं शक्यं, तथाऽप्यल्पजलदातृत्वं तथा सति प्रतीयेत, बहुजलदातृत्वं च ततः प्रतीयत इति भावः ॥

( ६००३ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

### ॥*॥ द्विर्वचनप्रकरणे कृञादीनां के ॥*॥

( भाष्यम् ) द्विर्वचनप्रकरणे कृञादीनां के उपसंख्यानं कर्तव्यम् । चक्रम्, चिक्लिदम्, चक्नसमिति ॥

कादिष्विति वक्तव्यम् ।

इहापि यथा स्यात्—बभ्रुः, ययुरिति ॥

(प्रदीपः) चक्रमिति । 'घञर्थे कविधानम्' इति कः ॥

ययुरिति । 'यो[6] द्वे च' इत्यत्र द्वे चेति न वक्तव्यं भवतीति भावः ॥

( उद्योतः ) ननु 'यो द्वे च' इति कुप्रत्ययसन्नियोगेन द्वित्वविधानाद्ययुरिति सिद्धमत आह—यो द्वे इति ॥

( ६००४ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

### ॥ * ॥ चरिचलिपतिवदीनामच्याक्चाभ्यासस्य ॥ * ॥

( भाष्यम् ) चरिचलिपतिवदीनामचि द्वे भवत

[4] च. छ. झ. पुस्तकेषु 'मृड' इत्येव पाठः क. ट. पुस्तकयोः 'मृडय' इति, वेदेऽपि तथैव दृश्यते ॥

[5] 'महतिर्दान-' इति छ. पाठः ॥

[6] 'यो द्वे च' इति उणादिसूत्रम् २९ ।

इति वक्तव्यम्, आक्चाभ्यासस्य । चराचरः, चलाचलः, पतापतः, वदावदः ॥

( प्रदीपः ) चराचर इति । 'अभ्यासस्यानचि' इति वचनाद्धलादिः शेषाभावः ॥

( उद्द्योतः ) ननु चराचरादौ हलादिः शेषः स्यादत आह—अभ्यासस्येति । अ[1]भ्यासस्य यदुच्यते तदचि नेति तदर्थः । 'अत्र लोपोऽभ्यासस्य' इति सूत्रे भाष्ये पठितमिदम् । इ[2]दं वचनं वैकल्पिकं द्रष्टव्यम्, 'रात्रिचरः' इत्यादिप्रयोगदर्शनात् । तत्र 'ट' इत्यन्ये ॥

( ६००५ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ हन्तेर्घश्च ॥ * ॥

( भाष्यम् ) हन्तेर्घश्च वक्तव्यः । अचि द्वे भवतः, आक्चाभ्यासस्य । घनाघनः ॥

( ६००६ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ पा[3]टेर्णिलुक्च दीर्घश्चाभ्यासस्योक्च ॥ * ॥

( भाष्यम् ) पाटयतेर्णिलुग् वक्तव्यः । अचि द्वे भवत इति वक्तव्यम्, दीर्घश्चाभ्यासस्य, ऊक्चागमः । पाटूपटः ॥

( उद्द्योतः ) 'पाटूपट' इत्यत्र पूर्ववद्धलादिःशेषाभावः ॥

( ६००७ विप्रतिषेधवार्तिकम् ॥ ९ ॥ )

॥ * ॥ द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः ॥ * ॥

( भाष्यम् ) यण्-अयवायावादेश-आल्लोप-उपधालोप-णिलोप-किकिनोरुत्वेभ्यो द्विर्वचनं भवति पूर्वविप्रतिषेधेन ॥

द्विर्वचनस्यावकाशः—विभिदतुः, विभिदुः ।

यणादेशस्यावकाशः—दध्यत्र, मध्वत्र । इहोभयं प्राप्नोति—चक्रतुः, चक्रुरिति ।

अयवायावादेशानामवकाशः—चयनम्, चायकः, लवनम्, लावकः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—चिचाय, चिचयिथ, लुलाव, लुलविथ ।

आल्लोपस्यावकाशः—गोदः, कम्बलदः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—ययतुः, ययुः, तस्थतुः, तस्थुः ।

उपधालोपस्यावकाशः—श्लेष्मघ्नं मधु, पित्तघ्नं घृतम् । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—जग्मतुः, जग्मुः, जघ्नतुः, जघ्नुः ।

णिलोपस्यावकाशः—कारणा, हारणा । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—आटिटत्, आशिशत् ।

उ[4]त्वस्यावकाशः-निपूर्ताः पिण्डाः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—मित्रावरुणौ ततुरिः, दूरे ह्यध्वा जगुरिः ॥

द्विर्वचनं भवति पूर्वविप्रतिषेधेन ॥

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः । न वक्तव्यः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥

( उद्द्योतः ) 'द्विर्वचनं यणयवायाव-' इति वार्तिकं 'द्विर्वचनेऽचि' इत्यत्र व्याख्यातम् ॥

( ६००८ विप्रतिषेधवार्तिकम् ॥ १० ॥ )

॥ * ॥ द्विर्वचनात् प्रसारणात्वधात्वादिविकाररीत्वेत्त्वेत्त्वोत्त्वगुणवृद्धिविधयः ॥ * ॥

(भाष्यम्) द्विर्वचनात् प्रसारण-आत्व-धात्वादिविकार-रीत्व-ईत्त्व-इत्त्वोत्त्व-गुणवृद्धिविधयो भवन्ति विप्रतिषेधेन ।

द्विर्वचनस्यावकाशः—विभिदतुः, विभिदुः ।

संप्रसारणस्यावकाशः-इष्टम्, सुप्तम् ।

इहोभयं प्राप्नोति—ईजतुः, ईजुरिति ।

नैतदस्ति ।

अस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति, पूर्वस्य 'लिट्यभ्यासस्योभयेषाम्' ( ६।१।१७ ) इति ।

इदं तर्हि—सोषुप्यते ।

इदं चाप्युदाहरणम्—ईजतुः, ईजुः ।

ननु चोक्तमस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य कितीति भविष्यति, पूर्वस्य लिट्यभ्यासस्योभयेषामिति ।

न सिद्ध्यति । 'न संप्रसारणे संप्रसारणम्' (३७) इति प्रतिषेधः प्राप्नोति । अकारेण व्यवहितत्वान्न भविष्यति । [6](एकादेशे कृते नास्ति व्यवधानम् ।

१ अभ्यासस्यानचीति वार्तिकार्थमाह—अभ्यासस्य यदिति । अचि न-अच्प्रत्यये नेत्यर्थः ॥

२ इदं वचनम्-चरिचलिपतिवदीनामिति वचनम् । अस्य नित्यत्वे हि रात्रिश्चर इत्यादावपि द्वित्वमापद्येत । अतस्त्वन्ये तत्र टप्रत्ययं कल्पयन्ति । टप्रत्यये कृते मुमागमस्तु रात्रेः कृति विभाषेत्यनेन स्यादेवेति भावः ॥

३ 'पाटयतेर्णि-' इति क. पाठः ॥

४ उत्वस्येति । किकिनोरुत्वस्येत्यर्थः । 'आदृगमहनजनः किकिनौ लिट् च' ३।२।१७१ इत्यनेन विहितौ यौ किकिनौ तयोः परतः 'उदोष्ठ्यपूर्वस्य' 'बहुलं छन्दसि' ७।१।१०२,१०३ इति सूत्राभ्यां कृतस्योत्वस्यावकाश इत्यर्थः ॥

५ 'वचिस्वपियजादीनां किति' ६।१।१५ इत्यनेन ॥

६ (      ) एतच्चिह्नाङ्कितभागोऽग्रन्थ इत्युद्द्योते निरूपितम् ॥

एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।)

एवं तर्हि समानाङ्गग्रहणं तत्र चोदयिष्यति ॥

आत्वस्यावकाशः—ग्लाता, म्लाता । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—जग्ले, मम्ले ॥

धात्वादिविकाराणामवकाशः-नमति, सिञ्चति । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—ननाम, सिषेच, सस्नौ ॥

रीत्वस्यावकाशः—मात्रीयति, पित्रीयति । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—चेक्रीयते, जेह्रीयते ॥

ईत्वस्यावकाशः—पीयते, गीयते । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—पेपीयते, जेगीयते ॥

इत्वोत्वयोरवकाशः—आस्तीर्णम्, निपूर्ताः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—आतेस्तीर्यते, निपोपूर्यते ॥

गुणवृद्ध्योरवकाशः—चेता, गौः । द्विर्वचनस्य स एव । इहोभयं प्राप्नोति—चिचाय, चिचयिथ, लुलाव, लुलविथ ।

नैतदस्ति प्रयोजनम् । अस्त्वत्र द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य गुणवृद्धी भविष्यतः ।

इदं तर्हि प्रयोजनम्—इयाय, इययिथ ।

ननु चात्राप्यस्तु द्विर्वचनम्, द्विर्वचने कृते परस्य रूपस्य गुणवृद्धी भविष्यतः ।

न सिद्ध्यति । अन्तरङ्गत्वात्सवर्णदीर्घत्वं प्राप्नोति । वार्णादाङ्गं बलीय इति गुणवृद्धी भविष्यतः ।

किं वक्तव्यमेतत्?

न हि ।

कथमनुच्यमानं गंस्यते?

आचार्यप्रवृत्तिर्ज्ञापयति-वार्णादाङ्गं बलीयो भवतीति यदयं 'अभ्यासस्यासवर्णे' ( ६।४।७८ ) इत्यसवर्णग्रहणं करोति ।

कथं कृत्वा ज्ञापकम्?

न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवति ।

नैतदस्ति ज्ञापकम् । अर्त्यर्थमेतत्स्यात् । इयृतः, इयृथः, उवोण, उवोणिथ ।

यत्तर्हि 'दीर्घ इणः किति' (७।४।६९) इति दीर्घत्वं शास्ति ।

एतस्याप्यस्ति वचने प्रयोजनम् ।

किम्?

सवर्णदीर्घबाधनार्थमेतत्स्यात् । स यथैव तर्हि सवर्णदीर्घत्वं बाधते, एवं यणादेशमपि बाधेत ।

एवं तर्हि यणादेशे योगविभागः करिष्यते । इदमस्ति-'इणो यण्' भवति ।

ततः-एरनेकाचः । एश्चानेकाच इणो यण्भवति ।

ततः—असंयोगपूर्वस्य, एरनेकाच इत्येव ॥

असवर्णग्रहणमेव तर्हि ज्ञापकम् ।

ननु चोक्तमर्त्यर्थमेतत्स्यादिति ।

नैकमुदाहरणमसवर्णग्रहणं प्रयोजयति ॥

एवमपि स्थानिवद्भावादियङ् प्राप्नोति ।

अथ सत्यपि विप्रतिषेधे यावता स्थानिवद्भावः कथमिवैतत्सिद्ध्यति—कस्मादेवात्र न भवति?

योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः । आदिष्टाच्चैषोऽचः पूर्व इति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-
महाभाष्ये षष्ठाध्यायस्य प्रथमे
पादे प्रथममाह्निकम् ॥

( प्रदीपः ) सोषुप्यत इति । 'स्वपिस्यमिव्येञां यङि' इति संप्रसारणम् ॥

जग्ल इति । भावे लकारः । अशितीति पर्युदासपक्षे विप्रतिषेधः । प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वादात्वमन्तरङ्गम् । एवं सत्वनत्वे अपि ॥

चेक्रीयत इति । यङि 'रीङ् ऋतः' इति रीङादेशः ॥

उवोणेति । 'अमन्त्रे' इति प्रतिषेधात् 'इजादेः–' इत्याम्न भवति ॥

नैकमुदाहरणमिति । अन्यथा 'अभ्यासस्यार्तेः' इति ब्रूयात् । उवोणेत्यादौ तु च्छान्दसत्वाद्यथाऽऽम्न दृश्यते तत

१ 'न संप्रसारणे–' ६।१।३७ इत्यत्र ॥

२ 'आदेच उपदेशेऽशिति–' ६।१।४५ इत्यस्य ॥

३ 'धात्वादेः षः सः' 'णो नः' ६।१।६४,६५ इत्युक्तानाम् ॥

४ 'रीङृतः' ७।४।२७ इत्युक्तस्य ॥

५ 'घुमास्थागापाजहातिसां हलि' ६।४।६६ इत्युक्तस्य ॥

६ 'मेमीयते' इति च. पाठः ॥

७ 'ऋत इद्धातोः' 'उदोष्ठ्यपूर्वस्य' ७।१।१००,१०२ इत्याभ्यां विहितयोः ॥

८ 'सार्वधातुकार्धधातुकयोः' 'अचोञ्णिति' ७।३।८४;७।२।११५ इत्यनयोः ॥

९ वृद्धेरुदाहरणं–चिचाय, गुणस्य–चिचयिथ ॥

१० अस्य पाठः क. ट. पुस्तकयोर्न ॥

११ 'उवोण, उवोणिथ' इति पाठश्छ.पुस्तके न । कैश्चिचात्र 'इयर्ति' इत्यपि पठ्यते, तत्प्रामादिकम् ॥

१२ 'एरनेकाचोऽसंयोगपूर्वस्य' ६।४।८२ इत्यत्र ॥

१३ 'कथञ्चैतत्सिध्यति' इति ट. पाठः । 'कथमेवैतत्सिध्यति' इति छ. पाठः ॥

१४ अस्य छ. पुस्तके न पाठः ॥

१५ सत्वनत्व इति । सिञ्चति–नमतीत्यत्र ॥

१६ 'छान्दसत्वाद्यथाऽऽम्न' इति क. पाठः ॥

इयङादिप्रकरणे 'तन्वादीनां छन्दसि बहुलम्' इत्युवङ् भविष्यति । यथा सुवर्गो[1] लोक इति भावः ॥

**एवमपीति** । यदि पूर्वं द्विर्वचनं क्रियते पश्चाद्गुणवृद्धी इत्यर्थः ॥

इत्युपाध्यायजैय्यटपुत्र**कैय्यटकृते** भाष्यप्रदीपे **षष्ठाध्यायस्य प्रथमे पादे** प्रथम**माह्निकम्** ॥

**( उद्द्योतः ) स्वपिस्यमीति** । नन्वस्य द्वित्वापवादत्वाद्विप्रतिषेधासङ्गतिरिति चेन्न, 'असंभवे बाधकत्वम्' इति वार्तिकमते तदुदाहरणसत्त्वेनाक्षतेः ॥

भाष्ये—**इदं चापीति** । 'न संप्रसारणे' इति ज्ञापकात्पूर्वं परस्य संप्रसारणम्, पश्चात्पूर्वस्येति भावः । **एकादेशे कृत** इत्यादि**र्व्यवधानमेवे**त्यन्तोऽग्रन्थः । तथाहि—पूर्वं द्वित्वे तत उत्तरखण्डे संप्रसारणे पूर्वखण्डस्थाकारेणाद्गुणातिरिक्तैकादेशस्य प्राप्तिरेव न । तत्र कृते स्थानिवत्त्वाद्व्यवधाने निषेधाप्रवृत्त्या पूर्वयकारस्य संप्रसारणे परेणैकारेण पूर्वत्वे इजतुरिति स्यात् । तदभावे पूर्वस्येयङि इयेजतुरिति स्यादिति पूर्वं संप्रसारणप्रवृत्तये विप्रतिषेधस्यावश्यकत्वेन विप्रतिषेधप्रत्याख्यानवादिन ईदृशोक्त्यसङ्गत्यापत्तेः । 'लिट्यभ्यासस्य' इति सूत्रस्योभयेषांग्रहणसामर्थ्येन सर्वतः पूर्वं प्रवृत्तेर्भाष्ये वक्ष्यमाणतया पूर्वमेकादेशप्रवृत्तेर्वक्तुमशक्यत्वाच्च । तस्माद**कारेण व्यवहितत्वान्न भविष्यती**त्युत्तर**मेवं तर्हि समानाङ्गे**त्येव ग्रन्थ इति बोध्यम् ॥

**एवं तर्हि समानाङ्गेति** । एवं च व्यवहितेऽपि निषेधप्रवृत्तिरित्यर्थः ॥

**भावे लकार इति** । न तु कर्तरि, परस्मैपदप्रसङ्गादिति भावः ॥

**आत्वमन्तरङ्गमिति** । एवञ्चान्तरङ्गबहिरङ्गयोर्विप्रतिषेधोऽयुक्त इति भावः । इदं च 'द्विर्वचनेऽचि' इति स्थानिवत्त्ववारणायावश्यकमिति तात्पर्यम् ॥ **एवं सत्वनत्वे अपीति** । ते अप्यनैमित्तिकत्वादन्तरङ्गे इति तयोर्विप्रतिषेधायोग इत्यर्थः ॥

भाष्ये—**न ह्यन्तरेणेति** । एवञ्चासवर्णाच्परात्भ्यासेवर्णादीनां इयङादिविधानं व्यर्थमेव स्यादिति ज्ञापकमित्यर्थः । न चासवर्णग्रहणाकरणेनापीदं सिद्धम्, ईषतुरित्यादावपीयङापत्तेः । एवञ्चासवर्णग्रहणविशिष्टं सूत्रमेतदर्थंज्ञापकमित्यर्थः । यद्यप्यसवर्णग्रहणं ज्ञापकमित्येवोक्तम्, तथाप्युपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते । न चान्तरङ्गत्वाद्दीर्घेऽपि पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ्विधानेन सूत्रं चरितार्थम्, न च 'अचिश्नु–' इत्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम् । कृदतिङ्सूत्रस्थभाष्योक्तरीत्या 'अचः परस्मिन्' इति स्थानिवत्त्वेन तदप्रवृत्तेः । तद्ध्वनयन्नाह—**नैतदस्ति ज्ञापकमत्यर्थमेतत्स्यादिति** । असवर्णग्रहणस्यैव ज्ञापकत्वे तत्खण्डनावसरे तस्यैव व्यावर्त्यं दर्शयितुमुचितम् ॥ **उवोण–इति** भाष्ये । इयङादिप्रकरणे 'तन्वादीनां छन्दसि बहुलम्' इति वचनमजानत इदमपि फलमित्याशयः ॥

**यत्तर्हीति** । अन्तरङ्गत्वात्सवर्णदीर्घे हि तद्वैयर्थ्यं स्पष्टमेव । ज्ञापिते तूत्तरखण्डे यण्प्रवृत्त्या तत्सार्थक्यं स्पष्टमेव । समानाश्रये एवैतत्प्रवृत्तिरिति तु नाग्रह इति भावः ॥ **एवं तर्हीति** । केचित्तु यणादेशेऽप्यस्य वैयर्थ्याभावेन तद्बाधे न मानमित्येकदेश्युक्ती इमौ पूर्वपक्षसिद्धान्ताविति **वदन्ति** ॥

कैयटे—**अन्यथाऽभ्यासस्यार्तेरिति** । न च श्तिपा निर्देशाद्यङ्लुकि न स्यादिति वाच्यम्, 'भवतेरः' इतिवत्तत्सत्त्वात् । 'श्तिपाशपा–' इत्यस्य भाष्येऽदर्शनाच्च ॥ उदाहरणान्तरेऽन्यथासिद्धिमाह—**उवोणेत्यादौ त्विति** ॥ भाष्यप्रामाण्येन 'ए' 'ओ' इत्याद्याचारक्विबन्तानां लिटि, उवोणकीयिचतीत्यादेश्चानभिधानेम न तत्र दोष इति भावः । आचारक्विबन्तेभ्य आमा भाव्यमित्य**न्ये** ॥

**यदि पूर्वमिति** । तदाऽनादिष्टादचः पूर्वत्वसत्त्वादिति भावः ॥

भाष्ये—**अथ सत्यपि विप्रतिषेधे इति** । द्विर्वचनेन परविप्रतिषेधे सति परत्वाद्गुणवृद्ध्योः पूर्वं सतोरित्यर्थः[2] । **कथमिवे**त्यस्य विवरणं—कस्मादेवात्र न भवतीति । स्थानिवद्भाव इति शेषः ॥ **आदिष्टाच्चैष इति** । 'द्विर्वचनेऽचीति कार्यातिदेशः' इतिमते इदम् । तदा हि परत्वाद्वृद्धौ पूर्वोक्तपूर्वविप्रतिषेधेन आयादेशात्पूर्वमैशब्दस्य द्वित्वेऽभ्यासह्रस्वत्वे सिद्धम् । वस्तुतस्तत्र रूपातिदेश एव सिद्धान्त इति परत्वाद्वृद्धावपि स्थानिवत्त्वं दुर्वारम्, अतः 'अभ्यासस्यासवर्णे' इति सूत्रारम्भसामर्थ्यादभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकस्थानिवत्त्वाभावकल्पनमावश्यकमिति विप्रतिषेधाभावेऽपि न दोष इति **भगवतो गूढं तात्पर्यम्** ॥

इति श्रीशिवभट्टसुतसतीगर्भज**नागोजीभट्ट**कृते **भाष्यप्रदीपोद्द्योते षष्ठाध्यायस्य प्रथमपादे प्रथममाह्निकम्** ॥

( द्वितीयमाह्निकम् )

( १०४७ विधिसूत्रम् ॥ ६ । १ । २ आ. ११ )

## २४५० ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ ६ । १ । १३ ॥

( सम्प्रसारणाधिकरणम् )

( ६००९ अतिप्रसङ्गापादकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गः ॥ * ॥

**( भाष्यम् ) ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गो भवति । पुत्रपत्यादौ संप्रसारणं प्राप्नोति । कारीषगन्ध्यापुत्रकुलम्, कारीषगन्ध्यापतिकुलम् ॥**

**( प्रदीपः ) कारीषगन्ध्यापुत्रकुलमिति** । पुत्रस्य कुलं–पुत्रकुलम्, कारीषगन्ध्यायाः पुत्रकुलं कारीषगन्ध्यापुत्रकुलम् । यद्यप्यत्र तदादिविधिर्नास्ति तथापि पुत्रपतिशब्दानन्तर्याश्रयसंप्रसारणप्रसङ्गश्चोद्यते । यदा तु कारीषगन्धीपुत्रस्य कुलमिति विग्रहस्तदा कारीषगन्धीपुत्रकुलमिति भवत्येव ॥

[1] 'सुवर्लोकः' इति झ. पाठः ॥

[2] 'पूर्वं सत्योरि–' इति झ. पाठः ॥

(उद्योतः) पुत्रशब्दान्तेन[1] कुलशब्दस्य समासे संप्रसारणस्येष्टत्वादाह—पुत्रस्येति ॥ यद्यपीति । अल्ग्रहणाभावादिति[2] भावः ॥

(६०१० अतिप्रसङ्गाक्षेपवार्तिकम् ॥ २ ॥)

## ॥ * ॥ वर्णग्रहणात्सिद्धम्[3] ॥ * ॥

(भाष्यम्) वर्णग्रहण एतद्भवति-यस्मिन् विधिस्तदादाविति, न चेदं वर्णग्रहणम् ॥

(प्रदीपः) वर्णग्रहणादिति । वर्णग्रहणे तदादिविधिविज्ञानादिहे[4] वर्णाग्रहणात्सिद्धमित्यर्थः । न च तदादिविध्यभावेऽपि तदादौ[5] पुत्रपत्यानन्तर्याश्रयसंप्रसारणप्रसङ्गः । यस्मात् 'तत्पुरुषे' इत्यनेनाधारः, ष्यङन्तस्य पुत्रपत्योश्च[6] तत्पुरुष उपात्तस्तत्पुरुषावयवत्वं पुत्रपत्योः ख्यापयति । यथा[7] वृक्षे शाखेति । वृक्षः शाखायाः प्रत्यासत्त्याऽवयवी प्रतीयते । यथा च वृक्षात्पर्णं पततीत्यपादानत्वेनाप्युपात्तो वृक्षः पर्णस्यावयवित्वेन प्रत्यासत्त्या गम्यते । यत्तु कारकसूत्रे भाष्ये[8] उक्तम्-न ज्ञायते कङ्कस्य वा कुररस्य वेति, तत् शब्दव्यापाराभिप्रायेण[9] । इह च पुत्रपत्यादौ तत्पुरुषे यौ पुत्रपती तौ ष्यङन्तावयवस्य तत्पुरुषस्यावयवौ न भवत इति संप्रसारणाभावः ॥

(उद्योतः) वर्णग्रहणादिति[10] हेतोर्वैयधिकरण्यं स्वरूपासिद्धत्वं वा परिहरति—वर्णग्रहणे इति । तदादिविधिवाक्ये 'अल्ग्रहणे' इत्युक्तेरिह सिद्धम्, अत्र वर्णग्रहणाभावात् इति वार्तिकार्थ इति भावः ॥ तत्पुरुषावयवत्वमिति । तत्पुरुषचरमावयवत्वमित्यर्थः । समासस्यावयवद्वयसाकाङ्क्षत्वादिति भावः ॥ प्रत्यासत्त्येति । 'कस्य शाखा' इत्याकाङ्क्षायामाधारत्वेन श्रुतत्वात्स एवावयवी प्रतीयत इत्यर्थः ॥ तच्छब्दव्यापारेति । शब्दतस्तदवयवत्वाऽप्रतीतेरिति भावः । कदाचिदन्यावयवत्वस्यापि प्रतीतेरनियमाभिप्रायं[11] तदित्यन्ते ॥ पुत्रपत्यादौ तत्पुरुषे—पुत्रकुल-पतिकुलरूपे ॥ ष्यङन्तावयवस्येति । ष्यङन्तपूर्वावयवस्य तत्पुरुषस्य चरमावयवौ न भवत इत्यर्थः । एतेनावयवावयवस्य समुदायावयवत्वमस्त्येवेति परास्तम् ॥

(६०११ प्रत्याक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ वर्णग्रहण इति चेत्तदन्तप्रतिषेधः ॥ * ॥

(भाष्यम्) वर्णग्रहण इति चेत्तदन्तस्य प्रतिषेधो वक्तव्यः । पुत्रपत्यन्ते संप्रसारणं प्राप्नोति । कारीषगन्ध्यापरमपुत्रः, कारीषगन्ध्यापरमपतिः, कौमुदगन्ध्यापरमपुत्रः, कौमुदगन्ध्यापरमपतिः ।

किं कारणम्?

यत्र हि तदादिविधिर्नास्ति तदन्तविधिना तत्र भवितव्यम् ॥

(प्रदीपः) तदन्तप्रतिषेध इति । तदन्तविध्यपवादस्तदादिविधिरिति तदभावे तदन्तविधिना भाव्यम् । तत्पुरुषेण सन्निधापितमुत्तरपदं पुत्रपतिभ्यां विशेष्यत इत्यस्ति तदन्तविधिप्रसङ्गः ॥

(६०१२ प्रत्याक्षेपनिरासवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ सिद्धं तूत्तरपदवचनात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ।

कथम्?

उत्तरपदवचनात् । पुत्रपत्योरुत्तरपदयोरिति वक्तव्यम् ।

तत्तर्हि वक्तव्यम्?

न वक्तव्यम् ।

पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपद उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदमिति, न चात्र पुत्रपती उत्तरपदे ॥

इहापि तर्हि न प्राप्नोति—कारीषगन्धीपुत्रः, कारीषगन्धीपतिरिति ।

किं कारणम्?

पूर्वपदमित्युच्यते, न ह्यत्र ष्यङ् पूर्वपदमस्ति, ष्यङन्तमेतत्पूर्वपदम् ।

---

१ पुत्रस्य कुलमित्यादिप्रदीपविवरणफलमाह—पुत्रशब्दान्तेनेति ॥

२ अल्ग्रहणाभावादिति । यस्मिन्विधिस्तदादावल्ग्रहणपरिभाषयाऽल्ग्रहण एव तदादिविधिर्विधीयते, अल्ग्रहणञ्चात्र नास्तीति न तदादिविधिरिति भावः ॥

३ कादिपुस्तकेषु अस्य वार्तिकत्वेन नोल्लेखः । वस्तुतस्तु वर्णग्रहण एतद्भवति इत्यादिकुण्डलनासत्वाद्वार्तिकत्वमेव युक्तम् । तच्च नागेशभट्टानामपि संमतम् ॥

४ 'इह च वर्णा–' इति च. झ. पाठः ॥

५ तदादौ–पुत्रपत्यादिशब्दे परे पुत्रपतिसामीप्याश्रयसंप्रसारणप्रसङ्ग इति भावः ॥

६ 'पुत्रपत्योरुपात्तस्तत्पुरुषः' इति च. पाठः ॥

७ आधारे अवयवावयविभावप्रतीतिं दृष्टान्तद्वारोपपादयति—यथावृक्ष इति ॥

८ कारकसूत्रे भाष्य इति । तत्र हि–यदा चापायो विवक्षितो भवति तदाऽपादानसंज्ञा । तद्यथा–वृक्षात्पर्णं पततीति । संबन्धस्तु तदा न विवक्षितो भवति, न ज्ञायते कङ्कस्य वा कुररस्य वेति ॥

९ शब्दव्यापारेति । न ज्ञायते कङ्कस्य वेत्यादिभाष्यस्यावयवित्वबोधकशब्दस्यात्र व्यापारो नास्तीत्येवार्थः । प्रत्यासत्त्याऽवयवित्वप्रतीतिनिषेधो भाष्यकृता न क्रियते ॥

१० वर्णग्रहणादिति यथाश्रुते इदमनुमानम्–'तदादावतिप्रसङ्गो न, वर्णग्रहणात्' तच्च नोपपद्यते, हेतोर्वैयधिकरण्यात् । वर्णग्रहणरूपो हेतुर्यस्मिन्विधिस्तदादाविति परिभाषायाम्, अतिप्रसङ्गाभावश्च लक्ष्ये इति हेतुसाध्ययोर्वैयधिकरण्यम् । स्वरूपासिद्धिरपि ह्रदो द्रव्यं धूमवत्वादित्यत्र यथा तथा पुत्रपत्यादावुत्तरपदे अतिप्रसङ्गो न वर्णग्रहणात्–इत्यनुमाने स्यात्तदर्थमनुमानमाह—तदादिविधीत्यादिना । तच्चानुमानम्–इह सिद्धम्, अत्र वर्णग्रहणाभावात् । एवञ्च न वैयधिकरण्यम्, नापि स्वरूपासिद्धिः ॥

११ अनियमाभिप्रायं तदिति । न ज्ञायते कङ्कस्येति भाष्यं वृक्षात्पतत्रिपक्षे पतत्यपि वृक्षात्पर्णं पततीति प्रयोगात् पर्णस्य वृक्षावयवत्वमेवेति नियमोऽश्रक्य एवेत्यभिप्रायकं तद्भाष्यमित्यर्थः ॥

कथम् ?

**प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति ॥**

यदि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्युच्यते, परमकारीषगन्धीपुत्रः-परमकारीषगन्धीपतिरिति न सिद्ध्यति ।

**प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवत्यस्त्रीप्रत्ययेनेति ॥**

यद्यस्त्रीप्रत्ययेनेत्युच्यते, अतिक्रान्तः कारीषगन्ध्यामतिकारीषगन्ध्यः, तस्य पुत्रः-अतिकारीषगन्ध्यपुत्रः, अतिकारीषगन्ध्यपतिः—इत्यत्रापि प्राप्नोति।

अस्त्रीप्रत्ययेनानुपसर्जनेन । यो ह्युपसर्जनं स्त्रीप्रत्ययो भवत्येषा तत्र परिभाषा-प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति ॥

(प्रदीपः) **सिद्धं त्विति** । तत्पुरुषे नियतसंनिधाने पूर्वपदोत्तरपदे, विशेषणविशेष्यभावे च कामचारादुत्तरपदेन पुत्रपती विशेष्येते । तत्रोत्तरपदान्तयोः पुंत्रपत्योरसंभवादुत्तरपदे एव पुत्रपती गृह्येते । पुत्रपतिभ्यां तूत्तरपदं न विशेष्येत[2] इति तदन्तविध्यभावः ॥

**ष्यङन्तमिति** । प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यित्वात् ॥

(उद्द्योतः) **तत्पुरुष इति** । **उत्तरपदस्य**-सामर्थ्यात्सन्निहितस्य **वचनात्**-विशेषणत्वेन व्याख्यानात्सिद्धमिति वार्तिकयोजनेति भावः ॥

भाष्ये—**सम्बन्धिशब्दाविति** । ननूत्तरपदग्रहणस्याकर्तव्यत्वे[3] तत्पुरुषाक्षिप्तत्वं हेतुर्न त्वनयोः[4] संबन्धिशब्दत्वम्, यदि वा पूर्वपदग्रहणं सूत्रे स्यात्तदैवं वक्तुं योग्यमिति चेन्न। एतौ समासस्य संबन्धिबोधकौ शब्दौ, अतः समासबोधकतत्पुरुषपदेन स्वार्थस्य[5] सम्बन्ध्याकाङ्क्षायामेतयोराक्षेप इत्यर्थेनादोषात्॥ नन्वेकस्योत्तरपदशब्दस्यैव प्रकृतोपयोगितया संबन्धिशब्दत्वमुच्यताम्, किं द्वयोरुक्त्या ? इति चेन्न, तयोः परस्परसापेक्षत्वेनैकेन निराकाङ्क्षप्रतिपत्त्यभावात् । तदाह—**सति पूर्वपदे इत्यादि ॥**

उत्तरयति—**ष्यङन्तमिति**[6] ।

तद्व्याचष्टे—**प्रत्ययग्रहणेति** । स्त्रीप्रत्ययग्रहणे तदादिनियम एव निषिध्यते न तु तदन्तविधिरिति भावः ॥

भाष्ये—**अस्त्रीप्रत्ययेनानुपसर्जनेनेति** । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमाम्नेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषानिमित्तमिति बोध्यम् । अत्रोपसर्जनत्वं लौकिकमेव, स्त्रीप्रत्यये शास्त्रीयस्य तस्याऽसंभवात् ॥

(अतिप्रसङ्गापादकभाष्यम्)

ष्यङन्ते यावन्तो यणस्तेषां सर्वेषां संप्रसारणं प्राप्नोति । वाराहीपुत्रः, तार्णकर्णीपुत्रः । तत्राप्रत्ययस्थस्य प्रतिषेधो वक्तव्यः ॥

(६०१३ अतिप्रसङ्गापोहवार्तिकम् ॥ ५ ॥)

**॥ * ॥ यथागृहीतस्यादेशवचनाद्-प्रत्ययस्थे सिद्धम् ॥ * ॥**

(भाष्यम्) निर्दिश्यमानस्यादेशा भवन्तीत्येवमप्रत्ययस्थस्य न भविष्यति ॥

(६०१४ अतिप्रसङ्गापोहे सिद्धान्तवार्तिकम् ॥ ६ ॥)

**॥*॥ अनन्त्यविकारेऽन्त्यसदेशस्य वा ॥*॥**

(भाष्यम्) अथवा—अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्येषा परिभाषा कर्तव्या ॥

कः पुनरत्र विशेषः—एषा वा परिभाषा क्रियेत, अप्रत्ययस्थस्य वा प्रतिषेध उच्येत ?

अवश्यमेषा परिभाषा कर्तव्या, बहून्येतस्याः परिभाषायाः प्रयोजनानि ।

कानि ?

(उद्द्योतः) अन्त्यसदेशस्येति । सदेशशब्दः समीपपरः । अन्त्येन समानो देशो यस्येत्यक्षरार्थः । समानदेशत्वं चेतराव्यवधाने[7] इति भावः ॥

(६०१५ परिभाषाप्रयोजनवार्तिकम् ॥ ७ ॥)

**॥ * ॥ प्रयोजनं न संप्रसारणे संप्रसारणम् ॥ * ॥**

(भाष्यम्) 'न संप्रसारणे संप्रसारणम्' (६।१।३७) इत्येतन्न वक्तव्यं भवति ।

कथं व्यधेर्विद्ध इति ?

अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ।

नैतदस्ति प्रयोजनम् । क्रियते न्यास एव ॥

(उद्द्योतः) क्रियते न्यास एवेति । अन्त्यसमानदेशत्वाभावात् 'न संप्रसारणे संप्रसारणम्' इत्यस्यावश्यकत्वात्-इति भावः ॥

(६०१६ परिभाषाप्रयोजनवार्तिकम् ॥ ८ ॥)

**॥ * ॥ सान्तमहतो दीर्घत्वे ॥ * ॥**

(भाष्यम्) सान्तमहतो दीर्घत्वे प्रयोजनम् । पयांसि, यशांसि । 'प' इत्यस्यापि[9] प्राप्नोति । अन-

---

१ पुत्रपत्योरिति । परतोऽव्यवहितपूर्वस्य ष्यङन्तस्येति शेषः । अत्र हि पुत्रपत्योरिति सप्तम्या पुत्रपत्यव्यवहितपूर्वत्वं ष्यङन्तेऽन्वेति, तथा च-उत्तरपदान्तयोः पुत्रपत्योः परतः ष्यङन्तस्य संप्रसारणमित्यर्थः । तत्र च पुत्रपत्यव्यवहितपूर्वत्वं ष्यङन्तस्यासंभवि-इत्यभिप्रायेणासंभव उक्तः ॥

२ न विशेष्यत इति । विशेषणविशेष्यभावे कामचारादिति भावः ॥

३ ननूत्तरपदेति । भाष्ये उत्तरपदग्रहणस्याकर्तव्यत्वे तत्पुरुषाक्षितत्वं हेतुर्न संभवति, तत्पुरुषोत्तरपदशब्दयोः संबन्धिशब्दत्वाभावादित्यर्थः ॥

४ अनयोः-तत्पुरुषोत्तरपदशब्दयोः ॥

५ स्वार्थस्य-तत्पुरुषपदवाच्यस्य समासरूपार्थस्य ॥

६ उत्तरयति-ष्यङन्तमितीति । पूर्वपदमित्युच्यते, न ह्यत्र ष्यङ पूर्वपदमस्तीति कारीषगन्धीपुत्र इत्यत्र न प्राप्नोतीत्याक्षेपस्य भाष्यकृता 'ष्यङन्तमेतत्पूर्वपदम्' इत्युत्तरं दत्तमित्यर्थः ॥

७ इतराव्यवधान इति । अन्त्याव्यवहितपूर्वोऽन्त्यसदेश इत्यर्थः ॥

८ अस्य वार्तिकत्वेन पाठः क. ट. पुस्तकयोर्न दृश्यते ॥

९ झ. पुस्तके '-'प' 'य' इत्यस्यापि प्राप्नोति' इति पाठः। प्रामाणिकपुस्तकाश्रयेणास्माभिरुद्धृत इत्यप्युक्तम् । तदनुपयुक्तत्वात्प्रामादिकम् ॥

न्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति दोषो न भवति ॥

एतदपि नास्ति प्रयोजनम् । 'नोपधायाः' ( ६।४।७ ) इति तत्र वर्तते ॥

एवमप्यनांसि मनांसीत्यत्रापि प्राप्नोति ।

सान्तसंयोगेनोपधां विशेषयिष्यामः-सान्तसंयोगस्य नोपधाया इति ॥

एवमपि हंसशिरांसि-ध्वंसशिरांसि-अत्रापि प्राप्नोति ।

नैष दोषः । हम्मतेर्हंसः ।

कः पुनराह—हम्मतेर्हंस इति ?

किं तर्हि ?

हन्तेर्हंसः, हन्त्यध्वानमिति ॥

एवं तर्हि सर्वनामस्थान इति वर्तते । सर्वनामस्थानपरतया सान्तसंयोगं विशेषयिष्यामः, सान्तसंयोगेन नोपधाम्—सर्वनामस्थानपरस्य सान्तसंयोगस्य नोपधाया इति ॥

( प्रदीपः ) हंसशिरांसीति । अनुस्वारस्या[1]सिद्धत्वाद्धकाराकारस्य दीर्घप्रसङ्गः ॥

हन्तेरिति । 'वृतॄवदि[2]हनि-' इति लक्षणसद्भावात् ॥ हन्तीति । गच्छतीत्यर्थः ॥

( उद्योतः ) भाष्ये—एवमप्यनांसीति । सा[3]न्तसंयोगान्तस्य यो नकारस्तदुपधाया इत्यर्थ इति भावः ॥

सान्तसंयोगेनेति । सान्तसंयोगावयवनस्योपधाया इत्यर्थ इति भावः ॥

नन्वनुस्वारे नोपधत्वाभावोऽत आह—अनुस्वारस्येति ॥ भाष्ये—हम्मतेर्हंस इति । एवं च नोपधात्वाभाव इति भावः ॥

लक्षणसद्भावादिति । न हि ह[4]म्मतेस्तथा लक्षणमस्तीत्यर्थः ॥ भाष्ये—एवं तर्हीति । अङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वादियमेकदेश्यु[5]क्तिः ॥

( ६०१७ प्रयोजनवार्तिकम् ॥ ९ ॥ )

॥ * ॥ [6]अन्कारान्तस्याल्लोपे ॥ * ॥

( भाष्यम् ) अन्कारान्तस्याल्लोपे प्रयोजनम् । तक्ष्णा, तक्ष्णे-इति 'त' इत्यत्रापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ॥

एतदपि नास्ति प्रयोजनम् । अनाऽकारं विशेषयिष्यामः-अनो योऽकार इति ॥

एवमप्यनसा, अनसे-इत्यत्रापि प्राप्नोति ।

अन्कारेणाङ्गं विशेषयिष्यामः, अना अकारम्—अन्कारान्तस्याङ्गस्यानो योऽकार इति ॥

एवमप्यनस्तक्ष्णा,अनस्तक्ष्णे-इत्यत्रापि प्राप्नोति।

एवं तर्हि कार्यकालं[7] संज्ञापरिभाषम् यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । भस्येति तत्रोपस्थितमिदं भवति 'यचि भम्' ( १।४।१८ ) इति तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अनाऽकारम्-यजादिपरस्यानो योऽकार इति ॥

( उद्योतः ) एवं तर्हि कार्यकालमिति । अयं भावः—तत्पक्षे भस्येति श्रुते भपदार्थजिज्ञासायां 'यचि भम्' इत्युपस्थितेन तच्छक्तिग्रहे प्रकृतविषयके जाते तस्य बोधः । तत्र लक्ष्यानुरोधादुपस्थितयचीत्यस्य तन्त्रादिन्यायाश्रयेणान्विशेषणत्वमपीति । यत्तु तत्पक्षे हि 'यचि भम्' इत्यादेर्यत्र भशब्दस्तत्र-यचीति, यस्मात्प्रत्ययविधिस्तदादिप्रत्यय इति चोपतिष्ठत इत्यर्थः । एवं चोपस्थितपदानां पदैकवाक्यतयाऽन्वये यथेष्टमभिसम्बन्धः । एतेन-प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैव यचीत्यादीनामन्वय उचित इत्यपास्तम् । भाष्यप्रामाण्येन लक्ष्यानुरोधेन चेदृशे विषये उत्थाप्याकाङ्क्षयैवान्वयाङ्गीकारादिति भावः-इति, तन्न; एवं हि 'उपस्थितमिदं भवति यचि भम्' इति भाष्यासङ्गतेः । तदा हि 'उपस्थितमिदं भवति यचि' इत्येवेति वक्तुमुचितम् । किञ्च पदैकवाक्यतयान्वयेऽपि स्वोपस्थापकोपस्थापिते यतः प्रत्ययविधिस्तदादावेवान्वयापत्तिः । भाष्यप्रामाण्यात्तु मदुक्तार्थ एवोचित इति दिक् ॥ यजादिपरतयेति । 'विधौ परिभाषा' इति न्यायो नास्त्येवेति भावः । इयमप्येकदेश्युक्तिः, उ[8]क्तयुक्तेः । आकडारात्संज्ञासु कार्यकालपक्षाभावस्य पूर्वमुपपादितत्वाच्च ॥

( ६०१८ प्रयोजनवार्तिकम् ॥ १० ॥ )

॥ * ॥ [9]मृजेर्वृद्धिविधौ ॥ * ॥

( भाष्यम् ) मृजेर्वृद्धिविधौ प्रयोजनम् । न्यमार्ट् । अटोऽपि वृद्धिः प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति न दोषो भवति ॥

एतदपि नास्ति प्रयोजनम् । यथापरिभाषितं 'इको गुणवृद्धी' ( १।१।३ ) इति, इक एव वृद्धिर्भविष्यति ॥

एवमपि मिमार्जिषतीत्यत्र प्राप्नोति ।

अस्तु ।

अभ्यासनिर्ह्रासेन ह्रस्वो भविष्यति ॥

( प्रदीपः ) यथापरिभाषितमिति । परिभाषितानतिक्रमेणेत्यर्थः ॥

( उद्योतः ) (भाष्ये) अभ्यासनिर्ह्रासेनेति । लक्ष्ये लक्षणस्येति न्यायानित्यत्वेन पुनःप्रवृत्तिरिति भावः । पर्जन्यव[10]ल्लक्षणप्रवृत्त्या न्यायानित्यत्वाङ्गीकारेण पुनःप्रवृत्तेरनौचित्यादियमप्येकदेश्युक्ति ॥

---

१ असिद्धत्वादिति । एवं च नोपधत्वमक्षतमिति भावः ॥

२ उणादिसूत्रं ४४२ एतत् ॥

३ सान्तसंयोगान्तस्येति । सान्तसंयोगान्तो योऽनस्शब्दस्तस्य यो नकारस्तदुपधाया इत्यर्थः ॥

४ हम्मतेरिति । एवं च हम्मते रूपं हंस इति न भवतीति भावः ॥

५ एकदेश्युक्तिरिति । सर्वनामस्थान इत्यस्याङ्गेनैवान्वयात्सान्तसंयोगेनान्वयो न भवितुमर्हतीति भावः ॥

६ एतदपि क. ट. पुस्तकयोर्वार्तिकं न ॥

७ 'कार्यकालं हि संज्ञा' इति छ. पाठः ॥

८ उक्तयुक्तेरिति । अङ्गांशे प्रत्ययस्येत्यादियुक्तेरिति भावः ॥

९ एतदपि भाष्यमेव क. ट. पुस्तकयोः ॥

१० ननु मिमार्जिषतीत्यत्र वृद्धेः प्राक् द्वित्वे ह्रस्वस्यैवाभ्यासस्य सत्वात् 'ह्रस्वः' इत्यस्य पूर्वमप्रवृत्तिरिति लक्ष्ये लक्षणन्यायस्यात्र विषय एव नेत्यत आह—पर्जन्यवदिति ॥

( ६०१९ प्रयोजनवार्तिकम् ॥ ११ ॥ )

॥ * ॥ वसोः संप्रसारणे च ॥ * ॥

( भाष्यम् ) वसोः संप्रसारणे च प्रयोजनम् । विदुषः पश्य । विदि[1]वकारस्यापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति ॥

एतदपि नास्ति प्रयोजनम् । 'न संप्रसारणे संप्रसारणम्' ( ६।१।३७ ) इति प्रतिषेधो भविष्यति ।

इद्[2]कारेण व्यवहितत्वान्न प्राप्नोति ।

एवं तर्हि निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति ॥

( उद्द्योतः ) इद्कारेणेति । यून इत्यादावेकव्यवधाने चरितार्थो निषेधोऽत्र न प्रवर्तेत इत्यर्थः ॥

( ६०२० प्रयोजनवार्तिकम् ॥ १२ ॥ )

॥ * ॥ युवादीनाञ्च ॥ * ॥

( भाष्यम् ) युवादीनां च संप्रसारणे प्रयोजनम् । यूनः, यूना, यूने । यकारस्यापि प्राप्नोति । अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति ॥

एतदपि नास्ति प्रयोजनम् । 'न संप्रसारणे संप्रसारणम्' इति न भविष्यति ।

उकारेण व्यवहितत्वान्न प्राप्नोति ।

एकादेशे कृते नास्ति व्यवधानम् ।

एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।

एवं तर्हि समानाङ्गग्रहणं त[4]त्र चोदयिष्यति ॥

( उद्द्योतः ) समानाङ्गेति । एवं च व्यवधानेऽपि न दोष इति भावः ॥

( ६०२१ प्रयोजनवार्तिकम् ॥ १३ ॥ )

॥ * ॥ वोरुपधाग्रहणं च ॥ * ॥

( भाष्यम् ) वोश्चोपधाग्रहणं न कर्तव्यं भवति—'वोरुपधाया दीर्घ इकः' (८।२।७६) इति ।

इह कस्मान्न भवति—अविभर्भवान् ?

अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषो भवति ॥

एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव ॥

( प्रदीपः ) अविभरिति । डुभृञो लङ्, तिप्सिपोरन्यतरः । शपः श्लुः । द्विर्वचनम् । 'भृञामित्' इतीत्वम् ॥

( ६०२२ अनन्त्यविकारेतिस्त्रीकारे दोषापादकवार्तिकम् ॥ १४ ॥ )

॥ * ॥ आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वेष्वतिप्रसङ्गः ॥ * ॥

( भाष्यम् ) आदिविधावतिप्रसङ्गो भवति । 'धात्वादेः षः सः' ( ६।१।६४ ) 'णो नः' ( ६५ ) इहैव स्यात्—नेता, सोता । इह न स्यात्—नमति, सिञ्चतीति । आदि ॥

त्यदादिविधि[5] । इहैव स्यात्-तद्, सः । त्यद्, स्यः-इत्यत्र न स्यात् । त्यदादिविधि ॥

संयोगादिलोप[6] । इहैव स्यात्-मङ्क्ता । मङ्क्तव्यमित्यत्र न स्यात् । संयोगादिलोप ॥

कुत्व[7] । इहैव स्यात्-पक्ता । पक्तव्यमित्यत्र न स्यात् । कुत्व ॥

ढत्व[8] । इहैव स्यात्-लेढा । लेढव्यमित्यत्र न स्यात् । ढत्व ॥

भष्भाव[9] । इहैव स्यात्-अभुत्सि । अभुत्सातामित्यत्र न स्यात् । भष्भाव ॥

षत्व[10] । इहैव स्यात्-द्रष्टा । द्रष्टव्यमित्यत्र न स्यात् । षत्व ॥

णत्व[11] । इहैव स्यात्-माषवापेण । माषवापाणामित्यत्र न स्यात् । णत्व ॥

( प्रदीपः ) सोतेति । धात्वन्त्यसदेशस्यैव सत्वनत्वप्रसङ्गः ॥

स्य इत्यत्रेति । 'तदोः सः सावनन्त्योः' इति सत्वं तकारस्यान्त्यसदेशत्वाभावान्न प्राप्नोति ॥

मङ्क्तव्यमिति । पदान्त्यसदेशत्वाभावात् संयोगादिलोपाप्रसङ्गः ॥

माषवापाणामिति । विभक्तिस्थस्य नकारस्य पदान्त्यसदेशत्वाभावाण्णत्वाप्रसङ्गः ॥

( उद्द्योतः ) पदान्त्यसदेशत्वाभावादिति । पदस्येत्यधि-

१ विदिवकारस्यापीति । विदधातौ यो वकारस्तस्य प्राप्नोतीत्यर्थः ॥

२ पुस्तके 'दकारेण' इति पाठः ॥

३ विदुष इत्यत्र विद्वस्-अस्-इति स्थिते प्रत्ययसंबन्धिनो वकारस्य संप्रसारणे 'न संप्रसारणे-' इति निषेधो न प्रवर्तेत, येन नाव्यवधानमिति न्यायात् । यून इत्यत्र एकवर्णव्यवधाने सूत्रस्य चारितार्थ्यात् । 'दकारेण व्यवधानात्' इति भाष्यपाठे तु एकवर्णव्यवधानस्य सर्वत्रैव स्थितत्वेन तद्व्यवधानमेव नेति दकारेण व्यवधानमित्युक्तम्-इत्येवं संगच्छते । अग्रिमग्रंथदर्शनेन च 'इद्कारेण' इत्येव पाठः साधुः ॥

४ तत्र-न संप्रसारणे संप्रसारणमिति सूत्रे ॥

५ त्यदादिविधिः 'तदोः सः सावनन्त्ययोः' ७।२।१०६ इत्यनेन ॥

६ संयोगादिलोपः 'स्कोः संयोगाद्योरन्ते च' ८।२।२९ इत्यनेन ॥

७ कुत्वं 'चोः कुः' ८।२।३० इत्यनेन ॥

८ ढत्वं 'हो ढः' ८।२।३१ इत्यनेन ॥

९ भष्भावः 'एकाचो बशो-' ८।२।३७ इत्यनेन ॥

१० षत्वं 'व्रश्चभ्रस्जसृजमृज-' ८।२।३६ इत्यनेन ॥

११ णत्वं 'प्रातिपदिकान्त-' ८।४।११ इत्यनेन ॥

कारात्पदावयवयोः संयोगाद्योः स्कोर्लोप इति सूत्रार्थ इति भावः। एवं णत्वान्ताः पदाधिकारप्रयुक्ता एव दोषा बोध्याः ॥

**विभक्तिस्थस्येति ।** 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वप्राप्तिः ॥

( परिभाषाविषये सिद्धान्तभाष्यम् )

**एते दोषाः समा भूयांसो वा, तस्मान्नार्थोऽनया परिभाषया ॥**

**न हि दोषाः सन्तीति परिभाषा न वक्तव्या, लक्षणं वा न प्रणेयम् । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते । दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् ।**

**कुत एतत् ?**

**न हि दोषाणां लक्षणमस्ति ।**

**तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु ।**

**इदं प्रतिविधीयते—**

( उद्द्योतः ) भाष्ये—एते दोषाः समा इति । वार्तिकोक्तप्रयोजनैः समा इत्यर्थः ॥ भूयांसो वेति-दुष्टताप्रतिपादनपरम् ॥

( ६०२३ परिभाषादोषनिरासवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ उदात्तनिर्देशात् सिद्धम् ॥ * ॥**

( भाष्यम् ) **यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः । ततो वक्तव्यम्—अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवत्युदात्तनिर्देश इति ॥**

( प्रदीपः ) उदात्तनिर्देशादिति । [1]यथा स्वरितेनाधिकारः, एवमुदात्तेनैषा परिभाषेत्यर्थः ॥

( उद्द्योतः ) एवमुदात्तेनेति । प्रतिज्ञाप्रापितेनेत्यर्थः ॥

( परिभाषाऽर्थबोधकभाष्यम् )

**स तर्ह्युदात्तनिर्देशः कर्तव्यः ।**

**न कर्तव्यः । यत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च युगपत्समवस्थितौ तत्रैषा परिभाषा भवति, दोषेषु च-अन्यत्रान्त्यसदेशः, अन्यत्रानन्त्यसदेशः । प्रयोजनेषु पुनस्तत्रैवान्त्यसदेशश्चानन्त्यसदेशश्च ॥**

**तथाजातीयकानि खल्वप्याचार्येण प्रयोजनानि पठितानि, यान्युभयवन्ति भवन्ति ।**

**इदमेकं यथा दोषास्तथा वौरुपधाग्रहणमिति । अविभर्भवान् । तच्चापि क्रियते न्यास एव ॥**

( प्रदीपः ) **न कर्तव्य इति ।** सर्वत्रापि परिभाषोपस्थाने दोषाभावात् ॥

**यत्रैवेति ।** विधिनिषेधयोरेकविषयत्वाश्रयणात् ॥

**इदमेकमिति ।** अविभरित्यत्रान्त्यसदेशस्येकोऽसंभवादनन्त्यसदेशस्येकः प्राप्तो दीर्घ उपधाग्रहणेन निवर्त्यते ॥

( उद्द्योतः ) **विधिनिषेधयोरिति ।** प्रत्यासत्तिरित्यर्थः। यद्यप्यत्र परिभाषाप्रयोजनानि अन्यथा साधितानि तथाप्यदमुयङिति सिद्ध्यर्थम्, 'सान्तमहतः' 'अह्लोपोऽनः' इत्यादावेकदेश्युक्तान्याख्यानेकक्लेशपरिहारार्थं च परिभाषाऽऽवश्यकीति भावः ॥

( १०४८ विधिसूत्रम् ॥ ६ । १ । २ आ. १२ )

## २४५१ बन्धुनि बहुव्रीहौ ॥ ६।१।१४ ॥

( उपसंख्यानभाष्यम् )

**मातज्मातृकमातृषु च्यङ् प्रसार्यो विभाषया ॥**

**मातच्-कारीषगन्ध्या माताऽस्य कारीषगन्धीमातः, कारीषगन्ध्यामातः । मातच् ॥**

**मातृक-कारीषगन्धीमातृकः, कारीषगन्ध्यामातृकः । मातृक ॥**

**मातृ-कारीषगन्धीमाता, कारीषगन्ध्यामाता ॥**

( प्रदीपः ) कारीषगन्ध्या माताऽस्येति बहुव्रीहौ कृतेऽस्मादेव वचनान्मातृशब्दस्य मातजादेशः । चकारः स्वरार्थः, तेन पूर्वपदप्रकृतिस्वरत्वं बाधित्वाऽन्तोदात्तत्वं भवति । मातृमातृकशब्दयोश्च भेदेनोपादानात् 'नद्यृतश्च' इति पक्षे समासान्ताभावः ॥

( उद्द्योतः ) **अस्मादेव वचनादिति ।** [2]येतु 'मातुर्मातच्पुत्रार्थमर्हते' इति, स संबुद्धिमात्रविषयः । प्रकृते च भाष्ये सविसर्गोदाहरणात् तद्विषयत्वाभावः स्पष्ट एव । मात्रा पुत्रस्य श्लाघ्यत्वद्योतनाभावाच्चेत्याहुः ॥ **पूर्वपदप्रकृतिस्वरं**-बहुव्रीहित्वात्प्राप्तम्, [3]अस्यापि वचनस्य बहुव्रीहावेव प्रवृत्तेः ॥

( १०४९ विधिसूत्रम् ॥ ६ । १ । २ आ. १३ )

## २४५३ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ ६ । १ । १६ ॥

( पदकृत्यभाष्यम् )

**वयिग्रहणं किमर्थं न वेञ् यजादिषु[4] पठ्यते, वेञश्च वयिरादेशः[5] क्रियते ?**

---

[1] यथा स्वरितेनेति । स्वरितेन चिह्नेन यथाऽधिकारो ज्ञायते तथोदात्तेन चिह्नेन परिभाषेत्यर्थः ॥

[2] ननु मातुर्मातच्पुत्रार्थमर्हते इति वचने विद्यमानेऽस्मादेवेत्ययुक्तमत आह—येस्तु मातुरिति । अत्र संबुद्धिविषयत्वाभावात्र तस्य प्राप्तिरिति भावः ॥

[3] अस्यापीति । मातच्मातृकमातृषु वेति वचनस्येत्यर्थः ॥

[4] यजादिष्विति । वेञो यजादिषु पाठे 'वचिस्वपियजादीनाङ्किति' ६।१।१५ सूत्रेण संप्रसारणं प्राप्नुयादिति भावः ॥

[5] 'वयिरिति । 'वेञो वयिः' २।४।४१ इत्यनेन ॥

तत्र यजादीनां कितीत्येव सिद्धम् ।

तत्रैतत्स्यात्-ङिदर्थोऽयमारम्भ इति । तच्च न । लिड्ययमादेशः, लिट् च किदेव ॥

अत उत्तरं पठति—

( ६०२४ पदकृत्यवार्तिकम् ॥ १ ॥ )

॥ * ॥ वयिग्रहणं वेञः प्रतिषेधात् ॥ * ॥

(भाष्यम्) वयिग्रहणं क्रियते, वेञः प्रतिषेधात् । वेञो लिटि प्रतिषेधं वक्ष्यति, स वयेर्मा भूदिति ॥

यथैव हि वेञ्ग्रहणाद्विधिः प्रार्थ्यते एवं प्रतिषेधोऽपि प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—वेञो लिटीति । 'वेञः' इति सूत्रेण लिटि संप्रसारणं निषिध्यते इति भावः ॥

( ६०२५ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ न वा यकारप्रतिषेधो ज्ञापकोऽप्रतिषेधस्य ॥ * ॥

( भाष्यम् ) न वा एष दोषः ।

किं कारणम् ?

यदयं 'लिटि वयो यः' ( ६।१।३८ ) इति वयेर्यकारस्य संप्रसारणस्य प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—न वेञ्ग्रहणाद्वयेः संप्रसारणप्रतिषेधो भवतीति ॥

नैतदस्ति ज्ञापकम्, पित्यभ्यासार्थमेतत्स्यात् । वयेः पित्सु वचनेष्वभ्यासयकारस्य संप्रसारणं मा भूदिति ।

ननु च वेञ्ग्रहणादेव वयेः पित्स्वपि वचनेष्वभ्यासयकारस्य संप्रसारणप्रतिषेधः सिद्धः ।

न सिध्यति ।

किं कारणम् ?

किंतीति तत्रानुवर्तते[1] ॥

एवमपि वयेः पित्सु वचनेष्वभ्यासस्य[2] यकारस्य संप्रसारणं न प्राप्नोति ।

किं कारणम् ?

हलादिः[3] शेषेण बाध्यते । नात्र हलादिः शेषः प्राप्नोति ।

किं कारणम् ?

वक्ष्यति ह्येतत्-अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेनेति[4] ॥

स एष वयेर्यकारस्य संप्रसारणप्रतिषेधः पित्यभ्यासार्थः, न ज्ञापकार्थो भवति ॥

( उद्द्योतः ) न वा यकारप्रतिषेध इति । न च वयेर्यस्यैव संप्रसारणं माभूदिति नियमार्थमिदम् । एवमपि वयेर्वस्य 'वेञः' इति प्रतिषेधाभावे वेञ्त्वाद्यजादित्वेन[5] संप्रसारणसिद्धौ वयिग्रहणवैयर्थ्यस्योपपत्तेः ॥ भाष्ये—ज्ञापक इत्यस्य—बोधकम्—प्रमाणमित्यर्थो बोद्धव्यः ॥

वक्ष्यति ह्येतदिति । अत एव विव्यथे विव्याधेत्यादि सिद्धिः ॥

( ६०२६ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ पित्यभ्यासार्थमिति चेन्नाविशिष्टत्वात् ॥ * ॥

( भाष्यम् ) पित्यभ्यासार्थमिति चेत् तन्न ।

किं कारणम् ?

अविशिष्टत्वात् । अविशेषेण प्रतिषेधः, निवृत्तं तत्र किंतीति ।

आतश्चाविशेषेण वेञोऽपि हि पित्सु वचनेष्वभ्यासस्य संप्रसारणं नेष्यते—ववौ, ववियेति ।

विकृतिग्रहणं खल्वपि प्रतिषेधे क्रियते, न च विकृतिः प्रकृतिं गृह्णाति ॥

( प्रदीपः ) विकृतिग्रहणमिति । कश्चिद्ब्रूयात्-'वेञः-' इति सूत्रं मा कारि । वयिग्रहणेन वेञो ग्रहणाल्लिटि संप्रसारणप्रतिषेधो भविष्यति-इत्याशङ्क्योक्तम्—विकृतिग्रहणमिति ॥ यद्यपि वयो यकारस्य प्रतिषेध उक्तः, न च वेञो यकारोऽस्ति तथापि पुष्कलपरिहारं वक्तुमेतन्नाश्रितम् ।

अथवा—'लिटि वयः' इति योगविभागः करिष्यते । तत्र वयिग्रहणेन वेञो ग्रहणात्संप्रसारणप्रतिषेधो भविष्यति । ततः 'यः' इति द्वितीयो योगो नियमार्थः-यस्य यकारश्चान्यश्चास्ति तस्य वयेर्यकारस्यैव निषेधो भवति-इत्याशङ्क्योक्तम्—विकृतिग्रहणमिति । प्रकृत्या विकृतिर्गृह्यते, स्थानिवद्भावात्; न तु विकृत्या प्रकृतिः, भिन्नरूपत्वादिति भावः । तदेवं वयिग्रहणं प्रत्याख्यातम् ॥

( उद्द्योतः ) विकृतिग्रहणं खल्वपीतिभाष्यस्य प्रकृतानुपयोगमाशङ्क्य मन्दमतिशङ्कानिवर्तकत्वेन योजयति—कश्चिदिति । पुष्कलम्-युक्ततरम् ॥

———

[1] 'वश्चास्यान्यतरस्यां किति' ६।१।३९ इत्यत्र ॥

[2] 'अभ्यासयकारस्य' इति छ. ट. पाठः ॥

[3] 'हलादिशेषेण' इति छ. पाठः ॥

[4] 'लिट्यभ्यासस्योभयेषाम्' ६।१।१७ इत्यत्रोक्तम् ॥

[5] 'वेञ्त्वाद्यजादित्वे संप्रसारणासिद्धौ' इति ट. ञ. पाठः ॥

( १०५० विधिसूत्रम् ॥ ६ । १ । २ आ. १४ )

## २४५४ लिट्यभ्यासस्योभयेषाम् ॥ ६ । १ । १७ ॥

( ६०२७ ग्रह्यादीनां फले विशेषाभावबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः ॥ * ॥[1]

( वार्तिकाशयखण्डनभाष्यम् )

यदुच्यते वृश्चेरविशेष इति । तन्न । यद्यत्र रेफस्य संप्रसारणं न स्याद्वकारस्य प्रसज्येत । रेफस्य पुनः संप्रसारणे सति उरदत्वस्य स्थानिवद्भावात् 'न संप्रसारणे संप्रसारणम्' ( ६।१।३७ ) इति प्रतिषेधः सिद्धो भवति ।

तस्माद्वक्तव्यम्—ग्रहेरविशेषः पृच्छतिभृज्जत्योरविशेष इति ॥

( प्रदीपः ) ग्रहीति । असति सूत्रे यद्रूपं तदेव सतीत्यभिप्रायेणैतदुक्तम् ॥

भाष्यकारस्तु—रेफस्य संप्रसारणे सत्यसति वा विशेषो नास्तीति मत्वा वार्तिककारेणैतदुक्तम्, तच्चायुक्तमिति मन्यमान आह—यदुच्यत इति ॥

( उद्द्योतः ) वृश्चतावविशेषं वदतो वार्तिककारस्याभिप्रायमाह—असतीति । सूत्राभावे हलादिः शेषेण 'वव्रश्च' इत्यादि रूपम्, सत्यपि तदेवेति भावः ॥

भाष्यकारस्त्विवति । 'ग्रहिज्या–' इति योगे वृश्चतिग्रहणस्य वृक्ण इत्याद्यर्थम्, अत्रोभयेषांग्रहणस्य चान्यग्रह्याद्यर्थमावश्यकत्वान्न सोऽभिप्राय इति तद्भावः ॥ रेफस्येति । 'लिट्यभ्यासविषये' इत्यादिः ॥ भाष्ये—उरदत्वस्येति । तस्याङ्गाधिकारस्थत्वेनाङ्गसंज्ञाद्वारा नियमतः पूर्वं परबुद्धेरावश्यकत्वेन परनिमित्ततया 'अचः परस्मिन्–' इति स्थानिवत्त्वमिति भावः ॥

( पदकृत्यभाष्यम् )

अथोभयेषां ग्रहणं किमर्थम् ?

उभयेषामभ्यासस्य संप्रसारणं यथा स्यात्—वचिस्वपियजादीनाम्, ग्रहादीनां च ॥

नैतदस्ति प्रयोजनम् ।

प्रकृतमुभयेषां ग्रहणमनुवर्तते ।

यद्यनुवर्तते, ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति चेति यजादीनां ङित्यपि प्राप्नोति ॥

नैष दोषः ।

सम्बन्धमनुवर्तिष्यते–वचिस्वपियजादीनां किति, ग्रहादीनां ङिति, वचिस्वपियजादीनां किति । ततः–लिट्यभ्यासस्योभयेषाम्, किति ङिति–इति निवृत्तम् ॥

अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥

अथवैकयोगः करिष्यते—वचिस्वपियजादीनां किति ग्रहादीनां ङिति च–इति । ततो लिट्यभ्यासस्येति । न चैकयोगेऽनुवृत्तिर्भवति ॥

अथवोभयं निवृत्तं तदपेक्षिष्यामहे ॥

इदं तर्हि उभयेषांग्रहणस्य प्रयोजनम्—उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।

किं चान्यत् प्राप्नोति ?

हलादिशेषः । 'अभ्यासस्संप्रसारणं हलादिशेषाद्विप्रतिषेधेन' इति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥

( प्रदीपः ) इदं तर्हीति । उभयेषां ग्रहणात्पुनः संप्रसारणस्य विधिर्भवन् विध्यन्तरस्य बाधको भवति ॥

( उद्द्योतः ) भाष्ये–उभयेषां ग्रहणमिति । वच्यादीनां ग्रह्यादीनां च तत्तत्सूत्रे बोधकं यत्पदं तदनुवर्तते इत्यर्थः ॥

न चैकयोग इति । सङ्ग्राहकवाक्यमेकमिति भावः ॥

ननूभयेषांग्रहणे कृतेऽपि परस्य हलादिः शेषस्य कथं बाधोऽत आह—उभयेषामिति ॥

( ६०२८ विप्रतिषेधबोधकमेकदेशिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अभ्यासस्संप्रसारणं हलादिशेषाद्विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) अभ्यासस्य संप्रसारणं भवति हलादिशेषाद्विप्रतिषेधेन । अभ्यासस्संप्रसारणस्यावकाशः—इयाज, उवाप । हलादिशेषस्यावकाशः—बिभिदतुः, बिभिदुः ।

इहोभयं प्राप्नोति–विव्याध, विव्यधिथ । अभ्यासस्संप्रसारणं भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ॥

(उद्द्योतः) भाष्ये–इयाजेति । हलादिः शेषे कृते संप्रसारणमत्र सावकाशमिति भावः ॥

( ६०२९ विप्रतिषेधखण्डकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः[2] ।

---

[1] वार्तिकमेतदिति प्रदीपोद्द्योताभ्यामुक्तावपि कुण्डलनादिरूपः पाठो नोपलभ्यते ॥

[2] 'वक्तव्यमेतत्' इति क. पाठः ॥

किं कारणम् ?

संप्रसारणाश्रयस्य बलीयस्त्वादन्यत्रापि । संप्रसारणं संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यम् । अन्यत्रापि, नावश्यमिहैव वक्तव्यम् ।

किं प्रयोजनम् ?

(६०३० संप्रसारणाश्रयस्य बलीयस्त्वप्रदर्शकवार्तिकम् ॥४॥)

**॥ * ॥ प्रयोजनं रमाल्लोपेयङ्यणः ॥ * ॥**

**रम्—**

( भाष्यम् ) भृष्टः, भृष्टवान् । संप्रसारणं[1] च प्राप्नोति रम्भावश्च[2] । परत्वाद्रम्भावः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यम्, संप्रसारणं यथा स्यात् ॥

**आल्लोपः—**

जुहुवतुः, जुहुवुः । संप्रसारणं[3] च प्राप्नोत्याल्लोपश्च[4] । परत्वादाकारलोपः[5] स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यं संप्रसारणं यथा स्यात् ॥

संप्रसारणे कृते पूर्वत्वं[6] च प्राप्नोत्याकारलोपश्च । परत्वादाल्लोपः स्यात् । संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यं पूर्वत्वं यथा स्यात् ॥

**इयङ्—**

शुशुवतुः, शुशुवुः । संप्रसारणं[7] च प्राप्नोति, इयङादेशश्च[8] । परत्वादियङादेशः स्यात् । संप्रसारणं बलीयो भवतीति वक्तव्यं संप्रसारणं यथा स्यात् ॥

**यण्—**

संप्रसारणे कृते पूर्वत्वं[9] च प्राप्नोति, यणादेशश्च[10] । परत्वाद्यणादेशः स्यात् । संप्रसारणाश्रयं च बलीयो भवतीति वक्तव्यं पूर्वत्वं यथा स्यात् ॥

( प्रदीपः ) आकारलोपश्चेति । सति चाकारलोपे तस्य स्थानिवद्भावादुवङ् न स्यात्, ततश्च यणादेशः प्रसज्येत ॥

यणादेशश्चेति । 'एरनेकाचः-' इत्यनेन ॥

( उद्द्योतः ) भाष्ये—'पूर्वत्वञ्च प्राप्नोत्याकारलोपश्च' इत्यत्रत्यं प्रतीकम्—आकारलोपश्चेति ॥ नन्वाकारलोपे[11] किमनिष्टम् ? अत आह—सति चेति । इदं च 'संप्रसारणाश्रयं च बलवत्' इत्यस्यैव प्रयोजनं बोध्यम् ॥ एरनेकाच इत्यनेनेति । 'शु-इ-अतुस्' इति स्थितेऽनेकाच्त्वादिकारस्य यण्प्राप्तिरिति भावः । न तूकारस्य 'इको यणू-' इति यण्, तस्य परत्वात् पूर्वत्वेन बाधात् ॥

( बलीयस्त्वप्रदर्शकखण्डकभाष्यम् )

नैतानि सन्ति प्रयोजनानि ।

यत्तावदुच्यते—रम्-इति । इदमिह संप्रधार्यम्—रम्भावः क्रियतां संप्रसारणमिति । किमत्र कर्तव्यम् ?

परत्वाद्रम्भावः । नित्यं संप्रसारणम्, कृतेऽपि रम्भावे प्राप्नोत्यकृतेऽपि ।

रम्भावोऽपि नित्यः, कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि ।

कथम् ?

योऽसावृकारे रेफस्तस्य चोपधायाश्च प्राप्नोति । अनित्यो रम्भावः, न हि कृते संप्रसारणे प्राप्नोति ।

किं कारणम् ?

न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।

अथापि गृह्यन्ते, एवमप्यनित्यः । 'उपदेशे' इति वर्तते । तच्चावश्यमुपदेशग्रहणमनुवर्त्यम्, बरीभृज्यत इत्येवमर्थम् ॥

आल्लोपेयङ्यणः-इति । नित्यं संप्रसारणम् । अन्तरङ्गं पूर्वत्वम् ॥

तदनन्यार्थं[12] संप्रसारणं[13] तदाश्रयश्च बलीयो भवतीति वक्तव्यम्, पूर्वविप्रतिषेधो वा वक्तव्यः ॥

उभयं न वक्तव्यम् । उक्तमत्रोभयेषां[14] ग्रहणस्य प्रयोजनम्-उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ॥

( प्रदीपः ) उपदेश इति । तेनोपदेशे यो रेफस्तस्य रम्भावः ॥

( उद्द्योतः ) तेनोपदेशे इति । अत एव रीको रेफस्य न निवृत्तिरिति भावः ॥

आल्लोपेयङ्यण इति । अस्य 'यदप्युच्यते' इत्यादिः ॥

( ६०३१ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ व्यचेः कुटादित्वमनस्यञ्णिति संप्रसारणार्थम् ॥ * ॥**

( भाष्यम् ) व्यचेः कुटादित्वमनसीति वक्तव्यम् ।

किं प्रयोजनम् ?

अञ्णिति संप्रसारणार्थम् । अञ्णिति संप्रसा-[15]

---

1 'ग्रहिज्यावयि-' ६।१।१६ इत्यनेन ॥

2 'भ्रस्जो रोपधयो रमन्यतरस्याम्' ६।४।४७ इत्यनेन ॥

3 'अभ्यस्तस्य च' ६।१।३३ इत्यनेन ॥

4 'आतो लोप इटि च' ६।४।६४ इत्यनेन ॥

5 'परत्वादाल्लोपः' इति छ. पाठः ॥

6 'संप्रसारणाच्च' ६।१।१०८ इत्यनेन ॥

7 'विभाषा श्वेः' ६।१।३० इत्यनेन ॥

8 'अचि श्नुधातु-' ६।४।७७ इत्यनेन ॥

9 'संप्रसारणाच्च' ६।१।१०८ इत्यनेन ॥

10 'एरनेकाचोऽसंयोगपूर्वस्य' ६।४।८२ इत्यनेन ॥

11 'न चाकारलोपे' इति झ. पाठः ॥

12 'तदेतदन-' इति छ. क. पाठः ॥

13 'संप्रसारणाश्रयं बलीयो' इति छ. क. पाठः ॥

14 'उक्तमुभयेषां ग्रहणस्य' इति क. ट. पाठः ॥

15 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' १।२।१ इत्यनेन ङित्वे संप्रसारणं प्राप्नोति ॥

रणं यथा स्यात् । उद्विचिता, उद्विचितुम्, उद्विचितव्यम् ॥

अनसीति किमर्थम् ?

उरुव्यचाः कण्टकः ॥

( प्रदीपः ) उरुव्यचा इति । उरु विचतीति 'मिथुनेऽसिः[1] पूर्ववच्च सर्वम्' इत्यसिप्रत्ययः ॥

( उद्योतः ) मिथुनेऽसिरिति । धातूपपदयोगो मिथुनमिति भावः ॥

( १०५१ विधिसूत्रम् ॥ ६ । १ । २ आ. १५ )

## २४५५ स्वापेश्चङि ॥ ६ । १ । १८ ॥

( चङ्ग्रहणप्रत्याख्यानभाष्यम् )

चङ्ग्रहणं शक्यमकर्तुम् ।

कथम् ?

ङितीति वर्तते । न चान्यः स्वापेर्ङिदस्ति, अन्यदतश्चङः ॥

( प्रदीपः ) ङितीति वर्तत इति । कितीत्येतत्तु चानुकृष्टत्वादस्वरितत्वाद्वा नानुवर्तिष्यत इति भावः । तच्च ङिद्ग्रहणं 'लिट्यभ्यासस्योभयेषाम्' इत्यत्र नानुवर्तते, लिटो ङित्तोऽसंभवात्; इहैव त्वनुवर्तते ॥ न चान्य इति । यङ् तावदेनेकाच्त्वात् स्वापेर्नास्ति,[2] अपित्सार्वधातुकं तु विकरणैर्व्यवहितम्, अङादयः स्वापेर्न विहिताः ॥

(उद्योतः) ननूभयस्मिन्प्रकृते केवलङितीत्यस्यैव कथं संबन्धः ? अत आह—कितीत्येतदिति ॥ 'चानुकृष्टं नोत्तरत्र' इत्येतत् 'लुटि च' इति सूत्रस्थभाष्यविरुद्धमत आह—अस्वरितत्वाद्वेति । 'ग्रहिज्या–' इति सूत्रे चेनास्वरितत्वेऽपि संवन्ध इति भावः । व्याख्यानान्नानुवृत्तिरिति तत्त्वम् ॥ ननु ङितीत्यनुवृत्तौ मध्येऽपि सम्बन्धः स्यादत आह—तच्चेति । 'अन्यो नास्ति'[3] इत्यत्रान्यत्वं कुत ? इत्यतो भाष्ये—अन्यदतश्चङ इति ॥

( १०५२ निषेधसूत्रम् ॥ ६ । १ । २ आ. १६ )

## २४५७ न वशः ॥ ६ । १ । २० ॥

( ६०३२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ वशेर्यङि प्रतिषेधः ॥ * ॥

( भाष्यम् ) वशेर्यङि प्रतिषेधो वक्तव्यः संप्रसारणस्य । वावश्यते ।

क मा भूत् ?

उष्टः; उशन्ति–इति । स तर्हि तथा प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । यङीति वर्तते ।

एवं तर्ह्यन्वाचष्टे—यङीति वर्तत इति ।

नैतदन्वाख्येयम्—अधिकारा अनुवर्तन्त इति । एष एव न्यायो यदुताधिकारा अनुवर्तेरन्निति ॥

( प्रदीपः ) वशेर्यङीति । यथा 'स्वापेश्चङि' इत्यत्र ङिद्ग्रहणानुवृत्त्या चङीति प्रत्याख्यातं तथेहापि ङिद्ग्रहणानुवृत्त्या ङिन्मात्रे प्रतिषेध इत्याशङ्कानिवारणाय वार्तिककारो यङ्ग्रहणानुवृत्तिमन्वाचष्टे ॥ नैतदन्वाख्येयमिति । 'स्वापेश्चङि' इत्यत्र चङ्ग्रहणं कृतमेव । ततश्च ङितीत्यस्यानधिकारायङेव सम्बध्यते, अनन्तरत्वात् ॥

( उद्योतः ) ननु 'स्वापेश्चङि' इति चङ्ग्रहणेन ङितीत्यस्य निवृत्त्या यङीत्यस्यैवानुवृत्तेर्ङिन्मात्रे प्रतिषेधाप्राप्तेः किं वार्तिकेन ? इत्यत आह—यथा स्वापेरिति ॥ चङ्ग्रहणं कृतमेवेति । वार्तिकमते स्थितमेव चङ्ग्रहणं भाष्यकृता प्रत्याख्यातमिति ङिद्ग्रहणानुवृत्तिशङ्कानिरासायान्वाख्यानमनर्थकमित्यर्थः ॥ भाष्ये—अधिकारा इति । अधिकारार्थस्वरितगुणयुक्ता इत्यर्थः ॥

( १०५३ निपातनासूत्रम् ॥ ६ । १ । २ आ. १७ )

## २४६४ शृतं पाके ॥ ६ । १ । २७ ॥

( निपातनाकांक्षाभाष्यम् )

किं निपात्यते ?

( ६०३३ निपातनबोधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ श्राश्रप्योः शृभावः ॥ * ॥

( भाष्यम् ) श्राश्रप्योः शृभावो निपात्यते ॥

क्षीरहविषोरिति वक्तव्यम् ।

शृतं क्षीरम्, शृतं हविः ।

क मा भूत् ?

श्राणा यवागूः, श्रपिता यवागूरिति ॥

( प्रदीपः ) श्राश्रप्योरिति । 'श्रा पाके' इत्यदादौ पठ्यते । 'श्रै पाके' इति भ्वादौ । घटादिषु तु मित्वार्थं 'श्रा पाके' इति पठ्यते । श्रातिश्च[5] कर्मकर्तृविषयस्य पचेरर्थे पच्यमानकर्तृकव्यापारे वर्तते । ततः पक्तृव्यापारे णिजुत्पद्यते । ततश्च पचतीति योऽर्थः स एव श्रपयतीति गम्यते । तत्र यदा श्रातेः क्त उत्पद्यते तदाऽकर्मकत्वात्[6] कर्तरि भवति, श्रपेस्तु कर्मणि—शृतं क्षीरं स्वयमेव, शृतं क्षीरं देवदत्तेन ॥

---

१ उणादिसूत्रं ६६२ एतत् ॥

२ धातोरेकाचो हलादेरित्यनेन एकाचो धातोर्विहित इति अनेकाचः स्वापेर्न भवति यङ्–इति ङित्प्रत्ययः स्वापेर्नास्तीति भावः ॥

३ 'न चान्यः स्वापेर्ङिदस्ति' इति भाष्ये किमपेक्षायाऽन्यस्तद्वाप्यकृदेव प्रतिपादयति—अन्यदतश्चङ इति । चङपेक्षयाऽन्यो ङित्प्रत्ययः स्वापेर्नास्तीत्यर्थः ॥

४ 'स्वपिस्यमिव्येञां यङि' ६।१।१९ इत्यतः ॥

५ ण्यन्तस्य श्रपेः पाकार्थत्वमुपपादयति—श्रातिश्चेति ॥

६ अकर्मकत्वादिति । श्राधातोः केवलस्य पच्यमानव्यापारार्थकत्वेऽकर्मकत्वम् । श्रपेस्तु वक्तृव्यापारार्थकत्वात्पचिवत्सकर्मकत्वमिति भावः ॥

(उद्योतः) निपातनसामर्थ्या[1]ल्लुग्विकरणालुग्विकरणयोरिति लक्षणप्रतिपदोक्तपरिभाषा च न प्रवर्तते । विरोधा[2]द्वोभयोरप्रवृत्तिरित्याशयेनाह—श्रा पाक इत्यादि । एवञ्चोभयोरप्यत्र निपातनमिति भावः ॥

घटादिषु त्विति । एवं[3]ञ्चास्यैव सोऽनुवाद इति नातिरिक्तः स इति भावः ॥

भाष्ये—श्रपीति—हेतु[4]मण्ण्यन्तनिर्देशः । एतदर्थमेव निपातनाश्रयणम् ॥

ननु ण्यन्तस्य पाकानुकूलव्यापारे वर्तनेऽपि पाकेऽवृत्तेः कथं तत्र निपातनम् ? यथा[5]कथञ्चित्पाकवृत्तित्वाश्रयणे तु ण्यन्ताण्णावपि निपातनापत्तिः, अत आह—श्रातिश्चेति । उ[6]भयविधोऽपि पच्यर्थः पाकशब्देनोच्यते, अविशेषात् । अन्तर्भावितण्यर्थपच्यर्थस्तु न गृह्यते, तत्त्वस्य गमकसत्त्वे एव स्वीकारादिति भावः ॥ पक्तृव्यापारे इति । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते' इत्युक्तेः ॥

( ६०३४ निपातननियमवार्तिकम् ॥ २ ॥ )

॥ * ॥ श्रपेः शृतमन्यत्र हेतोः ॥ * ॥

(भाष्यम्) श्रपेः शृतमन्यत्र हेतोरिति वक्तव्यम् । इह मा भूत्—श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति ॥

(प्रदीपः) श्रपेः शृतमन्यत्र हेतोरिति । हेतुशब्देन प्रयोजकस्य हेतोर्व्यापारः प्रेषणादिलक्षण उपचारादुच्यते तेन पक्तुर्यः प्रयोजकस्तदीये व्यापारे पचिप्रकृतिणिज्वाच्ये श्रपयतेरुत्पन्नस्य णिचोऽभिधेये क्षीरहविषोरपि शृतमिति न भवति, किं तु श्रपितमिति । तत्र 'श्राश्रप्योः–' इति वचनादाद्यपक्तृलक्षणप्रयोजकव्यापाराङ्गीकरणात् 'अन्यत्र हेतोः' इत्यनेन पाचयितृलक्षणप्रयोजकव्यापारनिषेधः सामर्थ्यादवसीयते । एतच्च पाक[7]ग्रहणाल्लभ्यते । द्विविधो हि पाकः–विक्लित्तिलक्षणो विक्लेदनालक्षणश्च । पाचयितृव्यापारे तु णिचि कृते पाचनालक्षणोऽर्थः प्राधान्येनाभिधीयते न तु पाकलक्षण इति निपातनाभावः ॥

(उद्योतः) स्व[8]तन्त्रप्रयोजकरूपस्य मुख्यहेतोरत्रासंभवादाह—हेतुशब्देनेति ॥ ननु 'श्राश्रप्योः' इति श्र[9]पेरस्यनुज्ञानादन्यत्रहेतोरित्ययुक्तमत आह—तेन पक्तुरिति ॥ पक्तृलक्षणेति । पक्तुर्लक्षणभूतः–धर्मभूतो यः प्रयोजकव्यापार इत्यर्थः । एवं पाचयितृलक्षणेत्यपि व्याख्येयम् ॥ विक्लेदना—विक्लित्यनुकूलो व्यापारः ॥ पाचना—तदनुकूलो व्यापारः ॥

( १०५४ निपातनसूत्रम् ॥ ६ । १ । २ आ. १८ )

## २४६५ प्यायः पी ॥ ६ । १ । २८ ॥

( ६०३५ निपातननियामकवार्तिकम् ॥ १ ॥ )

॥ * ॥ आङ्पूर्वादन्धूधसोः ॥ * ॥

(भाष्यम्) आङ्पूर्वादन्धूधसोरिति वक्तव्यम् । आपीनोऽन्धुः, आपीनमूधः ।

किं प्रयोजनम् ?

नियमार्थम् । आङ्पूर्वादन्धूधसोरेव ।

क मा भूत् ?

आप्यानश्चन्द्रमा इति ॥

उभयतो नियमश्चायं द्रष्टव्यः—आङ्पूर्वादेवान्धूधसोः, अन्धूधसोरेवाङ्पूर्वादिति ।

क मा भूत् ? प्रप्यानोऽन्धुः, प्रप्यानमूधः ॥

आङ्पूर्वाच्चैष नियमो द्रष्टव्यः । भवति हि–पीनं[10] पुण्यम्, पीनाः शंबट्यः, श्लक्ष्णपीनमुखी कन्येति ॥

---

१ निपातनसामर्थ्यादिति । संप्रसारणप्रकरणे श्राधातोस्संप्रसारणमेव विधेयम्, तथा च 'श्रै–श्रा' इति द्वयोरप्यनिर्दिष्टकत्वेन शृतमिति सिद्ध्येत् । अस्मिन् सूत्रे प्रतिपदोक्तपरिभाषाप्रवृत्त्या यदि 'श्रा' इत्यस्यैव ग्रहणं स्यात्तदा श्राणं शृतमिति रूपद्वयम् । संप्रसारणे विधीयमानेऽपि तदेव रूपद्वयमिति निपातनं व्यर्थम्, तत्सामर्थ्यात्परिभाषाद्वयमप्यत्र न प्रवर्तत इति भावः ॥

२ विरोधाद्वेति । लुग्विकरणपरिभाषयाऽदादेरग्रहणम्, लक्षणप्रतिपदोक्तपरिभाषया च लुग्विकरणस्यैव ग्रहणमिति विरोधादुभयोरप्यप्रवृत्तिरिति भावः ॥

३ एवं चेति । घटादेरतिरिक्तत्वे परिभाषयोरविरोधः स्यात्, तथा चानिष्टं प्रसज्येतेति भावः ॥

४ हेतुमण्ण्यन्तेति । स्वार्थे णिचि तु श्रपितमित्येवेति भावः । 'शृतं पाके' इत्यस्य संप्रसारणविधायकत्वे णिजन्तस्य रूपं न सिद्ध्येदत आह—एतदर्थमेवेति ॥

५ यथाकथंचिदिति । पाकानुकूलव्यापारे वर्तमानः श्रपिः पाकेऽपि वर्तत एवेति रीत्या ण्यन्तस्य पाकवृत्तित्वे पाकानुकूलव्यापारानुकूलव्यापारे वर्तमानस्यापि पाके वर्तमानत्वं स्यादिति भावः ॥

६ उभयविधोऽपीति । पच्यमानकर्तृकव्यापाररूपः पक्तृव्यापाररूपश्च । श्रपेः पाकार्थत्वं प्रदीपकारोक्तमेवम्–पच्धातुः पच्यमानकर्तृकव्यापारे पक्तृव्यापारे च वर्तते, अविशेषात् । श्रातिश्च पच्यमानकर्तृकव्यापार एव वर्तते । तस्माण्णिच्प्रत्ययस्तु पक्तृव्यापारे स्यात् । ततश्च पचेतेर्योऽर्थः पक्तृव्यापाररूपः स एव ण्यन्तस्य श्राधातोः । एवं च श्रपेः पाकार्थत्वमुपपन्नम् ॥

७ पाकग्रहणादिति । सूत्रे पाके वाच्ये शृतमिति निपात्यते इत्युक्तम् । श्राश्रप्योरिति वार्तिके श्रपिग्रहणाच्च णिजन्तस्य पाकार्थत्वसाधनाय पच्धातोर्यः पक्तृव्यव्यापारः स एव श्राधातोरर्थः । णिजन्तस्य श्रपेस्तु पक्तृव्यापाररूपोऽर्थ इत्याश्रयणीयम् । एवं चान्यत्र हेतोरित्यनेन पाचयितृलक्षणो णिजर्थो निषिध्यते । स च निषेधो व्यर्थः, श्राधातोः पाचयितृलक्षणव्यापारे णिचि तस्य पाकसमानार्थत्वाभावात् । तस्मात् 'श्रपेः शृतमन्यत्र हेतोः' इति वार्तिकमेव व्यर्थमिति प्रदीपाशयः । अन्ये तु–'श्रपेः शृत' इति वार्तिकात् पाचयितृलक्षणव्यापारार्थकणिजन्तार्थोऽपि अन्तर्भावितण्यर्थपचेर्घञि पाकपदेन बोधितः स्यादिति तद्वारणाय वार्तिकमावश्यकमित्याहुः ॥

८ स्वतन्त्रेति । श्राधातोः पक्तृव्यापारे एव णिचः सत्वेन स्वतन्त्रप्रयोजकरूपस्य मुख्यहेतोस्तत्रासंभवः ॥

९ वार्तिके हेतुमण्ण्यन्तस्य श्रपेर्ग्रहणेन 'अन्यत्र हेतोः' इत्ययुक्तं, अत आह—ननु श्राश्रप्योरित्वीति ॥

१० 'पीनं मुखम्' इति छ. पाठः ॥

( प्रदीपः ) आङ्पूर्वाचेति । आङाश्रयणेन नियमद्वयविधानात्केवलस्य सर्वत्र पीभावः । 'आङ्पूर्वादेवान्धूधसोः' इत्यनेन नियमेन तुल्यजातीयत्वादुपसर्गान्तरं निवार्यते, न तु केवलः प्यायतिः ॥

( उद्द्योतः ) 'आङ्पूर्वाचैष नियमः' इतिभाष्यस्य पुनरुक्तत्वपरिहारायाह—आङाश्रयणेनेति ॥ ननु आद्यनियमेन केवलस्यापि व्यावृत्तिः स्यादत आह—आङ्पूर्वादेवेति ॥ अन्ये तु—आङ्पूर्वाचैष इति । न तु–अन्धूधसोरेव, तयोरप्याङ्पूर्वादेव–इति नियमद्वयमित्यर्थः । तथा सति पीनं मुखमित्याद्यसिद्धिः स्यात्तदाह—भवति हीति । अन्धूधसोस्तु केवलाद्भवतीत्यत्र न मानम्, एवञ्च कैयटश्चिन्त्यः । तद्व्याख्याने हि पीनोऽन्धुरित्यादेः साधुत्वं लभ्यते, न च तत्र मानमस्ति' इत्याहुः ॥

भाष्ये—श्लक्ष्णपीनमुखीति । '–मुखा' इत्युचितः पाठः । चतुर्थभाष्ये 'स्वाङ्गात्–' इति सूत्रे 'अस्वाङ्गपूर्वपदात्' इत्यस्य कर्मधारयार्थकस्यानुवृत्तेरुक्तत्वादिति बोध्यम् । कर्मधारयपूर्वपदो वा बहुव्रीहिर्बोध्यः ॥

( १०५५ विधिसूत्रम् ॥ ६ । १ । २ आ. १९ )

## २४६७ विभाषा श्वेः ॥ ६ । १ । ३० ॥

( ६०३६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥*॥ श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः ॥*॥

( भाष्यम् ) श्वेर्लिट्यभ्यासलक्षणं संप्रसारणं नित्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । शिश्वियतुः, शिश्वियुः ॥

किमुच्यतेऽभ्यासलक्षणस्येति, न पुनः किल्लक्षणस्यापि । किल्लक्षणमपि हि नित्यमत्र प्राप्नोति ।

किल्लक्षणं श्वयतिलक्षणं बाधिष्यते ।

यथैव तर्हि किल्लक्षणं श्वयतिलक्षणं बाधते, एवमभ्यासलक्षणमपि बाधेत ॥

न ब्रूमोऽपवादत्वात् श्वयतिलक्षणं किल्लक्षणं बाधिष्यत इति ।

किं तर्हि ?

परत्वात् ।

श्वयतिलक्षणस्यावकाशः पिति वचनानि—शुशाव, शुशविथ, शिश्वाय, शिश्वयिथ ।

किल्लक्षणस्यावकाशोऽन्ये कितः–शूनः, शूनवान् ।

इहोभयं प्राप्नोति—शिश्वियतुः, शिश्वियुरिति ।

श्वयतिलक्षणं भवति विप्रतिषेधेन ॥

( प्रदीपः ) लिटः कित्त्वाकित्त्वभेदेन द्वैविध्यादुभयत्र विभाषेयम् । तत्र संप्रसारणपक्षे कृतसंप्रसारणस्य द्विर्वचनान्नास्ति वक्तव्यम्, संप्रसारणाभावपक्षे त्वभ्यासस्य 'लिट्यभ्यासस्योभयेषाम्' इति संप्रसारणं प्राप्नोति–इति मत्वाऽऽह–श्वेर्लिटीति ॥

यथैवेति । किल्लक्षणं नित्यं संप्रसारणं परत्वादियं विभाषा बाधते यथा तथाऽभ्यासलक्षणमपीति भावः ॥

( उद्द्योतः ) ननु शुशुवतुरित्यादावभ्यासेऽपि प्रसारणस्येष्टत्वात्किमर्थं प्रतिषेधः ? अत आह—लिटः कित्त्वेति । किति प्राप्तमकिति चाऽप्राप्तमिति भावः । अत्र च सूत्रे 'लिड्यङोः' इति वर्तते ॥

कृतसंप्रसारणस्येति । परत्वात्पूर्वं संप्रसारणमिति भावः ॥

तथाऽभ्यासेति । विशेषाभावादित्यभिमानः ॥

भाष्ये—वक्ष्यमाणरीत्याऽभ्यासलक्षणांशे विप्रतिषेधासंभवं मत्वोभयोरप्यपवादत्वादिदं बाधकमिति तदाशयं परिकल्प्याह—न ब्रूमोऽपवादत्वादिति ॥

( समाधानभाष्यम् )

अभ्यासलक्षणादपि तर्हि श्वयतिलक्षणं भविष्यति विप्रतिषेधेन ।

अभ्यासलक्षणस्यावकाशोऽन्ये यजादयः—इयाज, उवाय ।

श्वयतिलक्षणस्यावकाशः परं धातुरूपम्—शुशुवतुः, शुशुवुः, शुशविथ ।

श्वयतेरभ्यासस्योभयं प्राप्नोति—शिश्वियुः ।

---

१ आङाश्रयणेनेति । प्रदीपस्यायमाशयः–आङ्पूर्वादेवान्धूधसोरिति नियमेन उपसर्गान्तरपूर्वस्य व्यावृत्तिः—अन्धूधसोरुपसर्गपूर्वाच्चेत्तर्हि आङ्पूर्वादेवेति । एतेनोपसर्गान्तरपूर्वस्यान्धूधसोः प्रयोगो न । एतदभिप्राये केवलस्य–उपसर्गरहितस्यान्धूधसोः प्रयोगः स्यात्, तदाह—केवलस्य सर्वत्र पीभाव इति ॥

२ आङ्पूर्वाचैष नियम इत्येतद्भाष्यं प्रदीपोद्द्योताभ्यां भिन्नाभिप्रायेण व्याख्यायते । भाष्ये उभयतो नियमंप्रदर्श्य 'आङ्पूर्वाच्चैष नियमः' इत्येतद्भाष्यं पुनरुक्तं स्यात्तदर्थं आङाश्रयणेन नियमद्वयविधानात्केवलस्य सर्वत्र पीभाव इत्येवं तात्पर्यं प्रदीप आह । तेन प्रदीपमते केवलस्यान्धूधसोः प्रयोगो भवति । उद्द्योतश्च–अन्धूधसोरुपसर्गपूर्वात्केवलाद्वा स्याच्चेत्तर्हि आङ्पूर्वादेव, न तु तन्मते केवलस्यान्धूधसोः प्रयोगः ॥

३ भाष्ये—श्लक्ष्णपीनमुखीत्यत्र त्रिपदबहुव्रीहौ 'स्वाङ्गाच्चोपसर्जनात्–' इति ङीमलयो न स्यादत आह—मुखेत्युचितः पाठ इति । स्वाङ्गाच्चोपसर्जनादिति सूत्रे भाष्यकृता 'कल्याणपाणिपादा' इत्यत्र ङीबभावाय स्वाङ्गादिति सूत्रे उपसर्जनग्रहणमित्याशङ्क्यास्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद्बहुव्रीहेरित्यर्थात्कल्याणपाणिपादेत्यत्र ङीन्नेति सिद्धान्तितम् । ततश्चास्वाङ्गपूर्वपदादित्येतद्बहुव्रीहिविशेषणमुत पूर्वपदविशेषणमित्याशङ्क्य अस्वाङ्गं च तत् पूर्वपदं चास्वाङ्गपूर्वपदम्–अस्वाङ्गपूर्वपदादित्यर्थः प्रदर्शितः ॥

४ 'वचिस्वपियजादीनाङ्किति' 'लिट्यभ्यासस्योभयेषाम्' ६।१।१५, १७ इति सूत्राभ्याम् ॥

५ 'वचिस्वपि यजादीनाङ्किति' इत्यनेन ॥

६ 'श्वयतिलक्षणं किल्लक्षणं बाधिष्यते' इति ट. पाठः ॥

७ परत्वादिति । ननु प्रदीपे 'किल्लक्षणं नित्यं संप्रसारणं परत्वादियं विभाषा बाधते यथा तथाऽभ्यासलक्षण–' इत्याद्यनुपपन्नम्, नित्यानित्ययोः समबलत्वाभावाद्विप्रतिषेधानुपपत्तेरिति चेन्न । अस्यापि नित्यत्वेन समबलत्वाद्विप्रतिषेधोपपत्तिः ॥

श्वयतिलक्षणं भविष्यति विप्रतिषेधेन ॥

नैष युक्तो विप्रतिषेधः । न हि श्वयतेरभ्यासस्यान्ये यजादयोऽवकाशः । श्वयतेर्यजादिषु यः पाठः सोऽनवकाशः, तस्यानवकाशत्वादयुक्तो विप्रतिषेधः ।

तस्मात्सुष्ठूच्यते—श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध इति ॥

(प्रदीपः) अन्ये यजादय इति । केषुचिदवयवेषु कृतं शास्त्रं समुदाये प्रवृत्तं भवति ॥

न हि श्वयतेरिति । 'यजादीनाम्' इति व्यवस्थावाच्यादिशब्दोपादानात् यथापाठं सर्वेषां चोदितत्वात् कार्येण भाव्यम् । सर्वकार्यार्थश्च गणपाठः-इति 'किति सम्प्रसारणं यजादिषु श्वयतिपाठस्यावकाशः' इत्यपि न शक्यते वक्तुम् ॥

( उद्योतः ) केषुचिदिति । यथा कर्मण्यण् क्वचित्सावकाश आकारान्तेषु केन वाध्यत इति भावः ॥

भाष्ये—परं धातुरूपमिति । अभ्यासोत्तरखण्डे तदभावो विभाषाफलमिति भावः ॥

( भाष्ये ) अभ्यासस्योभयमिति । 'लिट्यभ्यासस्यो–' इति संप्रसारणम्, 'विभाषा श्वेः' इति पाक्षिकाभावश्चेत्यर्थः ॥

यथापाठमिति । संमुग्धनिर्देशे हि तथा वक्तुं शक्यम् । अत्र त्ववयवा एव पृथङ्निर्दिष्टा इति भावः ॥ शून इत्याद्यर्थं यजादिपाठः सावकाशः स्यादत आह—सर्वेति । एवं चैतत्कार्योद्देश्यकः पाठोऽनवकाश इति भावः । लिट्परश्वयत्यभ्यासविषयकलक्षणस्योपप्लुतस्याचारितार्थ्यमिति तात्पर्यम् । न च विप्रतिषेधशास्त्रसहकृतेनानेन तदभाव एव कल्प्यतामिति वाच्यम्, द्वित्वात्पूर्वं परत्वाद्विभाषाप्राप्त्या द्वित्वोत्तरमभ्यासस्य प्राप्त्या युगपत्प्राप्त्यभावात् । एतदेवानवकाशत्वोक्त्या भाष्ये सूचितमित्याहुः ॥

—————

( १०५५ विधिसूत्रम् ॥ ६ । १ । २ आ. २०–२१ )

## २४६९–७० ह्वः संप्रसारणम्—अभ्यस्तस्य च ॥ ६ । १ । ३२–३३ ॥

( ६०३७ योगविभागदर्शकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ह्वः संप्रसारणे योगविभागः[६] ॥ * ॥

( भाष्यम् ) ह्वः संप्रसारणे योगविभागः कर्तव्यः । ह्वः संप्रसारणम्—भवति णौ च संश्चङोः । ततः—अभ्यस्तस्य च । अभ्यस्तस्य च संप्रसारणं भवतीति ।

किमर्थो योगविभागः ? ॥

( प्रदीपः ) ह्वः सम्प्रसारणे योगविभाग इति । इहैकमनेकं वा कार्यं विधातुं कालविच्छेदाभावेन निर्देश एकयोगः । तत्रैकस्मिन् योगे पठ्यमानेऽव्याप्तिरिति योगविभागः कर्तव्यः ॥

( उद्योतः ) एकमनेकं वेति । यथा 'नद्यादिभ्यो ढक्' इत्यादि, 'स्वाय्वोरिच्' इत्यादि च । तत्रैकयोगे जुहावेत्यादि सिद्ध्यति, जुहावयिषतीत्यादि न सिद्ध्यति, ण्यन्तस्याभ्यस्तत्वेऽपि ह्वयतेरभ्यस्तत्वाभावात्, तदाह—अव्याप्तिरिति ॥

( ६०३८ योगविभागफलबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ णौ च संश्चङ्विषयार्थः ॥ * ॥

( भाष्यम् ) णौ च संश्चङ्विषये ह्वः संप्रसारणं यथा स्यात् । जुहावयिषति, अजूहवत् ।

किं पुनः कारणं न सिद्ध्यति ?

ह्वोऽभ्यस्तस्येत्युच्यते ।

न चैतद् ह्वोऽभ्यस्तम् ।

कस्य तर्हि ?

ह्वाययतेः ।

ह्व एतदभ्यस्तम् ।

कथम् ?

'एकाचो द्वे प्रथमस्य' ( ६।१।१ ) इति ।

एवं तर्हि ह्वयतेरभ्यस्तस्येत्युच्यते ।

न चात्र ह्वयतिरभ्यस्तम् ।

कस्तर्हि ?

ह्वाययतिः ।

ह्वयतिरेवात्राभ्यस्तम्[७] ।

कथम् ?

एकाचो द्वे प्रथमस्येति ॥

एवमपि—

( प्रदीपः ) 'ह्वोऽभ्यस्तस्येत्युच्यते' इत्यभिहिते 'एवं तर्हि ह्वयतेरभ्यस्तस्य' इत्यादिकमर्थभेदाभावात्पुनरुक्तमित्याहुः[८] ।

—————

१ श्वयतेर्यजादिष्विति । 'वचिस्वपियजादीनाङ्किति' इति सूत्रेण शूनमित्यस्य सिद्धेर्न स पाठोऽचरितार्थः किन्तु 'लिट्यभ्यासस्योभयेषाम्' इत्यनेनाभ्यासस्य यत्कार्यं श्वयतेरुच्यते तदचरितार्थं सत् विप्रतिषेधप्रतिबन्धकमित्याशयः । एवं च 'श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः' इति वचनं चरितार्थमिति तात्पर्यम् ॥

२ केषुचिदिति । धातुत्वावच्छिन्नोद्देश्यताकं कार्यं कतिपयधातुषु प्रवृत्तमपि समुदाये प्रवृत्तमिव भवति, वचिस्वपीत्यादि धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं हि न तथेति भावः ॥

३ यथापाठं–विशेषधर्मावच्छिन्नोद्देश्यताकत्वेन सर्वेषां यजादीनां चोदितत्वात्सर्वेष्ववयवेष्वपि प्रवृत्तं भवति ॥

४ संमुग्धनिर्देशः–कर्मण्यणित्यादौ ॥

५ अत्र–लिट्यभ्यासस्योभयेषामित्यत्र ॥

६ क. ट. पुस्तकयोर्नास्य वार्तिकत्वेनोल्लेखः ॥

७ "–रेवात्राभ्यस्तः" इति छ. पाठः ॥

८ भाष्ये पुनरुक्त्याशङ्कां निवारयति—ह्वोऽभ्यस्तस्येत्युच्यत इत्यादिना । तत्र हि अयमाशयः—ह्वः संप्रसारणमभ्यस्तस्य चेत्यनेन जिह्वायकीयिषति–इत्यत्र संप्रसारणं मा भूदित्येतदर्थं ह्वेञ्धातोर्यत्र 'अर्थाव्यतिरेकः–रूपाव्यतिरेकः' वा भवेत्तत्र संप्रसारणं न भवतीत्याश्रयणीयम् । 'किं पुनः कारणं न सिद्ध्यति ? ह्वोऽभ्यस्तस्येत्युच्यते' इत्यत्र भाष्यकृताऽर्थाव्यतिरेकः प्रदर्शितः । जुहावयिषतीत्यत्र ह्वेञः स्वार्थप्राधान्यं न भवतीति संप्रसारणं न स्यात् । ततश्च 'एवं तर्हि ह्वयतेरभ्यस्तस्येत्युच्यते' इत्यनेन यत्र ह्वेञो रूपभेदो न स्यात्तत्र संप्रसारणं भवति नान्यत्र । जुहावयिषतीत्यत्र तु ह्वेञो रूपभेदात्संप्रसारणं न प्राप्नोतीति तदाशयः । एवं च न पुनरुक्तिदोषः ॥

तत्र पौनरुक्त्यं परिहरति–जिह्वायकीषिषतीत्यादौ सम्प्रसारणं मा प्रवर्तिष्ट–इति ह्वयतेरर्थाव्यतिरेको रूपाव्यतिरेको वाऽऽश्रयितव्यः । तत्र पूर्वो ग्रन्थोऽर्थव्यतिरेकाश्रयः, उत्तरस्तु रूपव्यतिरेकाश्रयः । इह ह्वयतेरर्थो यत्र न व्यतिरिच्यते यथा—जुहाव जुहविथेति, तत्र संप्रसारणेन भाव्यम्, न त्वर्थव्यतिरेके । ह्वाययतौ च ण्यर्थस्य प्राधान्यात् व्यतिरिक्तार्थो ह्वयतिरिति **पूर्वपक्षः** ॥

**न चैतदिति** । अव्यतिरिक्तार्थस्येति[1] भावः, अव्यतिरिक्तार्थे त्वाश्रीयमाणे जुहूषतीत्यत्र न प्राप्नोति ॥

प्रत्ययार्थस्येच्छायाः प्राधान्यात् प्रकृत्यर्थस्य गुणभावात्–इति मत्वाऽऽह—**ह्व एतदिति** ॥ णिचि तर्हि युकि कृते रूपस्य व्यतिरिक्तत्वात्संप्रसारणाप्राप्तिरिति मत्वाऽऽह—**एवं तर्हि ह्वयतेरिति** ॥

युगागमस्य तद्भक्ततया नास्ति रूपव्यतिरेक इत्याह—**ह्वयतिरिति** ॥

प्रकारान्तरेण संश्चङ्परे णावप्राप्तिमाह—**एवमपीति** ॥

**( उद्द्योतः )** भाष्ये 'संश्चङ्विषये' इत्युक्तिरभ्यासेऽपि संप्रसारणार्थेति बोध्यम् ॥ **अर्थाव्यतिरेक इति** । व्यतिरेको नाम–अधिकार्थसंवलितता, तद्विशेषणिकोपस्थितिः । प्रकृतिप्रत्ययाभ्यां तथैवोपस्थितेः । तदभावोऽव्यतिरेकः, तेन स्वार्थप्राधान्यमित्यर्थः । 'आश्रयितव्यः' इत्यस्य 'संप्रसारणनिमित्तत्वेन' इति शेषः । ततश्च यत्र ह्वयतिः स्वार्थं प्राधान्येनाभिधत्ते तत्र संप्रसारणमित्यर्थः ॥ **रूपाव्यतिरेक इति** । रूपभेदाभाव इत्यर्थः । तदेव विशदयति—**इह ह्वयतेरित्यादिना** । **व्यतिरिक्तार्थः**—अधिकमर्थं प्रति गुणभूतस्वार्थकः ॥

**न प्राप्नोतीति** । एवं तु रूपाव्यतिरेक एवाश्रयणीयः । जुहावयिषति जिह्वायकीयिषतीत्यादौ च युका रूपव्यतिरेकान्न दोषः । तत्र चाश्रिते सिध्यत्येव जुहूषतीति भावः ॥ **युगागमस्य तद्भक्तत्वेति** । जिह्वायकीयिषतीत्येतद्व्यावृत्तये[2] उपायान्तरं वक्ष्यतीति भावः ॥

**( ६०३९ योगविभागफलोपष्टम्भकवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ अभ्यस्तनिमित्तेऽनभ्यस्तप्रसारणार्थम्[3] ॥ * ॥

**( भाष्यम् ) अभ्यस्तनिमित्त इति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**अनभ्यस्तप्रसारणार्थम् । अनभ्यस्तस्य प्रसारणं यथा स्यात् । जुहूषति, जोहूयते ॥**

**( प्रदीपः ) अनभ्यस्तस्येति** । अकृतद्विर्वचनस्येत्यर्थः ॥

**( ६०४० आक्षेपवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ अभ्यस्तप्रसारणे ह्यभ्यासप्रसारणाप्राप्तिः ॥ * ॥

**( भाष्यम् ) अभ्यस्तप्रसारणे हि अभ्यासप्रसारणस्याप्राप्तिः स्यात् । 'न संप्रसारणे संप्रसारणम्' ( ६।१।३७ ) इति प्रतिषेधः प्रसज्येत ।**

**नैष[4] दोषः ।**

**व्यवहितत्वान्न भविष्यति ॥**

**( प्रदीपः ) व्यवहितत्वादिति** । अवर्णहकाराभ्यां पूर्वो यण् व्यवहित इति तस्य संप्रसारणप्रतिषेधो न भविष्यतीत्यर्थः ॥

**( उद्द्योतः )** प्रतिषेधो न भविष्यतीति । तदभावे सकृत्प्रवृत्त्यैवोभयोः संप्रसारणसिद्धिरिति भावः ॥

**( ६०४१ आक्षेपसाधकवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ समानाङ्गे प्रसारणप्रतिषेधात् प्रतिषेधः ॥ * ॥

**( भाष्यम् ) समानाङ्गे प्रसारणप्रतिषेधात्प्रतिषेधः प्राप्नोति । समानाङ्गग्रहणं तत्र चोदयिष्यति ॥**

**( ६०४२ योगविभागफलोपष्टम्भसंपादकवार्तिकम् ॥ ६ ॥)**

## ॥ * ॥ कृदन्तप्रतिषेधार्थं[5] च ॥ * ॥

**( भाष्यम् ) कृदन्तप्रतिषेधार्थं चाभ्यस्तनिमित्त इति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**ह्वायकमिच्छति ह्वायकीयति, ह्वायकीयतेः सन् जिह्वायकीयिषति ॥**

**( समाधानपूर्वकसिद्धान्तभाष्यम् )**

**स तर्हि निमित्तशब्द उपादेयः, न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते । अन्तरेणापि निमित्तशब्दं निमित्तार्थोऽवगम्यते । तद्यथा—दधित्रपुसं प्रत्यक्षो ज्वरः, ज्वरनिमित्तमिति गम्यते । नड्वलोदकं पादरोगः, पादरोगनिमित्तमिति गम्यते । आयुर्वै घृतम्, आयुषो निमित्तमिति गम्यते ॥**

**अथवा[6]ऽकारो मत्वर्थीयः । अभ्यस्तमस्त्यस्मिन् सोऽयमभ्यस्तः, अभ्यस्तस्येति ॥**

---

१ अव्यतिरिक्तार्थस्येतीति । जुहावयिषतीति रूपं न स्वार्थप्राधान्यस्य ह्वेञ इत्याशयः ॥

२ युको रूपान्तरत्वानापादकत्वे दोषादाह—जिह्वायकीति ॥

३ ननु जुहूषति जोहूयत इत्यत्र सन्नन्तस्य यङन्तस्य चाभ्यस्तत्वम्, न तु ह्वेञः, इति सूत्रेणानेन संप्रसारणाप्राप्तेस्तदुपायमाह—अभ्यस्तनिमित्त इति । अभ्यस्तनिमित्ते सनि यङि वा संप्रसारणं भवतीत्यर्थः । एवं च जुहावयिषतीत्यत्र अभ्यस्तनिमित्ते सनि णिचा व्यवधानात् ह्वेञः संप्रसारणाप्राप्तिरित्याशयः ॥

४ 'ननु च व्यवहितत्वान्न भविष्यति' इति क. ट. पाठः ॥

५ '–षेधार्थं वा' इति क. ट. पाठः । अनयोश्च पुस्तकयोर्नैतद्वार्तिकं किं तु भाष्यमेव ॥

६ अथवेति । अस्मिन् पक्षे हि भाष्यकृता सूत्रस्थाभ्यस्तपदेन ह्वयतिर्गृह्यते ॥

अथवाऽभ्यस्तस्येति[1] नैषा ह्वयतिसमानाधिकरणा षष्ठी ।

का तर्हि ?

संबन्धषष्ठी । अभ्यस्तस्य यो ह्वयतिः ।

किं चाभ्यस्तस्य ह्वयतिः ।

प्रकृतिः । ह्वोऽभ्यस्तस्य प्रकृतेरिति ॥

योगविभागस्तु कर्तव्य एव । नात्र ह्वयतिरभ्यस्तप्रकृतिः ।

किं तर्हि ?

ह्वाययतिः ॥

( प्रदीपः ) तद्यथेति । ननु दृष्टान्तेषु विरुद्धपद[2]सामानाधिकरण्याद्गौणार्थत्वं प्रतीयते, इह तु मुख्यार्थसम्भवे कथं गौणस्य ग्रहणम् ? लक्ष्यसंस्कारार्थत्वाल्लक्षणस्य तत्सिद्धये गौणस्याप्यर्थस्येहाङ्गीकरणाददोषः ॥

अथवेति[3] । यौगिकत्वान्निमित्तेऽभ्यस्तशब्द[4]स्य गौणार्थत्वाभावः । ह्वयतिरेवाभ्यस्तशब्देनोच्यते न तु सनादिः प्रत्यय इति षष्ठीनिर्देशो[5] न चोदनीयः । अभ्यस्तमस्मिन्नस्तीत्यधिकरणत्वेन ह्वयतिरेव निर्दिष्टः । प्रत्ययाभिधाने वा सप्तम्याः स्थाने षष्ठी कृता । व्यधिकरणे वा षष्ठ्यौ[6]—अभ्यस्तस्य सनादेः प्रकृतिर्यो ह्वयतिस्तस्येत्यर्थः ॥

अभ्यस्तस्य यो ह्वयतिरिति । एवं चोभय[7]प्रसङ्गे परत्वात्संप्रसारणे कृते द्विर्वचनमित्यदोषः । जिह्वायकीयिषतीत्यत्र तु न भवति, अभ्यस्तेन प्रत्ययविशेषस्याक्षेपादभ्यस्तनिमित्ते प्रत्ययेऽनन्तरस्य ह्वयतेः संप्रसारणभावात् । अत एव सन्चङ्परे णौ न प्राप्नोतीति योगविभागः कर्तव्यः ॥

( उद्द्योतः ) लक्ष्यसंस्कारेति । तात्पर्यानुपपत्तिरपि लक्षणाबीजमिति भावः ॥

नन्वभ्यस्तनिमित्त[8]प्रत्ययस्याभ्यस्तशब्देनाभिधाने सप्तमी युक्ता—इति षष्ठीनिर्देशोऽयुक्तोऽत आह—ह्वयतिरेवेति ॥ ननु सप्तम्यर्थवृत्तिनाऽभ्यस्तशब्देन कथं ह्वयतेरभिधानम् ? अत आह—अभ्यस्तमस्मिन्निति । ह्वयतेरभ्यस्तकारणत्वात्, कारणे च कार्यस्य भावादित्यर्थः । अत्र पक्षे जिह्वायकीयिषतीतिसिद्धिर्वक्ष्यमाणस्वीयप्रकारेणेति भावः ॥ इत एव वाऽस्वरसादाह—सप्तम्याः स्थाने इति ॥ भाष्ये वक्ष्यमाण[9]वैयधिकरण्यान्वयापेक्षया स्वोक्ते वैलक्षण्यं दर्शयितुं व्यधिकरणषष्ठीपक्षेऽन्वयमाह—अभ्यस्तस्य सनादेरिति ॥

अदोष इति । जुहूषतीत्यादिसिद्धेरिति भावः ॥ कथं तर्हि तृतीयपक्षे कृदन्ते संप्रसारणाभावः ? अत आह—जिह्वायकीयिषतीति ॥ ननु 'सन्यङोः' इतिषष्ठीनिर्देशादभ्यासेन स्वघटितसमुदायस्य द्वित्वनिमित्तप्रत्ययान्तत्वाक्षेपेऽपि तत्परत्वाक्षेपे मानाभावः । तदन्तत्वं च तद्घटितसमुदायस्य प्रकृतेऽप्यस्त्येव—इति चेत्; चिन्त्यमेवैतत्, भाष्योक्तेनाभ्यस्तस्य प्रकृतेर्ह्वयतेरित्यनेनास्यापि वारणात् । यद्गतधातुत्वमादायावयवस्य द्वित्वं स हि तत्प्रकृतिः । स चात्र क्यजन्तः । अत एव 'ह्वः संप्रसारणम्' इति चरितार्थम् ॥

( १०५७ निपातनसूत्रम् ॥ ६ । १ । २ आ. २२ )

## २४७३ अपस्पृधेथामानृचुरानृहुश्चिच्युषे तित्याज श्राताः श्रितमाशीराशीर्तः ॥ ६ । १ । ३६ ॥

( निपातनोपदर्शकभाष्यम् )

अपस्पृधेथामिति किं निपात्यते ?

स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचने आथामि द्विर्वचनं संप्रसारणमकारलोपश्च निपात्यते । इन्द्रश्च विष्णो यदपस्पृधेथाम्, अस्पर्धेथामिति भाषायाम् ॥

अपर आह—

अपपूर्वात्स्पर्धेर्लङ्यात्मनेपदानां मध्यमपुरुषस्य द्विवचने आथामि संप्रसारणमकारलोपश्च निपात्यते । इन्द्रश्च विष्णो यदपस्पृधेथाम्, अपास्पर्धेथामिति भाषायाम् ॥

श्राताः श्रितमिति किं निपात्यते ?

श्रीणातेः क्ते श्राभावश्रिभावौ निपात्येते ।

क पुनः श्राभावः, क वा श्रिभावः ?

सोमे श्राभावः, अन्यत्र श्रिभावः । न तर्हीदानीमिदं भवति—श्रितः सोम इति ।

बहुवचने श्राभावः ॥

न तर्हीदानीमिदं भवति—श्रिता नो ग्रहाः ।

सोमबहुत्वे श्राभावः, अन्यत्र श्रिभावः ॥

---

१ अथवेति । अस्मिन् पक्षे हि भाष्ये सूत्रस्थाभ्यस्तपदेन सनादिः प्रत्ययो गृह्यते ॥

२ विरुद्धपदेति । दधित्रपुसं प्रत्यक्षो ज्वर इत्यादिदृष्टान्तवाक्येषु दधित्रपुसमिति पदार्थस्य ज्वरपदार्थेनाभेदान्वयोऽसंभवि, विरुद्धपदार्थत्वात् । अतस्तत्र मुख्यार्थबाधात् ज्वरशब्दस्य ज्वरनिमित्ते लक्षणा युक्ता । इहाभ्यस्तस्य चेति सूत्रे तु मुख्यार्थबाधासंभवाल्लक्षणा कथं स्यादित्याशङ्क्य लक्ष्यसंस्कारार्थत्वाल्लक्षणस्य मुख्यार्थबाधाभावेऽपि तात्पर्यानुपपत्तितो लक्षणा वक्तव्येति भावः ॥

३ अथवेति—'अथवाऽकारो मत्वर्थीयः' इति भाष्यस्थमेतत्प्रतीकम् ॥

४ अभ्यस्तशब्दस्येति । अभ्यस्तमस्ति अस्मिन्नित्यादियोगसाधनेनाभ्यस्तपदस्याभ्यस्तनिमित्त इति मुख्य एवार्थः, न तु लाक्षणिक इति भावः ॥

५ षष्ठीनिर्देश इति । अभ्यस्तस्य चेति सूत्र इति भावः । अभ्यस्तमस्त्यस्मिन्निति विग्रहेऽभ्यस्तपदेन सनादेः प्रत्ययस्य ग्रहणेऽभ्यस्तस्य चेति सूत्रे 'अभ्यस्ते' इति प्राप्नोति । अभ्यस्तपदेन ह्वेञो ग्रहणे च न कोऽपि दोषः ॥

६ षष्ठ्यौ—इति । अभ्यस्तस्य—ह्वः—इति षष्ठीद्वयमित्यर्थः ॥

७ उभयप्रसङ्गे—द्वित्वसंप्रसारणयोः प्रसङ्गे ॥

८ 'नन्वभ्यस्तमिलितप्रत्ययस्य' इति ग. पाठः ॥

९ वक्ष्यमाणेति । अभ्यस्तस्य यो ह्वयतिरित्येतत् ॥

( प्रदीपः ) कस्यांचिच्छाखायामस्पृधेथामित्येकं पदमाद्युदात्तं पठ्यते । पदद्वयं चान्यस्याम् । तत्र द्वितीयमाद्युदात्तम् । तदुभयमप्यनेन संगृह्यते । एकश्रुत्या स्वरसर्वनाम्ना पाठात् । तत्रैकपद्ये 'तिङ्ङतिङः' इति निघातः प्राप्तः 'यद्वृत्तान्नित्यम्' इति प्रतिषिद्धः । ततोऽट्स्वरेणाद्युदात्तं पदं भवति । यदा द्वे पदे तदा 'निपातैर्यद्यदि–' इति निघाते प्रतिषिद्धे 'तास्यनुदात्तेत्–' इति लसार्वधातुकानुदात्तत्वे धातुस्वरेण 'स्पृधेथाम्' इति पदमाद्युदात्तम् । 'तिङि चोदात्तवति' इत्यपशब्दस्य निघातः ॥

**सोमबहुत्व इति** । सोमस्यैव बहुत्वे श्राभाव इति नियमाश्रयणात्सोमादन्यत्रैकत्वेऽपि श्राभावः क्वचिद्दृश्यते ॥

( उद्द्योतः ) भाष्ये—**अकारलोप इति** । 'स्प'शब्दाकारस्येत्यर्थः ॥

कथं पुनरेकप्रयोगे एकपदत्वानेकपदत्वे, अत आह—**कस्यांचिदिति** ॥ सूत्रे कथमुभयोः सङ्ग्रहः ? अत आह—**एकश्रुत्येति** । द्वितीयपक्षेऽडभावश्छान्दसत्वात् ॥ **सोमस्यैवेति** । बहुत्वे चेत् श्राभावः सोमस्यैवेत्यर्थः ॥ **दृश्यते इति** । 'यदि श्रातो जुहोतन' इत्यादौ ॥

—o<>o—

( १०५८ निषेधसूत्रम् ॥ ६ । १ । २ आ. २३ )

## २४७४ न संप्रसारणे संप्रसारणम् ॥ ६ । १ । ३७ ॥

( सूत्रप्रयोजनभाष्यम् )

**किमर्थमिदमुच्यते ?**

**वचिस्वपियजादीनां च ग्रहादीनां च संप्रसारणमुक्तम् । तत्र यावन्तो यणः सर्वेषां संप्रसारणं प्राप्नोति । इष्यते च परस्य यथा स्यान्न पूर्वस्य–इति । तच्चान्तरेण यत्नं न सिध्यतीति—**

**न संप्रसारणे संप्रसारणम् ।**

**एवमर्थमिदमुच्यते ॥**

**किमन्येऽप्येवं विधयो न भवन्ति–'अतो दीर्घो यञि' 'सुपि च' (७।३।१०१;१०२) इति, घटाभ्याम् । अकारमात्रस्य दीर्घत्वं कस्मान्न भवति ?**

**अस्त्यत्र विशेषः । इयमत्र परिभाषोपतिष्ठते—'अलोऽन्त्यस्य' (१।१।५२) इति ।**

**ननु चेदानीमेतया परिभाषयेहापि शक्यमुपस्थातुम् ।**

**नेत्याह । न हि वचिस्वपियजादीनां ग्रहादीनां चान्त्यो यणस्ति ।**

**एवं तर्ह्यनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीत्यन्त्यसदेशो यो यण् तस्य कार्यं भविष्यति ।**

**नैतस्याः परिभाषायाः सन्ति प्रयोजनानि ॥**

( उद्द्योतः ) भाष्ये—**नैतस्याः परिभाषाया इति** । एतद्विषयोदाहरणानि न परिभाषया सिध्यन्ति, व्यधादौ यणोऽन्त्येन समानदेशत्वाभावात् । एतत्साध्यानि प्रयोजनानि नास्याः परिभाषाया भवन्तीति **भाष्यक्षरार्थः** । अत एव 'नैषाऽस्ति परिभाषा' इति नोक्तम् । अत एव 'ष्यङः–' इति सूत्रे प्रयोजनान्यथासिद्धिकरणोत्तरमपि 'एषा कर्तव्या, प्रतिविधेयं दोषेषु' इति उपसंहृतम् । अत एवादसुयङिति सिद्धिरिति दिक् ॥

( प्रयोजनाक्षेपभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—न सर्वस्य यणः संप्रसारणं भवतीति यदयं प्यायः पीभावं शास्ति ।**

**कथं कृत्वा ज्ञापकम् ?**

**पीभाववचन एतत्प्रयोजनम्—आपीनोऽन्धुः, आपीनमूधः—एतद् रूपं यथा स्यादिति । यदि चात्र सर्वस्य यणः संप्रसारणं स्यात् पीभाववचनमनर्थकं स्यात् । संप्रसारणे कृते संप्रसारणपरपूर्वत्वे द्वयोरिकारयोरेकादेशे सिद्धं रूपं स्यात्—आपीनोऽन्धुः, आपीनमूध इति ।**

**पश्यति त्वाचार्यः—न सर्वस्य यणः संप्रसारणं भवतीति ततः प्यायः पीभावं शास्ति ॥**

( प्रत्याक्षेपभाष्यम् )

**नैतदस्ति ज्ञापकम् । सिद्धे हि विधिरारभ्यमाणो ज्ञापको भवति, न च प्यायः संप्रसारणेन सिध्यति । संप्रसारणे हि सत्यन्त्यस्य प्रसज्येत ॥**

( प्रत्याक्षेपनिरासभाष्यम् )

**एवमपि ज्ञापकमेव ।**

---

१ ततोऽट्स्वरेणेति । अपस्पर्धेथामित्येकपदे स्पर्धधातुर्धातोरन्त उदात्त इति उदात्तः, तत आथामि तास्यनुदात्तेदित्यनेनानुदात्ते च अटि लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यनेनोदात्ते आद्युदात्तं पदं भवति ॥

२ 'वच्चिस्वपियजादीनां ग्रहादीनां च' इति छ. पाठः । 'वचिस्वपियजादीनां च संप्रसारणं' इति क. पाठः ॥

३ 'संप्रसारणं' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

४ 'स्यान्न पूर्वस्य तच्चान्तरेण' इति च. छ. पाठः ॥

५ क. च. झ. छ. पुस्तकेषु 'न'रहितः पाठः । ट. पुस्तके 'न'सहितः । भाष्यकारशैलीसिद्धत्वादयमेवात्र पाठ आहृतः ॥

६ 'अत एव च' इति झ. पाठः ॥

७ पीभाववचनमिति । प्यायः पीति सूत्रे संप्रसारणस्यानुवृत्तत्वाद्यण्मात्रस्य संप्रसारणे यकारद्वयस्यापि संप्रसारणे इष्टं रूपं सिद्धमिति पीभाववचनमनर्थकं सज्ज्ञापकं भवतीत्याशयः ॥

८ 'ज्ञापकार्थो' इति च. झ. छ. पाठः ॥

९ अन्त्यस्येति । अलोऽन्त्यस्येत्यनेन । सर्वस्य यणः संप्रसारणं न भवतीति ज्ञापने 'अलोऽन्त्यस्य' इत्यनेनान्त्यस्य स्यात्, अत्रान्त्यस्य यणः सत्वात् । वचिस्वपीत्यत्रान्त्ययणभावादियं परिभाषा नोपतिष्ठेत । अत्र तु तदुपस्थानाभावः प्रमाणं नास्तीत्यर्थः ॥

कथम्? प्याय इति नैषा स्थानषष्ठी ।

का तर्हि?

विशेषणषष्ठी । प्यायो यो यणिति । तदेतज्ज्ञापयत्याचार्यः—न सर्वस्य यणः संप्रसारणं भवतीति यदयं प्यायः पीभावं शास्ति ॥

( आक्षेपसमर्थकभाष्यम् )

एवमप्यनैकान्तिकमेतत् । एतावज्ज्ञाप्यते-न सर्वस्य यणः संप्रसारणं भवतीति । तत्र कुत एतत् परस्य भविष्यति न पूर्वस्येति ॥

उच्यमानेऽप्येतस्मिन् सूत्रे कुत एतत्परस्य भविष्यति न पुनः पूर्वस्येति ।

एकयोगलक्षणं खल्वपि संप्रसारणम्, तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव । प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुं नाभिनिर्वृत्तस्य । यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति, किं तेन कृतं स्यात् ।

अथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव । तत्र निमित्तसंश्रयोऽनुपपन्नो न संप्रसारणे संप्रसारणमिति ॥

( उद्योतः ) यदि तावदिति । अत एव 'लक्ष्ये लक्षणस्य' इति न्यायस्यायमविषयः ॥

( आक्षेपनिवारकभाष्यम् )

नैष दोषः । यत्तावदुच्यते-उच्यमानेऽप्येतस्मिन् कुत एतत्परस्य भविष्यति न पूर्वस्येति । इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो गम्यते । एतदेव ज्ञापयति—परस्य भविष्यति न पूर्वस्येति यदयं न संप्रसारणे संप्रसारणमिति प्रतिषेधं शास्ति ॥

यदप्युच्यते—एकयोगलक्षणं खल्वपि संप्रसारणं तद्यदि तावत्परमभिनिर्वृत्तं पूर्वमप्यभिनिर्वृत्तमेव प्रसक्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति । अस्तूभयोरभिनिर्वृत्तिः । न वयं पूर्वस्य प्रतिषेधं शिष्मः ।

किं तर्हि?

संप्रसारणाश्रयं यत् प्राप्नोति तस्य प्रतिषेधम् । ततः पूर्वत्वे प्रतिषिद्धे यणादेशेन सिद्धम् ॥

यदप्युच्यते—अथापि पूर्वमनभिनिर्वृत्तं परमप्यनभिनिर्वृत्तमेव तत्र निमित्तसंश्रयोऽनुपपन्न इति । तादर्थ्यात्ताच्छब्द्यं भविष्यति । तद्यथा—इन्द्रार्था स्थूणा—इन्द्र इति ।

एवमिहापि संप्रसारणार्थं संप्रसारणम् । तद्यत्प्रसारणार्थं प्रसारणं तस्मिन् प्रतिषेधो भविष्यति ॥

( प्रदीपः ) किं तर्हीति । संप्रसारणनिमित्तं पूर्वत्वं संप्रसारणशब्देनोपचाराद्दुच्यते ॥

( उद्योतः ) (भाष्ये) इहेङ्गितेनेति । इङ्गितम्—मनोव्यापारः, चेष्टितम्—शारीरव्यापार उच्चारणम्, निमिषितम्—नेत्रव्यापारः । एते प्रत्यक्षे आचार्ये तदभिप्रायगमकाः । प्रकृते तु तादृशसूत्रोच्चारणमेव तादृशार्थविषयकमाचार्यतात्पर्यं गमयतीत्यर्थः ॥ एतदेव ज्ञापयति परस्येति । न पूर्वं पूर्वस्य भविष्यतीत्यर्थः । पश्चात्प्राप्तं त्वनेन निषिध्यते । लक्ष्यभेदाच्च न 'लक्ष्ये लक्षणस्य' इति न्याय इति भावः । एतेन 'प्रकल्प्य वाऽपवादविषयम्' इत्यनेन पूर्वं परस्य यणः संप्रसारणमिति 'उभे अभ्यस्तम्' इतिसूत्रकैयटोक्तमपास्तम् । तत्र 'प्रकल्प्य' इत्यस्य परित्यज्येत्येवार्थाच्च ॥

एवं रीत्या प्रागुक्तदोषत्रयस्याप्युद्धारे कृतेऽपि तथा गूढाशयानभिज्ञं प्रति अन्त्ययोरुद्धारं प्रौढ्या प्रकारान्तरेणाप्याह—यदप्युच्यत इत्यादिना ॥ न वयं पूर्वस्येति । पूर्वस्य संप्रसारणस्येत्यर्थः ॥

( वार्तिकावतरणभाष्यम् )

अथ संप्रसारणमिति वर्तमाने पुनः संप्रसारणग्रहणं किमर्थम्?

( ६०४३ पदकृत्यवार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रसारणप्रकरणे पुनः प्रसारणग्रहणमतोऽन्यत्र प्रसारणप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) प्रसारणमिति वर्तमाने पुनः संप्रसारणग्रहण एतत् प्रयोजनं विदेशस्थमपि यत् संप्रसारणं तस्यापि प्रतिषेधो यथा स्यात्—'व्यथो लिटि' ( ७।४।६८ ) विव्यथे ।

नैतदस्ति प्रयोजनम् । हलादिशेषापवादोऽत्र संप्रसारणम् ॥

इदं तर्हि—'श्वयुवमघोनामतद्धिते' (६।४।१३३) यूना, यूने ।

उच्यमानेऽप्येतस्मिन्न सिध्यति ।

१ 'प्येतस्मिन् कुतः' इति च. छ. पाठः ॥
२ 'न पूर्वस्येति' इति च. छ. झ. क. पाठः ॥
३ 'भुङ्क्थाः' इति क. छ. झ. पाठः ॥
४ 'तादृशसूत्रोच्चारणेनैव' इति झ. पाठः ॥
५ 'परित्यज्येत्येवार्थः' इति ग. पाठः ॥
६ दोषत्रयस्यापीति । उच्यमानेऽप्येतस्मिन् सूत्रे कुत एतदिति प्रथमो दोषः । एकयोगलक्षणं खल्वपीति द्वितीयः । अथापि पूर्वमनभिनिर्वृत्तमिति तृतीयः ॥
७ 'ह्वः संप्रसारणम्' ६।१।३२ इत्यतः ॥
८ 'संप्रसारणं' इति च. छ. पाठः ॥
९ हलादीति । 'विव्यथे' इत्यत्र न संप्रसारणे संप्रसारणमिति निषेधाप्रवृत्तावपि न दोषः । यतः 'व्यथो लिटि' इत्यस्य 'हलादिः शेषः' इत्यस्यापवादत्वेनोत्सर्गसमानदेशा अपवादा इति न्यायेन यकारस्यैव तत्संप्रसारणं स्यात् न पूर्वस्येति नेदं संप्रसारणग्रहणफलमिति भावः ॥

**किं कारणम्?**

**उकारेण व्यवधानात्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव।**

**एवं तर्हि—**

(प्रदीपः) **हलादिशेषापवाद इति।** उत्सर्गसदेशस्थापवादो भवतीति परस्यैव संप्रसारणं भवति, न पूर्वस्य॥

**एकादेशे कृते इति।** परं प्रत्यादिवद्भावात्॥

(उद्योतः) ननु संप्रसारणस्य हलादिशेषापवादत्वेऽपि कथं वस्य संप्रसारणाभावः? अत आह—**उत्सर्गेति।** बहुजकच्श्रम्सु 'प्राक्टेः', 'पुरस्तात्' शब्दाभ्यां मित्वाच्च तद्बाधेऽप्यन्यत्र तद्बाधे मानाभाव इति भावः॥ ननु हलादिशेषेऽपि वकारेऽस्य चारितार्थ्यात्कथमपवादत्वम्? परत्वेन बाधे तु नास्य न्यायस्य विषय इति चेन्न; तत्तद्विषयेऽवश्यप्राप्त्या कृते चारितार्थ्येऽपि बाध इत्यर्थस्य 'अजादेः—' इति सूत्रे भाष्ये स्पष्टमुक्तत्वेनादोषात्[1]। थकारसंबन्धिनिवृत्तेरेवायमपवाद इति थकारनिवृत्तिर्भवत्येवेति बोध्यम्॥

नन्वेकादेशे संप्रसारणपरत्वाभावात् कथं निषेधः? अत आह—**परं प्रतीति।** वर्णाश्रयेऽन्तादिवद्भावप्रतिषेधादिदं **चिन्त्यम्।** किन्तु 'अचः परस्मिन्—' इति स्थानिवत्त्वेनैव संप्रसारणत्वमिति युक्तम्। एवञ्च तेनैवातिदेशेन व्यवधानमित्याह—(भाष्ये) **एकादेशः पूर्वेति॥**

(६०४४ उपसंख्यानवार्तिकम्॥ २॥)

**॥ * ॥ समानाङ्गग्रहणं च ॥ * ॥**

(भाष्यम्) **समानाङ्गग्रहणं च कर्तव्यम्। 'न संप्रसारणे संप्रसारणं समानाङ्गे' इति वक्तव्यम्॥**

(उद्योतः) भाष्ये—**एवं तर्हि समानाङ्गेति।** एवञ्च तत्सामर्थ्या[2]न्निर्दिष्टांशविकलपरिभाषोपस्थितिरिति भावः। समानाङ्गग्रहणप्रत्याख्याने तु 'यूनस्तिः' इत्यादि निर्देशात्तदर्थलाभ इति बोध्यम्॥

(६०४५ उपसंख्याने दोषवार्तिकम्॥ ३॥)

**॥ * ॥ तत्रोपोषुषि दोषः ॥ * ॥**

(भाष्यम्) **तत्रोपोषुषि दोषो भवति। उपोषुषा, उपोषुषे, उपोषुषि—[3]इति॥**

(प्रदीपः) **उपोषुषेति।** उप[4]पूर्वाद्वसेः 'भाषायां सदवसश्रुवः' इति क्वस्वादेशविधानाद्भूतसामान्ये लिडनुमीयते, तस्य क्वसुः, 'वचिस्वपि—' इति संप्रसारणम्, द्विर्वचनम्, 'अकः सवर्णे दीर्घः', 'वस्वेकाजाद्घसाम्' इतीट्, 'शासिवसि—' इति षत्वम्। तृतीयैक[5]वचनम्, 'वसोः संप्रसारणम्' इति संप्रसारणम्, वलादित्वाभावादिडभावः। अत्र समानाङ्गग्रहणात् 'वचिस्वपि—' इत्यस्य संप्रसारणस्य निषेधप्रसङ्गः॥

(६०४६ दोषनिरासवार्तिकम्॥ ४॥)

**॥ * ॥ न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् प्राप्तिप्रतिषेधात् ॥ * ॥**

(भाष्यम्) **न वा एष दोषः।**

**किं कारणम्?**

**यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् द्वितीया या प्राप्तिः सा प्रतिषिध्यते। अत्र च वसिः क्वसावङ्गम्, क्वस्वन्तं पुनर्विभक्तौ॥**

**अथवा—यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते?**

**यावद्ब्रूयात् प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुमिति। अत्र च यदा वसेः, न तदा क्वसोः। यदा च क्वसोः, अभिनिर्वृत्तं तदा वसेर्भवति॥**

**अथवा—यस्याङ्गस्य प्रसारणप्राप्तिरित्यनेन किं क्रियते?**

**यावद्ब्रूयादसिद्धं बहिरङ्गमन्तरङ्ग इति। असिद्धत्वाद्बहिरङ्गलक्षणस्य वसुसंप्रसारणस्यान्तरङ्गलक्षणः प्रतिषेधो न भविष्यति॥**

(उद्योतः) भाष्ये—**यस्याङ्गस्येति।** यत्प्रत्ययनिमित्ता संप्रसारणप्राप्तिस्तत्प्रत्ययनिरूपिताङ्गे या द्वितीया प्राप्तिरित्यर्थः। एतच्च 'पदस्य विभज्यान्वाख्यानम्' इतिपक्षे बोध्यम्॥

क्रमेणान्वाख्यानमाश्रित्याप्याह—**अथ वेति॥**

पदावधिकान्वाख्याने प्रकारान्तरमाह—**अथ वेति। अन्तरङ्गलक्षणः—**एकनिमित्तकान्तरङ्गसंप्रसारणमादाय चरितार्थ इत्यर्थः॥

(६०४७ उपसंख्यानवार्तिकम्॥ ५॥)

**॥ * ॥ ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ॥ * ॥**

(भाष्यम्) **ऋचि त्रेः संप्रसारणं वक्तव्यम्, उत्तरपदादिलोपश्छन्दसि वक्तव्यः। तृचं सूक्तम्, तृचं साम।**

**छन्दसीति किम्?**

**त्र्यृचानि॥**

(प्रदीपः) **तृचमिति।** तिस्र ऋचोऽस्मिन्निति समासः। 'ऋक्पूरब्धूः—' इति समासान्तः॥

---

[1] ननु हलादिः शेषापवादत्वेऽस्य सूत्रस्य विषयश्च इत्यत्र हलादिः शेषेण थकारनिवृत्तिर्न स्यादत आह—यकारसंबन्धीति॥

[2] तत्सामर्थ्यादिति। समानाङ्गग्रहणसामर्थ्यात्तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषा निर्दिष्टांशरहिता प्रवर्तते इति भावः। तेन पूर्वस्येति प्रवर्तते न त्वव्यवहितस्येति॥

[3] क. ट. पुस्तकयोरितिशब्दरहितः पाठः॥

[4] उपेयिवानित्यस्य सिद्धिप्रकारमाह—उपपूर्वाद्वसेरिति॥

[5] उपेयुषा—इत्यस्य सिद्धिप्रकारमाह—तृतीयेति॥

( ६०४८ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ रयेर्मतौ बहुलम् ॥ * ॥

(भाष्यम्) रयेर्मतौ संप्रसारणं बहुलं वक्तव्यम्। आरेवानेतु नो विशः । न च भवति-रयिमान् पुष्टिवर्धनः ॥

( ६०४९ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ कक्ष्यायाः संज्ञायाम् ॥ * ॥

( भाष्यम् ) कक्ष्यायाः संज्ञायां मतौ संप्रसारणं कर्तव्यम् । कक्षीवन्तं य औशिजः । कण्वः—कक्षीवान् ।

संज्ञायामिति किमर्थम् ?

कक्ष्यावान् हस्ती ॥

( प्रदीपः ) कक्ष्याया इति । 'आसन्दीवदष्ठीवत्—' इत्यत्र कक्षीवच्छब्दस्य निपातनाद्वार्तिकं नारब्धव्यम् ॥

( उद्द्योतः ) नारब्धव्यमिति । [1]एतद्भाष्यप्रामाण्यात्तत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इत्यन्ये ॥

———

( १०५९ विधिसूत्रम् ॥ ६ । १ । २ आ. २४ )

## २४७६ वश्चास्यान्यतरस्यां किति ॥ ६ । १ । ३९ ॥

(उद्द्योतः) 'वे[2]ञः' 'ल्यपि च' इति सूत्रक्रमः । किति[3] लिटि वयो यस्य वः स्याद्वा, तस्य च संप्रसारणं नेत्यर्थः । चे[4]न 'न संप्रसारणम्' इत्यस्यानुकर्षणात् ॥

( 'वश्चास्य'ग्रहणप्रत्याख्यानभाष्यम् )

वश्चास्यग्रहणं शक्यमकर्तुम् । अन्यतरस्यां किति वेञो न संप्रसारणं भवतीत्येव सिद्धम् ।

कथम् ?

[5]प्रसारणे कृत उवङादेशे च द्विर्वचनं सवर्णदीर्घत्वम् । तेन सिद्धम्—ववतुः, ववुः, ऊवतुः, ऊवुः । वयेरपि नित्यं यकारस्य प्रतिषेधः संप्रसारणस्य, ऊयतुः, ऊयुः ।

त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवति ॥

यद्येवं-ववौ, ववियेति न सिद्ध्यति ।

'ल्यपि च' ( ६।१।४१ ) इत्यनेन चकारेण लिड्[6]य्यनुकृष्यते । तस्मिन्नित्ये प्रसारणप्रतिषेधे प्राप्ते इयं किति विभाषाऽऽरभ्यते ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-
महाभाष्ये षष्ठस्याध्यायस्य प्रथमे
पादे द्वितीयमाह्निकम् ॥

( प्रदीपः ) 'अन्यतरस्यां किति वेञः' इति सूत्रं कर्तव्यम् । तत्र लिटीत्यनुवर्तनात्किति लिटि वेञः संप्रसारणविकल्पे सति, अकिति लिटि 'ल्यपि च' इति चकारेण लिटोऽनुकर्षणात् संप्रसारणनिषेधात्सर्वेष्टसिद्धिरिति भाष्यार्थः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठ-
स्याध्यायस्य प्रथमपादे द्वितीयमाह्निकम् ॥

( उद्द्योतः ) भाष्ये—प्रसारणे कृते इति । द्वित्वात्परत्वादिति भावः ॥ उवङादेशे च द्विर्वचनमिति । 'द्विर्वचनेऽचि' इति स्थानिवत्त्वादुकारस्य द्वित्वेऽपि वार्णादाङ्गमिति न्यायेनोवङि सवर्णदीर्घत्वमिति भावः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपो-
द्द्योते षष्ठाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

———

( १०६० विधिसूत्रम् ॥ ६ । १ । ३ आ. २५ )

## २४८२ आदेच उपदेशेऽशिति ॥ ६ । १ । ४५ ॥

( आत्वाधिकरणम् )

( उपदेशपदार्थे पक्षद्वयदर्शकं भाष्यम् )

[7]कथमिदं विज्ञायते—एज्य उपदेश इति, आहोस्विदेजन्तं यदुपदेश इति ?

---

१ एतद्भाष्यप्रामाण्यादिति । आसन्दीवदितिसूत्रं भाष्यकृता संज्ञायामित्यनेनायमेकयोगः पृथग्वेत्येतद्विषयकमेव व्याख्यातम्, न तु तत्र आसन्दीवदित्यादिरूपाणां सिद्धिः कृता । अत्र कक्ष्यायाः संज्ञायामिति वार्तिकं व्याख्यायोदाहरणान्यपि दत्तानि । यदि कक्षीवदितिरूपं निपातनलब्धं स्यात्तदाऽयं प्रयासो भाष्यकृतां विफलः स्यादिति आसन्दीवदितिसूत्रे कक्षीवच्छब्दपाठोऽनार्ष इति कल्पयितुं शक्यत इत्यर्थः ॥

२ वेञ इति । वश्चास्यान्यतरस्यामिति सूत्रस्याग्रे इत्यादिः ॥

३ वश्चास्यान्येतिसूत्रस्यार्थमाह—किति लिटीत्यादि ॥

४ चेनेति । वस्तुतस्तु समुच्चयार्थश्चकारः, न तु 'न संप्रसारणम्–' इत्यस्यानुवर्तनार्थः । वकारकरणादेव 'न संप्रसारणम्–' इत्यस्यानुवृत्तिसिद्धेः । अन्यथा 'उ'कारमेव विदध्यात् ॥

५ 'संप्रसारणे' इति ट. ञ. पाठः ॥

६ 'लिडनुकृष्यते' इति छ. पाठः ॥

७ उपदेशशब्दः प्रकारत्रयेण साधयितुं शक्यः–करणे, कर्मणि, भावे च । भावप्रत्ययान्तस्योपदेशशब्दस्याद्योच्चारणमर्थः, करणप्रत्ययान्तस्य च शास्त्रमर्थः, कर्मप्रत्ययान्तस्य च तस्योपदिश्यमानरूपः–यस्य धात्वादिसंज्ञा क्रियते सोऽर्थः । करणे भावे च प्रत्ययान्त उपदेशशब्दे तदन्तविध्यभावात् भाष्यकृता—एज्य उपदेश इत्यैकेनैव यत्नेन निर्दिष्टः । अस्मिंश्च पक्षद्वये 'उपदेशे' इति सप्तम्या अधिकरणत्वार्थः संगच्छत इति न सा षष्ठ्यर्थे सप्तमी । यदा तु कर्मणि प्रत्ययान्त आश्रीयते तदा तस्योपदिश्यमानार्थत्वात् सप्तम्या अनन्वयाच्चोपदेशपदोत्तरसप्तम्याः षष्ठ्यर्थत्वमाश्रीयते, तद्विशेषणत्वेन च तदन्तविधौ—एजन्तं यदुपदेश इति पक्षो भवति । वस्तुतस्तु 'उपदेशे' इति पदसत्वेऽपि धातोरित्यस्यानुवृत्तावेजन्तमिति, अननुवृत्तौ च एज्य इति पक्षद्वयमप्युपपादयितुं शक्यम् । तदेवाह—कथमिदमिति ॥

**किं चातः ?**

**( प्रदीपः ) कथमिदमिति** । यदोपदेशशब्देन करणसाधनेन शास्त्रमुच्यते तदा विशेष्यस्यानुपादानादेव नास्ति तदन्तविधिरित्ययं पक्षो भवति—**एज्य उपदेश** इति । यदा तु कर्मसाधन उपदेशशब्द उपदिश्यमानार्थवाची षष्ठ्यर्थे च सप्तमी तदा उपदेशस्यैचा विशेषणात्तदन्तविधौ सत्ययं पक्षो भवति—**एजन्तं यदुपदेश** इति । समुदायश्च ग्लैप्रभृतिः प्राधान्येनोपदिश्यते धातुसंज्ञाद्यर्थः, नानन्तरीयकत्वेन त्ववयवः ॥

**( उद्योतः )** ननु 'धातोः' इत्यस्य 'उपदेशे' इत्यस्य वा विशेष्यस्य सन्निधानात्तदन्तपक्ष एव युक्त इति सन्देहोऽयुक्त इत्यत आह—**यदेति** ॥ **शास्त्रमिति** । आद्योच्चारणम्—उपदेश इत्यर्थेऽपि तदन्तविध्यभावादिदमुपलक्षणम् । धातोरित्यननुवृत्तिमाश्रित्येदमिति बोध्यम् ॥

ननु समुदायावयवयोरुपदिश्यमानत्व[1] इदं वक्तुं शक्यम्—'एज्य उपदिश्यमान' इति, विशेषणत्वज्ञानोत्तरमेव तदन्तविधिप्रवृत्तेः; अत आह—**समुदायश्चेति** ॥ **अवयव इति** । प्रत्येकवर्णरूप इत्यर्थः । 'ढौ'इति समुदायोपदेशे तु मानाभाव इति भावः[2] । कार्योद्देश्यकस्यैवोच्चारणस्योपदेशपदार्थत्वं सूचयितुं '**धातुसंज्ञाद्यर्थः**' इत्युक्तम् । अवयवोपदेशफलं तु तत्तत्कार्योद्देश्यसमुदायनिष्पत्तिरेवेति बोध्यम् ॥

**( उपदेशशब्दस्य करणसाधनत्वे दोषोपपादकं भाष्यम् )**

**यदि विज्ञायते—एज्य उपदेश इति, ढौकिता-त्रौकिता-अत्रापि प्राप्नोति ।**

**अथ विज्ञायते—एजन्तं यदुपदेश इति, न दोषो भवति ॥**

**ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमाने—अत्रापि प्राप्नोति, एतदपि हि व्यपदेशिवद्भावेनैजन्तं भवत्युपदेशे ।**

**अर्थवता व्यपदेशिवद्भावः ॥**

**ननु चैज्य उपदेश इत्यपि विज्ञायमाने न दोषो भवति । अशितीत्युच्यते, न चात्राशितं पश्यामः ।**

**ननु च ककार एवात्राशित् ।**

**न ककारे भवितव्यम् ।**

**किं कारणम् ?**

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।**

**नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते ।**[3] **तद्यथा—लोके अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति, नासौ लोष्टमानीय कृती भवति । एवमिहाप्यशिति प्रतिषेधादन्यस्मिन्नशिति—शित्सदृशे कार्यं विज्ञास्यते ।**[4]

**किं चान्यदशित्—शित्सदृशम् ?**

**प्रत्ययः ॥**

**इदं तर्हि**[5]**—ग्लै ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम्, शो निशानीयम्—परत्वादायादयः प्राप्नुवन्ति**[6] **॥**

**( प्रदीपः ) एतदपीति** । उपदेशोऽप्ययमौकारो भवति, नान्तरीयकत्वादवयवानामुपदेशादित्युक्तत्वात् ॥

**अर्थवतेति** । यः शब्दोऽर्थवांस्तस्यार्थोपादानपरित्यागाभ्यां व्यपदेशिवद्भावो भवति, बुद्ध्या नानात्वकल्पनात् । यथा 'इयाय' इतीण एकाज्व्यपदेशः । लोकेऽपि 'स्थूलशिरा राहुः' इति शिरोमात्रस्य समुदायस्यार्थक्रियाकरणाद्भेदविवक्षया व्यपदेशो भवति, न त्वनर्थके छिन्ने देवदत्तशिरसि स्थूलशिरा अयं देवदत्त इति व्यपदेशः प्रवर्तते । 'आद्यन्तवदेकस्मिन्' इत्यतिदेशोऽपि न प्रवर्तते, असहायत्वाभावादौकारस्य ॥

**इदं तर्हीति** । 'एज्य उपदेश' इत्यस्मिन्पक्षे दोषोद्भावनम् ॥ **परत्वादिति** । पर्युदासपक्षे समानाश्रयत्वादात्वस्य—आयादीनां च, अनित्यत्वाच्च तेषां विप्रतिषेधोपपत्तिः[7] ॥

**( उद्योतः )** भाष्ये—**एतदपीति** । ढौक्—उपदेशे प्रत्येकं वर्णानां वोपदेशः, कान्तसमुदायस्य वा तत्तत्कार्यार्थः, न तु 'ढौ' इत्यौकारान्तसमुदायस्य—इति व्यपदेशिवद्भावेनौकारस्यैजन्तत्वमिति भावः[8] ॥

**असहायत्वाभावादिति** । अनेनैव व्यपदेशिवद्भावाप्रवृत्तिरपि बोध्या, 'व्यपदेशिवदेकस्मिन्' इति पाठात् । भाष्ये—**अर्थवते**त्यनेनेदमेवोपलक्ष्यते । ससहायत्वे एव तस्यानर्थकत्वात् ॥ भाष्ये—**शित्सदृशम् ? प्रत्यय इति** । कर्मधारयाश्रयणेन वक्ष्यमाणरीत्या[9]

१ समुदायावयवयोः—समुदायस्यावयवयोरित्यर्थः । यदि अवयवस्याप्युपदेशस्तदा एज्य उपदेशे इति पक्षः कर्मणि घञन्तेऽपि वक्तुं शक्यः । परन्तु अवयवानामुपदेशाभावात्तस्मिन् पक्षे तदन्तविधिर्भवतीति भावः ॥

२ विशेषणत्वेति । यद्यवयवानामप्युपदेशः स्यात्तदा एचो विशेषणत्वभानं न स्यादिति तदन्तविधिप्रवृत्त्यभावः । अवयवानामेचामुपदेशाभावात्तेषां विशेष्यत्वमनुपपन्नमिति विशेषणत्वात्तदन्तविधिरिति भावः ॥

३ 'तद्यथा' इत्यस्य पाठः 'ट.' पुस्तके न ॥

४ 'प्यशिति शित्प्रतिषे–' इति च. छ. झ. पाठः ॥

५ 'इहं तर्हि' इति च. छ. झ. पाठः ॥

६ एज्य उपदेश इति पक्षे 'ढौकिता–त्रौकिता' इत्यत्रात्वप्राप्तिरूपदोष उपन्यस्तः । स चाशितीति पर्युदासाद्वार्यते । ततश्च ग्लानीयम्—म्लानीयमित्यत्रात्वायादेशौ प्राप्तौ परत्वादायादेशः स्यादिति ग्लानीयमिति रूपं न सिद्ध्येदिति दोष उक्तः । अस्मिंश्च पक्षे आयादेशस्य स्थानिवद्भावेनाल्विधित्वादेज्न संपद्यते ॥

७ आयादीनामात्वस्य च बहिरङ्गत्वान्तरत्वाभावमुपपादयति—पर्युदासपक्षे इति ॥

८ ननु औकारस्यैजन्तत्वं व्यपदेशिवद्भावेन साधयितुं युक्तम्, तथापि नान्तरीयकत्वादवयवानामुपदेशे 'ढौ' इत्यस्याप्युपदेश इति तस्यैजन्तत्वं व्यपदेशिवद्भावाभावेऽपि सूपपादमित्यत आह—ढौक्–उपदेश इति ॥

९ वक्ष्यमाणरीत्या—'इत्संज्ञकशकारादौ' इति रीत्या । मिदेर्गुण इत्यत्र हि 'ष्ठिवुक्लमुचमाम्–' इति सूत्राच्छितीत्यनुवर्तते, तत्र श् चासाविच्चेति कर्मधारयात्सप्तमी, प्रत्ययो विशेष्यः, यस्मिन् विधिरिति परिभाषया तदादावित्संज्ञकशकारादौ प्रत्यय इत्यर्थः संपद्यते ॥

माणरीत्या शित् प्रत्यय एवेति तत्सदृशोऽपि प्रत्यय एवेति भावः । एवं च पक्षद्वयेऽपि 'ढौकिता' इत्यत्र न दोष इति तात्पर्यम् ॥

**इत्यस्मिन्पक्षे इति ।** तदन्तविधिपक्षे वक्ष्यमाणरीत्या दोषाभावादिति भावः ॥

ननु प्रसज्यप्रतिषेधेऽनैमित्तिकत्वेनात्त्वमन्तरङ्गम्, अत आह—**पर्युदासेति** ॥

**( उपदेशशब्दस्य कर्मसाधनत्वे दोषनिवारकभाष्यम् )**

**ननु चैजन्तं यदुपदेश इत्यपि विज्ञायमाने परत्वादायादयः प्राप्नुवन्ति ।**

**सन्तु ।**

**आयादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणात्पुनरात्वं[1] भविष्यति ।**

**ननु चैज्य उपदेश इत्यपि विज्ञायमाने परत्वादायादिषु कृतेषु स्थानिवद्भावादेज्ग्रहणेन ग्रहणादात्वं भविष्यति ।**

**न भविष्यति । अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम् ॥**

**( प्रदीपः ) अल्विधिश्चायमिति ।** ननु 'एजन्तं यदुपदेशः' इत्यत्रापि पक्षे आत्वमल्विधिरेव, गुणभूतालाश्रयस्याप्यल्विधित्वेनाश्रयणात् । तथा च प्रपठ्येत्यादाविडभावः । नैतदस्ति । 'एजन्तस्यात्वं भवति' इत्येवं विज्ञायमाने स्यादात्वमल्विधिः । यदा त्वेवं व्याख्यायते—'उपदेशे यदेजन्तं दृष्टं तस्यात्वं भवति' इति, तदा त्वस्याल्विधित्वाभावः । एज्य उपदेशे तस्यात्वमित्यत्र तु त्वेतपक्षे[2] एचः स्थानित्वेनोपादानादात्वस्याल्विधित्वादायादिषु कृतेषु स्थानिवत्त्वाभावादप्राप्तिः ॥

नन्वायादिषु कृतेष्वलोऽन्त्यस्यात्वे कृते यद्यपि ग्लानीयमित्यादि सिध्यति, तथापि जग्लतुरित्यादि न सिध्यति । यकारस्यात्वे कृते पूर्वेण सहैकादेशश्च प्राप्नोति लोपश्च । तत्र यद्यपि वर्णाश्रयत्वादेकादेशोऽन्तरङ्गस्तथापि 'वार्णादाङ्गं बलवत्' इत्याकारलोपः प्राप्नोति । यथा—आह्वः, प्रह्वः-इत्यादौ । तत्राकारलोपस्य स्थानिवद्भावात् 'असिद्धवदत्राभात्' इत्यसिद्धत्वाच्च पूर्वस्याकारस्य लोपो न प्राप्नोति । एवं तर्हि 'वार्णादाङ्गं बलवत्' इत्यनाश्रित्येदमुक्तम् । अत एवात्र परिहारेऽसमासाश्वासात् 'अशिति' इति ज्ञापकादायादय आत्वं न बाधन्त इति सिद्धान्तो भविष्यति ॥

**(उद्योतः) तस्यात्त्वमिति ।** एवं चाऽऽयादिषु कृतेष्वपि उपदेश एजन्तमेवैतद्दृष्टमिति न स्थानिवत्त्वोपयोग इति भावः ।

**परेतु**—उपदिश्यमानस्यैजन्तस्येत्येतत्पक्षेऽर्थस्य स्वयमुक्तत्वादेतद्व्याख्यानासम्भवः[3] । तस्मात्प्राधान्येनालाश्रय एवाल्विधित्वमित्यभिमानिनोऽयं ग्रन्थ इत्येवोचितम् । अत एवाग्रेऽशितीति ज्ञापकादिमं दोषं परिहरिष्यति—इत्याहुः ॥ **एचः स्थानित्वेनोपादानादिति ।** तत्पक्षे उपलक्षणताया वक्तुमशक्यत्वादिति भावः ।

तदन्तग्रहणपक्षेऽपि 'जग्लतुः' इत्याद्यसिद्धिमाशङ्कते—**नन्वायादिष्विति** ॥ **लोपश्चेति ।** 'आतो लोप इटि च' इत्यनेन ॥ **यथा—आह्व इति ।** आङ्पूर्वात् ह्वयतेः 'आतश्चोपसर्गे' इति के संप्रसारणे यदि एकादेशः स्यात्तदा आल्लोपो न स्यादित्युवङि रूपासिद्धिः, 'प्रसारणिभ्यो डः' इत्यस्य भाष्ये प्रत्याख्यानादिति भावः ॥ **अनाश्रित्येति ।** अनाश्रयणं चानित्यत्वाद्बोध्यम् ॥

**( उपदेशशब्दस्य कर्मसाधनत्वे दोषवारकभाष्यम् )**

**एवं तर्हि—**

**एजन्तं यदुपदेश इत्यपि विज्ञायमाने 'हूतः-हूतवान्' इत्यत्रापि प्राप्नोति ।**

**भवत्येवात्रात्वम् ।**

**श्रवणं कस्मान्न भवति ?**

**पूर्वत्वमस्य भवति ।**

**न सिध्यति ।**

**इदमिह संप्रधार्यम्-आत्वं क्रियतां पूर्वत्वमिति ।**

**किमत्र कर्तव्यम् ?**

**परत्वात्पूर्वत्वम् ।**

**एवं तर्हीदमिह संप्रधार्यम्—आत्वं क्रियतां संप्रसारणमिति ।**

**किमत्र कर्तव्यम् ?**

**परत्वादात्वम् ।**

**नित्यं संप्रसारणम्, कृतेऽप्यात्वे प्राप्नोत्यकृतेऽपि ।**

**आत्वमपि नित्यम्, कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि ।**

**अनित्यमात्वम्, न हि कृते संप्रसारणे प्राप्नोति ।**

**किं कारणम् ?**

**अन्तरङ्गं पूर्वत्वं तेन बाध्यते ।**

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति, अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादात्वे कृते संप्रसारणम्, संप्रसारणपूर्वत्वम् । कार्यकृतत्वात्पुनरात्वं[4] न भविष्यति ।**

**अथापि कथं चिदात्वमनित्यं स्यात्, एवमपि न दोषः । उपदेशग्रहणं न करिष्यते ॥**

---

१ 'पुनः'शब्दस्य ट. पुस्तके न पाठः ॥
२ 'इत्यत्र तु पक्षे' इति ग. ख. झ. पाठः ॥
३ व्याख्यानासंभव इति । उपदिश्यमानं यदेजन्तं दृष्टमित्येवं रीत्योपलक्षणत्वमिति कैय्यटतत्त्वम् ॥
४ कार्यकृतत्वात्—कार्यस्य—आत्वस्य कृतत्वाल्लक्ष्ये लक्षणन्यायेन न पुनरात्वमित्यर्थः ॥

**( प्रदीपः ) ह्वत इति ।** ह्वेञः संप्रसारणादिषु कृतेपूपदेश एजन्तत्वादुत्तरकालमसत्यप्येजन्तत्वे 'अलोऽन्त्यस्य' इति वचनादूकारस्यात्वप्रसङ्गः ॥

**भवत्येवेति ।** प्रागेव संप्रसारणादिति भावः ॥

इतरस्तु पश्चादात्वमनेनोक्तमिति मत्वाऽऽह—**श्रवणमिति ॥**

**अथापीति ।** यदि 'यस्य लक्षणान्तरेण' इति नाश्रीयत इति भावः ॥ **उपदेशग्रहणमिति ।** उपदेशग्रहणात् संप्रसारणादिषु कृतेष्वात्वप्रसङ्गान्न कर्तव्यम् । अकृते च तस्मिन्नेजन्तस्यात्वं भवतीति सूत्रार्थाश्रयणादात्वस्याल्विधित्वात् स्थानिवत्त्वाभावात् संप्रसारणादिषु कृतेष्वप्रसङ्गः ॥

**( उद्द्योतः ) संप्रसारणादिषु**—संप्रसारणपूर्वत्वदीर्घत्वेषु ॥ ननु ऊकारस्यात्त्वे प्रयोगासिद्धया **भवत्येवात्त्व**मित्ययुक्तमत आह—**प्रागेवेति ।** परत्वादात्त्वे संप्रसारणमिति भावः ॥ ननूपदेशग्रहणाभावेऽपि संप्रसारणादिषु कृतेषु स्थानिवत्त्वेनैजन्तत्वादात्त्वं प्राप्नोत्येवेत्यत आह—**अकृते चेति ॥** **एजन्तस्येति ।** विशेष्या[2]भावाच्चिन्त्यमिदम् । 'एचः' इति वक्तुं युक्तम् ॥ **सूत्रार्थाश्रयणादिति ।** न तूपदेशे यदेजन्तं दृष्टं तस्य—इत्यर्थाश्रयणमित्यर्थः । ननूपदेशग्रहणाभावे गोशब्दादिभ्य आचारक्विबन्तेभ्योऽगवीदित्यादावात्त्वापत्तिरिति चेन्न; अनभिधानेनैजन्तेभ्य आचारक्विबभावात् ॥

( उपदेशग्रहणवैयर्थ्यबोधकभाष्यम् )

**यदि तन्न क्रियते, चेता स्तोतेत्यत्रापि प्राप्नोति ।**

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—न परनिमित्तकस्यात्त्वं भवतीति, यदयं क्रीङ्जीनां णावात्वं शास्ति ।**

**नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात्—क्रीङ्जीनां णावेवेति ।**

**यत्तर्हि 'मीनातिमिनोतिदीङां ल्यपि च' (६।१।५०) इत्यत्रैज्ग्रहणमनुवर्तयति ॥**

**इह तर्हि—ग्लै ग्लानीयम्, म्लै म्लानीयम्, शो निशानीयम्—परत्वादायादयः प्राप्नुवन्ति ।**

**अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—नायादय आत्वं बाधन्त इति, यदयमशितीति प्रतिषेधं शास्ति । यदि हि बाधेरन्, शित्यपि बाधेरन् ॥**

**( प्रदीपः ) शित्यपि बाधेरन्निति ।** ततश्च ग्लायतीत्यादीनां सिद्धत्वात् 'अशिति'इति प्रतिषेधोऽनर्थकः स्यात्, तस्मात् पूर्वविप्रतिषेधेनात्वं भवतीति ज्ञायते । नै[3]नु 'अशिति' इत्यस्यान्यत् प्रयोजनमस्ति—धति-स्यति-इत्यादौ हलादावात्वं मा भूत् । नैतदस्ति । 'ओतः श्यनि'इत्योकारलोपविधानादात्वं श्यनि न भवतीति ज्ञायते ॥

**( उद्द्योतः )** भाष्ये—**एज्ग्रहणमनुवर्तयतीति ।** एजन्तानां मीनात्यादीनामात्त्वमित्यर्थेऽनेनैवात्त्वसिद्धेस्तत्सूत्रं व्यर्थं सदेतदर्थज्ञापकमिति भावः । अत्र चकारलब्धमशित्यात्त्वमेज्ग्रहणसहितं ज्ञापकं बोध्यम् ॥

चेतेत्यादौ लक्षणप्रतिपदोक्तपरिभाषया तु न वारणम्, अवयवद्वारा निष्पन्नमेव तत्र लाक्षणिकशब्देन गृह्यत इत्यभिमानात् । वस्तुतोऽनेन ज्ञापकेन तत्परिभाषाऽप्रवृत्तिरेव बोध्यत इति बोध्यम् ॥

भाष्ये—**परत्वादायादय इति ।** अल्विधित्वेन स्थानिवत्त्वाभावान्न पु[4]नरात्त्वप्राप्तिः । निर्दिश्यमानस्येति परिभाषणाच्चेति भावः ॥ **ओतः श्यनीति ।** यद्यात्त्वं स्यात्तर्हि ओकाराभावाल्लोपविधानमनर्थकं स्यादिति भावः । **अत्रेदं तत्त्वम्**—अशितीत्यस्य प्रसज्यप्रतिषेधत्वादात्त्वस्यान्तरङ्गत्वेन पक्षद्वयेऽपि दोषपरिहार इति ढौकितेत्यादावाद्यपक्षेऽपि न दोषः, एजुपदेशसामर्थ्यात् । न च ढौकत इत्यादौ स चरितार्थः, ककारव्यवधानेन तत्रापि शित्परत्वाभावादिति दिक् ॥

( करणसाधनपक्षोपपादकभाष्यम् )

**अथ वा पुनरस्तु एज्य उपदेश इति । ननु चोक्तं—ग्लै ग्लानीयम्, म्लै म्लानीयम्, वेञ् वानीयम्, शो निशानीयम्—परत्वादायादयः प्राप्नुवन्ति ।**

**अत्रापि शित्प्रतिषेधो ज्ञापकः—नायादय आत्वं बाधन्त इति ॥**

( ६०५० करणसाधनत्वे दोषोपपादकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आत्व एश्युपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) आत्वे एश्युपसंख्यानं कर्तव्यम् । जग्ले, मम्ले । अशितीति प्रतिषेधः प्राप्नोति ।**

**नैष दोषः । नैवं विज्ञायते—शकार इत् यस्य सोऽयं शित्, न शित् अशिदशितीति ।**

**कथं तर्हि ?**

**शकार इत्—शित्, न शित्—अशित्—अशितीति ॥**

**यद्येवम्, स्तनन्धय इत्यत्रापि प्राप्नोति ।**

**अत्रापि शप् शिद्भवति ॥**

**( प्रदीपः ) शकार इदिति ।** तत्रेता शकारेण प्रत्ययस्याक्षेपात् 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषोपस्थानात् शिदादावात्वनिषेधादेश्यात्वं भवत्येव ॥

**यद्येवं स्तनन्धय इति ।** विकरणोऽत्र रूपविशेषाभावात्प्रयोजनाभावान्न भवतीति मन्यते ॥ **अत्रापि शबिति ।** आत्वनिवृत्तिरेव शपः प्रयोजनम् ॥

---

१ ननु पूर्वमात्वे ततः संप्रसारणे पूर्वत्वे च आत्वश्रवणाभावो न्यायप्राप्त एवेत्याशङ्कायामाह—इतरस्त्विति ॥

२ विशेष्याभावादिति । उपदेशग्रहणाभावेऽन्यस्य विशेष्यस्याभावात्तदन्तविध्यभावे 'एच आत्वम्' इत्यर्थः स्यात् । ततश्चाल्विधित्वात्स्थानिवद्भावाभाव इत्याशयः ॥

३ 'न तु अशिति' इति च. क. पाठः ॥

४ पुनरात्त्वेति । आयादिषु कृतेषु स्थानिवत्वाभावान्न पुनरात्वमित्यर्थः ॥

( उद्द्योतः ) तत्रेता शकारेणेति । यद्यप्यप्रत्यय ईशादिः[1] शिदस्ति, तथापि एजन्ताच्छितः प्रत्ययस्यैव संभव इति भावः ॥

नन्वत्रापि शपः शिदादेः प्रत्ययस्य सत्त्वात् कथमात्त्वम्? अत आह—विकरणोऽत्रेति ॥

( 'अशिति'पदे पक्षद्वयोपस्थापकभाष्यम् )

**किं पुनरयं पर्युदासः—यदन्यच्छित इति । आहोस्वित् प्रसज्यायं प्रतिषेधः—शिति नेति ।**

**कश्चात्र विशेषः?**

(प्रदीपः) **किं पुनरिति** । तत्र **पर्युदासे** एकवाक्यत्वम्, उत्तरपदार्थेन नञः संबन्धात् समर्थसमासः । उत्तरपदार्थसदृशं वस्त्वन्तरं समासार्थः । **प्रसज्यप्रतिषेधे** तु विधिनिषेध[2]लक्षणार्थद्वयविधानाद्वाक्यभेदः, नञः क्रियया संबन्धादसमर्थसमासः । स च 'अकर्तरि च कारके–' इति कारकग्रहणेन ज्ञापितः ॥

( उद्द्योतः ) स च 'अकर्तरीति । अन्यथा कर्तृसदृशस्य कारकस्यैव ग्रहणे सिद्धे कारकग्रहणमनर्थकं प्रसज्यप्रतिषेधेऽपि समासं ज्ञापयति । एवं च तच्छङ्कानिवृत्त्या[3] कारकग्रहणं चरितार्थमिति भावः ॥

( ६०५१ पर्युदासस्वीकारे दोषवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अशित्येकादेशे प्रतिषेध आदिवत्त्वात् ॥ * ॥

**( भाष्यम् ) अशित्येकादेशे प्रतिषेधो वक्तव्यः–ग्लायन्ति, म्लायन्ति ।**

**किं कारणम्?**

**आदिवत्त्वात् । शिदशितोरेकादेशोऽशित आदिवत्स्यात्, अस्त्यन्यच्छित इति कृत्वाऽऽत्त्वं प्राप्नोति ॥**

(प्रदीपः) **ग्लायन्तीति** । लावस्थायामेवाकृतेषु तिबादिष्वात्वं न प्रवर्तते, ग्लै[4]प्रभृतीनामेजन्तानामुपदेशसामर्थ्यात् 'अशिति' इति वचनसामर्थ्याद्वा । 'पाघ्राध्माधेट्दृशः शः' इत्येषोऽशितीति वचनस्यावकाश इति चेत् नैकमुदाहरणमशिद्ग्रहणं प्रयोजयति । अन्यथा 'अशे' इति ब्रूयात् ।

**अथवा**—नित्यत्वान्तरङ्गत्वाभ्यां पूर्वं तिबादयो भवन्ति । तेषु कृतेषु नित्यत्वाच्छब्भवति । ततोऽकारयोः पररूपे एकादेशे कृते तस्य परं प्रत्यादिवद्भावादात्वप्रसङ्गः ॥

( उद्द्योतः ) ननु एकादेशविषय एव किमित्यात्त्वप्राप्तिर्नोच्यते, ग्लायतीत्यादावपि लकारेऽशित्वात्त्वप्राप्तेः–अत आह—लावस्थायामेवेति ॥ नित्यत्वान्तरङ्गत्वाभ्यामिति । आत्त्वं तु तेषु कृतेषु नित्यत्वाच्छपः प्राप्त्याऽनित्यम्, प्रकृतिप्रत्ययोभयाश्रयत्वाद्बहिरङ्गं च ॥ भाष्ये—आदिवत्त्वादिति । तत्प्रयुक्तकार्यस्य सत्त्वात्तस्यैव प्रवृत्तिरिति भावः । प्रसज्यप्रतिषेधे तु एकादेशस्य पूर्वान्तवत्त्वेन शित्वान्नात्वमिति बोध्यम् ॥

( ६०५२ पर्युदासपक्षे दोषवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ प्रत्ययविधिः ॥ * ॥

**( भाष्यम् ) प्रत्ययविधिश्च न सिद्ध्यति—सुग्लः, सुम्लः । आकारान्तलक्षणः प्रत्ययविधिर्न प्राप्नोति । अनिष्टे प्रत्ययेऽवस्थिते आत्वम् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत ॥**

( ६०५३ पर्युदासपक्षे दोषवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अभ्यासरूपं च ॥ * ॥

**( भाष्यम् ) अभ्यासरूपं च न सिद्ध्यति—जग्ले, मम्ले । इवर्णाभ्यासता प्राप्नोति ॥**

( प्रदीपः ) **जग्ले इति** । एशि परत आत्वम्, तस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् ग्लैशब्दस्य द्विर्वचने ह्रस्वत्वे चाऽभ्यास इवर्णान्तता स्यात् ॥

( ६०५४ पर्युदासपक्षे दोषवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अयवायावां प्रतिषेधश्च ॥ * ॥

**( भाष्यम् ) अयादीनां च प्रतिषेधो वक्तव्यः । ग्लै ग्लानीयम्, म्लै म्लानीयम्, शो निशानीयम्, वेञ् वानीयम् । परत्वादायादयः प्राप्नुवन्ति ॥**

**अस्तु तर्हि प्रसज्यप्रतिषेधः—शिति नेति ॥**

( ६०५५ प्रसज्यप्रतिषेधे दोषवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ शिति प्रतिषेधे श्लुलुकोरुपसंख्यानम्–ररीध्वम्, त्राध्वम्, शिशीते ॥ * ॥

**( भाष्यम् ) शिति प्रतिषेधे श्लुलुकोरुपसंख्यानं कर्तव्यम् । दिवो नो वृष्टिं मरुतो ररीध्वम्[5] । लुक्–त्राध्वं नो देवा निजुरो वृकस्य । शिशीते शृङ्गे रक्षसे विनिक्षे ।**

**नैष दोषः । इह तावत्—दिवो नो वृष्टिं मरुतो ररीध्वमिति, नैतत् 'रै' इत्यस्य रूपम् ।**

**कस्य तर्हि?**

**रातेर्दानकर्मणः ।**

---

१ ईशादिः–ईश ऐश्वर्ये इत्यादिः ॥

२ विधिनिषेधेति । आदेच इति सूत्रे 'अशिति' इति प्रसज्यप्रतिषेधे सूत्रेणात्वं विधाय शिति प्रतिषिध्यते इति विधिनिषेधरूपमर्थद्वयमिति भावः ॥

३ तच्छङ्कानिवृत्त्या–अकर्तरीति समासदर्शनात्पर्युदासोऽयमित्यस्याः शङ्काया निवृत्त्या ॥

४ ग्लै प्रभृतीति । यदि लावस्थायामेवात्वं प्रवर्तेत तदा एजन्तोपदेशोऽनर्थकः स्यादित्यर्थः ॥

५ 'ध्वम् । लुक् । त्राध्वं' इति क. पाठः ॥

शिशीते शृङ्गे इति नैतत् श्यते रूपम् ।

कस्य तर्हि ?

शीङः ।

श्यत्यर्थो वै गम्यते ।

कः पुनः श्यतेरर्थः ?

श्यतिर्निशाने वर्तते ।

शीङपि श्यत्यर्थे वर्तते ।

कथं पुनरन्यो नामान्यस्यार्थे वर्तते ?

बह्वर्था अपि धातवो भवन्ति । तद्यथा—वपिः प्रकिरणे दृष्टश्छेदने चापि वर्तते—केशान् वपतीति ।

ईडिः स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमीट्टे, मरुतोऽमुतश्च्यावयन्ति ।

करोतिरभूतप्रादुर्भावे दृष्टो निर्मलीकरणे चापि वर्तते—पृष्ठं कुरु, पादौ कुरु—उन्मृदानेति गम्यते। निःक्षेपणे चापि वर्तते । घटे कुरु, कटे कुरु, अश्मानमितः कुरु—स्थापयेति गम्यते ॥

( प्रदीपः ) ररीध्वमिति । 'रै शब्दे' इत्यस्मात् लोटो व्यत्ययेनात्मनेपदम् । ध्वम् । शपः 'बहुलं छन्दसि' इति श्लुः । तत्र प्रसज्यप्रतिषेध आत्वं न प्राप्नोति, शबाश्रयप्रतिषेधप्रसङ्गात् । पर्युदासे तु ध्वमाश्रयमात्वं भवति । श्लौ द्विर्वचनम् । 'ई हल्यघोः' इतीत्वम् ॥ शिशीत इति । श्यतेर्लटो व्यत्ययेनात्मनेपदम्, शप्च, तस्य श्लुः । तस्य द्विर्वचनम्, अभ्यासस्य 'बहुलं छन्दसि' इतीत्वम्, 'ई हल्यघोः' इतीत्वम् । त्राध्वमिति—त्रैङ्, लोट्, ध्वम्, शपः 'बहुलं छन्दसि' इति लुक् ॥ श्यत्यर्थ इति । वृषभः शृङ्गे तीक्ष्णीकरोति रक्षसे-रक्षोर्थं विनिक्षे-विनिपातनायेत्यर्थः ॥

( उद्द्योतः ) शबाश्रयेति । प्रत्ययलक्षणेनेति भावः । 'न लुमता-' इति निषेधस्त्वनाङ्गत्वान्नेत्यभिमानः ॥ शब्चेति । व्यत्ययेनेति शेषः ॥ श्लुः—'बहुलं छन्दसि' इत्यनेन ॥ भाष्ये—विनिक्षे इति । विनिपूर्वान्नशेरन्तर्भावितण्यर्थात् 'तुमर्थे-' इति सेन्प्रत्यये, छान्दसो वर्णलोपः ॥

( प्रसज्यप्रतिषेधे दोषोद्धारकभाष्यम् )

सर्वेषामेष परिहारः—शितीत्युच्यते न चात्र शितं पश्यामः ।

प्रत्ययलक्षणेन ।

न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः ॥

त्राध्वमिति लुङेष व्यत्ययेन भविष्यति ॥

( प्रदीपः ) त्राध्वमिति । लोडर्थे व्यत्ययेन लुङ्, ध्वम्, 'धि च' इति सलोपः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ॥

( पर्युदासपक्षे दोषोद्धारकभाष्यम् )

अथ वा पुनरस्तु पर्युदासः । ननु चोक्तम् 'अशित्येकादेशे प्रतिषेध आदिवत्त्वात्' इति ।

नैष दोषः ।

एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम् ॥

यदपि 'प्रत्ययविधिः' इति, आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येजन्तेभ्य आकारान्तलक्षणः प्रत्ययविधिरिति, यदयं 'ह्वावामश्च' (३।२।२) इत्यणं कवाधनार्थं शास्ति ॥

यदपि 'अभ्यासरूपम्' इति, प्रत्याख्यायते स योगः । अथापि क्रियते, एवमपि न दोषः ।

कथम् ?

लिटीत्यनुवर्तते द्विलकारकश्चायं निर्देशः । लिटि लकारादाविति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तम्-'आत्व एश्युपसंख्यानम्' इति ॥

यदप्युक्तम्-'अयवायावां प्रतिषेधश्च' इति, शिति प्रतिषेधो ज्ञापको नायादय आत्वं बाधन्त इति ॥

( प्रदीपः ) यदयमिति ।

आत्वभाविन एजन्तादाकारान्तनिमित्तकः ।

प्रत्ययो ज्ञाप्यते सर्वो ह्वावामश्चेत्यणा पुनः ॥

प्रत्याख्यायत इति । 'द्विर्वचनेऽचि' इत्ययं योगः पूर्वविप्रतिषेधाश्रयेण प्रत्याख्यायते । तत्प्रत्याख्यानात् स्थानिवत्त्वाभावः ॥

द्विलकार इति । 'लिटि वयो यः' इत्यत्र द्विलकारको निर्देशः, तत्र च द्वितीयस्य लकारस्य प्रयोजनाभावादिहार्थत्वं विज्ञायते—लावस्थायामेव लिट्यात्वं न त्वजादौ—इति स्थानिवत्त्वाभावात् 'जग्ले' इत्यादि सिध्यति ॥

( उद्द्योतः ) सर्व इति । युजादिरपीत्यर्थः ॥

पूर्वविप्रतिषेधाश्रयेणेति । 'द्विर्वचनं यणयवायाव-' इत्यत्राकारपाठाभावात्परत्वादात्वे कृते द्वित्वमिति भावः ॥ अनुवृत्ते कथं द्विलकारको निर्देशः ? अत आह—लिटि वय इति । 'न संप्रसारणे-' इत्यनेन संहितया पाठ इत्यर्थः ॥ लावस्थायामिति । वाक्यभेदेन संबन्धः । अशित्यात्त्वम्, लिटि तु लकारादावितीति भावः ॥ स्थानिवत्त्वाभावादिति । द्विर्वचननिमित्ताच्निमित्तत्वाभावादित्यर्थः ॥

( ६०५६ प्रतिषेधोपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ प्रातिपदिकप्रतिषेधः ॥ * ॥

( भाष्यम् ) प्रातिपदिकानां प्रतिषेधो वक्तव्यः । गोभ्याम्, गोभिः, नौभ्याम्, नौभिः ॥

स तर्हि वक्तव्यः ।

न वा वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—न प्रातिपदिकानामात्वं भवतीति, यदयं 'रायो हलि' (७।२।८५) इत्यात्वं शास्ति ।

**नैतदस्ति ज्ञापकम् । नियमार्थमेतत्स्यात्—रायो हल्येवेति ।**

**यत्तर्हि 'औतोम् शसोः' (६।१।९३) इत्यात्वं शास्ति ।**

**एतस्याप्यस्ति वचने प्रयोजनम्—अमि वृद्धिबाधनार्थमेतत्स्यात्, शसिप्रतिषेधार्थं च । तस्मात् प्रातिपदिकानां प्रतिषेधो वक्तव्यः ॥**

**न वक्तव्यः ॥**

( प्रदीपः ) **प्रातिपदिकप्रतिषेध इति ।** उणादीनां व्युत्पत्तिपक्षे 'गमेर्डोः' 'ग्लानुदिभ्यां डौः' इत्यादावुपदेशे भवत्ययमेच् । एजन्तो वा, अर्थवत्त्वात्–व्यपदेशिवद्भावादिति भावः ॥

**अमि वृद्धिबाधनार्थमिति ।** गां पश्येत्यत्र 'गोतो णित्' इति णित्वे वृद्धिप्रसङ्गात् । गाः पश्येत्यत्राशितीत्यात्वाप्रसङ्गः ॥

( उद्द्योतः ) ननु गवादीनामुपदेशाभावात्कथमतिप्रसङ्गः ? अत आह—**उणादीनामिति** ॥ तदन्तविधिपक्षेऽप्याह—**एजन्तो वेति** ॥ भाष्ये—**नियमार्थमेतत्स्यादिति** । इदं प्रौढ्या । अतिरिशब्दे नपुंसकेऽनेजन्त आत्वार्थं तस्यावश्यकत्वात् । स्पष्टश्चेदम् 'इकोऽचि–' इति सूत्रे भाष्ये ॥

**( ६०५७ उपसंख्यानवैयर्थ्यबोधकवार्तिकम् ॥ ८ ॥ )**

**॥ * ॥ धात्वधिकारात्प्रातिपदिकस्याप्राप्तिः ॥ * ॥**

( भाष्यम् ) **धात्वधिकारात्प्रातिपदिकस्यात्वं न भविष्यति । धातोरिति वर्तते ।**

**क्व प्रकृतम् ?**

**'लिटि धातोरनभ्यासस्य' (६।१।८) इति ॥**

**अथापि निवृत्तम् ।**

**एवमप्यदोषः । उपदेशे इत्युच्यते, उद्देशश्च प्रातिपदिकानां नोपदेशः ॥**

( प्रदीपः ) **उद्देशश्चेति ।** उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति भावः । एतच्च 'अतः कृकमिकंस–' इत्यत्र कंसशब्दस्य भेदेनोपादानाद्विज्ञायते । 'उणादयो बहुलम्' इत्यस्य तु सूत्रस्योदाहरणप्रदर्शनायोणादिपाठ इत्युणादीनामुपदेशाभावः । ननु 'उगवादिभ्यो यत्' इत्यत्र गवादिगणे 'गो–हविस्–अष्टक' इति गोशब्दस्यास्त्युपदेशः, तथा 'नौवयोधर्म–' इत्यत्र नौशब्दस्य । नैष दोषः । अर्थवदिति प्रातिपदिकसंज्ञाविधानालब्धसाधिमानः प्रत्ययविधानाय परार्था गवादय उपात्ताः । येषां तु स्वरूपज्ञानायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः ॥

( उद्द्योतः ) (भाष्ये) **अथापि निवृत्तमिति ।** 'ध्यैङः संप्रसारणं–' इत्यादावसम्बन्धादिति भावः ॥[1] **नोपदेश इति ।** अनिर्ज्ञातस्वरूपस्य कार्यार्थस्वरूपज्ञापनार्थमपूर्वोच्चारणं ह्युपदेशः । गुणैः प्रापणं चोद्देशः ॥ नन्वत्रापि व्युत्पत्तिपक्षे 'डो' इत्यादीनामुपदेशोऽस्त्येवेत्यत आह—**उणादय इति** ॥ **परार्था इति ।** परार्था एवेत्यर्थः । येषां तु परार्थमुपादानेऽपि तेनैव लक्षणेन स्वरूपसिद्धिरपि तेषामुपदेशत्वमस्त्येवेति भावः । **अत्रेदं**[2] **बोध्यम्**—प्रसज्यप्रतिषेध एव युक्तः, पर्युदासपक्षे बहुप्रतिविधेयत्वात् । उपदिश्यमानस्य एजन्तस्येत्यर्थाच्च 'गोभ्याम्' 'ढौकिता' इत्यादौ न दोषः । धातुग्रहणानुवृत्तौ तु 'उदीचां माङः–' इत्यादावात्त्वानापत्तिः, ङकारविशिष्टे धातुत्वाभावात् । अनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुतायाः 'न धातुलोप–' इति सूत्रे भाष्ये स्पष्टमुक्तत्वात् । अयमेव 'अथापि निवृत्तम्–' इति भाष्यस्याशयः । उपदेशग्रहणं तु कार्यमेव, ज्ञापकाश्रयणे गौरवात्, गोभ्यामित्यस्य व्यावृत्त्यर्थमावश्यकत्वाच्च । **'उद्देशश्च–'** इत्यादि भाष्येण तदर्थतायास्तस्य बोधितत्वात् । **'तन्न करिष्यते'** इति प्राक्तनभाष्यं त्वेकदेश्युक्तिः । अन्त्यानुबन्धसहित–धेट्–आदिधातूनां तु अनुबन्धलोपे कृत उपदेशविषयैजन्तत्वादात्वं भवत्येव, धातुसंज्ञार्थं तस्याप्युपदेशविषयत्वात् । सति त्वनुबन्धे न प्राप्नोति, परस्य सत्त्वेन तदा तस्यैजन्तत्वाभावात् । तत्रापि 'माङः' इति निर्देशज्ञापितेन 'नानुबन्धकृतमनेजन्तत्वम्' इत्यनेन सिध्यति । अत एव दैपः 'अदाप्' इति प्रतिषेधः सिद्ध्यति । एवं च गोशब्दादिव्यावृत्तये उपदेशग्रहणावश्यकत्वे तस्य लक्षणप्रतिपदोक्तपरिभाषाऽनित्यत्वज्ञापकता नव्योक्ता चिन्त्यैवेति दिक् ॥

---

**( १०६१ विधिसूत्रम् ॥ ६ । १ । ३ आ॰ २६ )**

## २४८५ क्रीङ्जीनां णौ ॥ ६।१।४८ ॥

**( ६०५८ उपसंख्यानवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ आत्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः ॥ * ॥**

( भाष्यम् ) **आत्वे णौ लीयतेरुपसंख्यानं कर्तव्यं प्रलम्भनशालीनीकरणयोः ।**

**किं प्रयोजनम् ?**

**प्रलम्भने चार्थे शालीनीकरणे च नित्यमात्वं यथा स्यात् ।**

**प्रलम्भने तावत्—जटाभिरालापयते, श्मश्रुभिरालापयते ।**

**शालीनीकरणे—श्येनी वर्तिकामुल्लापयते, रथी रथिनमपलापयते ॥**

( प्रदीपः ) **आत्वे णाविति ।** 'विभाषा लीयतेः' इति विकल्पे प्राप्ते नित्यार्थं वचनम् । संमानने तु विकल्प एव भवति । **अन्ये त्वाहुः**—प्रलम्भनशालीनीकरणग्रहणमात्मनेपदविषयोपलक्षणार्थमिति संमाननेऽपि नित्यमात्वं भवति ॥

( उद्द्योतः ) ननु 'विभाषा लीयतेः' इत्यात्वस्य सिद्धत्वात्

---

१ अस्मिन् सूत्रे धातोरित्यस्यानुवृत्तौ बाधकमाह—ध्यैङ इति ॥

२ सूत्रतात्पर्यं बोधयति—अत्रेदमित्यादिना ॥

किं वचनेनेन? इत्यत आह—**विभाषेति** ॥ शालीनीकरणं—न्यक्कारः । **अन्ये** त्वाहुरिति मतं भाष्याननुगुणम्, 'आत्मनेपदविषये' इति वक्तव्ये तयोर्ग्रहणात् ॥

( १०६२ विधिसूत्रम् ॥ ६ । १ । ३ आ. २७ )

## २४८६ सिध्यतेरपारलौकिके

## ॥ ६ । १ । ४९ ॥

**( प्रदीपः )** परलोकः प्रयोजनमस्येति—**पारलौकिकम्** । 'प्रयोजनम्' इति ठञ् । 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः । धात्वर्थोपाधिश्चायम्[1]—न चेत्सिध्यतिरदृष्टफलेऽर्थेवर्तते तदा तस्यात्वं भवति ॥

**( उद्योतः )** परलोक इति । तेन देहान्तरोपभोग्यफलकेऽर्थे यदि सिध्यतिस्तदाऽऽत्वं नेत्यर्थः, तदाह—**अदृष्टफले इति** ॥

( ६०५९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सिध्यतेरज्ञानार्थस्य ॥ * ॥

**( भाष्यम् ) सिध्यतेरज्ञानार्थस्येति वक्तव्यम् ॥**

**( प्रदीपः ) सिध्यतेरज्ञानार्थस्येति ।** सांकाश्ये सिद्ध इत्यादौ सिध्यतिर्ज्ञानार्थः प्रयुज्यते, सांकाश्ये ज्ञायत इत्यर्थावगमात् । इह तु ज्ञायमानकर्तृकार्थवृत्तिः सिध्यतिरिति प्रतिषेधो न भवति—राजकुले देवदत्तं साधयतीति । ज्ञातृव्यापारवृत्ते-[2]स्त्वात्वं निषिध्यते, तत्रैव ज्ञानस्य मुख्यत्वात् । सिध्यति तापसः, आविर्भूतज्ञानलक्षणप्रकाशो भवतीत्यर्थः, तपः सेधयतीति ॥ ज्ञानपूर्विकायां[3] तु संपत्तौ यो वर्तते तत्र ज्ञानस्य गुणभावात्प्रतिषेधाभावः—राजकुले देवदत्तं साधयतीति ॥

**( उद्योतः )** ननु सिध्यतिर्निष्पत्तौ, न ज्ञाने—इति तत्पर्युदासो व्यर्थोऽत आह—**साङ्काश्ये इति** ॥ ननु राजकुले देवदत्तं साधयतीत्यतो ज्ञापयतीत्यर्थप्रतीतेस्तत्राप्यात्वं न स्यादत आह—**इह तु ज्ञायमानेति** । स च ज्ञानविषयीभवनरूपः, देवदत्तो ज्ञानविषयो भवति तमपरो ज्ञानविषयीकरोतीत्यर्थावगतेः । कथमत्र प्रतिषेधो न भवति? इत्यत आह—**ज्ञातृव्यापारेति** । तत्र हेतुमाह—**मुख्यत्वादिति** । एवञ्च तत्र चरितार्थं गौणेऽप्रसिद्धे न प्रवर्तत इति भावः । **अविर्भूतेत्यादे**र्ज्ञानवान्भवतीत्यर्थः ॥ **तपः सेधयतीति** । ततोऽयं णिचि प्रयोगः 'अज्ञानार्थस्य' इत्यस्य व्यावर्त्यमिति भावः ॥ 'राजकुले देवदत्तं साधयति' इत्यस्य प्रकारान्तरेणोपपत्तिमाह—**ज्ञानपूर्विकायां तु संपत्ताविति** । **संपत्तिः**—संबन्धः । देवदत्तो राजकुले ज्ञानपूर्वं संबद्धो भवति, तमन्यस्तथा संबद्धं करोतीत्यर्थ इति भावः ॥

( ६०६० उपसंख्यानफलबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ इतरथा ह्यनिष्टप्रसङ्गः ॥ * ॥

**( भाष्यम् ) 'अपारलौकिके' इत्युच्यमानेऽनिष्टं प्रसज्येत । अन्नं साधयति[4], ब्राह्मणेभ्यो दास्यामीति ॥**

**अस्ति पुनरयं सिध्यतिः क्वचिदन्यत्रापि[5] ज्ञानार्थे वर्तते ।**

**अस्तीत्याह—तपस्तापसं सेधयति, ज्ञानमस्य प्रकाशयति ।**

**स्वान्येवैनं कर्माणि सेधयन्ति, ज्ञानमस्य प्रकाशयन्तीत्यर्थः ॥**

**( प्रदीपः ) अन्नं साधयतीति ।** ननु ब्राह्मणेभ्यो दास्यामीति वाक्यात् पारलौकिकत्वं गम्यते, न तु पदात् । धात्वर्थः—तन्निष्पत्तिमात्रम्, अन्नं निष्पादयतीत्यर्थावगमादिति प्रतिषेधो न भविष्यति । नैतदस्ति । 'तपस्तापसं सेधयति' इत्यत्रापि पदान्तरसंनिधानात्सिद्ध्यर्थस्य पारलौकिकत्वं प्रतीयत इति सर्वत्र वाक्यगम्यत्वात्पारलौकिकत्वस्य प्रतिषेधप्रसङ्गः । वार्तिककारेण सूत्रार्थ एव व्याख्यात **इत्याहुः**[6] । अन्नं साधयतीत्यत्र दृष्टमेवान्नलक्षणं फलं सिद्ध्यत्यर्थस्य—इति निषेधो न भवति । हेयोपादेयतत्त्वप्रत्यक्षीकारलक्षणं तु ज्ञानं पारलौकिकमिति तत्रैव प्रतिषेधः प्रवर्तते ॥

---

१ धात्वर्थोपाधिरिति । अपारलौकिक इत्येतद्धात्वर्थस्यैव विशेषणम् । सूत्रार्थमाह—न चेत्सिद्ध्यतिरिति । अदृष्टफलभिन्नेऽर्थे यदि सिद्ध्यतिस्तदाऽऽत्वं भवतीति भावः ॥

२ ज्ञातृव्यापारेति । राजकुले देवदत्तं साधयति—इत्यत्र देवदत्तं ज्ञापयतीत्यर्थावगमात् ज्ञानार्थत्वात्कथमत्रात्वमित्याशङ्कायां यत्र ज्ञातृव्यापारो धातुनोच्यते तत्रात्वं निषिध्यते, यथा—तपः सेधयतीत्यत्र । सिध्यति तापस इत्यस्मात् ज्ञानवान् भवति तापस इत्यर्थावगमाज्ज्ञातृव्यापारे एवायं सिध्यतिः । तस्माण्णिचि ज्ञातृव्यापारवृत्तित्वेनात्वं न भवति । राजकुले देवदत्तं साधयतीत्यत्र सिध्यतिर्न ज्ञातृव्यापारवृत्तिः किन्तु ज्ञायमानव्यापारवृत्तिः । राजकुले देवदत्तः सिध्यति—राजकुले देवदत्तः प्रसिद्धो भवति—सर्वैरपि ज्ञायत इत्यर्थः । तत्र देवदत्तस्य न ज्ञातृत्वं किन्तु ज्ञायमानत्वमेव । तं देवदत्तं राजकुले साधयति यज्ञदत्तः—प्रसिद्धं करोतीत्यर्थः । एवं च देवदत्तस्यात्र ज्ञातृत्वाभावेन तद्व्यापारवृत्तेः सिधधातोरज्ञानार्थत्वमुपपन्नमिति तत्रात्वं सिध्यति । गौणमुख्यन्यायेन ज्ञातृव्यापारे विद्यमानस्य सिध्यतेर्ग्रहणम्, तस्य मुख्यत्वात् । ज्ञायमानव्यापारे विद्यमानस्य च गौणत्वान्नग्रहणमिति भावः ॥

३ ज्ञानपूर्विकायामिति । एतद्धि प्रकारान्तरमुच्यते । अस्मिन् पक्षे संबन्धार्थः सिध्यतिः । एवं चाज्ञानार्थत्वं तस्योपपन्नमित्यात्वे न किञ्चिद्बाधकमित्याशयः ॥

४ अन्नं साधयतीति । 'अपारलौकिके' इति विषयसप्तम्याश्रयणे अन्नं साधयति—इत्यत्र ब्राह्मणेभ्यो दास्यामीति वाक्यशेषेऽस्यान्ननिष्पादनस्य परलोकविषयत्वादात्वं न सिध्यतीति भावः । सिध्यतेरज्ञानार्थस्येतिवचने क्रियमाणे अपारलौकिकं फलमेव गृह्यते—धात्वर्थस्योपाधिः । तथा च अन्नं साधयतीत्यत्र तादृशे वाक्यशेषे सत्यपि अन्ननिष्पादनरूपं यत्फलं तस्यापारलौकिकत्वान्न काऽपि हानिः ॥

५ अन्यत्रापि—अपारलौकिकभिन्ने पारलौकिकेऽर्थे ॥

६ इत्याहुरिति । वार्तिककारो हि सिध्यतेरज्ञानार्थस्येति वचनात्सूत्रार्थमेव पूरयतीति कैय्यटाशयः । तथा च पारलौकिकज्ञानभिन्नार्थस्य सिध्यतेर्णावात्वमिति सूत्रार्थः । तेन तपः सेधयतीत्यत्र नात्वप्रसङ्गः । राजकुले देवदत्तं साधयतीत्यत्र च ज्ञानार्थकत्वेऽपि पारलौकिकज्ञानभिन्नार्थत्वं संपद्यत इति न तत्र निषेधः । 'अपारलौकिक इत्युच्यमानेऽनिष्टं प्रसज्येत' इत्यादिभाष्यमपि स्वरसतः सर्वमुपपन्नमिति केचित् ॥

(उद्द्योतः) न तु पदादिति । 'साधयति' इति पदादित्यर्थः ॥ पदान्तरसन्निधानादिति । 'तपस्तापसम्' इति पदसन्निधानादिति भावः ॥ इत्याहुरिति । अत्रारुचिवीजं तु 'इतरथा ह्यनिष्टप्रसङ्गः' इति वार्तिकशेषविरोधः ॥ अन्नलक्षणं—अन्ननिष्पत्तिलक्षणं ॥ सिध्यत्यर्थस्य—तदर्थव्यापारस्य । दानं त्वदृष्टफलम् । एवञ्च साक्षाददृष्टफले धात्वर्थे सावकाशः पर्युदासो व्यवधानेनादृष्टफले न प्रवर्तेत इति भावः । तदेवाह—हेयोपादेयेति । हेयोपादेययोर्यत्तत्त्वम्—हेयत्वादिकं तत्प्रत्यक्षीकारः—विवेकज्ञानमित्यर्थः । तपो[1] हि चान्द्रायणादिकमनुष्ठीयमानमनुष्ठातुर्विवेकविषयज्ञानातिशयमुत्पादयतीति भावः ।

—०—

( १०६३ विधिसूत्रम् ॥ ६ । १ । ३ आ. २८ )

## २४८७ मीनातिमिनोतिदीङां ल्यपि च ॥ ६ । १ । ५० ॥

( ६०६१ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ मीनात्यादीनामात्व उपदेशवचनं प्रत्ययविध्यर्थम् ॥ * ॥

( भाष्यम् ) मीनात्यादीनामात्व[2] उपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामात्वं भवतीति वक्तव्यम् ।

किं प्रयोजनम् ?

प्रत्ययविध्यर्थम् । उपदेशावस्थायामात्वे कृत इष्टः प्रत्ययविधिर्यथा स्यात् ॥

( प्रदीपः ) उपदेशवचनमिति । आद्य उच्चारणे—अनुत्पन्न एव प्रत्यय आत्वं कर्तव्यमित्यर्थः ॥ भाष्यकारस्त्वेनमेवार्थमन्यथा व्याचष्टे—उपदेशिवद्भावो वक्तव्य इति । उपदेशिन आकारान्ता या-वा-प्रभृतय आकारान्तनिमित्तप्रत्ययप्रकृतित्वं यथा प्रतिपद्यन्ते तथा मीनात्यादयोऽपीत्यर्थः ॥

( उद्द्योतः ) आद्य उच्चारणे इति । तदव्यवहितोत्तरकाले इत्यर्थः । यदि अयं वार्तिकार्थः[3], तत्कथं भाष्ये उक्तम्—'उपदेशिवद्भावः' इति ? अत आह—भाष्येति । तमेवार्थं शब्दान्तरेण विवृणोतीत्यर्थः । तदाह—भाष्ये—उपदेशावस्थायामिति । उपदेशावस्थासदृशावस्थायामित्यर्थः ॥

( वार्तिकफलबोधकभाष्यम् )

के पुनः प्रत्यया उपदेशिवद्भावं प्रयोजयन्ति ?

काः[4] ।

कास्तावन्न प्रयोजयन्ति ।

किं कारणम् ?

एच इत्युच्यते, न च केष्वेजस्ति ।

णघञ्युज्विधयस्तर्हि प्रयोजयन्ति ।

ण, अवदायः । आत इति णः सिद्धो भवति[5] । ण ॥

घञ्, अवदायो वर्तते । आत इति घञ् सिद्धो भवति ।

किं च भो आत इति घञुच्यते ?

न खल्वप्यात इत्युच्यते, आतस्तु विज्ञायते ।

कथम् ?

अविशेषेण घञुत्सर्गः, तस्य इवर्णान्तादुवर्णान्ताच्चाजपावपवादौ[6] । तत्रोपदेशावस्थायामात्वे कृते अपवादस्य निमित्तं नास्तीति कृत्वा, उत्सर्गेण[7] घञ् सिद्धो भवति । एवं च कृत्वा न च 'आतः' इत्युच्यते, आतस्तु विज्ञायते ॥

युच्, ईषदवदानम्, स्ववदानम् । आत इति[8] युच् सिद्धो भवति ॥

( प्रदीपः ) का इति । 'आतश्चोपसर्गे' इति कः । 'आतोऽनुपसर्गे—' इति कः । कौ च अङ् च-काः, 'आतश्चोपसर्गे' इत्यङत्र निर्दिष्टः ॥

न च केष्विति[9] । शकन्ध्वादित्वात्पररूपम्, अन्यथा 'कासु' इति स्यात् । 'क्ङिति च' इति गुणप्रतिषेधात्तत्रैजभावः ॥

आतस्तु विज्ञायत इति । सामर्थ्यात् । तथा हि—मीनात्यादीनामुपदेश एवात्वे कृत इवर्णान्तलक्षणोऽजपवादो न प्रवर्तेत इति घञेव स्यात् ॥

( उद्द्योतः ) ननु द्वावेव कौ—इति बहुवचनानुपपत्तेराह—आतश्चेत्यादि ॥

शकन्ध्वादित्वादिति । 'छत्रिणः' इतिवदङ्यपि कत्वारोपेण प्रयोग इत्यन्ये ॥ तत्रैजभाव इति । एवं चैज्विषयाभावान्न तद्विषये आत्वप्राप्तिरिति भावः ॥ 'आतः' इति वचनाभावे कथमातो विज्ञानम् ? अत आह—सामर्थ्यादिति । अपवादप्रवृत्तिप्रतिबन्धद्वाराऽऽकारान्तत्वनिमित्तको घञिति भावः ॥

( उपदेशपदान्वयबोधकभाष्यम् )

इदं विप्रतिषिद्धम्—एच उपदेश इति । यद्येचः, नोपदेशे । अथोपदेशे, नैचः । एचश्चोपदेशे चेति विप्रतिषिद्धम् ।

नैतद्विप्रतिषिद्धम् । आहायम्—एच उपदेश इति । यद्येचो नोपदेशे—अथोपदेशे नैचः, ते वयं विषयं विज्ञास्यामः—एज्विषय इति ॥

---

१ तपः सेधयतीत्यत्र तपसो ज्ञानजनकत्वमुपपादयति—तपो हीति ॥

२ अयं—मीनात्यादीनामात्व इति भाष्योक्तः ॥

३ वार्तिकार्थः—उपदेशवचनं प्रत्ययविध्यर्थमित्यस्यार्थः । वार्तिककारेण 'उपदेशवचनं' इत्युक्तम् । भाष्यकृता च 'उपदेशिवद्भाव' इत्युच्यते तत्कथं संगच्छत इति प्रश्नः ॥

४ काः—क—क—अङ्—काः ॥

५ आत इति । 'श्याद्व्यधास्रुसंस्र्वती—' (३।१।१४१) इत्यनेन णः ॥

६ अजपाविति । 'एरच्' (३।३।५६) इत्यनेनाच्, 'ऋदोरप्' (५७) इत्यनेनाप् ॥

७ उत्सर्गेण—'भावे' (३।३।१८) 'अकर्तरि च कारके संज्ञायाम्' (१९) इति सूत्राभ्याम् ॥

८ आत इतीति । 'आतो युच्' (३।३।१२८) इत्यनेन ॥

९ 'न च केष्वेजस्ति' इति भाष्यमुपपादयति—क्ङिति चेतीति ॥

(प्रदीपः) **इदं विप्रतिषिद्धमिति** । न हि मीनात्या-दीनामुपदेश एजस्ति, प्रत्ययनिमित्तत्वादेचः ॥

**ते वयं विषयमिति** । स तु विषयः–प्रत्ययः, यस्मिन् प्रत्यये एचा भाव्यं तस्मिन्ननुत्पन्न एवात्वम् । **अन्ये तु**–इवर्ण-मेज्विषयमाहुः । यस्येवर्णस्यैचा भाव्यं तस्यात्वम् । **केचित्तु**–एजेव विषय इत्याहुः । एचि भावित्वेन बुद्ध्याऽऽश्रिते आत्वं भवतीत्यर्थः ॥

(उद्द्योतः) **न हीति** । अत्राप्येच इत्यनुवृत्त्यैजन्तानां मीना-त्यादीनामुपदेश आत्वमिति विरुद्धमित्यर्थः ॥ **स तु विषय इति** । 'एचो विषये' इति षष्ठीसमास इति भावः । अत्र पक्षे 'विषये' इति सप्तम्यन्ताध्याहारेण 'अनुत्पन्न एव' इत्यर्थलाभ उपदेशग्रहणात् ॥ **तस्यात्वमिति** । तच्चानैमित्तिकमिति भावः । अत्र पक्षे 'एज्विषये' इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया बोध्या । अत एवारुचेराह—**केचिदिति** । एतयोरपि पक्षयोरुपदेशग्रहणादेवानुत्पन्ने प्रत्यये आत्वमिति बोध्यम् ॥

(उपदेशपदानुवृत्तिबोधकभाष्यम्)

**तत्तर्हि उपदेशग्रहणं कर्तव्यम् ।**
**न कर्तव्यम्, प्रकृतमनुवर्तते ।**
**क्व प्रकृतम् ?**
**'आदेच उपदेशेऽशिति' (४५) इति ।**
**तद्वै प्रकृतिविशेषणम्, विषयविशेषणेन चेहार्थः ।**
**न चान्यार्थं प्रकृतमन्यार्थं भवति ।**
**न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति—न हि गोधा सर्पन्ती सर्पणादहिर्भवति ॥**

(प्रदीपः) **न चान्यार्थमिति** । तस्यैव–तदर्थस्यैवोत्तर-त्रानुवर्तनादिति भावः ॥ तत्रैतत्स्यात्–अन्यदेव शब्दरूपं वाक्यान्तरेष्वनुमीयते–इत्याशङ्क्याह—**न खल्वपीति** ॥

(उद्द्योतः) **तस्यैवेति** । तदानुपूर्वीकस्येत्यर्थः ॥ **तदर्थस्यै-वेति** । यो यदर्थः प्रकृत इत्यर्थः ॥ उत्तरभाष्यं शङ्कोत्तरत्वेन योज-यति—**तत्रैतत्स्यादिति** । प्रत्यभिज्ञाऽनुपपत्त्या नान्यत्वमित्युत्तरम् ॥

(उपदेशपदस्य यथेष्टमभिसंबन्धबोधकभाष्यम्)

**यत्तावदुच्यते—न चान्यार्थं प्रकृतमन्यार्थं भव-तीति ।**

**अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते ॥**

**यदप्युच्यते—न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्य-द्भवति—न हि गोधा सर्पन्ती सर्पणादहिर्भवतीति । भवेत्, द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येनाभिसंबध्यते तस्य तस्य विशेषको भवति । तद्यथा—गौः शुक्लः, अश्वश्च । शुक्ल इति गम्यते ॥**

(प्रदीपः) **अन्यार्थमपीति** । स्वरितत्वप्रतिज्ञाना-च्छब्दस्वरूपमात्रमुत्तरत्रानुवर्तते, तस्य यदर्थस्योपयोगस्तदर्थ-मेवावतिष्ठते ॥

**शब्दस्त्विति** । स्वरितत्वप्रतिज्ञानात्तत्सदृशं शब्दान्तरं वाक्यार्थानुगुणार्थमनुमीयते । सादृश्यात्तु 'तदेवेदम्' इति तत्त्वाध्यवसायो भिन्नेष्वपि शब्दरूपेषु भवति । तत्रोपदेशश-ब्देन प्रत्ययोऽभिधीयते । उपदिश्यते तस्मिन्नेजिति–उपदेशः । विषयसप्तमी चेयम् । न चेयं परसप्तमी । तेनानुत्पन्न एव प्रत्यय आत्वम् ॥ इवर्णो वोपदेशः ॥ अथवा–उपदेशनमुपदेशः, तत्प्रतिपादनम् । तत्र पूर्वसूत्र उपदेशग्रहणं प्रकृत्याऽभिसंब-न्धात्तद्विशेषणम्, इह तु विषयविशेषणमिति न कश्चिद्दोषः ॥

(उद्द्योतः) ननु लोकवेदयोः प्रकृतार्थस्यैवोत्तरत्रान्वयो दृष्टः, न त्वन्यार्थशब्दस्यान्यार्थत्वम्, अतोऽत्र शास्त्रे विशेषमाह—**स्वरित-त्वेति** ॥ **तत्सदृशमिति** । अर्थभेदेन शब्दभेदादिति भावः । ननु प्रत्यभिज्ञाविरोधान्न शब्दान्तरत्वमत आह—**सादृश्यात्त्विति** । अत्रो-पदेश इत्यस्य कोऽन्योऽर्थः? तत्राह–**उपदिश्यत इति** ॥ **विषयसप्त-मीति** । एच उपदेशे–प्रत्यये विषय इत्यर्थः ॥ **इवर्णो वोपदेश इति** । उपदिश्यत इत्युपदेशः । एचः संबन्धिन्युपदेशभूते इवर्णे विषय इति अर्थः, स्थानिनो विषयत्वेन निर्देशः ॥ **तत्प्रतिपादनमिति** । एचः प्रतिपादनमित्यर्थः । प्रतिपादनमात्रमुपदेशो न तूच्चारणमिति भावः । एचः प्रतिपादनविषये–एचो बुद्धिस्थत्वे सति प्रागेव प्रत्ययोत्पत्तेरात्व-मितीष्टप्रयोगसिद्धिरिति तात्पर्यम् ॥ **तद्विशेषणम्**—बहुव्रीहिणा[1] प्रकृ-तिभूतस्यैचो विशेष्यमित्यर्थः ॥ **विषयविशेषणमिति** । विषयसप्त-म्यन्ततया विधेयविशेषणमित्यर्थः ॥ भाष्ये—**अश्वश्च** । **शुक्ल इति गम्यत इति** । आश्रयभेदाद्गुणभेद इति मते इदम् ॥

(६०६२ प्रतिषेधोपसंख्यानवार्तिकम् ॥ २ ॥)

## ॥ * ॥ निमिमीलियां खलचोः प्रतिषेधः ॥ * ॥

(भाष्यम्) **निमिमीलियां खलचोः[2] प्रतिषेधो वक्तव्यः ।**

**ईषन्निमयम्, सुनिमयम्, निमयो वर्तते, निमयः । मि ॥**

**मी । ईषत्प्रमयम्, सुप्रमयम् प्रमयो वर्तते, प्रमयः । मी ॥**

**ली । ईषद्विलयम्, सुविलयम्, विलयो वर्तते, विलयः ॥**

---

१ बहुव्रीहिणेति । तद्विशेषणपदे स विशेषणं यस्येत्येवं बहुव्रीहावुपदेश-पदं विशेष्यमित्यर्थो ज्ञेय इति भावः ॥

२ खलचोरिति । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (३।३।१२६) इति खल्, 'नंदिग्रहिपचादिभ्यो ल्युणिन्यचः' (३।१।१३४) 'एरच्' (३।३।५६) इति सूत्राभ्यामच् ॥

३ 'निमयः, सुनिमयः' इति ट. पाठः ॥

(प्रदीपः) **खलचोरिति** । पचाद्यच एरचश्च सामान्यग्रहणम् ॥

(उद्द्योतः) **खलचोरिति** । तयोर्विषये आत्वस्य प्रतिषेध इत्यर्थः ॥ **पचाद्यच एरचश्चेति** । अत एव भाष्ये—**निमयो वर्तते, निमयः**—इत्याद्युदाहृतम् ॥

(१०६४ विधिसूत्रम् ॥ ६ । १ । ३ आ. २९)

## २४९८ विभाषा लीयतेः ॥ ६।१।५१ ॥

('लीयतेः' इति निर्देशार्थबोधकभाष्यम्)

**किमिदं लीयतेरिति ?**

**लिनातिलीयत्योर्यका निर्देशः ॥**

(प्रदीपः) **यका निर्देश इति** । श्यना निर्देशे लिनातेर्ग्रहणं न स्यात्—इति सामान्यग्रहणाय यका निर्देश आश्रीयते । यक्च[1] श्तिपः शित्करणसामर्थ्यादभावकर्मवाचित्वेऽपि प्रवर्तते । यथा शबादयोऽकर्तृवाचित्वेऽपीति भावः ॥

(उद्द्योतः) **सामान्यग्रहणायेति** । दैवादिक[2]मात्रग्रहणे हि 'लीङः' इत्येव निर्दिशेदिति भावः ॥ ननु भावकर्मवाचित्वाभावात्कथं यक् ? अत आह—**यक्चेति** ॥ **यथा शबादय इति** । 'इन्धिभवति–' इत्यादौ । वस्तुत इदं **चिन्त्यम्**, पिबतिग्लायतीत्यादौ पिबाद्यादेशप्रवृत्त्या, आत्वनिवृत्त्या च शित्वस्य चारितार्थ्यात् । तस्मात् 'उपसर्गात्सुनोति–' इत्यादिनिर्देशादकर्त्रादिवाचकेऽपि विकरण इति तत्त्वम् ॥

(१०६५ विधिसूत्रम् ॥ ६ । १ । ३ आं. ३०)

## २४९३ बिभेतेर्हेतुभये ॥ ६ । १ । ५६ ॥

(पदकृत्यभाष्यम्)

**हेतुभय इति किमर्थम् ?**

**कुञ्चिकयैनं भाययति, अहिनैनं भाययति ॥**

(प्रदीपः) **हेतुभय इति किमर्थमिति** । इह णाविति वर्तते, प्रयोजकव्यापारे च णिच् विधीयत इति सर्वत्र हेतुसंबन्धिभयसद्भावात् व्यावर्त्याभावादनर्थकं हेतुभयग्रहणमिति मत्वा प्रश्नः ॥

(उद्द्योतः) **इहेति** । भयशब्दो भावसाधनः, षष्ठ्या च समास इति प्रश्नाशय इत्यर्थः ॥

(आक्षेपभाष्यम्)

**'हेतुभये' इत्युच्यमानेऽप्यत्र प्राप्नोति । एतदपि हेतुभयम् ॥**

(समाधानभाष्यम्)

**हेतुभय इति नैवं विज्ञायते—हेतोर्भयम्—हेतुभयम्, हेतुभय इति ।**

**कथं तर्हि ?**

**हेतुरेव भयम्–हेतुभयम्, हेतुभय इति । यदि स एव हेतुर्भयं भवतीति ॥**

(प्रदीपः) **हेतुरेव भयमिति** । अपादानसाधनो भयशब्दः, न तु भावसाधनः । समानाधिकरणपदः समासः, न षष्ठीसमासः । तेन यदा साक्षात् प्रयोजको भयस्यापादानं तदैतदात्वम् । यदा तु कुञ्चिकादीनि भयस्यापादानं तदाऽऽत्वाभावः । एतच्च हेतुभयग्रहणसामर्थ्यादाश्रीयते । भाव[3]साधनत्वे षष्ठीसमासे च तदनर्थकं स्यात् । यद्यपि भावसाधनपक्षेऽपि पञ्चमीसमासाश्रयणेनायमेवार्थो लभ्यते तथापि षष्ठीसमासनिराकरणपरत्वाद्भाष्यस्य हेतोरपादानत्वमवश्याश्रयितव्यम्–इत्यत्र तात्पर्यात्पञ्चमीसमासो न निवार्यते ॥

(उद्द्योतः) **यदा साक्षादिति** । यथा–मुण्डो भाययत इत्यादौ । मुण्डो हि तत्र भयहेतुः, न तु कारणान्तरसहकृत इति भावः ॥ **यद्यपि भावेति** । वृ[4]त्ताविदं स्पष्टम् । लाघवात्कर्मधारय एवोचित इति भाष्याशय इत्यन्ये ॥

(१०६६ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३१)

## २४९५ सृजिदृशोर्झल्यमकिति ॥ ६ । १ । ५८ ॥

(अमागमाधिकरणम्)

(६०६३ उपसंख्यानवार्तिकम् ॥ १ ॥)

**॥ * ॥ अमि सङ्ग्रहणम् ॥ * ॥**

(भाष्यम्) **अमि सङ्ग्रहणं कर्तव्यम् ।**

**किमिदं सङिति ?**

**प्रत्याहारग्रहणम् ।**

**क सन्निविष्टानां प्रत्याहारः ?**

**सनः[5] प्रभृति आमहिङो ङकारात् ॥**

**किं प्रयोजनम् ?**

(प्रदीपः) 'अकिति' इति यदि पर्युदासः, अथापि प्रसज्यप्रतिषेधः–झल्यम् भवति किति झलि नेति सर्वथा रज्जुसृड्भ्यामित्यादौ प्राप्नोतीति मत्वाऽऽह—**अमि सङ्ग्रहणमिति** ।

---

१ ननु लीयतेरित्यत्र भावकर्मवाचित्वाभावात् श्तिपः कथं सार्वधातुके यगिति यक् स्यादत आह—यक्च श्तिप इति ॥

२ दैवादिकमात्रेति । लीङो ग्रहणे तदनुबन्धकपरिभाषया दैवादिकस्यैव ग्रहणं स्यादन्यस्य निरनुबन्धकत्वात् ॥

३ हेतुभयग्रहणसामर्थ्यं दर्शयति—भावसाधनत्व इति ॥

४ वृत्ताविदमिति । हेतोर्भयमिति पञ्चमीसमासो वृत्तौ स्पष्टः । तत्र हि—हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकस्ततो यद्भयं स यस्य भयस्य साक्षाद्धेतुः, तद्भयं हेतुभयमित्युक्तम् ॥

५ सनः प्रभृतीति । 'गुप्तिज्किद्भ्यः सन्' (३।१।५) इत्यतः 'तिप्तस्झि–' (३।४।७८) इत्येतत्पर्यन्तमयं प्रत्याहारः ॥

( ६०६४ उपसंख्यानफलबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ क्विप्[1]प्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) क्विबन्तस्य मा भूत् । रज्जुसृड्भ्याम्, रज्जुसृड्भिः, देवदृग्भ्याम्, देवदृग्भिः ॥

( ६०६५ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

धातोः स्वरूपग्रहणे तत्प्रत्ययविज्ञानात्सिद्धमिति[2] ॥

( १०६७ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३२ )

## २४९७ शीर्षश्छन्दसि ॥ ६ । १ । ६० ॥

( प्रकृत्यन्तरबोधनाधिकरणम् )

( ६०६६ सूत्रार्थबोधकवार्तिकम् ॥ १ ॥ )

॥*॥ शीर्षन् छन्दसि प्रकृत्यन्तरम् ॥*॥

( भाष्यम् ) शीर्षन् छन्दसि प्रकृत्यन्तरं द्रष्टव्यम् ।

किं प्रयोजनम् ?

आदेशप्रतिषेधार्थम् । आदेशो मा विज्ञायि, प्रकृत्यन्तरं यथा विज्ञायेत ।

किं च स्यात् ?

अस्कारान्तस्य च्छन्दसि श्रवणं न स्यात्—शिरो मे शीर्यते मुखे, इदं[3] ते शिरो भिनद्मीत्ति, तद्वा अथर्वणः शिरः ॥

(प्रदीपः) आदेशप्रतिषेधार्थमिति । यद्यपि 'शिरसः' इति स्थानी साक्षान्न निर्दिष्टस्तथापि समानार्थत्वादादेशेनाक्षिप्यते, यथा—शिवादिषु विश्रवणशब्देन विश्रवश्शब्दः–इति स्थानिनोऽत्यन्तमप्रयोगः स्यादिति स्थान्यादेशभावपरिहारेण प्रकृत्यन्तरत्वमाश्रयणीयमित्यर्थः । यद्यपि पूर्वसूत्रादन्यतरस्यांग्रहणानुवृत्त्येष्टसिद्धिर्भवति तथाप्युत्तरत्र[4] तदनुवृत्तिराशङ्क्येत–इति तत्परित्यागेन प्रकृत्यन्तरपक्षो निर्दोष आश्रितः ॥

( उद्द्योतः ) ननु स्थानिनिर्देशाभावेनादेशत्वाप्रसक्तेः किं 'प्रकृत्यन्तरं द्रष्टव्यम्' इत्यनेन ? इत्यत आह—यद्यपीत्यादिना । 'पद्दन्–' आदिसूत्रेऽपि प्रकृत्यन्तरत्वमेव द्रष्टव्यम् । अत[5] एव तत्र भाष्ये 'पादादीनामिति वाच्यम्' इति नोक्तम् ॥ उत्तरत्र—'ये च तद्धिते' इत्यत्र ॥ निर्दोष इति । छन्दसि सर्वविधीनां वैकल्पिकत्वेऽप्यगतिकगतिः सा–इति–एतदुक्तं भाष्ये इत्याहुः ॥

( १०६८ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३३ )

## २४९८ ये च तद्धिते ॥ ६ । १ । ६१ ॥

( ६०६७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ ये च तद्धिते शिरस आदेशार्थम् ॥ * ॥

( भाष्यम् ) 'ये च तद्धिते' इत्यत्र शिरसो ग्रहणं कर्तव्यम् ।

किं प्रयोजनम् ?

आदेशार्थम् । आदेशो यथा विज्ञायेत, प्रकृत्यन्तरं मा विज्ञायि ।

किं च स्यात् ?

यकारादौ तद्धितेऽस्कारान्तस्य श्रवणं प्रसज्येत–शीर्षण्यो हि मुख्यो भवति, शीर्षण्यः स्वरः ॥

( ६०६८ विकल्पोपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ वा केशेषु ॥ * ॥

( भाष्यम् ) वा केशेषु शिरसः शीर्षन्भावो वक्तव्यः । शीर्षण्याः केशाः, शिरस्याः ॥

( प्रदीपः ) वा केशेष्विति । तत्र शिरस्यशब्दस्य केशविषयत्वाच्छिरस्यशब्दादेव केशार्थावगमात्केशशब्दो न प्रयोक्तव्यः । शीर्षण्यशब्दस्तु सामान्यवाचीति तत्प्रयोगे विशेषावगमाय केशशब्दः प्रयुज्यत इत्याहुः ॥

( उद्द्योतः ) 'शीर्षण्याः' इत्यत्र 'केशाः' इत्युपादाने 'शिरस्याः' इत्यत्र च तदनुपादाने बीजमाह—तत्रेति । अत्र छन्दसीति नानुवर्तते, 'छन्दसि च' इति वार्तिकवैयर्थ्यापत्तेः–इत्याहुः ॥

( ६०६९ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अचि शीर्षः ॥ * ॥

( भाष्यम् ) अचि परतः शिरसः शीर्षभावो वक्तव्यः । हास्तिशीर्षिः, पैलुशीर्षिः ॥

(प्रदीपः) अचि शीर्ष इति–वार्तिकं दृष्ट्वा सूत्रेषु कैश्चित् प्रक्षिप्तम् ॥ हास्तिशीर्षिरिति । बाह्वादिषु शिरश्शब्दस्य पाठात्केवलस्यापत्येनायोगात्तदन्तविधिः ॥

( उद्द्योतः ) ननु शिरस्शब्दान्तस्यानदन्तत्वात् कथमिञ् ? अत आह—बाह्वादिष्विति ॥

( ६०७० उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ छन्दसि च ॥ * ॥

( भाष्यम् ) शिरसः शीर्षभावो वक्तव्यः । द्वे शीर्षे ॥

---

१ क्विप्प्रतिषेधार्थमिति । अत्र हि सूत्रे सङ्ग्रहणाभावे रज्जुसृड्भ्यामित्यादौ भ्यामिपरतस्तस्य च झलादिकत्वाच्चाम् प्राप्नोति, तत्प्रतिषेधार्थं सङ्ग्रहणमावश्यकम् । वार्तिके क्विप्पदेन विचोऽप्युपलक्षणम् ॥

२ सिद्धमिति । 'मृजेर्वृद्धिः' (७।२।११४) इति सूत्रभाष्ये उक्तमेतत् ॥

३ 'इदं ते शिरो भिनत्तीति' इति च. झ. पाठः । 'इदं मे शिरो भिनद्मीति' इति ट. पाठः ॥

४ 'उत्तरत्र न तदनुवृत्तिराशङ्क्या' इति ठ. पाठः ॥

५ अत एवेति । अन्यथा ये च तद्धित इति सूत्रे 'शिरसो ग्रहणं कर्तव्यम्' इतिवत्पद्दन्नोमासिति सूत्रे पादादीनां ग्रहणं कर्तव्यमित्यपि भाष्यकृतोक्तं स्यादिति भावः ॥

**( प्रदीपः ) छन्दसि चेति** । अतद्धितेऽप्यजादौ यथा स्यादिति वचनम् । यद्येवमजादौ छन्दसि शिरश्शब्दप्रयोगो न प्राप्नोति, शीर्षादेशेन बाधात् । सति दर्शने सर्वे विधयश्छन्दसि विकल्पन्त इति दोषाभावः ॥

**( उद्द्योतः ) अजादाविति** । अत एव 'शिरो मे विश, शिरो वा एतद्यज्ञस्य' इत्यादि सिद्धम् ॥ सति दर्शने इति । 'इमेऽस्मिन् शिरसि प्राणाः' इति दृश्यत एव ॥

( आक्षेपभाष्यम् )

**इह—हास्तिशीर्ष्या, पैलुशीर्ष्या—इति, शिरसो ग्रहणेन ग्रहणात् शीर्षन्भावः प्राप्नोति ।**

**अस्तु । 'नस्तद्धिते' ( ६।४।१४४ ) इति टिलोपो भविष्यति ।**

**न सिध्यति ।**

**'ये चाभावकर्मणोः' ( ६।४।१६८ ) इति प्रकृतिभावः प्रसज्येत ।**

**( उद्द्योतः )** भाष्ये—इह–हास्तीति । स्थानिवद्भावेन शिरश्शब्दत्वात् 'ये च तद्धिते' इति शीर्षन् प्राप्नोतीति भावः ॥ शिरसो ग्रहणेनेति । शिरश्शब्दग्राहकेण 'शिरसः' इत्यनेन ग्रहणेनेत्यर्थः ॥

( न्यासान्तरेण दोषनिवारकभाष्यम् )

**यदि पुनः 'येऽचि तद्धिते' इत्युच्यते ।**

**किं कृतं भवति ?**

**इञि शीर्षन्भावे कृते टिलोपेन सिद्धम् ॥**

**( प्रदीपः ) येऽचि तद्धित इति** । यकारादावजादौ च तद्धिते शीर्षन् भवति । तत्रेञि प्रत्यये शीर्षन्भावे कृते टिलोपे च ष्यङादेशः करिष्यत इत्यर्थः ॥

**( उद्द्योतः ) करिष्यत इति** । कृतत्वाच्च पुनर्न प्रवृत्तिरिति भावः । ष्यङ आदेशत्वेऽपि सन्निपातपरिभाषया नादेशः, शीर्षादेशसन्निपातेन जातस्य ष्यङस्तदविघातकत्वादिति बोध्यम् । ध्वनितं चेम् 'अणिञोः–' इति सूत्रे भाष्ये । अत्रत्यं[1] भाष्यं त्वेकदेश्युक्तिः । 'अणिञोः' इति सूत्रभाष्यप्रामाण्यादनयोरनभिधानमेवेत्यपि[2] कश्चित् । यद्वा क्रौड्यादिगणे एतयोः पाठादत्र ष्यङः प्रत्ययत्वमेवेत्यणिञ्भ्यां व्यवधानादत्र शीर्षनादेशाभाव इत्याशयः ॥

( न्यासान्तरे दोषभाष्यम् )

**नैवं शक्यम् । इह हि–स्थूलशिरस इदं स्थौलशीर्षमिति—'अन्' (६।४।१६७) अणि–इति प्रकृतिभावः प्रसज्येत ।**

**तस्मान्नैवं शक्यम् । न चेदेवं शिरसो ग्रहणेन ग्रहणाच्छीर्षन्भावः प्राप्नोति ।**

( प्रथमाक्षेपसमाधानभाष्यम् )

**पाक्षिक एष दोषः ।**

**कतरस्मिन् पक्षे ?**

**ष्यङ्विधौ द्वैतं भवति—अणिञोर्वाऽऽदेशः ष्यङ्, अणिञ्भ्यां वा पर इति ।**

**तद्यदा तावदणिञोरादेशः, तदैष दोषः ।**

**यदा ह्यणिञ्भ्यां परः, न तदा दोषो भवति, अणिञ्भ्यां व्यवहितत्वात् ॥**

( १०६९ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३४ )

## २५०० पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्शकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६ । १ । ६३ ॥

**( प्रदीपः )** 'सर्वे विधयश्छन्दसि विकल्पन्ते' इति पादादयोऽपि छन्दसि प्रयुज्यन्ते ॥

**( उद्द्योतः ) सर्वे विधयश्छन्दसीति** । एवञ्च लोके पादादीनां शसादौ प्रयोगोऽसाधुरेव । वाग्रहणस्य तु नानुवृत्तिरिति भावः । वस्तुतस्तु 'तुल्यास्य–' सूत्रादिभाष्ये 'आस्ये' 'पादेनोपहतम्' 'मासेन पूर्वाय' इत्यादिप्रयोगदर्शनेन 'हृदयस्य प्रियः' इत्यादिसौत्रप्रयोगेण च लोकेऽप्यस्य वैकल्पिकत्वेन प्रकृत्यन्तरत्वपक्षोऽत्रावश्यकः[3] । छन्दसीति नानुवर्तते, विच्छिन्नत्वात्, कैयटादयश्चिन्त्या एवेति बोध्यम् ।

( प्रकृतिग्रहणस्य प्रकारार्थत्वबोधकभाष्यम् )

**शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृतिष्वपि दृश्यते—शलादोषणी, ककुद्दोषणी याचते महादेवः ॥**

**( प्रदीपः ) दोषणी याचत इति** । औटि दोश्शब्दस्य दोषन्नादेशः ॥

**( उद्द्योतः )** यत्तु 'ककुद्दोषणी' इत्यत्र प्राण्यङ्गत्वात्समाहारद्वन्द्वगर्भ एकशेष इति, तन्न; अल्पाच्तरत्वेन दोःशब्दस्य पूर्वनिपातापत्तेः, तस्मात्ककुदिति पृथक्पदम् । तद्ध्वनयन् तद्रहितं प्रतीकं गृह्णाति—**दोषणी याचत इति** । 'शलादोषणी' इत्यस्य शलाकाकारे दोषणी इत्यर्थः । पूर्वपदे कालोपश्छान्दसः । अभियुक्तप्रैषस्थमेतत् ॥

( ६०७१ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ॥ * ॥

**( भाष्यम् ) पदादिषु मांस्पृत्स्नूनामुपसंख्यानं कर्तव्यम् ।**

**यन्नीक्षणं मांस्पचन्याः, मांसपचन्या इति प्राप्ते ।**

**मांस् ॥**

**पृत् । पृत्सु मर्त्यम्, पृतनासु मर्त्यमिति प्राप्ते ।**

**पृत् ॥**

1 अत्रत्यं भाष्यम्–हास्तिशीर्ष्या–पैलुशीर्ष्या–इत्येतत्समर्थनपरं भाष्यम् ॥
2 अनयोः–हास्तिशीर्ष्या–पैलुशीर्ष्या–इत्येतयोः ॥
3 'पक्षो वाऽऽवश्यकः' इति ग. ज. पाठः ॥

स्नु । न ते दिवो न पृथिव्या अधि स्नुषु, अधि सानुष्विति प्राप्ते ॥

( उद्योतः ) मांसपचन्येति । 'न लुमता–' इति निषेधानित्यत्वान्ङसि परे आदेशः ॥

( ६०७२ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ नस्नासिकाया यत्तस्क्षुद्रेषु ॥ * ॥

( भाष्यम् ) यत्तस्क्षुद्रेषु परतो नासिकाया नस्भावो वक्तव्यः । यत् । नस्यम् । यत् ॥

तस् । नस्तः । तस् ॥

क्षुद्र । नः क्षुद्रः ॥

( प्रदीपः ) यत्तस्क्षुद्रेष्विति । यत्तसी प्रत्ययौ । क्षुद्रशब्द उत्तरपदम् ॥ नस्यमिति । नासिकायां भवो नासिकायै हितमिति वा शरीरावयवाद्यत् ॥

नस्त इति । 'अपादाने चाहीयरुहोः' इति तसिः ॥

नः क्षुद्र इति । नासिकया क्षुद्र इति सुप्सुपेति समासः ॥

( उद्योतः ) शरीरावयवाद्यदिति । भवे 'शरीरावयवाच्च' इत्यनेन, हिते 'शरीरावयवाद्यत्' इत्यनेनेति बोध्यम् ॥

( उपसंख्याने शङ्कासमाधानभाष्यम् )

अवर्णनगरयोरिति वक्तव्यम् । इह मा भूत्—नासिक्यो वर्णः, नासिक्यं नगरम् ।

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम् । इह तावत्—नासिक्यो वर्ण इति, परिमुखादिषु पाठः करिष्यते ।

नासिक्यं नगरमिति, संकाशादिषु पाठः करिष्यते ॥

(प्रदीपः) अवर्णनगरयोरिति । यत ए॑वैतद्विशेषणम् ॥ परिमुखादिषु पाठ इति । तत्र ञ्ये कृते सिद्धं नासिक्यमिति । ननु 'तित्स्वरितम्' इति यति स्वरितत्वं भवति, ण्यन्ययोस्त्वाद्युदात्तत्वान्तोदात्तत्वे भवत इति स्वरभेदप्रसङ्गः । राजन्यसांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानामादिर्वाऽन्तो वेति प्रतिपदं स्वरविधानादाद्युदात्तत्वान्तोदात्तत्वाभ्यां पर्यायेण भाव्यमिति नास्ति स्वरभेदः । यत्प्रत्यये च सति अनासिक्यमित्यत्र 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वं प्रसज्येत, अव्ययपूर्वपदप्रकृतिस्वरेण त्वाद्युदात्तत्वमिष्यत इति प्रत्याख्यानमेव युक्तम् ॥

( उद्योतः ) यत एवैतदिति । इतरयोरसंभवादिति भावः ॥

( १०७० विधिसूत्रम् ॥ ६ । १ । ३ आ. ३५ )

## २५०१ धात्वादेः षः सः ॥ ६ । १ । ६४ ॥

( सत्वाधिकरणम् )

( पदकृत्यभाष्यम् )

धातुग्रहणं किमर्थम् ?

इह मा भूत्—षोडन्, षण्डः, षडिकः ॥

अथादिग्रहणं किमर्थम् ?

इह मा भूत्—पेष्टा, पेष्टुम् ।

नैतदस्ति प्रयोजनम् । अस्त्वत्र सत्वम्, सत्वे कृते इण उत्तरस्यादेशसकारस्येति षत्वं भविष्यति ।

इदं तर्हि—लषिता, लषितुम् ॥

इदं चाप्युदाहरणम्—पेष्टा, पेष्टुम् ।

ननु चोक्तम्—अस्त्वत्र सत्वं सत्वे कृते इण उत्तरस्यादेशसकारस्येति षत्वं भविष्यतीति ।

नैवं शक्यम् । इह हि—पेक्ष्यतीति, षत्वस्यासिद्धत्वात् 'षढोः कः सि' (८।२।४१) इति कत्वं न स्यात् ॥

( प्रदीपः ) उपदेशग्रहणानुवृत्त्या प्रातिपदिकानां सत्वं न भविष्यतीति मत्वाऽऽह—धातुग्रहणं किमर्थमिति ॥

इतरः पूर्वसूत्रेषु विच्छिन्न उपदेशाधिकार इत्याह—षोडन्निति । षड् दन्ता अस्येति बहुव्रीहिः, 'वयसि दन्तस्य दतृ' इति दत्रादेशः । 'षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च' इति उत्वष्टुत्वे । षण्डशब्दोऽव्युत्पन्नं प्रातिपदिकम् ॥ षडिक इति । अनुकम्पितः षडङ्गुलिरिति 'बह्वचो मनुष्यनाम्नष्ठज्वा' इति ठच्, 'ठाजादावूर्ध्वम्–' इति ङ्गुलिशब्दस्य लोपः, 'ठस्येकः' इतीकादेशः, 'यस्येति च' इत्यकारलोपः ॥

लषितेति । षकारोपदेशस्तु प्रनिलषतीत्यादौ 'शेषे विभाषाऽकखादावषान्त उपदेशे' इति नेर्णत्वप्रतिषेधार्थः स्यात् ॥

( उद्योतः ) उपदेशग्रहणानुवृत्त्येति । 'प्रातिपदिकानां नोपदेशः' इत्युक्तेरिति भावः । अत्र षण्ड इति षडिकादेरप्युपलक्षणम् ॥

नन्वेवं सति प्रतिपत्तिलाघवाय सकारमेवोपदिशेदत आह—षकारोपदेशस्त्विति ॥

( ६०७३ प्रतिषेधवार्तिकम् ॥ १ ॥ )

॥ * ॥ सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः ॥ * ॥

( भाष्यम् ) सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः । सुब्धातु—षोडीयति, षण्डीयति ॥ ष्ठिवु—ष्ठीवति ॥ ष्वष्क, ष्वष्कते ॥

( प्रदीपः ) षोडीयतीति । षोडन्तमाचष्टे इति णिचि टिलोपे पचाद्यचि कृते षोडमिच्छति आत्मने–इति क्यच्, 'क्यचि च' इतीत्वम् ॥

( उद्योतः ) वार्तिके सुब्धातुग्रहणं नामघटितधातोरुपलक्षणमिति ध्वनयन् उभयात्मकमुदाहरणमाह—षोडीयतीति । आख्यानणिचः प्रातिपदिकादेवोत्पत्तेरुपात्तसुब्धातोरुदाहरणलाभाय तत्प्रकृतिकक्यजन्तपर्यन्तधावनम् ॥

१ 'यत एतद्विशेषणम्' च. झ. क. ट. पाठः ॥

( वार्तिकान्यथासिद्धिबोधकभाष्यम् )

सुब्धातूनां तावन्न वक्तव्यः । उपदेश इति वर्तते, उद्देशश्च प्रातिपदिकानां नोपदेशः ॥

यद्येवम्, नार्थो धातुग्रहणेन ।

कस्मान्न भवति—षोडन्, षण्डः, षडिक इति ?

उपदेश इति वर्तते, उद्देशश्च प्रातिपदिकानां नोपदेशः ॥

ष्ठिवेरपि द्वितीयो वर्णष्ठकारः ।

यदि ठकारः, तेष्ठीव्यत इति न सिध्यति ।

एवं तर्हि थकारः ।

यदि थकारः, टुष्ठ्यूषति-टेष्ठीव्यत इति न सिध्यति ।

एवं तर्हि द्वाविमौ ष्ठिवू । एकस्य द्वितीयो वर्णष्ठकारः, अपरस्य[1] थकारः ।

यस्य थकारस्तस्य सत्वं प्राप्नोति ॥

एवं तर्हि द्वाविमौ द्विषकारकौ ष्ठिवुष्वष्कती ।

किं कृतं भवति ?

पूर्वस्य षकारस्य सत्वे कृते परेण सन्निपाते ष्टुत्वं भविष्यति ।

नैवं शक्यम्, इह हि—श्वलिट् ष्ठीवति, मधुलिट् ष्वष्कते—ष्टुत्वस्यासिद्धत्वात् 'डः सि धुट्' ( ८।३।२९ ) इति धुट् प्रसज्येत ॥

एवं तर्हि यकारादी ष्ठिवुष्वष्कती ।

किं यकारो न श्रूयते ?

लुप्तनिर्दिष्टो यकारः ॥

( प्रदीपः ) उद्देश इति । लक्षणेन प्रतिपादनं सुब्धातूनाम्, न तु साक्षादुच्चारणमित्यर्थः ॥

द्वितीयो वर्णष्ठकार इति । तत्र षस्य सत्वे कृते ष्टुत्वं क्रियते ॥

लुप्तनिर्दिष्ट इति । 'लोपो व्योर्वलि' इति लक्षणेन लुप्तः । तत उपदेशे धात्वादित्वाभावात्सत्वाभावः । तत्र यदा ष्ठिवुद्वितीयो वर्णस्थकारस्तदा 'पूर्वत्रासिद्धीयमद्विर्वचने' इति कृतष्टुत्वस्यापि द्विर्वचने 'शपूर्वाः खयः' इति शरो लोपे कर्तव्ये पूर्वत्रासिद्धत्वात् ष्टुत्वनिवृत्तौ तेष्ठीव्यत इति भवति ॥

( उद्द्योतः ) भाष्ये—धुट् प्रसज्येतेति । एवं च द्वितीयठकारकस्यापि सत्वापत्तिर्दोष इति बोध्यम् ॥

समाधत्ते (भाष्ये)—यकारादी इति । ष्ठिवुत्वेनैक्यात् द्विवचननिर्देश इति बोध्यम् ॥ ननु द्वितीयवर्णस्य थकारत्वेऽपि कृतष्टुत्वस्य द्वित्वविधानात् 'तेष्ठीव्यते' इति कथं सिद्ध्येत् ? अत आह—तत्र यदेति । शरो लोपे कर्तव्ये पूर्वत्रासिद्धत्वात् ॥ ष्टुत्वनिवृत्ताविति ।

'पूर्वत्रासिद्धीयम्—' इत्यस्य द्विर्वचने कर्तव्ये कृते चेत्यर्थादसिद्धत्वेन सिद्धस्य निवृत्त्यभावाच्च चिन्त्यमिदम् । तस्मात्पूर्वत्रासिद्धीयमित्यस्यानित्यत्वादकृतष्टुत्वस्यैव द्वित्वादीति वक्तुमुचितम् ॥

( सूत्रप्रयोजनभाष्यम् )

अथ किमर्थं षकारमुपदिश्य तस्य स आदेशः क्रियते, न सकार एवोपदिश्येत ।

लघ्वर्थमित्याह ।

कथम् ?

अविशेषेणायं षकारमुपदिश्य सकारमादेशमुक्त्वा लघुनोपायेन षत्वं निर्वर्तयति—'आदेशप्रत्यययोः' ( ८।३।५९ ) इति । इतरथा हि येषां षत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् ॥

( षोपदेशप्रदर्शकभाष्यम् )

के पुनः षोपदेशा धातवः पठितव्याः ?

अथ कोऽत्र भवतः पुरुषकारः ? यदन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् ।

अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् ।

कथम् ?

अज्दन्त्यपराः सादयः षोपदेशाः, स्मिङ्स्विदिस्विदिस्वञ्जिस्वपश्च, सृपिसृजिस्तृस्त्यासेकृसृवर्जम् ॥

( प्रदीपः ) के पुनरिति । पाठभ्रंशसंभवात्प्रश्नः ॥

अज्दन्त्यपरा इति । दन्त्यग्रहणेन वकारो न गृह्यत इत्याशङ्का स्यादिति स्विदादयो भेदेन निर्दिष्टाः ॥

( उद्द्योतः ) पाठेन निर्णयात्प्रश्नोऽनुपपन्न इत्यत आह—पाठभ्रंशेति ॥

वकारस्यापि दन्त्यत्वात्स्वदादीनां भेदेन निर्देशोऽयुक्त इत्यत आह—दन्त्यग्रहणेनेति । आशङ्का स्यादित्यंशश्चिन्त्यः[2] । तेन स्वादधातोर्न षोपदेशत्वमित्यसिस्वदत्[3] सिद्धम् । अज्दन्त्यौ[4] सात्परौ येषान्ते सकारादयः सर्वे षोपदेशा इत्यर्थः ॥

( १०७१ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३६ )

## २५०२ णो नः ॥ ६ । १ । ६५ ॥

( नत्वाधिकरणम् )

( सूत्रप्रयोजनभाष्यम् )

अथ किमर्थं णकारमुपदिश्य तस्य नकार आदेशः क्रियते, न नकार एवोपदिश्येत ?

लघ्वर्थमित्याह ।

कथम् ?

---

१ 'अपरस्य षकारस्य सत्वे थकारः' इति ट. पाठः ॥

२ इत्यंशश्चिन्त्य इति । वस्तुतस्तु तत्र वकारस्य दन्त्यग्रहणेन ग्रहणमनिष्टमिति 'आशङ्का स्यात्' इति प्रदीपवचनमयुक्तम् । दन्त्यग्रहणेन वकारस्य ग्रहणं माभूदित्येतदर्थं स्विदादयो निर्दिष्टा इत्येव वक्तव्यमिति भावः ॥

३ क. ग. ज. पुस्तकेषु 'असिस्वदिति सिद्धम्' इति पाठः, स च 'असिस्वदत्' इत्यादिरूपस्यैकदेश एव गृहीतः ॥

४ 'अज्दन्त्यपराः सादयः' इति भाष्यस्यार्थमाह—अज्दन्त्याविति ॥

अविशेषेणायं णकारमुपदिश्य तस्य नकारमादेशमुक्त्वा तस्य लघुनोपायेन णत्वं निर्वर्तयति—'उपसर्गादसमासेऽपि णोपदेशस्य' ( ८।४।१४ ) इति ।

इतरथा हि येषां णत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात् ।

( णोपदेशपरिगणनभाष्यम् )

के पुनर्णोपदेशा धातवः पठितव्याः ?

कोऽत्र भवतः पुरुषकारः ?

यद्यन्तरेण पाठं किंचिच्छक्यते वक्तुं तदुच्यताम् ।

अन्तरेणापि पाठं किंचिच्छक्यते वक्तुम् ।

कथम् ?

सर्वे नादयो णोपदेशाः, नृतिनन्दिनर्दिनक्रिनाटिनाथृनाधृनृवर्जम् ॥

( १०७२ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३७ )

## २५०३ लोपो व्योर्वलि ॥ ६ । १ । ६६ ॥

( लोपाधिकरणम् )

( ६०७४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ व्योर्लोपे क्वावुपसंख्यानम् ॥ * ॥

( भाष्यम् ) व्योर्लोपे क्वावुपसंख्यानं कर्तव्यम् । इहापि यथा स्यात्—कण्डूयतेरप्रत्ययः-कण्डूरिति ।

किं पुनः कारणं न सिध्यति ?

वलीत्युच्यते, न चात्र वलादिं पश्यामः ।

ननु चायं क्विबेव वलादिः ।

क्विल्लोपे कृते वलाद्यभावान्न प्राप्नोति ॥

एवं तर्हि—इदमिह संप्रधार्यम्—क्विल्लोपः क्रियताम्-यलोप इति, किमत्र कर्तव्यम् ?

परत्वात् क्विल्लोपः, नित्यत्वाच्च ।

नित्यः खल्वपि क्विल्लोपः । कृतेऽपि यलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वात्परत्वाच्च क्विल्लोपः । क्विल्लोपे कृते वलाद्यभावाद्यलोपो न प्राप्नोति ॥

( प्रदीपः ) कण्डूयतेरप्रत्यय इति । ननु च 'कण्ड्वादिभ्यो यक्' इत्यत्र 'नैतेभ्यः क्विप् दृश्यते' इत्युक्तम्, तत्कथमप्रत्ययः ? एवं तर्हि कण्डूमिच्छतीति क्यजन्तात् क्विप् क्रियते । द्विविधा हि कण्ड्वादयः । तत्र धातुभ्यो यग्विधानात् प्रातिपदिकेभ्यः क्यजादयो भवन्त्येव । तत्र क्यजन्तात्कण्डूयशब्दात् क्विपि कृते 'वेरपृक्तस्य' इति लोपे अतो लोपे च वलः परस्याभावाद्यलोपो न प्राप्नोतीति वचनम् ॥

न चात्र वलादिमिति । यद्यपि विशेष्यासंनिधानात्तदादिविधेरभावः, तथापि संभवमात्रेणैतदुक्तम् । संभवति हि 'क्नूतम्' इत्यादौ वलादिप्रत्ययः ॥

ननु चायमिति । अतो लोपस्य चात्र यलोपविधिं प्रति स्थानिवत्त्वनिषेधः । अथ कण्डूयशब्दस्य धातुत्वाद्यलोपे कृते परिशिष्टस्य धातुसंज्ञासद्भावादतो लोपस्य स्थानिवद्भावादुवङ् कस्मान्न भवति ? उच्यते—अतो लोपस्य स्थानिवद्भावादेव कण्डूशब्दस्य धातुत्वाभावादुवङोऽप्रसङ्गः । तस्य[३] हि स्थानिवत्त्वे पूर्वस्य धातुत्वं नास्ति । यणादेशस्तर्ह्यल्लोपस्य स्थानिवद्भावात् प्राप्नोति । भवतु, तस्य क्विबाश्रय ऊठ् करिष्यते । ऊठि च कर्तव्ये नास्ति स्थानिवद्भावः, आदिष्टादचः[४] पूर्वत्वाद्वकारस्य । अत[५] एव 'कण्डवौ–कण्डवः' इत्यादावूठ उवङि कर्तव्ये नास्त्यल्लोपस्य स्थानिवद्भावः । यदा तु कण्डूशब्दात् प्रातिपदिकाद्विभक्तिस्तदो[६]वङ् न भवति—'कण्ड्वौ–कण्ड्वः' इति ॥

परत्वादिति । नन्वकृतेऽतो लोपे यलोपस्याप्रसङ्गः । तत्राल्लोपादन्तरङ्गत्वात्[७] पूर्वं विलोपेन भाव्यमिति यलोपक्विब्लोपयोर्विप्रतिषेधाभावः । एवं तर्हि 'आर्धधातुके' इति विषयसप्तम्याश्रयणात् पूर्वमतो लोपः पश्चात्[८] क्विविति भवति विप्रतिषेधः ॥

( उद्योतः ) ननु कण्ड्वादीनां धातुत्वात्कथं तेभ्यः सुबन्ताद्विहितः क्यच् ? अत आह—द्विविधा हीति ॥

यद्यपीति । तदन्तविध्यपवादत्वात्तदादिविधिरपि विशेषणेनैवेति भावः[९] ॥ तथापीति । उदाहरणेषु प्रायो वलादिप्रत्ययसंभवादिति भावः । 'गौधेरः' इत्यादौ व्यभिचारात्प्राय इति ॥

नन्वत्राल्लोपस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वात्कथं क्विप्परत्वं यस्य ? इत्यत आह—अतो लोपस्येति । परिशिष्टस्य[१०] धातुसंज्ञासद्भावे 'कण्डूय'शब्दस्य धातुत्वं हेतुः ॥ धातुत्वं नास्तीति । किन्तु धात्ववयवत्वमेवेति भावः ॥ यणादेश इति । 'इको यणचि' इत्यनेन ॥ उवङि कर्तव्य इति । ऊठ ऊकारस्यादिष्टादचः पूर्वत्वादिति भावः । 'ओः सुपि' इति यणादेशस्तु न, संयोगपूर्वत्वात् । वस्तुतः 'क्लौसुसं न स्थानिवत्' इति नाऽत्र यणादेशप्राप्तिः,

१ क. ट. पुस्तकयोः कृतेशब्दस्य न पाठः ॥

२ छ. पुस्तके 'एवं तर्हि' शब्दस्य न पाठः ॥

३ तस्य हीति । अकारस्य स्थानिवत्त्वे हि अकारविशिष्टस्यैव धातुत्वं न तद्रहितस्येति पूर्वस्य धातुत्वं नेत्यर्थः ॥

४ आदिष्टादचः पूर्वत्वादिति । स्थानिभूतादचःपूर्वत्वाभावादित्यर्थः ॥

५ अत एव–ऊठि कर्तव्ये स्थानिवद्भावाभावादेव ॥

६ विभक्तिस्तदेति । धातुत्वाभावादुवङ् नेति तात्पर्यम् ॥

७ अन्तरङ्गत्वादिति । अपरनिमित्तत्वेन वेरपृक्तस्येति विलोपस्यान्तरङ्गत्वमिति भावः ॥

८ पश्चात्क्विविति । अन्तरङ्गत्वात्पूर्वमल्लोपे जाते क्विब्यलोपयोः प्राप्तयोः परत्वात्क्विब्लोप इति भावः ॥

९ इति भाव इति । उत्सर्गसमानदेशा अपवादा इति परिभाषणादिति भावः ॥

१० ननु 'कण्डूयशब्दस्य धातुत्वाद्यलोपे' इति प्रदीपे यलोपे धातुत्वस्य हेतुत्वं न संगच्छत इत्यत आह—परिशिष्टस्य धातिवति ॥

सखीयतेः सखीरितिवत्–इति बोध्यम् ॥ एवं तर्हीति । परविषयेऽपि[1] जायमानस्य परनिमित्तत्वमिति कथयतीत्यादावल्लोपस्य स्थानिवत्त्वेन वृद्ध्यभावसिद्धिरिति भावः ॥

( उपसंख्यानप्रत्याख्यानभाष्यम् )

एवं तर्हि प्रत्ययलक्षणेन भविष्यति ।

वर्णाश्रये नास्ति प्रत्ययलक्षणम् । यदि वा कानिचिदन्यान्यपि वर्णाश्रयाणि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति ॥

अथवैवं वक्ष्यामि—'लोपो व्योर्वलि' ।

ततः–'वेः' । व्यन्तयोश्च व्योर्लोपो भवति ।

ततः–'अपृक्तस्य' । अपृक्तस्य च लोपो भवति । वेरित्येव ॥

( प्रदीपः ) यदि वेति । यथा–अतृणेडित्यत्रेमागमः ॥ ननु यस्य प्रत्ययत्वं निमित्तं वर्णस्तु प्रत्ययविशेषणत्वेनोपादीयते, तद्भवतु प्रत्ययलक्षणेन; यथा–इमागमो हलादौ पिति सार्वधातुके विधीयमानः । यलोपस्तु वर्णनिमित्तो न प्रत्ययनिमित्त इति कथं प्रत्ययलक्षणेन स्यात्? इत्याशङ्क्य परिहारान्तरमाह—अथवेति । 'वेरपृक्तस्य' इत्ययं योगो विभज्यते । 'वेः' इत्येको योगः, तत्र व्योरिति वर्तते । वेरिति च प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणम्, तस्यैव व्योरिति विशेषणम् । तेन वकारयकारान्तस्य विप्रत्ययान्तस्यालोऽन्तस्य लोपो भवति । प्रत्ययलक्षणेन च विप्रत्ययान्तत्वम् ॥

( उद्द्योतः ) प्रत्ययत्वं निमित्तमिति । प्रत्ययत्वं तद्व्याप्यधर्मो वा निमित्ततावच्छेदक इत्यर्थः । 'प्रत्ययो निमित्तम्' इति पाठान्तरम् ॥ वर्णनिमित्त इति । अस्य प्रत्ययनिमित्तत्वे 'गौधेरः' इत्यादौ[2] यलोपानापत्तिस्तदर्थालाभश्चेति भावः ॥

( ६०७५ व्योर्वकाराक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ वलोपाप्रसिद्धिरूड्भाववचनात् ॥ * ॥

( भाष्यम् ) वलोपस्याप्रसिद्धिः—आस्रेमाणम्, जीरदानुरिति ।

किं कारणम्?

ऊड्भाववचनात् । 'च्छ्वोः शूडनुनासिके च' ( ६।४।१९ ) इत्यूठ् प्राप्नोति ॥

( प्रदीपः ) जीरदानुरिति । ननु[3] नात्रोठ् प्राप्नोति । एवं तर्हि तुल्यप्रतिविधानत्वादुपक्षिप्तम् । वलोपावकाशप्रदर्शनेन वाऽऽस्रेमाणमित्यत्र वलोपासिद्धिः प्रदर्श्यते ॥

( उद्द्योतः ) (भाष्ये) वलोपाप्रसिद्धिरिति । वलोपस्यास्रेमाणमित्यादावप्रसिद्धिः–असिद्धिः, ऊठाबाधादिति वार्तिकार्थः ॥ तुल्यप्रतिविधानत्वादिति । यथा सूत्रानारंभे छान्दसत्वादास्रेमाणमित्यत्र वर्णलोपः, एवं जीरदानुरित्यत्रापि–इति प्रदर्शनायोपन्यास इत्यर्थः ॥ वलोपावकाशेति । वचनसामर्थ्यादूठं बाधित्वा वलोप[4] इति यो भ्राम्येत्तं प्रतीत्यर्थः ॥

( ६०७६ वकारग्रहणेऽतिप्रसङ्गापादकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अतिप्रसङ्गो व्रश्चादिषु ॥ * ॥

( भाष्यम् ) व्रश्चादिषु चातिप्रसङ्गो भवति । इहापि प्राप्नोति—व्रश्चनः, व्रीहयः, व्रण इति ॥

( अतिप्रसङ्गनिरासे वार्तिकावतरणभाष्यम् )

उपदेशसामर्थ्यात्सिद्धम् । उपदेशसामर्थ्यात् व्रश्चादिषु लोपो न भविष्यति ॥

( ६०७७ आक्षेपवार्तिकम् ॥ ४ ॥ )

॥ * ॥ उपदेशसामर्थ्यात्सिद्धमिति चेत्संप्रसारणहलादिशेषेषु सामर्थ्यम् ॥ * ॥

( भाष्यम् ) उपदेशसामर्थ्यात्सिद्धमिति चेत्, अस्त्यन्यदुपदेशवचने प्रयोजनम् । संप्रसारणहलादिशेषेषु कृतेषु वकारस्य श्रवणं यथा स्यात्—वृक्णः, वृक्णवान्, वृश्चति, विव्रश्चिषतीति ॥

( ६०७८ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) न वा एतत्प्रयोजनमस्ति ।

किं कारणम्?

बहिरङ्गलक्षणत्वात् । बहिरङ्गाः संप्रसारणहलादिशेषाः, अन्तरङ्गो लोपः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

( प्रदीपः ) अन्तरङ्गो लोप इति । ततश्चाकृतयोरेव[5] संप्रसारणहलादिशेषयोर्वलोपः प्राप्त उपदेशसामर्थ्यान्न भवति ॥

( उद्द्योतः ) नन्वन्तरङ्गत्वाद्वलोपप्राप्तौ कथं दोषनिवृत्तिः? अत आह—ततश्चेति ॥

१ ननु आर्धधातुक इति विषयसप्तम्याश्रयणे परनिमित्तत्वाभावादल्लोपस्य स्थानिवद्भावो न स्यादत आह—परविषयेऽपीति ॥

२ यलोपस्य प्रत्ययनिमित्तत्वे दोषमाह—गौधेर इत्यादाविति । अत्र ढस्य एयादेशे रमात्रस्य प्रत्ययत्वाभावेन लोपो न भविष्यति । तस्मिन् सूत्रे हि प्रत्ययस्यानुवर्तनात् प्रत्ययनिमित्तत्वरूपस्यार्थस्यालाभश्चेतीति भावः ॥

३ 'जीवेरदानुः' इत्यनेन जीवधातोरदानुप्रत्ययः क्रियते, तत्र निमित्ताभावादूठः प्रसक्त एव नास्तीति जीरदानुग्रहणं नोपयुज्यते, अतस्तद्ग्रहणप्रयोजनमाह—ननु नात्रोडित्यादिना ॥

४ वचनसामर्थ्यात्–लोपो व्योरिति वलोपवचनसामर्थ्यात् । वलोपोऽनवकाश इति यस्य भ्रमः स्यात्तं प्रति ऊठभावविषये वलोपावकाशः प्रदर्श्यत इति भावः ॥

५ ननु अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तं वा बहिरङ्गमसिद्धमिति हि 'असिद्धं बहिरङ्ग–' इत्यस्या अर्थः, न तु तदुत्तरकालप्राप्तस्य बहिरङ्गस्यासिद्धत्वमनया क्रियते । अत्र हि वृक्ण इत्यादौ प्रथमतो वलोपे जाते पश्चात्प्राप्तस्य सम्प्रसारणस्य कथमनयाऽसिद्धत्वमित्याक्षेपं वारयति—ततश्चाकृतयोरेवेति ॥

( ६०७९ व्योर्वकारप्रत्याख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अनारम्भो वा ॥ * ॥

( भाष्यम् ) अनारम्भो वा पुनर्वलोपस्य न्याय्यः। कथम्-आस्रेमाणम्, जीरदानुरिति ?

( प्रदीपः ) अनारम्भो वेति । वाग्रहणात्समाधानं वाऽऽस्रेमाणमित्यत्राश्रयणीयम्—'छान्दसत्वादूठ् न भवति' इत्युक्तं भवति । वलोपश्चात्र प्रत्याख्यायते न यलोपः, गांधेरः—पचेरन्नित्यादौ तस्योपयोगात् ॥

(उद्योतः) वाग्रहणादिति । एवं चारम्भवादिनाऽपि 'आस्रेमाणम्' इत्यत्र छान्दसत्वाश्रयणावश्यकत्वेऽनारम्भ एव न्याय्य इति भाष्यतात्पर्यमिति भावः । तदेव ध्वनयन्नाह—वलोपश्चात्रेति । एवं च धिन्विप्रभृतिभ्यो वान्तेभ्यो विजेनभिधानात्रेति बोध्यम् ।

( ६०८० अनुपपत्तिपरिहारवार्तिकम् ॥ ७ ॥ )

॥ * ॥ आस्रेमाणं जीरदानुरिति वर्णलोपात् ॥ * ॥

( भाष्यम् ) आस्रेमाणं जीरदानुरिति च्छान्दसाद्वर्णलोपात्सिद्धम् ॥

( ६०८१ अनुपपत्तिपरिहारे दृष्टान्तवार्तिकम् ॥ ८ ॥ )

॥ * ॥ यथा संस्फानो गयस्फानः ॥ * ॥

( भाष्यम् ) तद्यथा—संस्फायनः—संस्फानः, गयस्फायनः—गयस्फान इति ॥

—⊸◇⊷—

( १०७३ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३८ )

२५०४ वेरपृक्तस्य ॥ ६ । १ । ६७ ॥

( उपसंख्यानभाष्यम् )

दर्विजागृव्योः प्रतिषेधो वक्तव्यः । दर्विः, जागृविः ॥

किमुच्यते—दर्विजागृव्योः प्रतिषेधो वक्तव्य इति यदाऽपृक्तस्येत्युच्यते ।

भवति वै किंचित्, आचार्याः क्रियमाणमपि चोदयन्ति ।

तद्वा कर्तव्यम्, दर्विजागृव्योः प्रतिषेधो वा वक्तव्यः ॥

( प्रदीपः ) भवति वै किंचिदिति । यत्सूत्रे क्रियते वस्तु तदाचार्याश्चोदयन्ति तदर्थस्यान्यथासिद्धत्वप्रतिपादनाय । तत्र—भवति वै किंचित्—इत्येकं वाक्यम् । किं तदित्याह—आचार्याः क्रियमाणमपि चोदयन्ति—इति । अथवा चोदनक्रिया भवतिक्रियायाः कर्त्री भवतीत्येकमेव वाक्यम् ॥

( उद्योतः ) यत्सूत्रे इति । एवं चापृक्तस्येति वाच्यम्-इदं वा-इति तदर्थ इति भावः ॥ चोदनक्रियेति । किंचिदाचार्याः क्रियमाणमपि चोदयन्तीत्यन्तप्रतिपाद्या ॥

( ६०८२ प्रतिषेधानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽनुनासिकपरत्वात् ॥ * ॥

( भाष्यम् ) वेर्लोपे दर्विजागृव्योरप्रतिषेधः । अनर्थकः प्रतिषेधः-अप्रतिषेधः ।

लोपः कस्मान्न भवति ?

अनुनासिकपरत्वात्, अनुनासिकपरस्य विशब्दस्य ग्रहणम् । न चात्रानुनासिकपरो विशब्दः, शुद्धपरश्चात्र विशब्दः ॥

( प्रदीपः ) अप्रतिषेध इति । अपृक्तस्येति न वक्तव्यमित्यर्थः ॥

अनुनासिकपरत्वादिति । परशब्दो विशिष्टदेशावयववाची। यस्य विशब्दस्य पर इकारोऽनुनासिकः—अत एवेत्संज्ञकः स एवानुक्तो लोपविधानाय, न त्वनुनासिकपर इत्यर्थः ॥

( उद्योतः ) विशिष्टदेशेति । विशिष्टः—परत्वविशिष्टो देशो यस्य तादृशावयववाचीत्यर्थः, न त्ववधिसापेक्षार्थवाचीति भावः ॥ अत एवेत्संज्ञक इति । विधेयविषये उच्चारणार्थानामपीत्संज्ञकत्वादिति भावः ॥

( वार्तिकाक्षेपभाष्यम् )

यद्यनुनासिकपरस्य विशब्दस्य ग्रहणमित्युच्यते, घृतस्पृक्-दलस्पृक्-अत्र न प्राप्नोति, न ह्येतस्माद्विशब्दादनुनासिकं परं पश्यामः ।

'अनुनासिकपरत्वात्' इति नैवं विज्ञायते—अनुनासिकः परो यस्मात्सोऽयमनुनासिकपरः, अनुनासिकपरत्वादिति ।

कथं तर्हि ?

अनुनासिकः परोऽस्मिन् सोऽयमनुनासिकपरः, अनुनासिकपरत्वादिति ॥

एवमपि प्रियदर्विः—अत्रापि प्राप्नोति ।

---

१ ननु आस्रेमाणमित्यत्र लोपो व्योरिति वलोपेनैव रूपं सिद्ध्यतीति 'अनारम्भो वा' इति वार्तिकमनुपपन्नमत आह—वाग्रहणादिति । एवञ्चास्रेमाणमित्यत्र छान्दसत्वादूठं बाधित्वा वलोप इति भावः ॥

२ विजनभिधानादिति । वलोपप्रत्याख्यानपरभाष्यात् धिन्वधातोर्विज्न, अन्यथा एतदर्थं वलोपविधानमावश्यकं स्यादित्यर्थः ।

३ केषुचित् पुस्तकेषु 'दर्विजागृव्योः प्रतिषेधः' इत्येवं वार्तिकमधिकं पठ्यते । तद्बहुतरपुस्तकपाठविरोधान्नात्रावलम्बितम् । अन्यच्च यद्येतद्वार्तिकं स्यात्तदा भाष्यकृदनुवादवाक्ये 'किमुच्यते—दर्विजागृव्योः प्रतिषेधो वक्तव्य इति' इत्यत्र 'किमुच्यते-दर्विजागृव्योः प्रतिषेध इति' इति वार्तिकस्यैवानुवादः क्रियेत, कुतश्च भाष्यवाक्यस्येति ॥

४ यदाऽपृक्तस्येति । यदा सूत्रेऽपृक्तस्येति क्रियते तदा दर्विरित्यादौ लोपप्राप्त्यभावात्किमुच्यते प्रतिषेधो वक्तव्य इतीत्यर्थः ॥

५ अनुनासिकः परोऽस्मिन्निति । एवं हि विग्रहे घृतस्पृगित्यत्र क्विन इकारस्यानुनासिकत्वादनुनासिकपरत्वं सम्पद्यत इति लोपः सिध्यति ॥

६ प्रियदर्वीति । अत्र वेरिकारस्य 'अणोऽप्रगृह्यस्या—' इत्यनुनासिकत्वे लोपः प्राप्नुयात् ॥

**असिद्धोऽत्रानुनासिकः ॥**

**एवमपि धात्वन्तस्य प्रतिषेधो वक्तव्यः । इंवि, दिवि, धिवि ॥**

( प्रदीपः ) इतरः पञ्चम्यर्थे बहुव्रीहिं मत्वा चोदयति—**यदीति** । विनो नकारस्य लुप्तत्वादनुनासिकपरत्वाभावान्मा भूल्लोपः, घृतस्पृगित्यादावेव तु न प्राप्नोति, क्विनो नकारस्य लुप्तत्वात् ॥[1]

**नैवं विज्ञायत इति** । एवं हि विज्ञायमाने 'प्रियदर्विमन्यः' इत्यादौ स्यात्, इष्टे च विषये न स्यात् ॥[2][3]

**प्रियदर्वीति** । अत्र 'अणोऽप्रगृह्यस्यानुनासिकः' इत्यनुनासिकः । प्रिया दर्विर्यस्य तत्–प्रियदर्वि ॥[4]

**असिद्ध इति** । पूर्वत्रासिद्धमिति वचनात् ॥

( उद्योतः ) ननु दर्विरित्यादौ जातस्य विनोऽनुनासिकपरत्वाल्लोपः स्यादित्येव किं नापादितम् ? अत आह—**लुप्तत्वादिति** ॥ **इत्यादावेव त्विति** । इत्यादावपि त्वित्यर्थः ॥

( ६०८३ प्रतिषेधानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

**॥*॥ धात्वन्तस्य चार्थवद्ग्रहणात् ॥*॥**

**( भाष्यम् ) अर्थवतो विशब्दस्य ग्रहणम्, न धात्वन्तोऽर्थवान् ॥**

( प्रदीपः ) **अर्थवत इति** । क्विबादयः 'कर्तरि कृत्' इति प्रतिज्ञापितेनार्थेनार्थवन्तः ॥

( उद्योतः ) ननु क्विबादीनामपि लोकेऽप्रयोगेणानर्थकत्वात् तेषामपि लोपो न स्यादत आह—**क्विबादय इति** । शास्त्रीयं काल्पनिकमर्थवत्त्वं तेषामप्यस्त्येवेति भावः ॥

( ६०८४ प्रकारान्तरबोधकवार्तिकम् ॥ ३ ॥ )

**॥*॥ वस्य वाऽनुनासिकत्वात्सिद्धम् ॥*॥**

**( भाष्यम् ) अथवा वकारस्यैवेदमनुनासिकस्य ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ॥**

( प्रदीपः ) **वस्येति** । अनुनासिकवकारस्येदमनुकरणं वेरिति ॥[5]

( उद्योतः ) **अनुनासिकेति** । क्विबादिषु चानुनासिको वकारः प्रतिज्ञात इत्यर्थः ॥

( १०७४ विधिसूत्रम् ॥ ६ । १ । ३ आ. ३९ )

## २५०५ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६ । १ । ६८ ॥

( वार्तिकावतरणभाष्यम् )

**यदि पुनरयमपृक्तलोपः संयोगान्तलोपो विज्ञायेत ।**

**किं कृतं भवति ?**

**द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं न कर्तव्यं भवति ॥**

( प्रदीपः ) **द्विहलपृक्तग्रहणमिति** । 'ङ्यापोर्दीर्घात्सोः' इत्येव वक्तव्यमित्यर्थः ॥[6]

( उद्योतः ) **ङ्यापोर्दीर्घात्सोरिति** । ङ्याबन्तात्तिस्योरनभिधानादिति भावः । अनभिधाने चेदमेव भाष्यं मानम् । 'प्रत्यया-प्रत्यययोः–' इति न्यायेनानुनासिकोकारविशिष्टपाठेन च सोः प्रत्ययस्यैव ग्रहणमिति सुरासुतमाचष्टे–सुराः सुरासावित्यादौ न लोपापत्तिरिति न तद्व्यावृत्तयेऽपृक्तग्रहणमिति बोध्यम् ॥

( ६०८५ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावो यथा पचन्निति ॥ * ॥**

**( भाष्यम् ) हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावः—राजा, तक्षा । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न प्राप्नोति ।**

**यथा–पचन्–इति । तद्यथा—पचन्, यजन्–इत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न भवति ॥**

( प्रदीपः ) **राजेति** । नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वान्नकारान्तं पदं न भवति, किं तर्हि ? सकारान्तम् । यदा तु 'स्वादिष्वसर्वनामस्थाने' 'अयचि' इति, अयचि सर्वनामस्थाने पूर्वं पदमिति व्याख्यानं तदा सावपि परतः पदसंज्ञायां सत्यां नलोपः सिद्ध्यति । कृते तु नलोपे संयोगान्तत्वाभावात् सुलोपो न प्राप्नोतीत्युभयथा दोषप्रसङ्गः ॥

**पचन्निति** । ननु चात्र तकारलोप एव न प्राप्नोति, सुलोपस्यासिद्धत्वात् । नैष दोषः । पूर्वत्र परस्यासिद्धत्वमुच्यते, ततश्च संयोगान्तलोपे संयोगान्तलोपस्य सिद्धत्वाद्भवत्येव

---

१ इविदिवीति । अत्रेकारलोपात्प्रागेव वेरपृक्तस्येति प्राप्नुयात् ॥

२ विनो नकारस्येति । दर्विरित्यत्र, अत्र हि विनो नकारस्य लोपादनुनासिकः परो यस्मादित्यर्थे लोपाप्राप्तिरिति–इष्टसिद्धिः, घृतस्पृगित्य तु इष्टोऽपि लोपो न प्राप्नुयादिति भावः ॥

३ इष्टे चेति । पञ्चमी बहुव्रीह्याश्रयणे हि इष्टे–घृतस्पृगित्यत्र न स्यात्, स्याच्चानिष्टे–प्रियदर्विमन्य इत्यादौ ॥

४ विभक्तिपरकत्वाभावमुपपादयति—प्रिया दर्वीरिति । अत्र हि नपुंसकत्वाद्विभक्तेर्लुक् ॥

५ वेरितीति । वेरपृक्तस्येति सूत्रे वेरित्येतदनुनासिकवकारानुकरणमिति भावः ॥

६ 'ङ्यापोर्दीर्घात्सोः' इति न्यासेऽतिव्याप्तिं निवारयति—प्रत्ययाप्रत्यययोरित्यादिना ॥

तलोपः। तस्य त्वसिद्धत्वान्नलोपाभावः। आद्यन्यासे वा रूपे सिद्धे दृष्टान्त उपात्तः ॥

( उद्द्योतः ) कृते तु नलोप इति । संयोगान्तलोपस्यासिद्धत्वादिति भावः ॥ पूर्वत्र परस्येति । पूर्वपराश्रितत्वादस्यासिद्धत्वस्य, त्रिपाद्यां लुङ्न्यायोऽत्र नास्तीत्यर्थः ॥ प्रौढिवादेनाह—आद्यन्यासे वेति । 'हल्ङ्याप्–' इति न्यास इत्यर्थः ॥

( वार्तिकोक्तप्रयोजनान्यथासिद्धिबोधकभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—सिद्धः संयोगान्तलोपो नलोपे-इति, यदयं 'न ङिसंबुद्ध्योः' ( ८।२।८ ) इति संबुद्धौ प्रतिषेधं शास्ति ।**

**इहापि तर्हि प्राप्नोति—पचन्, यजन् ।**

**तुल्यजातीयस्य ज्ञापकं भवति ।**

**कश्च तुल्यजातीयः ?**

**यः संबुद्धावनन्तरः ॥**

( प्रदीपः ) **यः संबुद्धावनन्तर इति** । पचन्नित्यत्र नकारस्तकारेण व्यवहितः ॥

(उद्द्योतः) भाष्ये—**संयोगान्तलोपो नलोप इति** । न च 'राजैधते' 'चक्रयत्र' 'राजा च्छत्रम्' इत्यादौ वृद्धियणुतुगादिकं न स्यात्, संयोगान्तलोपस्यासिद्धत्वादिति वाच्यम्। नलोपविषये सामान्यतः सिद्धत्वज्ञापनेनादोषात्। 'अचाका[1] राज्यम्' इत्यादीनां त्वनभिधानमेव ॥ **व्यवहित इति** । 'यः संबुद्धावनन्तरः' इति भाष्येण विभक्ति[2]संयोगान्तलोप उपलक्ष्यत इति बोध्यम् । 'संबुद्धौ वा नपुंसकानां नलोपो वाच्यः' इति सत्त्वेन हे ब्रह्मन्निति नपुंसके स्वभोर्लुकि नलोपनिषेधार्थं तद[3]वश्यकमिति न वाच्यम् । तच्च[4] विभाषार्थमावश्यकम् ॥

( ६०८६ सूत्रप्रयोजनवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात् ॥ * ॥

**( भाष्यम् ) वस्वादिषु दत्वं च न सिध्यति । उखास्रत्, पर्णध्वत् ।**

**किं कारणम् ?**

**संयोगादिलोपबलीयस्त्वात् । संयोगान्तलोपात्संयोगादिलोपो बलीयानिति ॥**

( प्रदीपः ) **उखास्रदिति** । 'उखास्रस् स्' इति स्थिते संयोगान्तलोपमपवादत्वात् बाधित्वा संयोगादिलोपः प्राप्नोति । परोऽपि ह्यपवादो वचनप्रामाण्यादुत्सर्गे कर्तव्ये नासिद्धो भवति । संयोगादिलोपे च कृते संयोगाभावात् संयोगान्तलोपाभावः । ततो विभक्तिसकारः स्रंसतेरवयवो न भवतीति दत्वं न प्राप्नोति ॥

( उद्द्योतः ) वचनप्रामाण्यादिति । तथाच तत्र[5] वार्तिकम्–अपवादो वचनप्रामाण्यादिति ॥ **संयोगादिलोप इति** । संयोगान्तलोपे हि काष्ठ[6]तगिति स्यादिति भावः ॥

(६०८७ संयोगादिलोपबलीयस्त्वबोधकवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ यथा कूटतडिति ॥ * ॥

**(भाष्यम्) तद्यथा—कूटतट्, काष्ठतट्–इत्यत्र संयोगान्तलोपात्संयोगादिलोपो बलीयान् भवति ॥**

**ननु च दत्वे कृते न भविष्यति ।**

**असिद्धं दत्वम्, तस्यासिद्धत्वात् प्राप्नोति ।**

**सिद्धकाण्डे पठितं वस्वादिषु दत्वं सौ दीर्घत्व इति । तत्र सौ दीर्घत्वग्रहणं न करिष्यते । वस्वादिषु दत्वं सिद्धमित्येव ॥**

**एवमप्यपदान्तत्वान्न प्राप्नोति ।**

**अथ सावपि पदं भवति ।**

**राजा, तक्षा–नलोपे कृते विभक्तेः श्रवणं प्राप्नोति ।**

**सैषोभयतस्पाशा रज्जुर्भवति ॥**

( प्रदीपः ) **काष्ठतड् इति** । काष्ठं तक्षतीति, क्विप् । संयोगादिलोपे कृते षस्य जश्त्वं डकारः ॥

**दत्वे कृते इति** । सावपि पदमिति दत्वभावः ॥

**उभयतस्पाशेति** । 'स्पश बाधनस्पर्शनयोः' इति भौवादिकस्य, 'स्पश ग्रहणसंश्लेषणयोः' इति चौरादिकस्य वा रूपमेतत् ॥

( उद्द्योतः ) भाष्ये—**नलोपे कृते विभक्तेः श्रवणं प्राप्नोतीति** । एवं च 'न ङिसंबुद्ध्योः' इति सूत्रस्य चरितार्थत्वाज्ज्ञापकत्वासंभव इति भावः । न च 'ङिसंबुद्ध्योः' इति षष्ठी, अत एव ङौ नलोपनिषेधश्चरितार्थः । अन्यथा ङेर्लुका लुप्ततया 'न लुमता–' इति निषेधात् ङिपरत्वाभावेन तद्वैयर्थ्यं स्यात् । एवं च संबुद्धिग्रहणं ज्ञापकमेव–विभक्तिसंयोगान्तलोपस्यासिद्धत्वाभावे । न हि प्रथमसंयोगान्तलोपं विना संबुद्ध्यन्तं प्रातिपदिकं लभ्यत इति वाच्यम् । 'न लुमता–' इति निषेधस्यानित्यत्वेन सप्तम्यामपि दोषाभावात्, षष्ठीत्वं प्रकल्प्य ज्ञापकसिद्धवचनकल्पनापेक्षया हल्ग्रहणस्यैव लघुत्वाच्च । किंच सप्तमीपक्ष एव युक्तः । एवं च 'न लुमता–' इति निषेधस्यानित्यत्वेनैव नपुंसकनान्ते रूपद्वयस्य सिद्धतया 'वा नपुंसकानाम्–' स्यात्, अनन्तरत्वाभावात् ॥

---

१ अचाका राज्यमिति । कृधातोर्यङ्लुकि लङि अचाकर् त् इति स्थिते संयोगान्तलोपे तस्यासिद्धत्वात् 'रोरि' 'ढ्रलोपे–' इति न प्राप्नुयात्, तथा च 'अचाका राज्यम्' इति न सिद्ध्येदिति भावः । अत्र 'अचीका राज्यम्' इति झ. पाठः । 'अचका राज्यम्' इति ख. पाठः ॥ अचका इति चकास्धातोर्लङि सिध्यति, अचीका इति तु लेखकप्रमादात् ॥

२ विभक्तीति । विभक्तेर्यः संयोगान्तलोपः स एवोपलक्ष्यते । पचन् त् स् इति स्थिते सकारस्य यः संयोगान्तलोपः स सिद्धः स्यात् तकारलोपस्तु न स्यात्, अनन्तरत्वाभावात् ॥

३ तदावश्यकं—न ङिसम्बुद्ध्योरित्येतदत्रावश्यकमिति न व्यर्थम् ॥

४ तच्चेति । सम्बुद्धौ वा नपुंसकानामित्येतन्न नलोपविधायकं किन्तु विभाषाविधायकमेवेति भावः ॥

५ तथा च तत्रेति । पूर्वत्रासिद्धमिति सूत्रे वार्तिकमेतत् । 'अनवकाशावेतौ विधी तौ वचनप्रामाण्याद्भविष्यतः' इति हि वार्तिकव्याख्याने भगवतोक्तम् ॥

६ काष्ठतगितीति । 'काष्ठतट्' इति न स्यादिति भावः ॥

इति न वाचनिकम् । एवं च नपुंसके निषेधाय संबुद्धिग्रहणस्याव-श्यकत्वेन ज्ञापकं दुरुपपादमित्याशयात् । एवं 'सुपीः' 'सुपिसौ' इत्यादौ संयोगादिलोपे 'वोंरुपधाया–' इति रेफान्तधातोरुपधाया विधीयमानो दीर्घो न स्यात् । 'तिप्यनस्तेः', 'सिपि धातो रुर्वा' इत्यनयोः प्रकृतिप्रत्ययसंबन्धिवर्णसंयोगमाश्रित्य पदान्ते संयोगादि-लोपाप्राप्तिज्ञापकत्वाश्रयणे तु विपरीतं गौरवम् ॥ स्पश बाधनेति । उभयतः स्पाशः–संश्लेषः–बाधकत्वं, स्पर्शो वा यस्याः सा रज्जुः । यथा काचिद्रज्जुः पूर्वापरकोटी स्पृशति तथाऽयं दोषः सौ पदत्वेऽप-दत्वे च न निवर्तत इत्यर्थः ॥

( ६०८८ एकदेश्युपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ रात्तलोपो नियमवचनात् ॥ * ॥

( भाष्यम् ) रात्तस्य लोपो वक्तव्यः[1] । अबिभर्भ-वान्, अजागर्भवान् ।

किं पुनः कारणं न सिध्यति ?

नियमवचनात् । 'रात्सस्य' ( ८।२।२४ ) इत्येत-स्मान्नियमान्न प्राप्नोति ॥

नैष दोषः । 'रात्सस्य' इत्यत्र तकारोऽपि निर्दि-श्यते ।

यद्येवम्, कीर्तयतेरप्रत्ययः–कीः–इति प्राप्नोति, 'कीर्त्' इति चेष्यते ।

यथा लक्षणमप्रयुक्ते ॥

( प्रदीपः ) रात्तस्येति । रेफात्परस्य तकारस्येत्यर्थः ॥ तकारोऽपीति । 'रात्सस्य' इति द्वितकारको निर्देशः ॥ यथालक्षणमिति । लोके प्रयुक्तानामिदमन्वाख्यानमिति अप्रयुक्ते लक्षणानामप्रवृत्तिलक्षणं लक्षणमित्यर्थः । तत्रास्य प्रयोगाभावाच्च दोषो न प्रयोजनमित्युक्तं भवति ॥

( उद्द्योतः ) 'रात्तस्य' इति भाष्ये—तस्य–इति न तच्छ-ब्दस्य रूपमित्याह—रेफात्परस्य तकारस्येति ॥ अप्रवृत्तिलक्षणं लक्षणमिति । अप्रवृत्तिस्वभावमित्यर्थः । अप्रयुक्ते लक्षणाभावस्य योग्यत्वेत्यक्षरार्थः ॥

( ६०८९ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ रोरुत्वं च ॥ * ॥

( भाष्यम् ) रोश्चोत्वं वक्तव्यम् । अभिनोऽत्र, अच्छिनोऽत्र । संयोगान्तलोपस्यासिद्धत्वात् 'अतो-ऽति' इत्युत्वं न प्राप्नोति ॥

(प्रदीपः) अभिनोऽत्रेति । भिदेर्लङि सिपि श्नमि संयोगा-न्तलोपः । स[2] च परत्वाद्रुत्वस्य तत्र सिद्ध इति 'दश्च' इति रुत्वम् । उत्वे तु संयोगान्तलोपस्यासिद्धत्वाद्व्यवधानादुत्वं न प्राप्नोति ॥

( ६०९० उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ न वा संयोगान्तलोपस्योत्वे सिद्धत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् । किं कारणम् । सं-योगान्तलोपस्योत्त्वे सिद्धत्वात् । संयोगान्तलोप उत्त्वे सिद्धो भवति ॥

( प्रदीपः ) उत्वे सिद्ध इति । 'संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः' इत्यवश्यं वक्तव्यमित्यर्थः ॥

( उद्द्योतः ) उत्वे सिद्ध इति । अत्र 'कृते कर्तव्ये च' इति शेषः । तेन पूर्वरूपसिद्धिः ॥ इत्यवश्यं वक्तव्यमिति । हरयोऽस्य सन्तीति मतुपि 'छन्दसीरः' इति वत्वे हरिवच्छब्दात्सौ तल्लोपे पुन-स्तकारलोपे[3] 'मतुवसोः–' इति रुत्वे संयोगान्तलोपस्यासिद्धत्वादुत्वा-प्राप्तौ तस्य सिद्धत्वमवश्यं वक्तव्यमित्यर्थः ।

( ६०९१ आनर्थक्ये दृष्टान्तवार्तिकम् ॥ ७ ॥ )

॥ * ॥ यथा हरिवो मेदिनमिति ॥ * ॥

( भाष्यम् ) तद्यथा—हरिवो मेदिनं त्वा–इत्यत्र संयोगान्तलोप उत्वे सिद्धो भवति ॥

( सूत्रप्रयोजने सिद्धान्तभाष्यम् )

स एव तर्हि दोषः–सैषोभयतस्पाशेति ।

तस्मादशक्यो हलपृक्तलोपः संयोगान्तलोपो विज्ञातुम् । न चेद्विज्ञायते, द्विहलपृक्तग्रहणं ति-स्योश्च ग्रहणं कर्तव्यमेव ॥

( उद्द्योतः ) भाष्ये—तिस्योश्च ग्रहणमिति । 'अभिनोऽत्र' इत्यादावुत्वार्थमिति भावः । 'हरिवो मेदिनं त्वा' इति छान्दसवर्णवि-कारेण सिद्धमिति सिद्धत्ववचनारंभापेक्ष्यैतदेव ज्याय इति तात्पर्यम् ॥

---

( १०७५ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४० )

२५०६ एङ्ह्रस्वात्संबुद्धेः ॥ ६।१।६९ ॥

( ६०९२ एकदेश्युपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ संबुद्धिलोपे[4] ङतरादिभ्यः प्रतिषेधः ॥ * ॥

( भाष्यम् ) संबुद्धिलोपे ङतरादिभ्यः प्रतिषेधो वक्तव्यः । हे कतरत्, हे कतमत् ।

किमुच्यते—ङतरादिभ्यः प्रतिषेधो वक्तव्य इति यदाऽपृक्तस्येत्यनुवर्तते ?

---

१ 'रात्तलोपो वक्तव्यः' इति क. च. छ. पाठः ॥

२ स च परत्वादिति । संयोगान्तलोपापेक्षया रुत्वस्परमिति रुत्वे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाभावाद्रुत्वं सिध्यति । ततश्चोत्वे कर्तव्ये संयोगान्तलो-पस्यासिद्धत्वात्सिपः सकारेण व्यवधानादुत्वं न स्यादिति 'अभिनोऽत्र' इत्या-दीनि न सिध्यन्तीति भावः ॥

३ पुनस्तकारलोप इति । हरिवच्छब्दात्सौ 'उगिदचाम्–' इति नुमि सोर्लोपे पुनः संयोगान्तस्य तकारस्य लोपे नकारस्य रुत्वमित्यर्थः ॥

४ सम्बुद्धिलोप इति । अस्मिन् सूत्रे हल्ग्रहणमनुवर्तते । तेन एङ्ह्रस्वा-त्परो यः सम्बुद्धेर्हल् तस्य लोप इत्यर्थः सम्पद्यते । तथाच हे कतरदित्यादाव-न्त्यतकारस्य लोपः प्राप्नोति स प्रतिषेध्य इति वार्तिकार्थः ॥

( प्रदीपः ) हे कतरदिति । कतर स् इति स्थिते संबुद्धिलोपश्च प्राप्नोति, अद्भावश्च । तत्र शब्दान्तरप्राप्त्या संबुद्धिलोपोऽनित्यः । अद्भावस्तु कृते संबुद्धिलोपे न प्राप्नोतीत्यनित्यः । उभयोरनित्ययोः परत्वादद्भावे कृते पुनः प्रसङ्गविज्ञानात् संबुद्धिलोपप्रसङ्गः ॥

( उद्योतः ) ननु परत्वादद्भावः संबुद्धिलोपस्य बाधकः स्यादत आह—कतर[1] सिति ॥ अद्भावे कृव इति । ततः परत्वा-त्पररूपे[2]ऽपि कृते वक्ष्यमाणरीत्या 'ह्रस्वान्तात्परस्य संबुद्धिहलः' इत्य-र्थाल्लोपप्राप्तिर्बोध्या ॥

( ६०९३ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

**॥*॥ अपृक्ताधिकारस्य निवृत्त[3]त्वात् ॥*॥**

( भाष्यम् ) निवृत्तोऽपृक्ताधिकारः ॥

किं डतरादिभ्यः प्रतिषेधं वक्ष्यामीत्यतोऽपृक्ताधिकारो निवर्तते ?

नेत्याह ॥

( ६०९४ पूर्वोक्तार्थसमर्थकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ तच्चा[4]मर्थम् ॥ * ॥**

( भाष्यम् ) स चावश्यमपृक्ताधिकारो निवर्त्यः ।

किमर्थम् ?

अमर्थम् । अमो लोपो यथा स्यात् । हे कुण्ड, हे पीठ ॥

( आक्षेपभाष्यम् )

निवृत्तेऽपि वै अपृक्ताधिकारे अमो लोपो न प्राप्नोति ।

किं कारणम् ?

न हि लोपः सर्वापहारी ।

मा भूत्सर्वस्य लोपः । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य लोपे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात्-हे कुण्ड, हे पीठेति ॥

यद्येतल्लभ्येत कृतं स्यात् । तत्तु न लभ्यम् ।

किं कारणम् ?

अत्र हि 'तस्मादित्युत्तरस्य' 'आदेः परस्य' (१।१।६७,५४) इत्यकारस्य लोपः प्राप्नोति । अकारलोपे च सति मकारे 'अतो दीर्घो यञि' 'सुपि च' (७।३।१०१;१०२) इति दीर्घत्वे-हे कुण्डाम्, हे पीठाम्-इत्येतद्रूपं प्रसज्येत ॥

( प्रदीपः ) अकारलोप इति । अकारलोपस्यापरनिमित्तत्वात्, दीर्घविधौ प्रतिषेधाद्वा स्थानिवत्त्वाभावः ॥

( उद्योतः ) नन्वल्लोपस्य स्थानिवत्त्वाध[5]नैः परत्वाभावेन कथं दीर्घः ? इत्यत आह—अकारलोपस्येति । न च संनिपातपरिभाषया दीर्घाप्राप्तिः, तस्या अनित्यत्वात्—इत्यभि[6]मानः ॥

( सिद्धान्तभाष्यम् )

एवं तर्हि हलो लोपः संबुद्धिलोपः ।

तद्धल्ग्रहणं कर्तव्यम् ।

न कर्तव्यम् । प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'(६८) इति ।

तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।

नैष दोषः । एङ्ह्रस्वादित्येषा पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति ॥

एवमपि प्रथमयोः पूर्वसवर्णदीर्घत्वे कृते—हे कुण्डा, हे पीठा-इत्येतद्रूपं प्रसज्येत ।

अमि पूर्वत्वमत्र बाधकं भविष्यति ।

अमीत्युच्यते, न चात्रामं पश्यामः ।

एकदेशविकृतमनन्यवद्भवतीति ॥

अथ वेदमिह संप्रधार्यम्—संबुद्धिलोपः क्रियताम्, एकादेश इति; किमत्र कर्तव्यम् ?

परत्वादेकादेशः ।

एवमप्येकादेशे कृते व्यपवर्गाभावात्संबुद्धिलोपो न प्राप्नोति ।

अन्तादिवद्भावेन व्यपवर्गो भविष्यति ।

उभयत आश्रयणे नान्तादिवत् ।

नोभयत आश्रयः करिष्यते ।

कथम् ?

नैवं विज्ञायते—ह्रस्वादुत्तरस्याः संबुद्धेर्लोपो भवतीति ।

कथं तर्हि ?

ह्रस्वादुत्तरस्य हलो लोपो भवतीति, स चेत्संबुद्धेरिति ॥

डतरादिभ्य[7]ः स तर्हि प्रतिषेधो वक्तव्यः ।

न वक्तव्यः ॥

---

१ ग. ज. पुस्तकयोः 'कतसिंति' इति प्रतीकं दृश्यते ॥

२ पररूपेऽपीति । वस्तुतोऽद्भावस्य डित्वाट्टिलोपे पररूपाभावस्तथापि अग्रे वक्ष्यमाणं डित्वमनाश्रित्येदमुक्तम् ॥

३ निवृत्तत्वादिति । सम्बुद्धिलोपे डतरादिभ्यः प्रतिषेध इत्यस्य हेतुवाक्यमिदम् । अतः पञ्चमी उपपन्ना ॥

४ तच्चामर्थमिति । तत्—अपृक्ताधिकारस्य निवर्तनममर्थं—अमो लोपो यथा स्यादित्येतदर्थमावश्यकमित्यर्थः ॥

५ यत्नः परत्वाभावेनेति । यत्नपरकत्वाभावेनेत्यर्थः ॥

६ अभिमान इति । तद्बीजं तु 'इतोऽन्यत्र प्रवृत्तिरेव दोषाः स्वत्रपि साकल्येन परिगणिताः' इति भाष्यम् ॥

७ डतरादिभ्य इति । हे कुण्ड—हे पीठ—इत्यादिदोषवारणेऽपि हे कतरदित्यत्र दोषस्तदवस्थ एवेति पूर्वोक्तो डतरादिभ्यः प्रतिषेधो वक्तव्य इत्यर्थः ॥

( प्रदीपः ) **एवमपीति** । एकदेशविकृतस्यानन्यत्वादिति भावः ॥

**न चात्राममिति** । मकारस्य लुप्तत्वात् ॥

**अथ वेति** । सत्यामेव हल्ग्रहणानुवृत्तावयं विचारः ॥

**व्यपवर्गाभावादिति** । 'ह्रस्वात्संबुद्धेः' इत्युच्यमाने कृते ह्येकादेशे नास्ति ह्रस्वसंबुद्ध्योः पौर्वापर्यमित्यर्थः ॥

**ह्रस्वादुत्तरस्येति** । पूर्वं प्रत्यन्तवद्भावात् ह्रस्वान्तमेतद्भवति । संबुद्ध्याक्षिप्तं हि प्रकृतिरूपमेङ्ह्रस्वेन विशेष्यत इति तदन्तविधिः ॥

( उद्योतः ) ननु मलोपेऽकारमात्रस्य विभक्तित्वाभावोऽत आह—**एकदेशेति** । स्थानिवद्भावेनेत्यर्थः[1] ॥

भाष्ये—**परत्वादेकादेश इति** । यद्यपि एकादेशे कृते संबुद्धिलोपस्याप्राप्त्या तस्यानित्यत्वमित्येकादेशो नित्यस्तथापि वक्ष्यमाणार्थे[2]नोभयोरपि नित्यत्वात्परत्वादित्युक्तम् ॥

पूर्वं हल्ग्रहणानुवृत्त्या हे कुण्ड—इति रूपे साधिते तदनाश्रयेणेदं पक्षान्तरमिति भ्रमनिवृत्तये आह—**सत्यामेवेति** ॥

ननु 'नोभयत[3] आश्रयः करिष्यते' इति प्रतिज्ञयाऽन्यतराश्रयो लभ्यते, तस्माद्ध्रस्वादुत्तरस्येत्यस्य ह्रस्वान्तादुत्तरस्येत्यर्थः कार्यः, तत्रापि पूर्वत्वेन ह्रस्वान्ताङ्गात्परत्वं हल इत्यत आह—**पूर्वं प्रतीति** ॥ विशेष्यासंनिधानात्कथं तदन्तविधिः ? अत आह—**संबुध्याक्षिप्तं हीति** । **प्रकृतिरूपम्**—प्रत्ययग्रहणे यस्मात्स विहितस्तदादीत्युपस्थित्योपस्थितप्रातिपदिकरूपम् ॥

( ६०९५ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) **किमुक्तम् ?**

***सिद्धमनुनासिकोपधत्वात्* इति ॥**

**एवमपि दलोपः साधीयः[4] प्राप्नोति ।**

***दुक्करणाद्वा* । अथवा दुक्डतरादीनामिति[5] वक्ष्यामि ॥**

***डित्करणाद्वा* । अथवा डिदच्छब्दः करिष्यते । स तर्हि डकारः कर्तव्यः ।**

**क्रियते न्यास एव, द्विडकारको निर्देशः—अद्ड्डतरादिभ्य इति ॥**

**एवमपि[6] लोपः प्राप्नोति ।**

**विहितविशेषणं ह्रस्वग्रहणम् । यस्माद्ध्रस्वात्संबुद्धिर्विहितेति ॥**

( प्रदीपः ) **उक्तं वेति** । वक्ष्यमाणपरिहारापेक्षो वाशब्दः ॥

**अनुनासिकोपधत्वादिति** । आदेशस्याकारोऽनुनासिक इत्संज्ञको लुप्त इति दकारोऽवशिष्यते । स च भेदाभावात्संबुद्ध्यवयवो न भवतीति न लुप्यत इति भावः ॥

**साधीय इति** । व्यपदेशिवद्भावात्[7], यथा–हे वृक्ष–इत्यादाविति भावः ॥

**दुक्करणाद्वेति** । दुकि कृते 'स्वमोर्नपुंसकात्' इति स्वमोर्लुक् क्रियते ॥

**एवमपीति** । अकारात्[8] ह्रस्वात्परत्वाद्दकारस्येति भावः ॥

**विहितविशेषणमिति** । प्रतिपादितत्वात्तदन्तविधेर्ह्रस्वान्तात्परस्य संबुद्धिसंबन्धिनो हलो लोपो भवतीति सूत्रार्थः। ततश्च सामर्थ्यात्प्रकृतिरूपावयवह्रस्वग्रहणात् यस्मात् ह्रस्वात्संबुद्धिर्विहिता तस्मादेव परस्य हलो लोप इत्यर्थोऽवतिष्ठते । तेन कतरदित्यत्र टिलोपे कृते प्रकृतेर्ह्रस्वान्तत्वाभावाद्दकारलोपाभावः ॥

( उद्योतः ) ननु पूर्वं कस्यचित्परिहारस्यानुक्तत्वात् 'उक्तं वा' इति वाशब्दोऽयुक्तोऽत आह—**वक्ष्यमाणेति** ॥

**अकारादिति** । विशेष्यासन्निधानात्तदन्ताग्रहणं मन्यते ॥

ननु ह्रस्वात्संबुद्धेर्विधानाभावेन **ह्रस्वाद्विहितेत्यसङ्गतमत आह—प्रतिपादितत्वादिति** ॥ **ह्रस्वान्तात्परस्येति** । ह्रस्वान्तात्प्रातिपदिकात्परस्येत्यर्थः ॥ 'यस्माद्ध्रस्वात्संबुद्धिर्विहितेति तु फलितार्थकथनम्, न तु शाब्दोऽर्थ इत्याह—**ततश्चेति** ॥

( ६०९६ एकदेशिनो विप्रतिषेधबोधकवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अपृक्तसंबुद्धिलोपाभ्यां लुक् ॥ * ॥

( भाष्यम् ) **अपृक्तसंबुद्धिलोपाभ्यां लुग्भवति विप्रतिषेधेन ।**

**अपृक्तलोपस्यावकाशः—गोमान्, यवमान् ।**

**लुकोऽवकाशः—त्रपु, जतु ।**

**इहोभयं प्राप्नोति—तत्[9] ब्राह्मणकुलम्, यत् ब्राह्मणकुलम् ।**

**संबुद्धिलोपस्यावकाशः—अग्ने, वायो ।**

**लुकः स एव[10] ।**

**इहोभयं प्राप्नोति—हे त्रपु, हे जतु ।**

**लुग्भवति विप्रतिषेधेन ।**

---

१ स्थानिवद्भावेनेत्यर्थ इति । एकदेशविकृतन्यायो हि भक्तपरिमाणे न प्रवर्तते, तथा लोकव्यवहाराभावात् । तथाच विभक्तित्वादिकमनेन न्यायेनानयितुमशक्यमिति स्थानिवद्भावकथनम् ॥

२ वक्ष्यमाणार्थेन । ह्रस्वान्तादुत्तरस्य हलो लोप इत्यर्थेन ॥

३ 'ह्रस्वादुत्तरस्य हलो लोपो भवति' इति भाष्यस्य ह्रस्वान्तादुत्तरस्येत्याद्यर्थकरणे हेतुमाह—ननु नोभयत इति ॥

४ साधीय इति । अदादेशस्यानुनासिकोपधत्वे तस्येत्संज्ञायां दकार एवावशिष्येत । तथाच ह्रस्वान्तादुत्तरस्य हलो लोप इत्यर्थकरणेन दलोपः साधीयान् प्राप्नोतीत्यर्थः ॥

५ डुक्डतरादीनामिति । एवं न्यासे डतरप्रत्ययान्तानां स्वमोः परतो डुगागमः क्रियते । तथा च कतरशब्दस्य डुकि परस्य सोर्लोपः स्यादित्याशयः ॥

६ एवमपीति । ह्रस्वान्तादुत्तरस्य हलो लोप इत्यर्थे हि अदड्न्यासे डित्वाट्टिलोपे च लोपो न प्राप्नोति, तथापि तदन्तविध्यभावेऽयं दोषः । तदन्तविधिमाश्रित्य च समाधानम्—यस्माद्ध्रस्वादित्यादि ॥

७ व्यपदेशिवद्भावादिति । अदादेशाकारस्यानुनासिकत्वादित्संज्ञायां लोपेऽवशिष्टस्य दकारमात्रस्य सम्बुद्धिसम्बन्धित्वं व्यपदेशिवद्भावेनेति भावः ॥

८ अकारादिति । अदड्डो डित्वाट्टिलोपेऽपि ह्रस्वाकारात्परत्वं दकारस्य नानुपपन्नमिति भावः ॥

९ तदिति । अत्र तत्–यत्–इत्येवोदाहरणम्, ब्राह्मणकुलमिति तु नपुंसकत्वप्रदर्शनार्थम् ॥

१० स एवेति । त्रपु–जतु–इत्याद्येवेत्यर्थः ॥

स तर्हि विप्रतिषेधो वक्तव्यः ।

न वक्तव्यः ॥

( प्रदीपः ) हे त्रप्विति । लुकि कृते प्रत्ययलक्षणप्रतिषेधात्संबुद्धिगुणाभावः । 'इकोऽचि विभक्तौ' इत्यत्र त्वज्ग्रहणस्य प्रयोजनं वक्ष्यते—'इह किंचित् त्रपो' इति, ततो गुणेन भाव्यम् ॥

न वक्तव्य इति । न व्याख्यातव्यः ॥

( उद्योतः ) ननु लोपेनैव सिद्धे किं लुका ? इत्यत आह—लुकीति ॥ गुणेन भाव्यमिति । एवञ्च भाष्यद्वयप्रामाण्याद्विकल्प इति भावः ॥

ननु 'विप्रतिषेधे परम्—'इति सिद्धत्वान्नायं विप्रतिषेधो वक्तव्यत्वाहोऽत आह—न व्याख्यातव्य इति ॥

( ६०९७ सिद्धान्तवार्तिकम् ॥ ६ ॥ )

॥ * ॥ न वा लोपलुकोर्लुगवधारणाद्यथाऽनडुह्यत इति ॥ * ॥

( भाष्यम् ) न वाऽर्थो विप्रतिषेधेन ।

किं कारणम् ?

लोपलुकोर्लुगवधारणात् । लोपलुकोर्हि लुगवधार्यते—*लुग्लोपयणयवायावेकादेशेभ्यः* ।

यथा—अनडुह्यत इति । तद्यथा—अनड्वानिवाचरति-अनुडुह्यत इत्यत्र लोपलुकोर्लुगवधार्यते । एवमिहापि ॥

( प्रदीपः ) कस्मादित्याह—न वेति । अन्तरङ्गानपि विधीन् बाधमानो लुक् बलवान्-इत्यतुल्यबलेन लोपेन स्पर्धा नार्हतीति विप्रतिषेधो नोपन्यसनीयः ॥ अनडुह्यत इति । सुलोपे सति प्रत्ययलक्षणेन नुमामौ स्याताम् । लुकि प्रत्ययलक्षणप्रतिषेधान्न भवतः ॥

( उद्योतः ) 'लुग्लोप–' इत्यादि विप्रतिषेधसूत्रशेषे वार्तिकम्, वस्तुतस्तदपि न कार्यमित्याह—अन्तरङ्गानपीति । तत्र हि लुक्शब्देन सर्वोऽपि गृह्यत इति भावः । अन्यथा तद्वचनकर्तव्यतापत्त्या गौरवं स्यात् ॥

( १०७५ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४१ )

## २५०७ शेश्छन्दसि बहुलम् ॥६।१।७०॥

( योगानुपयोगप्रख्यापनभाष्यम् )

अयं योगः शक्योऽवक्तुम् ।

कथम्—अग्ने त्री ते वाजिना त्री षधस्था, ता ता पिण्डानाम्—इति ?

पूर्वसवर्णेनाप्येतत्सिद्धम् ॥

न सिध्यति । नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति ॥

छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः—मधोर्गृह्णाति, मधोस्तृप्ता इवासते, इत्येवमर्थम् । तत्र पुंवद्भावेन नुमो निवृत्तिः । नुमि निवृत्ते पूर्वसवर्णेन सिद्धम् ॥

भवेत्सिद्धम्—अग्ने त्री ते वाजिना त्री षधस्था । इदं तु न सिध्यति—ता ता पिण्डानामिति ।

इदमपि सिद्धम् ।

कथम् ?

साप्तमिके पूर्वसवर्णे कृते पुनः षाष्ठिको भविष्यति ॥

एवमपि जसि गुणः प्राप्नोति ।

वक्ष्यत्येतत्—जसादिषु छन्दो वावचनं प्राङ् णौ चङ्युपधायाः ॥

( प्रदीपः ) नुमो निवृत्तिरिति । अप्रवृत्तिरेव निवृत्तिः ॥ ता ता पिण्डानामिति । 'त–इ' इति स्थिते 'नादिचि' इति पूर्वसवर्णदीर्घप्रतिषेधाद्गुणः प्राप्नोति ॥

साप्तमिक इति । 'सुपां सुलुक्—' इतीकारस्याकारे कृते षाष्ठिकः पूर्वसवर्णदीर्घः क्रियते ॥ जसि गुण इति । 'अग्ने त्री ते' इत्यत्रेति भावः ॥

( १०७७ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४२ )

## २५०८ ह्रस्वस्य पिति कृति तुक् ॥ ६ । १ । ७१ ॥

( तुगधिकरणम् )

( ६०९८ तुकः पूर्वान्तत्वे दोषवार्तिकम् ॥ १ ॥ )

॥ * ॥ तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥ * ॥

( भाष्यम् ) तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति । आराशस्त्रिच्छत्रम् । धाना-

---

१ न व्याख्यातव्य इति । विप्रतिषेधे परमिति सूत्रे वार्तिककृता 'लुक्लोपयणयवायावेकादेशेभ्यः' इत्युक्तम्, तत्प्रपञ्चभूतमेवेह 'अपृक्तसम्बुद्धिलोपाभ्यां लुक्' इति वार्तिकं भगवता कात्यायनेन तत्स्मरणार्थमुक्तम् । भाष्यकारश्चात्र वस्तुतस्तयोर्विप्रतिषधात् नैतदुदाहरणं 'लुक्लोपयण्–' इत्यादिवार्तिकस्येत्याह—न वक्तव्य इत्यनेन । तमाशयं दर्शयितुं तद्व्याख्यानं–न व्याख्यातव्य इति । लुक्लोपेत्याद्युदाहरणत्वेनास्य व्याख्यानं न करणीयमिति कैय्यटाशयः ॥

२ भाष्यद्वयेति । हे त्रपु, इह किञ्चित् त्रपो–इति भाष्यद्वयप्रामाण्या-दित्यर्थः ॥

३ सिद्धत्वादिति ॥ अपृक्तलोपापेक्षया लुकः परत्वस्य सिद्धत्वादित्यर्थः ॥

४ न वेति । अनेन हि अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्याश्रित्य विप्रतिषेधे परमिति सूत्रस्थं 'लुक्लोपयण्–' इति वार्तिकमपि न कर्तव्यमिति सूचयति ॥

५ गृह्यत इति । अन्तरङ्गानपि विधीनिति परिभाषायां लुक्शब्देन सर्वोऽपि लुक् गृह्यते न तु सुब्लुगेवेत्यत्र इदमेव भाष्यं मानमित्याशयः ॥

६ छ. पुस्तके '–पधाया इति' इत्येवं पाठो दृश्यते ॥

शष्कुलिच्छत्रम् । निष्कौशाम्बिच्छत्रम् । निर्वाराणसिच्छत्रम् ।

द्विगुस्वरः—पञ्चारत्निच्छत्रम्, दशारत्निच्छत्रम् ।

तुकि कृतेऽलन्त्यत्वादेते विधयो न प्राप्नुवन्ति ॥

( प्रदीपः ) पूर्वान्तकरणे प्रेक्षापूर्वकारित्वप्रदर्शनायात्र विचारः ॥

( उद्द्योतः ) ननु सूत्रकृता पूर्वान्तत्वकरणात् पक्षान्तरानुत्थानेन 'तुकि पूर्वान्ते' इत्ययुक्तमत आह—पूर्वान्तेति । [1]पराद्यभक्तपक्षयोर्वक्ष्यमाणरीत्या दुष्टत्वाद्विमृश्य पूर्वान्तः कृत इति बोधनाय विचार इत्यर्थः । उदाहरणेषु छे च दीर्घात्पदान्तात्— इति तुक् । वाक्यसंस्कारपक्षे ह्रस्वस्वराभ्यां तुको नित्यत्वं मन्यते ॥

( ६०९९ पूर्वान्तत्वे दोषाभावोपपादकवार्तिकम् ॥ २ ॥ )

॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) न वा एष दोषः ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणस्तुक्, अन्तरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

इह तर्हि—ग्रामणिपुत्रः, सेनानिपुत्रः, ह्रस्वत्वे कृते तुक् प्राप्नोति ॥

( प्रदीपः ) ग्रामणिपुत्र इति । अत्र तुगन्तरङ्गः, ह्रस्वो बहिरङ्गः । पूर्वत्र तुक् बहिरङ्गः, स्वरह्रस्वावन्तरङ्गौ ॥

( उद्द्योतः ) पूर्वस्माद्[3]विशेषेऽपि तुल्यन्यायत्वप्रतिपादनाय दर्शयति—अत्रेति । 'नाजानन्तर्ये—' इति न्यायस्तु नास्त्येवेति भावः ॥

( ६१०० दोषाभावोपपादकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ग्रामणिपुत्रादिषु चाप्राप्तिः ॥ * ॥

( भाष्यम् ) ग्रामणिपुत्रादिषु चाप्राप्तिः ।

किं कारणम् ?

बहि[4]रङ्गलक्षणत्वादेव ॥

अथवा [5]परादिः करिष्यते ।

( ६१०१ तुकः परादित्वे दोषवार्तिकम् ॥ ४ ॥ )

॥*॥ परादौ संयोगादेरित्यतिप्रसङ्गः ॥*॥

( भाष्यम् ) परादौ संयोगादेरित्यतिप्रसङ्गो भवति । अपच्छायात् । 'वाऽन्यस्य संयोगादेः' ( ६।४।६८ ) इत्येत्वम्प्रसज्येत ॥

( ६१०२ दोषवार्तिकम् ॥ ५ ॥ )

॥ * ॥ विलोपवचनं च ॥ * ॥

( भाष्यम् ) वेश्च लोपो वक्तव्यः । अग्निचित्, सोमसुत् । 'अपृक्तस्य' इति वेर्लोपो न प्राप्नोति ।

नैष दोषः । अपृक्तग्रहणं न करिष्यते ।

यदि न क्रियते, 'दर्विः-जागृविः' अत्रापि प्राप्नोति ।

अनुनासिकपरस्य विशब्दस्य ग्रहणम्, शुद्धपरश्चात्र विशब्दः ।

एवमपि सतुक्कस्य लोपः प्राप्नोति ।

निर्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यति ॥

( ६१०३ दोषवार्तिकम् ॥ ६ ॥ )

॥ * ॥ इट्प्रतिषेधश्च ॥ * ॥

( भाष्यम् ) इट्प्रतिषेधश्च वक्तव्यः । परीतत् । सतुक्कस्य वलादिलक्षण इट् प्रसज्येत ॥

एवं तर्ह्यभक्तः करिष्यते ॥

( प्रदीपः ) परीतदिति । तनोतेः क्विपि 'क्वौ च गमादीनाम्—' इत्यनुनासिकलोपः । तत्र तुटि परादौ क्रियमाण इट्प्रसङ्गः । 'नहिवृति—' इति दीर्घः ॥

( ६१०४ अभक्तत्वे दोषवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अभक्ते स्वरः ॥ * ॥

( भाष्यम् ) यद्यभक्तस्तर्हि स्वरभेदो भवति—[6]दधिच्छादयति, मधुच्छादयति 'तिङ्ङतिङः' (८।१।२८) इति निघातो न प्राप्नोति ।

ननु च तुगेवातिङ् ।

न तुकः परस्य निघातः प्राप्नोति ।

किं कारणम् ?

नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ।

नञ्युक्ते इवयुक्ते वाऽन्यस्मिन् तत्सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते । तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमेवानयति, नासौ लोष्टमानीय कृती भवति । एवमिहापि 'अतिङ्'इति प्रतिषेधादन्यस्मिंस्तिङ्सदृशे कार्यं विज्ञास्यते ।

किं चान्यदतिङ्—तिङ्सदृशम् ?

पदम् ॥

---

1 पराद्यभक्तपक्षयोरिति । तुकः परादित्वम्, अभक्तस्तुक्—इति पक्षयोः ।

2 'पुत्र इति ह्रस्वत्वे' इति छ. पाठः ।

3 पूर्वस्माद्विशेषेऽपीति । आराशस्त्रिच्छत्रमित्यादिपूर्वोदाहरणेषु छेचेत्यादिना तुक्, अत्र ह्रस्वस्य पितीत्यादिनेति विशेषेऽपीति भावः ॥

4 बहिरङ्गेति । ग्रामणिपुत्र इत्यत्र ह्रस्वानन्तरं तुकः प्राप्तिरनेन सूत्रेण । तत्र—अन्तरङ्गे तुकि कर्तव्ये जातस्य ह्रस्वस्यासिद्धत्वात्तुक् न भवति । आराशस्त्रिच्छत्रमित्यादावन्तरङ्गो ह्रस्वः । तत्र ह्रस्वे कर्तव्ये जातस्य तुकोऽसिद्धत्वात्स भवत्येवेति विशेषः ॥

5 परादिरिति । आराशस्त्रिच्छत्रमित्यादौ तुकः परादित्वेऽन्तरङ्गपरिभाषाश्रयणं विनाऽपि न दोषः । परादित्वेऽपि ग्रामणिपुत्र इत्यत्र तुटो वारणमन्तरङ्गपरिभाषयैव ॥

6 दधिच्छादयतीति । अस्याभक्तत्वे दधिपदात्तुका व्यवधानेनाव्यवहितं तिङन्तं नास्तीति निघातो न प्राप्नोति ॥

(१०७८ अधिकारसूत्रम् ॥ ६ । १ । ३ आ. ४३)

## २५०९ संहितायाम् ॥ ६ । १ । ७२ ॥

(प्रदीपः) परो यः सन्निकर्षो वर्णानाम्-वर्णशून्येन कालेनाव्यवधानं सा संहिता, ह्रादाविरामो वा । ह्रादशब्देन वर्णाभिव्यक्तिहेतवो नादा उच्यन्ते । तेनैकवर्णाभिव्यक्तिहेतुनादानन्तरमेव यदा नादान्तरं वर्णान्तराभिव्यक्तये उच्चार्यते तदा संहिता । सा च निरन्तरवर्णद्वयविषया । ततश्च 'अग्निचित्–अत्र' इत्यादावविकाराकारयोस्तवर्गीयेण विच्छेदात्संहिताभावाद्यणोऽप्रसङ्गान्निर्दिष्टग्रहणमानन्तर्यार्थं न कर्तव्यमित्याहुः ॥

(उद्योतः) सूत्रप्रयोजने ज्ञाते तत्प्रत्याख्यानं सुज्ञानं भवतीति आदौ सूत्रप्रयोजनं दर्शयति—**परो य इति** । **वर्णानाम्**–इति प्रत्यासत्तिलभ्यम् ॥ उत्कृष्टत्वापरपर्यायं परत्वमुपपादयति—**वर्णशून्येनेति** । तेनापीत्यर्थः ॥ **ततश्चेति** । निरन्तरवर्णद्वयविषयसंहिताया ग्रहणादित्यर्थः । **संहितायाम्**–इति विषयसप्तमी । तेनेगचोर्नैरन्तर्येणोच्चारणे एव यण्, न तु वर्णव्यवधाने, नापि तद्रहितकालव्यवधाने इति भावः । 'इत्याहुः'इत्यरुचिबीजं तु संहिताऽधिकारबहिर्भूतानां व्यवधानेऽप्रवृत्त्यर्थं निर्दिष्टग्रहणमावश्यकमिति **सूत्रमतमिति** ॥

( योगानर्थक्यबोधकभाष्यम् )

**अयं योगः शक्योऽवक्तुम् ।**
**कथम्?**
**अधिकरणं नाम त्रिःप्रकारम्–व्यापकम्, औपश्लेषिकम्, वैषयिकम्—इति ।**
**शब्दस्य च शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हत्यन्यदत उपश्लेषात् । 'इको यणचि' ( ६।१।७७ ) अचि उपश्लिष्टस्येति ।**
**तत्रान्तरेण संहिताग्रहणं संहितायामेव भविष्यति ॥**

(प्रदीपः) **त्रिप्रकारमिति** । आद्यास्त्रयो भेदाः,तद्भेदानान्त्वानन्त्यमित्याहुः॥ **व्यापकमिति** । यथा–दध्नि सर्पिः, तिलेषु तैलमिति ॥ **औपश्लेषिकमिति** । यथा–कटे तिष्ठति, मथुरायां वसतीति । सर्वावयवव्याप्त्यभावात्कटादेर्व्यापकत्वाभावः ॥ **वैषयिकमिति** । यथा–खे शकुनयः, गुरौ वसतीति ॥ **अन्यदत उपश्लेषादिति** । ननु च 'आर्धधातुके' इत्यादौ विषयसप्तमीपक्षस्याश्रितत्वात् कथमिह संबन्धान्तराभावः ? **उच्यते**—यदा सामान्यस्य प्राधान्यमाश्रीयते तदा तेन पौर्वापर्याभावाद्विषयभाव आश्रीयते । विशेषस्य तु प्राधान्य आश्रीयमाणे तेन पौर्वापर्यसंभवादुपश्लेषाश्रयणम् । तत्र 'इको यणचि' इत्यादौ विशेषः प्राधान्येनाश्रीयते, न तु सामान्यमिति न कश्चिद्दोषः । उपश्लेषे चाश्रिते निर्दिष्टग्रहणमपि न कर्तव्यम्, व्यवहितयोरुपश्लेषाभावादुपश्लेषनिमित्तकार्याप्रसङ्गात् । संहिताऽधिकारे च प्रत्याख्याते संहितासंज्ञाऽपि प्रयोजनाभावात् प्रत्याख्यातैव ॥

( उद्योतः ) **तद्भेदानां त्विति** । उपकारभेदादिति भावः ॥ **कटे तिष्ठतीति** । औपश्लेषिकशब्देन संयोगसमवायमूलको गौण आधारः सर्वोऽप्युच्यत इति तद्भावः । व्यापकाधार एव मुख्य आधार इति 'स्वरितेन–' 'साधकतम–' इति सूत्रभाष्ययोः स्पष्टम् । अत एव 'मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणम्' इति 'तत्र च दीयते–'इति सूत्रे भाष्ये स्पष्टम् । 'गङ्गायां घोषः' इत्यौपश्लेषिकमधिकरणम् । **उप**–समीपे **श्लेषः**–संबन्धस्तत्कृतमौपश्लेषिकम् । किंच **श्लेषस्य**–मुख्यस्य सर्वाधारव्याप्तिरूपस्य समीपं–यत् आधारीययत्किञ्चिदवयवव्याप्तिरूपं तत्कृतमौपश्लेषिकम्, यथा–कटे आस्त इति । गौणमुख्यसाधारण्येन **त्रेधा विभागो** भाष्ये । सर्वत्रेदं सप्तमीवाच्यमेवेति 'गङ्गायां घोषः' इत्यादौ न प्रकृतेर्नापि प्रत्ययस्य लक्षणेति बोध्यम् । **'खे शकुनयः'** इत्यादौ आकाशकल्पितदेशसंबन्धाद्वैषयिकत्वम् । **'गुरौ वसति'** इत्यत्र शिष्यस्य गुर्वधीनायां वृत्तौ वैषयिकमधिकरणत्वं बोध्यम् । संयोगसमवायसंबन्धेन य आधारस्तदतिरिक्तं सर्वं **वैषयिकमिति** तत्त्वम् ॥

(भाष्ये) **अचि उपश्लिष्टस्येति** । अच्समीपस्थस्येत्यर्थः । **यत्तु** अचि सति यण् भवतीत्यर्थं इति, तन्न; एवं हि यत्र क्वापि अच्सत्तामादाय यणापत्तेः । न च 'तस्मिन्–' इति परिभाषया निर्वाहः । यस्यां क्रियायां तस्यान्वयस्तत्क्रियाकर्तुर्विधेयतया तेन पौर्वापर्यासंभवात्, **पूर्वस्येति** षष्ठ्या अनन्वयाच्च, तस्यान्यत्रान्वयोऽन्यत्र तन्निरूपितपूर्वत्वान्वय इत्यस्य व्युत्पत्तिविरुद्धत्वाच्च । तस्मादुपश्लिष्टपदाध्याहारेण सप्तमीत्येव च युक्तम् । 'उपपदविभक्तेः–' इति न्यायेन 'यस्य च भावेन–' इत्यस्याप्राप्तेश्च । स्पष्टं चेदं 'तत्र च दीयते–' इति सूत्रे कैयटे । एतदेवाभिप्रेत्य 'श्नान्नलोपः'इत्यत्र वक्ष्यति—'नैषा परसप्तमी, किं तर्हि ? सत्सप्तमी' इति ॥

---

१ व्यापकाधार एवेति । एवश्च व्यापकशब्देन संयोगसमवायमूलको मुख्य आधारः सर्वोऽप्युच्यते, तदेव व्यापकमधिकरणम् । संयोगसमवायमूलको गौण आधारः सर्वोऽप्यौपश्लेषिकमधिकरणम् । तदतिरिक्तं सर्वमपि वैषयिकमधिकरणमिति विभागः ॥

२ 'तस्य'शब्दस्य पाठः ख. ग. झ. पुस्तकेषु न ॥

३ लक्षणेतीति । वैय्याकरणमते लाक्षणिकः शब्दो नास्तीति गङ्गायां घोष इत्यादौ लक्षणां विनाऽपि शक्त्यैव बोध इति भावः ॥

४ 'आकाशकलित–' इति ज. पाठः ॥

५ तस्य–अचीति सप्तम्यन्तपदस्य । अचि सति यण् भवतीत्यत्राचीति सप्तम्यन्तपदस्य भवनक्रियायामन्वयेन तत्क्रियाकर्तुर्यणो विधेयतया तेन सहाचीत्यस्य पौर्वापर्यासम्भवः । कथञ्चित्पौर्वापर्याश्रयणेऽपि अजव्यवहितपूर्वो यणित्यर्थः स्यात्तेन च पूर्वस्येति षष्ठ्या अनन्वय इति भावः ॥

६ तस्यान्यत्रेति । तस्य–अचीति सप्तम्यन्तपदस्य यण्पदेनान्वयः, पूर्वस्येति पदस्य च इक इति षष्ठ्यन्तेनान्वय इति तु व्युत्पत्तिविरुद्धमिति भावः । वस्तुतस्तु 'निर्दिष्टे' इत्यस्य कारकविभक्त्यधिकरणसप्तम्यन्तत्वेनाधिकरणसप्तम्यन्त एव तस्मिन्निति परिभाषाप्रवृत्तिरिति सत्सप्तम्यां नात्रास्याः प्रवृत्तिरिति तत्त्वम् । अत एव कर्तृकर्मणोः कृतीत्यत्र नैतत्परिभाषाप्रवृत्तिः, कृतीत्यस्य सत्सप्तमीत्वादिति श्नान्नलोपसूत्रोद्द्योते स्पष्टम् ॥

७ एतदेवाभिप्रेत्य—कारकसप्तम्यामेवास्याः परिभाषायाः प्रवृत्तिरित्यभिप्रेत्य ॥

आर्धधातुक इत्यादाविति । द्वितीयाध्यायस्थे इत्यर्थः ॥ यदा सामान्यस्येति । यत्रोपश्लेषासंभवः, यथा–सामान्यस्य शब्दार्थत्वे, तत्र विषयसप्तमी । तत्संभवे त्वौपश्लेषिक्येवेति भाष्याशय इति भावः ॥ विशेषस्य त्विति । व्यक्तेरित्यर्थः ॥ व्यवहितयोरिति । शुद्धकालव्यवाय एवोपश्लेषाभावे वर्णव्यवाये सुतरां तदभावः । अव्यवहितसामीप्यस्यैवोपश्लेषपदार्थत्वात्, तस्यैव सप्तमीनियामकत्वादिति तात्पर्यम् । अवग्रहे तु संप्रदाय एव शरणम् ॥

( १०७९ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४४ )

## २५११ आङ्माङोश्च ॥ ६ । १ । ७४ ॥

( वार्तिकावतरणभाष्यम् )

अथ किमर्थमाङ्माङोः सानुबन्धकयोर्निर्देशः ?

( ६१०५ अनुबन्धफलबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आङ्माङोः सानुबन्धकयोर्निर्देशो गतिकर्मप्रवचनीयप्रतिषेधसंप्रत्ययार्थः ॥ * ॥

**( भाष्यम् ) आङ्माङोः सानुबन्धकयोर्निर्देशः क्रियते—आङो गतिकर्मप्रवचनीयसंप्रत्ययार्थः, माङः प्रतिषेधसंप्रत्ययार्थः ।**

**इह मा भूत्—आ छायामानयति । प्रमा छन्दः ॥**

**( प्रदीपः ) आङ्माङोरिति ।** कर्मप्रवचनीयग्रहणमुपलक्षणार्थम् । तेनेषदर्थस्याप्याङो ग्रहणम्, ईषच्छाया–आच्छाया–इति । वाक्यस्मरणयोस्त्वाकारस्येह ग्रहणाभावाद्विकल्पो भवति—आच्छाया, आछायेति ॥

**( उद्द्योतः ) तेनेषदिति ।** 'आङीषदर्थे–'इति वार्तिकादिति भावः ॥ सानुबन्धकग्रहणव्यावर्त्यं दर्शयति—**वाक्येति** । 'आ छायाम्' इति भाष्योदाहरणे आकारेण स्मृतिः सूच्यते । तद्विषयनिर्देशश्छायेति । आ–स्मृतं, छायां–तत्साधनमानयतीति भाष्योदाहरणार्थः ॥ **विकल्प इति** । 'पदान्ताद्वा' इत्यनेन । (भाष्ये) प्रमा–इत्यत्र प्रपूर्वान्माङः 'आतश्चोपसर्गे' इत्यङ् । अत्र यद्यपि धातुर्ङित्, तथापि टावन्तो न ङिदिति भावः । एतेनाङिन्माशब्दो निषेधार्थोऽव्ययम्, तेन 'मास्तु' इत्यादिसिद्धिरिति नव्योक्तमपास्तम्, एतद्भाष्यविरोधात् ॥

( १०८० विधिसूत्रम् ॥ ६ । १ । ३ आ. ४५ )

## २५१२ दीर्घात् ॥ ६ । १ । ७५ ॥

( १०८१ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४६ )

## २५१३ पदान्ताद्वा ॥ ६ । १ । ७६ ॥

( ६१०६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि ॥ * ॥

**( भाष्यम् ) दीर्घात्पदान्ताद्वेत्यत्र विश्वजनादीनां छन्दस्युपसंख्यानं कर्तव्यम् । विश्वजनस्य छत्रम्, विश्वजनस्य च्छत्रम् । न छायां कुरवोऽपराम्, न च्छायां कुरवोऽपराम् ॥**

( १०८२ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४७ )

## २५१४ इको यणचि ॥ ६ । १ । ७७ ॥

( यणोऽधिकरणम् )

( पदकृत्यभाष्यम् )

**इग्ग्रहणं किमर्थम् ?**

**इह मा भूत्—अग्निचिदत्र, सोमसुदत्र ।**

**नैतदस्ति प्रयोजनम् । जश्त्वमत्र बाधकं भविष्यति ॥**

**( प्रदीपः ) इग्ग्रहणमिति** । वक्ष्यमाणोऽभिप्रायः ॥ **जश्त्वमत्रेति** । परत्वादिति भावः । उभयोरप्यनित्यत्वादस्ति विप्रतिषेधः । तत्र शब्दान्तरप्राप्त्या यणोऽनित्यत्वम्, जश्त्वस्य तु कृते यण्प्राप्त्या ॥

( प्रत्याक्षेपकश्लोकभाष्यम् )

### जश्त्वं न सिद्धं यणमत्र पश्य

**असिद्धमत्र जश्त्वं तस्यासिद्धत्वाद्यणादेशः प्राप्नोति ॥**

**( प्रदीपः ) जश्त्वमिति । 'पूर्वत्रासिद्धम्' इति जश्त्व**स्यासिद्धत्वात् सिद्धासिद्धयोर्विप्रतिषेधाभावाद्यणादेशमेवात्र निष्प्रतिद्वन्द्विनं प्राप्तं पश्य ॥

---

१ द्वितीयाध्यायस्थ इति । न तु षष्ठाध्यायस्थ इत्यर्थः । तत्र हि परसप्तम्याश्रयणम् ॥

२ सामान्यस्येति । जातेरित्यर्थः ।

३ शुद्धकालेति । यत्र केवलकालव्यवायेऽप्युपश्लेषाभावस्तत्र वर्णव्यवाये सुतरामुपश्लेषाभाव इत्यर्थः ॥

४ अवग्रहे त्विति । अत्र कालव्यवायेऽपि औपश्लेषिकसप्तमी सम्प्रदायाद्भवति ॥

५ 'आ छः । प्रमा छन्दः' इति क. । 'आ छाया–आच्छाया । प्रमा छन्दः–प्रमा च्छन्दः' इति छ. पाठः ॥

६ इत्यङिति । स्त्रीत्वादङन्ताट्टाबित्यपि बोध्यम् ॥

७ एतद्भाष्येति । माङः प्रतिषेधसंप्रत्ययार्थ इति भाष्यविरोधादिति भावः ॥

८ विश्वजनादीनामिति । छे चेति नित्यतुग्निवारणार्थं विकल्पोपसंख्यानमित्यर्थः ॥

( अतिव्याप्तिदर्शकश्लोकभाष्यम् )

**[1]यश्चापदान्तो हलचश्च पूर्वः ।**

यश्चापदान्तो हल् अचश्च पूर्वस्तस्य प्राप्नोति । पचतीति ॥

एवं तर्हि—

( प्रदीपः ) यश्चेति । पदान्तस्य जश्त्वविधानादपदान्तहलोऽचि यण् स्यादेवेत्यर्थः ॥

( अतिव्याप्तिवारकश्लोकभाष्यम् )

## दीर्घस्य यण्

दीर्घस्य यणादेशं वक्ष्यामि ।

तद्दीर्घग्रहणं कर्तव्यम् ।

न कर्तव्यम् । प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'दीर्घात्-पदान्ताद्वा' ( ७५;७६ ) इति ।

तद्वै पञ्चमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।

अचीत्येषा सप्तमी दीर्घादिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य'(१।१।६६) इति ॥

भवेत्सिद्धम्—कुमार्यत्र, ब्रह्मबन्ध्वर्थमिति ।

इदं तु न सिद्ध्यति—दध्यत्र, मध्वत्रेति ॥

( प्रदीपः ) अचीत्येषेति । अकृतार्था सप्तमी 'दीर्घात्' इति पञ्चम्याः पूर्वत्र पौर्वापर्यकल्पने कृतार्थायाः षष्ठ्याः प्रकल्पिकेति भावः । पूर्वत्र तु 'छे' इति सप्तम्याः 'छे च' इत्यत्र कृतार्थाया अपि 'दीर्घात्' इति पञ्चम्या 'शाच्छासाह्वा–' इत्या[2]देर्ज्ञापकात् षष्ठी न प्रकल्पिता ॥

( उद्द्योतः ) ननु 'दीर्घात्' इति पञ्चमी अचीति सप्तम्या एव षष्ठीं किं न कल्पयति ? इत्यत आह—अकृतार्थेत्यादि ॥ नन्वनेनैव न्यायेन दीर्घादिति पञ्चमी 'छे'इति सप्तम्याः षष्ठीं प्रकल्पयेदत आह—पूर्वत्र त्विति । किन्तु ज्ञापकात् 'दीर्घात्' इति पंचम्या एव षष्ठी कल्पितेति भावः ॥ शाच्छासेति । अन्यथा 'शाच्छ' इति स्यादिति भावः । वै[3]कल्पिकेष्वनुष्ठानपक्ष एव ज्यायानिति तात्पर्यम् ॥

( अतिव्याप्तिवारकश्लोकभाष्यम् )

## ह्रस्व इति [4]प्रवृत्तं

ह्रस्वग्रहणमपि प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'ह्रस्वस्य पिति कृति' ( ७१ ) इति ।

यदि तदनुवर्तते दीर्घात्प[5]दान्ताद्वा ह्रस्वस्य–इति ह्रस्वादपि पदान्ताद्विकल्पेन प्राप्नोति ॥

( प्रदीपः ) ह्रस्वादपीति । 'छे च' इत्यस्य तु अ[6]पदान्तो ह्रस्वोऽवकाशः—इच्छति, गच्छति–इति ॥

( उद्द्योतः ) ननु 'पदान्ताद्वा' इत्यत्रानुवृत्त्या ह्रस्वस्य विकल्पेन तुग्विधाने 'छे च' इति नित्यतुगनवकाशोऽत आह—छे चेत्यस्य त्विति ॥

( दोषवारकश्लोकभाष्यम् )

## संबन्धवृत्त्या

संबन्धमनुवर्तिष्यते—

'ह्रस्वस्य पिति कृति तुक्' ( ७१ ) ।

संहितायाम् ( ७२ ) ह्रस्वस्य पिति कृति तुक् ।

'छे च' ( ७३ ) ह्रस्वस्य पिति कृति तुक् ।

'आङ्माङोश्च' ( ७४ ) ह्रस्वस्य पिति कृति तुक् ।

'दीर्घात्पदान्ताद्वा' ( ७५-७६ ) ह्रस्वस्य पिति कृति तुक् ।

त[7]तः 'इको यणचि' ह्रस्वस्येति वर्तते, पिति कृति तुगिति निवृत्तम् ॥

इह तर्हि प्राप्नोति–चयनम्, चायकः, लवनम्, लावकः ।

[8]अयादयोऽत्र बाधका भविष्यन्ति ॥

इह तर्हि प्राप्नोति—खट्वेन्द्रः, मालेन्द्रः, खट्वैलका, मालैलका ।

( प्रदीपः ) संबन्धमिति । य[9]द्येवं 'छे च' इत्यत्रापि दोषः, पितिकृतीति संबद्धस्य ह्रस्वस्य छेन संबन्धाभावप्रसङ्गात् । नैष दोषः । 'छे च' इति समुच्चयस्य चशब्देन द्योतनाच्छे च पिति कृति च ह्रस्वस्य तुग् भवति । तदेवं ह्रस्वदीर्घयोर्यण्विधानात् प्लुतस्य प्रकृतिभावस्येष्टत्वान्नार्थ इग्ग्रहणेन हल्व्यावृत्त्यर्थेन ॥

चयनमिति । व्य[10]क्तौ पदार्थे प्रतिव्यक्ति लक्षणेन प्रवर्तितव्यमिति एचोऽपि यणादेशोऽयादयश्च पर्यायेण प्रवर्तेरन् ॥

[11]अयादयोऽत्रेति । द्रव्येऽपि पदार्थे उत्सर्गापवादभा[12]वः संदिग्धासंदिग्धत्वाश्रयोऽस्त्येव[13] ॥

---

१ यश्चेति । यदि पदान्ते जश्त्वं यणोऽपवादस्तर्ह्यपदान्ते पचतीत्यादौ यण् स्यादिति भाष्याशयः ॥

२ शाच्छेति निर्देशस्य ज्ञापकत्वमुपपादयति—अन्यथेति । यदि दीर्घात्परस्य छस्य तुक् स्यात्तदा 'शाच्चासा' इत्येवं निर्देशः स्यादिति भावः ॥

३ ननु पदान्ताद्वेत्यनेन विकल्पविधानान्नात्र तुगिति 'शाछा' इति निर्देशो नानुपपन्न इत्याशङ्कायामाह—वैकल्पिकेष्विति ॥

४ 'प्रकृतं' इति क. पाठः ॥

५ 'दीर्घात्पदान्तात् ह्रस्वादपि पदान्ताद्विक–' इति ट. पाठः ॥

६ इको यणचीति सूत्रे दीर्घादित्यनुवर्तमाने दध्यत्रेत्यादौ यण् न स्यादिति तद्वारणार्थमत्र ह्रस्वग्रहणमपि 'ह्रस्वस्य पिति–' इति सूत्रादनुवर्तत इत्युच्यते, तथा च मध्ये पदान्ताद्वेत्यत्रापि ह्रस्वपदानुवृत्तौ छे चेति पृथक्सूत्रस्य वैयर्थ्यं स्पष्टमेवेत्यत आह—अपदान्त इति ॥

७ 'ततः'शब्दो न क. ट. पुस्तकयोः ॥

८ 'आयादयोऽत्र' इति क. पाठः ॥

९ सम्बन्धानुवर्तने दोषमाक्षिपति—यद्येवमिति ॥

१० भाष्यकृदुक्तं चयनमित्यादौ दोषं पक्षविशेष इत्याह—व्यक्ताविति । जातिपक्षे नायं दोष इति भावः ॥

११ 'आयादयोऽत्रेति' इति ठ. पाठः ॥

१२ 'उत्सर्गापवादः संदिग्धत्वाश्रयः' इति क. पाठः ॥

१३ अस्त्येवेति । व्यक्तावपि पदार्थेऽपवादेनोत्सर्गो बाध्यत एवेति भावः ॥

( उद्योतः ) प्लुतस्य प्रकृतिभावस्येति । अप्लुतवद्भावे त्वप्लुत-शब्दस्य पर्युदासवृत्त्या ह्रस्वदीर्घपरत्वेन तत्कार्यातिदेशात् प्लुतस्या-सिद्धत्वाच्च न दोष इति भावः । यत्तु[1] तत्र पर्युदासे 'अग्नी इति' इत्यादौ प्रगृह्याश्रयं प्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावेन दीर्घादिकं स्यादिति, तन्न; अप्लुतवद्भावस्य शब्दतः 'इति'रूपपदसापे-क्षत्वेन तदपेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वादिति दिक् ॥

नन्वनवकाशैरयादिभिर्बाधात् कथमत्रापत्तिः ? इत्यत आह—व्यक्ताविति ॥ द्वयेऽपीति । अपवादस्तु[2] स्वविषयेऽसन्दिग्धत्वेन तात्पर्यवान्, उत्सर्गस्तु तदतिरिक्तविषयो वा तद्विषयोऽपि वेति सन्दिग्धोऽसंदिग्धेनापवादेन स्वविषयातिरिक्तविषयः कल्प्यते । एवं चापवादविषयव्यक्त्यतिरिक्तव्यक्तिविषयलक्षणानामेवोपप्लव इति भावः ॥

( अतिव्याप्तिवारकश्लोकभाष्यम् )

## गुणवृद्धिर्बाध्यम्[3] ॥

**गुणवृद्धी अत्र बाधिके भविष्यतः ।**

**इदं तर्हि प्रयोजनम्—इकोऽचि यणेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।**

**किं चान्यत्प्राप्नोति ?**

**शाकलम् । सिन्नित्यसमासयोः शाकलप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति ॥**

( प्रदीपः ) स न वक्तव्य इति । इग्ग्रहणमन्तरेणापि इको यणि सिद्धे पुनरिग्ग्रहणं शाकलयणादेशयोरेकविषयत्वाद्विकल्पितयोर्व्यवस्थितविभाषार्थं विज्ञायते । तेन सिन्नित्यसमासयोर्यणादेश एव, अन्यत्र तूभयम् ॥

( उद्योतः ) नन्वत्रेग्ग्रहणेन सिन्नित्यसमासयोः कथं शाकलप्रतिषेधो लभ्यते ? अत आह—इग्ग्रहणमिति । तच्च वाक्यभेदेन नियमार्थम् । तत्र 'इक एव-अच्येव' इति च न नियमः, फलाभावात्[4], किं तु यणेवेति । स च नियमः शाकल्यारम्भसामर्थ्याल्लक्ष्यविशेषविषय एवेति भावः ॥

( ६१०७ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ यणादेशः प्लुतपूर्वस्य च ॥ * ॥

**( भाष्यम् ) यणादेशः प्लुतपूर्वस्य चेति वक्तव्यम् । अग्ना३इ इन्द्रम्–अग्ना३यिन्द्रम् । पटा३उ उदकम्–पटा३वुदकम् । अग्ना३इ आशा—अग्ना३याशा । पटा३उ आशा—पटा३वाशा ॥**

**किं पुनः कारणं न सिध्यति ?**

**असिद्धः प्लुतः, प्लुतविकाराविमौ ॥**

**( प्रदीपः ) अग्ना३यि इन्द्रमिति । 'अग्ने इन्द्रम्' इति** स्थिते 'एचोऽप्रगृह्यस्य-' इति पूर्वस्यार्धस्य मात्राया आकार आदेशः, स च प्लुतः । उत्तरस्य त्वर्धस्य मात्राया इदुतौ । उदात्तत्वमाकारस्येदुतोश्च युगपद्भवति ॥

**प्लुतविकाराविति ।** प्लुतसहितौ विकारावित्यर्थः । यद्यपि[5] स्वतोऽसिद्धत्वमिदुतोरस्ति तथापि प्लुतसिद्ध्या तयोः सिद्धत्वं प्रतिपादयितुं प्लुतासिद्ध्या तयोरसिद्धत्वमुच्यते । वार्तिकारम्भे तु आश्रयादिदुतोः सिद्धत्वम् ॥

( उद्योतः ) प्लुतपूर्वत्वमिदुतोर्दर्शयति—**एच इति** ॥ **अर्धस्य मात्राया इति** । मात्रारूपार्धस्येत्यर्थः । 'स च प्लुतः' इत्यनेनेदुतोरप्लुतत्वं ध्वनयति ॥ **युगपद्भवतीति** । त्रिपाद्यां शेषनिघाताप्रवृत्तेरिति भावः ॥

ईदूतौ न प्लुतस्य विकारावत आह—**प्लुतसहिताविति** ॥

नन्विदुतोः स्वत एवासिद्धत्वात्प्लुतद्वाराऽसिद्धत्वकथनमयुक्तमत आह—यद्यपीति ॥ ननु वार्तिकारम्भेऽपि इदुतोरसिद्धत्वात्कथं सिद्धिः ? अत आह—**वार्तिकारम्भे इति** ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**सिद्धः प्लुतः स्वरसन्धिषु ।**

**कथं ज्ञायते ?**

**यदयं 'प्लुतप्रगृह्या अचि-' ( ६।१।१२५ ) इति प्लुतस्य प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्यः—सिद्धः प्लुतः स्वरसन्धिष्विति ।**

**कथं कृत्वा ज्ञापकम् ?**

**सतो हि कार्यिणः कार्येण भवितव्यम् ॥**

**इदं तर्हि प्रयोजनम्—**

( प्रदीपः ) **स्वरसन्धिष्विति । सन्धिः—संहिता,** तत्कार्येषु सिद्ध इत्यर्थः ॥

**यदयमिति** । ननु च प्रकृतिभाव एव कर्तव्ये प्लुतस्याश्रयणा[6]दसिद्धत्वं स्यादिति कथं ज्ञापकम् ? नैष दोषः । अनेककल्पनासंभवेऽपीष्टसिद्ध्यर्थमियमेव कल्पनाऽऽश्रीयते[7] । स्वरसन्धिकार्येषु सिद्धं प्लुतप्रकरणमितीदुतोरपि सिद्धत्वं भवति ॥

( उद्योतः ) तत्कार्येष्विति । सन्धिशब्देन संहिताकार्यमुपचारादुच्यत इति भावः ।

**अनेकेति** । प्लुतशब्दस्य प्लुतस्थानिनि लक्षणेत्यादीति भावः ॥ ननु प्लुतस्य सिद्धत्वेऽपि कथमिदुतोः सिद्धत्वम् ? अत आह—**प्लुतप्रकरणमिति** ॥

---

[1] 'अप्लुतवदुपस्थिते' इत्यनेन कार्यातिदेशे दोषमाक्षिपति—यत्तु तत्रेति ॥

[2] उत्सर्गापवादयोः संदिग्धासंदिग्धत्वमुपपादयति—अपवादस्त्विति ॥

[3] 'गुणवृद्धिबाध्यः' इति छ. पाठः ॥

[4] इको यणचि—इति सूत्रस्य नियमार्थत्वे नियमत्रयं सम्भवति, तत्र नियमद्वयव्युदासमाह—फलाभावादिति ॥

[5] ननु यणादेशसिद्ध्यभावे 'असिद्धः प्लुतः' इत्येतदपेक्षया 'असिद्धाविदुतौ' इत्येव भाष्यकृदुत्तरं युक्तमत आह—यद्यपीति । सिद्धः प्लुत इत्यादि समाधानापेक्षया तादृशमुत्तरमिति भावः ॥

[6] आश्रयणादिति । प्लुतमाश्रित्य प्रकृतिभावविधानात्प्रकृतिभावे कर्तव्ये प्लुतस्य सिद्धत्वं स्यात्, ननु सिद्धः प्लुतः स्वरसन्धिष्वितीत्यर्थः ॥

[7] अनेककल्पनासु कल्पनामाह—प्लुतशब्दस्येत्यादि ॥

( ६१०८ उपसंख्यानप्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ दीर्घशाकलप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) दीर्घत्वं शाकलं च मा भूदिति ॥

( प्रदीपः ) दीर्घेति । अग्ना३ यिन्द्रमित्यादौ 'अकः सवर्णे दीर्घः' इति दीर्घः प्राप्नोति । अग्ना३याशेत्यादौ तु 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति प्रकृतिभावः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । आरभ्यते प्लुतपूर्वस्य यणादेशः-'तयोर्य्वावचि संहितायाम्' (८।२।१०८) इति, तदेव दीर्घशाकलप्रतिषेधार्थं भविष्यति ॥

तन्न वक्तव्यं भवति ॥

ननु च तस्मिन्नप्युच्यमाने इदं न वक्तव्यं भवति।

अवश्यमिदं वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम् । भो३ इ इन्द्रम्—भो३ यिन्द्रम् । भो३ इ इह—भो३ यिहेति ॥

यदि तर्ह्यस्य निबन्धनमस्ति, इदमेव वक्तव्यम् । तन्न वक्तव्यम् ।

तदप्यवश्यं स्वरार्थं वक्तव्यम् । अनेन हि सति 'उदात्तस्वरितयोर्यणः-' (८।२।४) इत्येष स्वरः प्रसज्येत । तेन पुनः सत्यसिद्धत्वान्न भविष्यति ॥

यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम्, इदं न वक्तव्यम् ।

ननु चोक्तम्—इदमप्यवश्यं वक्तव्यम्, यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थम्—भो३ यिन्द्रम्, भो३ यिहेति ।

छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ।

यत्तर्हि न छान्दसम्-भो३यिन्द्र भो३यिहेति साम गायति ।

एषोऽपि छन्दसि दृष्टस्यानुप्रयोगः क्रियते ॥

जश्त्वं न सिद्धं यणमत्र पश्य
यश्चापदान्तो हलचश्च पूर्वः ।
दीर्घस्य यण् ह्रस्व इति प्रवृत्तं
संबन्धवृत्त्या गुणवृद्धिबाध्यम् ॥ १ ॥
नित्ये च यः शाकलभाक्समासे
तदर्थमेतद्भगवांश्चकार ।
सामर्थ्ययोगान्नहि किंचिदस्मिन्
पश्यामि शास्त्रे यदनर्थकं स्यात् ॥ २ ॥

( प्रदीपः ) भो३ यिन्द्रमिति । भोशब्दस्य वर्णव्यत्ययेन छान्दसः प्लुतः । इकारो निपातः, तस्य 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा, 'प्लुतप्रगृह्या अचि-' इति प्रकृतिभावे प्राप्ते यण्विधानम् ॥

अनेन हीति । स्वरे कर्तव्येऽस्य यणः सिद्धत्वात् 'तयोर्य्वाव-' इत्यनेन तु यणादेशे 'उदात्तस्वरितयोर्यणः' इति स्वरेऽसिद्ध इति ततः परस्यानुदात्तस्य स्वरितत्वाभावः ॥

दृष्टानुविधिरिति । 'सर्वे विधयश्छन्दसि विकल्पन्ते' इति प्रकृतिभावसवर्णदीर्घत्वाभावे यण् भविष्यतीत्यर्थः ॥

एषोऽपीति । छान्दसस्येदमनुकरणम्, साम्नो नामधेयत्वेन प्रसिद्धमित्यर्थः । गीतिरहितश्च स्वरूपमात्रमनुक्रियते- इति अनुकरणे गीत्यभावः ॥

सामर्थ्ययोगादिति । शास्त्रसामर्थ्यात् सूत्रार्थव्यवस्थापनान्न किञ्चित्—पदमात्रमपीहानर्थकमित्यर्थः ॥

( उद्द्योतः ) भाष्ये—तन्न वक्तव्यमिति । अत्र वार्तिके कृते 'तयोर्य्वाव-' इति सूत्रं न कार्यमिति लाघवमित्यर्थः ॥

तत्र विनिगमनाविरहं शङ्कते—(भाष्ये) ननु चेति ॥

अत्रत्यस्यावश्यकत्वं प्रतिपादयति—(भाष्ये) अवश्यमिति । कश्चित्तु 'तदेव दीर्घशाकलप्रतिषेधार्थं भविष्यति-इतीदं न वक्तव्यं भवति । अवश्यमिदम्' इत्येव पाठः ॥

छान्दसः प्लुत इति । गीतिवशात्प्लुत इति हरदत्तः, तन्न; भो३यिहेत्यनुकरणे गीत्यभावेऽपि प्लुतदर्शनात् । अत्र हि 'तयोर्य्वाव-' इति सूत्रस्य न प्राप्तिः, तत्र पूर्वसूत्रविहितयोरेव तयोरित्यनेन परामर्शादिति भावः । 'अप्लुतविकारौ' इति भाष्यस्य प्लुतसहितविकारभिन्नावित्यर्थः ॥

अस्य यण इति । एतत्प्रदेशविहितस्येत्यर्थः ॥ तेन पुनर्-इति व्याचष्टे—तयोर्य्वाविति ॥

ननु छन्दसि दृष्टस्याप्यनुविधानं लक्षणेन कर्तव्यमत आह— सर्वे विधय इति ॥

छान्दसस्येति । अनुकार्यरूपभङ्गभिया हि कृतप्लुतस्यैवेदमनुकरणमिति भावः ॥ साम्नोऽनुकरणे कथं गीत्यभावोऽत आह— गीतिरहितं चेति ॥

पदमात्रमपीति । यत्र तु प्रत्याख्यायते तत्र स्पष्टप्रतिपत्त्यादेव प्रयोजनम् । प्रत्याख्यानं तु तत्सामर्थ्याद्याश्रयणेन शुष्कतर्कैर्विरुद्धकल्पनाकरणाभावायेति द्रष्टव्यम् । एवं प्रयोजनाकथनेऽपि बोध्यमिति भावः ॥

---

( १०८३ विधिसूत्रम् ॥ ६ । १ । ३ आ. ४८ )

## २५१६ वान्तो यि प्रत्यये ॥ ६ । १ । ७९ ॥

( आयाद्यादेशाधिकरणम् )

( ६१०९ पूर्वपक्षिवार्तिकम् ॥ १ ॥ )

॥ * ॥ वान्तादेशे स्थानिनिर्देशः ॥ * ॥

( भाष्यम् ) वान्तादेशे स्थानिनिर्देशः कर्तव्यः । ओकारौकारयोरिति वक्तव्यम् । एकारैकारयोर्मा भूदिति ॥

---

१ दीर्घशाकल्ययोरुदाहरणे आह—अग्ना३यिन्द्रमिति ॥

२ 'तद्दीर्घशाकल' इति छ. ट. पाठः ॥

(प्रदीपः) वान्तादेश इति । पूर्वत्र स्थानिविशेषलाभो यथासंख्यसंबन्धात् । इह तु निमित्ताभावात्तल्लाभाभावः ॥

(उद्द्योतः) वान्तोयीतिसूत्रस्थभाष्यं कैयटश्च 'स्थानेऽन्तरतमः' इति सूत्रे व्याख्यातम् । 'गव्यूतिः' इत्यत्र 'लोपः शाकल्यस्य' इति लोपस्तु न, छन्दसि सर्वविधीनां वैकल्पिकत्वात् । अध्वपरिमाणेऽपि संज्ञात्वभङ्गापत्तेर्न वलोपः । यथा रघुनाथशब्दे नित्यस्यापि णत्वस्याभावः । ध्वनितं चेदं 'भृञोऽसंज्ञायाम्' इति सूत्रे भाष्य इति दिक् ॥

(वार्तिकप्रत्याख्यानभाष्यम्)

**स तर्हि वक्तव्यः ।**

**न वक्तव्यः । वान्तग्रहणं न करिष्यते । एचो यि प्रत्ययेऽयादयो भवन्तीत्येव सिद्धम् ।**

**यदि वान्तग्रहणं न क्रियते—चेयम् जेयम्-इत्यत्रापि प्राप्नोति ।**

**'क्षय्यजय्यौ शक्यार्थे' (६।१।८१) इत्येतन्नियमार्थं भविष्यति—क्षिज्योरेवैच इति ।**

**तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति—क्षेयं पापम्, जेयो वृषल इति ।**

**उभयतो नियमो विज्ञास्यते—क्षिज्योरेवैचः, तयोश्च शक्यार्थ एव-इति ।**

**इहापि तर्हि नियमान्न प्राप्नोति-लव्यम्, पव्यम्, अवश्यलाव्यम्, अवश्यपाव्यम् ।**

**तुल्यजातीयस्य नियमः ।**

**कश्च तुल्यजातीयः ?**

**यथाजातीयकः क्षिज्योरेच् ।**

**कथं जातीयकः क्षिज्योरेच् ?**

**एकारः ।**

**एवमपि रायमिच्छति-रैयति, अत्रापि प्राप्नोति ।**

**रायिश्छान्दसः, दृष्टानुविधिश्छन्दसि भवति ॥**

(प्रदीपः) उभयतो नियम इति । योगविभागाश्रयणादिति भावः ॥

रायिश्छान्दस इति । एतद्भाष्यवशाद्भाषायां रैशब्दोऽसाधुरिति लक्ष्यते । अथवा क्यच्परएव रायिश्छान्दस इति व्याख्यायते ॥

( ६११० उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ गोर्यूतौ छन्दसि ॥ * ॥

(भाष्यम्) **गोर्यूतौ छन्दस्युपसंख्यानं कर्तव्यम् । आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । गोयूतिमित्येवान्यत्र ॥**

( ६१११ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अध्वपरिमाणे च ॥ * ॥

(भाष्यम्) **अध्वपरिमाणे च गोर्यूतावुपसंख्यानं कर्तव्यम् । गव्यूतिमध्वानं गतः । गोयूतिमित्येवान्यत्र ॥**

( १०८४ नियमसूत्रम् ॥ ६ । १ । ३ आ. ४९ )

# २५१७ धातोस्तन्निमित्तस्यैव ॥ ६ । १ । ८० ॥

(एवकारप्रयोजनभाष्यम्)

**एवकारः किमर्थः ?**

**नियमार्थः ।**

**नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ॥**

**इष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत-धातोस्तन्निमित्तस्यैवेति, मैवं विज्ञायि-धातोरेव तन्निमित्तस्येति ।**

**किं च स्यात् ?**

**अधातोस्तन्निमित्तस्य न स्यात् । शङ्कव्यं दारु, पिचव्यः कार्पास इति ॥**

( १०८५ निपातनसूत्रम् ॥ ६ । १ । ३ आ. ५० )

# २५१९ क्रय्यस्तदर्थे ॥ ६ । १ । ८२ ॥

(तत्पदार्थोपदर्शकभाष्यम्)

**तत्-इत्यनेन किं प्रतिनिर्दिश्यते ?**

**स एव क्रीणात्यर्थः । इह मा भूत्—क्रेयं नो धान्यम्, न चास्ति क्रय्यमिति ॥**

(प्रदीपः) तदित्यनेनेति । प्रकृत्यर्थस्याप्राधान्यात्परामर्शो न युक्तः । प्रत्ययार्थपरामर्शेऽपि तदर्थग्रहणमयुक्तम् । तथा हि-यदि स एवार्थः-तदर्थ इति तत्पुरुष आश्रीयते तदाऽवश्यमेव स्वस्मिन्नर्थे क्रय्यशब्दो वर्तेत इति नार्थस्तदर्थग्रहणेन ॥

अथ सोऽर्थो यस्यासौ-तदर्थः-शब्दः, तदा शब्दे शब्दस्य वृत्त्यसंभवात्तदर्थग्रहणमनर्थकमिति मत्वा पृच्छति ॥

---

१ निमित्ताभावादिति । यथासंख्यसम्बन्धरूपनिमित्ताभावात्तल्लाभाभाव इति भावः ॥

२ एवकार इति । सूत्रे एवकाराभावेऽपि 'वान्तो यि-' इत्यनेनैव सिद्धेऽस्य वैयर्थ्यात् नियमार्थं भविष्यति, तत्र वान्त एव, एच एव, धातोरेव, तन्निमित्तस्यैवेति नियमप्रकाराः सम्भवन्ति । आद्यौ द्वौ व्यावर्त्याभावान्निष्फलाविति द्वयोश्चरमयोरेव सम्भवः प्रदर्श्यते । तन्निमित्तस्य चेद्धातोरेवेति नियमाश्रयणे शङ्कव्यमित्यत्र शङ्कुशब्दाद्यति तन्निमित्ते ओर्गुणेऽवादेशो न स्यात्, स्याच्च ओयत इत्यादाविति इष्टतोऽवधारणार्थ एवकारः ॥

३ 'धान्यम्, क्रेतव्यमित्यर्थः । न चास्ति-' इति क. ट. पाठः ॥

४ अयुक्तमिति । प्रत्ययार्थपरामर्शे हि शक्यार्थः क्रय्यशब्दस्य स्यात्, स च लोकेऽप्रसिद्ध एवेत्ययुक्तत्वम् ॥

५ अन्यस्यार्थस्यासम्भवं प्रदर्शयति—तथाहीति ॥

**स एवेति।** प्रधानस्य परामर्शासंभवे गुणभूतस्य प्रकृत्यर्थस्य विनिमयलक्षणस्य परामर्शः । तस्मै क्रयाय यदापणे गवादिद्रव्यं व्यवस्थापितं तत्र क्रय्यशब्दो निपात्यते ॥ **क्रेयमिति ।** मूल्येनोपादातव्यमित्यर्थः ॥ **न चास्ति क्रय्यमिति ।** आपणे क्रयाय प्रसारितं धान्यं नास्तीत्यर्थः । **केचित्तु**—क्रय्यशब्दे क्रीणातिर्विक्रये वर्तत इति व्याचक्षते । तेनापणे विक्रयार्थं यत् द्रव्यं न्यस्तं तत् क्रय्यमित्यर्थः ॥

**( उद्द्योतः )** ननु प्रकृतक्रय्यशब्दार्थपरामर्शे संभवति किं प्रश्नेनेत्यत आह—**प्रकृत्यर्थस्येत्यादि** ॥

**गुणभूतस्येति ।** सामर्थ्यादित्यर्थः ॥ **यदापण इति ।** क्रेतॄणां क्रयार्थं यदापणे स्थापितमित्यर्थः । तद्वक्ष्यति—'आपणे क्रयाय प्रसारितम्' इति । अत्रापि 'क्रयाय' इत्यस्य 'क्रेतॄणाम्' इत्यादिः । क्रयार्थत्वं च फलोपधानरूपं न तु योग्यतामात्रम्, 'तदर्थे' इति विशेषणसामर्थ्यादिति भावः ॥ भाष्योक्तोदाहरणप्रत्युदाहरणयोरर्थमाह—**मूल्येनेति ।** केनचित्—'असभ्यं धान्यं दातव्यम्' इति क्रेतारं प्रति पृष्टे, इदमुत्तरम्—'क्रेयं नो धान्यं न चास्ति क्रय्यम्' इति । क्रयो नाम धान्यार्थिभिर्द्रव्यं दत्त्वा ग्रहणम् ॥ **केचित्त्विति ।** विक्रयो नाम लाभेच्छया द्रव्यग्रहणपूर्वं धान्यादिदानम् । अत्र बोधे एव विशेषः, न तु फले—इति बोध्यम् ॥

( १०८६ निपातनसूत्रम् ॥ ६ । १ । ३ आ. ५१ )

## २५२० भय्यप्रवय्ये च च्छन्दसि ॥ ६ । १ । ८३ ॥

( ६११२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भय्यादिप्रकरणे हृदय्या उपसंख्यानम् ॥ * ॥

**( भाष्यम् )** भय्यादिप्रकरणे हृदय्या उपसंख्यानं कर्तव्यम् । हृदय्या आपः ॥

**( प्रदीपः ) हृदय्या इति ।** हृदे भवाः, 'भवे छन्दसि' इति यत्प्रत्ययः । अकारस्यायादेशः ॥

( ६११३ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अव् शरस्य च ॥ * ॥

**( भाष्यम् )** अवादेशो भवतीति वक्तव्यम् । शरस्य च हृदस्य चांतोऽवक्तव्यः[1] । हृदव्या आपः । शरव्या वै तेजनम् । शरव्यस्य पशूनभिघातकः स्यात्[2] ॥

**( प्रदीपः ) शरव्यस्येति ।** शरशब्दस्य यति परतोऽकारस्यावादेशः ॥

[1] 'चांतोऽवादेशो वक्तव्यः' इति ट. झ., 'हृदस्य च वान्तादेशो वक्तव्यः' इति क. पाठः ॥

( ६११४ शरव्यशब्दस्यान्यथासिद्धिकथनवार्तिकम् ॥ ३ ॥[3] )

### ॥ * ॥ शरुवृत्ताद्वा सिद्धम् ॥ * ॥

**( भाष्यम् )** शरुवृत्ताद्वा पुनः सिद्धमेतत् ॥

**( प्रदीपः ) शरुवृत्तादिति ।** शरुशब्दः 'शॄस्वृस्निहि–' इत्यौणादिकः, तस्माद्यति कृते 'ओर्गुणः' इति गुणे 'वान्तो यि प्रत्यये' इति वान्तादेशे च सिद्धः—**शरव्य** इति ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

**( उद्द्योतः ) शरुवृत्ताद्वेति ।** शरुशब्दप्रवृत्तेरित्यर्थः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठाध्यायस्य प्रथमपादे तृतीयमाह्निकम् ॥

( ६११५ वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ ऋजुती शरुरित्यपि दृश्यते ॥ * ॥

**( भाष्यम् )** ऋजुती शरुरित्यपि शरुशब्दप्रवृत्तिर्दृश्यते ॥

( ६११६ वार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ शरुहस्त इति च लोके ॥ * ॥

**( भाष्यम् )** शरुहस्त इति च लोके शरहस्तमुपाचरन्ति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

( १०८७ अधिकारसूत्रम् ॥ ६ । १ । ४ आ. ५२ )

## २५२१ एकः पूर्वपरयोः ॥ ६।१।८४ ॥

( एकादेशाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**एकवचनं किमर्थम् ?**

**( प्रदीपः ) एकवचनमिति ।** 'आद्गुणः' इत्यादावेकस्यादेशस्य सूत्र उपादानात्, संख्यायाश्च विवक्षितत्वाच्छब्दोपात्तसंख्यात्यागे कारणाभावात्, गुणभेदे प्रधानस्याभेदात् स्थानिभेदेऽप्येकस्यैवादेशस्य प्रवृत्तिः सिद्धेति **प्रश्नः** ॥

**( उद्द्योतः )** ननु स्थानिभेदादादेशद्वयप्राप्तेस्तन्निवृत्त्यर्थमेकग्रहणमिति प्रश्नासङ्गतिरत आह—**आद्गुण इत्यादाविति** ॥ विवक्षायां हेतुः—**शब्दोपात्तेति** ॥ **गुणभेद इति ।** गुणानुरोधेन प्रधानावृत्तेरयोगादिति भावः ॥

[2] 'अभिघातुकः स्यात्' इति ट. पाठः ॥

[3] क. ट. पुस्तकयोरस्य वार्तिकत्वेन न पाठः ॥

( ६११७ पदकृत्यवार्तिकम् ॥ १ ॥ )

**॥ * ॥ एकवचनं पृथगादेश-प्रतिषेधार्थम् ॥ * ॥**

( भाष्यम् ) एकवचनं क्रियते, एक आदेशो यथा स्यात्, पृथगादेशो मा भूदिति ॥

( प्रदीपः ) पृथगादेशप्रतिषेधार्थमिति । आदेशस्य विधेयत्वात्प्राधान्यात् प्रधाने च-ग्रहं संमार्ष्टीत्यादौ संख्याया अविवक्षितत्वात् स्थानिभेदाद् द्वावादेशौ स्यातामित्येकग्रहणं कृतम् ॥

(उद्द्योतः) प्रधाने च ग्रहमिति । अत्र च संस्कार्यत्वात्प्राधान्यं बोध्यम् । अत्रापि[1] विधेयस्य गुणादेः साधुत्वेन संस्कार्यत्वात्प्राधान्यमित्याशयः । केचित्तु[2]-ग्रहस्यानुवाद्यत्वेन तत्र सङ्ख्याया अविवक्षैव, अत्र तु विधेयगतत्वात्तद्विवक्षैवेति चिन्त्यमिदम् । तस्मादनन्ताप्परावर्णानामत्रोद्देश्यतया प्रत्येकं तेष्वेकैकगुणवत् शब्दोपात्तपूर्वपररूपानुवाद्यभेदेनाप्यादेशभेदः स्यात्-इति तत्प्रतिषेधार्थमेकग्रहणमिति भाष्याशयमाहुः ॥

( ६११८ एकपदानुपयोगप्रकथनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेः ॥ * ॥**

( भाष्यम् ) न वा एतत्प्रयोजनम् ।

किं कारणम्?

द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेरेक आदेशो भविष्यति । तद्यथा—द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति । अनयोः पूलयोः कटं कुरु, अनयोर्मृत्पिण्डयोर्घटं कुरु-इति । न चोच्यते एकमिति, एकं चासौ करोति ॥

किं पुनः कारणं द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति ?

( प्रदीपः ) न वेति । कर्मचोदना—कर्मणः कारकस्य क्रियमाणत्वेन या चोदना तस्यामित्यर्थः ॥

( उद्द्योतः ) वार्तिके कर्मशब्दः कारकपरो न क्रियापरः । द्रव्येष्विव द्रव्यवत्[3] । कर्मचोदनायां[4] संबन्धिद्रव्येषु द्वित्वेऽपि यथैकमेव निष्पाद्यते तद्वदित्यर्थः ॥ तदाह—कर्मण इति ॥

( ६११९ एकपदानुपयोगसमर्थकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ तच्चैकवाक्यभावात् ॥ * ॥**

( भाष्यम् ) एकवाक्यभावाद्द्रव्येषु कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिर्भवति । आतश्चैकवाक्यभावाद्व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति-'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (६।४।२०) 'भ्रस्जोरोपधयोरमन्यतरस्याम्' (६।४।४७) इति ॥

( प्रदीपः ) एकवाक्यभावादिति । यथोपात्तविशिष्टकारकान्विता क्रियैव साध्यमाना वाक्यार्थ इत्यर्थः ॥

( उद्द्योतः ) यथोपात्तेति । यत्सङ्ख्याकं यद्रूपं कारकमुपात्तं तत्संख्याकेन तद्रूपोपात्तेनान्विता क्रियैव वाक्यार्थ इत्यर्थः ॥ साध्यमानेति । एवं च भूतभव्य[5]न्यायेन यद्रूपेण क्रियाविशिष्टस्य साध्यत्वं बुद्धं तत्रैव संबंधिनः सिद्धस्य साधनत्वकल्पनादेकत्वं कटस्य, उपात्तसङ्ख्याया अविवक्षायां मानाभावादिति भावः । एवं व्याख्याने 'एकवाक्यभावात्' इति भाष्यसामञ्जस्यं कथमिति चिन्त्यम् । तस्मादयमत्र भाष्यार्थः—एकवाक्येऽनेकसाधनैकविधेये[6] एकस्य विधेयत्वप्रतीतिः, यथा-प्रकृते वाक्ये । अत एवास्य पूलस्य कटं कुरु-अस्य च पूलस्य कटं कुर्विति वाक्यभेदेनेककटस्य[7] विधेयत्वप्रतीतिरिति ॥

( लौकिकदृष्टान्तेनाक्षेपभाष्यम् )

यत्तावदुच्यते—एकवाक्यभावात्-इति ।

तन्न ।

अर्थात् प्रकरणाद्वा लोके द्वयोरेकस्याभिनिर्वृत्तिर्भवति । अर्थो वाऽस्यैकेन भवति, प्रकृतं[8] वा तत्र भवति—इदमेकमेव कर्तव्यमिति । आतश्चार्थाद्वा प्रकरणाद्वा व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः—'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (८।२।४२) 'उभौ साभ्यासस्य' (८।२।२१) इति ॥

कथं यत्तदुक्तं—व्याकरणेऽपि हि अन्यत्र द्वयोः स्थानिनोरेक आदेशो भवति—'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति ?

इह तावत्—'ज्वरत्वरस्रिव्यविमवामुपधायश्च' इति, स्तां द्वावूठौ नास्ति दोषः, सवर्णदीर्घत्वेन सिद्धम् ।

इह—'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति, वक्ष्यति ह्येतत्—भ्रस्जो रोपधयोर्लोप आगमो रम्विधीयत इति ॥

---

१ कैय्यटोक्तदृष्टान्तदार्ष्टान्तिकयोः सधर्मत्वमुपपादयति—अत्रापीति ॥

२ ननु 'ग्रहं संमार्ष्टि' इत्यत्र संमार्जनस्य विधेयत्वम्, न ग्रहस्येत्यत आह—केचिदिति ॥

३ द्रव्यवदिति । 'तत्र तस्येव' इत्यनेन वतिः ॥

४ न वा द्रव्यवदिति वार्तिकार्थमाह—कर्मचोदनायामिति ॥

५ भूतभव्येति । भूतं भव्येन योजयेदिति हि न्यायस्वरूपम् ॥

६ 'अनेकसाधनैकविधेये' इति झ. पाठः ॥

७ 'वाक्यभेदेनैककटस्य' इति झ. पाठः ॥

८ 'प्रकरणं' इति क. ट. पाठः ॥

(प्रदीपः) आगमो रमिति । तेन नासौ द्वयोः स्थाने विधीयत इत्यनेको[1] न भविष्यतीत्यर्थः ॥

(समाधानभाष्यम्)

**यदुच्यते—अर्थात् प्रकरणाद्वेति,**

**तन्न ।**

**किं कारणम् ?**

**एकवाक्यभावादेव लोके द्वयोरेकस्याभिनिर्वृत्तिर्भवति ।**

**आतश्चैकवाक्यभावात् । अङ्ग हि भवान् ग्राम्यं[2] पांसुरपादम[3]प्रकरणज्ञमागतं ब्रवीतु—अनयोः पूलयोः कटं कुरु, अनयोर्मृत्पिण्डयोर्घटं कुरु—इति । एकमेवासौ करिष्यति ॥**

**कथं यदुक्तं—व्याकरणेऽपि ह्यन्यत्र द्वयोः स्थानिनोर्द्वावादेशौ भवतः—'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' 'उभौ साभ्यासस्य' इति ?**

**इह तावद्—'रदाभ्यां निष्ठातो नः, पूर्वस्य च दः—इति द्वे वाक्ये ।**

**कथम् ?**

**योगविभागः करिष्यते—'रदाभ्यां निष्ठातो नः' ततः 'पूर्वस्य च दः' इति ।**

**इहापि—'उभौ साभ्यासस्य' इति, उभौग्रहणसामर्थ्याद् द्वावादेशौ भविष्यतः ॥**

(प्रदीपः) उभौग्रहणसामर्थ्यादिति । प्राणिणिषतीत्यादौ 'अनितेः' इत्यनेनोपसर्गादनन्तरस्य नकारस्य णत्वे सिद्धे 'साभ्यासस्य' इत्येतावतैव द्वयोर्नकारयोर्णत्वं सिद्धमिति 'उभौ'-ग्रहणमादेशनिर्देशार्थं विज्ञायते—साभ्यासस्यानितेरुभौ णकारौ भवत इति । तदेवमेकग्रहणं प्रत्याख्यातम् । 'आद्गुणः'[4] इत्यादौ संख्यायाः शब्दोपात्ताया विवक्षणात् । यत्र तु संख्या न विवक्ष्यते तत्र लक्ष्यसिद्धिरविवक्षितत्वे हेतुः ॥

(उद्द्योतः) भाष्ये—योगविभाग इति । भिन्न[5]विभक्त्युच्चारणादिति भावः ॥

ननूभौग्रहणं स्थानिद्वयसमर्पणार्थमावश्यकमत आह—**प्राणिणिषतीति** । **साभ्यासस्य**—इति च 'गुणः कृतात्मसंस्कारः' इति न्यायेनानितिविशेषणम्, न नकारविशेषणम् । **एतेन**[6] प्राधान्यान्नकारविशेषणत्वेऽभ्याससहितनस्येत्यर्थेन विशिष्टस्य स्थानित्वलाभेऽपि नद्वयस्य स्थानित्वालाभः, रमागमेन रोपधयोरिवाभ्यासनिवृत्त्यापत्तिश्च—इति **परास्तम्** । तत्रोठ्वत्[7] सकृत्प्रवृत्त्यैव नद्वयस्यापि निवृत्तेः स्थान्यभावादेव पुनः प्रवृत्त्यभावेनादेशद्वयलाभार्थमुभौग्रहणमिति भावः ॥ **विवक्षणादिति** । शब्दोपात्तत्वाद्विवक्षैव न्याय्या, नाविवक्षा[8], कारणाभावादिति भावः । विशिष्टविधिसम्भवेन विधेयगतैकत्वविवक्षायां बाधकाभावात् । एवं यत्र विशिष्टस्योद्देश्यत्वे विरोधस्तत्राविवक्षा । यथा—'ग्रहं संमार्ष्टि'इत्यादौ 'प्राजापत्या नवग्रहाः' इति नवत्वसङ्ख्याविशिष्टानामेव प्राप्तेरित्यन्यत्र विस्तरः ॥ नन्वेवं 'तस्यापत्यम्' इत्यादावपि सङ्ख्याविवक्षा स्यादत आह—**यत्र त्विति** ॥ **लक्ष्यसिद्धिरिति** । वस्तुतोऽनुवाद्यगता सङ्ख्याऽविवक्षिता, विधेयगता विवक्षितैवेति मीमांसकसरणिरेवास्माकमित्यन्यत्र प्रपञ्चितम् ॥

( ६१२० लौकिकदृष्टान्तेनाक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तत्रावयवे[9] शास्त्रार्थसम्प्रत्ययो यथा लोके ॥ * ॥

**(भाष्यम्) तत्रावयवे शास्त्रार्थसम्प्रत्ययः प्राप्नोति, यथा लोके ।**

**तद्यथा लोके—**

**'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।**

**'गर्भाष्टमे ब्राह्मण उपनेयः' इति सकृदुपनीय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।**

**तथा 'त्रिर्हृदयङ्गमाभिरद्भिरशब्दाभिरुपस्पृशेत्' इति सकृदुपस्पृश्य कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ।**

**एवमिहापि खट्वेन्द्रे कृतः शास्त्रार्थ इति कृत्वा मालेन्द्रादिषु न स्यात् ॥**

---

१ इत्यनेक इति । रस्य स्थाने लोप उपधायाश्च रमागम इति न द्वयोः स्थान एको विधीयत इति नानेकः स्यादित्यर्थः ॥

२ ग्राम्यमिति । ग्राम्यं पांसुलपादमित्यादिकथनं तु नायमर्थज्ञः, नापि च प्रकरणज्ञ इत्येतदवगमयितुम् । अत्र हि अनयोः पूलयोः कटं कुरु इत्युच्यमाने तादृशेनाप्रकरणज्ञेनानर्थज्ञेन ग्रामीणेन एक एव कटः क्रियते न द्वौ तदेकवाक्यत्वादेव, नान्यत्कारणमित्याशयः ॥

३ 'पांशुरपादं' इति ट. 'पांसुलपादं' इति च. पाठः ॥

४ नन्वेकपदप्रत्याख्याने गुणवृद्ध्यादिविधायकसूत्रेषु स्थान्यनुकूलौ द्वावादेशौ भविष्यतोऽत आह—आद्गुण इत्यादाविति ॥

५ ननु पदगौरवाद्योगविभागो गरीयानित्येवं प्रायोऽभियुक्ता मन्यन्ते । तथा च योगविभागेनैकपदप्रत्याख्यानं न युक्तमत आह—भिन्नविभक्तीति । प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं पदगौरवादित्यादेर्मूलम् । तच्च नात्र, विभक्तेर्भेदेनोच्चारणात्स्फुटमत्र वाक्यभेद इत्याशयः ॥

६ एतेन—गुणः कृतात्मसंस्कारः प्रधानमनुवर्तत इति न्यायेन अनितिरूपो गुणः—अप्रधानः कृतात्मसंस्कारः—साभ्यासस्येति विशेषणात्कृत आत्मसंस्कारो यस्य एवंभूतः, तत्त्वेन ॥

७ तत्रोठ्वदिति । च्छ्वोः शूडनुनासिके चेत्यनेन तुक्सहितछस्य स्थाने जायमानः शकारस्तुकं छं च निवर्तयति तथोभौग्रहणाभावे साभ्यासस्यानितेर्णे जाते नकारद्वयस्यापि निवृत्तिर्जाता णकारश्चैक एवेति णद्वयार्थमुभौग्रहणमिति भावः ॥

८ नाविवक्षेति । विवक्षायां शब्दोपात्तत्वं हेतुः, अविवक्षायां हेतुर्नास्तीति अविवक्षा नेति तात्पर्यम् ॥

९ तत्रावयव इति । यथा लोके वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदेवाधानं क्रियते नासकृत्, तथा शब्दशास्त्रेऽपि कस्मिंश्चिल्लक्ष्ये शास्त्रार्थसंप्रत्ययः स्यात् न सर्वलक्ष्येष्वित्यर्थः ॥

(प्रदीपः) तत्रावयव इति । व्यक्तिसमुदायापेक्षया एका व्यक्तिरवयवः, तत्रैव शास्त्रीयं कार्यं प्राप्नोति । तावतैव शास्त्रार्थस्यानुष्ठानात्, न तु सर्वासु व्यक्तिष्वित्यर्थः ॥

(उद्योतः) भाष्ये—तत्रावयव इति । अयं भावः—सर्वान् शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेव बोधकं स्यात् । यथा–'आधानेनाग्निं संस्कुर्यात्' इत्याद्यर्थकमाधानादिवाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकम् । अत एव पुनःपुनर्नाधानादिसंस्कारः । तत्र व्याकरणशास्त्रस्यावर्णादच्चि पूर्वपरयोर्गुणो भवति, तद्वच्च साधु भवति, तच्च प्रयोक्तव्यम्–इत्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यात्, अतस्तत्तल्लक्ष्यविषयभिन्नसूत्रोपप्लवेन वाक्यभेदोऽवश्यं वाच्यः । तद्वत्पूर्वपरविपर्येऽपि स्यात्–इत्यावश्यकमेकग्रहणम् । गुणादिविधिर्यथा लक्ष्यसंस्कारकस्तथा प्रयोगविधिरपि पुरुषसंस्कारक इति । तदाह—व्यक्तिसमुदायेति । मालेन्द्रादिषु न स्यादिति–भाष्ये—तद्विषयः प्रयोगो न स्यादित्यर्थः ॥

(६१२१ लौकिकदृष्टान्तेन समाधानवार्तिकम् ॥ ५ ॥)

**॥ * ॥ सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानाद् यथा लौकिकवैदिकेषु ॥ * ॥**

(भाष्यम्) **सिद्धमेतत् ।**

**कथम् ?**

**धर्मोपदेशनमिदं शास्त्रम्, धर्मोपदेशने चास्मिञ्छास्त्रेऽनवयवेन शास्त्रार्थः संप्रतीयते, यथा लौकिकवैदिकेषु च कृतान्तेषु ॥**

**लोके तावत्—ब्राह्मणो न हन्तव्यः, सुरा न पेया–इति,**

**ब्राह्मणमात्रं न हन्यते, सुरामात्रं च न पीयते ।**

**यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, एकं च ब्राह्मणमहत्वैकां च सुरामपीत्वाऽन्यत्र कामचारः स्यात् ।**

**तथा—'पूर्ववया ब्राह्मणः प्रत्युत्थेयः' इति,**

**पूर्ववयोमात्रं प्रत्युत्थीयते ।**

**यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, एकं पूर्ववयसं प्रत्युत्थायान्यत्र कामचारः स्यात् ॥**

**तथा—वेदे खल्वपि वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेतेति,**

**अग्न्याधाननिमित्तं वसन्ते वसन्ते इज्यते ।**

**यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, सकृदिष्ट्वा पुनरिज्यायां न प्रवर्तेत ॥**

(प्रदीपः) सिद्धं त्विति । 'साधुभिर्भाषितव्यम्' इति धर्मनियमोऽनेन क्रियत इति–अर्थप्रतिपादनाय प्रयुज्यमानेषु सर्वेष्वेव शब्देष्विदं शास्त्रमन्वाख्यानाय प्रवर्तते, न तु कस्यांचिदेव शब्दव्यक्तावित्यर्थः ॥ अनवयवेनेति । साकल्येनेत्यर्थः ॥

तथा पूर्ववया इति । न केवलं निषेधः सर्वविषयोऽनुष्ठीयते, यावद्विधिरपि यथासंभवमिति दर्शयितुमुपन्यासः ॥

अग्न्याधाननिमित्तमिति । अभ्याधानं निमित्तमस्येति बहुव्रीहिः, सत्यग्न्याधानेऽग्निष्टोमादिष्वधिकारात् ॥

(उद्योतः) समाधत्ते—(भाष्ये)—धर्मोपदेशन इति । धर्मशब्देन नित्यनैमित्तिककाम्यानां ग्रहणम् । यदभावे पापजनकं तन्नित्यम्, यथा—ब्राह्मणाहिंसादि । नैमित्तिकं यथा–वृद्धागमने प्रत्युत्थानम् । काम्यं–ज्योतिष्टोमादि । तत्रैतच्छास्त्रविषयप्रयोगविधेर्नित्यसमता, शास्त्रसंस्कृतशब्दप्रयोगस्य 'नापभाषितवै' इति श्रुत्या स्वाभावे तदर्थकान्यशब्दप्रयोगे पापबोधनात्–इत्याशयेनाह—साधुभिरिति । 'साधुभिर्भाषितव्यम्' इति यत उक्तमतोऽनेन–व्याकरणेन तद्विषयो धर्मनियमः क्रियत इत्यर्थः । 'धर्मोपदेशने' इति करणल्युडन्तं शास्त्रवाचि । 'अर्थप्रतिपादनाय प्रयुज्यमानेषु' इत्यनेन स्वातंत्र्यं वारयति । एवं वक्ष्यमाणो भाष्योक्तः फलसम्बन्धोऽपि तत्रैव–इति सर्वविषयता शास्त्रस्य बोधिता ॥

दृष्टान्तान्तरोपन्यासे प्रयोजनमाह—न केवलमिति । निषेध इति–नित्यविध्युपलक्षणम् ॥

अग्न्याधाननिमित्तमिति यजनक्रियाविशेषणमित्याह—बहुव्रीहिरिति ॥

(द्विविधदृष्टान्तव्यवस्थापकभाष्यम्)

**उभयथेह लोके दृश्यते—अवयवेनापि शास्त्रार्थसंप्रत्ययः, अनवयवेनापि ।**

**कथं पुनरिदमुभयं लभ्यते ?**

**लभ्यमित्याह ।**

**कथम् ?**

**इह तावत्—वसन्ते ब्राह्मणोऽग्नीनादधीतेति,**

**अग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थम् । सकृदाधाय कृतः शास्त्रार्थः–प्रतिपन्नं यज्ञमुखमिति कृत्वा पुनः**

---

१ सिद्धं त्विति । धर्मोपदेशनेऽस्मिन् शास्त्रेऽनवयवेन–उद्देश्यतावच्छेदकावच्छेदेन प्रवृत्तिविज्ञानात्सिद्धम्, यथा लौकिकेषु वैदिकेषु च धर्मोपदेशनेषु इत्यर्थः ॥

२ अर्थप्रतिपादनायेति । विवक्षितार्थप्रतिपादनाय प्रयुज्यमानेषु घटादिशब्देषु सर्वेष्वेव साधुत्वान्वाख्यानाय शास्त्रं प्रवर्तत इत्यर्थः ॥

३ नित्यनैमित्तिककाम्यानां लक्षणानि सोदाहरणान्याह—यदभाव इत्यादि ॥

४ स्वाभाव इति । स्वाभाव इत्यस्यैव विवरणं तदर्थकान्यशब्दप्रयोग इति । साधुशब्दस्थानेऽसाधुशब्दानां प्रयोगे पापजननात् ॥

५ स्वातंत्र्यमिति । तेन न साधुशब्दप्रयोगजन्यफललाभायैकस्यैव शब्दस्य पुनः पुनः प्रयोग इति ॥

६ वक्ष्यमाणः—एकः शब्दः सम्यक् ज्ञात इत्यादिः ॥

७ तत्रैव—अर्थप्रतिपादनाय प्रयुज्यमानेषु साधुशब्देष्वेव ॥

८ सर्वविषयता—उद्देश्यतावच्छेदकावच्छिन्नविषयता ॥

९ वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यस्य पुनः पुनः प्रवृत्त्यभावे बीजमाह—सकृदाधायेत्यादि ॥

प्रवृत्तिर्न भवति । अतोऽत्रावयवेन शास्त्रार्थः संप्रतीयते ।

तथा—गर्भाष्टमे ब्राह्मण उपनेय इति,

उपनयनं संस्कारार्थम् । सकृच्चासावुपनीतः संस्कृतो भवति । अतोऽत्राप्यवयवेन शास्त्रार्थः संप्रतीयते ।

तथा—त्रिर्हृदयङ्गमाभिरद्भिरशब्दाभिरुपस्पृशेदिति,

उपस्पर्शनं शौचार्थम् । सकृच्चासावुपस्पृश्य शुचिर्भवति । अतोऽत्राप्यवयवेन शास्त्रार्थः संप्रतीयते ॥

इहेदानीम्-ब्राह्मणो न हन्तव्यः-सुरा न पेयेति, ब्राह्मणवधे[1] सुरापाने च महान् दोष उक्तः । स ब्राह्मणवधमात्रे सुरापानमात्रे च प्रसक्तः । अतोऽत्रानवयवेन शास्त्रार्थः संप्रतीयते ।

तथा—पूर्ववया ब्राह्मणः प्रत्युत्थेय इति,

पूर्ववयसोऽप्रत्युत्थाने दोष उक्तः, प्रत्युत्थाने च गुणः ।

कथम् ?

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति
यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां
पुनस्तान् प्रतिपद्यते ॥ इति ।

स च पूर्ववयोमात्रे प्रसक्तः । अतोऽत्राप्यनवयवेन शास्त्रार्थः संप्रतीयते ।

तथा—वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेतेति,

इज्यायाः किंचित्प्रयोजनमुक्तम् ।

किम् ?

'स्वर्गे लोकेऽप्सरस एनं जाया भूत्वोपशेरते' इति । तच्च द्वितीयस्याश्च तृतीयस्याश्चेज्यायाः फलं भवितुमर्हति । अतोऽत्राप्यनवयेन शास्त्रार्थः संप्रतीयते ।

तथा—शब्दस्यापि ज्ञाने प्रयोजनमुक्तम् ।

किम् ?

**एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति—इति ।**

यद्येकः शब्दः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति, किमर्थं द्वितीयस्तृतीयश्च प्रयुज्यते ?

न वै कामानां तृप्तिरस्ति ॥

(प्रदीपः) **यज्ञमुखमिति**—यज्ञद्वारम् । यज्ञोपायमित्यर्थः ॥

**ब्राह्मणवध इति** । एकस्मिन्नपि ब्राह्मणे हते निषेधातिक्रमात्सर्वब्राह्मणविषयो हनननिषेधः प्रतीयते ॥ **ऊर्ध्वं प्राणा इति** । अर्थवादोऽयं प्रत्युत्थानप्रशंसापरः ॥

**वसन्त इति** ॥ अङ्गभूयस्त्वात् फलभूयस्त्वं—इति काम्यानि कर्माणि पुनः पुनरधिकारिभिरनुष्ठीयन्ते । यस्य पुनः कामना नास्ति नासौ पुनरनुतिष्ठति । नैमित्तिकान्यपि कर्माणि यदा यदा निमित्तावगमस्तदा तदाऽवश्यानुष्ठेयानि । नित्यानां तु नित्यत्वादेवाविच्छेदः ॥

( उद्द्योतः ) **यज्ञोपाय इति** । संस्कृता[2]ग्निसम्पादनार्थत्वादाधानस्य सम्पन्नेष्वग्निषु प्रयोजनाभावान्न पुनःकरणमिति भावः ॥

भाष्ये—**संस्कारार्थमिति** । वेदा[3]ध्यापनाद्युपयोगिसंस्कारार्थमित्यर्थः ॥

**निषेधातिक्रमादिति** । तदतिक्रमे प्रत्यवायोत्पत्तेरित्यर्थः ॥ **अर्थवादोऽयमिति** । प्रत्युत्थानाकरणे प्राणोत्क्रमणरूपमसंतमपि दोषमुद्भाव्य तत्प्रशंसा क्रियते तदननुष्ठाने दोषदर्शनेन तदनुष्ठानार्थम्,

**व्याघ्रादिव्यपदेशेन यथा बालो निवर्त्यते ।**
**असत्योऽपि तथा कश्चित्प्रत्यवायोऽभिधीयते ॥** इत्युक्तेः ॥

अथ शब्दप्रयोगस्य नित्यकाम्यत्वात्तस्य पुनः पुनरनुष्ठानबोधनाय नित्यनैमित्तिककाम्यानां पुनःपुनरनुष्ठाने हेतुमाह—**अङ्गभूयस्त्वादिति** । अ[4]ङ्गशब्देन फलं प्रति अङ्गभूतो याग उच्यते ॥ **अधिकारिभिः**—कामनावद्भिस्त्रैवर्णिकैरग्निविद्यायुक्तैः ॥ **नैमित्तिकानि**—प्रत्युत्थानादीनि ॥ **नित्यानाम्**—अग्निहोत्रादीनाम् । **नित्यत्वात्**—यावज्जीवं तद्विषयाधिकारसत्त्वात्, अकरणे प्रत्यवायश्रवणाच्चेति भावः ॥

शब्दप्रयोगस्य काम्यत्वं दर्शयति—**एक इति**—भाष्ये । नैमित्तिकत्वं त्वर्थबोधनार्थत्वेन स्पष्टमेव । सम्यक् ज्ञात एकोऽप्यर्थबोधनाय सुप्रयुक्तश्चेत्कामधुग्भवति, किं वक्तव्यं सर्वेऽपि—इति तदर्थः । एवं व्यवहारे प्रयोगविषयाणां सर्वेषां शास्त्रविषयता सूचिता । 'शास्त्रान्वितः' इत्यनेन शास्त्रस्मरणपूर्वकं प्रयोगे धर्मः सूचितः । अत्र प्रयुक्तिलाघवादर्थबोधनाय प्राप्ते एव प्रयोगे फलसम्बन्धबोधनं दर्शपूर्णमासयोरिव । एतेनैकस्यैव पुनः पुनः प्रयोगेणानेककामनाफलसिद्धिरित्यपास्तम् । एवं च नित्यनैमित्तिककाम्यविधिविषये प्रत्यवायपरिहाराय फलप्राप्तये च तत्तल्लक्ष्यविषयानन्तवाक्योपप्लवेन वाक्यभेदा-

१ ब्राह्मणो न हन्तव्य इत्यादीनां ब्राह्मणमात्रे पुनः पुनः प्रवृत्तौ बीजमाह—ब्राह्मणवध इत्यादि ॥

२ वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यस्य पुनः प्रवृत्त्यभावमुपपादयति—संस्कृतेति ॥

३ 'वेदाध्ययनाद्युपयोगि' इति ङ. पाठः ॥

४ ननु यागश्चाङ्गी न त्वङ्गम्, तत्कथमुच्यते—अङ्गभूयस्त्वात्फलभूयस्त्वमिति ? अत आह—अङ्गशब्देनेति ॥

त्पुनः पुनरनुष्ठानसिद्धिः । तत्र[1] तत्तल्लक्ष्यविषयोपप्लुतवाक्ये 'गुणो भवति' इत्याद्यन्तोंऽश आधानादिवल्लक्ष्यसंस्कारक एव, फलाश्रवणात् । अत[2] आवृत्तौ मानाभावात्पूर्वपरघटितमेकमेव वाक्यमिति नादेशद्वयम् । अत एवैकलक्ष्ये शास्त्रस्य पुनः पुनर्न प्रवृत्तिः । एतन्मूलकमेव पठ्यते—'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इति, 'सङ्ग्राहकवाक्याल्लक्ष्यसंस्कारकवाक्योपप्लवः' इति चेति दिक् ॥

( वार्तिकावतरणभाष्यम् )

**अथ पूर्वपरग्रहणं किमर्थम् ?**

( प्रदीपः ) अथ पूर्वेति । 'आद्गुणः' इत्यादौ 'आत्' इत्यादिका पञ्चमी अचीत्यादेः षष्ठीं प्रकल्पयिष्यति, 'अचि' इत्यादिका सप्तमी 'आत्' इत्यादेरिति मत्वा **प्रश्नः** ॥

( उद्योतः ) ननु तद्विना[3] कथं पूर्वपरयोः स्थानित्वमत आह—**आद्गुण इत्यादाविति** ॥

( ६१२२ पदकृत्यवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् ॥ * ॥

**( भाष्यम् ) पूर्वपरग्रहणं क्रियते परस्यादेशप्रतिषेधार्थम् । परस्यादेशो मा भूत्—'आद् गुणः' ( ६।१।८७ ) इति ॥**

**कथं च प्राप्नोति ?**

( प्रदीपः ) **पूर्वपरग्रहणमिति** । परस्यैवादेशो मा भूत्, पूर्वपरयोर्यथा स्यादित्यर्थः ॥

( उद्योतः ) ननु परस्थानेऽप्यादेशस्येष्टत्वात्तत्प्रतिषेधार्थत्वमयुक्तमत आह—**परस्यैवेति** । 'आत्' इति पञ्चम्याऽकृतार्थया पूर्वत्र कृतार्थाया अचीति सप्तम्या एव षष्ठी प्रकल्पनादिति भावः ॥

( ६१२३ पदकृत्यसमर्थकवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ पञ्चमीनिर्दिष्टाद्धि परस्य ॥ * ॥

**( भाष्यम् ) पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते । तद्यथा—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' ( ६।३।९७ ) इति ॥**

( ६१२४ पदकृत्यसमर्थकवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ षष्ठीनिर्दिष्टार्थं तु ॥ * ॥

**( भाष्यम् ) षष्ठीनिर्देशार्थं च पूर्वपरग्रहणं क्रियते । षष्ठीनिर्देशो यथा प्रकल्पेत ॥**

( प्रदीपः ) **षष्ठीनिर्दिष्टार्थं त्विति** । निर्देशः—निर्दिष्टम् । तु[5]शब्दश्चशब्दार्थे । अनिष्टनिवृत्तिरिष्टसिद्धिश्च प्रयोजनमित्यर्थः ॥

( उद्योतः ) **अनिष्टनिवृत्तिरिति** । तदभावे परस्यैवादेशः स्यादित्यनिष्टम् । सत्त्वे तु पूर्वपरयोरुभयोरिष्टस्थानित्वसिद्धिः—इति वार्तिकद्वयेन प्रतिपाद्यत इत्यर्थः ॥

( ६१२५ पदकृत्यसमर्थकवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः ॥ * ॥

**( भाष्यम् ) अक्रियमाणे हि पूर्वपरग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात् ।**

**कस्य ?**

**स्थानेयोगत्वस्य ॥**

**नैष दोषः । आदित्येषा पञ्चमी अचीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' (१।१।६७) इति ।**

**तथा—अचीत्येषा सप्तमी आदिति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' ( १।१।६८) इति ॥**

**एवं तर्हि सिद्धे सति यत्पूर्वपरग्रहणं करोति तज्ज्ञापयत्याचार्यः—नोभे युगपत्प्रकल्पिके भवत इति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**यदुक्तं—सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्ग इति, स न दोषो भवति ॥**

( प्रदीपः ) **यदुक्तमिति** । 'तस्मादित्युत्तरस्य' इत्यत्र ॥ **सप्तमीपञ्चम्योश्चेति** । 'आनेमुक्' 'ईदासः' इत्यादौ । न चोभयोः प्रकल्पनं विरुद्धम्, यतो विरोधान्न भवेत् ।

**सूत्रद्वय[6]प्रमाणत्वाद् द्वे भवेतां प्रकल्पिके ।**
**षष्ठ्या विभक्ती तेनात्र ज्ञापनार्थत्वमाश्रितम् ॥**

(उद्योतः) कथमुभयोः प्रकल्पने विरोधाभावः ? अत आह—**सूत्रद्वयेति** । ज्ञापकेन चोभयोः प्रकल्पने निरस्ते परत्वानवकाशत्वाभ्यां व्यवस्थेत्यर्थः ॥

---

१ ननु तत्तल्लक्ष्यविषयाणि वाक्यान्युपप्लवन्त इति सर्वलक्ष्यविषयकत्वं शास्त्रस्येति 'आद्गुणः' इत्यादावपि पूर्वविषयकं परविषयकञ्च वाक्यद्वयमिति द्वावादेशौ स्यातामत आह—तत्र तत्तदिति ॥

२ 'अत एवावृत्तौ' इति ञ पाठः ॥

३ तद्विना—पूर्वपरग्रहणं विना ॥

४ 'परस्यादेशः प्राप्नोति' इति ट. पाठः ॥

५ 'तुशब्दश्चार्थे' इति ठ. पाठः ॥

६ 'सूत्रद्वये प्रमाणत्वात्—' इति क. पाठः । सूत्रद्वयेति । सूत्रद्वयस्य 'आने मुक्' 'ईदासः' इत्येतस्य प्रमाणत्वात् द्वे विभक्ती—पञ्चमीसप्तम्यौ षष्ठ्याः प्रकल्पिके भवेताम्, तेन पूर्वपरग्रहणस्य ज्ञापनार्थत्वमत्राश्रितमित्यर्थः । सूत्रद्वये—इति पाठे सूत्रद्वये प्रामाण्याश्रवणादित्यर्थः ॥

( १०८८ अतिदेशसूत्रम् ॥ ६ । १ । ४ आ. ५३ )

## २५२२ अन्तादिवच्च ॥ ६ । १ । ८५ ॥

( अतिदेशाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**किमर्थमिदमुच्यते ?**

**( प्रदीपः ) किमर्थमिति ।** स्थानिवद्भावेन कार्याणां सिद्धिं मत्वा प्रश्नः ॥

**( उद्द्योतः ) स्थानिवद्भावेनेति ।** ब्रह्मबन्धूरित्यादौ प्रातिपादिकत्वादिकार्याणामित्यर्थः ॥

( ६१२६ प्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अन्तादिवद्वचनमामिश्रस्यादेशवचनात् ॥ * ॥

**( भाष्यम् ) अन्तादिवद्वचनं क्रियते, आमिश्रस्यादेशवचनात् । आमिश्रस्यायमादेश उच्यते स नैव पूर्वग्रहणेन गृह्यते, नापि परग्रहणेन । तद्यथा—क्षीरोदके संपृक्ते आमिश्रत्वान्नैव क्षीरग्रहणेन गृह्यते नाप्युदकग्रहणेन[1], इष्यते च ग्रहणं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यन्तादिवद्वचनम् । एवमर्थमिदमुच्यते ॥**

**(प्रदीपः) आमिश्रस्येति।** समुदायस्येत्यर्थः। पूर्वपरसमुदायो हि एकादेशस्य स्थानी, न प्रत्येकं पूर्वपरौ–इति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमनेनातिदिश्यते[2] ॥ **क्षीरोदके इति।** नियतव्यक्तिविवक्षायां जातिप्राधान्याभावादेकवद्भावाभावः[3] । यदि[4] तर्हि समुदायः स्थानी, नावयवः; तत्कथमुक्तम्–यो ह्युभयोः स्थाने भवति लभते सावन्यतरतो व्यपदेशमिति खट्वर्श्य इत्यादौ परत्वं भवति–इति ? समुदायिव्यतिरिक्तसमुदायाभावाद्[5] वस्तुस्थित्याश्रयेणान्यतरतो व्यपदेशाविरोधः । स्थानिवद्भावे[6] तु स्थानी साक्षान्निर्दिष्ट आश्रीयते ॥ नन्वादेशग्रहणादानुमानिकस्याप्यादेशस्य स्थानिवद्भावात् स्थान्यप्यानुमानिक आश्रीयते । यथोदाहृतम्–'एरुः'–पचतु । अत्र हीकारेणेकारान्तः स्थान्यनुमीयते । उकारेणाप्युकारान्त आदेशः। तस्य स्थानिवद्भावात्तिङन्तं पदमिति पदसंज्ञा भवति । एवम्–एकादेशस्यानुमीयमानस्थानित्वपूर्वपरावयवाश्रयं कार्यं सिद्धमिति किमनेनातिदेशेन ? एवं तर्हि 'अनल्विधौ' इति स्थानिवद्भाव उक्तः, अल्विध्यर्थमिदम् । तथा च क्षीरपेणेत्यादौ 'एकाजुत्तरपदे णः' इति णत्वमल्विधिरप्यन्तवद्भावाद्भवति ॥ यत्त्विह वार्तिकम्–'अन्तादिवद्वचनमामिश्रस्यादेशवचनात्' इति, तदादेशग्रहणप्रयोजनापरामर्शेन ॥[7]

**( उद्द्योतः ) अनुमीयमानेति ।** अनुमीयमानं स्थानित्वं ययोः पूर्वपरावयवयोः–पूर्वपरवर्णघटितावयवयोः, तदाश्रयमित्यर्थः। अवयवस्य स्थानित्वे तदवयवकयोरपि तदनुमानमिति भावः ॥[8][9] **क्षीरपेणेति ।** एकादेशे एकाजुत्तरपदत्वाभावाण्णत्वं न स्यात्। अन्तवद्भावात्तु भवति, उभयत आश्रयणाभावात् । 'अतादूप्यातिदेशात्' इत्यनेन वर्णमात्रवृत्तिधर्माश्रयकार्यातिदेशाभाव एव बोध्यते, न चेदं तथा । स्थानिवत्त्वं तु अप्राधान्येनाप्यल्याश्रयणे नेति प्रसिद्धमेवेति भावः ॥ **णत्वमल्विधिरपीत्यादि–परामर्शेनेत्यन्तं चिन्त्यम् ।** एकाच्त्वस्य श्रुत्या सत्त्वेनोत्तरपदत्वस्य स्थानिवत्त्वेनापि सुलभत्वात् । तस्मादयमत्र **भाष्याशयः**[10]–स्थानिवद्भावेन सर्वाशब्दे पूर्वान्तवत्त्वलभ्यमानसर्वनामत्वाप्रसङ्गः, तस्यैकादेशस्थानिधर्मत्वाभावात्, सिद्धान्तिन आदेशग्रहणप्रयोजनाज्ञानस्य वक्तुमशक्यत्वाच्च । न चानुमानिकादेशे समुदाययोरपि स्थानित्वम् । तत्कल्पकवाक्यं हि पूर्वपरघटितसमुदायस्यैकादेशघटित आदेश इत्येव, न तु तयोः समुदाययोः प्रत्येकं स्थानित्वबोधकम्, मानाभावात् । **तथा कल्पने** च स्वाश्वशब्दस्य समुदायस्यानुमानिकस्थान्यादेशभावं गृहीत्वा स्थानिवत्त्वेन तस्य स्वशब्दत्वात्तत ईरिन्शब्दे वृद्धाप्राप्तिरतः स्थानिवत्त्वाप्रवृत्तिः । **किञ्च** स्थानिवद्भावाङ्गीकारे क्षीरपेणेत्याद्यसिद्धिः । एकादेशस्थानित्वस्य वर्णयोस्तद्घटितार्थवत्समुदाययोर्वा कल्पनेऽपि उत्तरपदभूत'प'शब्दे तत्कल्पने मानाभावात् । अत एव 'राजकीयम्' इत्यादावल्लोपो न । **अक्षरार्थस्त्वेवम्**–आनुमानिकस्थान्यादेशभावेऽपि आमिश्रस्यान्तादिरूपवर्णद्वयघटितसमुदायस्यायमादेश उच्यते इति ॥

---

१ 'न वोदकग्रहणेन' इति ट. पाठः ॥

२ स्थानिवद्भावादप्राप्तमिति । स्थानिवत्सूत्रेणादेशस्य स्थानिवृत्तिधर्मवत्त्वमतिदिश्यते, तेनैवैतल्लक्ष्येष्वतिदेशे पूर्वपरसमुदायवृत्तिधर्मस्यातिदेशः स्यान्न तु पूर्वस्यातिदेशः परस्य वा । अनेन सूत्रेण तादृशोऽतिदेश आरभ्यत इति सूत्रारम्भः ॥

३ जातीति । क्षीरत्वोदकत्वजात्योः संपृक्तत्वासम्भवादत्र व्यक्त्योरेव प्राधान्येनाश्रयणमित्येकवद्भावाभाव इति भावः ॥

४ उरण् रपरसूत्रोक्तभाष्यकृदुक्तिविरोधं वारयति—यदि तर्हीति ॥

५ समुदायीति । समुदायस्यावयवानतिरेकाद्वस्तुतः समुदाये जायमानोऽप्यवयव एव पर्यवस्यतीति अवयवतो व्यपदेशाविरोध इति भावः ॥

६ ननु समुदायस्यावयवानतिरेके आदेशेऽवयववृत्तिधर्मातिदेशात्स्थानिवद्भावेनाप्येतत्सिद्धमिति नास्योपयोग इत्याशङ्कायामाह—स्थानिवद्भाव इति । यत्र साक्षात्स्थानी निर्दिश्यते तत्रैव स्थानिवद्भावः । अत्र तु समुदायः स्थानित्वेन साक्षान्निर्दिष्टो नावयव इति नैतत्स्थानिवद्भावेन सिद्धमिति भावः ॥

७ तदादेशेति । स्थानिवत्सूत्रे आदेशग्रहणादानुमानिकस्थान्यादेशभावोऽपीह गृह्यत इत्यर्थकादेशग्रहणप्रयोजनापरामर्शेनेत्यर्थः ॥

८ ननु अतीयात् क्षीरपेणेत्यादौ पूर्वपररूपावयवयोः स्थानित्वानुमानेऽपि एकाजुत्तरपदत्वमुपसर्गात्परत्वं वा कथमुपपद्येत ? अत आह–पूर्वपरवर्णेति । पूर्वपरौ यौ वर्णौ तद्घटितौ यौ पूर्वपररूपावयवौ तयोरित्यर्थः । आनुमानिकस्थान्यादेशेनावयवस्य स्थानित्वे लब्धे तौ–अवयवौ अवयवौ ययोः समुदाययोस्तयोरपि स्थानित्वानुमानमिति भावः ॥

९ 'समुदायस्यावयवानतिरेकेण तस्य स्थानित्वे तदवयवयोरपि तदनुमानमिति भावः' इति ग. पुस्तके पाठान्तरम् ॥

१० भाष्याशयः–इत्यनन्तरं स्थानिवद्भावेनेत्यस्मात्प्राक् 'आमिश्रस्य–आ–ईषन्मिश्रस्य, पूर्वान्तपरादिवर्णावच्छेदेन मिश्रस्य समुदायस्यादेश उच्यते । स नैव स्थानिवद्भावेन पूर्वपरग्रहणेन ग्रहीतुं शक्यः, समुदायस्यास्थानित्वात् । नापि प्रत्यक्षतः' इति ग. पुस्तके पाठाधिक्यमपि दृश्यते ॥

तदेव दृष्टान्तव्याजेनाह—(भाष्ये) तद्यथेति । यत्तु 'आमिश्रस्य' इत्यस्य पूर्वपरवर्णसमुदायस्येत्यर्थ इति, तन्न; 'पूर्वपरयोः' इति द्विवचनेन वाच्यस्थानित्वस्य प्रत्येकमेव विश्रान्तेः । ध्वनितं चेदम् 'उरण्रपरः' सूत्रे भाष्ये ॥

( वार्तिकावतरणभाष्यम् )

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ?**

( ६१२७ पूर्वपक्षिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तत्र यस्यान्तादिवत्तन्निर्देशः ॥ * ॥

( भाष्यम् ) **तत्र यस्यान्तादिवद्भाव इष्यते तन्निर्देशः कर्तव्यः । अस्यान्तवद्भवति, अस्यादिवद्भवतीति वक्तव्यम् ॥**

( प्रदीपः ) **तत्र यस्येति** । अन्तादिशब्दयोरवयवविशेषवाचित्वादवयविमात्राक्षेपेऽपि अवयविविशेषप्रतिपादनाय तन्निर्देशः कर्तव्य इत्यर्थः ॥

( ६१२८ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धं तु पूर्वपराधिकारात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**पूर्वपराधिकारात् । पूर्वपरयोरिति वर्तते । पूर्वस्य कार्यं प्रत्यन्तवद्भवति । परस्य कार्यं प्रत्यादिवद्भवति ॥**

( प्रदीपः ) **पूर्वस्येति** । क्वचिदादेशविधानात्प्राग्यौ पूर्वपरौ तौ गृह्येते । यथा—वृक्ष-औ-वृक्षावित्यत्र सुपमौकारं परं प्रति आदिवद्भावादेकादेशस्य सुबन्तं पदमिति पदसंज्ञा भवति । क्वचित्तु कृत एकादेशे यौ पूर्वपरौ तौ गृह्येते ॥

( उद्योतः ) **यथा वृक्ष औ इति** । कृते एकादेश इह पूर्वपरयोर्भेदेन[1] निर्देशाभावादित्यर्थः ॥ **क्वचित्त्विति** । क्षीरपेणेत्यादौ । तत्र हि कृते एकादेशे पूर्वःपान्तस्तदन्तवत्त्वादेकादेशस्यैकाजुत्तरपदत्वात् णत्वं भवति । यद्यपीदं प्राक्तन[2]पूर्वपरग्रहणेनापि सिध्यति तथापि एवमपि सिध्यतीत्यभिमानः । पूर्वपरौ चात्रान्तादिघटितौ द्रष्टव्यौ[3] भाष्ये ॥

( सूत्रस्याप्रवृत्तिस्थलबोधकभाष्यम् )

**अथ यत्रोभयमाश्रीयते, किं तत्र पूर्वस्यान्तवद्भवति-आहोस्वित्परस्यादिवद्भवति ?**

**उभयत आश्रये नान्तादिवत् ।**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

**लौकिकोऽयं दृष्टान्तः । तद्यथा—लोके द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोति । यदा तु तमुभौ युगपत् प्रेषयतः, नानादिक्षु च कार्ये भवतः, तत्र यद्यसावविरोधार्थी भवति उभयोर्न करोति ।**

**किं पुनः कारणमुभयोर्न करोति ?**

**यौगपद्यासंभवात् । नास्ति यौगपद्येन संभवः ॥**

( प्रदीपः ) **उभयत इति** । यथा 'एतेर्लिङि' इति ह्रस्वत्वमुपसर्गात्परस्य विधीयमानम् 'अतीयात्-परीयात्-इत्यादौ न भवति । तथा हि—अन्तादिशब्दाववयवविशेषवाचिनौ, तत्र यदि पूर्वं प्रत्यवयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परं प्रति कथमादिवद्भावः स्यात् ? एवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्तवद्भावो न स्यात्, एकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः ॥

( उद्योतः ) भाष्योक्तं न्यायसिद्धत्वमुपपादयति—**तथा हीति** ॥ **पारतन्त्र्यविरोधादिति** । पूर्वपरशब्दाभ्याम्-अन्तादिशब्दाभ्यां च विरोधस्य पुरःस्फूर्तिकत्वादिति भावः । अत[4] एव स्थानिवद्भाव उभयत आश्रयणेऽपि भवति । अत[5] एव 'पलायते' इत्यादौ 'उपसर्गस्यायतौ' इति लत्वसिद्धिरित्यष्टमे भाष्ये स्पष्टम् । ननु वतिघटितवाक्येनारोपमात्रं बोध्यते, कार्यनिर्वाहायारोपितपूर्वान्तत्वपरादित्वयोश्च न विरोध इति चेन्न; विरुद्धविषयारोपयोर्युगपदसम्भव इत्याशयात् । वस्तुतः शास्त्रस्याहार्यारोपमात्रपरत्वेन तस्य च विरुद्धविषयस्यापि सम्भवेन 'अथ यत्रोभयम्-' इत्यादिभाष्यमेकदेश्युक्तिः । कैयटोक्तोदाहरणस्यापि प्रकारान्तरेण सिद्धेरग्रे वक्ष्यमाणतया नैतदर्थस्य[6] फलमिति बोध्यम् ॥

( वार्तिकावतरणभाष्यम् )

**अथान्तवत्त्वे कानि प्रयोजनानि ?**

( ६१२९ अन्तवत्त्वप्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठज्विधाने ॥ * ॥

( भाष्यम् ) **अन्तवत्त्वे बह्वच्पूर्वपदाट्ठज्विधाने**

---

१ भेदेनेति । वृक्ष-औ-इत्यत्र कृत एकादेशे पूर्वपरयोः पार्थक्येन निर्देशाभावादित्यर्थः ॥

२ प्राक्तनेति । क्वचित्प्राक्तनशब्दस्थाने प्राकृतशब्दस्य पाठः ॥

३ द्रष्टव्याविल्यस्याग्रे 'भाष्ये' इति ग. पुस्तक एव दृश्यते, नान्येषु पुस्तकेषु ॥

४ अत एव—स्थानिवत्सूत्रे पारतन्त्र्यदर्शकपूर्वपरशब्दप्रयोगाभावादेव ॥

५ अत एव—उभयत आश्रयणेऽपि स्थानिवद्भावस्य सत्त्वादेव । अत एव स्थानिवत्सूत्रेण नैतद्गतार्थम् । अन्यच्च अन्तादिवत्सूत्रं वर्णप्राधान्य एव न प्रवर्तते, अप्राधान्येनालाश्रयणे प्रवर्तत एव । स्थानिवत्सूत्रं तु अप्राधान्येनाप्यलाश्रयणे न प्रवर्तत इत्यनयोर्भेदः पूर्वमुपपादित उद्द्योते ॥

६ 'नैतदप्येतदर्थस्य फलं' इति ङ. पाठः ॥

प्रयोजनम् । द्वादशान्यिकः । पूर्वपदोत्तरपदयोरेकादेशः पूर्वस्यान्तवद्भवति, यथा शक्येत कर्तुं—बह्वच्पूर्वपदाट्ठज्भवतीति ।

क्व तर्हि स्यात् ?

यत्र कृतेऽप्येकादेशे बह्वच्पूर्वपदं भवति—त्रयोदशान्यिकः ॥

( प्रदीपः ) द्वादशान्यिक इति । द्वादशान्यानि कर्माणि अध्ययने प्रवृत्तान्यस्येति 'तद्धितार्थ–' इति समासः । एकादेशस्यान्तवत्त्वाद्बह्वच्पूर्वपदं भवतीति ठच् सिध्यति । अत्रोत्तरपदविशेषः शब्देन नाश्रित इत्युभयाश्रयाभावात् प्रतिषेधाभावः ॥

क्व तर्हीति । वचनाद् भूतपूर्वगतिराश्रयिष्यत इति मन्यते ॥

यत्रेति । सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वात् ॥

( उद्द्योतः ) अन्यानि कर्माणि—अपपाठः[1] ॥

( ६१३० अन्तवत्त्वप्रयोजनवार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्रत्ययैकादेशः पूर्वविधौ ॥ * ॥

( भाष्यम् ) प्रत्ययैकादेशः पूर्वविधौ प्रयोजनम् । मधु पिबन्ति । शिदशितोरेकादेशः शितोऽन्तवद्भवति, यथा शक्येत कर्तुं—शितीति पिबादेशः ।

क्व तर्हि स्यात् ?

यत्रैकादेशो न भवति–पिबति ॥

( प्रदीपः ) पिबन्तीति । 'पा अ अन्ति' इति स्थिते अन्तरङ्गत्वाच्चैकादेशे कृते पिबादेशो न प्राप्नोति, शितं प्रत्यन्तवद्भावाद्भवति । वार्णादाङ्गमित्यनाश्रित्येदमुक्तम् ॥

( उद्द्योतः ) ननु एकादेशात्पूर्वं पिबादेशस्य सिद्धेः किमन्तवत्त्वेन ?इत्यत आह—पा अ अन्तीति ॥ अनाश्रित्येति । भिन्नस्थानिकत्वान्न तदाश्रयणमिति भावः ॥

( ६१३१ अन्तवत्त्वप्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ वैभक्तस्य णत्वे ॥ * ॥

( भाष्यम् ) वैभक्तस्य णत्वे प्रयोजनम् । क्षीरपेण, सुरापेण । उत्तरपदविभक्त्योरेकादेश उत्तरपदस्यान्तवद्भवति, यथा शक्येत कर्तुम्—एकाजुत्तरपदे णो भवतीति ।

क्व तर्हि स्यात् ?

यत्रैकादेशो न भवति—क्षीरपाणाम्, सुरापाणाम् ॥

( प्रदीपः ) वैभक्तस्येति । विभक्तौ भवो वैभक्तः ॥

( उद्द्योतः ) वैभक्तस्य—विभक्तिस्थनस्य । अत्रैकाजुत्तरपदत्वमेतल्लभ्यम्[2] ॥

( ६१३२ अन्तवत्त्वप्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अदस ईत्वोत्वे ॥ * ॥

( भाष्यम् ) अदस ईत्वोत्वे प्रयोजनम् । अमी अत्र, अमी आसते । अमू अत्र, अमू आसाते । अदस्विभक्त्योरेकादेशोऽदसोऽन्तवद्भवति, यथा शक्येत कर्तुं–'अदसोसेर्दादुदोमः' 'एत ईद्बहुवचने' ( ८।२।८०;८१ ) इति ।

क्व तर्हि स्यात् ?

यत्रैकादेशो न भवति—अमीभिः, अमूभ्याम् ॥

( प्रदीपः ) अमी इति । अदसस्त्यदाद्यत्वम्, 'अतो गुणे' इति पररूपे 'जसः शी', 'आद्गुणः', अदे इति स्थिते ईत्वमत्वे ॥ अमू इति । 'अदौ'इति स्थिते ऊत्वमत्वे ॥ क्व तर्हीति । अदस इति पञ्चम्याश्रयिष्यते न षष्ठी, आनन्तर्यसंबन्धे वा षष्ठी विज्ञास्यत इति भावः ॥ अमीभिरिति । पूर्वोक्तार्थाश्रयणेऽत्र न स्यातामीत्वोत्वे–इत्यवयवावयविसंबन्धे षष्ठ्याश्रीयते ॥

( उद्द्योतः ) अदस इति पञ्चमीति । अदसः परस्यैकारस्य बह्वर्थोक्तावीकार इत्याद्यर्थे 'अदे'इत्यादौ दकारान्तस्यैकदेशविकृतन्यायेनादस्बुद्ध्युत्पादात्ततः परत्वादेकारादेरीत्वादिसिद्धिरित्यभिमानः ॥ पूर्वोक्तार्थेति । अत्र हि एकारोऽदसवयव इति न दान्तस्यादसशब्दत्वं तेन[3] न्यायेन लभ्यमिति भावः ॥

( वार्तिकावतरणे प्रयोजनभाष्यम् )

स्वरितत्वे प्रयोजनम्—कार्या, हार्या । तिदतितोरेकादेशस्तितोऽन्तवद्भवति, यथा शक्येत कर्तुं—'तित्स्वरितम्' ( ६।१।१८५ ) इति ।

क्व तर्हि स्यात् ?

यत्रैकादेशो न भवति—कार्यः, हार्यः ॥

(प्रदीपः) कार्येति । 'कार्य आ' इति विभज्यान्वाख्याने विचारः । यदा तु 'स्वार्थमभिधाय–' इति क्रम आश्रीयते तदा लब्धसंस्कारात् स्वरितान्तात् कार्यशब्दाट्टाबुत्पत्तौ प्रयोजनाभावः ॥

( उद्द्योतः ) लब्धसंस्कारादिति । बहिर्भूतलिङ्गापेक्षटाब-

---

1 'अपपाठः' इति ग. पाठः । अध्ययेन द्वादशापपाठरूपाण्यन्यानि कर्माणि प्रवृत्तान्यस्येत्यर्थः ॥

2 अत्रैकाजिति । एकाजुत्तरपदत्वं विशेषणतयाऽऽश्रयणमिति न तत् स्थानिवद्भावलभ्यम्–इत्यभिमानेनेदम्, पूर्वोक्तकैयटग्रन्थश्च । वस्तुत एकाच्त्वांशे नातिदेशापेक्षा–इति स्थानिवत्त्वेनोत्तरपदत्वं सुलभमिति भट्टाशयः, सोऽपि चिन्त्यः । उत्तरपदावयवादेशत्वेनोत्तरपदादेशत्वाभावान्नोत्तरपदत्वं स्थानिवद्भावलभ्यमिति कैय्यटाशयः । आनुमानिकादेशत्वेनोत्तरपदादेशत्वमिति तु न युक्तम् । तदनाश्रयणेनेदं भाष्यमिति कैय्यटेन पूर्वमुक्तत्वात्–इति ग. पुस्तके लेखकेन विदुषाऽस्य ग्रन्थस्याशयः प्रदर्शितः । स चानवद्य इति तथैवोद्धृतोऽत्र ॥

3 तेन—एकदेशविकृतन्यायेन ॥

पेक्षया स्वरादीनामन्तरङ्गत्वादित्यर्थः। अर्थतो बहिरङ्गत्वानाश्रयणेन, पूर्वमेव स्त्रीत्वविशिष्टयोग्यकर्मत्वविवक्षणेन च पूर्वमेव टाबुचित इति केचित्॥

( ६१३३ भाष्योक्तप्रयोजनखण्डनवार्तिकम्॥ ८॥ )

॥ * ॥ स्वरितत्वं विप्रतिषेधात्॥ * ॥

( भाष्यम् ) स्वरितत्वं क्रियताम्-एकादेश इति, किमत्र कर्तव्यम्?

परत्वात्स्वरितत्वं भविष्यति विप्रतिषेधेन॥

( विप्रतिषेधाक्षेपनिरासभाष्यम् )

नैष युक्तो विप्रतिषेधः, नित्य एकादेशः, कृतेऽपि स्वरितत्वे प्राप्नोत्यकृतेऽपि।

अनित्य एकादेशः। अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोति, अन्यथास्वरस्याकृते स्वरितत्वे प्राप्नोति। स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति॥

अन्तरङ्गस्तर्ह्येकादेशः।

काऽन्तरङ्गता?

वर्णावाश्रित्यैकादेशः, पदस्य स्वरितत्वम्।

स्वरितत्वमप्यन्तरङ्गम्।

कथम्?

उक्तमेतत्—पदग्रहणं परिमाणार्थमिति।

उभयोरन्तरङ्गयोः परत्वात्स्वरितत्वम्, स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति॥

( प्रदीपः ) नित्य एकादेश इति। स्वरितत्वं तु कृत ऐकादेशेऽनच्कत्वान्न प्राप्नोतीत्यनित्यम्[1]॥

पदस्य[2] स्वरितत्वमिति। 'तित्स्वरितम्'इत्यस्य 'अनुदात्तं पदमेकवर्जम्' इत्यनेनैकवाक्यत्वात्॥ आन्तर्यत इति। स्वरितेऽनुदात्तस्य सद्भावात्॥

( ६१३४ खण्डनोपष्टम्भकवार्तिकम्॥ ९॥ )

॥ * ॥ लिङ्गविशिष्टग्रहणाद्वा॥ * ॥

( भाष्यम् ) अथवा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवमत्र स्वरितत्वं भविष्यति॥

( प्रदीपः ) लिङ्गविशिष्टेति। 'तित् स्वरितम्' इत्यत्र 'तिदिति प्रत्ययग्रहणम्'इति वचनात् 'प्रत्ययग्रहणे यस्मात्स विहितः'इति तदन्तस्य ग्रहणात्तस्य च प्रातिपदिकत्वात् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'इति परिभाषोपस्थानात्। न चेयं स्वरूपविधावेव परिभाषोपतिष्ठते इति 'ङ्याप्प्रातिपदिकात्' इत्यत्र प्रतिपादितम्॥

( उद्योतः ) ननु 'तित्स्वरितम्' इत्यत्र तितः शब्दरूपस्य ग्रहणात्प्रातिपदिकग्रहणाभावेन कथं लिङ्गविशिष्टग्रहणम्? अत आह—तित्स्वरितमित्यत्रेति॥

( वार्तिकावतरणे प्रयोजनभाष्यम् )

पूर्वपदान्तोदात्तत्वं च प्रयोजनम्—गुडोदकम्, मथितोदकम्। पूर्वपदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति, यथा शक्येत कर्तुम्—उदकेऽकेवले पूर्वपदस्यान्त उदात्तो भवतीति।

क्व तर्हि स्यात्?

यत्रैकादेशो नास्ति—उदश्विदुदकम्॥

( प्रदीपः ) गुडोदकमिति। उभयाश्रयत्वादत्र[3] निषेधो न भवति। एकदेशविकृतस्यानन्यत्वादकशब्दस्याप्युदकशब्दग्रहणेन ग्रहणात् पूर्वपदं प्रत्यन्तवत्त्वमेवोपयुज्यते[4]॥

( उद्योतः ) ननूदकशब्दे परतः पूर्वपदस्यान्तोदात्तत्वविधाने नोभयाश्रयत्वात्कथमेतदन्तवत्त्वप्रयोजनम्? अत आह—उभयेति॥ निषेधः—अन्तादिवद्भावाभावः॥ एकदेशेति। ननु तेनैव न्यायेनौकारान्तस्य पूर्वपदत्वमपि स्यादिति भाष्यासङ्गतिः, इति चेन्न; तदेकदेशमात्रस्य[5] विकाराभावात्॥

( ६१३५ अवतरणोक्तप्रयोजनखण्डनवार्तिकम्॥ १०॥ )

॥ * ॥ पूर्वपदान्तोदात्तत्वं च॥ * ॥

( भाष्यम् ) पूर्वपदान्तोदात्तत्वं च विप्रतिषेधात्। पूर्वपदान्तोदात्तत्वं क्रियतामेकादेश इति, किमत्र कर्तव्यम्?

परत्वात्पूर्वपदान्तोदात्तत्वम्। पूर्वपदान्तोदात्तस्यावकाशः-उदश्विदुदकम्। एकादेशस्यावकाशः-दण्डाग्रम्, क्षुपाग्रम्।

इहोभयं प्राप्नोति—मथितोदकम्, गुडोदकम्।

पूर्वपदान्तोदात्तत्वं भवति विप्रतिषेधेन॥

स चावश्यं विप्रतिषेध आश्रयितव्यः।

( प्रदीपः ) एतत्[6]प्रयोजननिराकरणायाह—पूर्वपदान्तोदात्तत्वमिति। ननु वर्णाश्रयत्वादेकादेशोऽन्तरङ्गः, पूर्वपदोत्तरपदाश्रयत्वात् स्वरो[7] बहिरङ्गः-इत्ययुक्तोऽयं विप्रतिषेधः।

---

१ 'एकादेशेऽतित्वात्' इति झ. पाठः॥

२ पदस्य स्वरितत्वमिति प्रतीकस्य पाठः क. ठ-पुस्तकयोर्न दृश्यते॥

३ 'उभयाश्रयत्वादेव निषेधो' इति क. पाठः॥

४ एकदेशेति। एकदेशविकृतमिति परिभाषणान्त्रादित्वापेक्षेति नोभयत आश्रयणमित्यर्थः॥

५ एकदेशमात्रस्येति। अकारोकारविकारत्वात्। न च समुदायस्यावपवानतिरेकादकारविकारत्वमोकारस्येति वाच्यम्। श्वपुच्छदृष्टान्तबलेन तदवयवमात्रविकारस्यैव ग्रहणबोधनमित्याशयात्॥

६ एतदिति। पूर्वपदान्तोदात्तत्वं च प्रयोजनमिति भाष्यकृदुक्तप्रयोजनमित्यर्थः॥

७ स्वरो बहिरङ्ग इति। गुणवृद्ध्याद्येकादेशापेक्षया 'उदकेऽकेवले' इति स्वरः पदद्वयाश्रयत्वाद्बहिरङ्ग इति भावः॥

नेदमपूर्वं चोद्यते । 'एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात्' इति वक्ष्यमाणत्वात्, 'नेन्द्रस्य परस्य' इति ज्ञापकाश्रयेण च परिहरिष्यते ॥

( उद्द्योतः ) ज्ञापकेति । अन्तरङ्गोऽप्येकादेशः पूर्वपदोत्तरपदनिमित्तकार्यात्पूर्वं न प्रवर्तेत इत्यर्थः ॥

( ६१३६ विप्रतिषेधप्रयोजनवार्तिकम् ॥ ११ ॥ )

॥*॥ एकादेशे हि स्वरिताप्रसिद्धिः ॥*॥

( भाष्यम् ) एकादेशे हि स्वरितस्याप्रसिद्धिः स्यात् । यो हि मन्यते—अस्त्वत्रैकादेशः, एकादेशे कृते पूर्वपदान्तोदात्तत्वं भविष्यति—इति, स्वरितत्वं तस्य न सिध्यति—'स्वरितो वाऽनुदात्ते पदादौ' ( ८।२।६ ) इति । गुडोदकम्, मथितोदकम् ॥

( प्रदीपः ) स्वरितत्वं तस्य न सिद्ध्यतीति । एकादेशस्योदात्तत्वमेव पूर्वपदान्तोदात्तत्वेन स्यात् । पूर्वं तु पूर्वपदान्तोदात्तत्वे सति 'अनुदात्तं पदमेकवर्जम्' इत्युदकशब्दोऽनुदात्त इत्येकादेशः पक्षे स्वरितो भवति ॥

( उद्द्योतः ) पक्षे स्वरित इति । पदादावनुदात्ते परत उदात्तेन सहैकादेशो वा स्वरित इत्यर्थकेन 'स्वरितो वा—' इति सूत्रेणेत्यर्थः ॥

( वार्तिकावतरणेऽन्तवत्त्वप्रयोजनभाष्यम् )

कृदन्तप्रकृतिस्वरत्वं च प्रयोजनम् । प्राटिता प्राशिता । कृद्गत्योरेकादेशो गतेरन्तवद्भवति । यथा शक्यते कर्तुम्-गतिकारकोपपदात्कृदन्तमुत्तरपदं प्रकृतिस्वरं भवति-इति ।

क्व तर्हि स्यात्?

यत्र नैकादेशः—प्रकारकः, प्रकरणम् ॥

( प्रदीपः ) प्राशितेति । तृच् । तृनि तु 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वरो भवति ॥

( ६१३७ भाष्योक्तप्रयोजनान्यथासिद्धिवार्तिकम् ॥१२॥ )

॥ * ॥ कृदन्तप्रकृतिस्वरत्वं च ॥ * ॥

( भाष्यम् ) कृदन्तप्रकृतिस्वरत्वं विप्रतिषेधात् । कृदन्तप्रकृतिस्वरत्वं क्रियतामेकादेश इति, किमत्र कर्तव्यम्?

कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन ।

कृदन्तप्रकृतिस्वरस्यावकाशः—प्रकारकः, प्रकरणम् ।

एकादेशस्यावकाशः—दण्डाग्रम्, क्षुपाग्रम् ।

इहोभयं प्राप्नोति—प्राटिता, प्राशिता ।

कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन ॥

स चावश्यं विप्रतिषेध आश्रयितव्यः ।

( ६१३८ अन्तवत्त्वेनासिद्धिबोधकवार्तिकम् ॥ १३ ॥ )

॥ * ॥ एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात् ॥ * ॥

( भाष्यम् ) यो हि मन्यते—अस्त्वत्रैकादेशः, एकादेशे कृते कृदन्तप्रकृतिस्वरत्वं भविष्यतीति, कृदन्तप्रकृतिस्वरत्वं तस्य न सिध्यति ।

किं कारणम्?

उत्तरपदस्यापरत्वात् ।

न हीदानीमेकादेशे कृत उत्तरपदं परं भवति ।

ननु चान्तादिवद्भावेन परम् ।

उभयत आश्रये नान्तादिवत् ॥

( प्रदीपः ) न हीदानीमिति । एकादेशेन व्यवधानात् । न चैकदेशविकृतस्यानन्यत्वेनोत्तरपदं परं भविष्यति, एकादेशस्य तु पूर्वं प्रत्यन्तवद्भावेन स्वरः सेत्स्यति—इति युक्तं कल्पयितुम् । प्राशनमित्यादौ दोषप्रसङ्गात् । तथाहि—अशनशब्दो लित्स्वरेणाद्युदात्तः, तत्रैकादेशस्य पूर्वं प्रत्यन्तवत्त्वे प्रत्ययात् पूर्वं उदात्तभावो नास्तीति कथमुत्तरपदस्य स्वरः स्यात्? तस्मात् पूर्वं स्वरः कर्तव्यः, पश्चादेकादेशः ॥

( उद्द्योतः ) एकादेशेन व्यवधानादिति । एकादेशेन तयोर्भेदस्य तिरोधानादित्यर्थः ॥ कथमुत्तरपदस्येति । 'बहुव्रीहौ प्रकृत्या—' इत्यादिनेवानेनापि उदात्तस्वरितयोगिन एवोत्तरस्य प्रकृतिस्वर इति भावः । कृतः प्रत्ययत्वेन 'प्रत्ययग्रहणे—' इति परिभाषया यतः कृद्विहितस्तदन्तमुत्तरपदं न परं भवतीति भाष्यार्थः । टकारादिमात्रेऽदृत्वादिप्रत्यभिज्ञानाभावे नैकदेशविकृतन्यायविषयाभावात् । स्थानिवत्त्वं तु न, शास्त्रीयादेशाभावात् ॥ 'ननु चान्तवद्भावेन—' इत्येकदेशिना शङ्कितेऽपर एकदेश्याह—उभयत इति (भाष्ये) । तेनातिदेशेन परत्वालाभादिति परे ॥

(६१३९ विप्रतिषेधबोकवार्तिकम् ॥ १४ ॥)

॥ * ॥ उत्तरपदवृद्धिश्चैकादेशात् ॥ * ॥

( भाष्यम् ) उत्तरपदवृद्धिश्चैकादेशाद्भवति विप्रतिषेधेन ।

उत्तरपदवृद्धेरवकाशः—पूर्वत्रैगर्तकः, अपरत्रैगर्तकः ।

एकादेशस्यावकाशः—दण्डाग्रम्, क्षुपाग्रम् ।

इहोभयं प्राप्नोति—पूर्वैषुकामशमः, अपरैषुकामशमः ।

उत्तरपदवृद्धिर्भवति विप्रतिषेधेन ॥

( प्रदीपः ) पूर्वत्रैगर्तक इति । पूर्वेषु त्रिगर्तेषु भव इति तद्धितार्थे समासः । 'सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य' इति तदन्तविधिना 'अवृद्धादपि—' इति वुञ् प्रत्ययः । 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धिः । ननु च 'प्राचां ग्रामनगराणाम्' इत्य-

स्या वृद्धेरवकाशो दर्शनीयः । एवं तर्हि प्रकरणाश्रयेणोक्तम् । इदं तूदाहरणम्-पूर्वकार्ष्णमृत्तिक इति ॥

(उद्योतः) अथैकादेशस्यान्तरङ्गत्वेन विप्रतिषेधायुक्तत्वं निरसितुं ज्ञापकेनात्रान्तरङ्गपरिभाषाया अप्रवृत्तिमाह-उत्तरपदवृद्धिश्चैकादेशादिति (भाष्ये)॥ ननु च प्राचामिति। इषुकामशमीशब्दस्य प्राग्ग्रामवाचित्वात् 'प्राचां ग्रामनगराणाम्' इत्यस्या एव वृद्धेः प्राप्तत्वादित्यर्थः। त्रिगर्तस्तु जनपदो न ग्रामनगरवाचीति भावः॥ प्रकरणेति। उत्तरपदवृद्धिप्रकरणस्यैकादेशस्य च विप्रतिषेध आश्रीयत इत्यर्थः॥ विशेषाश्रयणे तूदाहरणं दर्शयति—पूर्वकार्ष्णेति । 'उभयाश्रयणादन्तादिवद्भावाभावात्' इति पाठः । ज्ञापकपरं भाष्यं विप्रतिषेधसूत्रे व्याख्यातम्। वृक्षे-पचे-वृक्षौ-इत्यादौ यस्माद्विधिरित्याश्रयणादुभयाश्रयणेनोदाहरणत्वं चिन्त्यमिति केचित्, तन्न । एकदेशविकृतन्यायेन वृक्ष्-इत्यस्य वृक्षशब्दत्वेन पूर्वान्तवत्त्वानुपयोग इत्याशयात् ॥

( ६१४० एकादेशस्यान्तरङ्गत्वबोधकवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात् ॥ * ॥

( भाष्यम् ) एकादेशस्तु प्राप्नोति।

किं कारणम् ?

अन्तरङ्गबलीयस्त्वात्। अन्तरङ्गं बलीयो भवति॥

तत्र को दोषः?

( ६१४१ एकादेशस्यान्तरङ्गत्वे दोषवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ तत्र वृद्धिविधानम् ॥ * ॥

( भाष्यम् ) तत्र वृद्धिर्विधेया ॥

( प्रदीपः ) तत्र वृद्धिविधानमिति । एकादेशस्योभयाश्रयणादन्तादिवद्भावाभावाद्वृद्धेरप्रसङ्गात् ॥

( एकादेशसाधकभाष्यम् )

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—पूर्वोत्तरपदयोस्तावत्कार्यं भवति, नैकादेशः-इति, यदयम् 'नेन्द्रस्य परस्य' (७।३।२२) इति प्रतिषेधं शास्ति।

कथं कृत्वा ज्ञापकम्?

इन्द्रे द्वावचौ। तत्रैकः 'यस्य-' इति लोपेन ह्रियते, अपर एकादेशेन। अनचूक इन्द्रः संपन्नः। तत्र को वृद्धेः प्रसङ्गः? पश्यति त्वाचार्यः—पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति, ततो 'नेन्द्रस्य परस्य' इति प्रतिषेधं शास्ति ॥

१ 'सुतिङ्ङाब्विधिषु' इति क्व. निर्दिष्टः पाठः ॥

( वार्तिकावतरणभाष्यम् )

अथादिवत्त्वे कानि प्रयोजनानि?

( ६१४२ आदिवत्त्वे प्रयोजनवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम् ॥ * ॥

( भाष्यम् ) आदिवत्त्वे प्रगृह्यसंज्ञायां प्रयोजनम्। अग्नी इति, वायू इति। द्विवचनाद्विवचनयोरेकादेशो द्विवचनस्यादिवद्भवति। यथा शक्येत कर्तुम्—'ईदूदेद्द्विवचनं प्रगृह्यम्' (१।१।११) इति।

क्व तर्हि स्यात्?

यत्रैकादेशो न भवति—त्रपुणी इति, जतुनी इति ॥

( ६१४३ आदिवत्त्वे प्रयोजनवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ सुप्तिङाब्विधिषु[१] ॥ * ॥

( भाष्यम् ) सुप्तिङाब्विधिषु प्रयोजनम्।

सुप्—वृक्षे तिष्ठति, प्लक्षे तिष्ठति। सुबसुपोरेकादेशः सुप आदिवद्भवति। यथा शक्यते कर्तुम्-सुबन्तं पदम्-इति।

क्व तर्हि स्यात्?

यत्रैकादेशो न भवति—वृक्षस्तिष्ठति, प्लक्षस्तिष्ठति। सुप् ॥

तिङ्—पचे, यजे-इति । तिङतिङोरेकादेशस्तिङ आदिवद्भवति । यथा शक्यते कर्तुम्—तिङन्तं पदम्-इति।

क्व तर्हि स्यात्?

यत्रैकादेशो न भवति—पचति, यजति। तिङ् ॥

आप्—खट्वा, माला। आबनापोरेकादेश आप आदिवद्भवति । यथा शक्यते कर्तुम्—आबन्तात्सोर्लोपो भवति-इति।

क्व तर्हि स्यात्?

यत्रैकादेशो न—कुञ्चा, उष्णिहा, देवविशा ॥

( ६१४४ आदिवत्त्वे प्रयोजनवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ आङ्ग्रहणे पदविधौ ॥ * ॥

( भाष्यम् ) आङ्ग्रहणे पदविधौ प्रयोजनम्। अद्याहते, कदाहते । आङनाङोरेकादेश आङ आदिवद्भवति । यथा शक्येत कर्तुम्—'आङो यमहनः' (१।३।२८) इत्यात्मनेपदं भवति-इति।

क्व तर्हि स्यात्?

यत्रैकादेशो न—आहते ॥

( प्रदीपः ) अद्याहत इति । वाक्यसंस्कारपक्षाश्रयाण्येतान्युदाहरणानि ॥

( उद्योतः ) वाक्यसंस्कारेति । पदसंस्कारे तु आहत इत्यादौ आत्मनेपदे कृते पश्चादयशब्देन सम्बन्धे दीर्घ इतीष्टं सिध्यतीति भावः ॥

( ६१४५ आदिवत्त्वे प्रयोजनवार्तिकम् ॥ २० ॥ )

॥ * ॥ आटश्च वृद्धिविधौ ॥ * ॥

( भाष्यम् ) आटश्च वृद्धिविधौ प्रयोजनम् । अचैहिष्ट, कदैहिष्ट । आटोऽयशब्दस्य चैकादेश आट आदिवद्भवति । यथा शक्येत कर्तुम्—'आटश्च' अचि वृद्धिर्भवति-इति ।

क्व तर्हि स्यात् ?

यत्रैकादेशो न—ऐहिष्ट, ऐक्षिष्ट ॥

( ६१४६ आदिवत्त्वे प्रयोजनवार्तिकम् ॥ २१ ॥ )

॥ * ॥ कृदन्तप्रातिपदिकत्वे च ॥ * ॥

( भाष्यम् ) कृदन्तप्रातिपदिकत्वे च प्रयोजनम् । धारयः, पारयः । कृदकृतोरेकादेशः कृत आदिवद्भवति । यथा शक्येत कर्तुम्—कृदन्तं प्रातिपदिकमिति ।

क्व तर्हि स्यात् ?

यत्रैकादेशो न[२]—कारकः, हारकः ॥

( प्रदीपः ) धारय इति । धारयतीति धारयः, 'अनुपसर्गाल्लिम्प—' इति शः, कर्तरि शप् ॥

( ६१४७ अन्तादिवद्भावनिषेधवार्तिकम् ॥ २२ ॥ )

॥ * ॥ नाभ्यासादीनां ह्रस्वत्वे ॥ * ॥

( भाष्यम् ) अभ्यासादीनां ह्रस्वत्वे नान्तादिवद्भवतीति वक्तव्यम् ।

के पुनरभ्यासादयः ?

अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनैर्ह्रस्वत्वानि ।

अभ्यासह्रस्वत्वम्—उपेयाज, उपोवाप ।

ऊहेर्ह्रस्वत्वम्—उपोह्यते, प्रोह्यते, परोह्यते ।

अम्बार्थ-नदी-नपुंसक-उपसर्जनह्रस्वत्वानि—अम्बात्र, अक्कात्र । कुमारीदम्, किशोरीदम् । आराशस्त्रीदम्, धानाशष्कुलीदम् । निष्कौशाम्बीदम्, निर्वाराणसीदम् । अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनग्रहणेन ग्रहणाद्ध्रस्वत्वं प्राप्नोति ॥

( प्रदीपः ) उपेयाजेति । उप इजाय इति स्थिते 'आ-ह्रुणः' तस्य परं प्रत्यादिवद्भावाद् ह्रस्वत्वप्रसङ्गः ॥

प्रोह्यत इति । अण्ग्रहणानुवृत्तिम् 'उभयत आश्रयणे नान्तादिवदित्' इत्येतच्चानपेक्ष्येदमुक्तम् ॥

अम्बात्रेति । 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वे कृते एकादेशे च तस्यान्तवद्भावात् पुनर्ह्रस्वप्रसङ्गः ॥ निष्कौशाम्बीदमिति । नपुंसकह्रस्वात्परत्वादुपसर्जनह्रस्वः ॥

( उद्योतः ) अण्ग्रहणानुवृत्तिमिति । आ उह्यते—समोह्यते इत्यत्र ह्रस्वव्यावृत्तये 'केऽण—' इत्यत 'उपसर्गाद्ध्रस्व—' इति सूत्रेऽण इत्यनुवृत्तिराश्रितेति भावः ॥

परत्वादुपसर्जनह्रस्व इति । कार्यैक्ये विप्रतिषेधाभावादिदं चिन्त्यम् । तस्मात्पदान्तरसंबन्धावगम्यनपुंसकत्वप्रयुक्तह्रस्वत्वात्पूर्वमेवोपसर्जनह्रस्वत्वमिति भाष्याशयमन्ये ॥

( ६१४८ निषेधानर्थक्यबोधकवार्तिकम् ॥ २३ ॥ )

॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) न वा एतद्वक्तव्यम् ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । अन्तरङ्गं ह्रस्वत्वम्, बहिरङ्गा एते विधयः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

( उद्योतः ) भाष्ये—अन्तरङ्गं ह्रस्वत्वमिति । अन्तरङ्गत्वात्पूर्वं ह्रस्वत्वे कृते 'लक्ष्ये लक्षणस्य—' इति न्यायेन पुनरप्रवृत्तिः । विकारभेदेन न लक्ष्यभेद इति भावः । एवं च 'ह्रस्वत्वे कृते' इति कैयटश्चिन्त्यः । ननूहेर्ह्रस्वत्वं कथमन्तरङ्गम् ? उपसर्गसम्बन्धनिमित्तत्वात्—इति चेन्न । 'बहिरङ्गलक्षणत्वात्' इत्यस्योपलक्षणत्वात् । 'वार्णादाङ्गम्' इत्यनेन तत्र पूर्वं ह्रस्वत्वमिति बोध्यम् । एवञ्चाभीयादिलादेरपि सत्यभिधानेऽनयैव रीत्या सिद्धौ 'उभयत आश्रयणे नान्तादिवत्' इत्यस्योदाहरणान्तरं मृग्यम् । प्रकृतसूत्रे भाष्ये तु न किञ्चित्तदुदाहरणं दर्शितम् ॥

( ६१४९ अन्तादिवद्भावनिषेधवार्तिकम् ॥ २४ ॥ )

॥ * ॥ वर्णाश्रयविधौ च ॥ * ॥

(भाष्यम्) वर्णाश्रयविधौ च नान्तादिवद्भवतीति वक्तव्यम् ।

किं प्रयोजनम् ?

( ६१५० अन्तादिवद्भावनिषेधप्रयोजनवार्तिकम् ॥ २५ ॥ )

॥ * ॥ प्रयोजनं खट्वाभिर्जुहावास्या अश्व इति ॥ * ॥

( भाष्यम् ) इह-खट्वाभिः, मालाभिः-अतो भिस ऐस्भवतीत्यैस्भावः प्राप्नोति । नैष दोषः । तपरकरणसामर्थ्यान्न भविष्यति ।

अस्त्यन्यत् तपरकरणे प्रयोजनम् ।

किम् ?

कीलालपाभिः, शुभंयाभिः ॥

१ 'आटश्च वृद्धिर्भवतीति' इति क. ट. पाठः ॥

२ 'न—कार्यम्, हार्यम् ।' इति क. च. पाठः ॥

१ 'नपुंसकोपसर्जनानि' इति छ. च. पाठः ॥

जुहाव—'आत औ णलः' (७।१।३४) इत्यौत्वं प्राप्नोति ॥

अस्या अश्व इति—'एङः पदान्तादति' (६।१।१०९) इति पूर्वत्वं प्राप्नोति ॥

(प्रदीपः) जुहावेति । ह्वयतेर्लिटि तिपि णलि 'अभ्यस्तस्य च' इति सम्प्रसारणम्, 'संप्रसारणाच्च' इति पूर्वैकादेशः, तस्याकारं प्रत्यादिवद्भावाण्णल औत्वप्रसङ्गः ॥

अस्या अश्व इति । इदमश्चतुर्थ्येकवचनम्, त्यदाद्यत्वम्, टाप्, 'सर्वनाम्नः स्याड् ह्रस्वश्च' इति स्याट् ह्रस्वश्च, वृद्धिरेकादेशः, 'हलि लोपः' इतीद्रूपस्य लोपः, 'एचोऽयवायावः' इत्यैकारस्यायादेशः, 'लोपः शाकल्यस्य' इति यलोपः ॥

(६१५१ निषेधप्रत्याख्यानवार्तिकम् ॥ २६ ॥)

॥ * ॥ न वाऽताद्रूप्यातिदेशात् ॥ * ॥

(भाष्यम्) न वा वक्तव्यम् ।

किं कारणम्?

अताद्रूप्यातिदेशात् । न हि ताद्रूप्यमतिदिश्यते । रूपाश्रया वा एते विधयः, अताद्रूप्यान्न भविष्यन्ति ॥

(प्रदीपः) न वेति । कार्यमात्रमनेनातिदिश्यते न तु रूपम् । विशिष्टवर्णरूपाश्रयाश्चैते विधयो नातिदिश्यन्ते । तुक्यसिद्धवचनं चास्यार्थस्य लिङ्गम् । यदि हि वर्णाश्रयो विधिरनेनातिदिश्येत तदा—अधीत्य-प्रेत्य-इत्यादावेकादेशस्य ह्रस्वं प्रत्यादिवद्भावात्तुकः सिद्धत्वात्तुक्यसिद्धत्वं न ब्रूयात् ॥

(उद्द्योतः) कार्यमात्रमिति । अवयववाचकान्तादिशब्दाभ्यामाक्षिप्तसमुदायनिमित्तकार्यमात्रमित्यर्थः ॥ न तु रूपमिति । न त्वन्तावयवमात्रनिबन्धनं कार्यमित्यर्थः ॥ अमुमर्थं ज्ञापकेन साधयति—तुक्यसिद्धेति ॥

(१०८९ असिद्धवदतिदेशसूत्रम् ॥ ६ । १ । ४ आ. ५४)

## २५२३ षत्वतुकोरसिद्धः

॥ ६ । १ । ८६ ॥

(वार्तिकावतरणभाष्यम्)

किमर्थमिदमुच्यते?

(६१५२ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥)

॥ * ॥ षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ॥ * ॥

(भाष्यम्) षत्वतुकोरसिद्धत्वमुच्यते, आदेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ।

आदेशलक्षणप्रतिषेधार्थं तावत्—कोऽसिश्चत्[1], सोऽसिश्चत् । एकादेशे कृते इण इति षत्वं प्राप्नोति, असिद्धत्वान्न भवति ।

उत्सर्गलक्षणभावार्थं च—अधीत्य, प्रेत्य । एकादेशे कृते 'ह्रस्वस्य-' इति तुन्न प्राप्नोति, असिद्धत्वाद्भवति ॥

अस्ति प्रयोजनमेतत् ।

किं तर्हीति?

(प्रदीपः) उत्सर्गेति । उत्सर्गः-स्थानी, सामान्येनोत्सृष्टत्वात् ॥

(उद्द्योतः) रूढियोगमपहरतीति न्यायस्य प्रकरणपर्यालोचनया त्याग इत्याशयेनाह—उत्सर्ग इति ॥ सामान्येन—साधारण्येन ॥ उत्सृष्टत्वात्—बोधितत्वादित्यर्थः ॥

(६१५३ सूत्राक्षेपवार्तिकम् ॥ २ ॥)

॥ * ॥ तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् ॥ * ॥

(भाष्यम्) तत्रोत्सर्गलक्षणस्य कार्यस्याप्रसिद्धिः । अधीत्य, प्रेत्य ।

किं कारणम्?

उत्सर्गाभावात् । ह्रस्वस्येति उच्यते, न चात्र ह्रस्वं पश्यामः ॥

ननु चात्राप्यसिद्धवचनात्सिद्धम् ॥

(६१५४ आक्षेपसमर्थकवार्तिकम् ॥ ३ ॥)

॥ * ॥ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ॥ * ॥

(भाष्यम्) असिद्धवचनात्सिद्धमिति चेत्, तन्न ।

किं कारणम्?

नान्यस्यासिद्धवचनादन्यस्य भावः । न ह्यन्यस्यासिद्धवचनादन्यस्य प्रादुर्भावो भवति । न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति ॥

(प्रदीपः) नान्यस्येति । कार्यासिद्धत्वाश्रयेणेदमुच्यते । आदेशेन स्थानिनो निवर्तितत्वात् सत्यप्यादेशस्यासिद्धत्वे स्थानिनः प्रत्यापत्त्यभावात् ॥

(उद्द्योतः) कार्यासिद्धत्वेति । अत्र पक्षे निरधिष्ठानारोपासम्भवेन लक्ष्ये कार्यप्रवृत्तिरावश्यकीति भावः ॥

१ 'कोऽसिषत्, सोऽसिषत्' इति क. ट. पाठः ॥

( ६१५५ एकदेशिन उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ तस्मात्स्थानिवद्वचनमसिद्धत्वं च ॥ * ॥

( भाष्यम् ) तस्मात्स्थानिवद्भावो वक्तव्यः, असिद्धत्वं च ।

अधीत्य, प्रेत्येति स्थानिवद्भावः ।

कोऽसिंश्चत्, सोऽसिञ्चदित्यत्रासिद्धत्वम् ॥

( प्रदीपः ) असिद्धत्वं चेति । षत्वेऽसिद्धत्वम्, स्थानिवद्भावे तु स्वाश्रयस्यानिवर्तनात् षत्वप्रसङ्गः ॥

( उद्योतः ) ननु षत्वमपि स्थानिवत्त्वेन सिद्धमत आह—स्थानिवद्भावे त्विति । न च स्थानिवद्भावेन षत्वविषयेऽभावातिदेशो वाच्यः, एवञ्च तद्विरुद्धत्वात्स्वाश्रयं षत्वं नेति वाच्यम् । एकेन स्थानिवत्पदेन तुगंशे भावातिदेशः, षत्वेऽभावादतिदेश इत्यस्य द्वन्द्वसमासेन दुरुपपादत्वात् । योगविभागेऽर्थाधिकारशङ्का स्यादिति तद्वारणेन स्पष्टार्थमसिद्धत्वातिदेश एवाश्रित इति भावः ॥

( ६१५६ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात् ॥ * ॥

( भाष्यम् ) स्थानिवद्वचनमनर्थकम् ।

किं कारणम् ?

शास्त्रासिद्धत्वात् । नानेन कार्यस्यासिद्धत्वं क्रियते ।

किं तर्हि ?

शास्त्रासिद्धत्वमनेन क्रियते । एकादेशशास्त्रं तुक्शास्त्रेऽसिद्धं भवतीति ॥

( प्रदीपः ) एकादेशशास्त्रमिति । ततश्च पूर्वं तुक्शास्त्रं प्रवर्तते, पश्चादेकादेशशास्त्रम्-इत्युक्तं भवति ॥

( वार्तिकावतरणे-उपसंख्यानभाष्यम् )

संप्रसारणङीट्सु सिद्धः । संप्रसारणङीट्सु सिद्ध एकादेश इति वक्तव्यम् ।

शकहूषु, परिवीषु । संप्रसारण ।

ङि—वृक्षे छत्रं, वृक्षे च्छत्रं, प्लक्षे छत्रं, प्लक्षे च्छत्रम् । ङि ।

इट्—अपचे छत्रम्, अपचे च्छत्रम्, अयजे छत्रम्, अयजे च्छत्रम् ॥

( प्रदीपः ) शकहूष्विति । शकान् ह्वयंतीति क्विप्, सम्प्रसारणम्, पूर्वैकादेशः, 'हलः'इति दीर्घत्वम् । तत्रैकादेशस्यासिद्धत्वादिण उत्तरस्य विधीयमानं षत्वं न स्यात् ॥

वृक्षे छत्रमिति । एकादेशस्यासिद्धत्वान्नित्यो ह्रस्वाश्रयस्तुक् स्यात् । 'दीर्घात्–पदान्ताद्वा'इति विकल्पेन त्विष्यते ॥

१ 'कोऽसिचत्, सोऽसिचत्' इति क. पाठः । 'कोऽसिचत्, सोऽसिचत्' इति ट. पाठः । 'कोऽसिचत्, योऽसिचत्' इति छ. पाठः ॥

( ६१५७ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्यासिद्धवचनात् ॥ * ॥

( भाष्यम् ) संप्रसारणङीट्सु सिद्ध एकादेशः ।

कुतः ?

पदान्तपदाद्योरेकादेशस्यासिद्धवचनात् । पदान्तपदाद्योरेकादेशोऽसिद्धो भवतीत्युच्यते, न चैष पदान्तपदाद्योरेकादेशः ॥

यदि पदान्तपदाद्योरेकादेशोऽसिद्धः—सुसस्या ओषधीस्कृधि, सुपिप्पला ओषधीस्कृधि—अत्र षत्वं प्राप्नोति ।

तुग्विधिं प्रति पदान्तपदाद्योरेकादेशोऽसिद्धः, षत्वं प्रत्येकादेशमात्रमसिद्धं भवति ॥

यदि षत्वं प्रत्येकमात्रदेशामसिद्धम्—शकहूषु, परिवीषु-अत्र षत्वं न प्राप्नोति ॥

अस्तु तर्ह्यविशेषेण ।

कथं-सुसस्या ओषधीस्कृधि, सुपिप्पला ओषधीस्कृधि ?

नैष दोषः । भ्रातुष्पुत्रग्रहणं ज्ञापकम्-एकादेशनिमित्तात् षत्वप्रतिषेधस्य । यदयं कस्कादिषु भ्रातुष्पुत्रग्रहणं करोति तज्ज्ञापयत्याचार्यः—नैकादेशनिमित्तात्षत्वं भवतीति ।

यद्येतज्ज्ञाप्यते, शकहूषु, परिवीषु-अत्र षत्वं न प्राप्नोति ।

तुल्यजातीयस्य ज्ञापकम् ।

किं च तुल्यजातीयम् ?

यः कुप्वोः ॥

यद्येवं, वेञोऽप्रत्यये परत उरिति प्राप्नोति, उदिति चेष्यते ।

यथा लक्षणमप्रयुक्ते ।

अथवा—नैवं विज्ञायते-पूर्वस्य च पदादेः परस्य च पदान्तस्येति ।

कथं तर्हि ?

परस्य च पदादेः पूर्वस्य पदान्तस्येति ॥

( प्रदीपः ) पदान्तपदाद्योरिति । ननु तुल्ये वाचनिकत्वे को विशेषः—येन 'संप्रसारणङीट्सु सिद्धः' इति प्रत्याख्यायते 'पदान्तपदाद्योः' इति तु क्रियते । उच्यते—लाघवात्पदस्यैव वक्तव्यम् । अन्तादिग्रहणं च पूर्वसूत्रादनुवर्तते । तेन पदान्तपदाद्योरेकादेशोऽसिद्धो भवतीत्यर्थो लभ्यते ॥

**ओषधीस्कुधीति ।** औषधिशब्दाद् द्वितीयाबहुवचनम्, 'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घः, ततः पूर्वसवर्णदीर्घः, रुत्वविसर्जनीयौ, 'कःकरत्करति–' इति विसर्जनीयस्य सकारो विधीयते । 'इणः षः'इत्यधिकारादिण उत्तरस्य षकारः, तत्रैकादेशस्य 'पदान्तपदाद्योः–' इति वचनादसिद्धत्वाभावात् षत्वप्रसङ्गः । असिद्धत्वे त्वेकादेशस्य षत्वाप्रसङ्गात्सकारः सिध्यति ॥

**भ्रातुष्पुत्रग्रहणमिति ।** 'ऋतो विद्यायोनिसंबन्धेभ्यः' इत्यलुक्, 'ऋत उत्' इत्युकार एकादेशः, रपरत्वम्, 'रात्सस्य' इति सलोपः, रेफस्य विसर्जनीयः । तत्रैकादेशस्य सिद्धत्वात् 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वे सिद्धे कस्कादिषु षत्वार्थं भ्रातुष्पुत्रग्रहणं ज्ञापयति–नैकादेशात्परस्य विसर्जनीयस्य षत्वं भवतीति ॥

**वेञ इति ।** वकारस्य संप्रसारणम्, प्रथमैकवचनम्, ततः सावपि पदमिति पदसंज्ञायां सत्यामुकारः पदादिराकारः पदान्त इति तयोरेकादेशस्यासिद्धत्वाभावाद् ह्रस्वान्तत्वाभावात्तुग्न प्राप्नोतीत्यर्थः ॥

**यथालक्षणमिति ।** मा भूत्तुगागम इत्यर्थः ॥

**अथ वेति ।** पूर्वपरयोरित्यनुवर्तते, अन्तादिग्रहणं च । तत्र यथासंख्यसंबन्धात् पूर्वस्य पदस्यान्तस्य, परस्य पदस्यादेश्चैकादेशोऽसिद्ध इत्यर्थः संपद्यते । आकारश्चात्र पदादिर्न भवति, नाप्युकारः पदान्त इत्यसिद्धत्वाभावात्तुग् भवत्येवेत्यर्थः ॥ किमर्थं षत्वतुकोरेकादेशस्यासिद्धत्वमुच्यते[२] यावता द्विपदाश्रयत्वाद्बहिरङ्गत्वादेवैकादेशस्यासिद्धत्वं सिद्धम् । एवं तर्हि ज्ञापनार्थम् । एतज्ज्ञापयति–अचोरानन्तर्ये बहिरङ्गस्यापि नासिद्धत्वं भवति । तेनाक्षद्यूरित्यत्रोठोऽसिद्धत्वाभावाद्यणादेश उपपन्नो भवति ॥

**( उद्द्योतः ) सम्प्रसारणङीट्स्विति ।** स्थानिनोऽधिकरणत्वविवक्षया सप्तमी ॥ ननु 'वृक्षे छत्रम्'इत्यत्रेष्यत एव तुक्, अत आह—**एकादेशस्येति ॥**

**ओषधेश्च विभक्ताविति ।** मन्त्रविषयेऽस्य प्राप्त्यैतदुपन्यासः ॥ **एकादेशस्य—**पूर्वसवर्णदीर्घरूपस्य ॥ **असिद्धत्वे त्विति ।** इण उत्तरत्वाभावादिति भावः ॥

**एकादेशात्परस्येति ।** एकादेशशास्त्रं निमित्तं यस्येति वार्तिकार्थ इति भावः ॥

भाष्ये—**यद्येवमिति ।** 'संप्रसारणङी–'इति वार्तिकप्रत्याख्याने इत्यर्थः ॥

**प्रथमैकवचनमिति ।** यद्यप्यन्तरङ्गत्वात्सुपः पूर्वमेकादेशस्तुक्च, तथापि पदस्य विभज्यान्वाख्यान इदम् ॥

**पूर्वपरयोरित्यनुवर्तत इति ।** 'अधीत्य' इत्यादौ तुकिसद्धिस्तु सुबन्तेन समासे बोध्येति भावः । पदशब्देनार्थवत उपलक्षणाददोष इत्यन्ये ॥ **यावतेति ।** एतद्विप्रतिषेधसूत्रे व्याख्यातम् । वस्तुतस्तु षत्वस्य त्रैपादिकत्वात्तत्र बहिरङ्गपरिभाषाप्राप्तिरेव न । यद्यपि तुकि सा प्रवर्तते तथापि तस्या अनित्यत्वं तुक्यसिद्धवचनाज्ज्ञायते । अत एव 'ह्रस्वस्य–' इति सूत्रे ग्रामणिपुत्रे तुगसिद्धपरिभाषया व्यावर्तितः, क्वचित्तत्प्रवृत्तेः । नाजानन्तर्यपरिभाषा तु नास्त्येव, 'वाह ऊठ्' इति सूत्रे पुनरसिद्धपरिभाषोपन्यासवदिह तदुपन्यासाभावादित्याहुः ॥

( १०९० विधिसूत्रम् ॥ ६ । १ । ४ आ. ५५ )

## २५२४ आद्गुणः ॥ ६ । १ । ८७ ॥

( गुणाधिकरणम् )

( पदकृत्यभाष्यम् )

**गुणग्रहणं किमर्थम्, न आदेको भवतीत्युच्येत ?**

( प्रदीपः ) **गुणग्रहणमिति ।** वक्ष्यमाणान्नियमादाद्गुण एव भविष्यतीति **प्रश्नः ॥**

( उद्द्योतः ) **वक्ष्यमाणादिति ।** 'एचि वृद्धिरेव' 'एच्येव वृद्धिः' । 'उपसर्गादृतिधातावेव वृद्धिः' 'तादृशे धातौ वृद्धिरेव' इत्यादिकादित्यर्थः ॥

( गुणपदाभावे आक्षेपश्लोकभाष्यम् )

**आदेकश्चेद्गुणः केन**

**आदेकश्चेत्, गुणः केनेदानीं भविष्यति—खट्वेन्द्रः, मालेन्द्रः । खट्वोदकम्, मालोदकम् ।**

( समाधानश्लोकभाष्यम् )

**स्थानेऽन्तरतमो हि सः ।**

**स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति ॥**

**ऐदौतावपि तर्हि प्राप्नुतः ।**

(प्रदीपः) **स्थानेऽन्तरतमो हि स इति ।** पूर्वपरयोः कण्ठ्यतालव्ययोरन्तरतमः कण्ठ्यतालव्य एकारः, कण्ठोष्ठ्ययोस्तु कण्ठोष्ठ्य ओकारः ॥ **ऐदौतावपीति ।** ऐकारस्यापि कण्ठतालव्यत्वादौकारस्य कण्ठोष्ठ्यत्वाच्चेति भावः ॥

( समाधानश्लोकभाष्यम् )

**ऐदौतौ नैचि तावुक्तौ**

**ऐदौतौ न भविष्यतः ।**

**किं कारणम् ?**

**एचि ह्यैदौतावुच्येते ॥**

**इह तर्हि—खट्वर्श्यः, मालर्श्यः—ऋकारस्तर्हि प्राप्नोति ।**

( प्रदीपः ) **ऐदौतौ नैचीति ।** ऐदौतोरनेन सिद्धयोः 'वृद्धिरेचि' इति नियमार्थं भविष्यति—एच्येव वृद्धिर्भवतीति । उभयतो नियमश्च व्याख्यास्यते–वृद्धिरेवैचीति ॥

( उद्द्योतः ) नन्वेवं नियमे एचि एदोतावपि प्राप्नुत इत्यत आह—**उभयत इति ।** तन्त्रादिनेति भावः ॥

१ 'प्राप्नोतीति भावः' इति च. पाठः ॥

२ 'षत्वतुकोरादेशस्य–' इति क. ठ. पाठः ॥

( समाधानश्लोकभाष्यम् )

**ऋकारो नोभयान्तरः ॥ १ ॥**

उभयोर्योऽन्तरतमस्तेन भवितव्यम्, न च ऋकार उभयोरन्तरतमः ॥

आकारस्तर्हि प्राप्नोति ।

( प्रदीपः ) नोभयान्तर इति । अकारस्तु शिष्यमाण एव रपरो भवतीति स्थानत उभयान्तरः ॥

( उद्द्योतः ) स्थानत उभयान्तर इति । 'अर्' इत्यवयवद्वारा कण्ठमूर्धन्य इत्यर्थः ॥

( समाधानश्लोकभाष्यम् )

**आकारो नर्तिधातौ सः**

आकारो न भविष्यति ।

किं कारणम् ?

ऋतिधातावाकार उच्यते तन्नियमार्थं भविष्यति—ऋकारादौ धातावेव, नान्यत्रेति ॥

प्लुतस्तर्हि प्राप्नोति ।

( समाधानश्लोकभाष्यम् )

**प्लुतश्च विषये स्मृतः ।**

विषये प्लुत[1] इत्युच्यते । यदा च स विषयः, भवितव्यमेव तदा प्लुतेन ॥

( प्रदीपः ) प्लुतश्चेति । प्लुतविधाने सति यस्मिन् विषये प्लुतो विहितस्तस्मिन्नप्यनेनैव भाव्यम्, अस्मिन् कर्तव्य आष्टमिकस्य प्लुतस्यासिद्धत्वात्–इति पक्षेऽनुवादप्रसङ्गात् प्लुतो न भविष्यति–इत्यर्थः ॥

( उद्द्योतः ) ननु दूराद्धूतादिविषये प्लुतविधानेऽप्यन्यत्रानेन प्लुतः प्राप्नोत्येवेत्यत आह—प्लुतविधाने इति । तत्र दूराद्धूतादिविषयरूपे पक्षेऽनुवादत्वरूपवैयर्थ्यदोषप्रसङ्गः । क्वचिदनुवादत्वम्–क्वचिद्विधिरिति वैरूप्यप्रसङ्गश्चेत्यर्थः । केचित्तु—यदा स विषय इति । यदा दूराद्धूतादिविषयस्तदा भवत्येव प्लुत इति न विशेषः । दूराद्धूतादिविषयाभावे तु नानेन प्लुतविधानम्, उपेन्द्रादावनान्तर्यादिति[2] भावः । त्रिमात्रे स्थानिनि प्लुतापत्तिस्त्वग्रे क्रियत एवेत्याहुः ॥

( गुणपदप्रयोजनश्लोकभाष्यम् )

**आन्तर्यात् त्रिचतुर्मात्राः**

इदं तर्हि प्रयोजनम्—आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा-इन्द्रः—खट्वेन्द्रः । खट्वा-उदकं—खट्वोदकम् । खट्वा-ईषा—खट्वेषा । खट्वा-ऊढा—खट्वोढा । खट्वा-एलका—खट्वैलका । खट्वा-ओदनः—खट्वौदनः । खट्वा-ऐतिकायनः—खट्वैतिकायनः । खट्वा-औपगवः—खट्वौपगवः ॥

( प्रदीपः ) त्रिचतुर्मात्रा इति । प्लुताप्लुतप्रसङ्गे 'प्लुतश्च विषये स्मृतः' इति न्यायः, न तु प्लुतप्रसङ्गे–इति त्रिमात्रप्रसङ्ग उच्यते ॥

( उद्द्योतः ) नन्वनेनैव[3] न्यायेन त्रिमात्रत्वापादनमसङ्गतमत आह—प्लुताप्लुतेति । यथा–उपेन्द्रे । अत्र तु सर्वदा त्रिमात्र एव प्राप्नोतीति भावः ॥

( आक्षेपभाष्यम् )

अथ क्रियमाणेऽपि गुणग्रहणे कस्मादेवात्र त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ?

( समाधानश्लोकभाष्यम् )

**तपरत्वान्न ते स्मृताः ॥ २ ॥**

तपरे[4] च गुणवृद्धी ॥

( प्रदीपः ) तपरत्वान्न ते स्मृता इति । सतीह गुणग्रहणे गुणसंज्ञाविधौ तपरकरणात् त्रिमात्रचतुर्मात्राणां गुणसंज्ञाया अभावादप्रसङ्ग इत्यर्थः ॥

( तपरपदार्थबोधकभाष्यम् )

ननु च तः परो यस्मात्सोऽयं तपरः । नेत्याह ।

तादपि परस्तपरः । यदि तादपि परस्तपरः, 'ऋदोरप्' ( ३।३।५७ ) इहैव स्यात्—यवः, स्तवः । लवः, पवः—इत्यत्र न स्यात् ।

नैष तकारः ।

कस्तर्हि ?

दकारः ।

किं दकारे प्रयोजनम् ?

अथ किं तकारे ?

असंदेहार्थस्तकारः ।

यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि ॥

( उद्द्योतः ) भाष्ये—तव किं तकारे इति । पञ्चमीसमासाभाववादिनस्तव–इति शेषः ॥

( ६।१५८ एकदेशिन उपसंख्यानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ गुणे ङिशीटामुपसंख्यानं दीर्घत्वबाधनार्थम् ॥ * ॥**

( भाष्यम् ) गुणे ङिशीटामुपसंख्यानं कर्तव्यम्[5] ।

ङि—वृक्ष इन्द्रः, प्लक्ष इन्द्रः ।

---

[1] 'प्लुत उच्यते' इति छ. पाठः ॥

[2] अनान्तर्यादिति । उपेन्द्रे स्थानिनोर्द्विमात्रकत्वेन प्लुतोऽनन्तरतम इति प्लुतो न भवतीति भावः ॥

[3] अनेनैव । प्लुतश्चविषये स्मृत इति न्यायेनैव ॥

[4] 'तपरे गुणवृद्धी' इति च–रहितः पाठः क. च. छ. पुस्तकेषु ॥

[5] 'कर्तव्यम् । वृक्ष इन्द्रः, प्लक्ष इन्द्रः । ङि । शी–' इति पाठः क. ट. पुस्तकयोः ॥

शी—य इन्द्रम्, त इन्द्रम् ।
इट्—अपच इन्द्रम्, अयज इन्द्रम् ।
किं प्रयोजनम् ?
दीर्घत्वबाधनार्थम् । सवर्णदीर्घत्वं मा भूदिति ॥

( प्रदीपः ) वृक्ष इन्द्र इति । वृक्ष इ इन्द्र इति स्थिते 'आद्गुणः' इत्यकारेकारयोर्गुणः प्राप्नोति, इकारयोः सवर्णदीर्घत्वं च । तत्र शब्दपरविप्रतिषेधाद् दीर्घत्वप्रसङ्गे गुण उच्यते ॥

( उद्द्योतः ) शब्दपरेति । गुणे कृते दीर्घाप्राप्त्याऽसंभवरूपो विरोधः । शास्त्रतोऽपि दीर्घस्य परत्वमस्तीति शब्दग्रहणं चिन्त्यप्रयोजनम् ॥

( ६१५९ प्रत्याख्यानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥**

( भाष्यम् ) न वा कर्तव्यम् ।
किं कारणं ?
बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणं सवर्णदीर्घत्वम्, अन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

( प्रदीपः ) न वेति । एकपदाश्रयत्वाद् गुणोऽत्रान्तरङ्गः ॥

**आदेकश्चेद्गुणः केन**
**स्थानेऽन्तरतमो हि सः ।**
**ऐदौतौ नैचि तावुक्तौ**
**ऋकारो नोभयान्तरः ॥ १ ॥**
**आकारो नर्तिधातौ सः**
**प्लुतश्च विषये स्मृतः ।**
**आन्तर्यात् त्रिचतुर्मात्रास्**
**तपरत्वान्न ते स्मृताः ॥ २ ॥**



( १०५१ विधिसूत्रम् ॥ ६ । १ । ४ आ. ५६ )

## २५२६ एत्येधत्यूठ्सु ॥ ६ । १ । ८९ ॥

( वृद्ध्यधिकरणम् )

( प्रदीपः ) एत्येधत्योः 'एङि पररूपम्' इति प्राप्ते, ऊठि आद्गुणे च वृद्धिविधानम् ॥

( उद्द्योतः ) नन्वेत्येधत्योः 'वृद्धिरेचि' इत्येव सिद्धमत आह—एत्येधेति ॥

( एत्येधत्योर्विषये पक्षद्वयोपस्थापकं भाष्यम् )

किमिदमेत्येधत्यो रूपग्रहणम्, आहोस्विद्धातुग्रहणम् ?[1]
किं चातः ?
यदि रूपग्रहणम्, सिद्धम्—उपैति, प्रैति । उपैषि[2], उपैमि, प्रैमीति न सिद्ध्यति ।
अथ धातुग्रहणम्, सिद्धमेतद्भवति ॥
किं तर्हीति[3] ?

( प्रदीपः ) किमिदमिति । एतिरेवात्र विचार्यते । एधेस्त्वात्मनेपदित्वाद्रूपग्रहणाभावः । साहचर्यात्तु द्वयोर्निर्देशः । यदि 'एति' इति तिङन्तानुकरणं ततो रूपग्रहणम् । अथ 'इक् श्तिपौ–' इति श्तिपा निर्देशः, ततो धातुग्रहणम्–इति संशयात्प्रश्नः ॥

( उद्द्योतः ) नन्वेधतेरात्मनेपदित्वेन रूपग्रहणासंभवादुभयोर्ग्रहणमसङ्गतमत आह—एतिरेवेति ॥ नन्वेवं प्रश्नभाष्ये 'एत्येधत्योः' इत्यसङ्गतमत आह—साहचर्यादिति ॥ श्तिपो धातुनिर्देश एव सत्त्वेन विचारानुपपत्तेराह[4]—यद्येतीति ॥

( ६१६० धातुग्रहणपक्षे दोषवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ इणीकारादौ प्रतिषेधः ॥ * ॥**

( भाष्यम् ) इणीकारादौ वृद्धेः प्रतिषेधो[5] वक्तव्यः । उपेतः, प्रेतः—इति ॥

( ६१६१ दोषनिरासवार्तिकम् ॥ १० ॥ )

**॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥**

( भाष्यम् ) योगविभागः करिष्यते । 'वृद्धिरेचि' ( ८८ ) । ततः—'एत्येधत्योः' । एत्येधत्योश्चैचि वृद्धिर्भवति । ततः—'ऊठि' । ऊठि च वृद्धिर्भवतीति ॥

( प्रदीपः ) योगविभागादिति । एकस्मिन् योगे 'एचि' इत्यस्योठा सम्बन्धाभावादेकस्य द्वन्द्वार्थस्य विशेषणसम्बन्धाय विभागस्य कर्तुमशक्यत्वाद् योगविभागसंश्रयः[6] ॥

( उद्द्योतः ) योगविभागाश्रयणे बीजमाह—एकस्मिन्निति । प्रतिषेधवार्तिके 'इणि'इत्युपलक्षणमेधतेरपि । अत एवैत्येधत्योरिति योगं विभज्य तस्यैचीति विशेषणमुक्तं भाष्ये, मा भवान्प्रेदिधदित्यादौ व्यभिचारसंभवात् । ऊठा तु न संबन्धः, असंभवात् । वस्तुतो वार्तिकानुरोधादेधत्यंशे उपरञ्जकतया विशेषणमित्येव भाष्यतात्पर्यम् । 'मा भवान्प्रेदिधत्'इत्यादेरनभिधानमित्येवोचितम् ॥

१ 'किमिदं रूपग्रहण–' इति ट. पाठः ॥
२ उपैषीति । अत्र एतिरूपाद्वृद्धिर्न प्राप्नुयात् ॥
३ किं तर्हीतीति । एत्येधत्योरिति धातुग्रहणे उपैषीत्यादि रूपाणां सिद्धावपि सर्वथेष्टसिद्धिर्नेति सूच्यते ॥
४ आहेति । प्रदीपे एतिविषयक एव विचारः कृतः, न त्वेधविषयकः, तत्र धातुग्रहणस्य श्तिपा निर्देशेनैव सिद्धत्वात् ॥
५ 'वृद्धिप्रतिषेधः' इति छ. पाठः ॥
६ सम्बन्धाभावात्–सम्बन्धाभावस्येष्टत्वात् द्वन्द्वार्थस्य–द्वन्द्वघटकस्य एकस्य–एतिपदस्य विशेषणसम्बन्धाय–एचीति विशेषणसम्बन्धाय विभागस्य–पृथक्कारस्यैकस्मिन्योगे कर्तुमशक्यत्वादित्यन्वयः । 'सम्बन्धाभावाय विभागस्य' इति च. पाठः ॥

( योगविभागे आक्षेपसमाधानविषयकं भाष्यम् )

एवमपि आ इतः—एतः; उपेतः, प्रेतः—इत्यत्रापि प्राप्नोति ।

आङि पररूपमत्र बाधकं भविष्यति ।

न[1] भविष्यति । नाप्राप्ते पररूप इयं वृद्धिरारभ्यते, सा यथैव 'एङि पररूपम्' बाधते, एवमाङि पररूपं बाधेत ।

न बाधते ।

किं कारणम् ?

येन नाप्राप्ते तस्य बाधनं भवति न चाप्राप्त एङि पररूप इयं वृद्धिरारभ्यते, आङि पररूपे पुनः प्राप्ते चाप्राप्ते च ।

अथ वा—पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इतीयं वृद्धिरेङि पररूपं बाधिष्यते, नाङि पररूपम् ॥

( प्रदीपः ) सा यथैवेति । बाध्यमात्रापेक्षायां सर्वस्य बाधाप्रसङ्ग इति भावः ॥

येन नाप्राप्त इति । कार्यविशेषचिन्तायां सर्वविषयव्यापिबाधस्यान्याय्यत्वात् ॥

अथवेति । अनन्तरे बाध्ये विज्ञाते तद्बाधया वचनस्य चरितार्थत्वादुत्तरेण सह स्पर्धायां परत्वादुत्तरं भवतीत्यर्थः ॥

( उद्योतः ) बाध्यमात्रेति । 'येन नाप्राप्ते' इत्यस्य स्वेतरेणेत्यर्थ इति भावः । यद्वा 'येन' इत्यस्य यद्धर्मावच्छिन्नेन कार्येणेत्यर्थः ॥

कार्यविशेषेति । 'येन'इत्यस्य यच्छास्त्रेण प्राप्तेनेत्यर्थ इति भावः ॥

अनन्तर इति । प्रथमोपस्थितत्वेनेति भावः ॥

( ६१६२ उपसंख्यानवार्तिकम् ॥ ११ ॥ )

॥ * ॥ अक्षादूहिन्याम् ॥ * ॥

( भाष्यम् ) अक्षादूहिन्यां वृद्धिर्वक्तव्या । अक्षौहिणी ॥

( प्रदीपः ) अक्षादिति । अक्षानूहतेऽवश्यमित्यावश्यके णिनिः । 'साधनं कृता' इति समासः ॥

( उद्योतः ) अक्षानिति[2] । ऊहिरत्र वहार्थः । अक्षाः—रथावयवाः । इदं च रथतुरगादीनामुपलक्षणम् । तान्परसेनां प्रति नियमेन प्रापयतीत्यर्थः । अक्षौहिणीशब्दः सेनाविशेषे रूढः ॥ आवश्यके चोक्ते निरुपपदो णिनिरित्युपपदसमासाभावादाह—साधनमिति ॥

( ६१६३ उपसंख्यानवार्तिकम् ॥ १२ ॥ )

॥ * ॥ प्रादूहोढोढ्येषैष्येषु ॥ * ॥

( भाष्यम् ) प्रात्—ऊह-ऊढ-ऊढि-एष-एष्य-इत्येतेषु वृद्धिर्वक्तव्या । प्रौहः, प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः ॥

( प्रदीपः ) प्रादिति । प्रेष्यशब्दस्त्वीष्यशब्दे भवति । प्रोढाशब्दे—आ ऊढा–ओढा, 'प्र ओढा' इति स्थिते 'ओमाङोश्च' इति पररूपं भवति ॥

( उद्योतः ) नन्वेवं प्रेष्यशब्दस्यासाधुत्वं स्यादत आह—प्रेष्यशब्दस्त्विति । ईष्यशब्दः 'ईष गति–'इति दीर्घादेण्यति साधुः ॥

( ६१६४ उपसंख्यानवार्तिकम् ॥ १३ ॥ )

॥ * ॥ स्वादीरेरिणोः ॥ * ॥

( भाष्यम् ) स्वात्—ईर-ईरिन्-इत्येतयोर्वृद्धिर्वक्तव्या । स्वैरः[3], स्वैरी ॥

( प्रदीपः ) स्वैरीति । स्वेन–आत्मना ईर्ते–गच्छत्यवश्यमिति णिनिः ।

( उद्योतः ) ईर्ते इति । 'ईर गतौ' आदादिकः । स्वच्छन्दचारीत्यर्थः ॥

( ईरिन्ग्रहणप्रत्याख्यानभाष्यम् )

ईरिन्ग्रहणं शक्यमकर्तुम् ।

कथं स्वैरीति[4] ?

इनिनैतन्मत्वर्थीयेन सिद्धम्—स्वैरोऽस्यास्तीति स्वैरी ॥

( प्रदीपः ) इनिनेति । णिनिस्त्वनभिधानान्न भविष्यति, 'स्वैरी' इति प्रयोगाभावादिति भावः ॥

( उद्योतः ) ननु णिनावनिष्टरूपापत्तिरत आह—णिनिस्त्विति ॥

( ६१६५ उपसंख्यानवार्तिकम् ॥ १४ ॥ )

॥ * ॥ ऋते च तृतीयासमासे ॥ * ॥

( भाष्यम् ) ऋते च तृतीयासमासे वृद्धिर्वक्तव्या । सुखार्तः, दुःखार्तः ।

ऋत इति किम् ?

सुखेतः, दुःखेतः ।

तृतीयाग्रहणं किम् ?

परमर्तः ।

समास इति किम् ?

सुखेनर्तः ॥

---

1 'न भविष्यति' इत्यस्य छ. ट. पुस्तकयोः पाठो न दृश्यते ॥
2 अक्षौहिणीशब्दार्थमाह—अक्षा इति ॥
3 'स्वैरं' इति ट. क. पाठः ॥
4 'कथं स्वैरी ?' इत्येव क. ट. पाठः ॥

( ६१६६ उपसंख्यानवार्तिकम् ॥ १५ ॥ )

॥ * ॥ प्रवत्सतरकम्बलवसनानां चर्णे ॥ * ॥

( भाष्यम् ) प्रवत्सतरकम्बलवसनानां च ऋणे वृद्धिर्वक्तव्या । प्रार्णम्, वत्सतरार्णम्, कम्बलार्णम्, वसनार्णम् ॥

( ६१६७ उपसंख्यानवार्तिकम् ॥ १६ ॥ )

॥ * ॥ ऋणदशाभ्यां च ॥ * ॥

( भाष्यम् ) ऋणदशाभ्यां च वृद्धिर्वक्तव्या । ऋणार्णम्, दशार्णम् ॥

( प्रदीपः ) दशार्णशब्दो नदीविशेषस्य देशविशेषस्य च संज्ञा ॥

( १०९२ विधिसूत्रम् ॥ ६ । १ । ४ आ. ५७ )

## २५२७ आटश्च ॥ ६ । १ । ९० ॥

( चकारप्रयोजनभाष्यम् )

किमर्थश्चकारः ?

वृद्धेरनुकर्षणार्थः ।

नैतदस्ति प्रयोजनम्, प्रकृता वृद्धिरनुवर्तिष्यते ॥

इदं तर्हि—आटोऽचि वृद्धिरेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।

किं चान्यत् प्राप्नोति ?

पररूपम् ।

उस्योमाङ्क्ष्वाटः पररूपप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति ॥

( उद्द्योतः ) भाष्ये—यदन्यदिति । 'च'शब्द एवकारार्थ इति भावः ॥

( १०९३ विधिसूत्रम् ॥ ६ । १ । ४ आ. ५८ )

## २५२८ उपसर्गादृति धातौ ॥ ६।१।९१ ॥

( धातुग्रहणप्रयोजनभाष्यम् )

धाताविति किमर्थम् ?

इह मा भूत् । प्रर्षभं वनम् ॥

( प्रदीपः ) प्रर्षभमिति । प्रगता ऋषभा अस्मादिति बहुव्रीहिः । उणादीनामव्युत्पत्तिपक्षे धातुर्ऋषभशब्दे नास्ति ॥

( उद्द्योतः ) ननु ऋषेरभचि क्त्वितिदेशे ऋषभशब्द इति नेदं धातुग्रहणस्य प्रयोजनं युक्तमत आह—उणादीनामिति ॥

( ६१६८ धातुग्रहणानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ उपसर्गाद्वृद्धिविधौ धातुग्रहण उक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्ताः प्रादयस्तं प्रतीति वचनमिति ॥

क्रियमाणेऽपि धातुग्रहणे प्रर्छक[1] इति प्राप्नोति ।

यत्क्रियायुक्ताः प्रादयस्तं प्रतीति वचनान्न भवति ॥

( प्रदीपः ) उपसर्गादिति । उपसर्गेणैव धातोराक्षेपाद्धातुग्रहणं न कर्तव्यम् । यत्र[2] चोपसर्गत्वं न सम्भवति तत्रोपसर्गग्रहणेन प्रादयो लक्ष्यन्ते, यथा[3] नासिकाया नस्भावविधौ, न तु सम्भवत्युपसर्गत्वे ॥

प्रर्च्छक इति । प्रगता ऋच्छका अस्मादिति बहुव्रीहिः[4] ॥

( उद्द्योतः ) नन्विदमुपसर्गग्रहणम् 'उपसर्गाच्च' इत्यादिवत् प्रादीनामुपलक्षणमिति न धात्वाक्षेपकं स्यादत आह—यत्र चेति ॥

( धातुग्रहणप्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—उपसर्गादृति धातौ वृद्धिरेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ।

किं चान्यत् प्राप्नोति ?

ह्रस्वत्वम् 'ऋत्यकः' ( ६।१।१२८ ) इति ।

*ऋति ह्रस्वादुपसर्गाद्वृद्धिः पूर्वविप्रतिषेधेन* इति चोदयिष्यति स न वक्तव्यो भवति ॥

( प्रदीपः ) यदन्यदिति । सति धातुग्रहणे योगविभागेन पुनर्विधीयते इति शाकलं बाध्यते ॥

( उद्द्योतः ) ननु धातुग्रहणमात्रात् 'ऋत्यकः' इति प्राप्तं ह्रस्वं कथं बाधतेऽत आह—सतीति ॥

( ६१६९ विप्रतिषेधवार्तिकम् ॥ २ ॥ )

॥ * ॥ छे तुकः संबुद्धिगुणः ॥ * ॥

( भाष्यम् ) छे तुग्भवतीत्यस्मात्संबुद्धिगुणो भवति विप्रतिषेधेन ।

छे तुग्भवतीत्यस्यावकाशः—इच्छति, गच्छति ।

---

१ प्रर्छक इति । भाष्यस्य सर्वत्रैवमेव पाठ उपलभ्यते । उणादीनामव्युत्पत्तिपक्षे ऋषभशब्दे परतो वृद्धिर्न प्राप्नोतीति प्रर्छक इत्यत्र वृद्धिः प्राप्नुयादेव । एवञ्च प्रर्छक इति प्राप्नोतीत्यस्य प्रर्छक इत्यत्र वृद्धिः प्राप्नुयादित्यर्थ एवोचितः । यथाश्रुतार्थकरणे इष्टस्य प्रर्छक इति रूपस्य सिद्धिर्न स्यादिति ॥

२ 'यत्रोपसर्गत्वं' इति क. ठ. च. झ. पाठः । उद्द्योतपाठश्च 'यत्र चोपसर्गत्वं' इति, स एवात्रादृतः ॥

३ यथा नासिकाया इति । उपसर्गाच्च ( ५।४।११९ ) इति सूत्रेण प्रादेः परस्य नासिकाशब्दस्य नसादेशोऽच्प्रत्ययश्च विधीयते । तत्र यथोपसर्गशब्देन प्रादयो लक्ष्यन्ते तथाऽत्रापि—यत्रोपसर्गत्वं न सम्भवति तत्रोपसर्गशब्देन प्रादीनामुपलक्षणमिति भावः ॥

४ यत्क्रियायुक्ताः प्रादय इति समाधानसाध्यविषयमुपपादयितुमाह—बहुव्रीहिरिति ॥

संबुद्धिगुणस्यावकाशः—अग्ने, वायो ।

इहोभयं प्राप्नोति—अग्नेच्छत्रम्- अग्ने छत्रम्, वायोच्छत्रम्-वायो छत्रम् ।

संबुद्धिगुणो भवति विप्रतिषेधेन ॥

स तर्हि विप्रतिषेधो वक्तव्यः ।

( प्रदीपः ) अग्ने छत्रमिति । अग्निस् छत्रमिति स्थिते 'एङ्ह्रस्वात्संबुद्धेः' इति सुलोपे कृते यदि पूर्वं तुक्स्यात्तदा ह्रस्वान्तत्वाभावाद् गुणो न स्यात् । पूर्वं तु गुणे ह्रस्वाभावात्तुक् न स्यादिति विप्रतिषेधोपन्यासः ॥

( ६१७० विप्रतिषेधखण्डनवार्तिकम् ॥ ३ ॥ )

॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणस्तुक् । अन्तरङ्गलक्षणः सम्बुद्धिगुणः । असिद्धं बहिरङ्गमन्तरङ्गे ॥

( प्रदीपः ) बहिरङ्गलक्षणस्तुगिति । द्विपदाश्रयत्वात् ॥

( उद्द्योतः ) द्विपदेति । एवं च गुणे कृते 'दीर्घात्–पदान्ताद्वा' इति वैकल्पिकस्तुगिति भावः ॥

( आक्षेप–समाधानपरभाष्यम् )

अन्तरेणापि विप्रतिषेधमन्तरेणापि चैतां परिभाषां सिद्धम् ।

कथम् ?

इदमिह संप्रधार्यम्—संबुद्धिलोपः क्रियतां गुण इति, किमत्र कर्तव्यम् ?

परत्वाद् गुणः ।

नित्यः संबुद्धिलोपः । कृतेऽपि गुणे प्राप्नोत्यकृतेऽपि ।

गुणोऽपि नित्यः । कृतेऽपि संबुद्धिलोपे प्राप्नोत्यकृतेऽपि ।

अनित्यो गुणः । न हि संबुद्धिलोपे कृते प्राप्नोति । तावत्येव छेनानन्तर्यम्, तत्र तुका भवितव्यम् ।

तस्मात्सुष्ठूच्यते—छे तुकः संबुद्धिगुणे न वा, बहिरङ्गलक्षणत्वादिति ॥

( प्रदीपः ) आचार्यदेशीयः पण्डितंमन्यत्वादाह—अन्तरेणापीति ॥

आचार्य आह—अनित्यो गुण इति ॥

तस्मादिति—पूर्वोक्तार्थं निगमयति ॥

( उद्द्योतः ) अनित्यो गुण इति-भाष्ये । 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्' इति न्यायानाश्रयेण इति बोध्यम् ॥

निगमयतीति । साध्यावधारणाय हेतुपूर्वं पुनः पक्षं साध्यवन्तं करोतीत्यर्थः ॥

( ६१७१ विप्रतिषेधवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सम्प्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणादयश्च ॥ * ॥

( भाष्यम् ) संप्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन ॥

संप्रसारणदीर्घत्वस्यावकाशः—हूतः, जीनः, संवीतः, शूनः ।

तुकोऽवकाशः—अग्निचित्, सोमसुत् ।

इहोभयं प्राप्नोति—परिवीषु, शकहूषु ॥

णिलोपस्यावकाशः—कारणा, हारणा ।

तुकः स एव ।

इहोभयं प्राप्नोति—प्रकार्य गतः, प्रहार्य गतः ॥

अल्लोपस्यावकाशः—प्रचिकीर्षिता, प्रजिहीर्षिता ।

तुकः स एव ।

इहोभयं प्राप्नोति—प्रचिकीर्ष्य गतः, प्रजिहीर्ष्य गतः ॥

अभ्यासगुणादयश्च तुको भवन्ति विप्रतिषेधेन ।

के पुनरभ्यासगुणादयः ?

ह्रस्वत्वात्त्वेत्त्वगुणाः ।

ह्रस्वत्वस्यावकाशः—ययतुः—ययुः, तस्थतुः—तस्थुः ।

तुकः स एव ।

इहोभयं प्राप्नोति—अपचच्छतुः, अपचच्छुः ॥

अत्वस्यावकाशः—चक्रतुः, चक्रुः ।

तुकः स एव ।

इहोभयं प्राप्नोति—अपचच्छृदतुः, अपचच्छृदुः ॥

इत्वस्यावकाशः—पियक्षति, पिपक्षति ।

तुकः स एव ।

इहोभयं प्राप्नोति—चिच्छादयिषति, चिच्छर्दयिषति ॥

गुणस्यावकाशः—लोलूयते, बेभिद्यते ।

तुकः स एव ।

इहोभयं प्राप्नोति—चेच्छिद्यते, चोच्छुप्यते ॥

---

१ 'अनित्यो गुण इति–भाष्य' इति घ. पाठः ॥

२ साध्यावधारणायेति । अत्र हि अन्तरङ्गत्वादिति हेतुना सम्बुद्धिगुणे विप्रतिषेधाभावः साध्यते । तादृशसाध्यस्य स्पष्टप्रतिपत्तयेऽत्र नपुरुपन्यास इत्यर्थः ॥

३ 'चिकीर्षिता, जिहीर्षिता' इति च. छ. पाठः ॥

४ 'पपतुः, पपुः' इति छ. क. ट. पाठः ॥

( प्रदीपः ) **शकहूष्विति** । ह्वयतेः क्विपि संप्रसारणे पूर्वैकादेशे च कृते 'ह्रस्वस्य पिति कृति—'[1] इति तुक् प्राप्नोति, 'हलः' इति दीर्घत्वं च ॥

**प्रकार्येति** । तुकि सति तेन व्यवधानाण्णिलोपाप्रसङ्गः ॥

**अपचच्छतुरिति** । 'छो छेदने', आत्वम्[1], अतुस्, 'आतो लोप इटि च' इत्यालोपः । तस्य स्थानिवत्त्वाद्द्विर्वचनम् । छा छ् इति स्थिते यदि 'दीर्घात्' इति पूर्वं तुक्स्यात्तदाऽजन्तत्वाभावाद् ह्रस्वो न स्यात् ॥

**अपचच्छृदतुरिति** । 'उच्छृदिर् दीप्तिदेवनयोः' इत्यस्य द्विर्वचने कृते यदि पूर्वं तुक् स्यात्, तत ऋकारान्तत्वाभावात् 'उरत्' इत्यत्वं न स्यात् ॥

**चिच्छर्दयिषतीति** । छर्द वमने, चुरादिः ॥

( उद्योतः ) **तेन व्यवधानादिति** । णिलोपोत्परत्वाद्यपि कृते तुकि 'णेरनिटि' इत्यत्र निर्दिश्यमानस्य णेः—णकारेत्संज्ञकेकारस्य व्यवधानादिति भावः ॥

**स्थानिवत्त्वादिति** । 'द्विर्वचनेऽचि' इत्यनेन ॥ **ह्रस्वो न स्यादिति** । ह्रस्वश्रुत्याऽच्परिभाषोपस्थितेः । पूर्वं तु ह्रस्वे 'छे च' इति तुकि सति रूपसिद्धिरिति भावः । हलादिशेषस्तु न, अभ्याससंज्ञाप्रवृत्तिकाले साक्षात्स्थानिद्वारा वा संनिहितानामेव हलां तेन निवृत्तेः । अत्र च 'नुगतः-' इति नुग्विधानं ज्ञापकमिति तात्पर्यम् ॥

**ऋकारान्तत्वाभावादिति** । 'ववृते' इत्यादौ पूर्वं हलादिः शेषे पश्चादति रपरत्वे पुनर्हलादिः शेषः, लक्ष्यभेदादिति भावः ॥

भाष्ये—**गुणस्येति** । 'गुणो यङ्लुकोः' इत्यस्य ॥

( ६१७२ विप्रतिषेधवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ यणादेशादाद्गुणः ॥ * ॥

**( भाष्यम् ) यणादेशादाद्गुणो भवति विप्रतिषेधेन ।**

**यणादेशस्यावकाशः—दध्यत्र, मध्वत्र ।**

**आद्गुणस्यावकाशः—खट्वेन्द्रः, खट्वोदकम् ।**

**इहोभयं प्राप्नोति—वृक्षोऽत्र, प्लक्षोऽत्र ॥**

( प्रदीपः ) **वृक्षोऽत्रेति** । 'वृक्षस् अत्र' इति स्थिते 'ससजुषो रुः', 'अतो रोः'—इत्युत्वम् । तत उकारस्याकाराश्रयो यण् प्राप्नोति, पूर्वेण सहाद्गुणश्च ॥

( ६१७३ विप्रतिषेधवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ इरुर्गुणवृद्धिविधयश्च ॥ * ॥

**( भाष्यम् ) इरुर्गुणवृद्धिविधयश्च यणादेशाद्भवन्ति विप्रतिषेधेन ॥**

**इरुरोरवकाशः—आस्तीर्णम्, निपूर्ताः पिण्डाः ।**

**यणादेशस्यावकाशः—चक्रतुः, चक्रुः ।**

**इहोभयं प्राप्नोति—दूरे ह्यध्वा जगुरिः, मित्रावरुणौ ततुरिः, किरति, गिरति ॥**

**गुणवृद्ध्योरवकाशः—चेता, गौः ।**

**यणादेशस्य स एव ।**

**इहोभयं प्राप्नोति—चयनम्-चायकः, लवनम्-लावकः ॥**

( प्रदीपः ) **ततुरिरिति** । 'आदृगम—' इति किकिनोरन्यतरः । लिड्वद्भावाद्द्विर्वचनम्, 'बहुलं छन्दसि' इत्युत्वम्, रपरत्वं च ॥

( उद्योतः ) **ततुरिरित्यादि**—'वार्णादाङ्गं बलीयः' इत्यनाश्रित्य, यणादेशस्यान्तरङ्गत्वं चानाश्रित्य ॥

( ६१७४ विप्रतिषेधवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृत्तिस्वरा एकादेशाच ॥ * ॥

**( भाष्यम् ) भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तोदात्तनिवृत्तिस्वरा एकादेशाच्च यणादेशाच्च भवन्ति विप्रतिषेधेन ॥**

**भलोपस्यावकाशः—गार्ग्यः, वात्स्यः ।**

**एकादेशयणादेशयोरवकाशः—दधीन्द्रः-मधूदकम्, दध्यत्र-मध्वत्र ।**

---

१ आत्वम्—आदेच उपदेशेऽशितीत्यनेन ॥

२ अजन्तत्वाभावादिति । नानर्थकेऽलोन्त्यविधिरनभ्यासविकार इति परिभाषणात् 'ह्रस्वः' इत्यत्रानर्थकेऽपि तदन्तविधिः ॥

३ ननु तुकि कृते तुग्विशिष्टस्य यदागमन्यायेन णित्वाण्णिलोपप्रसङ्ग एवेत्यत आह—णिलोपादिति ॥

४ ननु णेरनिटीत्यत्र निर्दिश्यमानपरिभाषोपस्थितावपि निर्दिश्यमानस्य णेरवयवस्येकारस्य लोप इत्येवमन्वये तुका व्यवधानेऽपि लोपः स्यादेवेत्यत आह—णेर्णकारेत्संज्ञकेकारस्येति । सामानाधिकरण्येनान्वयात्तुकि कृते न प्राप्नुयादित्याशयः ॥

५ द्विर्वचनेऽचीत्यनेनेति । अनेन रूपातिदेशादिति भावः । अचः परस्मिन्निति तु नात्र, पूर्वत्वेन दृष्टस्य कार्याभावात् ॥

६ स्थानिद्वारेति । अत एव ववृत इत्यादावभ्याससंज्ञाप्रवृत्तिकालानन्तरं रपरत्वप्रवृत्तावपि हलादिशेषः प्रवर्तते, तस्य स्थानिद्वारा सन्निहितत्वात् ॥

७ लक्ष्यभेदादिति । तल्लक्ष्यत्वञ्च—स्वीयप्राथमिकप्रवृत्तावुद्देश्यतावच्छेदकावच्छेदेनाश्रीयमाणो यावान् शब्दसमुदायस्तद्विशिष्टाघटितत्वे सति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम् । वैशिष्ट्यं च स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्वैतदुभयसम्बन्धेन । अत्र रेफस्य स्वघटकमात्रोद्देश्यकविकारत्वेन विकारातिरिक्तत्वाभावादेकसत्त्वेऽपि द्वयं नास्तीतिरीत्या तद्विशिष्टाघटितत्वेऽपि स्थानिद्वारा प्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयघटितत्वाल्लक्ष्यभेद इति भावः । वस्तुतस्तु अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति उरदत्वप्रवृत्त्यनन्तरमेव हलादिशेष इत्याशयः ॥

इहोभयं प्राप्नोति—दाक्षी-दाक्षायणः, प्लाक्षी-प्लाक्षायणः ॥

[[1]अचि भलोप एकादेशाद्भवति विप्रतिषेधेन ।

अचि भलोपस्यावकाशः—दाक्षी—दाक्षायणः, प्लाक्षी—प्लाक्षायणः ।

एकादेशस्यावकाशः—दण्डाग्रम्, क्षुपाग्रम् ।

इहोभयं प्राप्नोति—गाङ्गेयः, गाङ्गः ॥ ]

धातुस्वरस्यावकाशः—पचति, पठति ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—श्र्यर्थम्, श्रीषा ॥

प्रातिपदिकस्वरस्यावकाशः—आम्रः, शालः[2] ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—अग्न्युदकम्, वृक्षार्थम् ॥

प्रत्ययस्वरस्यावकाशः—चिकीर्षुः, औपगवः ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—चिकीर्ष्वर्थम्, औपगवार्थम् ॥

समासान्तोदात्तस्यावकाशः—राजपुरुषः, ब्राह्मणकम्बलः ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—राजवैद्यर्थम्, राजवैदीहते ॥

उदात्तनिवृत्तिस्वरस्यावकाशः—नदी, कुमारी ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—कुमार्यर्थम्, कुमारीहते ॥

( प्रदीपः ) **दाक्षीति** । दक्षस्यापत्यं स्त्री 'अत इञ्' । 'इतो मनुष्यजातेः' इति ङीष् । सवर्णदीर्घं बाधित्वा 'यस्य–' इति लोपो भवति ॥ **दाक्षायण इति** । दाक्षेरपत्यं युवा । 'यञिञोश्च' इति फक् । फस्यायनादेशः । तत इकारस्य यण् च प्राप्नोति लोपश्च ॥

[ **गाङ्गेय इति** । 'शुभ्रादिभ्यश्च' इति ढक् । ढस्य एयादेशः । 'वृद्धिरेचि' इति वृद्धिर्लोपेन बाध्यते ॥ **गाङ्ग इति** । शिवाद्यणा सवर्णदीर्घत्वं लोपेन बाध्यते ॥ ]

**श्र्यर्थमिति** । 'अर्थे'[3] इति पूर्वपदप्रकृतिस्वरेण धातुस्वरे सति यणादेशे च 'उदात्तस्वरितयोर्यणः–' इति स्वरितत्वं भवति ॥ **श्रीषेति** । ईषेरिगुपधलक्षणः कः । श्रीरीषा यस्येति बहुव्रीहिः । 'बहुव्रीहौ प्रकृत्या–' इति पूर्वपदप्रकृतिस्वरेण धातुस्वरः । तत एकादेशः 'स्वरितो वाऽनुदात्ते पदादौ' इति स्वरित उदात्तो वा । **अथवा**—श्रियमिच्छतीति क्विप्, कृदुत्तरपदप्रकृतिस्वरेण धात्वन्तोदात्तत्वे सति 'अन्तोदात्तादुत्तरपदात्–' इति विभक्तेरुदात्तत्वं वा भवति ॥

**अग्न्युदकमिति** । अग्निसहितमुदकम्–अग्न्युदकम्, 'समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च'[4] इति समासः । 'उदकेऽकेवले' इति पूर्वपदान्तोदात्तत्वम् । एवं तु व्याख्यायमाने प्रातिपदिकस्वरो न प्रदर्शितो भवति । तस्मादग्निरुदकमत्युष्णत्वाद्दाहकत्वाद्यस्मिंश्चिति बहुव्रीहिः कर्तव्यः । ततः 'बहुव्रीहौ प्रकृत्या–' इति पूर्वपदप्रकृतिस्वरेण प्रातिपदिकस्वरे सति यणादेशे च 'उदात्तस्वरितयोः–' इति स्वरितत्वं भवति । पूर्वं यणि सति न सिद्ध्येत् ॥ **वृक्षार्थमिति** । 'अर्थे' इति पूर्वपदप्रकृतिस्वरे सति एकादेशे 'स्वरितो वाऽनुदात्ते पदादौ' इति सिद्ध्यति । पूर्वं त्वेकादेशे न सिद्ध्येत् ॥

**चिकीर्ष्वर्थमिति** । 'उदात्तस्वरितयोर्यणः–' इति अकारस्य स्वरितत्वम् ॥ **औपगवार्थमिति** । 'स्वरितो वाऽनुदात्ते पदादौ' इति वा स्वरितत्वम् ॥

**राजवैदीहत इति** । राज्ञो वैदीति षष्ठीसमासः । ईहतेइत्यस्य 'तिङ्ङतिङः' इति निघातः ॥

( उद्योतः ) **सवर्णदीर्घं बाधित्वेति** । न्यायप्रदर्शनार्थमिदम् । न हि रूपे स्वरे वाऽत्र विशेषोऽस्ति[5] । अतिसखेरित्यादौ तु विशेषो बोध्यः[6] ॥ 'दाक्षी'इत्यादौ यद्यपि यणेकादेशावन्तरङ्गौ तथाप्यनित्यत्वात्तदप्रवृत्तिर्बोध्या[7] ॥

एतदुत्तरम्—**'अचि भलोप एकादेशाद्विप्रतिषेधेन'** इत्यादि **'गाङ्गेयो गाङ्ग'** इत्यन्तं पठ्यते, तस्य पूर्वस्मात्को भेदः ? दाक्षी–दाक्षायण इत्यप्यचि भलोपस्यैव विप्रतिषेधस्थानम्, गाङ्गदाक्ष्योश्च को विशेष इति **चिन्त्यम्** । तस्मादयं प्रक्षिप्तो ग्रन्थो भाष्यकैयटयोरिति

१ [ ] एतच्चिह्नान्तर्गतो भाष्यकैय्यटयोर्भागः प्रक्षिप्त इत्युद्द्योतः ॥

२ 'शालः' इत्युदाहरणं क. छ. ट. पुस्तकेषु न दृश्यते ॥

३ 'अर्थे' ( ६।२।४४ ) अर्थशब्दे परे चतुर्थ्यन्तं प्रकृत्येत्यर्थकेन सूत्रेण ॥

४ भक्ष्येण मिश्रीकरणम् ( २।१।३५ ) इति सूत्रे वार्तिकमेतत् । समानाधिकरणाधिकारे क्तान्तस्तृतीयापूर्वपदः समस्यते सुबन्तेन, उत्तरपदस्य च लोपो भवति । अत्राग्निसहितशब्दस्योदकशब्देन सह समासः, सहितशब्दस्य लोपश्च भवति ॥

५ न हि रूपे स्वरे वेति । दाक्षिशब्दान्ङीपि भलोपैकादेशौ प्राप्नुतः । तत्र भलोपे अनुदात्तस्य च यत्रोदात्तलोप इत्यनेन ङीपीकारस्योदात्तत्वं ङीप ईकारस्य च स्वतो दीर्घत्वमिति भलोपे स्वररूपयोर्न विशेषः । पूर्वमेकादेशे च एकादेश उदात्तेनोदात्त इत्यनेनोदात्तत्वमेकादेशेन दीर्घत्वमिति न विशेषः । इञन्तस्य दाक्षिरित्यस्यान्तानुदात्तत्वं ञित्स्वरेणेति भावः ॥

६ अतिसखेरित्यादौ त्विति । सखीमतिक्रान्त इति विग्रहः । अत्र सखिशब्दान्ङीपि भलोपैकादेशौ प्राप्तौ, यद्यत्र भलोपो न स्यादेकादेशश्च स्यात्तदा पूर्वान्तवद्भावेन कृतदीर्घस्य सखिशब्दत्वात् अतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वेऽपि कृते घिसंज्ञा न स्यात् । पूर्वं भलोपे तु लक्षणप्रतिपदोक्तपरिभाषयाऽस्य सखिशब्दावयवे वर्णत्वाभावादसखीति निषेधाप्रवृत्तेर्घिसंज्ञा निराबाधैव । एवञ्चैकादेशाद्भलोपो विप्रतिषेधेनेत्यस्यैतदुदाहरणं संगच्छते । एतच्च ल्यप्यादिति सूत्रे शेखरे स्पष्टम् । तत्र हि 'यस्येति चेति सूत्रभाष्यात्तु सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः । यथाऽत्वसन्तस्येति सूत्रेऽधातोरित्येतद्घटकधातुपदस्य पिण्डग्र इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणाऽऽकारे दृश्यते । तदन्तसंज्ञापक्षेऽप्यसखीति ख्योरेव विशेषणम्, ततस्तदन्तविधिः । ततश्च सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः' इति ॥

७ तदप्रवृत्तिः—अन्तरङ्गपरिभाषाया अप्रवृत्तिः ॥

बहवः ॥ इति वृद्धिरिति । एकादेशत्वसामान्यापेक्षया[1] तु दण्डाग्रमित्यवकाशप्रदर्शनं बोध्यम् ॥

श्र्यर्थमित्यादि–पदसंस्कारपक्षे । पूर्वपदप्रकृतिस्वरेण च मूल[2]शास्त्रस्यैव प्रवृत्तिरित्याशयेन 'पचति' इत्याद्यवकाशकथनमित्याहुः ॥ ननु श्र्यर्थमित्यत्र 'समासस्य' इत्यन्तोदात्तत्वेन भाव्यमिति कथमत्र धातुस्वरप्राप्तिः । सति वा धातुस्वरे यणि तस्य श्रवणाभावात्फलाभाव इति किं विप्रतिषेधेन ? इत्यत आह—अर्थे इति । श्रीरीषा यस्या इति पाठः, भाष्ये 'श्रीषा' इति दीर्घपाठात् । अथवा श्रियमिच्छतीति तृतीयैकवचनं—श्रीषा–इति । अत्र पूर्वमेकादेशे व्यपवर्गाभावात्कृदुत्तरपदप्रकृतिस्वर एव न स्यादिति तन्निबन्धनं विभक्त्युदात्तत्वं न स्यादिति भावः ॥

न सिध्येदिति । पूर्वं यण्युदात्तयण्त्वाभावात्स्वरितो न स्यादित्यर्थः ॥ पूर्वं त्विति । उदात्तानुदात्तैकादेशाभावात्स्वरिताद्यभावः स्यादित्यर्थः ॥

उदात्तस्वरितयोरिति । 'अर्थे' इति पूर्वपदप्रकृतिस्वरेण प्रत्ययस्वरे यणि चेति भावः ॥

राजवैद्यर्थमित्यादि—वाक्यसंस्कारे उदाहरणम् ॥ निघात इति । तत्र पूर्वमेकादेशे यणि वा स्वरितादि न स्यात् । विदस्यापत्यं वैदी ॥

धातुप्रातिपदिकादिस्वराणामप्यन्तरङ्गत्वात्पूर्वं प्रवृत्तानामेव पूर्वपदप्रकृतिस्वरेण तन्मात्रानुमत्या सिद्धानीमान्यपि अन्तरङ्गत्वादिति कश्चित् ॥

( ६१७५ विप्रतिषेधवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ अल्लोपाल्लोपौ चार्धधातुके ॥ * ॥

( भाष्यम् ) अल्लोपाल्लोपौ चार्धधातुके एकादेशाद्भवतो विप्रतिषेधेन ॥

अल्लोपस्यावकाशः—चिकीर्षिता, जिहीर्षिता ।

एकादेशस्यावकाशः—पचन्ति, पठन्ति ।

इहोभयं प्राप्नोति—चिकीर्षकः, जिहीर्षकः ॥

आल्लोपस्यावकाशः—पपिः सोमम्, ददिर्गाः ।

एकादेशस्यावकाशः—यान्ति, वान्ति ।

इहोभयं प्राप्नोति—ययतुः, ययुः ॥

( उद्द्योतः ) भाष्ये—अल्लोपाल्लोपयोरवकाशौ—चिकीर्षिता, पपिः–इति । अत्राप्याद्गुणरूपैकादेशप्राप्तेश्चिन्त्यमिदम् । एकादेशस्यान्तरङ्गतया 'वार्णादाङ्गम्–' इति परिभाषयाऽस्य सिद्धेरवश्यवाच्यतया नात्यन्तं क्षोदः कृतो भगवतेति बोध्यम् ॥ चिकीर्षक इति । अत्र लोपे ईकारस्य लित्स्वरेणोदात्तत्वं फलम् ॥

( ६१७६ विप्रतिषेधवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ इयङुवङ्गुणवृद्धिटितिकिन्मित्पूर्वपदविकाराश्च ॥ * ॥

( भाष्यम् ) इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदविकाराश्चैकादेशयणादेशाभ्यां भवन्ति विप्रतिषेधेन ।

इयङुवङोरवकाशः—श्रियौ-श्रियः, भ्रुवौ-भ्रुवः ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—चिक्षियिव-चिक्षियिम, लुलुवतुः-लुलुवुः, पुपुवतुः-पुपुवुः ॥

गुणवृद्ध्योरवकाशः—चेता, गौः ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—साधुचायी, सुचायी, नग्नम्भावुकोऽध्वर्युः, शयिता, शयितुम् ॥

टितोऽवकाशः—पैण्णाम्[3], सप्तानाम्, पञ्चानाम् ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—वृक्षाणाम्, प्लक्षाणाम् ॥

कितोऽवकाशः—साधुदायी, सुष्ठुदायी ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—दायकः, धायकः ॥

मितोऽवकाशः—त्रपुणी, जतुनी ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—अस्थीनि, दधीनि, अतिसखीनि ब्राह्मणकुलानि ॥

पूर्वपदविकाराणामवकाशः—होतापोतारौ ।

एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—नेष्टोद्गातारौ, आग्नेन्द्रम् ॥

( प्रदीपः ) चिक्षियिवेति । क्षि क्षये, लिट्, क्रादिनियमादिट्, सवर्णदीर्घे प्राप्ते इयङ् । येन नाप्राप्तिन्यायेन यणोऽपवादावियङुवङौ, सवर्णदीर्घस्य तु परत्वाद्बाधकौ ॥ साधु चिनोतीति—साधुचायी । 'साधुकारिणि च–'इति णिनिः । सु चिनोतीति तच्छीलः—सुचायी । 'सुप्यजातौ–'इति णिनिः । सुपीति वर्तमाने सुब्ग्रहणं सुम्मात्रे यथा स्यादिति भाष्ये ह्युक्तम् ॥ अनग्नो नग्नो भवतीति—नग्नम्भावुकः । 'आढ्यसुभग–'इत्यनुवर्तमाने 'कर्तरि भुवः खिष्णुच्खुकञौ'इति खुकञ् प्रत्ययः । तत्र सवर्णदीर्घत्वे प्राप्ते वृद्धिः ॥

---

१ ननु भाष्ये–एकादेशस्यावकाशः–दण्डाग्रमिति प्रदर्श्य इहोभयं प्राप्नोति–गाङ्गेय इत्युक्तम्, अकः सवर्णेत्यस्य दण्डाग्रमित्यत्रावकाशं प्रदर्श्य गाङ्गेय इत्यत्र वृद्धिप्राप्तिकथनं कथं संगच्छेत ? इत्यत आह—एकादेशत्वसामान्यापेक्षयेति ॥

२ ननु श्र्यर्थमित्यत्र पूर्वपदप्रकृतिस्वरे 'धातोः' इत्यस्य कथं प्रवृत्तिरत आह—मूलशास्त्रस्यैवेति । एवञ्च पचतीत्यवकाशप्रदर्शनं सुवचम् ॥

३ छ. पुस्तके 'अग्नीनाम्, इन्दूनाम्' इत्युदाहरणे ॥

वृक्षाणामिति । नुडागममात्रमनपेक्षितलक्षणभेदमाश्रित्य विप्रतिषेधोपन्यासः । न हि ह्रस्वलक्षणस्य नुटः पञ्चानामित्यादिरवकाशः । क्वचिदग्नीनामिति पाठः । तत्रायं भावः—अधिकविषयव्यापिनो यण एवापवादो नुट्, दीर्घस्य तु परत्वाद्बाधकः ॥

दायक इति । येन नाप्राप्तिन्यायेन युगागम आडुणं बाधते, परत्वेन तु सवर्णदीर्घत्वम्—इति मत्वा विप्रतिषेधोपन्यासः ॥

अस्थीनीति । येन नाप्राप्तिन्यायेन नुमागमो यणादेशं बाधते, परत्वेन तु सवर्णदीर्घत्वम् । अतिसखीनीति—बहुव्रीहिः ॥

(उद्योतः) नन्वियुवाभ्यां यणिव दीर्घोऽप्यपवादत्वादेव बाधिष्यते किं विप्रतिषेधेन ? इत्यत आह—येन नाप्राप्तीति ॥ ननु 'सुपीति वर्तमाने सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम्' इति वृत्तावुक्तत्वेन कथमत्रोपसर्गे णिनिः ? अत आह—सुपीति । न तद्भाष्यकृतो मतमिति भावः ॥

ननु ह्रस्वलक्षणनुटा विप्रतिषेधस्योदाहरणात् षड्नुटोऽवकाशप्रदर्शनमसङ्गतमत आह—नुडागममात्रमिति ॥ क्वचिदिति । 'टिदवकाशप्रदर्शने' इति शेषः ॥ ननु यण्दीर्घयोरपवादत्वादेव नुट् बाधक इति विप्रतिषेधोऽयुक्तोऽत आह—तत्रायमिति ॥ ननु सर्वत्र कार्यान्तरे प्राप्ते युक आरम्भादपवादत्वादेवासौ दीर्घबाधको न तु परत्वादत आह—येन नेति । बहुविषयव्यापित्वादित्यभिमानः ॥

नुमागम इति । 'इकोऽचि—' इति नुमत्र ॥ प्रादिसमासे टच्स्यादत आह—बहुव्रीहिरिति ॥

( ६१७७ विप्रतिषेधबोधकवार्तिकम् ॥ १० ॥ )

॥ * ॥ उत्तरपदविकाराश्च ॥ * ॥

उत्तरपदविकाराश्चेति वक्तव्यम् ॥

उत्तरविकाराणामवकाशः—समीपम्, दुरीपम् । एकादेशयणादेशयोः स एव ।

इहोभयं प्राप्नोति—नीपम्, वीपम्, प्रेपम्, परेपम् ॥

( प्रदीपः ) वीपमिति । अत्र यण् प्राप्तः ॥ प्रेपमिति । सवर्णदीर्घत्वं चेत्त्वेन बाध्यते । 'ईत्वमनवर्णान्तादिति वक्तव्यम्' इत्येकीयमतत्वान्नाश्रीयते[१] ॥

( उद्योतः ) ननु 'ईत्वमनवर्णान्तात्'इत्युक्तेः प्रेपमित्यत्रेत्वं दुर्लभमत आह—ईत्वमिति । एवं चावर्णान्ते विकल्प इति भावः । एतद्वार्तिकप्रयोजनान्यपि वार्णस्यान्तरङ्गत्वात् 'वार्णादाङ्गम्—'इति परिभाषयैव सिद्धानीति बोध्यम् ॥

( १०९४ विधिसूत्रम् ॥ ६ । १ । ४ आ. ५९ )

२५३० औतोम्शसोः ॥ ६ । १ । ९३ ॥

( ६१७८ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ ओतस्तिङि प्रतिषेधः ॥ * ॥

( भाष्यम् ) ओतस्तिङि प्रतिषेधो वक्तव्यः । अचिनवम्, असुनवम् ॥

(प्रदीपः) ओतस्तिङीति । साहचर्यस्य व्यवस्थाहेतुत्वमनाश्रित्योच्यते । सुप एव हि शसोऽत्र संभवः, अचीत्यधिकारात्तद्धितस्याग्रहणात्[२] ॥ अचिनवमिति । लङ् । मिप् । अम्भावः । विकरणस्य गुणे कृते आत्वप्रसङ्गः ॥

( उद्योतः ) ननु शसा साहचर्यात्सुप एवामो ग्रहणम्, अत आह—साहचर्यस्येति ॥ ननु तद्धितोऽपि शसस्तीति तत्साहचर्यात्कथं सुपो ग्रहणम्? अत आह—अचीत्यधिकारादिति ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

स तर्हि प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । गोग्रहणं करिष्यते, 'आ गोतः-' इति वक्तव्यम् ॥

( ६१७९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ गोग्रहणे द्योरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) गोग्रहणे द्योरुपसंख्यानं कर्तव्यम् । द्यां गच्छ ॥

( प्रदीपः ) न्यासान्तराश्रयणेऽव्याप्तिरिति दर्शयन्नाह—गोग्रहण इति ॥

( ६१८० प्रतिषेधोपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ समासाच्च प्रतिषेधः ॥ * ॥

( भाष्यम् ) समासाच्च प्रतिषेधो वक्तव्यः । चित्रगुं पश्य, शबलगुं पश्य ॥

ननु च 'आ-ओतः' इत्युच्यमानेऽपि समासात्प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । ह्रस्वत्वे[३] कृते न भविष्यति ।

इदमिह संप्रधार्यम्—आत्वं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् ?

परत्वादात्वम् ॥

( प्रदीपः ) अतिव्याप्तिरप्यत्रेति दर्शयति—समासाच्चेति ॥

१ ईत्वमनवर्णान्तादित्यस्य प्रयोजनमाह—एवञ्चावर्णान्त इति ॥

२ तद्धितस्याग्रहणादिति । तद्धितशसः शकारस्येत्संज्ञाभावान्नानादित्वमिति न तस्य ग्रहणमिति भावः ॥

३ 'ह्रस्वे कृते' इति क. पाठः ॥

( ६१८१ पूर्ववार्तिकप्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः ।

न वक्तव्यः ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणमात्वम्, अन्तरङ्गं ह्रस्वत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥

ननु च—आ गोतः—इत्युच्यमानेऽपि समासाप्रतिषेधो न वक्तव्यः ।

कथम् ?

ह्रस्वत्वे कृते[1] न भविष्यति ।

स्थानिवद्भावात्प्राप्नोति ।

ननु च 'ओतः' इत्युच्यमानेऽपि स्थानिवद्भावात् प्राप्नोति ।

नेत्याह । अनल्विधौ स्थानिवद्भावः ।

'आ गोतः' इत्युच्यमानेऽपि न दोषः । प्रतिषिध्यतेऽत्र स्थानिवद्भावः-गोः पूर्वणित्त्वात्त्वस्वरेषु स्थानिवन्न भवतीति ॥

स एव तर्हि दोषः—गोग्रहणे द्योरुपसंख्यानमिति । सूत्रञ्च भिद्यते ।

यथान्यासमेवास्तु ।

ननु चोक्तम्—ओतस्तिङि प्रतिषेध इति ॥

( ६१८२ प्रथमवार्तिकप्रत्याख्याने वार्तिकम् ॥ ५ ॥ )

॥ * ॥ सुबधिकारात्सिद्धम्[2] ॥ * ॥

( भाष्यम् ) सुपीति प्रकृतं वर्तते ।

क प्रकृतम् ?

'वा सुप्यापिशलेः' ( ९२ ) इति ॥

यद्यनुवर्तते, इहापि विभाषा प्राप्नोति ।

सुब्ग्रहणमनुवर्तते, वाग्रहणं निवृत्तम् ॥

कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते, एकदेशो न ? ।

( ६१८३ प्रत्याख्यानोपष्टम्भकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ एकयोगे चैकदेशानुवृत्तिरन्यत्रापि[3] ॥ * ॥

( भाष्यम् ) एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति । अन्यत्रापि, नावश्यमिहैव । क्वान्यत्र ?

अलुगधिकारः प्रागानङः, उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

( प्रदीपः ) एकयोगे चेति । यस्य स्वरितत्वं प्रतिज्ञायते तदेवानुवर्तते, नान्यदिति भावः ॥

( उद्द्योतः ) यस्य स्वरितत्वमिति । समासनिर्देशेऽपि 'सङ्ख्याव्ययादेः-'इत्यादावेकदेशानुवृत्तिर्दृश्यते, तत्र किं वक्तव्यमसमासनिर्देशे[4]–इति भावः । एवं च 'निवृत्तम्'इतिभाष्येऽननुवृत्तिरेव निवृत्तिरित्यर्थः । केचित्तु निवृत्तमिति भाष्यस्वरसात्तस्यापि स्वरितत्वमस्त्येव, दृष्टान्तस्य[5] तादृशस्यैवोक्तत्वात् । तत्फलं तु 'एङि पररूपम्'इति सूत्रे 'वा सुपि'इत्यनुवर्त्य वाक्यभेदेन व्याख्यानमित्याहुः ॥

( भाष्यम् ) एवमपि—

( ६१८४ आक्षेपवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अम्युपसंख्यानं वृद्धिबलीयस्त्वात् ॥ * ॥

( भाष्यम् ) अम्युपसंख्यानं कर्तव्यम् । गां पश्य ।

किं पुनः कारणं न सिध्यति ?

वृद्धिबलीयस्त्वात् । परत्वाद् वृद्धिः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—एवमप्युपसङ्ख्यानमिति । 'गोशब्दे वृद्ध्यभावस्य' इति शेषः । वक्ष्यमाणोऽभिप्रायः ॥

( ६१८५ समाधानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ न वाऽनवकाशत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम् ?

अनवकाशत्वात् । अनवकाशमात्वं वृद्धिं बाधिष्यते ॥

सावकाशमात्वम् ।

कोऽवकाशः ? द्यां गच्छ ॥

( ६१८६ समाधानसाधकवार्तिकम् ॥ ९ ॥ )

॥ * ॥ द्योश्च सर्वनामस्थाने वृद्धिविधिः ॥ * ॥

( भाष्यम् ) द्योश्च सर्वनामस्थाने वृद्धिर्विधेया ।

किं प्रयोजनम् ?

(प्रदीपः) द्योश्चेति । 'ओतो णित्'इति सूत्रं पठितव्यम्, गोत इत्योकारान्तोपलक्षणार्थं वा व्याख्येयम् । वर्णनिर्देशे हि तपरत्वं प्रसिद्धम् ॥

---

१ 'ह्रस्वे कृते' इति क. पाठः ॥

२ सुबधिकारादिति । एवञ्च गोग्रहणक्लेशः, द्योरुपसंख्यानमित्यादि च न कर्तव्यमिति भावः ॥

३ 'अन्यत्रापि नावश्यमिहैव' इति वार्तिकपाठः क. ठ. पुस्तकयोः ॥

४ असमासनिर्देश इति । स्वरितत्वमतिज्ञानात्समासघटकस्याप्येकदेशानुवृत्तिर्दृश्यते तर्हि किमु वक्तव्यम्–असमासनिर्देशे एकदेशानुवृत्तिर्भवतीति, अवश्यमेकदेशानुवृत्तिर्भवतीति भावः ॥

५ दृष्टान्तस्य—अलुगधिकारः प्रागानङ इत्यादेः । तत्र हि उत्तरपदवद्लुकूपदस्याप्युत्तरत्रानुवृत्तिर्दृश्यते ॥

( उद्योतः ) ननु 'गोतो णित्' इति न्यासेन कथं द्योर्वृद्धिः ? अत आह—ओतो णिदिति ॥ उपलक्षणत्वेन व्याख्याने बीजमाह—वर्णेति । एतद्द्वयभिन्नान मोकारान्तानां त्वनभिधानमाहुः ।

( ६१८७ समाधानसाधकप्रयोजनवार्तिकम् ॥ १० ॥ )

॥ * ॥ यद्याव इन्द्रेति दर्शनात् ॥ * ॥

( भाष्यम् ) यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।

यावता चेदानीं द्योरपि सर्वनामस्थाने वृद्धिरुच्यते, अनवकाशमात्वं वृद्धिं बाधिष्यते ॥

( १०९५ विधिसूत्रम् ॥ ६ । १ । ४ आ. ६० )

## २५३१ एङि पररूपम् ॥ ६ । १ । ९४ ॥

( पररूपाधिकरणम् )

( ६१८८ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ पररूपप्रकरणे तुन्वोर्वि निपात उपसंख्यानम् ॥ * ॥

( भाष्यम् ) पररूपप्रकरणे तु नु इत्येतयोर्वैकारादौ निपात उपसंख्यानं कर्तव्यम् । तु वै-त्वै, नु वै-न्वै ।

वकारादाविति किमर्थम् ?

त्वावत्, न्वावत् ॥

निपात इति किमर्थम् ?

तु वानि, नु वानि ॥

( प्रदीपः ) तुन्वोरिति । सप्तमीनिर्देशात्तदादिविधिः । तु आवत्-त्वावत् ॥ नु वानीति । वातेर्लोडुत्तमैकवचने 'वानि'इति रूपम् ॥

( उद्योतः ) आवदिति—निपातः ॥

( ६१८९ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ न वा निपातैकत्वात् ॥ * ॥

( भाष्यम् ) न वा कर्तव्यम् ।

किं कारणम् ?

निपातैकत्वात् । एक एवायं निपातः-त्वै, न्वै ॥

( प्रदीपः ) एक एवेति । अर्थभेदाभावादेको निपातः ॥

( उद्योतः ) एकनिपातत्वं कथं ज्ञायतेऽत आह—अर्थभेदाभावादिति ॥

( ६१९० उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ एवे चानियोगे ॥ * ॥

( भाष्यम् ) पररूपं[2] वक्तव्यम् । इह एव—इहेव, अद्येव ।

अनियोग इति किमर्थम् ?

इहैव भव मा स गाः, अत्रैव त्वमिह वयं सुशेवाः ॥

( प्रदीपः ) एवे चानियोग इति । नियोगः=अवश्यम्भावः-अवधारणम्, तस्मादन्यत्रार्थे पररूपं भवति । यथा—क्वेव भोक्ष्यते । अत्रानवक्लृप्तावेवशब्दः । यदा त्ववधारणे वर्तते तदा वृद्धिः ॥

( उद्योतः ) यथा क्वेवेति । अनवक्लृप्तिः—असंभावना । भोजनं क्वचिदपि न संभाव्यत इत्यर्थः ॥

( ६१९१ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ शकन्ध्वादिषु च ॥ * ॥

( भाष्यम् ) शकन्ध्वादिषु पररूपं वक्तव्यम् । शक अन्धुः—शकन्धुः, कुल अटा—कुलटा, सीम अन्तः—सीमन्तः ।

केशेष्विति वक्तव्यम् । यो हि सीम्नोऽन्तः, सीमान्तः स भवति ॥

( प्रदीपः ) शकन्धुरिति । अन्धुः-उदपानम् ॥ कुलटेति । अटति-इत्यटा, पचाद्यच् । पश्चात् कुलेन संबन्धः । अन्यथा 'कर्मण्यण्'इत्यण्प्रसङ्गः ॥

(उद्योतः) उदपानमिति । उदकं पीयते यत इति संज्ञायामुदभावः । कूप इत्यर्थः ॥ कुलटा—भिक्षुकी, स्वैरविहारिणी च ॥

( ६१९२ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ ओत्वोष्ठयोः समासे वा ॥ * ॥

( भाष्यम् ) ओत्वोष्ठयोः[3] समासे वा पररूपं वक्तव्यम् । स्थूलोतुः-स्थूलौतुः, बिम्बोष्ठी-बिम्बौष्ठी ॥

( प्रदीपः ) ओत्वोष्ठयोरिति । ओतुः-बिडालः ॥

( उद्योतः ) बिडालः—मार्जारः । वार्तिके ओष्ठशब्दस्य परनिपातः, पूर्वनिपातप्रकरणानित्यत्वात् । स्त्रियामुदाहरणं तु तत्रैव प्रयोगमभिप्रेत्येत्याहुः ।

( ६१९३ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ एमनादिषु च्छन्दसि ॥ * ॥

( भाष्यम् ) एमनादिषु च्छन्दसि पररूपं वक्तव्यम् । अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयामि ॥

---

१ त्वावदिति । अत्र हि पररूपे तावदित्यनिष्टं रूपं प्रसज्येत ॥

२ 'एवे चानियोगे पररूपं वक्तव्यम्' इति छ. पुस्तके भाष्यपाठः ॥

३ 'पररूपं वक्तव्यम्' इत्येव भाष्यपाठः क. ट. पुस्तकयोः ॥

४ द्यन्तादजाद्यदन्तं विप्रतिषेधेनेति वचनात् ओष्ठशब्दस्य पूर्वनिपातः प्राप्तोऽत आह—वार्तिके इति ॥

( १०९६ विधिसूत्रम् ॥ ६ । १ । ४ आ. ६१ )

## २५३२ ओमाङोश्च ॥ ६ । १ । ९५ ॥

( चकारानर्थक्यबोधकभाष्यम् )

किमर्थश्चकारः ? ।

एङीत्यनुकृष्यते ।

किं प्रयोजनम् ? ।

इह मा भूत्-अद्य आ ऋश्यात्—अद्यार्श्यात्, कदा अर्श्यात्—कदार्श्यात् ।[1]

नैतदस्ति प्रयोजनम् । अद्यर्श्यादित्येव भवितव्यम् ।

एवं हि सौनागाः पठन्ति—चोऽनर्थकोऽनधिकारादेङः[2] ॥

( प्रदीपः ) अद्यर्श्यादिति । प्रतिपदविधेर्बलवत्त्वात्परोऽपि सवर्णदीर्घो बाध्यते ॥

( उद्योतः ) नन्वत्र परत्वाद्दीर्घप्रसङ्गोऽत आह—प्रतिपदेति । तत्त्वं च सत्यपि चारितार्थ्ये प्रथमप्रवृत्तौ नियामकम् । प्रवृत्ते च तस्मिन् तदप्राप्तिरेवेति भावः ॥

( ६१९४ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ उस्योमाङ्क्ष्वाटः प्रतिषेधः ॥ * ॥

( भाष्यम् ) उसि पररूपे ओमाङोश्चाटः प्रतिषेधो वक्तव्यः । औस्रीयत्, औढीयत्, औङ्कारीयत् ॥

स तर्हि प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । उक्तम् 'आटश्च' ( ९० ) इत्यत्र चकारस्य प्रयोजनम्—आटोऽचि वृद्धिरेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ॥

( प्रदीपः ) औढीयदिति । वहेराङ्पूर्वस्य क्तप्रत्यये[3] 'ओढम्'इति रूपम्, ततः क्यचि लङि रूपमेतत् ॥

( १०९७ विधिसूत्रम् ॥ ६ । १ । ४ आ. ६२ )

## २५३३ उस्यपदान्तात् ॥ ६ । १ । ९६ ॥

( अपदान्तात्पदप्रयोजनभाष्यम् )

अपदान्तादिति किमर्थम् ?

का उस्रा—कोस्रा ।

अपदान्तादिति शक्यमकर्तुम् ।

कस्मान्न भवति—का उस्रा-कोस्रा ?

अर्थवद्ग्रहणे नानर्थकस्येति ।

नैषा परिभाषेह[4] शक्या विज्ञातुम्, इह हि दोषः स्यात्—भिन्द्या उस्—भिन्द्युः, छिन्द्या[5] उस्—छिन्द्युः ॥

एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ॥

उत्तरार्थं तर्ह्यपदान्तग्रहणं कर्तव्यम् । 'अतो गुणे' (९७) अपदान्ताद्यथा स्यादिति ।

इह मा भूत्—दण्डाग्रम्, क्षुपाग्रमिति ॥

( प्रदीपः ) अर्थवद्ग्रहणमिति । अव्युत्पन्नं प्रातिपदिकमुस्रशब्द इत्युस आनर्थक्यम् ॥

नैषेति । ननु न प्रयोजनानुवर्ति प्रमाणम्—इति कथमनाश्रयणमुपपद्यते ? अनित्यत्वादस्याः परिभाषायाः । तच्चानित्यत्वं 'अप्तृन्तृच्-'इति तृन्तृचोर्भेदेनोपादानेनार्वादेशतृनिवृत्त्यर्थेन ज्ञापितम् । नित्यत्वे ह्यानर्थक्यादर्वादेशग्रहणाप्रसङ्गात्तन्निवृत्तेः सिद्धत्वात् ॥ भिन्द्युरिति । अनागमकानां सागमका आदेशा इति न्यायाद्यासुडादेः प्रत्ययस्यार्थवत्त्वम्, न तु तदेकदेशस्य । यदा त्वर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यत इति न्यायस्तदाऽर्थवत्त्वमेव—उसः ॥

एवं तर्हीति । उस्राशब्दो वसः 'स्फायितञ्चि'—इति रकि संप्रसारणे व्युत्पाद्यते । 'शासिवसि—' इति षत्वं 'न रपर—' इति प्रतिषेधान्न भवति । एवमत्रोसिति लाक्षणिकं रूपम् ॥

( उद्योतः ) अव्युत्पन्नमिति । औणादिकत्वादिति भावः ॥

अर्वादेशमिति । 'प्रत्ययाप्रत्यययोः—'इति परिभाषयाऽस्याग्रहणाचिन्त्यमिदम् । तस्या अप्यनित्यत्वं ज्ञाप्यत इत्याशय इत्यन्ये । वस्तुतः 'इणः षीध्वम्—'इति सूत्रस्थाङ्गग्रहणेन द्वयोरप्यनित्यत्वज्ञापनसिद्धेस्तयोर्भेदेनोपादानं चिन्त्यप्रयोजनम् । ध्वनितं चेदं 'ण्वुल्तृचौ' इत्यत्र भाष्ये इति बोध्यम् ॥ यदा त्विति । अन्यथाऽर्थवतो ह्यागम इत्युक्त्यसङ्गतिरिति भावः । चिन्त्यमिदम्, तदाऽप्यागमविशिष्टस्यैवार्थवत्त्वात् । अन्यथा भूयास्तामित्यादौ तामादेरिडागमापत्तिः । अर्थवतो ह्यागम इत्यस्यागमाभावेऽर्थवत इत्यर्थ इति बोध्यम् ॥

( १०९८ विधिसूत्रम् ॥ ६ । १ । ४ आ. ६३ )

## २५३५ अव्यक्तानुकरणस्यात इतौ ॥ ६ । १ । ९८ ॥

( ६१९५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ इतावनेकाज्ग्रहणं श्रदर्थम् ॥ * ॥

( भाष्यम् ) इतावनेकाज्ग्रहणं कर्तव्यम् ।

---

[1] 'आ ऋश्यात्, अद्य अर्श्यात्—अद्यार्श्यात्—इति ट. पाठः ॥

[2] 'कारादेङ इति' इति ट. पाठः ॥

[3] 'क्तप्रत्यये परे ओढ' इति च. झ. पाठः ॥

[4] 'परिभाषा शक्या' इति क. ट. पाठः ॥

[5] 'छिन्द्या उस्—छिन्द्युः' इत्युदाहरणं क. ट. पुस्तकयोर्न दृश्यते ॥

किं प्रयोजनम्?

अदर्थम्। इह मा भूत्—अदिति ॥

( १०९९ विषेधसूत्रम् ॥ ६ । १ । ४ आ. ६४ )

## २५३६ नाम्रेडितस्यान्त्यस्य तु वा ॥ ६ । १ । ९९ ॥

( ६१९६ एकदेशिनो नित्यत्वबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ नित्यमाम्रेडिते डाचि ॥ * ॥**

( भाष्यम् ) नित्यमाम्रेडिते डाचि पररूपं कर्तव्यम्। पटपटायति ॥

( प्रदीपः ) 'नित्यमाम्रेडिते डाचि' इति वार्तिकदर्शनात्सूत्रे कैश्चित् प्रक्षिप्तम् ॥

( ६१९७ नित्यत्वबोधनप्रत्याख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अकारान्तानुकरणाद्वा ॥ * ॥**

( भाष्यम् ) अथवा—अकारान्तमेतदनुकरणम्।
भवेत्सिद्धं यदाऽकारान्तम्।
यदा तु खलु अच्छब्दान्तं तदा न सिध्यति।
विचित्रास्तद्धितवृत्तयः, नातस्तद्धित उत्पद्यते ॥

( प्रदीपः ) विचित्रा इति। प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावेऽप्रवृत्तिरिति भावः ॥

( ११०० विधिसूत्रम् ॥ ६ । १ । ४ आ. ६५ )

## २५३८ अकः सवर्णे दीर्घः ॥६।१।१०१॥

( दीर्घाधिकरणम् )

( ६१९८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सवर्णदीर्घत्वे ऋति ॠ वा-वचनम् ॥ * ॥**

( भाष्यम् ) सवर्णदीर्घत्वे ऋति ॠ वा भवतीति वक्तव्यम्। होतॄकारः—होतृकारः ॥

( प्रदीपः ) ऋवेति। 'ऋ ऌ' इत्येतयोः[1] संवृतत्वात् विवृताभ्यामृकार[2]ऌकाराभ्यामसावर्ण्यादज्ग्रहणेना[3]ग्रहणात्, अर्ध[4]तृतीयमात्रत्वाद्वा ऊकालत्वाभावाद्दीर्घसंज्ञाया अभावाद्वचनम् ॥

इत्युपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्।

( उद्द्योतः ) वार्तिकप्रयोजनं वक्तुं सूत्रेणासिद्धिं दर्शयति—ऋ ऌ इति। सावर्ण्याभावाय विवृतत्वाभावेऽपि उपस्थितरेफीयईषत्स्पृष्टप्रयत्नत्वमेव वक्तुं युक्तम्। 'तुल्यास्य–' इति सूत्रे कैयटेनाप्येवमेवोक्तमिति चिन्त्यमेतत्। अर्धतृतीयमात्रत्वाद्वेत्यपि चिन्त्यम्, 'तुल्यास्य–' सूत्रस्थभाष्य[5]विरोधात्।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

( ६१९९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ऌति ॡ वा ॥ * ॥**

( भाष्यम् ) ऌति ॡ वा भवतीति वक्तव्यम्। होतॢकारः—होतॢकारः।

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

( ११०१ विधिसूत्रम् ॥ ६ । १ । ५ आ. ६६ )

## २५३९ प्रथमयोः पूर्वसवर्णः ॥ ६ । १ । १०२ ॥

( दीर्घाधिकरणम् )

( प्रथमपदार्थे पक्षद्वयोपस्थापकभाष्यम् )

**प्रथमयोरित्युच्यते, कयोरिदं प्रथमयोर्ग्रहणम्? किं विभक्त्योः, आहोस्वित् प्रत्यययोः?**

( प्रदीपः ) प्रथमशब्दः सन्निवेशविशेषापेक्षोऽभिधेये वर्तते। तत्र विशेषानवधारणात् पृच्छति—कयोरिति ॥ ननु[6] धातुनिपातादीनामपि प्राथम्यसम्भवाद्विशेषविषयः प्रश्नो नोपपद्यते। नैष दोषः। 'दीर्घाजसि च' इति लिङ्गाद्धात्वादीनामग्रहणात् विभक्त्योः प्रत्यययोर्वा ग्रहणे[7] पुनः प्रतिषेध उपपद्यते, न तु धात्वादीनामन्यतमग्रहणे ॥ ननु[8] सामान्यग्रहणेऽपि प्रतिषेधोपपत्तौ लिङ्गत्वा[9]नुपपत्तिः। नैतदस्ति। प्रथमयोरिति कस्यचिदेव

---

१ इत्येतयोरिति। एतद्वार्तिकद्वयविधेययोः 'ॠॡ'वर्णयोर्भाष्यकृताऽनर्थकत्वमापादितम्। अनयोश्च स्वरेष्वन्तर्भावाभावाद्विवृतत्वं नास्ति, किन्तु संवृतप्रयत्नवत्त्वमेव ॥

२ ऋकारेति। स्थानिभूताभ्यामित्यर्थः ॥

३ अज्ग्रहणेनेति। सावर्ण्याभावादज्ग्रहणेनाग्रहणम् ॥

४ अर्धतृतीयेति। वार्तिकविधेययोर्दीर्घत्वेन द्विमात्रत्वमुपपन्नम्। अर्धमात्रोऽत्र रेफोऽधिक इति प्रदीपाशयः ॥

५ भाष्यविरोधादिति। तत्र हि 'ऊकालोऽच् ह्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते। न च ऋकारो ऌकारो वाऽजस्ति' इत्युक्तम्। तव मते अच्त्वं वक्ष्यामीत्युक्तावपि अर्धतृतीयमात्रत्वेनोकालत्वाभावाद्ध्रस्वादिसंज्ञानापत्तिरिति विरोधः ॥

६ भाष्यकृद्भिः कयोरिदं प्रथमयोर्ग्रहणमिति विशेषविषयः प्रश्नः कृतः, स च नोपपद्यते इत्याशङ्कायामाह—ननु धात्विति ॥

७ 'ग्रहणं, यतः प्रतिषेध उपपद्यते न तु धात्वादीनामन्यतमग्रहणात्' इति च. झ. पाठः ॥

८ ननु प्रथमपदेन धात्वादीनां दीर्घाज्जसि चेति सूत्रानुपपत्त्याऽग्रहणेऽपि प्रत्ययत्वविभक्तित्वरूपधर्मयोर्ग्रहणे दीर्घाज्जसि चेत्युपपद्यतेऽतस्तयोर्धर्मयोरेव ग्रहणं स्यादत आह—ननु सामान्येति ॥

९ लिङ्गत्वेति। दीर्घाज्जसि चेत्यस्य प्रत्ययत्वविभक्तित्वयोर्धर्मयोरग्रहणे लिङ्गत्वानुपपत्तिरित्यर्थः ॥

विशेषस्य ग्रहणं न तु यौगपद्येन सर्वेषां विशेषाणाम्, सर्ववि-शेषविषयस्य सन्निवेशापेक्षस्य प्राथम्यस्य युगपत् बुद्ध्याऽपेक्षितुमशक्यत्वात्, प्रतिनियतविशेषालम्बित्वात्प्राथम्यज्ञानस्य । तत्र प्रसिद्ध्याश्रयेण विभक्तिग्रहणमाशङ्कितम्, 'प्रातिपदिकार्थ–' इत्यादौ विभक्तिग्रहणस्य[1] प्रसिद्धत्वात् । अन्तरङ्गत्वात्तु प्रत्ययग्रहणमाशङ्कितम् । प्रत्ययस्य हि प्रथमत्वमन्तरङ्गम्, त्रिकस्य[2] तु बहिरङ्गम् । तत्र प्रथमसाहचर्यात्प्राथम्यारोपणात् द्वितीयस्यापि[3] प्रथमशब्देनाभिधानम् । यथा 'अर्धर्चाः पुंसि च' इति गोमया[4]दीनामर्धर्चशब्देन । तथा च बहुवचनं कृतम् ॥

**अन्ये त्वाहुः[5]**—द्वितीयस्य तु प्रथमापेक्षया द्वितीयत्वं नान्यथा । ततः प्रथमद्वितीययोरनपेक्षितपरस्परापेक्षयोर्द्वयोरपि परापेक्षं[6] प्राथम्यं मुख्यमेव । तत्र[7] 'प्रथमयोः' इति स्त्रीलिङ्गनिर्देशे विभक्तिग्रहणम् । पुंलिङ्गनिर्देशे तु प्रत्ययग्रहणम् । समानश्च निर्देश इति **सन्देहः** ॥

**(उद्योतः) तत्र विशेषेति** । 'प्रथमयोः' इति निर्देशस्य[8] स्त्रीपुरुषसाधारणात्वादित्यर्थः । क्वचित्सन्निवेशे[9] क्रमेण सन्निविष्टानामादिभूतो हि प्रथमशब्देन बोध्यते ॥ **विशेषविषय इति** । विभक्तिप्रत्ययविषय इति भावः ॥ **'सर्वेषां विशेषाणाम्'** इत्यस्य 'ग्रहणम्' इति शेषः । तत्र हेतुमाह—**सर्वेत्यादि** ॥ **अशक्यत्वादिति** । सर्वसन्निवेशानां युगपद्बुद्ध्यारोहासम्भवादिति भावः ॥ तदाह—**प्रतिनियतेति** । तत्तत्सन्निवेशस्थिततत्तत्पदार्थालंबनत्वादित्यर्थः ॥ तत्र विभक्तिप्रत्ययविषयसन्देहे बीजमाह—**तत्र प्रसिद्धीति** । उभयोरप्येकसन्निवेशापेक्षत्वात्प्राथम्यस्येत्यर्थः ॥ **अन्तरङ्गमिति** । तत्तत्सन्निवेशस्थितसर्वापेक्षया प्रथमत्वादिति भावः ॥ नन्वेवं सर्वाद्यस्य प्राथम्यं मुख्यमिति तस्यैव ग्रहणं न्याय्यमिति द्विवचननिर्देशोऽनुपपन्नोऽत आह—**तत्र प्रथमसाहचर्यादिति** । द्विवचननिर्देशसामर्थ्यादिति भावः ॥

द्वितीयायाः प्रथमापेक्षया द्वितीयत्वबुद्धिवारणायाह—**अनपेक्षितपरस्परापेक्षेति** । अनपेक्षितपरस्परापेक्षप्रथमत्वद्वितीयत्वयोरित्यर्थः । 'अनपेक्षितपरस्परयोः' इति पाठः क्वचित् । अत्रारुचिबीजं त्वेवंविधं प्राथम्यं तृतीयादेरपीति ॥ निर्देशादपि न सन्देहनिवृत्तिः, प्रत्युत सन्देह एवेत्याह—**तत्रेति** ॥ **विभक्तीति** । समुदायस्य[10] विभक्तिसंज्ञेति भावः ॥

**( सिद्धान्तदर्शनभाष्यम् )**

**विभक्त्योरित्याह ।**

**कथं ज्ञायते ?**

**अचीति वर्तते । न[11] चाजादी प्रथमौ प्रत्ययौ स्तः ॥**

**( प्रदीपः ) न चाजादी इति** । 'प्रथमयोः' इति विशेष्यम्, तद्विशेषणमचीति; तेनाजाद्योः प्रथमयोरिह ग्रहणम् । न च सुशब्दोऽजादिर्भवतीति नासाविह प्रथमशब्देन गृह्यते । विभक्त्योस्त्वजादित्वं संभवतीति तयोरेव ग्रहणम् । यद्यपि[12] प्रथमे त्रिके सुशब्दस्याजादित्वासंभवस्तथाप्यवयवान्तरद्वारकस्त्रिकस्याजादिव्यपदेश इति अजाद्योः प्रथमयोरिति सम्बन्धोपपत्तिः । प्रत्यययोस्तु[13] ग्रहणे सुशब्दस्यानजादित्वात्, औजसोश्चाप्राथम्यात्–प्रत्यययोरजाद्योरिति सम्बन्धायोगः ॥

**( उद्योतः )** तदादिविधिसिद्धये विशेष्यं दर्शयति—**प्रथमयोरिति** । सिद्ध[14]प्रथमत्वकयोरजादित्वं विशेषणमिति भावः ॥ **यद्यपीति** । विभक्तिसंज्ञकत्रिकस्य सर्वस्याजादित्वासंभव इति भावः ॥ परिहरति—**तथापीति** । छत्रिन्यायेनेति भावः ॥

**( आक्षेपभाष्यम् )**

**ननु चैवं विज्ञायते—अजादी यौ प्रथमौ, अजादीनां वा यौ प्रथमौ–इति ॥**

**( प्रदीपः ) अजादी यौ प्रथमाविति** । अजादी विशेष्यौ, तद्विशेषणं प्रथमयोरिति । तेनायमर्थो भवति–'अजादी यौ प्रत्ययौ अन्यापेक्षया लब्धप्रथमव्यपदेशौ तयोः परतः पूर्वसवर्णदीर्घः' इत्येवमौजसोरेव ग्रहणं प्राप्नोतीति विभक्तिद्वयग्रहणस्याज्ग्रहणं न लिङ्गम् ॥ **अजादीनां वेति** । अचीति वर्तते, निर्धारण[15]सप्तमी चेहाश्रीयते, जातौ चैकवचनम् । तुल्यजातीयस्य च निर्धारणं भवतीति अजादीनां मध्ये प्रथमौ यावजादी अन्याजादिप्रत्ययापेक्षया लब्धप्रथमव्यपदेशौ, तौ चौजसावेवेति विभक्तिग्रहणे लिङ्गाभावः ॥

**( उद्योतः )** नन्वजादी यौ प्रथमावित्युच्यमाने कथं लिङ्ग[16]वि-

---

१ **विभक्तिग्रहणस्येति** । प्रातिपदिकार्थलिङ्गेति सूत्रे प्रथमापदेन विभक्तिग्रहणस्य प्रसिद्धिः, तदाश्रयणेन विभक्तिग्रहणाशङ्का ॥

२ **त्रिकस्य**—विभक्तेरित्यर्थः ॥

३ **द्वितीयस्यापीति** । प्रथमयोरिति द्विवचननिर्देशसामर्थ्यात्प्रथमातिरिक्तस्यापि कस्यचित् प्रथमपदेन ग्रहणं तच्च द्वितीयस्यैव । प्रथमस्य प्रथमपदेन ग्रहणे, द्विवचननिर्देशादन्यस्य ग्रहणे च प्राप्ते सान्निध्याद्द्वितीये एव प्रथमारोपः क्रियत इति द्वितीयस्य ग्रहणम् ॥

४ **गोमयादीनामिति** । अर्धर्चाः पुंसि चेत्यत्रादिग्रहणाभावेऽपि बहुवचननिर्देशसामर्थ्यादन्येषां ग्रहणे प्राप्ते तदनन्तरशब्दानां गोमयादीनामेव ग्रहणं न तु यत्र कुत्र स्थितानां शब्दानां ग्रहणम्, तद्वदत्रेति भावः ॥

५ प्रकारान्तरेण द्वितीयस्य प्राथम्यमुपपादयति—**अन्ये त्वाहुरिति** । एतच्च कैय्यटमतं 'अजादीनां वा यौ प्रथमौ' इति भाष्यानुसारेण द्रष्टव्यम् ॥

६ **परापेक्षं**—तृतीयाद्यपेक्षम् । तृतीयाद्यपेक्षया द्वितीयोऽपि प्रथम एवेति भावः ॥

७ अन्ये त्वाहुरिति मतेन विभक्तिप्रत्यययोर्ग्रहणमेकेन निर्देशेन साधयति—**तत्र प्रथमयोरिति** ॥

८ ननु विभक्तिः स्त्रीलिङ्गा, प्रत्ययश्च पुंल्लिगस्तयोः कथमेकेन शब्देनाभिधानमत आह—**निर्देशस्येति** ॥

९ **क्वचित्सन्निवेशे**—विभक्तिसन्निवेशे प्रत्ययसन्निवेशे वा ॥

१० **समुदायस्य**—त्रिकसमुदायस्य ॥

११ 'न वाऽजादी' इति ट. पाठः ॥

१२ विभक्त्योरजादित्वमुपपादयति—**यद्यपीति** ॥

१३ प्रत्यययोरजादित्वाभावं दर्शयति—**प्रत्यययोस्त्विति** ॥

१४ **सिद्धप्रथमत्वकयोः**—सिद्धं प्रथमत्वं ययोरिति बहुव्रीहेः कप्रत्ययः ॥

१५ **निर्धारणसप्तमी**—अजादीनां वा यौ प्रथमाविति भाष्ये—अजादीनामित्येषा ॥

१६ **लिङ्गविघटनं**—भाष्योक्तं 'अचीति वर्तते' इति लिङ्गविघटनम् ॥

घटनमत आह—अजादी विशेष्याविति । सिद्धाजादित्वस्य प्राथम्यं विशेषणमिति भावः । नै च विशेष्यत्वे कथं तदादिविधिरिति वाच्यम् । 'दीर्घाज्जसि–' इति लिङ्गात् प्रत्यययोर्बुद्धिसन्निधानादचीत्यस्य तद्विशेषणत्वात्तदादिविधिः, अजादित्वविशिष्टप्रत्ययरूपौ यौ प्रथमाविल्यर्थ इति भावः ॥ निर्धारणसप्तमी चेहेति । शब्दाधिकारादिति भावः ॥ जातौ चेति । वचनविपरिणाम इत्यन्ये । अयं पक्ष एकदेश्युक्तिः, 'कारके' इति सूत्रस्थभाष्यविरुद्धत्वात् ॥ तुल्यजातीयस्येति । 'गैवां कृष्णा संपन्नक्षीरा' इत्यादौ यथा गौरेव प्रतीयते न महिष्यादि, तथेति भावः ॥

( सिद्धान्तभाष्यम् )

**यत्तर्हि 'तस्माच्छसो नः पुंसि' (१०३) इत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यः—विभैक्त्योर्ग्रहणमिति ॥**

**अथवा-सुपीति वर्तते ॥**

(प्रदीपः) अथ वेति । 'वा सुप्यापिशलेः' इत्यतः सुपीति वर्तते । तत्र 'दीर्घाज्जसि च' इति प्रतिषेधाल्लिङ्गात्सुपः परिग्रहे सिद्धे सुब्ग्रहणानुवृत्त्या सुपां प्रसिद्धो यो धर्मः स परिगृह्यते । 'सुपः' 'विभक्तिश्च' इत्यत्र 'त्रीणि' इत्यनुवृत्त्या त्रिकस्य विभक्तित्वं प्रसिद्धः सुब्धर्म इति विभक्त्योर्ग्रहणं सम्पत्स्यते ॥

( उद्योतः ) ननु सुपीत्यनुवृत्तावपि कथं विभक्तिग्रहणम्, न प्रत्ययग्रहणम्? अत आह—तत्रेति ॥ प्रसिद्धो यो धर्म इति । सुप्शब्देन सुबुद्देशेन विहितधर्मो लक्ष्यते, तेन सुबुद्देशेन विहितधर्मयुक्तयोः प्रथमयोरित्यर्थ इति विभक्तिग्रहणसिद्धिः । तदाह—सुपो विभक्तिश्चेति ॥ त्रीणीत्यनुवृत्त्येति । एतेन विभक्तिसंज्ञाया अपि प्रत्येकवृत्तितया पक्षयोरविशेष इत्यपास्तम् । यदापि विभक्तिसंज्ञा प्रत्येकं तदापि 'तस्माच्छसः–' इति ज्ञापकात्प्रथमयोस्त्रिकयोर्ग्रहणमिति 'विभक्तिश्च' इत्यत्र भाष्ये स्पष्टम् । एवं च 'अथवा सुपि' इत्युक्तिरेकदेशिन इति बोध्यम् ॥

( 'अमिपूर्वः' इति सूत्रप्रयोजनभाष्यम् )

**अथ किमर्थं पूर्वसवर्णदीर्घः, अमिपूर्वत्वं चोच्यते, न 'प्रथमयोः पूर्वसवर्णः' इत्येव सिद्धम्?**

**न सिध्यति ।**

**प्रथमयोः पूर्वसवर्ण इत्युच्यमानेऽप्यपि दीर्घः प्राप्नोति—वृक्षम्, प्लक्षम् ।**

**नैष दोषः ।**

**यत् पूर्वस्मिन् योगे दीर्घग्रहणं तदुत्तरत्र निवृत्तम् ।**

**एवमपि इदमिह पूर्वसवर्णग्रहणं क्रियते तेनाप्यपि पूर्वसवर्णः प्रसज्येत—वृक्षम्, प्लक्षम्, द्विमात्रः प्राप्नोति ।**

**नैष दोषः ।**

**सवर्णग्रहणं न करिष्यते ।**

**यदि सवर्णग्रहणं न क्रियते, कुतो व्यवस्था?**

**आन्तर्यतः ।**

**यद्येवम्—अग्नी, वायू—त्रिमात्रः प्राप्नोति । वृक्षम्, प्लक्षम्—द्विमात्रः ।**

**तस्मात्सवर्णग्रहणं कर्तव्यम्, तस्मिंश्च क्रियमाणे दीर्घग्रहणमनुवर्त्यम्, तस्मिन्ननुवर्तमाने 'अमि पूर्वः' इत्यपि वक्तव्यम् ॥**

(प्रदीपः) अथ किमर्थमिति । 'खट्वां कुमारीम्' इत्यादौ लक्षणयोः फलभेदं दृष्ट्वा प्रश्नः ।

इतरः 'वृक्षम्-अग्निम्' इत्यादौ फलभेदं मत्वाऽऽह—न सिध्यतीति ॥

यत्पूर्वस्मिन्निति । 'अकः सवर्णे–' इत्यतो दीर्घग्रहणं नानुवर्तत इत्यर्थः ॥

एवमपीति । अग्नी इत्यादि सिद्ध्यर्थं सवर्णग्रहणमवश्यं कर्तव्यम् ॥ सवर्णग्रहणमिति । ततश्च-वृक्षम्-अग्निम्-कुमारीम्-कुमारीः पश्य-वधूम्-वधूः-इत्यादि सर्वं सिद्ध्यति ॥ कुतो व्यवस्थेति । वृक्षम्-अग्निम्-वायुम्-इत्यादौ ह्रस्व एव, अग्नी वायू वृक्षा इत्यादौ दीर्घ एवेति व्यवस्था न सिध्यति । तथाहि—यदि पूर्वा व्यक्तिराश्रीयते तदाऽग्नी इत्यादावपि ह्रस्वप्रसङ्गः । अथ पूर्वाकृतिराश्रीयते तदाऽग्निमित्यादावपि दीर्घप्रसङ्ग इति भावः ॥

आन्तर्यत इति । पूर्वाकृतिराश्रीयते, 'प्लुतश्च विषये स्मृतः' इति प्लुतो न भविष्यति, दीर्घश्च भविष्यति–इति मन्यते ॥

त्रिमात्रः प्राप्नोतीति । प्लुताप्लुतप्रसङ्गे 'प्लुतश्च विषये स्मृतः' इत्युच्यते । इह तु प्लुतस्यैव प्रसङ्ग इति भावः ॥

तस्मादिति । यस्मात्पूर्वाकृतिपक्षे पूर्वव्यक्तिपक्षे च दोषस्तस्मादित्यर्थः ॥

---

१ ननु प्रथमयोरित्यस्य विशेषणत्वे तदादिविधिरनुपपन्नोऽत आह—न च विशेष्यत्व इति । प्रत्ययपदस्य दीर्घाज्जसि चेति लिङ्गादुपस्थितस्य विशेष्यत्वमिति भावः ॥

२ प्रत्ययपदस्य अचीत्यस्य विशेष्यत्वेऽर्थमाह—अजादीति ॥

३ तुल्यजातीयस्य निर्धारणे दृष्टान्तमाह—गवां कृष्णेति ॥

४ विभक्त्योरिति । तस्माच्छसो न इत्यत्र तस्मादित्यनेन पूर्वसवर्णम्प्रतिनिर्दिश्य शसः सस्य नकारो विधीयते । यदि च प्रथमयोः प्रत्यययोर्ग्रहणं तदा शसः पूर्वसवर्णाप्राप्त्या तस्मादित्यनेन प्रतिनिर्देशो न युज्येत । तन्निर्देशाद्विभक्त्योर्ग्रहणमित्याशयः ॥

५ 'पूर्वसवर्णदीर्घ इत्युच्यमाने' इति ट. पाठः ॥

६ खट्वामिति । अमि पूर्वं इत्यस्याकरणेऽपि खट्वाम्–वधूम्–कुमारीमित्यादौ पूर्वसवर्णः स्यादित्यालोच्य वृक्षमित्यादौ दोषमनभ्युपगमस्य च भाष्येऽयं प्रश्न इति भावः ॥

७ 'दीर्घग्रहणमिह ना' इति झ. पाठः ॥

८ 'आद्गुणः' इतिसूत्रे श्लोकभाष्यमेतत् ॥

( उद्योतः ) **फलाभेदमिति** । तथा च 'अमि पूर्वः' इति सूत्रं व्यर्थमिति भावः ॥

**नानुवर्तते इति** । 'प्रथमयोः'इत्यत्र अननुवृत्तिरेव निवृत्तिरिति भावः ॥

**अग्नी इत्यादिसिध्यर्थमिति** । अन्यथा पूर्वो ह्रस्व एवोभयोः स्थाने स्यादित्यर्थः ॥

भाष्ये—**पूर्वसवर्णः प्रसज्येतेति** । तथा च 'वृक्षम्' इत्यादावपि दीर्घः स्यादिति भावः ॥ **ततश्चेति** । क्वचिदिष्टसिद्धिरित्यर्थः ॥

एवमप्यग्नी इत्यादौ प्लुतः प्राप्नोतीत्यत आह—**प्लुतश्चेति** ।

**इह तु प्लुतस्यैवेति** । अन्तरतमपरिभाषयेति भावः ॥

भाष्ये—**तस्मिंश्च क्रियमाणे दीर्घग्रहणमनुवर्त्यमिति** । तत्र[1] दीर्घः पूर्व इति विरोधवारणाय सवर्णग्रहणं कर्तव्यम् । तत्र कृतेऽग्नी इत्यत्र प्लुतव्यावृत्तये दीर्घग्रहणं कार्यम् । जात्या[2] दीर्घस्य सामानाधिकरण्यासंभवाज्जातिपक्षेऽपि विप्रतिषिद्धमेवेति भावः ॥

## ( योगविभागप्रयोजनभाष्यम् )

**अथ किमर्थं पृथगुच्यते, नेहैवोच्येत—'प्रथमयोः पूर्वसवर्णोऽमि च' इति ?**

**यदि प्रथमयोः पूर्वसवर्णदीर्घो भवति, अमि चेत्युच्यते, तेनाम्यपि दीर्घः प्रसज्येत—वृक्षम्, प्लक्षम् ।**

**नैष दोषः ।**

**दीर्घग्रहणं निवर्तयिष्यते ।**

**एवमपि पूर्वसवर्णः प्रसज्येत ।**

**सवर्णग्रहणं न करिष्यते ।**

**यदि सवर्णग्रहणं न क्रियते, पूर्वस्मिन् योगे विप्रतिषिद्धम्—यदि पूर्वः, न दीर्घः । अथ दीर्घः, न पूर्वः । पूर्वो दीर्घश्चेति विप्रतिषिद्धम् ।**

**तस्मादुभयमारब्धव्यम्, पृथक् च वक्तव्यम् ॥**

( प्रदीपः ) **अमि चेति** । पुनः पूर्वग्रहणं न कर्तव्यं भवतीति भावः ॥

**दीर्घग्रहणमिति** । 'अमि च'इत्यत्रेति भावः ॥

**एवमपीति** । ततश्च कुमारीमित्यादौ त्रिमात्रप्रसङ्गः ॥

**पूर्वस्मिन् योग इति** । पूर्वव्यक्त्याश्रये 'अग्नी' इत्यादौ पूर्वव्यक्तिर्न दीर्घेति विप्रतिषिद्धं स्यात् । पूर्वो दीर्घ इत्याकृत्याश्रये तूक्त एव दोषः ॥ 'प्रथमयोः पूर्वः'इत्यत्रानुवृत्त्या पूर्वाकृतिराश्रयिष्यते, 'अमि च'इत्यत्र तु दीर्घग्रहणनिवृत्त्या व्यक्तिरिति दुर्लभमेतत् ॥

**तस्मादुभयमिति** । अथोभयस्मिन् पृथक्कर्तव्ये 'प्रथमयोः पूर्वसवर्णः' इत्यत्र सवर्णग्रहणं किमर्थं कृतम् ? यावता दीर्घानुवृत्त्या पूर्वाकृतिराश्रयिष्यते । नैतदस्ति । व्यक्तिपक्षस्यापि सम्भवात् 'अग्नी' इत्यादौ विरोधाशङ्का स्यात् ॥

( उद्योतः ) ननु 'प्रथमयोः'इत्यत्र दीर्घानुवृत्तिरावश्यकी 'अग्नी' इत्यादौ त्रिमात्रव्यावृत्त्येऽत आह—**अमि चेत्यत्रेति** ।

**त्रिमात्रप्रसङ्ग इति** । 'वृक्षम्'इत्यादौ द्विमात्रस्तु नापाद्यः, वचन[3]सामर्थ्यात् 'प्रथमयोः' इत्यनेनैव तस्य सिद्धत्वात् । उपलक्षणं[4] वा ॥

**उक्त एवेति** । आकृत्यर्थकपूर्वग्रहणस्यैव 'अमिपूर्वः' इत्यत्रानुवृत्त्या आन्तरतम्यात्कुमारीमित्यादौ पूर्वजातीयस्त्रिमात्रः स्यादित्यर्थः ॥ **अनुवृत्त्येति** । 'दीर्घग्रहणस्य'इत्यादिः ॥ **दुर्लभमेतदिति** । प्रतिपत्तिगौरवप्रसङ्गादयुक्तमेतदित्यर्थः ॥

**व्यक्तिपक्षस्यापीति** । अत्रेदं बोध्यम्—आकृतिग्रहणेऽपि कथं 'दीर्घः' इत्यनेन सामानाधिकरण्यम् ? जातौ दीर्घत्वादेरभावात् । तस्मात्पूर्वशब्देन पूर्वजातीयो लक्षणीय इत्याकृतिग्रहणतात्पर्यम् । व्यक्तिपक्षस्यापीत्यादेस्तु लक्षणया प्रयोगस्यान्याय्यत्वम्, रूढिप्रयोजनयोरभावात्—इति ॥

( ६२०० योगविभागे पूर्वपक्षवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रथमयोरिति योगविभागः सवर्णदीर्घार्थः ॥ * ॥

**( भाष्यम् ) 'प्रथमयोः' इति योगविभागः कर्तव्यः, प्रथमयोरकः सवर्णदीर्घो भवति ।**

**ततः 'पूर्वसवर्णः', पूर्वसवर्णदीर्घो[6] भवत्यकः प्रथमयोरिति ॥**

**किमर्थो योगविभागः ?**

**सवर्णदीर्घार्थः । सवर्णदीर्घत्वं यथा स्यात्—वृक्षाः, प्लक्षाः, वृक्षान्, प्लक्षान् ॥**

( ६२०१ योगविभागसमर्थकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ एकयोगे हि जश्शसोः पररूपप्रसङ्गः ॥ * ॥

**( भाष्यम् ) एकयोगे हि सति[7] जश्शसोः पररूपं प्रसज्येत—वृक्षाः, प्लक्षाः, वृक्षान्, प्लक्षान् ॥**

**ननु च पूर्वसवर्णदीर्घत्वं पररूपं बाधिष्यते ।**

**नोत्सहते बाधितुम् ।**

**किं कारणम् ?**

---

१ ननु सवर्णग्रहणे क्रियमाणे दीर्घग्रहणमावश्यकमित्यस्तु, सवर्णग्रहणेऽक्रियमाणे दीर्घग्रहणमेव कृत्वेष्टं सिद्धं स्यादत आह—तत्र दीर्घ इति ॥

२ जात्येति । प्रथमयोः पूर्व इत्येतद्घटकपूर्वशब्दस्य व्यक्तिबोधकत्वे दोषस्मदर्श्य जातिपक्षेऽपि सवर्णग्रहणमावश्यकमेव, अन्यथा पूर्वो दीर्घ इत्युच्यमाने जातौ ह्रस्वत्वादीनामभावात् पूर्वो दीर्घ इत्यनयोः सामानाधिकरण्यासम्भवः इति भावः ॥

३ वचनसामर्थ्यात्—अमि चेति वचनसामर्थ्यात् ॥

४ उपलक्षणमिति । कुमारीमित्येतदुपलक्षणं वृक्षमित्यादेरपि ॥

५ आकृतीति । प्रथमयोः पूर्व इत्यस्मादाकृत्यर्थकपूर्वशब्दस्यैवोत्तरत्रानुवृत्तिरिति कुमारीमित्यत्र त्रिमात्रप्रसङ्गरूपो दोषः ॥

६ 'पूर्वसवर्णे दीर्घो' इति क. पाठः ॥

७ 'सति'शब्दः क. छ. पुस्तकयोर्न ॥

( प्रदीपः ) **वृक्षा इति** । अत्राद्गुणः प्राप्तः, ततो दीर्घः, ततः परत्वात् पूर्वसवर्णदीर्घः, ततः पररूपप्रसङ्गः ॥

( उद्योतः ) **अत्राद्गुण इति** । ततश्चतुर्थकक्षान्तरप्राप्तपररूपबाधनाय योगविभाग इत्यर्थः ॥ **ततः पररूपेति** । सर्वापवादत्वादिति भावः ॥

( ६२०२ योगविभागफलसमर्थकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ आद्गुणयणादेशयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशास्तेषां पररूपं स्वरसन्धिषु ॥ * ॥**

( भाष्यम् ) **आद्गुणयणादेशावुत्सर्गौ । तयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशाः । तेषां सर्वेषां पररूपमपवादः । तत्सर्वबाधकम्, सर्वबाधकत्वात् प्राप्नोति ॥**

( प्रदीपः ) **आद्गुणेति** । तत्र वृद्ध्यादयो द्वितीयकक्ष्याप्राप्ताः, पररूपं तु तृतीयकक्ष्याप्राप्तमिति भावः ॥

( योगविभागसामर्थ्यबोधकभाष्यम् )

**अथ क्रियमाणेऽपि योगविभागे यावता पररूपमपवादः कस्मादेव न बाधते ?**

***योगविभागोऽन्यशास्त्रनिवृत्त्यर्थः* । योगविभागोऽन्यशास्त्रनिवृत्त्यर्थो विज्ञायते ॥**

(प्रदीपः) **अथ क्रियमाणेऽपीति** । यथा 'वृक्षा' इत्यादौ योगविभागेन **पररूपं** 'पचन्ति'इत्यादौ सावकाशं बाध्यते तथा 'अग्निम्-वायुम्'इत्यादौ सावकाशमग्नि पूर्वत्वं 'वृक्षम्' इत्यादौ बाध्यते । यथाग्नि पूर्वत्वं न बाध्येत । अथापि **पूर्वत्वं** न बाध्यते, पररूपमेव बाध्येत इत्युच्यते तदाऽस्य विभागस्य कारणं वाच्यमिति भावः । **अथवा**ऽयमभिप्रायः-यदि पररूपं सवर्णदीर्घस्येव पूर्वसवर्णस्यापि बाधकं ततो योगविभागेऽपि क्रियमाणे बाधकं स्यादिति ॥ **योगविभाग इति** । चतुर्थकक्ष्याप्राप्तत्वाद्योगविभागः पररूपस्य बाधक इत्यर्थः ॥

( उद्योतः ) ननु योगविभागस्य सर्वापवादत्वात्पररूपस्यापि बाधस्तेन स्यादत आह—**यथा वृक्षा इति** । 'अग्निम्'इत्यादौ सावकाशत्वं योगविभागीयप्रथमसूत्रापेक्षया ॥ अस्य चोद्यस्य भाष्ये एव वक्ष्यमाणत्वात्रायमेतद्भाष्यार्थोऽत आह—**अथवेति** ॥ [1]**चतुर्थेति** । एवं च तृतीयकक्षाप्राप्तं पररूपं चतुर्थकक्षाप्राप्तो योगविभागो बाधत इति भावः ॥

( ६२०३ योगविभागेऽतिप्रसङ्गापादनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गो भवति—वृक्षम्, प्लक्षम् ।**

**यथैव हि योगविभागः पररूपं बाधते, एवमग्निपूर्वत्वमपि बाधेत ॥**

( ६२०४ योगविभागेऽतिप्रसङ्गापादकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् ॥ * ॥**

( भाष्यम् ) **नत्वस्य चाभावः—वृक्षान्, प्लक्षान् ।**

**किं कारणम् ?**

**तस्मादित्यनन्तरनिर्देशात् । तस्मादित्यनेनानन्तरो योगः प्रतिनिर्दिश्यते—'प्रथमयोः पूर्वसवर्णः' 'तस्माच्छसो नः पुंसि' ।**

**किं पुनः कारणं तस्मादित्यनन्तरो योगो निर्दिश्यते ?**

**इह मा भूत्—[2]एतान् गाश्चतुरो बलीवर्दान् पश्य ॥**

( प्रदीपः ) **नत्वस्येति** । 'तस्माच्छसो नः पुंसि'इत्यत्र तच्छब्देनानन्तरस्य **'पूर्वसवर्णः'**इत्यनेन विहितस्य परामर्शात् 'गिरीन्-वायून्'इत्यादावेव नत्वं स्यात्, न तु वृक्षानित्यादौ **'प्रथमयोः'** इति योगविभागेन दीर्घे विधीयमान इत्यर्थः । एतच्च भेदेन लक्षणयोरपेक्षामाश्रित्य चोदितम्, [3]यत्रोच्यते-अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा-इति । यदा तु सूत्रद्वयसमुदायमेकया बुद्ध्याऽपेक्ष्य **तस्मादि**ति परामर्शः क्रियते तदा नास्ति दोषः, यथोच्यते-उभयं निवृत्तं तदपेक्षिष्यामहे-इति ॥ **एतान् गा इति** । 'औतोम्शसोः' इत्याकार एकादेशः ॥

( उद्योतः ) 'अनन्तरनिर्देशात्'इति हेतोरसिद्धिं परिहरति—**तस्माच्छस इति** ॥ **वायूनित्यादावेवेति** । तत्रापवादपररूपाप्राप्तिः परत्वात्पूर्वसवर्णदीर्घ एवेत्यर्थः । समुदायस्यैकबुद्ध्याऽपेक्षणे दृष्टान्तमाह—**यथोच्यत इत्यादि** । 'यत्रोच्यते' इति पाठे यत्रोक्तेऽर्थे स्थित्वा इदमुच्यते-'उभयं निवृत्तम्'इत्यादीत्यर्थः ॥ प्रकृतैकादेशमात्रपरामर्शेऽपि भाष्योक्तोऽतिप्रसङ्ग इत्याह—**औतोमिति** । तस्मादनन्तरनिर्देश एवावश्यक इति भावः । **'एतान् गाश्चतुरः-'**इति विधीनां वैकल्पिकत्वेन चरितार्थम् ॥

१ 'चतुर्थेति' इति प्रतीकं घ. झ. पुस्तकयोर्न दृश्यते ॥

२ एतान् गा इति । 'तस्माच्छसो नः पुंसि' इत्यत्र तस्मात्पदाभावेऽपि शसः सामान्येन नकारविधानं कर्तुं शक्येत । तथाच शसः सकारोच्चारणमनर्थकं स्यात् । अतः किमप्यवधित्वेनाश्रयणीयं स्यात्, तच्च यदि एकादेशप्रकरणमाश्रीयेत तदा गा इत्यत्र नकारः माप्नुयादित्यर्थः । सामान्येन नकारविधाने चतुर इत्यत्रापि दोषं दर्शयितुं तथोदाहरणम् । सकारोच्चारणं तु छन्दसि सर्व-

३ 'यत्रोच्यते' इति क. च. ट. झ. पुस्तकेषु पाठः । उद्द्योतपुस्तकेषु 'यथोच्यते' इति प्रतीकदर्शनात्तथा पाठ आश्रितः । उभयं निवृत्तं तदपेक्षिष्यामहे इतीतरत्र यथोच्यते तथाऽत्रापि कल्पनमिति भाष्यकृद्वचनसरणमिति भावः ॥

भाष्यस्य—एतान्बलीवर्दरूपान् चतुःसङ्ख्याकान् गाश्चरतः पश्येत्यर्थः । पुंस्त्वाभिव्यक्तये विशेषणनिर्देशः । अर्थान्तरवारणायानेकविशेषणोपादानम् । क्वचित्तु 'एतान् गाः पश्य'इत्येव पाठः ॥

( वार्तिकावतरणभाष्यम् )

अस्तु तर्ह्येकयोग एव ।

ननु चोक्तम्—*एकयोगे हि जश्शसोः पररूपप्रसङ्गः* इति ।

नैष दोषः ।

( ६२०५ एकयोगत्वसमर्थकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य ॥ * ॥

( भाष्यम् ) यदयं 'नादिचि' ( १०४ ) इतीज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—न जश्शसोः पररूपं भवतीति ।

कथं कृत्वा ज्ञापकम् ?

इज्ग्रहणस्यैतत्प्रयोजनम्—इह मा भूत्—वृक्षाः, प्लक्षाः, वृक्षान्, प्लक्षान् । यदि च जश्शसोः पररूपं स्यात्, इज्ग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यः—न जश्शसोः पररूपं भवति-इति, तत[1] इज्ग्रहणं करोति ॥

नैतदस्ति ज्ञापकम् ।

उत्तरार्थमेतत्स्यात्—'दीर्घाज्जसि च' ( १०५ ) इचि चेति ।

यद्युत्तरार्थमेतत्स्यात्तत्रैवायमिज्ग्रहणं कुर्वीत । इहापि तर्हि[2] क्रियमाणं यद्युत्तरार्थम्, न ज्ञापकं भवति ॥

एवं तर्हि यद्युत्तरार्थमेतत्स्यान्नैवायमिज्ग्रहणं कुर्वीत, नापि जस्ग्रहणम् । एतावदयं ब्रूयात्—दीर्घाच्छसि पूर्वसवर्णो भवति-इति तन्नियमार्थं भविष्यति—दीर्घाच्छस्येव, नान्यत्रेति ।

सोऽयमेवं लघीयसा न्यासेन सिद्धे यदिज्ग्रहणं करोति, तज्ज्ञापयत्याचार्यः—न जश्शसोः[3] पररूपं भवतीति ॥

( प्रदीपः ) इज्ग्रहणं त्विति । यदि जश्शसोः पररूपं स्यात् तदा 'नात्'[4] इत्येव ब्रूयात्, इच्येव पूर्वसवर्णदीर्घप्रसङ्गात्, प्राप्तिपूर्वकत्वाच्च प्रतिषेधस्येति भावः ॥

उत्तरार्थमिति । 'कुमार्यौ-वध्वौ'इत्यादौ पूर्वसवर्णदीर्घप्रतिषेधार्थमित्यर्थः ॥

यद्युत्तरार्थमिति । एवं सति पृथग्विभक्त्यनुच्चारणाच्चकाराकरणाच्च 'दीर्घादिज्जसोः' इति लाघवं भवति ॥ इहापीति । सर्वत्र लाघवं प्रत्यनादरादिहापि क्रियमाणस्य 'इज्'-ग्रहणस्योत्तरार्थतया प्रयोजनवत्त्वाज्ज्ञापकत्वाभाव इत्यर्थः ॥

दीर्घाच्छसीति । 'दीर्घादिज्जसोः' इत्यस्मादपि लघुतरोऽयं सूत्रन्यास इति भावः । तस्मादिज्ग्रहणं नोत्तरार्थमेव क्रियते, किन्तु इहार्थमपीति ज्ञापकमेवेत्यर्थः ॥

( उद्योतः ) प्राप्तिपूर्वकत्वाच्चेति । एवञ्चेज्ग्रहणाभावेऽपि तत्रैव प्रतिषेधसिद्धेस्तद्व्यर्थं सज्जश्शसोः पररूपाभावं ज्ञापयतीत्यर्थः ॥

उत्तरार्थतयेति । 'इह किंचित्रपो' इत्यनाश्रित्येदम् ॥

ननु विधेर्नियमो दुष्टोऽत आह—लघुतरोऽयमिति । किंचिल्लाघवं प्रति क्वचिदनादरोऽस्तु, प्रकृष्टे तु लाघवे तदनादरो नोचित इति अयं नियमो न दुष्ट इति भावः ॥ भाष्ये–दीर्घाच्छस्येवेति । विपरीतनियमस्तु न, व्याख्यानात् । 'पक्षिमत्स्यमृगान् हन्ति' इति निर्देशाच्चेति भावः ॥

( योगविभागसमर्थकभाष्यम् )

अथवा पुनरस्तु योगविभागः ।

ननु चोक्तम्-*योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदस्यतिप्रसङ्गः*-इति ।

नैष दोषः ।

अस्यपि योगविभागः करिष्यते—अमि । अमि यदुक्तं तन्न भवतीति । ततः—पूर्वः । पूर्वश्च भवत्यमीति ॥

यदप्युच्यते—*नकाराभावश्च तस्मादित्यनन्तरनिर्देशात्*—इति ।

कः पुनरर्हति तस्मादित्यनेनानन्तरं योगं निर्देष्टुम् ?

एवं किल प्रतिनिर्दिश्यते—तस्मात्=पूर्वसवर्णदीर्घादिति ।

तच्च न ।

एवं प्रतिनिर्दिश्यते—तस्मात्=अको दीर्घादिति ।

अथवा—तस्मात्=प्रथमयोर्दीर्घादिति ॥

( प्रदीपः ) अमि यदुक्तमिति । 'प्रथमयोः' इति योगविभागेन दीर्घत्वमित्यर्थः ॥

तस्मादको दीर्घादिति । एकया बुद्ध्या अक्स्थानिकत्रिसूत्रीविहितो[5] दीर्घः परामृश्यत इत्यर्थः ॥

'अकः सवर्णे दीर्घः' इत्यनेन विहितस्य दीर्घस्यानर्थकः परामर्श इति मत्वाऽऽह—अथवेति । 'प्रथमयोः' इत्येवं यो विहितो दीर्घः परामृश्यत इति सूत्रद्वयविषये नत्वं सिध्यति ॥

१ ततः—तदर्थम् ॥

२ 'इहापि क्रियमाणं' इति 'तर्हि' शब्दरहितः पाठः क. पुस्तके ॥

३ 'जसिशस्योः' इति क. ट. पाठः ॥

४ 'नात्' इति । नादिचीति सूत्रे 'इच्'ग्रहणं न कार्यम्, तस्य चावर्णान्न पूर्वसवर्ण इत्यर्थः ॥

५ 'अकः स्थानिकः' इति क. पाठः ॥

( उद्योतः ) भाष्ये-अमीति । विभक्ति 'नादिचि' इत्यतः 'न' इति वर्तते ॥

नन्वनन्तरस्येति न्यायात् 'पूर्वसवर्णः' इति विहितदीर्घस्यैव परामर्शो युक्तोऽत आह—एकया बुद्ध्येति ॥

( एकयोगत्वे सिद्धान्तभाष्यम् )

**अथवा—पुनरस्त्वम्येकयोगः ।**

**ननु चोक्तम्—*योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यतिप्रसङ्गः*—इति ।**

**नैष दोषः ।**

**मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमयं योगविभागः पररूपं बाधिष्यते, अमि पूर्वत्वं न बाधिष्यते ।**

**यद्येतदस्ति—'मध्येऽपवादाः-' 'पुरस्तादपवादाः-' इति, नार्थ एकेनापि योगविभागेन ।**

**पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इत्येवं पररूपमकः सवर्णदीर्घत्वं बाधिष्यते, प्रथमयोः पूर्वसवर्णदीर्घत्वं न बाधिष्यते ॥**

( प्रदीपः ) **मध्येऽपवादा इति** । न्यायश्चायं न तु वचनम्, वक्ष्यति[1]-'यद्येतदस्ति'इति । न हि वचनस्यासत्तासम्भावना, न्यायस्तु क्वचित्कश्चिदाश्रीयते इति युज्यते वक्तुम् ॥

**यद्येतदस्तीति** । यदा बाध्यानि लक्षणानि भेदेनापेक्ष्यन्ते तदा क्रमव्यतिक्रमे हेत्वभावात् पूर्वविज्ञातबाध्यविषयलाभाद्वा 'मध्येऽपवादाः' इति 'पुरस्तादपवादाः' इति चाश्रीयते । यदा तु लक्षणसमुदायो बाध्यत्वेनापेक्ष्यते तदा तस्यैकत्वान्नास्त्येतत्-'मध्येऽपवादाः' इति 'पुरस्तादपवादाः' इति च ॥

( उद्योतः ) **न हि वचनस्येति** । वचनं स्वविषये सर्वत्र प्रवर्तेत इति न क्वचिन्न भवतीत्यर्थः ॥ **न्यायस्त्विति** । लक्ष्यानुरोधादिति भावः ॥

न्यायसिद्धत्वमेव दर्शयति—**यदेति** ॥ क्वचिदनाश्रयणे बीजं दर्शयति—**यदा त्विति** । तदपेक्षायां च लक्ष्यानुरोध एव बीजम् । ननु 'त्रिजां त्रयाणाम्'इत्यत्र त्रयाणां ग्रहणेनात्र शास्त्रे क्रमव्यतिक्रमाश्रयणात् 'क्रमव्यतिक्रमे हेत्वभावात्' इति **चिन्त्यम्**[2] ॥

( प्रकारान्तरेण सिद्धान्तसाधकभाष्यम् )

**अथवा—सप्तमे योगविभागः करिष्यते ।**

**इदमस्ति—'अतो दीर्घो यञि' (७।३।१०१) 'सुपि च' ( १०२ ) इति । ततो वक्ष्यामि—बहुवचने । बहुवचने च अतो दीर्घो भवति । ततः—झल्येत् । एकारश्च भवति बहुवचने झलीति ।**

**इहापि तर्हि प्राप्नोति—वृक्षाणाम्, प्लक्षाणाम् ।**

**तत्र को दोषः ?**

**दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति ।**

**इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां नुडिति, किमत्र कर्तव्यम् ?**

**परत्वाद्दीर्घत्वम् ।**

**नित्यं खल्वपि दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोति, अकृतेऽपि । नित्यत्वात्परत्वाच्च दीर्घत्वे कृते ह्रस्वाश्रयो नुण्न प्राप्नोति ।**

**एवं तर्हि 'आत्' ग्रहणमिहापि प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'आज्जसेरसुक्' ( ७।१।५० ) इति । तेन कृतेऽपि दीर्घत्वे नुड् भविष्यति ।**

**इहापि तर्हि प्राप्नोति—कीलालपाम्, शुभयाम् ।**

**आतो लोपोऽत्र बाधको भविष्यति ।**

**इदमिह संप्रधार्यम्—लोपः क्रियतां नुडिति, किमत्र कर्तव्यम् ?**

**परत्वान्नुट् ।**

**एवं तर्हि 'ह्रस्वनद्यापो नुट्' इत्यत्र 'आतो धातोः' ( ६।४।१४० ) इत्यातो लोपः संबन्धमनुवर्तिष्यते ।**

**इहापि तर्हि प्राप्नोति—कीलालपानाम् ब्राह्मणकुलानाम् ।**

**नपुंसकस्य नेत्यप्यनुवर्तिष्यते ॥**

( प्रदीपः ) **अथवा सप्तम इति** । वृक्ष अस् इति स्थिते पूर्वस्य दीर्घविधानात्पररूपाभावाज्जसि 'अकः सवर्णे दीर्घः' इति दीर्घः, शसि तु 'प्रथमयोः पूर्वसवर्णः' इति ॥

**एवं तर्हीति** । अकारेण चाणुत्वादाकारो गृह्यते ॥

**कीलालपानामिति** । 'ह्रस्वो नपुंसके-' इति ह्रस्वत्वे 'बहुवचने' इति दीर्घत्वे कृते 'आतो धातोः'इत्यधिकारादाकारलोपप्रसङ्गः ॥

**नपुंसकस्य नेति** । 'ह्रस्वनद्यापो नुट्'इत्यत्र सूत्रे 'स्वमोर्नपुंसकात्'इत्यतो नपुंसकग्रहणं 'नेतराच्छन्दसि' इत्यतो नेति चानुवर्तते, आतो धातोर्लोप इति च । ततः-नपुंसकस्यातो धातोर्लोपाभावे नुडेव भविष्यतीत्यर्थः ॥

( उद्योतः ) **अकः सवर्ण इतीति** । 'दीर्घाज्जसि च' इति

[1] यद्वक्ष्यतीति । भाष्यकारो यतः कारणात् 'यद्येतदस्ति' इति वक्ति अतोऽयं न्यायः, न तु वचनमिति भावः ॥

[2] चिन्त्यमिति । त्रिजां त्रयाणामिति हि सूत्रे त्रयाणामित्यनर्थकम्, गणान्ते एषां त्रयाणामेव पठितत्वात् । तद्धि भृञामिदित्युत्तरार्थम् । तत्र हि त्रयाणामित्यस्याभावेऽधिकधातूनामप्युपादानं स्यात्तन्माभूदित्येतदर्थमित्याहुः । वस्तुतस्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामित्यस्याभावेऽपि त्रयाणामेव धातूनामुपादानं स्यान्न त्वधिकधातूनाम्, तेनैव बहुवचनोपपत्तेः । यथा कपिञ्जलानालभेतेत्यत्र बहुवचनोपपत्तिः कपिञ्जलत्रयग्रहणेनोपपन्नेति नाधिकानां ग्रहणं तद्वदत्रापि भृञामिति बहुवचनोपपत्तिस्त्रयाणां ग्रहणेनैवोपपन्नेति त्रयाणां ग्रहणं व्यर्थं सञ्ज्ञापयति—अस्मिन् शास्त्रे कपिञ्जलालम्भनन्यायो नाश्रीयत इति । एवञ्च क्रमव्यतिक्रमस्यापि सम्भवादन्यदाह—पूर्वविज्ञातबाध्यविषयलाभाद्वेति प्रदीपे ॥

पूर्वसवर्णदीर्घनिषेधादिति भावः । 'झल्येत्' इति च पूर्वविहितदीर्घापवादः ॥

नन्वादित्यनुवृत्तावपि कथमाकारान्तान्नुट् ? अत आह—अकारेणेति । एवं चाप्ग्रहणं न कार्यमिति लाघवम् ॥

ननु नपुंसकह्रस्वे कथम् 'आतो धातोः' इति लोपः ? अत आह—ह्रस्वो नपुंसक इति । धातुभिन्नाकारान्तशब्दस्यामि प्रयोग एव न, अनभिधानात्—इति न तत्र दोषः । 'आतः' इति योगविभागात्तत्राप्यालोपो वा ॥

( ११०२ विधिसूत्रम् ॥ ६ । १ । ५ आ. ६७ )

## २५४० तस्माच्छसो नः पुंसि ॥ ६ । १ । १०३ ॥

( नत्वाधिकरणम् )

( पुंसांबहुत्वे-पुंशब्दाद्बहुषु-इति पक्षद्वयोपस्थापकभाष्यम् )

**किमिदं नत्वं पुंसां बहुत्वे भवति, आहोस्वित्पुंशब्दाद्बहुषु ।**

**कश्चात्र विशेषः ?**

( प्रदीपः ) **किमिदमिति** । 'पुंसि'इति किं शसो विशेषणम्–पुंबहुत्वे यः शसुत्पन्न इति, अथ प्रकृतेः–पुंशब्दाद्यः शसिति **प्रश्नः** ॥

( उद्द्योतः ) भाष्योक्तपक्षद्वये उपपत्तिमाह—**पुंसीतीति** । प्रत्ययार्थबहुत्वबोधकस्याध्याहृतपदस्य विशेषणम्, अध्याहृतप्रकृतिवाचकस्य वा–इत्यत्र विनिगमकाभावादिति भावः ॥ ननु पुंशब्दाद्यः शस् स पुंबहुत्व एव–इति पक्षयोरविशेषोऽत आह—भाष्ये–पुंशब्दाद्बहुष्विति । यत्किञ्चिद्गते बहुत्वे इत्यर्थः ॥

( प्रथमे पक्षे दोषदर्शकं श्लोकभाष्यम् )

**नत्वं पुंसां बहुत्वे चेत्**
**पुंशब्दादिष्यते स्त्रियाम् ।**

**तत्र[2] सिद्ध्यति । भ्रूकुंसान्[3] पश्येति ॥**

( प्रदीपः ) **भ्रूकुंसान् पश्येति** । स्तनकेशसम्बन्धात् स्त्रीप्रतिभासं भ्रूकुंसार्थं मन्यते ॥

( उद्द्योतः ) वस्तुतः स्त्रीत्वाभावेऽपि आरोपितलौकिकस्त्रीत्वाश्रयेणात्र दोषोद्भावनमित्याह—**स्तनेत्यादि** । स्त्रीवेषधारी नर्तकः पुरुषो भ्रूकुंसः । अत्र न पुंगतं बहुत्वम्, पुंशब्दाद्यत्किञ्चिद्गते बहुत्वे तु शसस्ति ॥

( प्रथमे दोषदर्शकं श्लोकभाष्यम् )

**नपुंसके तथैवेष्टम्**

**तच्च न सिद्ध्यति । षण्ढान् पश्य, षण्डकान् पश्येति ॥**

( प्रदीपः ) **षण्ढानिति** । षण्ढशब्देन प्रसवासमर्थस्य नपुंसकस्याभिधानम् ॥

( प्रथमाश्रयणेऽतिव्याप्तिदर्शकं श्लोकभाष्यम् )

**स्त्रीशब्दाच्च प्रसज्यते ॥ १ ॥**

**स्त्रीशब्दाच्च प्राप्नोति । चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्य ॥**

**अस्तु तर्हि पुंशब्दाद्बहुषु ।**

( प्रदीपः ) **चञ्चा इति** । चञ्चेव–चञ्चा । 'इवे प्रतिकृतौ' 'संज्ञायाम्'इति कन् । 'लुम्मनुष्ये' इति लुप् । चञ्चाशब्देन पुंसोऽभिधानान्नत्वप्रसङ्गः ॥

( उद्द्योतः ) चञ्चाशब्दस्य नित्यस्त्रीत्वात्तदुत्तरशसः पुंबहुत्वे वृत्तिं दर्शयति—चञ्चेति ॥

( द्वितीये पक्षे दोषदर्शकं श्लोकभाष्यम् )

**पुंशब्दादिति चेदिष्टं[4]**
**स्थूरापत्ये न सिद्ध्यति ।**

**स्थूरान् पश्येति ॥**

( प्रदीपः ) **स्थूरानिति** । स्थूराया अपत्यानि । 'गर्गादिभ्यो यञ्' । 'यञञोश्च' इति लुक् । 'लुक्तद्धितलुकि' इति टापो लुक् । ततः स्थूरशब्दस्य स्त्रीलिङ्गत्वान्नत्वाप्रसङ्गः ॥

( उद्द्योतः ) स्थूरादीनां स्त्रीशब्दत्वं दर्शयति—**स्थूराया इति** । यद्यपि द्वितीयपक्षे 'षण्ढान्' इति न सिद्ध्यति तथापि 'भ्रूकुंसान्[5]' 'चञ्चाः' इति च सिद्ध्यतीत्याशयः ॥

( द्वितीये दोषदर्शकं श्लोकभाष्यम् )

**कुण्डिन्या अररकायाः**

**अपत्यं च न सिध्यति । कुण्डिनान् पश्य, अररकान् पश्य ॥**

( प्रदीपः ) **कुण्डिनानिति** । कुण्डिन्या अपत्यानि । 'गर्गादिभ्यो यञ्' । 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' इति यञो लुक् । कुण्डिनीशब्दस्य कुण्डिनजादेशः, स च स्त्रीलिङ्गादेशत्वात् स्त्रीशब्दः । अररकायाः पूर्ववद्यञादि ॥

( दोषवारकं श्लोकभाष्यम् )

**पुंस्प्राधान्यात्प्रसिध्यति ॥ २ ॥**

**पुंस्प्रधाना एते शब्दाः, ततो नत्वं भविष्यति ॥**

1 पक्षयोः—मदीपोक्तयोः । भाष्योक्तपक्षद्वयस्फुटीकरणाय प्रवृत्तस्य तथैव संदिग्धत्वमिति भावः ॥

2 तत्रेति । पुंशब्दात्स्त्रियां यन्नत्वमिष्यते तन्न सिद्ध्यतीत्यन्वयः ॥

3 'भ्रुकुंसः' इति ग. ज. पाठः ॥

4 ननु द्वितीयपक्षोपादाने 'स्थूरापत्ये–' इति अन्य एव दोषः किमर्थमुक्तः, पूर्वोक्तदोषाणामनिस्तारात्–अत आह—यद्यपीति । द्वितीये पक्षे प्रथमापेक्षया न्यूनसंख्याका दोषा एवेति भावः ॥

5 'भ्रुकुंसान्' इति ग. ज. पाठः ॥

( विशिष्टार्थे दोषदर्शकं श्लोकभाष्यम् )

**पुंस्प्राधान्ये त एव स्यु-**
**र्ये दोषाः पूर्वचोदिताः ।**

भ्रूकुंसान् पश्य, षण्ढान् पश्य, पण्डकान् पश्य, चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्येति ॥

( उद्द्योतः ) भाष्ये—पुंस्प्राधान्ये इति । यदि स्थूरादीनां पुंस्प्राधान्यात्पुंशब्दत्वं तदा भ्रूकुंसादीनां तत्त्वाभावात्, चञ्चादीनाञ्च तत्त्वादुक्तदोषा अत्रापीत्यर्थः ॥

( सिद्धान्तभाष्यम् )

**तस्माद्यस्मिन् पक्षेऽल्पीयांसो दोषास्तमास्थाय प्रतिविधेयं दोषेषु ॥**

( प्रदीपः ) तस्माद्यस्मिन्निति । अर्थपक्षं परतः आश्रयिष्यति । द्वयोरपि तु पक्षयोर्दोषाभावः । तथाहि—पुंवाची शब्दः पुंशब्द उच्यते । ततो भ्रूकुंसादयः शब्दाः पुमांसमाचक्षाणाः पुंशब्दा उच्यन्त इति नानयोः पक्षयोः फलभेदः । षण्ढपण्डकशब्दाभ्यामपि पुंस्त्वानुगत एव नपुंसकरूपोऽर्थ उच्यते । यथा—नपुंसकोऽभवदिति नपुंसकशब्देन । स्त्रीसूत्रे हि 'न वैयाकरणैः शक्यं लौकिकलिङ्गमास्थातुम्–' इत्यादिना विशिष्टमेव लिङ्गलक्षणं भाष्यकारेणाश्रितम् । स्थूरादयोऽपि प्रत्ययलुकि कृते पुंसि वर्तमानाः पुंशब्दा एव भवन्ति ॥

( उद्द्योतः ) 'तस्मात्'इत्यादिभाष्येण यः पक्षः परिगृहीतस्तं दर्शयति—अर्थपक्षमिति । शास्त्रीयार्थपक्षमित्यर्थः ॥ द्वयोरपि त्विति । शास्त्रीयलिङ्गग्रहणे 'पुंसां बहुत्वे–पुंशब्दाद्बहुषु' इति द्वयोः पक्षयोरित्यर्थः । लौकिकलिङ्गग्रहणे पक्षद्वयस्याप्यधिकदोषग्रस्तत्वाच्छास्त्रीयलिङ्गग्रहणमास्थाय लिङ्गस्य प्रातिपदिकार्थत्वात् 'पुंसि वर्तमानात्प्रातिपदिकात्' इत्येवं व्याख्येयम्, तत्र हि चञ्चा इत्याद्यसिद्धिरेक एव दोष इति 'तस्माद्यस्मिन्पक्षे' इत्यादिभाष्यार्थ इत्यर्थः । प्रतिविधानं तु 'वध्रिकादिषु–' इति वक्ष्यति ॥ पुंशब्दा उच्यन्त इति । एवञ्च पुंस्त्वविशिष्टवाचकतया तेषां पुंशब्दाद्बहुत्वे इत्यर्थे, पुंस्त्वविशिष्टानां बहुत्वे इत्यर्थे वा न दोष इत्यर्थः ॥ शास्त्रीयार्थग्रहणमेव दर्शयति—स्त्रीसूत्रे हीति । अत एव नपुंसकस्य पुंस्त्वानुगतता ॥

( संग्रहः )

**न त्वं पुंसां बहुत्वे चेत्**
**पुंशब्दादिष्यते स्त्रियाम् ॥**
**नपुंसके तथैवेष्टं**
**स्त्रीशब्दाच्च प्रसज्येत ॥ १ ॥**
**पुंशब्दादिति चेदिष्टं**
**स्थूरापत्ये न सिध्यति ॥**
**कुण्डिन्या अररकायाः**
**पुंस्प्राधान्यात् प्रसिध्यति ॥ २ ॥**
**पुंस्प्राधान्ये त एव स्युर्**
**ये दोषाः पूर्वचोदिताः ॥**
**तस्मादर्थे भवेन्नत्वं**
**वध्रिकादिषु युक्तवत् ॥ ३ ॥**

( प्रदीपः ) वध्रिकादिषु युक्तवदिति । 'लुपि युक्तवद्व्यक्तिवचने' इति पुंसः स्त्रीत्वातिदेशान्नत्वाभाव इत्यर्थः ॥

( उद्द्योतः ) नन्वनेन न्यायेन वध्रिकादयोऽपि पुंशब्दाः, अत आह—लुपीति । स्वलिङ्गप्रयुक्तकार्याभावोऽपि तेनातिदिश्यत इति भावः ॥

---

( ११०३ विधिसूत्रम् ॥ ६ । १ । ५ आ. ६८ )

## २५४४ अमि पूर्वः ॥ ६ । १ । १०७ ॥

( पूर्वरूपाधिकरणम् )

( छन्दसि विकल्पबोधकं भाष्यम् )

**वा च्छन्दसीत्येव । यमीं च यम्यं च, शमीं च शम्यं च, गौरीं च गौर्यं च, किशोरीं च किशोर्यं च ॥**

( प्रदीपः ) वा च्छन्दसीत्येवेति । एतच्च वाक्यभेदेन सम्बध्यते । अन्यथा भाषायां न स्यात् ॥ शम्यं चेति । विकल्पविधानसामर्थ्यात्पूर्वत्वाभावे पूर्वसवर्णदीर्घोऽपि न भवति, तयोरत्र विशेषाभावात्–इति यणादेश एव भवति ॥

( उद्द्योतः ) ननु यणादेशबाधकपूर्वसवर्णदीर्घबाधकपूर्वरूपत्वे विकल्पितेऽपि तदभावे दीर्घ एव स्यादत आह—विकल्पेति । 'अग्निम्' इत्यादौ विशेषसत्त्वेऽप्येतद्विषयकलक्षणवैयर्थ्यापत्तिरिति भावः ॥

---

( ११०४ विधिसूत्रम् ॥ ६ । १ । ५ आ. ६९ )

## २५४५ संप्रसारणाच्च ॥ ६ । १ । १०८ ॥

( छन्दसि वेत्यस्य सम्बन्धबोधकं भाष्यम् )

**वाच्छन्दसीत्येव । मित्रावरुणौ यज्यमानः, मित्रावरुणौ इज्यमानः ॥**

---

१ 'भ्रुकुंसादीनां' इति ग. ज. पाठः ॥
२ परतः—सिद्धान्ते ॥
३ 'स्थूरापत्ये' इति छ. पाठः ॥
४ एतच्च–वा च्छन्दसीत्येतत् । यद्येकवाक्यतयैव विकल्पविधानं तदाऽस्य सूत्रस्य भाषायां प्रवृत्तिर्न स्यादिति भावः ॥
५ अत्र–यमीं च यम्यं चेत्यादौ पूर्वरूपस्याभावे पूर्वसवर्णदीर्घप्रवृत्तौ विशेषाभावाद्यणादेश इत्यर्थः ॥
६ एतद्विषयकेति । यमीं च यम्यं चेत्यादिलक्ष्यविषयकोपस्थितलक्षणस्य–पूर्वरूपविकल्पविधायकस्य वैयर्थ्यापत्तिरित्यर्थः ॥

( ६२०६ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणं कर्तव्यम् ।

किं प्रयोजनम् ?

असमानाङ्गप्रतिषेधार्थम् । असमानाङ्गस्य मा भूदिति—शकहूर्थम्, परिव्यर्थम् ॥

( प्रदीपः ) समानाङ्गग्रहणमिति । [1]यदि सम्प्रसारणं तस्माच्च परोऽच्—एकस्मिन्नङ्गे भवतस्तदा पूर्वैकादेशो भवति नान्यथा ॥

शकहूर्थमिति । [2]अन्यस्मिन्नङ्गे संप्रसारणम्—अन्यस्मिन्नच्—इति पूर्वैकादेशाभावः । अत्रान्तवद्भावेनोकारस्य संप्रसारणत्वम् ॥

( उद्द्योतः ) समानशब्द एकपर्यायः, तदाह—एकस्मिन्नङ्गे इति । [3]यद्यपि 'शकहूर्थम्'इत्यस्य सुनिरूपितमेकमङ्गत्वं तथापि भिन्नाङ्गस्थत्वाभावोऽत्र विवक्षित इति बोध्यम् ॥

ननु संप्रसारणस्थानिकोऽयम्, न संप्रसारणमत आह—अत्रान्तवदिति । 'हलः'इत्यादिज्ञापकात्ताद्रूप्यस्याप्यतिदेश इत्यभिमान[4]ः ॥

( ६२०७ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धमसंप्रसारणात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

असंप्रसारणात् ।

कथमसंप्रसारणम् ?

वाक्यस्य संप्रसारणसंज्ञा, न वर्णस्य ॥

अथ वर्णस्य संप्रसारणसंज्ञायां दोष एव ।

वर्णस्य च संप्रसारणसंज्ञायां न दोषः ।

कथम् ?

अन्योऽयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते ॥

( प्रदीपः ) सिद्धमिति । वाक्यस्य संप्रसारणसंज्ञायां वर्णस्य नास्ति संप्रसारणसंज्ञा । स[5] तु संप्रसारणनिर्वर्त्तितत्वात्संप्रसारणव्यपदेशमौपचारिकं लभते । 'शकहूर्थम्'इत्यादौ त्वेकादेशशास्त्रेण निर्वर्त्तित उकार इति नास्ति संप्रसारणव्यपदेशः ॥

वर्णस्य चेति । यणः स्थाने यो वर्णः स संप्रसारणसंज्ञः, एकादेशस्तु न यण्स्थानिकः । अन्तवद्भावोऽपि नास्ति, वर्णविधावन्तवद्भावप्रतिषेधात् । [6]अन्तरङ्गत्वाच्च 'हलः' इति संप्रसारणदीर्घे कृते 'ऊ'कारस्य संप्रसारणसंज्ञाभावात्पूर्वैकादेशाभावः । संप्रसारणदीर्घे तु वचनसामर्थ्यादेकादेशस्यान्तवद्भावात् संप्रसारणव्यपदेश आश्रीयते ॥

( उद्द्योतः ) निर्वर्त्तित उकार इति । संप्रसारणनिर्वर्त्तितत्वं त्वशास्त्रीयत्वान्नातिदिश्यत इति भावः ॥

दीर्घे कृते इति । तद्वचनसामर्थ्यात्साक्षात्संप्रसारणस्थानिकस्य वर्णरूपमपि संप्रसारणत्वमतिदिश्यते, न तु तत्स्थानिकस्यापीति भावः । तदाह—संप्रसारणदीर्घे त्विति ॥ 'एकः' इति [7]भाष्यस्य तस्यैवातत्त्वे तत्स्थानिकस्य सुतरामतत्त्वमिति भावः ॥

( ६२०८ एकदेशिनः समाधानान्तरवार्तिकम् ॥ ३ ॥ )

॥ * ॥ कार्यकृतत्वाद्वा ॥ * ॥

( भाष्यम् ) अथवा सकृत् कृतं पूर्वत्वमिति कृत्वा पुनर्न भविष्यति । तद्यथा—वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति ॥

( प्रदीपः ) कार्यकृतत्वाद्वेति । शास्त्रस्या[8]स्मिन् विषये प्रवृत्तत्वात्पुनः प्रवृत्त्यभावः ॥

( उद्द्योतः ) शास्त्रस्येति । 'लक्ष्ये लक्षणस्य'इति न्यायादिति भावः । लक्ष्यसंस्कार एव हि शास्त्रीयकार्यविधेः फलमिति तात्पर्यम् ॥

( एकदेशिसमाधानासङ्गतिबोधकभाष्यम् )

( भाष्यम् ) विषम उपन्यासः । युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न भवति ।

यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम् । तद्यथा—वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत—इति अग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते ।

---

१ समानाङ्गग्रहणमित्यस्यार्थमाह—यदीति ॥

२ शकहूर्थमित्यत्र समानाङ्गत्वाभावमुपपादयति—अन्यस्मिन्नङ्गे इति ॥

३ समानपदस्य विशेषार्थमाह—यद्यपीति । ईदृशार्थास्वीकारे शकहूर्थशब्दात्सुप्रत्यये तत्प्रत्ययनिरूपितमेकमेवेदमङ्गमिति समानपदमत्राव्यावर्तकं स्यादित्यर्थः ॥

४ इत्यभिमान इति । अन्तादिवच्चेत्यनेन वर्णमात्रवृत्तिधर्मस्यातिदेशामात्रात्संप्रसारणाच्चेति पूर्वरूपेण निष्पन्नोकारे 'हलः' इति दीर्घविधानसामर्थ्यात्संप्रसारणत्वाश्रयणमित्यभिमानः । वस्तुतस्तु तत्र संप्रसारणपदस्य संप्रसारणस्थानिकपरत्वमेवेति न तत्सूत्रसामर्थ्याश्रयणमिति भावः ॥

५ वाक्यस्य संज्ञाविधाने संप्रसारणेन निर्वर्तितोकारे वर्णे संप्रसारणसंज्ञाप्राप्तिमाह—स त्विति । साक्षात्संप्रसारणेन निष्पन्नस्योकारस्य संप्रसारणव्यवहार औपचारिकेऽपि संप्रसारणस्थानिकस्य न तथा व्यवहारो युक्त इत्याशयः । एवञ्च वाक्यसंज्ञापक्षे शकहूर्थमित्यत्र न पूर्वरूपप्राप्तिरिति न तत्पक्षेऽयं दोष इति भावः ॥

६ अन्तरङ्गत्वाच्चेति । शकहूर्थमित्यत्र यणादेशात्प्रागेवेत्यादिः । हल इति दीर्घविधानसामर्थ्यात्तस्मिन् कर्तव्ये एकादेशनिष्पन्नस्य संप्रसारणत्वाश्रयणेऽपि अर्थशब्दाकारेण सह पुनस्तस्मिन् कर्तव्ये सामर्थ्याभावान्न तस्य संप्रसारणत्वमिति वर्णसंज्ञा पक्षेऽपि न दोष इति प्रदीपाशयः ॥

७ भाष्यस्येति । अन्योऽयं संप्रसारणासंप्रसारणयोः स्थान एक इति भाष्यस्येत्यर्थः । शकहूर्थमित्यत्र संप्रसारणाच्चेति पूर्वरूपेण निष्पन्नस्य संप्रसारणत्वाभावाद्दीर्घेण निष्पन्नस्य सुतरां तत्त्वाभावः ॥

८ अस्मिन् विषय इति । यथा वसन्ते ब्राह्मणोऽग्नीनादधीतेति शास्त्रमेकस्मिन् ब्राह्मणविषये प्रवृत्तं पुनस्तद्ब्राह्मणविषये न प्रवर्तते तथैकस्मिन् लक्ष्ये प्रवृत्तं संप्रसारणाच्चेति सूत्रं पुनस्तल्लक्ष्ये न प्रवर्तत इति भावः ॥

तस्मात्पूर्वोक्त एव परिहारः—*सिद्धमसंप्रसारणात्*—इति ॥

**( प्रदीपः ) युक्तं यत्तस्यैवेति** । पराङ्गमग्न्याधानं यज्ञमुखप्रतिपत्त्यर्थमिति पुनः क्रियमाणं फलभेदाभावात्तदेवेत्युच्यते[1] । तत्[2] प्रयोजनाभावान्नानुष्ठीयते ॥

**यत्तु तदाश्रयमिति** । यस्मात् फलावाप्तिस्तत् फलभेदाद्भिद्यमानमसकृदनुष्ठीयते इति भावः ॥ **अग्न्याधाननिमित्तमिति** । अग्न्याधानं[3] निमित्तं=हेतुरस्येति बहुव्रीहिः । क्रियाविशेषणं चैतत् । एवमिहापि शास्त्रपूर्वके ज्ञाने–प्रयोगे वा फलमिति फलान्तरार्थी शब्दान्तरे लक्षणमावर्तयेदित्यपरिहारः—'कार्यकृतत्वात्' इति ॥

**(उद्योतः)** ननु पुनः क्रियमाणं कर्मान्तरमेवेति 'तस्यैव'[4] इत्ययुक्तम् ? अत आह—**पराङ्गमिति** । परस्य–अग्निहोत्रादेरङ्गमित्यर्थः । तदेवाह—**यज्ञमुखेति** । यज्ञोपायेत्यर्थः । **प्रतिपत्तिरत्र** प्राप्तिः । आधानादिसंस्कृताग्निष्वेव ज्योतिष्टोमाग्निहोत्रादिविधानादिति भावः ॥ **यस्मात्फलावाप्तिरिति** । 'अङ्गभूयस्त्वात्फलभूयस्त्वम्' इति न्यायेनेत्यर्थः । इदमुपलक्षणं नैमित्तिकानाम्, तेषामपि प्रतिनिमित्तमावृत्तेः ॥

'अग्न्याधाननिमित्तम्' इति षष्ठीतत्पुरुष इति भ्रमवारणायाह—**बहुव्रीहिरिति** ॥ प्रकृते योजयति—**एवमिहापीति** । 'एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति' इति श्रुतेः शास्त्रस्यापि प्रयोगपर्यन्तं व्यापार इत्युक्तमिति भावः ॥ **प्रयोगे वेति**—वाशब्दश्चार्थे ॥ **शब्दान्तरे इति** । 'हूतः' इत्यादाविव 'शकहूर्थम्' इत्यादावपि लक्षणमावर्तयेत्–तद्विषयलक्षणोपप्लवमपि कुर्यात् । एवञ्च यथाऽऽधानमूलकक्रतोः करणं भवति, लक्षणान्तरविहितत्वात्; तथाऽस्यापि 'शकहूर्थम्' इत्यादौ 'शकहूः' इत्येतद्विषयकैतल्लक्षणविहितसंप्रसारणैकादेशमूलकात्तद्विषयकलक्षणान्तरात्स्यादेव संप्रसारणमिति तात्पर्यम्[5] ॥

( असंप्रसारणत्वे आक्षेपभाष्यम् )

यदि तर्हि नेदं संप्रसारणम्, हूत इति दीर्घत्वं न प्राप्नोति ॥

( ६२०९ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ दीर्घत्वं[6] वचनप्रामाण्यात् ॥ * ॥

**( भाष्यम् ) अनवकाशं दीर्घत्वं तद्वचनप्रामाण्याद्भविष्यति ॥**

( ६२१० समाधानान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अन्तवत्त्वाद्वा ॥ * ॥

**( भाष्यम् ) अथवा पूर्वस्य कार्यं प्रत्यन्तवद्भवतीति दीर्घत्वं भविष्यति ॥**

**( उद्योतः )** भाष्ये—**अन्तवत्त्वाद्वेति** । वर्णाश्रयेऽपि तत्प्रवृत्तिस्तु 'हलः' इति ज्ञापकादेवेति बोध्यम् । **वचनप्रामाण्यादिति** पूर्वभाष्यस्य तत्रत्यसंप्रसारणपदं संप्रसारणस्थानिकपरमित्यर्थ इति पक्षयोर्भेदः[7] ॥

( ६२११ एकादेशप्रकरणशेषे विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ आटो[8] वृद्धेरियङ् ॥ * ॥

**( भाष्यम् ) आटो वृद्धिर्भवतीत्येतस्मादियङ् भवति विप्रतिषेधेन ।**

**आटो वृद्धिर्भवतीत्यस्यावकाशः—ऐक्षिष्ट, ऐहिष्ट ।**

**इयङोऽवकाशः—अधीयाते[9], अधीयते ।**

**इहोभयं प्राप्नोति—अध्यैयाताम्[10], अध्यैयत ।**

**इयङादेशो भवति विप्रतिषेधेन ॥**

---

१ फलभेदाभावादिति । वसन्ते ब्राह्मण इति शास्त्रेणाग्निब्राह्मणयोरुभयोरपि संस्कारो जात इति पुनस्तत्प्रवृत्तावपि तदेवफलं तच्च निर्वृत्तमिति फलभेदाभावः । एवं च न कुर्यान्निष्फलं कर्मेति निषेधान्न पुनस्तत्करणमिति भावः ॥

२ तत्–वसन्ते ब्राह्मण इति शास्त्रम् ॥

३ अग्न्याधानमिति । अत्र हि षष्ठीतत्पुरुषाश्रयणे वसन्ते ब्राह्मणोऽग्निष्टोमादिभिरित्येतस्य निमित्तत्वेन वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यस्य नैमित्तिकत्वं संप्राप्नुयात्, तथा च नैमित्तिकानामपि प्रतिनिमित्तमावृत्तेः सत्वात्पुनः पुनः प्रवृत्तिः स्यात्, तच्चानिष्टमिति बहुव्रीह्याश्रयणम् । बहुव्रीहिस्वीकारे च वसन्ते ब्राह्मणोऽग्निष्टोमादिरित्यस्य नैमित्तिकत्वेन पुनः पुनस्तस्य प्रवृत्तिरुचितेति भावः ॥

४ तस्यैवेति । 'युक्तं यत्तस्यैव पुनः प्रवृत्तिः' इति भाष्यस्थं तस्यैवेत्ययुक्तं स्यादिति भावः ॥

५ इति तात्पर्यमिति । एकः शब्दः सम्यक् ज्ञात इत्यादिश्रुत्या संप्रसारणाच्चेति शास्त्रस्य प्रयोगपर्यन्तं व्यापाराश्रयणात्, असाधुप्रयोगवारणाय तदतिरिक्तस्यासाधुत्वपर्यन्तमपि व्यापारात्संप्रसारणाच्चेति शास्त्रेण शकहूर्थमित्यादिलक्ष्यस्य प्राथमिकपूर्वरूपघटितस्य साधुत्वोपपादनेऽपि पुनस्तच्छास्त्रप्रवृत्तिर्दुर्लभैवेति 'लक्षणमावर्तयेदित्यपरिहारः' इति कथनं मौढ्येति तात्पर्यमिति भावः ॥

६ 'दीर्घत्वञ्च वचन–' इति च. झ. पाठः ॥

७ पक्षयोर्भेद इति । 'दीर्घत्वं वचनप्रामाण्यात्, अन्तवत्त्वाद्वा' इति पक्षयोर्भेदः सुस्पष्टः । वचनप्रामाण्यादिति पक्षे हल इति सूत्रेऽनुवर्तमानस्य संप्रसारणपदस्य संप्रसारणस्थानिकोपलक्षकत्वम्, तेन च संप्रसारणस्थानिकस्याप्येकादेशस्य संप्रसारणत्वाद्धल इति दीर्घः सिद्धः । अन्तवत्त्वाद्वेति पक्षे संप्रसारणस्थानिकस्यान्तवद्भावेन संप्रसारणत्वाद्धल इति दीर्घः क्रियते । पक्षद्वयेऽपि हल इति सूत्रस्य सामर्थ्यमाश्रयणीयम्, सामर्थ्याच्च कल्पनाद्वयमिति पक्षद्वयोपपत्तिः ॥

८ आटो वृद्धेरिति । ननु 'आटो वृद्धेः–' इत्यादिविप्रतिषेधविधायकवार्तिकानांतद्व्याकृति भाष्यस्य च संप्रसारणाच्चेति सूत्रे कः प्रसङ्गः ? नैतानि वार्तिकानि संप्रसारणाच्चेति पूर्वरूपस्य बलवत्त्वं दुर्बलत्वं वा बोधयन्ति–इति चेन्न । एकादेशप्रकरणशेषाण्येतानि वार्तिकानि, तच्चात्रावसितप्रायमिति अस्मिन् सूत्रे प्रसङ्ग इत्यारम्भः ॥

९ अधीयात इति । अधिपूर्वकात् 'इङ् अध्ययने' इत्यस्माल्लटि द्विवचने रूपम् । अस्य नित्यमधिपूर्वत्वम् । धातूपसर्गयोः कार्यमन्तरङ्गमिति बलवत्त्वेन पूर्वं धातूपसर्गयोरेकादेशे नैतत्सिध्येत् । णेरध्ययने वृत्तमिति निर्देशात्पूर्वसाधनेन योगे नायं दोषः ॥

१० अध्यैयातामिति । 'इङ् अध्ययने', लङि द्विवचने रूपम् ॥

**नैष युक्तो विप्रतिषेधः,**

**अन्तरङ्गाऽऽटो वृद्धिः ।**

**काऽन्तरङ्गता ?**

**वर्णावाश्रित्याटो वृद्धिः, अङ्गस्येयङादेशः ।**

**एवं तर्हीदमिह संप्रधार्यम्—आट् क्रियताम्-इयङादेश इति, किमत्र कर्तव्यम् ?**

**परत्वादियङ् ।**

**नित्य आडागमः, कृतेऽपीयङि प्राप्नोति-अकृतेऽपि ।**

**इयङपि नित्यः, कृतेऽप्याटि प्राप्नोति-अकृतेऽपि ।**

**अनित्य इयङ्, न हि कृत आटि प्राप्नोति ।**

**किं कारणम् ?**

**अन्तरङ्गाऽऽटो वृद्धिः ।**

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न चात्राडेवेयङो निमित्तं विहन्ति, अवश्यं लक्षणान्तरमाटो वृद्धिः प्रतीक्ष्या । उभयोर्नित्ययोः परत्वादियङादेशः ॥**

(प्रदीपः) **अध्यैयातामिति** । कृतेषु लादेशेष्वाट् क्रियते इति प्रक्रियामाश्रित्य विचार्यते ॥

**अन्तरङ्गेति** । 'वार्णादाङ्गम्-'इत्यनाश्रित्येदमुच्यते ॥

**यस्य च लक्षणान्तरेणेति** । एतत् क्वचिदाश्रीयते, क्वचिन्न । यथोक्तम्-तद्ब्राह्मणकुलमित्यादौ त्यदादिभ्यो लुग्वक्तव्य इति । 'यस्य च लक्षणान्तरेण-'इति त्वाश्रीयमाणे नित्यत्वाल्लुक्सिद्धः, तस्य हि 'अतोऽम्'इति लक्षणेन निमित्तं विहन्यते न पुनस्तदाद्यत्वेनैवेति न स्यादनित्यत्वं लुकः । तत्र यदा लक्षणयोरेव विचारः-किं लक्षणं नित्यम्, किमनित्यम्-इति, तदा च 'यस्य च लक्षणान्तरेण-'इति न्यायः । यदा तु कार्ययोर्विचारः-'कस्मिन् कार्ये प्रवृत्ते किं प्रवर्तते, किं न प्रवर्तते-'इति तदा नास्त्येतत्-यस्य च लक्षणान्तरेणेति ॥

(उद्द्योतः) ननु परत्वाल्लादेशेषु अकृतेष्वाट्-इति कथमियङ्वृद्ध्योर्युगपत्प्राप्तिः? अत आह—**कृतेष्विति** । लमात्रापेक्षत्वेनान्तरङ्गत्वादिति भावः । 'लावस्थायामट्'इति पक्षे तु अन्तरङ्गत्वाद्वृद्धावेतद्रूपासिद्धिः । कथंचिद्[1]वार्णादाङ्गमित्याश्रयणेऽप्यनेकाच्त्वाद्यणापत्तिः । तस्मादध्यैयातामित्यादि छान्दसम्[2] । तत्र[3] हि 'बहुलं छन्दस्यमाङ्योगेऽपि'इति बहुलग्रहणादादेशोत्तरं परत्वादियङि तत आटि वृद्धिरिति बोध्यम् ॥

यथोक्तमिति । 'स्वमोर्नपुंसकात्'इत्यत्र भाष्ये इदमुक्तम् । त्यदादिभ्यः परयोः स्वमोः परमपि त्यदाद्यत्वं बाधित्वा लुग्वक्तव्य इति तदर्थः । तत्र नित्यत्वं लुक आशङ्क्य 'अत्वे कृतेऽमा बाधादनित्यो लुक्'इति भाष्ये उक्तम् ॥ **तत्र यदेति** । अन्येन बाधेऽपि लक्षणस्य कृतेऽकृते च तस्मिन्प्रसङ्गसत्त्वाद्स्त्येव नित्यत्वमिति भावः । बाधकाबाधितप्रसङ्ग एव ग्राह्य इत्यत्र न मानमिति तात्पर्यम् ॥ **यदा त्विति** । बाधकाबाधितप्रसङ्ग एव यदा गृह्यत इति तात्पर्यम् । 'किं प्रवर्तते'इति शब्देन सूचितमेतत् ॥

**( ६२१२ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ आद्गुणात्सवर्णदीर्घत्वमाङ्भ्यासयोः ॥ * ॥

**( भाष्यम् ) आद्गुणात्सवर्णदीर्घत्वं भवति विप्रतिषेधेन ।**

**क ?**

**आङभ्यासयोः ।**

**आद्गुणस्यावकाशः[4]-खट्वा-इन्द्रः-खट्वेन्द्रः, खट्वोदकम्[5] ।**

**सवर्णदीर्घत्वस्यावकाशः[6]-दण्डाग्रम्, क्षुपाग्रम् ।**

**इहोभयं प्राप्नोति—अद्य-आ-ऊढा—अद्योढा, कदा-आ-ऊढा—कदोढा, उप-इ-इजतुः—उपेजतुः, उप-उ-उपतुः—उपोपतुः ।**

**सवर्णदीर्घत्वं भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **उप इ इजतुरिति** । पूर्वं सवर्णदीर्घत्वं भवति, पश्चादाद्गुणः । अन्तरङ्गत्वादप्येतत्सिध्यति ॥

( उद्द्योतः ) **पश्चादाद्गुण इति** । पूर्वं ह्याद्गुणेऽनिष्टं स्यादतो विप्रतिषेधाश्रय इति भावः ॥ **अन्तरङ्गत्वादपीति** । एकपदाश्रयत्वाद्दीर्घोऽन्तरङ्ग इत्यर्थः ॥

**( उदाहरणान्यथासिद्धिसाधकभाष्यम् )**

**अभ्यासार्थेन तावन्नार्थः ।**

**अस्त्वत्राद्गुणः[7], आद्गुणे कृते अयवौ च, हलादिः शेषः, पुनराद्गुणो भविष्यति ।**

**भवेत्सिद्धम्—उपेजतुः, उपेजुरिति ।**

**इदं तु न सिद्ध्यति—उपोपतुः, उपोपुरिति ।**

**अत्र ह्याद्गुणे कृत ओदन्तो निपात इति प्रगृह्यसंज्ञा, प्रगृह्यः प्रकृत्येति प्रगृह्याश्रयः प्रकृतिभावः प्राप्नोति ।**

---

१ कथञ्चिदिति । पदस्य विभज्यान्वाख्यानमिति पक्षाभिप्रायेणास्याः परिभाषाया अत्र प्राप्तिः । तस्मिन् पक्षे हि अधि आ इ आतामित्युपस्थितौ कार्यारम्भः ॥

२ छान्दसमिति । 'संप्रसारणाच्चेति सूत्रोदाहृतमध्यैयातामित्यादि तु छान्दसम् । तस्मादीदृशे विषये पक्षयोः फलाभेदाय 'इङ्' धातोर्लोकेऽनभिधानमेव' इत्यादिग्रन्थेन 'इङ् अध्ययने' इति धातावदादिगणे शेखरे प्रपञ्चितमेतदिति तत एवावधार्यम् ॥

३ छन्दसि रूपसिद्धिप्रकारमाह—तत्र हीत्यादिना ॥

४ छ. पुस्तके 'अवकाशः-खट्वोदकम्, खट्वेन्द्रः' इत्येव पाठः ॥

५ च. झ. पुस्तकयोस्तु 'खट्वा-उदकं-खट्वोदकम्' इत्येवं पाठः ॥

६ 'सवर्णदीर्घस्यावकाशः' इति च. झ. पाठः ॥

७ 'गुणः, अयवौच' इति छ. पाठः ॥

**पदान्तप्रकरणे प्रकृतिभावः, न चैष पदान्तः ।**

**पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते ।**

**एवं तर्ह्येतदेवात्र नास्ति—ओदन्तो निपात इति ।**

**किं कारणम् ?**

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

**इहापि तर्हि—अद्योढा, कदोढेति ।**

**भवेद्रूपं सिद्धं स्यात् ॥**

(प्रदीपः) प्रकारान्तरेण तत्सिद्धिम्प्रदर्शयितुमाह-**अभ्यासेति ॥ हलादिः शेष इति** । अभ्यासानभ्यासयोरेकादेश एकारोऽभ्यासस्यादिवद्भावादभ्यासग्रहणेन गृह्यते, तत्स्थानिकोऽप्ययादेशः स्थानिवद्भावादभ्यास इति भावः । एकारस्य त्वभ्यासह्रस्वो न भवति । ह्रस्वे कर्तव्ये 'नाभ्यासादिषु-'इत्यन्तादिवद्भावनिषेधात्[1] ॥

**पदान्तभक्त इति** । अन्तवद्भावात्पदान्तकार्यं लभत इत्यर्थः ॥

**इहापीति** । विप्रतिषेधोपालम्भः ॥

(उद्योतः) अभ्यासानभ्यासैकादेशतत्स्थानिकायादेशयोरभ्यासत्वाभावोऽत आह—**अभ्यासेत्यादि** । 'लक्ष्ये लक्षणस्य' इति तु न, लक्ष्यभेदादिति भावः ॥ **अन्तवद्भावनिषेधादिति** । तत्प्रत्याख्याने[2] तु बहिरङ्गस्य गुणस्यासिद्धत्वाल्लक्ष्यभेदाभावेन न[3] तत्प्रवृत्तिरिति बोध्यम् ।

ओकारस्य कथं पदान्तत्वमत आह—**अन्तवद्भावादिति** ॥ भाष्ये—**पदान्तभक्त** इत्यस्य-पदान्तस्थानिक इत्यर्थः ॥

**विप्रतिषेधोपालम्भ इति** । विप्रतिषेधाङ्गीकारे रूपसिद्धावपि स्वरदोष इत्यर्थः ॥

( ६२१३ विप्रतिषेधाभावे दोषदर्शकवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ स्वरदोषस्तु[4] ॥ * ॥**

( भाष्यम् ) **स्वरे तु दोषो भवति । अद्योढा—एवं स्वरः प्रसज्येत, अद्योढा—इति चेष्यते ॥**

( प्रदीपः ) **स्वरदोषस्त्विति** । अद्यशब्दः प्रत्ययस्वरेणान्तोदात्तः । आङ् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणोदात्तः । शिष्टमनुदात्तम् । तत्र यदि पूर्वं सवर्णदीर्घः स्यात् तदा द्वयोरुदात्तयोरेकादेश उदात्तः, ततः-आद्गुणः 'एकादेश उदात्तेनोदात्तः' 'स्वरितो वाऽनुदात्तपदादौ' इति पक्ष उदात्तः स्यात्, पक्षे स्वरितः । यदा तु पूर्वमाद्गुणः पश्चात् 'ओमाङोश्च' इति पररूपं तदा 'पूर्वत्रासिद्धम्' इति पररूपे कर्तव्ये एकादेशस्वरयोः-उदात्तस्वरितयोरसिद्धत्वाच्छास्त्रदृष्ट्या-अस्वरस्यैकादेशस्य पूर्वेणोदात्तेन सहैकादेश आन्तरतम्यादुदात्त एव भवति ॥

( उद्योतः ) ननु पूर्वमाद्गुणे तस्य पक्षे स्वरितत्वेन पररूपस्य स्वरितत्वम्, पक्षे तूदात्तत्वमेवेति न विशेषोऽत आह—**एकादेशस्वरयोरिति ॥ उदात्त एवेति** । तत्त्वमेवेष्यत[5] इति विप्रतिषेधो दुष्ट इति भावः ॥

( विप्रतिषेधाभावे पररूपानर्थक्यबोधकभाष्यम् )

**आङि पररूपवचनं चेदानीमनर्थकं स्यात् ।**

**नानर्थकम्, ज्ञापनार्थम्[6] ।**

**किं ज्ञाप्यम् ?**

( प्रदीपः ) **आङि पररूपवचनं चेति** । न केवलं स्वरदोषः, यावदाचार्यवचनमपि त्वया न प्रमाणीकृतमित्यर्थः ॥

विप्रतिषेधवाद्यानर्थक्यं परिहर्तुमाह—**नानर्थकमिति** । यदा पूर्वमाद्गुणः प्रवर्तते तदा 'वृद्धिरेचि' इति वृद्धिबाधनार्थम् 'ओमाङोश्च' इति वक्तव्यमित्यज्ञापकम् । विप्रतिषेधे त्वाश्रीयमाणे सवर्णदीर्घेण सिद्धे रूपे पररूपवचनं ज्ञापकं भवति ॥

( उद्योतः ) **पररूपवचनं चेति** 'च'शब्दार्थं दर्शयति—**न केवलमिति ॥ न प्रमाणीकृतमिति** । विप्रतिषेधेन पूर्वं सवर्णदीर्घे पश्चादाद्गुणेन सिद्धेः पररूपविधानं व्यर्थमिति भावः ॥

**ज्ञापकं भवतीति** । एवञ्चान्तरङ्गबलीयस्त्वज्ञापकबोधनायायं विप्रतिषेधो मयोक्तः, न तु स्थितोऽयमिति[7] न स्वरे दोष इत्यर्थः ॥

( ६२१४ पररूपवचनज्ञापनवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ आङि पररूपं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य ॥ * ॥**

( भाष्यम् ) **एतज्ज्ञापयत्याचार्यः—अन्तरङ्गं बलीयो भवतीति ।**

**किं पुनरिहान्तरङ्गं किं बहिरङ्गम्, यावता द्वे पदे आश्रित्य सवर्णदीर्घत्वमपि भवत्याद्गुणोऽपि ।**

**धातूपसर्गयोर्यत्कार्यं तदन्तरङ्गम् ।**

**कुत एतत् ।**

**पूर्वमुपसर्गस्य हि धातुना योगो भवति, नाद्यशब्देन[8] ।**

**किमर्थं तर्ह्यद्यशब्दः प्रयुज्यते ?**

**अद्यशब्दस्यापि समुदायेन योगो भवति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

---

१ 'अन्तवद्भावनिषेधात्' इति उद्द्योतानुकूलः पाठः । अन्तादिवच्चेति सूत्रे 'नाभ्यासादीनां ह्रस्वत्वे' इति वार्तिकं दृश्यते । अत्र 'नाभ्यासादिषु' इत्येव पाठः सार्वत्रिकः । अत्रत्यं पाठभेदतत्वं सुधीभिरूहनीयम् ॥

२ तत्प्रत्याख्यान इति । नाभ्यासादीनां ह्रस्वत्वे इति वार्तिकप्रत्याख्याने ॥

३ न तदिति । न हलादिशेषप्रवृत्तिरिति भावः ॥

४ 'स्वरे दोषस्तु' इति च. छ. पाठः ॥

५ तत्त्वमेवेति । नित्यमुदात्त एवेष्यत इति भावः । विप्रतिषेधविधाने पक्षे उदात्तो यद्यपि भवति तथापि पक्षे स्वरितः स्यात्, स चानिष्टः ॥

६ 'ज्ञापकार्थं' इति छ. झ. पाठः ॥

७ न तु स्थित इति । आङि पररूपवचनेन यज्ज्ञाप्यते तेन विप्रतिषेधोऽयं न स्थितः किन्त्वन्तरङ्गबलीयस्त्वमेवेति भावः ॥

८ ननु यदि आङोऽद्य शब्देन न पूर्वं संबन्धः, नापि च धातुना, धातोः पूर्वमाङा संबन्धात् । तर्हि अद्यशब्दस्य प्रयोग एव व्यर्थ इत्यत आह—किमर्थमिति ॥

(प्रदीपः) **नाद्यशब्देनेति**। 'अद्य' इत्यस्याधारार्थस्याङा सम्बन्धो नास्ति, क्रियासापेक्षत्वादाधारस्य। अडादिव्यवस्थार्थं तु धातूपसर्गौ पृथगुपदिष्टौ। परमार्थतस्तु धातूपसर्गसमुदायः संग्रामयतिवत् क्रियाविशेषवाचीति भावः॥

(उद्द्योतः) भाष्ये—**पूर्वमुपसर्गस्य हीति**। धातोस्तदर्थान्तर्भावेण बोधजनकत्वस्य तत्संबन्धं विनाऽभावादित्यर्थः॥ **नाद्यशब्देनेति**। पृथगुपसर्गस्यार्थाभावादिति भावः॥

**किमर्थं तर्हीति**। [1]आङ इव विशिष्टस्याप्यधातुत्वादिति भावः॥

**समुदायेनेति**। उपसर्गद्योत्यार्थसहितधात्वर्थेनेत्यर्थः। एवञ्चान्तरङ्गार्थकशब्दनिमित्तत्वेनोपसर्गधातुकार्यमन्तरङ्गमिति भावः। निरूपयिष्यते चेदं 'सुट्कात्पूर्वः' इत्यत्र। एवञ्च भिन्नपदवाच्यकारकसंबन्ध उपसर्गसंज्ञकशब्दयोगादनन्तरमेवेति सूचितमिति दिक्॥ ननूपसर्गस्य क्रियाविशेषप्रतीतिहेतुत्वात्तेनापि संबन्धो युक्त एवेत्यत आह—**अडादीति**। 'अग्नी अत्र' इत्यादौ सर्वत्र पदान्तरापेक्षत्वाद्वर्णविकाराणां बहिरङ्गत्वं बोध्यम्॥

(६२१५ ज्ञापनप्रयोजनवार्तिकम्॥ १०॥)

**॥ * ॥ प्रयोजनं पूर्वसवर्णपूर्वत्वतहिलोपटेनङेर्यङिस्सिन्ङिणलौत्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात्॥ * ॥**

(भाष्यम्) **पूर्वसवर्णः प्रयोजनम्। अग्नी अत्र, वायू अत्र। पूर्वसवर्णश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकार आवादेशः।**

**पूर्वसवर्णदीर्घत्वं भवत्यन्तरङ्गतः। पूर्वसवर्ण॥**

**पूर्वत्व। शकह्वर्थम्, परिव्यर्थम्। पूर्वत्वं च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्।**

**पूर्वत्वं भवत्यन्तरङ्गतः। पूर्वत्व॥**

**तहिलोप। अकार्यत्र, अहार्यत्र, पचेदम्। तहिलोपौ च प्राप्नुतः, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्।**

**तहिलोपौ भवतोऽन्तरङ्गतः। तहिलोप॥**

**टेन। वृक्षेणात्र, प्लक्षेणात्र। इनादेशश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्।**

**इनादेशो भवत्यन्तरङ्गतः। टेन॥**

**ङेर्य। वृक्षायात्र, प्लक्षायात्र। ङेर्यादेशश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः—'एङः पदान्तादति' (६।१।१०९) इति परपूर्वत्वम्।**

**ङेर्यादेशो भवत्यन्तरङ्गतः। ङेर्य॥**

**ङिस्सिन्। यस्मिन्निदम्, तस्मिन्निदम्। स्मिन्भावश्च प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्।**

**स्मिन्भावो भवत्यन्तरङ्गतः। ङिस्सिन्॥**

**ङिणलौत्वम्। अग्नाविदम्, ययावत्र। ङिणलौत्वं प्राप्नोति, बहिरङ्गलक्षणश्च वर्णविकारः सवर्णदीर्घत्वम्।**

**औत्वं भवत्यन्तरङ्गतः॥**

(प्रदीपः) **अग्नी अत्रेति**। 'अग्नि औ अत्र' इति स्थिते विचारः। एवं 'शकहू आ अर्थम्' 'अकारि त अत्र' 'पच हि इदम्' 'वृक्ष आ अत्र' 'वृक्ष ए अत्र' 'अग्नि इ इदम्' 'यथा अ अत्र'॥

(प्रयोजनाक्षेपभाष्यम्)

**नैतानि सन्ति प्रयोजनानि। विप्रतिषेधेनाप्येतानि सिद्धानि।**

(ज्ञापनप्रयोजनसमर्थकभाष्यम्)

**इदं तर्हि प्रयोजनम्—वृक्षा अत्र, प्लक्षा अत्र। पूर्वसवर्णश्च प्राप्नोति बहिरङ्गलक्षणश्च वर्णविकारः—'अतो रोरप्लुतादप्लुते (६।१।११३)' इत्युत्वम्।**

**पूर्वसवर्णो भवत्यन्तरङ्गतः।**

**न चावश्यमिदमेव प्रयोजनम्। [2]आद्ययोगे बहूनि प्रयोजनानि सन्ति यदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं दोषेषु॥**

(प्रदीपः) **वृक्षा अत्रेति**। अनुदाहरणमेतदित्याहुः। '[3]वृक्ष अस् अत्र' इति स्थिते कृते रुत्वे उत्वस्य प्राप्तिः। तच्च रुत्वं 'पूर्वत्रासिद्धम्' इति पूर्वसवर्णदीर्घे क्रियमाणे असिद्धम्, उत्वे एव त्वाश्रयात्सिद्धम्—वृक्षोऽत्रेति। ततश्च पूर्वसवर्णदीर्घेणैव पूर्वं भाव्यम्। तत्र कृते अतः परो रुर्न भवतीत्युत्वाभावः॥

**प्रतिविधेयमिति**। 'पूर्वोत्तरपदयोर्वृद्धिस्वरावेकादेशात्' इत्यादयो दोषा विप्रतिषेधसूत्र उक्ताः॥

(उद्द्योतः) **आहुरिति**। तद्ध्वनयन्नाह—**नावश्यमिदमेवेति**—भाष्ये॥ **आद्ययोग इति**। विप्रतिषेधसूत्र इत्यर्थः॥ **प्रतिविधेयं दोषेष्विति**। [4]अनित्यत्वमङ्गीकार्यमिति भावः॥

---

[1] आङ इवेति। अद्येत्यस्याधारार्थकत्वेन तस्य क्रियायामेव संबन्ध उचितः स न संभवति, यथा—आङो न धातुत्वं तथा आङ्विशिष्टस्यापि न धातुत्वमिति न तद्वाच्यस्य क्रियात्वमिति न तेन संबन्धः स्यादिति भावः॥

[2] 'आद्ये योगे' इति छ. ट. पाठः॥

[3] अस्यानुदाहरणत्वं प्रपञ्चयति—वृक्ष असिति॥

[4] अनित्यत्वमिति। बहिरङ्गपरिभाषाया इत्यादिः॥

( ११०५ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७० )

## २५४९ ख्यत्यात्परस्य ॥ ६ । १ । ११२ ॥

( ख्यत्यात्पदार्थबोधकभाष्यम् )

**किमिदं ख्यत्यादिति ?**

**सखिपत्योर्विकृतग्रहणम् ।**

**किं पुनः कारणं विकृतयोः सखिपत्योर्ग्रहणं क्रियते, न सखिपतिभ्यामित्येवोच्येत ?**

( प्रदीपः ) **किमिदमिति** । किम[1]कारान्तयोर्ग्रहणम्, अथ कृतयणादेशयोः । आद्ये पक्षे मुख्यापत्यादीनां ग्रहणप्रसङ्ग इति मत्वा प्रश्नः ॥

**सखिपत्योरिति** । 'सख्युर्यः' 'पत्युर्नः' इति लिङ्गादकारान्तयोर्न ग्रहणम्, अपि तु कृतयणादेशयोः ॥

**न सखिपतिभ्यामिति** । विकारनिर्देशे क्लेशेन तयोः प्रतिपत्तिः । साक्षान्निर्देशे तु स्पष्टावगतिः ॥

( उद्योतः ) **अथ कृतयणेति** । आगन्तुनाऽकारेणेति भावः ॥ मुख्याद्यग्रहणे हेतुमाह—**सख्युर्य इत्यादि** ॥ ननु 'सखिपतिभ्याम्'इत्युक्ते [2]मात्राधिक्याद्विपरीतं गौरवमत आह—**विकारेति** ॥

( विकृतनिर्देशप्रयोजनभाष्यम् )

**नैवं शक्यम् । गरीयांश्चैव निर्देशः स्यात् ।**

**इह च प्रसज्येत—अतिसखेरागच्छति, अतिसखेः स्वम् ।**

**इह च न स्यात्—सखीयतेरप्रत्ययः—सख्युः, पत्युः । लूनीयतेरप्रत्ययः—लून्युः, पून्युः ॥**

( प्रदीपः ) **अतिसखेरिति** । अतिक्रान्तः सखा येनेति बहुव्रीहिः । **अथवा** शोभनः सखा–अतिसखा, 'न पूजनात्' इति समासान्तनिषेधः । सखिपतिभ्यामुत्तरावत्र ङसिङसावित्युत्वप्रसङ्गः । अथ तु विहितविशेषणपक्ष आश्रीयते–सखिपतिभ्यां यौ विहितौ ङसिङसाविति, तदाऽत्रोत्वाप्रसङ्गः । अव्याप्तिस्तु प्रसज्येत ।

तदाह—**इह चेति** । अतिसखेरित्यत्र '–असखि'इति घिसंज्ञाप्रतिषेधो न भवति, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्केवलस्यैव सखिशब्दप्रतिषेधविज्ञानात् ॥ **सखीयतेरिति** । विद्यमानं खमस्य–सखः, तमिच्छत्यात्मन इति क्यच्, 'क्यचि च' इतीत्वम् ॥ **लून्युरिति** । लूनमिच्छतीति क्यच् । अत्र 'पूर्वत्रासिद्धम्'इति नत्वस्यासिद्धत्वात्त्यशब्दो भवति । अत्र **चोदयन्ति**—सखीयादिभ्यः क्विपि कृते अल्लोपयलोपयोश्चाल्लोपस्य स्थानिवद्भावात् 'इको यणचि' इति ईकारस्य यणा भाव्यम् । तत्र कृते यलोपे स्थानिवत्त्वनिषेधात्, आदिष्टादचः पूर्वत्वात् स्थानिवत्त्वाप्रसङ्गाद्वा 'लोपो व्योर्वलि' इति यलोपप्रसङ्गः । ततश्च सख्युरित्यादिरूपाणि न सिध्यन्ति । नैतदस्ति । 'क्वौ लुप्तं न स्थानिवत्' इति स्थानिवत्त्वनिषेधात् ॥

( उद्योतः ) **गरीयांश्चेति**—भाष्यस्य त्वत्यन्तं [3]मात्रागौरवमिति प्रतिपत्तिगौरवं न दोषायेति भावः ॥

समासान्ताभावायाह—**अतिक्रान्तः** [4]**सखा येनेति** । इदं [5]चिन्त्यम्, 'यस्येति च'इतिसूत्रस्थभाष्यप्रामाण्येन तदन्तेऽपि घिसंज्ञानिषेधेन तत्र गुणाप्राप्तेः । तस्मात्सखीमतिक्रान्त इति विग्रहः । [6]एवञ्च समासान्तविधौ लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रभाष्ये उक्तत्वेन समासान्ताप्रसक्तिरेव । उपसर्जनह्रस्वत्वे च सखिशब्दत्वम्, लाक्षणिकत्वाच्च न घित्वप्रतिषेधः । प्रकृतभाष्यं तु लक्षणप्रतिपदोक्तपरिभाषानाश्रयेण प्रवृत्तमिति बोध्यम्, विहितविशेषणानाश्रयणवत् । न च 'परस्य'इत्यनेन विरोधाद्विहितविशेषणासंभवः । सखिपतिभ्यां विहितङसादेरति–इत्यर्थे पूर्वपरयोरिति निवृत्त्या परस्यैवादेशलाभार्थं तत्सत्त्वेन तद्विरोधाभावात् । तदाश्रयणे प्रतिपदोक्तपरिभाषाश्रयणे च दोषमाह—भाष्ये—**इह च नेत्यादिना** ॥ **ग्रहणवतेति** । इदं चिन्त्यम्, तस्य प्रत्ययविधिविषयत्वात् । 'यस्येति च' इति सूत्रस्थभाष्यप्रामाण्येनात्र शब्दरूपं विशेष्यमादायापि तदन्तविधिरिति बोध्यम् । अधिकं 'यस्येति च'इत्यत्र निरूपयिष्यामः ॥ सखिशब्दात्क्यचि त्वेकदेशविकृतन्यायेन सखिशब्दत्वं दुर्वारम्, 'अभिव्यक्तपदार्थाः' इति न्यायस्तु पदकार्यविषय एवेत्यत आह—**विद्यमानं खमिति** । 'वोपसर्जनस्य'इति [7]सत्वम् ॥ **स्थानिवत्त्वनिषेधादिति** । ङस्निमित्तयणस्तु बहिरङ्गतया तस्य न लोपः ॥



१ ख्यत्यादिति निर्देशे संभाव्यमानं पक्षद्वयमाह—किमकारान्तेति । अकारान्तस्य ख्यशब्दस्य त्यशब्दस्य च ग्रहणे मुख्यशब्दघटकस्य ख्यस्य, अपत्यशब्दघटकस्य त्यस्य च ग्रहणप्रसङ्गः ॥

२ मात्राधिक्यादिति । सन्दिग्धोच्चारणे व्याख्यानापेक्षत्वम्, असन्दिग्धोच्चारणे न तदिति फलमुखगौरवं न दोषायेति न्यायात् मात्रागौरवेऽपि न दोष इति शङ्कितुराशय इति भावः ॥

३ मात्रागौरवमिति । सखिपतिभ्यामिति निर्देशे ख्यत्यादित्यपेक्षया मात्रागौरवस्याधिक्यात्–फलमुखगौरवमपि न दोषायेति तात्पर्यम् । सन्दिग्धोच्चारणेन व्याख्यानापेक्षाऽपि एतादृशमात्रागौरवापेक्षया लघु इति तात्पर्यमिति भावः ॥

४ सखेति । राजाहः सखिभ्यष्टजिति हि तत्पुरुष एव भवतीति बहुव्रीहिप्रदर्शनमिति भावः ॥

५ चिन्त्यमिति । यस्येति चेति सूत्रे हि भाष्ये–इवर्णस्य ईत्वे किमुदाहरणमित्याशङ्क्य इदं तर्हि–अतिसखेरागच्छति–यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृतेऽसखीति प्रतिषेधः प्रसज्येत–इति तदन्तस्यापि घिसंज्ञाप्रतिषेधः स्पष्टमुक्तः, तथाऽतिक्रान्तः सखा येनेति बहुव्रीहावपि घिसंज्ञाप्रतिषेधान्नैवं विग्रह इति भावः ॥

६ ननु सखीमतिक्रान्त इति विग्रहे समासान्तापत्तिरत आह—एवं चेति ॥

७ सत्वमिति । सहस्य सादेश इति भावः ॥

( ११०६ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७१ )

## २५५० अतो रोरप्लुतादप्लुते ॥ ६ । १ । ११३ ॥

( रुत्वाधिकरणम् )

( पदाक्षेपभाष्यम् )

**किमर्थमप्लुतादप्लुत इत्युच्यते ?**

( प्रदीपः ) **किमर्थमिति** । प्रकृतिभावविधानाज्ज्ञापकात् स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्वात्तपरकरणेनैवोत्वं निवारितमिति मत्वा प्रश्नः ॥

( उद्द्योतः ) ज्ञापकात्स्वरसन्धीति । सामान्यापेक्षं ज्ञापकमित्यभि[1]मानः ॥

( समाधानभाष्यम् )

**प्लुतात्परस्य प्लुते वा परतो मा भूत्—इति ।**
**प्लुतपरस्य—सुस्रोता ३ अत्र न्वसि ।**
**प्लुते परतः—तिष्ठतु पय आ३ग्निदत्त ।**
**'अतः-अति' इत्युच्यते, कः प्रसङ्गः प्लुतात्परस्य प्लुते वा परतः स्यात् ?**
**असिद्धः प्लुतः, तस्यासिद्धत्वात् प्राप्नोति ॥**

( प्रदीपः ) **असिद्ध इति** । [2]प्रकृतिभाव एव सिद्धः प्लुतः ॥

( उद्द्योतः ) भाष्ये समाधत्ते—प्लुतात्परस्येति । अयं भावः—प्रकृतिभाव एव ते[3]नाश्रयासिद्धत्वं लभ्यते, सामान्यापेक्षज्ञापके फलाभावात् । एवञ्च प्लुतस्यासिद्धत्वात्तपरकरणेन न वारणम् । [4]एतत्करणे तु प्रतियोगित्वेनाश्रयादुत्वदृष्ट्या सिद्धत्वमित्यनेन तद्वारणमिति । तमिममाशयमजानानावेकदेशिनावाहतुः—अतोऽतीत्यादि—कार्येण भवितव्यमित्यन्तेन ॥ प्रकृतिभाव एवेति । अर्थापत्तेः साक्षादुपपादकविषयतायां औत्सर्गिकत्वादिति भावः ॥

( अप्लुताप्लुतपदार्थनिर्णये एकदेशिभाष्यम् )

**अथ 'अप्लुतात्–अप्लुते' इत्युच्यमानेऽपि यावताऽसिद्धः प्लुतः, कस्मादेवात्र न प्राप्नोति ?**
**अप्लुतभाविनोऽप्लुतभाविनीत्येवमेतद्विज्ञायते ॥**

( प्रदीपः ) **अप्लुतभाविन इति** । प्लुतभावित्वादुपचारात् स्थान्येवाकारः प्लुतशब्देनोच्यते इत्यर्थः । यद्यपि प्रतिषेधोपादानसामर्थ्यात् 'सिद्धः प्लुतः–' इति परिहारोऽस्ति, तथापि परिहारान्तरसद्भावादेष परिहारो नाश्रितः ॥

( उद्द्योतः ) उपचारादिति । [6]सामर्थ्याद्गौणस्याश्रयणमिति भावः ॥ **सिद्धः प्लुत इति** । [7]ज्ञापितेऽपि प्रवर्तकत्वनिवर्तकत्वाभ्यां चारितार्थ्याभावाच्चिन्त्यमिदम् । यदि [8]तु भाष्ये वक्ष्यमाणमाश्रयासिद्धत्वमेवैतदक्षरार्थस्तदा 'एष परिहारो नाश्रितः' इत्युक्तिरसङ्गतेति सहृदया भावयन्तु ॥

( एकदेशिनोर्ज्ञापकाश्रयेण समाधानभाष्यम् )

**नैतदस्ति प्रयोजनम् । सिद्धः प्लुतः स्वरसंधिषु । कथं ज्ञायते ?**
**यदयं प्लुतः प्रकृत्येति प्लुतस्य प्रकृतिभावं शास्ति, सतो हि कार्यिणः कार्येण भवितव्यम् ॥**

( प्रदीपः ) **यदयमिति** । सामान्येन संहिताधिकारविहितकार्यापेक्षं ज्ञापकमाश्रीयते [9]॥

( उद्द्योतः ) सामान्येनेति । तदेवं[10]मत्र पक्षे 'अप्लुतादप्लुते' इत्येतत्प्रत्याख्यातम् ॥

( ६२१६ एकदेशिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अ[11]प्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधः ॥ * ॥

( भाष्यम् ) **अप्लुतादप्लुतवचनेऽकारहशोः समानपदे प्रतिषेधो वक्तव्यः । पयो३द्र, पयो३द ॥**

( प्रदीपः ) **अकारहशोरिति** । उत्वप्रतिषेधस्य प्रतिषेध इत्यर्थः । तत उत्वे कृते 'आद्गुणः', 'एङः पदान्तादति' इति पूर्वैकादेशः, ततः प्लुतः ॥ **पयो ३ ड्रिति** । पयोऽटतीति क्विप्, ततः सम्बुद्धिः । 'दूराद्धूते च' इत्यकारस्य वाक्यस्य टेः प्लुतभावित्वादुत्वप्रतिषेधप्रसङ्गः ॥ **पयो३देति** । पयो ददातीति कः प्रत्ययः । ततः संयोगपरस्याकारस्य गुरुत्वात् 'गुरोरनृतः–' इति प्लुतभावित्वात् 'अप्लुताद्' इति निषेधात् 'हशि च' इत्युत्वं न प्राप्नोति ॥

---

१ अभिमान इति । शङ्कितुरेकदेशिनोऽभिमान इत्यर्थः ॥

२ सिद्धान्ती ज्ञापकस्य सामान्यापेक्षत्वं वारयति—प्रकृतिभाव एवेति ॥

३ तेनेति । प्लुतस्य प्रकृतिभावविधानेन प्रकृतिभावे विधीयमान एव प्लुतस्य सिद्धत्वमिति लभ्यत इत्यर्थः ॥

४ एतत्करण इति । अप्लुतादप्लुत इति करणे भेदीयप्रतियोगित्वेन प्लुतस्याश्रयणात्सिद्धत्वमिति अनेन–अप्लुतादप्लुते इति पदेन प्लुतविषयकलक्ष्ये उत्ववारणमिति भावः ॥

५ 'अपि' शब्दः क. छ. पुस्तकयोर्न दृश्यते ॥

६ सामर्थ्यात्–अप्लुतादप्लुते इति पदोपादानसामर्थ्यात् गौणस्य–प्लुतस्थानिभूताकारस्याश्रयणमित्याशयः ॥

७ ज्ञापितेऽपीति । अत्रायं कैयटाशयः–अप्लुतादप्लुते इति वचनं व्यर्थं सज्ज्ञापयति–सिद्धः प्लुतः स्वरसन्धिष्विति । यद्येतज्ज्ञाप्यते तदाऽपि स्वांशे चारितार्थ्यस्य अन्यत्र फलस्य चाभावान्नैतज्ज्ञापकमुपपद्यत इति चिन्त्यमिति भावः ॥

८ ननु सिद्धान्ते 'आश्रयात्सिद्धत्वम्' इति भाष्यकृताऽऽश्रीयते तद्बुद्ध्यैव प्रतिषेधोपादानसामर्थ्यादित्यादिः प्रदीपस्तत्राह—यदि त्विति । वस्तुतो विद्यमानस्याश्रयात्सिद्धत्वस्यानाश्रयणमयुक्तमिति भावः ॥

९ कार्यापेक्षया ज्ञाप–' इति च. झ. पाठः ॥

१० तदेव मत्रेति । सिद्धः प्लुतः स्वरसन्धिष्विति भाष्यस्यायमाशयः—स्वरसन्धिविषये प्लुतस्य सिद्धत्वे तस्य परत्वेन सन्धिकार्यापेक्षया प्लुत एव स्यादिति तपरकरणादेव चात्र सन्धिकार्यं न स्यादिति अप्लुतादप्लुतवचनं व्यर्थं सत्प्रत्याख्यत इति भावः ॥

११ भाष्यकृद्भिर्वार्तिकावतरणरूपेण पक्षद्वयमत्रोपस्थापितम् । अप्लुतभाविनोऽप्लुतभाविनीति प्रथमः, सिद्धः प्लुतः स्वरसन्धिष्विति द्वितीयः । प्रथमपक्षे पयो३ड्रित्यत्र प्लुतभावित्वादस्याकारस्योत्वप्रतिषेधः प्राप्तः, द्वितीये च वाक्यसंस्कारपक्षे सिद्धत्वात्पूर्वमुत्वस्य प्लुतः प्राप्तः । एवं चोभयथापि प्राप्तस्योत्वप्रतिषेधस्यानेन निषेधः क्रियत इति अप्लुतादप्लुतवचने क्रियमाणे दोष एवेति ॥

(उद्योतः) 'अप्लुतात्' इति क्रियमाणे दोषमाह—अप्लुताद-प्लुतवचनेऽकारेत्यादि । निमित्तभूतयोरकारहशोः समानपदस्थत्व इत्यर्थः[१] । तदा[२] हि प्लुतस्य सिद्धत्वेन परत्वात्प्लुते कृत उत्वाप्रसङ्ग इति बोध्यम् ॥

( ६२१७ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥**

(भाष्यम्) न वा वक्तव्यम् ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः, अन्तरङ्ग-मुत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥

इहापि तर्हि प्राप्नोति-सुस्रोता३ अत्र न्वसि ।

अन्तरङ्गोऽत्र प्लुतः, बहिरङ्गमुत्वम् ॥

(उद्योतः) भाष्ये—न वा बहिरङ्गत्वादिति । ज्ञापकेन[३] तु पूर्वत्रासिद्धत्वस्यैव बाध इति भावः ॥

( प्लुतोत्वयोरन्तरङ्गत्वबहिरङ्गत्वव्यवस्थापकभाष्यम् )

क्व पुनरिहान्तरङ्गः प्लुतः-क्व वा बहिरङ्गमुत्वम्, उत्वं वाऽन्तरङ्गम्-प्लुतो वा बहिरङ्गः ?

वाक्यान्तस्य वाक्यादावन्तरङ्गः प्लुतः, बहिरङ्ग-मुत्वम् ।

समानवाक्ये पदान्तस्य पदादावुत्वमन्तरङ्गम्, बहिरङ्गः प्लुतः ॥

(प्रदीपः) वाक्यान्तस्येति । सुस्रोता३ इत्यादौ पदान्तरानपेक्षणात् प्लुतोऽन्तरङ्गः ॥ वाक्यादाविति । वा-क्यादौ परतो वाक्यन्तस्येत्यर्थः । उत्वप्रसङ्गकथनार्थं चैतत् । उत्वं तु तत्र पदद्वयापेक्षत्वाद्बहिरङ्गम् ॥

बहिरङ्गः प्लुत इति । दूराद्धूताद्यर्थापेक्षत्वात् ॥

(उद्योतः) पदान्तरानपेक्षणादिति । वाक्या[४]न्तरस्थ-पदान्तरानपेक्षणादित्यर्थः । उत्वं तु वाक्यान्तरस्थपदसापेक्षमिति भावः ॥

वाक्यादौ परत इति । 'आगच्छ' इत्यादिपूरणात्सुस्रोता इत्य-न्तमेकं वाक्यम्, 'अत्र न्वसि' इत्यपरमिति भावः ॥ दूराद्धूताद्यर्था-पेक्षत्वादिति । वहिर्भूतसंबोधनाद्यपेक्षत्वादित्यर्थः । यदि त्वर्थापेक्षं न बहिरङ्गं तर्हि वाक्यत्वसंपादकपदान्तरसापेक्षत्वात्प्लुतस्यात्र बहिरङ्गत्वं बोध्यम् । य[५]द्यपि बहिरङ्गपरिभाषादृष्ट्या बहिरङ्गः प्लुतोऽसिद्धस्तथापि न क्षतिः, स्वदृष्ट्याऽसिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसंभवात् । [६]स्वदृष्ट्या विद्यमानस्य घटस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् ॥

( सिद्धान्तभाष्यम् )

किं पुनः कारणं बहिरङ्गत्वमुत्वे हेतुर्व्यपदिश्यते, न पुनरसिद्धत्वमपि ?

यथैव ह्ययं बहिरङ्ग एवमसिद्धोऽपि ।

एवं मन्यते—असिद्धः प्लुत आश्रयात्सिद्धो भवति ॥

अथवा यस्यां नाप्राप्तायां परिभाषायामुत्वमार-भ्यते, साऽऽश्रयात्सिद्धा स्यात् ।

कस्यां च नाप्राप्तायाम् ?

असिद्धं[७]परिभाषायाम् ।

बहिरङ्गपरिभाषायां पुनः प्राप्तायामप्राप्तायां च ॥

(प्रदीपः) किं पुनः कारणमिति । द्विविधेऽसिद्ध-त्वेऽसम्भवति कस्माद्बहिरङ्गासिद्धत्वमुच्यते, न तु पूर्वत्रासिद्ध-त्वमपि ? अथाश्रयात्सिद्धत्वेनासिद्धत्वं बाध्यते तथा बहिर-ङ्गासिद्धत्वमपि बाध्यतामिति मत्वा प्रश्नः ॥ असिद्ध इति । 'पूर्वत्रासिद्धम्' इति वचनात् ॥

आश्रयादिति । 'अप्लुतादप्लुते' इति प्रतिषेधाश्रयणसाम-र्थ्यात् 'पूर्वत्रासिद्धम्' इत्येतदसिद्धत्वं प्रत्यासत्त्या बाध्यते, न तु बहिरङ्गासिद्धत्वमौपसंख्यानिकं 'वाह ऊठ्' इत्यत्र ज्ञापितं च, विप्रकृष्टत्वात् । पयोऽडित्यादौ तु बहिरङ्गपरिभाषया प्लुतस्या-सिद्धत्वापादनात् 'पूर्वत्रासिद्धम्' इत्यस्याप्रवृत्तावाश्रयात्सिद्धत्वा-भावः ॥

आश्रयात्सिद्धा स्यादिति । तद्विषयस्य प्लुतस्य सिद्ध-त्वात् 'सिद्धा' इत्युक्तम् । अनाश्रयणं तु तस्या अत्राभि-मतम् ॥

(उद्योतः) तथा बहिरङ्गेति । एवञ्च 'न वा बहिरङ्गा-सिद्धत्वात्' इति परिहारोऽसङ्गत इति भावः ॥

प्रत्यासत्त्येति । पा[८]णिनीयत्वरूपयेत्यर्थः ॥ ज्ञापितं चेति । अनेनानुमानिकात् प्रत्यक्षशिष्टं सन्निहितमिति सूचितम् । 'विप्रकृष्ट-त्वान्न तु बाध्यते' इत्यन्वयः ॥

बहिरङ्गासिद्धत्वाबाधे युक्त्यन्तरमाह—भाष्ये—अथ वेति ॥

ननु प्लुत आश्रयात्सिद्धः, न तु 'पूर्वत्रासिद्धम्' इति परिभाषा-इति किमुच्यते 'साऽऽश्रयात्सिद्धा' इति ? अत आह—तद्विषयेति ॥ अनाश्रयणं त्विति । 'पूर्वत्रासिद्धम्' इत्यस्या अत्रानाश्रयणमित्यर्थः ॥

---

१ वार्तिकार्थमाह—निमित्तभूतयोरित्यादि ॥

२ तदा हि—अप्लुतादप्लुतवचनेन पूर्वोक्तार्थे ज्ञापिते ॥

३ ननु सिद्धः प्लुतः स्वरसन्धिषु इति ज्ञाप्येन बहिरङ्गासिद्धत्वस्यापि बाधः प्राप्नुयादित्याशङ्कायामाह—ज्ञापकेन त्विति । प्रयोजनाभावाद्बहिरङ्गा-सिद्धत्वं न बाध्यत इति भावः ॥

४ ननु सुस्रोता३ अत्रेत्यत्रोत्वप्राप्तौ 'अत्र' इति पदमप्यपेक्षत एवेति कथमुक्तं पदान्तरानपेक्षणादिति ? अत आह—वाक्यान्तरस्थेति ॥

५ ननु बहिरङ्गपरिभाषायाः पाष्ठिकत्वेन तद्दृष्ट्याऽसिद्धः प्लुत इति अविद्यमानत्वात्प्लुतस्य कथं तया परिभाषया प्लुतस्यासिद्धत्वं वक्तुं शक्यमत आह—यद्यपीति । अन्तरङ्गशास्त्रत्वं हि तस्या लिङ्गम् । अन्तरङ्गशास्त्रं परि-दृष्ट्या यत्रासिद्धं तत्रैयं न प्रवर्तते । बहिरङ्गस्यासिद्धत्वेऽपि अन्तरङ्गशास्त्रेऽस्या उपस्थितौ बाधकाभाव इत्याशयः ॥

६ तत्र दृष्टान्तमाह—स्वदृष्ट्येति ॥

७ असिद्धपरिभाषायाम्-पूर्वत्रासिद्धमिति परिभाषायाम् ॥

८ ननु प्रत्यासत्तिश्चात्र सान्निध्यं तच्च असिद्धपरिभाषाया एवेति कथ-मुच्यते पूर्वत्रासिद्धं प्रत्यासत्त्या बाध्यत इति ? तदाह—पाणिनीयत्वेति ॥

( ११०७ निषेधसूत्रम् ॥ ६ । १ । ५ आ. ७२ )

## २५५२ नान्तः पादमव्यपरे[1] ॥६।१।११५॥

( प्रकृतिभावाधिकरणम् )

( प्रतिषेध्यबोधकभाष्यम् )

कस्यायं प्रतिषेधः ?

नान्तःपादमिति सर्वप्रतिषेधः ।

नान्तः पादमिति सर्वस्यायं प्रतिषेधः ।

कथम् ?

अचीति वर्तते, अचि यत्प्राप्नोति तस्य प्रतिषेधः ॥

( प्रदीपः ) कस्यायमिति । यदि 'एङः पदान्तादति' इति प्राप्तस्य पूर्वैकादेशस्य प्रतिषेधस्तदाऽयवौ प्राप्नुत इति प्रश्नः ॥

सर्वप्रतिषेध इति । विशेषमनपेक्ष्य प्रतिषेधविधानात् ॥

(उद्योतः) यद्येङ इति । 'अनन्तरस्य–'इति न्यायादित्यर्थः ॥ अयवाविति । 'सुजाते अश्व'इत्यादौ । विशेषमनपेक्ष्येति । व्याप्तिन्यायेन लक्ष्यानुरोधेन च बाध्यसामान्यचिन्ताश्रयणादिति भावः ॥

( ६२१८ अतिप्रसङ्गापादकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः ॥ * ॥

( भाष्यम् ) नान्तःपदमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गो भवति । इहापि प्राप्नोति—अन्वग्निरुषसामग्रमख्यत्, प्रत्यग्निरुषसामग्रमख्यत् ॥

( प्रदीपः ) अन्वग्निरिति । यणादेशस्यात्र प्रतिषेधप्रसङ्गः ॥

( उद्योतः ) यणादेशस्येति । 'एङः' इति नानुवर्तत इति भावः ॥

( प्रतिषेध्यान्तरबोधकभाष्यम् )

एवं तर्हि 'अति'इति वर्तते । अकाराश्रयं यत्प्राप्नोति तस्य प्रतिषेधः ॥

( प्रदीपः ) अकाराश्रयमिति । अकार एव निमित्तं यस्य तस्य प्रतिषेधः, यणादेशस्तु अज्मात्रनिमित्तो नाकाराश्रय इति न प्रतिषिध्यते ॥

( उद्योतः ) ननु यणप्यत्राकारनिमित्तक एवेत्यत आह—अकार एवेति ॥

( ६२१९ द्वितीयस्मिन् प्रतिषेध्ये दोषवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अकाराश्रयमिति चेदुत्ववचनम् ॥ * ॥

( भाष्यम् ) अकाराश्रयमिति चेदुत्वं वक्तव्यम् । कालो अश्वः, शतधारो अयं मणिः ॥

( ६२२० द्वितीये दोषवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अयवोः प्रतिषेधश्च ॥ * ॥

( भाष्यम् ) अयवोश्च प्रतिषेधो वक्तव्यः । सुजाते अश्वसूनृते, अध्वर्यो अद्रिभिः सुतम्, शुक्रं ते अन्यत् ॥

( प्रदीपः ) अयवोश्चेति । अयवौ हि अज्मात्राश्रयौ, नाकाराश्रयौ ॥

( दोषद्वयनिराकरणभाष्यम् )

एङ्प्रकरणात्सिद्धम् । 'एङः–अति'इति वर्तते । एङोऽति यत्प्राप्नोति तस्य प्रतिषेधः ॥

( ६२२१ एङ्ग्रहणानुवर्तने दोषवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ एङ्प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेधः ॥ * ॥

( भाष्यम् ) एङ्प्रकरणात्सिद्धमिति चेदुत्वस्य प्रतिषेधो वक्तव्यः । अग्नेरत्र, वायोरत्र । 'अतो रोरप्लुतादप्लुते' ( ११३ ) एङश्च–इत्युत्वं प्राप्नोति[3] ॥

( ६२२२ समाधानवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ पुनरेङ्ग्रहणात्सिद्धम् ॥ * ॥

( भाष्यम् ) पुनरेङ्ग्रहणं कर्तव्यम् ॥

तत्तर्हि वक्तव्यम्[4] ?

---

१ नान्तः पादमिति ॥ इदानींतनोपलब्धाष्टाध्यायीपाठे तु 'प्रकृत्यान्तः पादमव्यपरे' इत्येवं पाठो दृश्यते । शेखरे 'प्रकृत्या–स्वभावेन, न विकारमापद्यत इति यावत्' इति दर्शनात् 'प्रकृत्या–' इत्येव पाठोऽनुमीयते । 'इकोऽसवर्णे' इति सूत्रे 'किमर्थश्चकारः ? प्रकृत्येत्येतदनुकृष्यते' इति भाष्यकारोक्त्या 'प्रकृत्यान्तः पादमव्यपरे' इत्येव पाठ इति निश्चीयते । वस्तुतस्तु एतत्सूत्रव्याख्यावसरे 'कस्यां प्रतिषेधः' इत्यादिभाष्यदर्शनात्पाणिनिप्रणीतं सूत्रं 'नान्तः पादमव्यपरे' इत्येवेति प्रतीयते । वार्तिककृताऽपि 'नान्तः पादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः' इत्येवोक्तमिति पाणिनीयः पाठो नान्त इत्येव । किमर्थश्चकारः ? प्रकृत्येत्येतदनुकृष्यत इति भाष्याच्च नान्तः पादमित्यपेक्षया प्रकृत्यान्तः पादमिति सुवचमिति भाष्याशयः । अन्त इत्येतन्न पृथक् पदम्, किन्तु अन्तःशब्दस्याधिकरणशक्तिप्रधानस्य 'मध्ये' इत्यर्थकस्य षष्ठयन्तेन पादशब्देनाव्ययीभावः । 'प्रकृत्या–' इति सूत्रपाठे प्रकृत्यापदस्य स्वभावेनावस्थितिरर्थः, स्वभावेनावस्थितिश्च–आदेशेनानिवर्त्यत्वरूपा । तेन विकारसामान्याभावलाभः । 'व्यपरे' इति बहुव्रीहिः, तस्य नञा समासः, बहुव्रीहावन्यपदार्थश्चात्र बौद्धः, नञ्विशिष्टस्यैव अन्येन संबन्धात् । बौद्धपदार्थप्रतियोगिको भेदश्च नञा द्योत्यते । पश्चादतीत्याद्यर्थतो विशेषणम्–इति ॥

२ नान्तःपादमितीति । केचित्तु 'नान्तःपादमिति सर्वप्रतिषेधः' इति वार्तिकम् । च. झ. पुस्तकयोस्तथा निर्देशो दृश्यते । अत्र तु बहुतरपुस्तकेषु वार्तिकत्वेन पाठानुपलम्भात् नादृतम् ॥

३ एङश्चेत्युत्वमिति । यदि प्रकृत्याऽन्तःपादमिति सूत्रे एङ इत्यनुवर्तते तदा 'अतो रोरप्लुतादप्लुते' इति सूत्रेऽपि तस्यानुवर्तनादेङन्ताद्रोरुत्वं प्राप्नुयादित्यर्थः ॥

४ 'तत्तर्हि कर्तव्यम्' इति च छ. झ. पाठः ॥

न वक्तव्यम्, प्रकृतमनुवर्तते ।

ननु चोक्तम्—एङ्प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेध इति ।

नैष दोषः । पदान्ताभिसंबद्धमेङ्ग्रहणमनुवर्तते, न चैङः पदान्तात्परोरुरस्ति ॥

( प्रदीपः ) उत्वप्रतिषेध इति । एङ्ग्रहणमिहानुवर्तमानम् 'अतो रोरप्लुतादप्लुते' इत्यत्रापि अनुवर्तेत इति एङ्परस्य रोरुत्वप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये—न चैङः पदान्तादिति । एवञ्च मण्डूकानुवृत्तिरिति भावः । 'सेः-सयौ'इत्यादौ तु न दोषः, 'सावपि पदम्'इति पक्षस्यानाश्रयणादिति भावः । यद्वा तेषामनभिधानमेव सौ-इति बोध्यम् । 'प्रकृत्यान्तः-'इति पाठे तु नायं विचारः, तत्र हि प्रकृतिशब्दः स्वभावे, कारणे वा । 'एङः' इत्यस्य च प्रथमया विपरिणाम इति बोध्यम् । यद्यपि 'नान्तः' इति पाठेऽपि आनन्तर्यात्पूर्वरूपस्यैव निषेधः,अष्टावसरन्यायाच्चायादीनामप्यभाव इति 'इको गुणवृद्धी' इत्यत्रोक्तम्, तथापि 'तौ सत्'इत्याद्यनुपपत्त्या अष्टावसरन्यायस्यात्र शास्त्रेऽनङ्गीकार इत्याशयेन बाध्यसामान्यचिन्तया सर्वनिषेधः प्रतिपादित इति बोध्यम् ॥

---

( ११०८ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७३ )

## २५६० अवङ् स्फोटायनस्य

## ॥ ६ । १ । १२३ ॥

( ६२२३ न्यासान्तरबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ गोरग्वचनं गवाग्रे स्वरसिद्ध्यर्थम् ॥ * ॥

( भाष्यम् ) गोरग्वक्तव्यः ।

किं प्रयोजनम् ?

गवाग्रे स्वरसिद्ध्यर्थम् । गवाग्रे स्वरसिद्धिर्यथा स्यात् । गवाग्रम् ॥

( प्रदीपः ) गोरग्वचनमिति । अव्युत्पत्तिपक्षे गोशब्दः 'फिष्-'इत्यन्तोदात्त इत्योकारस्यान्तोदात्तस्य स्थानेऽवङ् भवन्नन्तोदात्तः प्राप्नोतीति अग्विधेयः । स च 'आगमा अनुदात्ताः' इत्यनुदात्तः । तेन चौकारस्य पदान्ततया विघातात् पूर्वैकादेशाभाव अवादेशो भवति ॥

गवाग्रमिति—बहुव्रीहिः । तत्र पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं भवति । तत्पुरुषे तु समासान्तोदात्तत्वेन भाव्यम् ॥

( उद्द्योतः ) ननु गमेर्डोप्रत्यये प्रत्ययस्वरेणाद्युदात्तस्यौकारस्याद्युदात्तोऽवङ् सिद्ध इति किमनेन ? इत्यत आह—अव्युत्पत्तीति ॥ अन्तोदात्तस्येति । अन्तोदात्तशब्देन विधानात्तथा व्यवहारविषयस्येत्यर्थः । एतेनास्यैकाच्त्वादाद्युदात्तोऽप्ययमित्यपास्तम् । अग्विधौ चेष्टसिद्धिर्लाघवं चेति भावः ॥ नन्वकि 'एङः पदान्तात्' इति पूर्वरूपापत्तिरत आह—तेन चेति ॥

आद्युदात्तत्वं भवतीति । गोशब्दीयान्तोदात्तस्थित्या 'गवाग्रम्' इति समुदाये आद्युदात्तत्वं भवतीत्यर्थः । समासान्तोदात्तत्वे त्वनुदात्तस्यौकारस्यानुदात्त एवावङ्, अवादेशश्च-इति न विशेष इति भावः ॥

( ६२२४ प्रथमन्यासे दोषोपपादकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अवङादेशे हि स्वरे दोषः ॥ * ॥

( भाष्यम् ) अवङादेशे हि स्वरे दोषः स्यात् ।

अन्तोदात्तस्यान्तर्यतोऽन्तोदात्त आदेशः प्रसज्येत ॥

( दोषसमर्थकभाष्यम् )

कथं पुनरयमन्तोदात्तो यदैकाच् ?

व्यपदेशिवद्भावेन ।

यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्तः, एवमाद्युदात्तोऽपि । तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशः प्रसज्येत ।

सत्यमेवमेतत् ।

न त्विदं लक्षणमस्ति—प्रातिपदिकस्यादिरुदात्तो भवतीति ।

इदं पुनरस्ति—प्रातिपदिकस्यान्त उदात्तो भवतीति ।

सोऽसौ लक्षणेनान्तोदात्तः, तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत ॥

( व्युत्पत्तिपक्षाश्रयेण अवङ्न्यासस्थापनपरभाष्यम् )

यदि पुनर्गमेर्डो विधीयेत ।

किं कृतं भवति ?

प्रत्ययाद्युदात्तत्वे कृत आनन्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति ।

कथं पुनरयमाद्युदात्तो यदैकाच् ?

व्यपदेशिवद्भावेन ।

यथैव तर्हि व्यपदेशिवद्भावेनाद्युदात्तः, एवमन्तोदात्तोऽपि । तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशः प्रसज्येत ।

सत्यमेवमेतत् ।

न त्विदं लक्षणमस्ति—प्रत्ययस्यान्त उदात्तो भवतीति ।

इदं पुनरस्ति—प्रत्ययस्यादिरुदात्तो भवतीति ।

सोऽसौ लक्षणेनाद्युदात्तः, तत्रान्तर्यत आद्युदात्तस्याद्युदात्त आदेशो भविष्यति ॥

( प्रदीपः ) यदि पुनरिति । आद्युदात्तविधानशास्त्रप्रवृत्तये व्युत्पत्तिपक्ष आश्रीयत इत्यर्थः ॥

**( उद्योतः ) आद्युदात्तविधानशास्त्रेति** । आद्युदात्तविधायकशास्त्रेत्यर्थः ॥

**( द्विधासमर्थनेऽप्याक्षेपभाष्यम् )**

**एतदप्यादेशे नास्ति—आदेशस्यादिरुदात्तो भवतीति । प्रकृतितोऽनेन स्वरो लभ्यः । प्रकृतिश्चास्य[1] यथैवाद्युदात्ता, एवमन्तोदात्ताऽपि ॥**

**( प्रदीपः ) एतदपीति** । 'आद्यन्तवदेकस्मिन्' इति शास्त्रातिदेशे त्वदुक्तं स्यात् । यदा त्वनेन कार्यमात्रम्—उदात्तत्वमसत्येवादित्वेऽन्तत्वे वाऽतिदिश्यते तदौकारस्यादिव्यपदेशाभावः, कुतस्तदादेशस्याद्युदात्तत्वम्? उदात्तत्वं चानियतदेशं पर्यायेण स्यात्—इति पक्षेऽनिष्टस्वरप्रसङ्गः ॥

**( उद्योतः )** ननु स्थानिनो लक्षणत आद्युदात्तत्वात्किमुच्यते 'प्रकृतिश्चास्य' इत्यादि ? अत आह—**आद्यन्तवदिति ॥ शास्त्रातिदेशेति** । 'आद्युदात्तश्च' इति शास्त्रस्यातिदेशे तदनुपपत्त्या तस्यादित्वव्यपदेशोऽप्यतिदिश्येतेत्यर्थः । क्वचित्तु 'व्यपदेशातिदेशे'[2] इति पाठः ॥ **यदा त्विति** । एवं चौकारस्यादित्वव्यपदेशाभावेन नियताद्युदात्तव्यपदेशस्य सुतरामभावेन तदादेशे तदभावः सुतरां सिद्ध इत्यर्थः ॥ गौणस्य च व्यवहारस्योभयविधस्यापि सत्त्वादादेशेऽपि पर्यायप्रसङ्ग इत्याह—**उदात्तत्वं चेति** । तस्मादवक्तव्यः । न च 'चित्रग्वग्रम्' इत्यादावगवङोर्विशेषः, 'एङः' इत्यनुवृत्त्या तत्रैतत्सूत्राप्रवृत्तेः ॥

**( सिद्धान्तभाष्यम् )**

**एवं तर्हि आद्युदात्तनिपातनं[3] करिष्यते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ।**

**एवमपि—उपदेशिवद्भावो वक्तव्यः ।**

**यथैव निपातनस्वरः प्रकृतिस्वरस्य बाधक एवं समासस्वरस्यापि । गवास्थि, गवाक्षि ॥**

**( प्रदीपः ) स निपातनस्वर इति** । एकश्रुत्या सूत्रपाठे यत्नेनाद्युदात्तोच्चारणमन्तोदात्तत्वबाधनार्थं विज्ञायते ॥

**एवमपीति** । परत्वात् पूर्वं समासान्तोदात्तत्वे सत्यवङ्प्रसङ्ग इत्युपदेशिवद्भावात् पूर्वमवङि सतिशिष्टं समासान्तोदात्तत्वं भवति ॥

**( उद्योतः )** लाघवमनादृत्यापि सूत्रकृतावङ्पक्षे[4] समाधत्ते भाष्ये—**एवं तर्हीति** ॥ नन्वनङुदात्तग्रहणेनासति यत्नविशेषे स्वरूपत उच्चारितगुणस्याविवक्षाज्ञापनादिदमसङ्गतमत आह—**एकश्रुत्येति** । अव्युत्पन्नत्वे[6] तु न्याय्ये प्रकृतितः प्राप्ते स्वरे उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थमिति बोध्यम् ॥

ननु पूर्वमवङि समासस्वरे इष्टसिद्धेः किमुपदेशिवद्भावेन ? इत्यत आह—**परत्वादिति ॥ अवङ्प्रसङ्ग इति** । स च निपातनस्वरेणोदात्तः प्रसज्येतेत्यनुदात्तश्रवणार्थं तदावश्यकमिति भावः । न च उपदेशिवद्भावस्य समानकालप्रवृत्तिकसमासस्वरबाधनेन चरितार्थतया 'हे चित्रगोऽग्रम्' इत्यत्र चित्रगोशब्दस्य पदसंस्कारपक्षे गुणापेक्षयाऽप्यादावामन्त्रिताद्युदात्तत्वेनान्तोऽनुदात्तः । तत्राक्यागमेऽनुदात्ते उभयोरनुदात्तयोः श्रवणम्, अवङ्पक्षे तन्निपातनस्वरेण गकाराकारस्योदात्ततेति विशेष इति वाच्यम् । अस्यैङो लाक्षणिकत्वेनात्रैतदप्रवृत्तेरिति[7] दिक् ॥

---

**( ११०९ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७४ )**

## २५६१ इन्द्रे च ॥ ६ । १ । १२४ ॥

**( न्यासाक्षेपसमाधानभाष्यम् )**

**इन्द्रादाविति वक्तव्यम् ।**

**इहापि यथा स्यात्—गवेन्द्रयज्ञे व्रीहीति ।**

**तत्तर्हि वक्तव्यम्?**

**न वक्तव्यम् ।**

**नैवं विज्ञायते—इन्द्रेऽचीति ।**

**कथं तर्हि ?**

**अचि भवति,**

**कतरस्मिन् ?**

**इन्द्रेऽचीति ॥**

**( प्रदीपः ) इन्द्रादाविति** । इन्द्रशब्द आदिर्यस्य तस्मिन् परत इत्यर्थः । केवले चेन्द्रशब्दे व्यपदेशिवद्भावाद्भवति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति तु निषेधः प्रत्ययविधिविषयः ॥

**इन्द्रेऽचीति** । इन्द्रशब्दो विशेष्यः, अचीति विशेषणम् । सिद्धान्ते त्वज्विशेष्यः, इन्द्रशब्दो विशेषणम् । तदादावपि इन्द्रशब्दस्थोऽज् भवतीत्यवङ्सिद्धिः ॥

**( उद्योतः )** नन्विन्द्रस्यादिरिति तत्पुरुषे इन्द्रशब्दपूर्ववर्तिशब्दे परत इत्यर्थे उदाहरणासङ्गतिरत आह—**इन्द्रशब्द इति ॥ प्रत्ययविधिविषय इति** । 'पूर्वादिनिः' 'सपूर्वाच्च' इति ज्ञापकस्य सजातीयविषयत्वादिति भावः । वस्तुतस्तत्पुरुष एव, इन्द्रशब्दावयवे परत इत्यर्थः, तत्किं बहुव्रीह्याश्रयणेनेति **चिन्त्यम्** । वाक्ये गोशब्दस्येन्द्रपरत्वासंभवेन समासाक्षेपात्प्रत्यासत्त्येन्द्रस्योत्तरपदत्वे एव

---

1 'प्रकृतिरस्य' इति च. पाठः ॥

2 'एकस्मिन्निति व्यपदेशातिदेशे' इति च. पाठः ॥

3 आद्युदात्तनिपातनमिति । अवङ आद्युदात्तत्वं निपात्यते, अन्यथा प्रकृतिरस्य यथैवाद्युदात्ता तथैवान्तोदात्ताऽपि—इति दोषस्मरणात् ॥

4 'सूत्रकृतावङ्पक्षे' इति झ. पाठः ॥

5 ज्ञापनादिति । अस्थिदधीति सूत्रे 'अनङुदात्तः' इति ग्रहणाज्ज्ञापनात् स्वं रूपमिति सूत्रे रूपपदेन—उदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वातिरिक्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्य ग्रहणमिति ज्ञाप्यत इति ॥

6 उदात्तत्वविवक्षायां यत्नं दर्शयति—अव्युत्पन्नत्वमिति ॥

7 लाक्षणिकत्वेनेति । प्रतिपदोक्तस्यैङो ग्रहणमित्यत्रापि भाष्यतात्पर्यमिति भावः ॥

प्रवृत्तिः स्यादिति वार्तिकारम्भः[1] । उदाहरणे[2] उत्तरपष्ठीतत्पुरुषगर्भः षष्ठीतत्पुरुषः ॥ **इन्द्रशब्दो विशेष्य इति** । ततश्चाजादाविन्द्रे उत्तरपदे इत्यर्थः स्यात्, अचीति च व्यर्थं स्यादिति भावः ॥ **सिद्धान्ते त्विति** । अचीत्यनुवृत्तिसामर्थ्यादिति[3] भावः ॥

—:o:—

( ३११० विधिसूत्रम् ॥ ६ । १ । ५ आ. ७५ )

## २५६२ प्लुतप्रगृह्या अचि नित्यम्

## ॥ ६ । १ । १२५ ॥

( नित्यग्रहणप्रयोजनभाष्यम् )

**नित्यग्रहणं किमर्थम्?**

**विभाषा मा भूदिति ।**

**नैतदस्ति प्रयोजनम् । पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम् ।**

**इदं तर्हि प्रयोजनम्—प्लुतप्रगृह्याणामचि प्रकृतिभाव एव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।**

**किं चान्यत्प्राप्नोति?**

**शाकलम् ।**

**[ सिन्नित्यसमासयोः शाकलप्रतिषेधं वक्ष्यति स न वक्तव्यो भवति ][4] ॥**

( प्रदीपः ) **नित्यग्रहणमिति** । 'इन्द्रे च'इति ये सूत्रं पठन्ति 'प्लुतप्रगृह्या अचि नित्यम्'इति तु द्वितीयम्, तन्मते नैष प्रश्नः[5] ॥

**पूर्वस्मिन्नेवेति** । 'इन्द्रे च'इत्यत्र ॥

**शाकलमिति** । ह्रस्वत्वमित्यर्थः । नित्यग्रहणादयमर्थो लभ्यते—प्लुतप्रगृह्यरूपा एव नित्यं प्रकृतिभावं प्रतिपद्यन्ते, न तु रूपान्तरयुक्ता इति । अथवा प्लुतप्रगृह्याणामयमेव प्रकृतिभावो नित्यं भवति, न तु सूत्रान्तरेण कार्यान्तरसहितः ॥

(उद्द्योतः) ननु 'इन्द्रे च नित्यम्' 'प्लुतप्रगृह्या अचि–'इति पाठात्प्रश्नोऽयमयुक्तोऽत आह—**इन्द्र इतीति** ॥

**इन्द्रे चेत्यत्रेति** । आरम्भसामर्थ्यादिति भावः ॥ शाकल्यमत[6]-विधीयमानप्रकृतिभावस्येष्टत्वादाह—**ह्रस्वत्वमित्यर्थं इति** । अन्यथा[7] 'वायू इति'इत्यादौ पक्षे ह्रस्वत्वं स्यादिति भावः ॥ नित्यग्रहणेन शाकलनिवृत्तिः कथं लभ्यते? अत आह—**नित्यग्रहणादिति** । 'नित्यम्'इत्येवकारार्थे ॥ **प्लुतप्रगृह्यरूपा एवेति** । प्लुतरूपा एव, यादृशानां प्रगृह्यप्रवृत्तिस्तद्रूपा एव चेत्यर्थः । **नित्यमिति** विभाषाधिकारनिवृत्तिमूलकम् ॥ **अथवेति** । अत्र पक्षे 'नित्यम्'इति योगो विभज्यते । 'अयम्'इत्यध्याहारः । 'प्लुत'इत्याद्यनुवर्तते ॥ तेनोक्तार्थलाभः । **परे** तु–एवकारार्थनित्यपदस्य प्रकृत्येत्यनेनान्वयेन यथाश्रुतभाष्यसामञ्जस्ये कैयटोक्तः क्लेशः किमर्थ इति **चिन्त्यमित्याहुः** । भाष्ये—'सिन्नित्यसमासयोः शाकलप्रतिषेधं वक्ष्यति स न वक्तव्यो भवति'इत्यग्रन्थः, उपपत्त्यभावादित्याहुः ॥

( अज्ग्रहणप्रयोजनभाष्यम् )

**अथाज्ग्रहणं किमर्थम्?**

**अचि प्रकृतिभावो यथा स्यात् ॥**

( ६२२५ अज्ग्रहणाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकमधिकारात्सिद्धम् ॥ * ॥

( भाष्यम् ) **प्लुतप्रगृह्येषु अच्ग्रहणमनर्थकम् ।**

**किं कारणम्?**

**अधिकारादेव सिद्धम् । 'अचि'इति प्रकृतमनुवर्तते ।**

**क प्रकृतम्?**

**'इको यणचि' ( ६।१।७७ ) इति ॥**

( ६२२६ समाधानवार्तिकम् ॥ २ ॥ )

### ॥*॥ तत्तु तस्मिन् प्रकृतिभावार्थम् ॥*॥

( भाष्यम् ) **तत्तु द्वितीयमज्ग्रहणं कर्तव्यम्, प्रकृतिभावार्थम् ।**

**तस्मिन्नचि पूर्वस्य प्रकृतिभावो यथा स्यात् ।**

**इह मा भूत्—जानु उ अस्य रुजति, जानू अस्य रुजति, जान्वस्य रुजतीति ॥**

( प्रदीपः ) **तत्तु तस्मिन्निति** । यस्मिन्नच्यादेशो विधीयते तस्मिन्नेवाचि परतः प्लुतप्रगृह्याणां प्रकृतिभावो यथा स्यादित्यर्थः ॥

---

१ वार्तिकारंभ इति । इदानींतनोपलब्धभाष्यपुस्तकेषु अस्मिन् सूत्रे वार्तिकं न दृश्यते । परं चैतत्कल्पयितुं शक्यम्—वार्तिकशब्दो न वररुचिकृतवाक्येष्वेव प्रयुज्यते, किन्तु भाष्येष्टयादावपि वार्तिकशब्दप्रयोगः । तथा च 'इन्द्रादाविति वक्तव्यम्' इति भाष्यवाक्यमेव वार्तिकपदलक्ष्यं स्यात् । अत्रत्यं तत्वं सुधीभिरूह्यम् ॥

२ उदाहरणे–गवेन्द्रयज्ञ इत्यत्र । उत्तरः–इन्द्रयज्ञः षष्ठीतत्पुरुषस्तद्गर्भो गोशब्देन सह षष्ठीतत्पुरुष इति भावः ॥

३ अचीत्यनुवृत्तीति । इन्द्रशब्दस्याजादित्वेनाचीति व्यर्थं सदिन्द्रशब्दे उत्तरपदेऽवङादेशं विधत्ते । 'इन्द्रादाविति वक्तव्यम्' इत्यनावश्यकमिति भावः ॥

४ सिन्नित्यसमासयोरिति । अयं पाठः क. ट. पुस्तकयोर्दृश्यते, छ. पुस्तकेनायम्, इतरेषु 'अयं पाठः क्वचिन्न' इति टिप्पणेन सुश्लिष्टः ॥

५ नैष प्रश्न इति । इन्द्रे चेति पृथक्सूत्रकरणे तत्रारंभसामर्थ्याद्विभाषाऽधिकारो नानुवर्तेत । तथा च विभाषेत्यननुवर्तनादिदं सूत्रं नित्यमेव स्यादिति भावः ॥

६ ननु 'यदन्यत्प्राप्नोति तन्माभूत्, किञ्चान्यत्प्राप्नोति? शाकलम्' इति भाष्यमनुपपन्नम्, शाकलेन विधीयमानस्य प्रकृतिभावस्य तत्रेष्टत्वादत आह—शाकल्यमतेति ॥

७ शाकल्यांशस्यानिष्टस्योदाहरणमाह—अन्यथेति ॥

**जानु उ अस्येति ।** उञ्-निपातः, तस्य पूर्वेण सहैकादेशे कर्तव्ये अकारस्य निमित्तत्वाभावात् प्रकृतिभावाभावादेकादेशो भवत्येव । तत्रादिवद्भावादेकादेशः प्रगृह्यः, तस्य 'इको यणचि'इति यणादेशः प्रकृतिभावान्न भवति । मय उञो वो वा'इति पक्षे वकारः ॥

**( उद्द्योतः ) यस्मिन्नचीति ।** पुनस्तदुपादानसामर्थ्यात्प्रत्यासत्त्याश्रयेण यत्तच्छब्दावध्याहृत्य व्याख्यानादेकनिमित्ततादेशप्रकृतिभावयोर्लभ्यत इत्यर्थः ॥

इदमेवोदाहरणमपि—इत्याह—**तत्रादिवदिति ।** प्रगृह्यत्वं[1] परादिवर्णमात्रवृत्तिधर्मो नेति तत्प्रवृत्तिर्बोध्या । कथं तर्हि 'जान्वस्य'इति वकारोऽत आह—**मय इति ॥**

( प्लुतस्य प्रकृतिभावाक्षेपभाष्यम् )

**अथ किमर्थं प्लुतस्य प्रकृतिभाव उच्यते ?**

**स्वरसन्धिर्मा भूदिति ।**

**उच्यमानेऽप्येतस्मिन् स्वरसन्धिः प्राप्नोति ।**

**प्लुते कृते न भविष्यति ।**

**असिद्धः प्लुतस्तस्यासिद्धत्वात्प्राप्नोति ॥**

**( प्रदीपः ) अथ किमर्थमिति ।** 'पूर्वत्रासिद्धम्'इति प्लुतस्यासिद्धत्वादेकादेशः प्रागेव प्राप्नोतीत्यनर्थकः प्रकृतिभाव इति **प्रश्नः** ॥

**( उद्द्योतः )** प्रकृतिभावस्य सन्ध्यभावप्रयोजकत्वात्प्रश्नानुपपत्तेराह—**पूर्वत्रेति ॥**

( ६२२७ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ ॥ प्लुतप्रकृतिभाववचनं तु ज्ञापकमेकादेशात् प्लुतो विप्रतिषेधेनेति ॥ ॥

**( भाष्यम् ) यदयं प्लुतः प्रकृत्येति प्रकृतिभावं शास्ति तज्ज्ञापयत्याचार्यः—एकादेशात्प्लुतो भवति विप्रतिषेधेनेति ॥**

**( प्रदीपः ) प्लुतप्रकृतिभाववचनमिति ।** ज्ञापकादस्मात् प्लुतः सिद्ध इति भावः ॥

**( उद्द्योतः )** इदं न साक्षाद्विप्रतिषेधज्ञापकम्, किन्तु प्लुतसिद्धत्वज्ञापनद्वारा, भाष्यान्तरै[2]कवाक्यत्वात्—इत्याह—**ज्ञापकादिति ॥**

( ६२२८ समाधानाक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ ॥ एकादेशात् प्लुतो विप्रतिषेधेनेति चेच्छालेन्द्रेऽतिप्रसङ्गः ॥ ॥

**( भाष्यम् ) एकादेशात्प्लुतो विप्रतिषेधेनेति चेत् शालेन्द्रेऽतिप्रसङ्गो भवति । शाला[3]यामिन्द्र—शालेन्द्र ॥**

**( उद्द्योतः )** भाष्ये—'शालेन्द्र' इति पाठः । अत्र पूर्वं प्लुते प्रकृतिभावादेकादेशो न स्यात् ॥

( ६२२९ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ ॥ न वा बहिरङ्गलक्षणत्वात् ॥ ॥

**( भाष्यम् ) न वाऽतिप्रसङ्गः ।**

**किं कारणम् ?**

**बहिरङ्गलक्षणत्वात् । बहिरङ्गः प्लुतः, अन्तरङ्ग एकादेशः । असिद्धं बहिरङ्गमन्तरङ्गे ॥**

**( प्रदीपः ) न वेति ।** शालेन्द्रे–एकादेशोऽन्तरङ्गः, प्लुतो दूराद्धूताद्यर्थापेक्षत्वाद्बहिरङ्गः । एवं तु सति 'देवदत्त३अत्र न्वसि'इति प्लुतैकादेशयोर्विप्रतिषेधो नोपपद्यते, प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वात् । एकादेशस्य तु पदद्वयाश्रयत्वाद्बहिरङ्गत्वात्—इति **चिन्त्यमेतत् ॥**

**( उद्द्योतः ) बहिरङ्ग इति ।** त्रैपादिकासिद्धत्वमेव नाप्राप्तत्वा[4]दनेन बाध्यते, न बहिरङ्गासिद्धत्वमपीति भावः ॥ **चिन्त्यमेतदिति ।** एवञ्चान्तरङ्गबहिरङ्गयोर्विप्रतिषेधायोगेन विप्रतिषेधोक्तिरयुक्ता, एतद्विषये 'येन नाप्राप्ति–'न्यायेन त्रैपादिकासिद्धत्वाभावो ज्ञाप्यते । अन्तरङ्गत्वाच्चात्र प्लुत इति वक्तुमुचितमिति तात्पर्यम् ।

**परे** तु–प्लुतस्यापि वाक्यत्वसंपादकपदान्तरसापेक्षतयैकादेशसमत्वमेवेति चिन्त्यमेव चिन्त्यमित्या[5]हुः ॥

( भाष्ये ) **असिद्धं बहिरङ्गमिति ।** स्वदृष्ट्या[6]ऽसिद्धस्यापि बहिरङ्गस्यान्तरङ्गं प्रत्यसिद्धत्वव्युत्पादनमनया नानुपपन्नमिति 'अतो रोः–' इत्यत्र निरूपितम् ॥

( ११११ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७६ )

# २५६३ आङोऽनुनासिकश्छन्दसि ॥ ६ । १ । १२६ ॥

( ६२३० उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ ॥ आङोऽनर्थकस्य ॥ ॥

**( भाष्यम् ) आङोनर्थकस्येति वक्तव्यम् । इह मा भूत्—इन्द्रो बाहुभ्यामातरत् ॥**

---

१ ननु अन्तादिवच्चेत्यनेनापि वर्णमात्रवृत्तिधर्मस्यानतिदेशात्कथमेकादेशः प्रगृह्यः? अत आह—प्रगृह्यत्वमिति ॥

२ भाष्यान्तरैकेति । अतो रोरप्लुतादिति सूत्रे आश्रयात्सिद्धत्वमिति भाष्यान्तरात्प्लुतस्य सिद्धत्वमेवानेन ज्ञाप्यत इति भावः ॥

३ प्रायः सर्वेषु पुस्तकेषु 'शालायामिन्द्रः शालेन्द्रः' इति पाठो दृश्यते । अ. पुस्तके 'शालायामिन्द्र–शालेन्द्र' इति पाठः । उद्द्योतकृताऽपि तदेव प्रदर्शितम् ॥

४ अनेन—प्लुतस्य सिद्धत्वज्ञापनेन त्रैपादिकासिद्धत्वमेव निराक्रियते न तु बहिरङ्गपरिभाषाप्राप्तमपीत्यर्थः ॥

५ 'आहुः' इत्यस्याग्रेऽयं पाठो झ. पुस्तके दृश्यते—'ननु कैयटोक्तान्तरङ्गत्वाभावेऽपि एकवाक्यसापेक्षप्लुतापेक्षया भिन्नवाक्यस्थाकारसापेक्षत्वेनैकादेशस्य बहिरङ्गत्वेन विप्रतिषेधानुपपत्तिस्तदवस्थेति चेन्न । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्ग्रन्थकृत्संमतत्वात् । 'अतो रोः–' इति सूत्रस्थाप्लुतस्यान्तरङ्गत्वाभिधायकभाष्यशेखरादिकं तु बहिरङ्गत्वाभावतात्पर्यकमिति दिक्' इति ॥

६ ननु अन्तरङ्गस्य त्रैपादिकत्वे बहिरङ्गपरिभाषा न प्रवर्तते तथा बहिरङ्गस्यासिद्धत्वेऽपि सा परिभाषा न प्रवर्ततेत्याशङ्कावारणायाह—स्वदृष्ट्येति ॥

(प्रदीपः) आङोऽनर्थकस्येति । 'अभ्र आं अपः' इत्यादौ सप्तम्यैव तदर्थस्योक्तत्वात्तदर्थवृत्तिरेवाङनर्थकः, अनर्थान्तरवाचित्वात् । यथा 'अधिपरी अनर्थकौ'इत्युक्तम् । आतरदित्यत्र तु क्रियाविशेषणत्वादर्थवानाङ् ॥

(उद्द्योतः) नन्वर्थबोधनाय शब्दप्रयोगादनर्थकत्वमनुपपन्नमत आह—अभ्रे इत्यादि ॥ क्रियाविशेषणत्वादिति । क्रियागतविशेषद्योतकत्वादित्यर्थः ॥

(उपसंख्यानानर्थक्यबोधकभाष्यम्)

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम् ।

बहुलवचनान्न भविष्यति । आङोऽनुनासिकश्छन्दसि बहुलम् ॥

भाष्ये—बहुलवचनादिति । सर्वविधीनां छन्दसि वैकल्पिकत्वादिति भावः ॥

(१११२ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७७)

## २५६४ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ ६ । १ । १२७ ॥

(चकारप्रत्याख्यानभाष्यम्)

किमर्थश्चकारः ?

प्रकृत्येत्येतदनुकृष्यते ।

किं प्रयोजनम् ?

स्वरसन्धिर्मा भूदिति ॥

नैतदस्ति प्रयोजनम् । ह्रस्ववचनसामर्थ्यान्न भविष्यति ॥

भवेत्—दीर्घाणां ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न स्यात्, ह्रस्वानां तु खलु स्वरसन्धिः प्राप्नोति ।

ह्रस्वानामपि ह्रस्ववचनसामर्थ्यात्स्वरसन्धिर्न भविष्यति ।

न ह्रस्वानां ह्रस्वाः प्राप्नुवन्ति । न हि भुक्तवान् पुनर्भुङ्क्ते, न वा कृतश्मश्रुः पुनः श्मश्रूणि कारयति ।

ननु च पुनः प्रवृत्तिरपि दृष्टा । भुक्तवानपि पुनर्भुङ्क्ते, कृतश्मश्रुरपि पुनः श्मश्रूणि कारयति ।

सामर्थ्यात्तत्र पुनः प्रवृत्तिर्भवति-भोजनविशेषात्, शिल्पिविशेषाद्वा ।

ह्रस्वानां पुनर्ह्रस्ववचने न किंचित् प्रयोजनमस्ति ।

अकृतकारि खल्वपि शास्त्रमग्निवत् । तद्यथा—अग्निर्यददग्धं तद्दहति ॥

ह्रस्वानामपि ह्रस्ववचन एतत् प्रयोजनम्—स्वरसन्धिर्मा भूदिति ।

कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा—पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति ॥

इदं तर्हि प्रयोजनम्—प्लुतप्रगृह्या अनुकृष्यन्ते । इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च प्लुतप्रगृह्याश्च प्रकृत्या ।

नित्यग्रहणस्याप्येतत् प्रयोजनमुक्तम् ।

अन्यतरच्छक्यमवक्तुम् ॥

(प्रदीपः) 'लुटि च क्लृपः' इत्यत्र व्याख्यानादधिकारस्य सिद्धत्वात्सर्वचकाराणां प्रत्याख्यानात्, अधिकाराभिव्यक्तये क्रियमाणेष्वपि वा चकारेषु ह्रस्वविधानसामर्थ्यात् स्वरसंध्यभावस्य सिद्धत्वादनर्थकश्चकार इति मत्वाऽऽह—किमर्थ इति ॥

भवेदिति । दीर्घा ह्रस्वाश्चेकः सन्ति—कुमारी अत्र, दधि अत्रेति । ह्रस्वश्च दीर्घाणामारभ्यते न ह्रस्वानाम्, स्वत एव ह्रस्वरूपत्वात् ॥

न हि भुक्तवानिति । भुजेस्तृप्तिफलत्वात् फलाभावात्पुनर्भुजेरप्रवृत्तिः ।

अनैकान्तिकमेतदित्याह—ननु चेति ॥

सामर्थ्यादिति । फलविशेषसद्भावादित्यर्थः । प्रीत्यतिशयो भोजनविशेषस्य फलम् । इह तु फलाभावात्प्रवृत्तिर्नास्तीत्यर्थः ॥

स्वरसन्धिर्मा भूदिति । यणादेशबाधनार्थं ह्रस्वस्य ह्रस्वविधानं स्वरूपप्रत्यापत्त्यर्थमित्यर्थः । अग्निर्दग्धं न दहति, अयोग्यत्वात्—इति नासौ दृष्टान्त उपादेयः ॥ इहापि न दुर्लभो दृष्टान्त इत्याह—कृतकारीति ॥

(उद्द्योतः) ननु 'लुटि च क्लृपः' इत्यत्र सर्वचकाराणां प्रत्याख्यानात्पुनः प्रश्नोऽयुक्तोऽत आह—लुटि चेत्यादि ॥ अधिकाराभिव्यक्तये इति । स्फुटप्रतिपत्तये क्रियमाणेष्वपि अत्र व्यर्थः, फलाभावादिति भावः ॥

स्वत एवेति । अप्राप्ते हि विधिरर्थवान्, न तु प्राप्ते इति भावः ॥

नन्वभ्यासदार्ढ्याय सकृत्पठितोऽप्यनुवाकः पुनः पठ्यते—इत्याशङ्क्य यत्र सकृत्प्रवृत्त्या फलसंपत्तिस्तत्र पुनः प्रवृत्तिर्नेत्याह—भुजेरिति ॥

---

१ तदर्थस्य—अधिकरणार्थस्य ॥

२ 'न च कृत—' इति च. छ. पाठः ॥

३ इकः सन्तीति । इकोऽसवर्णे इत्येतच्छास्त्रप्रवृत्तियोग्या इति शेषः ॥

४ 'पुनर्भोजनाप्रवृत्तिः' इति च. पाठः ॥

५ 'इहापि पुनर्न दुर्लभो' इति च. झ. पाठः ॥

भाष्ये—सामर्थ्यादित्यस्य समीचीनोऽर्थः प्रयोजनं यस्य तद्भावादित्यर्थः, तदाह—फलविशेषेति ॥

ह्रस्वविधानेन स्वरसन्ध्यभावमुपपादयति—ह्रस्वस्य ह्रस्वेति ॥ अग्निदृष्टान्तो वैधर्म्यान्न युक्त इत्याह—अग्निर्दग्धमिति । न च ह्रस्वस्य वैकल्पिकतया ह्रस्वाभावे प्रकृतिभावार्थं चकारः । तेन 'चक्री अत्र'इत्यादिसिद्धिः । प्रकृतिभावस्यापि वैकल्पिकत्वात्पक्षे 'चक्र्यत्र' इत्यपीति वाच्यम् । 'चक्री अत्र' इत्यस्य संहिताया अविवक्षायां सिद्धेः । न चोत्तरसूत्रस्य समासेऽपि प्रवृत्त्या तद्विषये 'विश्वपा ऋषीणाम्' इत्यर्थं चकारः । भाष्यविरुद्धसूत्राशयकल्पनापेक्षया सामर्थ्यसिद्धानुवादकश्चकार इत्येव सूत्राशयस्य वक्तुमुचितत्वात् ॥

भाष्ये—प्लुतप्रगृह्याश्च प्रकृत्येति । प्रकृत्यैवेत्यर्थः । व्याकरणस्वश्वयोः 'कुगति–' इति नित्यसमासः । विग्रहाभावः—अस्वपदविग्रहत्वं च नित्यसमासत्वे हेतुः । अस्वपदविग्रहोदाहरणम्—कुमार्यै इदं–कुमार्यार्थमिति ॥

( ६२३१ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ **सिन्नित्यसमासयोः शाकलप्रतिषेधः** ॥ * ॥

( भाष्यम् ) **सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः । अयं ते योनिर्ऋत्वियः, प्रजां विदाम ऋत्वियाम्, वैयाकरणः, सौवश्वः ॥**

( प्रदीपः ) **सिन्नित्यसमासयोरिति** । नित्याधिकारविहितः समासो नित्यसमासः । यो वा विग्रहाभावादस्वपदविग्रहत्वान्नित्यः समासः सोऽपि नित्यसमासः ॥ **वैयाकरणः सौवश्व इति** । [1]प्रदेशान्तरपाठाश्रयेणैवं पठितम् । 'व्याकरणं-स्वश्वः' इत्येतावदप्यत्रोदाहरणं संभवति ॥

( वार्तिकस्थनित्यग्रहणप्रत्याख्यानभाष्यम् )

**नित्यग्रहणेन नार्थः । सित्समासयोः शाकलं न भवतीत्येव । इदमपि सिद्धं भवति—वाप्यामश्वो वाप्यश्वः, नद्यामातिर्नद्यातिः ॥**

( प्रदीपः ) **वाप्यश्व इति** । सुप्सुपेति समासः । 'संज्ञायाम्'इति तु समासस्य नित्यत्वात् सिद्धः प्रतिषेधः ॥

( उद्द्योतः ) **नित्यत्वादिति** । [2]समासार्थान्यूनाधिकार्थविग्रहाभावेनास्य नित्यसमासत्वव्यवहारादिति भावः ॥

( ६२३२ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ **ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रम्**[3] ॥ * ॥

( भाष्यम् ) **ईषा अक्षादिषु च छन्दसि प्रकृतिभावमात्रं द्रष्टव्यम् । ईषा अक्षः, [4]का ईमिरे पिशङ्गिला, यथा अङ्गदः ॥**

( १११३ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७८ )

## २५६५ ऋत्यकः ॥ ६ । १ । १२८ ॥

( वार्तिकावतरणभाष्यम् )

**किमर्थमिदमुच्यते ?**

( ६२३३ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ **ऋत्यकः सवर्णार्थः** ॥ * ॥

( भाष्यम् ) **सवर्णार्थोऽयमारम्भः । होतृ ऋश्यः ॥**

( ६२३४ सूत्रप्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ **अनिगन्तार्थं च** ॥ * ॥

( भाष्यम् ) **खट्व ऋश्यः । माल ऋश्यः ॥**

( ६२३५ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ **ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन** ॥ * ॥

( भाष्यम् ) **ऋति ह्रस्वो भवतीत्येतस्मादुपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन ।**

**ऋति ह्रस्वो भवतीत्येतस्यावकाशः—खट्व ऋश्यः, माल ऋश्यः ।**

**उपसर्गाद्वृद्धेरवकाशः—विभाषा ह्रस्वत्वम्, यदा न ह्रस्वत्वं सोऽवकाशः ।**

**ह्रस्वप्रसङ्ग उभयं प्राप्नोति—प्रार्च्छति, उपार्च्छति । उपसर्गाद्वृद्धिर्भवति विप्रतिषेधेन ॥**

( विप्रतिषेधानर्थक्यबोधकभाष्यम् )

**स तर्हि विप्रतिषेधो वक्तव्यः ?**

**न वक्तव्यः ।**

**उक्तं तत्र धातुग्रहणस्य प्रयोजनम्—उपसर्गादृति धातौ वृद्धिरेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ॥**

( १११४ विधिसूत्रम् ॥ ६ । १ । ५ आ. ७९ )

## २५६६ अप्लुतवदुपस्थिते ॥ ६ । १ । १२९ ॥

( उपस्थितपदार्थबोधकभाष्यम् )

**'उपस्थिते' इत्युच्यते, किमिदमुपस्थितं नाम ? अनार्ष इतिकरणः । सुश्लोका ३ इति, सुश्लोकेति ॥**

---

१ वैयाकरणः–सौवश्व इत्यत्र तद्धितान्तपर्यन्तानुधावनं न विशेषफलजनकमित्याह—प्रदेशान्तरेति ॥

२ समासार्थेति । समासार्थापेक्षयाऽन्यूनाधिकोऽर्थो यस्य–एतादृशस्य विग्रहस्याभावेनास्य नित्यसमासत्वमित्यर्थः । झ. पुस्तके 'समासार्थान्यूनाधिक' इत्यादिः पाठो दृश्यते, स चाशुद्धः । न्यूनाधिकार्थविग्रहाभावकथनेनान्यूनाधिकार्थविग्रहसत्ताऽनुरुध्येत । तदा च तस्य नित्यसमासत्वं न स्यादिति भावः ॥

३ प्रकृतिभावमात्रम्—न तु ह्रस्व इति भावः ॥

४ 'का ईमरे पिशङ्गिला' इति छ. पाठः ॥

(प्रदीपः) अनार्ष इति। पदस्येयत्तापरिज्ञानाय स्वरूपेऽवस्थापनार्थं य इतिः प्रयुज्यत इत्यर्थः ॥

(उद्द्योतः) ऋषिः=वेदः, तत्र भव आर्षः। यथा–इला इति मे मन इति। ततोऽन्यः–अनार्षः। स कुत्रेत्यत आह—पदस्येति। 'प्रयुज्यते' इत्यस्य 'पदकारैः' 'सोऽपि'[1] इति शेषः ॥

(पदकृत्यभाष्यम्)

**अथ वद्वचनं किमर्थम्?**

(प्रदीपः) अथेति। प्लुतस्य श्रवणेन न भाव्यमिति प्लुत एव निषिध्यताम्, किमतिदेशार्थेन वद्वचनेन–इति भावः ॥

(उद्द्योतः) ननु प्लुताप्रतिषेधाय वतिरिति प्रश्नोऽनुपपन्नोऽत आह—प्लुतस्येति। स्वरसन्धेरवश्यम्भावादिति भावः ॥

(६२३६ वद्वचनप्रयोजनवार्तिकम् ॥ १ ॥)

**॥*॥ वद्वचनं प्लुतकार्यप्रतिषेधार्थम् ॥*॥**

**(भाष्यम्) वद्वचनं क्रियते प्लुतकार्यप्रतिषेधार्थम्। प्लुतकार्यं प्रतिषिध्यते, त्रिमात्रता न प्रतिषिध्यते।**

**किं चेदानीं त्रिमात्रतताया अप्रतिषेधे प्रयोजनम्, यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम्?**

(६२३७ त्रिमात्रताया अप्रतिषेधे फलबोधकवार्तिकम् ॥२॥)

**॥ * ॥ प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात् ॥ * ॥**

**(भाष्यम्) प्लुतप्रतिषेधे हि सति प्रगृह्यस्यापि प्लुतस्य त्रिमात्रतायाः प्रतिषेधः प्रसज्येत। अग्नी३-इति। वायू३इति।**

**किं चेदानीं तस्या अपि त्रिमात्रताया अप्रतिषेधे प्रयोजनम्?**

**यावता प्लुतकार्ये प्रतिषिद्धे स्वरसन्धिना भवितव्यम्।**

**न भवितव्यम्।**

**किं कारणम्?**

**अन्येन विहितत्वात्। अन्येन हि लक्षणेन प्लुतप्रगृह्यस्य प्रकृतिभाव उच्यते। प्रगृह्यः प्रकृत्येति ॥**

(प्रदीपः) अग्नी३ इति। अत्र प्लुताश्रयोऽपि प्रकृतिभावः प्राप्नोति, प्रगृह्याश्रयोऽपि। तत्र प्लुताश्रये प्रतिषिद्धेऽपि प्रगृह्याश्रयप्रकृतिभावभावात्[2] प्लुतस्य श्रवणं सिध्यति। प्लुतस्य तु निषेधे क्रियमाणे श्रवणं न स्यात् ॥

(उद्द्योतः) 'अन्येन विहितत्वात्'इति वार्तिकांशमवतारयति भाष्ये—किंचेदानीं तस्या अपीति। प्रगृह्यसंज्ञकप्लुतनिष्ठाया इत्यर्थः ॥

'अन्येन विहितत्वात्'इति हेतुं व्याचष्टे—तत्रेति ॥

(१११५ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८०)

## २५६७ ई३चाक्रवर्मणस्य ॥ ६।१।१३०॥

(प्रदीपः) ई३ इति त्रिमात्रस्य निर्देशः ॥

(वार्तिकावतरणभाष्यम्)

**किमर्थमिदमुच्यते?**

(प्रदीपः) किमर्थमिति[3]। किमुपस्थितग्रहणानुवृत्त्या प्राप्तविभाषेयम्, अथ तन्निवृत्त्या पूर्वविप्रतिषेधादप्राप्तविभाषा, अथ परविप्रतिषेधादुभयतो विभाषेति प्रश्नः ॥

(उद्द्योतः) प्रयोजनविषयसन्देहोपपत्तिं दर्शयति—किमिति। अन्ये[4] तु 'उपस्थिते' इत्यनुवृत्तिमभिप्रेत्यारम्भसामर्थ्यादेव विकल्पे सिद्धे चाक्रवर्मणस्येति किमर्थमिति प्रश्नः। उत्तरार्थस्तु स्पष्ट इत्याहुः॥

(६२३८ प्रयोजनवार्तिकम् ॥ १ ॥)

**॥ * ॥ ई३ चाक्रवर्मणस्येत्यनुपस्थितार्थम् ॥ * ॥**

**(भाष्यम्) अनुपस्थितार्थोऽयमारम्भः। चिनु ही३ इदम्-चिनु हीदम्, सुनु ही३ इदम्-सुनु हीदम् ॥**

(प्रदीपः) अनुपस्थितार्थमिति। उभयत्र विभाषेयम्, परविप्रतिषेधस्य न्याय्यत्वात् ॥

(उद्द्योतः) उभयत्र विभाषेयमिति। नन्विदमीकार[5]प्रत्याख्यानपरभाष्येण विरुद्धम्, तत्प्रत्याख्याने हि 'सुश्लोकेति' इत्यादाविव 'चिनु हीति'इत्यादावपि नित्याप्लुतवद्भाव एवेष्टः। तेन वैकल्पिकबोधिताभावस्य येन नाप्राप्तिन्यायेन बाधौचित्यादिति चेत्, चिन्त्यमेवैतत् ॥

(ईकारप्रत्याख्यानभाष्यम्)

**ईकारग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्याचार्यस्याप्लुतवद्भवतीत्येव।**

---

१ ननु पदकारैः प्रयुज्यते तस्यैव ग्रहणें 'गामित्ययमाह' इत्यादेर्लौकिकस्येतिशब्दस्य ग्रहणं न स्यादत आह—सोऽपीति ॥

२ 'प्रकृतिभावात्' इति च. झ. पाठः ॥

३ किमर्थमितीति। अप्लुतवदिति सूत्राद्यदि अप्लुतपदमत्रानुवर्तेत तदाऽस्य सूत्रस्य पूर्वसूत्रविषयनियतत्वेन तद्विभाषेयमिति–प्राप्तविभाषा। यदि तत्रानुवर्तेत पूर्वविप्रतिषेधश्चाश्रीयेत तदा प्लुतप्रगृह्या अचि नित्यमित्यनेन विहितस्य प्लुतस्य स्थानेऽप्लुतवद्भावस्येयं विभाषेति अप्राप्तविभाषा। पूर्वविप्रतिषेधाश्रयणे प्रमाणाभावात् न्याय्यत्वाच्च परविप्रतिषेधस्य तत्पक्षे उभयविभाषामाह ॥

४ ननु सूत्रप्रयोजनं पृच्छतो भाष्यकारस्य प्राप्तविभाषाऽप्राप्तविभाषेयमित्यादिराशयो न, अतस्तमाशयमाह—अन्ये त्विति ॥

५ ननु अस्मिन् सूत्रे ईकारग्रहणस्य प्रत्याख्याने उपस्थितपदानुवर्तने चास्य सामान्यविषयत्वं पूर्वसूत्रस्य च विशेषविषयत्वमिति उभयत्रविभाषेति प्रदीपोक्तमयुक्तमत आह—नन्विदमित्यादि। ईग्रहणप्रत्याख्याने चाक्रवर्मणस्य मते प्लुतोऽप्लुतवदित्येवार्थः। तथा च 'सुश्लोकेति' इत्यत्रानेन विकल्पे प्राप्तेऽपि तं बाधित्वा नित्य एवाप्लुतवद्भावः। तेन—अप्लुतवदुपस्थित इत्यनेन। वैकल्पिकबोधिताभावस्य—विकल्पेन बोधितो योऽभावः–अप्लुतवद्भावाभावस्तस्य–ई३चाक्रवर्मणस्येत्यस्येत्यर्थः ॥

इदमपि सिद्धं भवति-वशा ३ इयम्, वशेयम् ॥

( १११६ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८१ )

## २५६८ दिव उत् ॥ ६ । १ । १३१ ॥

( उकारादेशाधिकरणम् )

( तपरप्रयोजनभाष्यम् )

[1]किमर्थस्तकारः ?

'तपरस्तत्कालस्य' (१।१।७०) इति तत्कालो यथा स्यात् ॥

नैतदस्ति प्रयोजनम् ।

आन्तर्यतोऽर्द्धमात्रिकस्य व्यञ्जनस्य स्थाने [2]मात्रिक उकारः सिद्ध्यति ।

न सिद्ध्यति । ऊठि कृते आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति ॥

श्लोकभाष्यम्—

**तदर्थं तपरः कृतः ।**

एवमर्थं तपरः क्रियते ॥

( प्रदीपः ) **ऊठि कृत इति** । द्यु[3]भ्यामित्यादौ परत्वादूठि कृते पुनः प्रसङ्गविज्ञानादुत्वं क्रियते, ऊड्विधौ तु क्ङितीति नानुवर्त्तत इति पक्षमाश्रित्येदमुक्तम् । ननु भाव्यमानत्वादुकारो भिन्नकालं न ग्रहीष्यतीति नार्थस्तकारेण । एवं तर्हि तपरत्वमेव ज्ञापकम्-भाव्यमानोऽप्युकारो भिन्नकालं सवर्णं गृह्णातीति । तेनामू[4]भ्यामित्यादौ दीर्घस्य दीर्घो भवति ॥

( उद्द्योतः ) **परत्वादिति** । उत्वं तु 'विमलघु'इत्यादौ सावकाशम् । तत्र सोर्लुका लुप्तत्वेनो[5]ठः प्राप्त्यभावात् ॥ **भाव्यमानोऽपीति** । तेन 'अदसोऽसेर्दादुदोमः' इत्यत्र दीर्घविधानसिद्धिः । तदाह—**तेनेति** । यत्तु तत्र समाहारद्वन्द्वनिर्देशेनैव सिद्धे ज्ञापनस्य फलाभाव इति, तन्न । समाहारद्वन्द्वे प्रातिपदिकत्वेऽन्तर्वर्तिसुपोर्लुकि ह्रस्वदीर्घयोः [6]प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन नित्यत्वाद्ध्रस्वे, वर्णद्वयाश्रयदीर्घापेक्षयाऽन्तरङ्गत्वाद्वा ह्रस्वे कृते पश्चाद्दीर्घे 'उ'इति रूपासिद्धेः । अत एव 'ऊकाल' इति सूत्रे 'उकालः' इति नाकारीत्याशयात् ॥

( १११७ अधिकारसूत्रम् ॥ ६ । १ । ५ आ. ८२ )

## २५७२ सुट् कात्पूर्वः ॥ ६ । १ । १३५ ॥

( सुटोऽधिकरणम् )

( कात्पूर्वप्रयोजनभाष्यम् )

कात्पूर्वग्रहणं किमर्थम् ?

कात्पूर्वो यथा स्यात्-संस्कर्ता, संस्कर्तुम् ।

नैतदस्ति प्रयोजनम् ।

सुडिति आदिलिङ्गोऽयं क्रियते, करोतिश्च ककारादिः, तत्रान्तरेण कात्पूर्वग्रहणं कात्पूर्व एव भविष्यति ।

अत उत्तरं[7] पठति—[8]सुटि कात्पूर्वग्रहणमकका-रादौ कात्पूर्वार्थम् ।

सुटि कात्पूर्ववचनं क्रियते, अककारादौ करोतौ कात्पूर्वो यथा स्यात् । संचस्करतुः, संचस्करुः ॥

( प्रदीपः ) वक्ष्यमाणैः सूत्रैः ककारादेरेव धातोः सुड्विधीयत इति पृच्छति—**कात्पूर्वग्रहणमिति** । **अथवा** 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यडभ्यासाभ्यां पूर्वमेव सुट् भविष्यति, स च टित्त्वात्पूर्व इति **प्रश्नः** । **अथवा** वक्ष्यमाणानेकप्रयोजनसंभवे तद्विशेषज्ञानाय **प्रश्नः** ॥

**आदिलिङ्ग इति** । आदिलिङ्गमस्यास्तीत्यकारो मत्वर्थीयः ॥

**सुटि कात्पूर्ववचनमिति** । अडभ्यासयोरन्तरङ्गत्वं मन्यते ॥

( उद्द्योतः ) सुटो देशविशेषप्रतिपत्तये कात्पूर्वग्रहणस्यावश्यकत्वेन प्रश्नानुपपत्तेराह—**वक्ष्यमाणैरिति** । अस्याधिकारतया वक्ष्यमाणसूत्रैकवाक्यत्वात्तत्र च करोतिकिरत्योः कार्योरेव निर्देशादिति भावः ॥ नन्वडभ्यासविषये मध्यप्रवेशार्थं तदावश्यकमत आह—**अथ वेति** ॥

**वक्ष्यमाणानेकेति** । अ[10]डभ्यासवति सुण्निवृत्त्यर्थं वा, तत्रापि प्रवृत्त्यर्थं वा-इत्यनेकेत्यर्थः ॥

ननु लिङ्गशब्दस्य नपुंसकत्वात्पुंस्त्वानुपपत्तिः, सामानाधिकरण्यानुपपत्तिश्चेत्यत आह-**आदिलिङ्गमिति** । आदित्वप्रयोजकं लिङ्गमित्यर्थः ।

ननु परत्वात्-धातूपसर्गकार्यस्यान्तरङ्गत्वाच्च सुटि द्विर्वचनादौ सिद्धिं मत्वाऽऽह—**अडभ्यासयोरिति** । अड्ग्रहणं व्यर्थम्, अग्रे 'संचस्करतुः'इत्यस्यैवोदाहरणात् । **किञ्च** विकरणविशिष्टस्याङ्गस्याटि व्यवधानात्सुट्प्राप्तिरेव न, द्वित्वस्य तु 'स्थाने द्विर्वचनत्व'पक्षे तत्र

---

१ 'तपरकरणं किमर्थम्' इति क. पाठः ॥

२ 'मात्रिक उकारो भविष्यति' इति च. क. पाठः ॥

३ पूर्वमूठः प्राप्तिविषयमाह—द्युभ्यामित्यादाविति ॥

४ परिभाषाज्ञापनस्यान्यत्रफलमाह—तेनामूभ्यामिति ॥

५ ऊठ इति । छ्वोः शूडितिसूत्रे क्ङितीत्यनुवर्तनाभावे झलादौप्रत्यये परतो विधीयमानस्योठो विमलद्यु इत्यत्र लुकालुप्तत्वेन प्रत्ययलक्षणाभावादप्राप्तिरिति भावः ॥

६ प्राप्तयोरिति । उऊ इत्यवस्थायां ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वः प्राप्तः, अकः सवर्णे दीर्घ इति दीर्घश्च प्राप्तः । यदि पूर्वं ह्रस्वः स्यात्तद् दीर्घस्य शब्दान्तरप्राप्तिः । ह्रस्वस्तु दीर्घोकारस्यैवेति नित्य एवेति भावः ॥

७ ह्रस्वस्य पूर्वप्राप्तिविषये निर्देशप्रमाणमप्याह—अत एवेति ॥

८ सुटि कादिति । एतद्वार्तिकमिति कैश्चिद्व्याख्यातम् । नैतद्वार्तिकमिति भाष्यवार्तिककारशैलीतो ज्ञायते । यद्येतद्वार्तिकं स्यात्तदोत्तरवार्तिके पुनरप्यस्यांशस्यानुवादो विफलः स्यात् । अतो नैतद्वार्तिकमिति प्रतीयते ॥

९ 'कात्पूर्ववचनमक' इति च. छ. झ. पाठः ॥

१० प्रयोजनानेकत्वं कथयति—अडभ्यासवतीति ॥

कृते प्राप्तिरिति बोध्यम् । 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे इदम् । 'मन्यते' इत्यनेनास्यासिद्धान्तत्वं दर्शयति ॥

( ६२३९ कात्पूर्वप्रयोजनाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरे[1]णापि तत्सिद्धम् ॥ * ॥**

( भाष्यम् ) **सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि कात्पूर्वग्रहणं सिद्धम् ।**

**कथम् ?**

**द्विर्वच[2]नात्सुड्विप्रतिषेधेन । द्विर्वचनं क्रियतां सुडिति, सुड् भविष्यति विप्रतिषेधेन ।**

**तत्र द्विर्वचनं भवतीत्यस्यावकाशः—बिभिदतुः, बिभिदुः ।**

**सुटोऽवकाशः—संस्कर्ता, संस्कर्तुम् ।**

**इहोभयं प्राप्नोति-संचस्करतुः, संचस्करुरिति । सुट् भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **द्विर्वचनात्सुडिति** । अन्तरङ्गबहिरङ्गभावमनपेक्ष्य विप्रतिषेध उच्यते । तत्र सुटि कृते पुनः प्रसङ्गविज्ञानात् 'स्कृ'शब्दस्य द्विर्वचने 'शर्पूर्वाः खयः' इति खयः शेषे सिद्धं रूपम् ॥

( उद्द्योतः ) नन्वन्तरङ्गबहिरङ्गयोः कथं विप्रतिषेधोऽत आह—**अन्तरङ्गेति** ॥

( ६२४० एकदेशिनो विप्रतिषेधस्वीकारे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ द्विर्वचनात्सुड्विप्रतिषेधेनेति चेत् द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्गः ॥ * ॥**

( भाष्यम् ) **द्विर्वचनात्सुड्विप्रतिषेधेनेति चेद्द्विर्भूते शब्दान्तरस्याकृतः सुडिति पुनः सुट् स्यात् ॥**

( प्रदीपः ) **शब्दान्तरस्येति** । स्थाने द्विर्वचने शब्दान्तरत्वम् । व्यक्तौ पदार्थे चै[3]क्रकदोषानवतारः, 'सकृद्[4]गतौ विप्रतिषेधे–' इति सुटि कृते द्विर्वचनाप्रसङ्गात् । तस्मादाकृ[5]तिपक्षे पुनःप्रसङ्गविज्ञानात्सुटि कृते द्विर्वचनमिति व्यक्त्यन्तरेऽपि जातिसद्भावात्तद्द्वारेण पुनः कार्यप्रवृत्त्या चक्रकदोषापत्तिः । सकृत्प्रवृत्त्यैव लक्षणस्य चरितार्थत्वमाश्रित्य परिहारः । चक्रमिव विपरिवर्तनात्–चक्रकम् । इवार्थे 'संज्ञायाम्' इति कन्प्रत्ययः । पुनर्द्विर्वचनप्रसङ्गश्च 'अनभ्यासस्य'इत्यस्य प्रत्याख्यानादुच्यते । **अथवा**–साभ्यासाद्यः प्रत्ययो विधीयते तत्रानभ्यासस्येति प्रतिषेधः ॥

( उद्द्योतः ) द्विःप्रयोगपक्षे शब्दान्तरत्वाभावादाह—**स्थाने इति** । **व्यक्ताविति–आकृती**ति च सकृद्गत्यादिपक्षबीजोपलक्षणम् ॥ ननु 'न प्रयोजनानुवर्ति प्रमाणम्'इति 'न ह्यव्यवस्थाकारिणा'इत्यादिना कथं चक्रकदोषपरिहारोऽत आह—**सकृत्प्रवृत्त्यैवेति** । विकारकृतशब्दान्तरत्वेन लक्ष्यभेदो नाश्रीयत इति भावः ॥ **अथवा साभ्यासादिति** । 'अनभ्यासस्य' इति 'लिटि'इत्यादिनिमि[6]त्तविशेषणम्, अनभ्याससंबन्धिनि लिटीत्यादि क्रमेणार्थः । संबन्धश्च विहितत्वमेवेति भावः ॥

( ६२४१ शब्दान्तरत्वे दोषवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्ग इति चेत् द्विर्वचन[7]म् ॥ * ॥**

( भाष्यम् ) **सुटि कृते शब्दान्तरस्याकृ[8]तं द्विर्वचनमिति पुनर्द्विर्वचनं प्राप्नोति ॥**

(६२४२ विप्रतिषेधस्वीकारेऽनवस्थाख्यापकवार्तिकम् ॥४॥)

**॥ * ॥ तथा चानवस्था ॥ * ॥**

( भाष्यम् ) **पुनः सुट् पुनर्द्विर्वचनमिति चक्रकमव्यवस्था प्रसज्येत ॥**

( चक्रकदोषनिवारकभाष्यम् )

**नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो हि नाम व्यवस्था । तत्र सुटि कृते द्विर्वचनम्, द्विर्वचनेनाव[9]स्थानं भविष्यति ॥**

---

१ 'अन्तरेणापि वचनं तत्सिद्धं' इति क. पाठः ॥

२ द्विर्वचनादिति । एतदपि वार्तिकमेवेति व्याख्यातं कैश्चित् । तदपि उत्तरवार्तिके पुनरनुवादसामर्थ्यान्नोचितम् ॥

३ चक्रकेति । तथा चानवस्थेति वार्तिकेन वक्ष्यमाणा चक्रदोषापत्तिर्व्यक्तिपक्षे न स्यादिति भावः ॥

४ चक्रकदोषाभावे हेतुमाह—सकृद्गताविति । व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोश्चारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः । अतो व्यक्तिपक्षे सकृद्गतिन्यायात् 'तथा चानवस्था' इति चक्रकदोषानापत्तिः ॥

५ आकृतिपक्ष इति । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिः । एवञ्चाकृतिपक्षे विप्रतिषेधात्पूर्वं सुटि कृतेऽस्मिन् पक्षे पुनः प्रसङ्गस्य सत्वेन द्विर्वचनप्राप्तिः । द्विर्वचनविशिष्टस्य च पुनः सुट्, पुनर्द्वित्वमिति चक्रकापत्तिः ॥

६ निमित्तविशेषणमिति । अनभ्यासस्येति न धातोर्विशेषणम्, अपि तु लिटीत्येतन्निमित्तविशेषणम् । तथा चानभ्यासे लिटीत्येवान्वयः । षष्ठ्यर्थसम्बन्धश्च विहितत्वरूपः तेनानभ्यासाद्विहिते लिटीत्याद्यर्थः सम्पद्यते । अभ्यासाद्विहितश्च लिट् यत्र साभ्यासात्प्रत्ययो विधीयेत तत्र प्रत्ययान्ताल्लिटि सम्भवतीति तस्य प्रतिषेधः स्यात्, न तु पुनः प्राप्तस्य द्वित्वस्येति चक्रकापत्तिदोषसम्भवः ॥

७ द्विर्वचनमिति । पूर्ववार्तिकेन सुटः पुनः प्रसङ्ग उच्यतेऽनेन च द्विर्वचनस्य पुनः प्रसङ्ग इति तयोर्भेदः ॥

८ 'स्याकृतमिति' इति क. छ. पाठः । मध्ये 'द्विर्वचनं' इति शब्दो न दृश्यते ॥

९ अवस्थानमिति । लक्ष्ये लक्षणन्यायमाश्रित्य भगवताऽवस्थानमुच्यते । एवं च लक्ष्ये लक्षणन्यायलक्षणे विकारागमातिरिक्तत्वं देयमिति सूचयति ॥

( ६२४३ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अ[1]ड्व्यवाय उपसंख्यानम् ॥ * ॥

( भाष्यम् ) अड्व्यवाये उपसंख्यानं कर्तव्यम् । समस्करोत्, समस्कार्षीत् ॥

(प्रदीपः) अड्व्यवाय इति । 'अडभ्यासव्यवायेऽपि' इति सूत्रस्यापाठे वार्तिकप्रवृत्तिः । परत्वाद्विकरणान्तस्याङ्गस्याडागमे कृते तेन व्यवधानात्स[2]मोऽनन्तरः करोतिर्न भवतीति वचनम् ॥

( उद्द्योतः ) एवञ्च 'कात्पूर्वग्रहणमभ्यासविषये देशविशेषप्रतिपत्त्यर्थम्' इत्युक्ते, तत्र–अड्विषये च ताभ्यां व्यवायात्सुट एवाप्राप्तिरिति वाक्यकारो वार्तिकमारभते—अड्व्यवाय इत्यादिना । सुट उपसङ्ख्यानमित्यर्थः ॥ सूत्रस्यापाठे इति । एवञ्च 'अडभ्यासव्यवायेऽपि' इत्यनार्षः सूत्रपाठ इति भावः ॥ ननु पूर्वं सुटि ततोऽटि सिध्यति, किञ्च 'यदागमाः–' इति न्यायात्स्वाङ्गस्याव्यवधायकत्वान्न दोषः, अत आह—परत्वादिति । नि[3]त्यत्वाद्विकरणे तदन्ताङ्गस्यावयवोऽडिति धातोर्व्यवधायक इति भावः ॥

( ६२४४ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अभ्यासव्यवाये च ॥ * ॥

( भाष्यम् ) अभ्यासव्यवाये चोपसंख्यानं कर्तव्यम् । संचस्करतुः, संचस्करुः ॥

( प्रदीपः ) अभ्यासव्यवाये चेति । न-[4]अप्राप्तः सुडुपसंख्यायते, अपि तु प्राप्त एव वचनेन देशविशेषेऽवस्थाप्यते ॥

( उद्द्योतः ) नन्वभ्यासस्य व्यवधायकत्वं प्रसिद्धमिति किं वचनेन ? इत्यत आह—नाप्राप्त इति । अन्तरङ्गत्वात्पूर्वं द्वित्वेऽभ्यासात्पूर्वः सुट् प्राप्त उपसङ्ख्यानेन परस्तान्नीयत इत्यर्थः । परे तु–उत्तरखण्डस्यैवार्थवत्वाद्धातुत्वम्, अतोऽत्रापि व्यवधानादप्राप्तस्यैवोपसङ्ख्यानमित्याहुः । एवञ्चैतदर्थं कात्पूर्वग्रहणं न कर्तव्यमिति तात्पर्यम् ॥

( उपसंख्यानाक्षेपभाष्यम् )

किमुच्यते अभ्यासव्यवाय इति, यदिदानीमेवोक्तम्—द्विर्वचनात्सुड्विप्रतिषेधेनेति ॥

( ६२४५ विप्रतिषेधाक्षेपवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् सुटः ॥ * ॥

( भाष्यम् ) अविप्रतिषेधो वा पुनः सुटः । किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणः सुट्, अन्तरङ्गं द्विर्वचनम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥

( प्रदीपः ) अविप्रतिषेध इति । पदद्वयाश्रयत्वात्सुट् बहिरङ्गः, एकपदाश्रयत्वात्तु द्विर्वचनमन्तरङ्गमिति तुल्यबलत्वाभावाद्विप्रतिषेधाभावः ॥

( कात्पूर्वप्रयोजनभाष्यम् )

एवमर्थमेव तर्हि कात्पूर्वग्रहणं कर्तव्यम्–कात्पूर्वो यथा स्यात् ॥

( प्रदीपः ) एवमर्थमिति । अन्तरङ्गत्वाद्द्विर्वचने कृते परत्वादन्तरङ्गत्वाद्वाऽडागमे मध्यानुप्रवेशार्थं सुटः कात्पूर्वग्रहणम्, कालावधारणार्थं वा । क[5]रोतेः कादित्वावस्थायामेव सुट् भवति । कृते सुटि अड्द्विर्वचने भवतः ॥

( उद्द्योतः ) इदानीं भाष्यकारो वच[6]नारम्भेण सूत्रप्रत्याख्यानमयुक्तं मन्यमान आह—एवमर्थमेवेति ॥ तत्राड्व्यवाये यथा सूत्रेण सिद्ध्यति तदाह—परत्वादन्तरङ्गत्वाद्वेति । सुटो विकरणाच्च पूर्वमडागम इत्यर्थः । वस्तुत इदं भाष्यं 'स्थाने द्विर्वचनं, देशप्रक्लृप्त्यर्थं कात्पूर्वग्रहणम्' इति पक्षेऽभ्यासविषयमेव । अड्विषये त्वटि कृते सुटोऽप्राप्त्या तद्विषयता वक्तुमयोग्येति बोध्यम् । अग्रिमग्रन्थस्य तदभिप्रायेणैव प्रवृत्तेश्चेत्याहुः ॥ ननु कात्पूर्वग्रहणेन मध्यानुप्रवेशोऽयुक्तः, टित्त्व-कात्पूर्वग्रहणाभ्यां विरुद्धदेशसमर्पणेन परस्परव्याघातात्; अत आह—कालावधारणार्थं वेति । कात्पूर्वग्रहणेन सुट्प्रवृत्तेः कालो लक्ष्यते । यदा करोतिः कादिस्तदा सुडित्यर्थः । एवञ्चाड्द्विर्वचनाभ्यां पूर्वमेव सुडिति न व्यवधानमिति वार्तिकद्वयं प्रत्याख्यातम् ॥

( कात्पूर्वग्रहणेऽप्याक्षेपभाष्यम् )

क्रियमाणे[7]ऽपि वै कात्पूर्वग्रहणेऽत्र न सि[8]ध्यति ।

किं कारणम् ?

न ह्ययं कात्पूर्वग्रहणेन शक्यो मध्ये प्रवेशयितुम् ।

किं कारणम् ?

आदिलिङ्गोऽयं क्रियते, करोतिश्च ककारादिः, दृष्टश्च पुनरातिदेशिकः करोतिरककारादिः ॥

( प्रदीपः ) क्रियमाणेऽपीति । परत्वान्तरङ्गत्वाभ्यामड्द्विर्वचनयोः कृतयोष्टित्वात्सुटो मध्यानुप्रवेशाभावः ॥

करोतिश्चेति । संस्कर्तेत्यादौ । ततश्चात्रै[9]व स्यात् । अ[10]ड्-

---

१ लावस्थायामडिति पक्षमाश्रित्य वार्तिककार आह—अड्व्यवाय इति ॥

२ समोऽनन्तर इति । सम्परिभ्यामिति सूत्रे सम्परिभ्यामिति पञ्चम्या सम्परिभ्यामव्यवहितस्य करोतेरित्यर्थादटा व्यवधानेऽव्यवधानं न सम्भवतीति भावः ॥

३ यदागमन्यायेनाड्विशिष्टस्यापि धातुत्वमेवेति अव्यवहितस्य करोतेः सम्भवाद्दोषाभाव इत्याशङ्क्य तं दोषमुपपादयति—नित्यत्वादिति । सुटः प्राक् विकरणे जाते विकरणान्तग्रहणेनाड्विशिष्टस्य ग्रहणं स्यात्, धातुग्रहणेन च न स्यादिति अटा व्यवधानमेवेति भावः ॥

४ ननु अभ्यस्तस्यापि कृञः करोतिग्रहणेन ग्रहणात् समः परत्वेन सुट् भवत्येवेति किमर्थं वचनमत आह—न-अप्राप्त इति ॥

५ कालावधारणार्थत्वमेव विवृणोति—करोतेरिति । अड्द्वित्वोत्पत्तिकालात्पूर्वमेव सुडित्यर्थः ॥

६ वचनारम्भेण—अडभ्यासव्यवाय उपसंख्यानमिति वचनारम्भेण ॥

७ 'क्रियमाणेऽपि कात्पूर्वग्रहणे' इति वैशब्दरहितः क. च. पाठः ॥

८ 'सिध्यति न ह्ययं' इति च. छ. पाठः ॥

९ अत्रैवेति । ककारादेः करोतेः सत्त्वात्, यत्र तु न ककारादिः संचस्कारेत्यत्र, तत्र न स्यादिति भावः ॥

१० यत्र न ककारादिस्तत्र न स्यादित्यत्र हेतुमाह—अड्द्विर्वचनयोस्त्विति । यत्राड्द्विर्वचनयोः प्रवृत्तिस्तत्र टित्वेनान्यो देशः सुट उच्यते कात्पूर्वग्रहणेन चान्य इति विरुद्धदेशसमर्पणम् ॥

द्विर्वचनयोस्तु कृतयोष्टित्वात्कात्पूर्वग्रहणाच्च विरुद्धदेशसमर्पणादप्रवृत्तिरेव सुटः स्यात् ॥ **ह्यश्चेति** । अङभ्यासवानित्यर्थः । स हि स्थानिवद्भावादातिदेशिकः । 'अनागमकानां सागमका आदेशाः' इत्यडागमयुक्तोऽप्यातिदेशिकः, ततश्च कात्पूर्वग्रहणात्ककारादेरेव स्यात् न त्वडभ्यासवत इत्यर्थः ॥

**( उद्योतः )** इदानीं वार्तिकारम्भवादी सूत्रमात्रेण न सिध्यतीत्याह—भाष्ये—**क्रियमाणेऽपीति** । कात्पूर्वग्रहणस्य लक्षणायां मानाभावाद्देशप्रक्लृप्त्यर्थत्वमेव शब्दमर्यादया लभ्यते, तच्च यत्र प्राप्तिस्तद्विषयमेव स्यादिति संस्कर्तेत्यादावेव स्यात् । अड्द्विर्वचनयोस्तु व्यवधानात्प्राप्तिरेव नेति तद्वैयर्थ्यम्, वार्तिकारम्भं विना प्रयोगासिद्धिश्चेति तात्पर्यम् ॥

**करोतिश्च कादिरिति** ग्रन्थस्य प्रकृतोपयोगं दर्शयति—**ततश्चेति** ॥ **अप्रवृत्तिरेवेति** । अविरोधेन प्रवृत्तौ संभवन्त्यां विरोधे प्रवृत्त्ययोगः, व्यवधानाच्च तत्राप्रवृत्तिरिति भावः । यः ककारादिः करोतिर्दृष्टस्तत्रैव स्यात्, यस्त्वातिदेशिकोऽककारादिर्दृष्टस्तत्र न स्यादिति भाष्याक्षरार्थः ॥ **स हीति** । अभ्यासवानित्यर्थः । स्थाने द्विर्वचनपक्षे इदम् । चुत्वे कृते वा करोतित्वमतिदेशेनेति बोध्यम् ॥ **अनागमकानामिति** । चिन्त्यमिदम्, बुद्धिविपरिणामेनादेशत्वव्यवहारेऽपि स्थानषष्ठ्या निर्देशाभावादतिदेशाप्राप्तेः । यदागमा इति न्यायेन ग्रहणमप्यातिदेशिकमिति तु भाष्याशयः ॥

**( दोषस्थलदर्शकभाष्यम् )**

**पाक्षिक एष दोषः ।**

**कतरस्मिन् पक्षे ?**

**सुड्विधौ द्वैतं भवति—अविशेषेण वा विहितस्य सुटः कात्पूर्वग्रहणं ककारादिदेशप्रक्लृप्त्यर्थं स्यात्, विशेषेण वा विधिरिति ।**

**द्विर्वचनविधौ चापि द्वैतं भवति—स्थाने वा द्विर्वचनं स्यात्, द्विःप्रयोगो वा द्विर्वचनमिति ।**

**तद्यदा द्विःप्रयोगो द्विर्वचनम्, अविशेषेण विहितस्य च सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थं तदैष दोषः।**

**यदा हि स्थाने द्विर्वचनं तदा यद्यप्यविशेषेण विहितस्य सुटः कात्पूर्वग्रहणं देशप्रक्लृप्त्यर्थम्-अथापि विशेषविधिः, न तदा दोषो भवति ॥**

**( प्रदीपः ) सुड्विधौ द्वैतमिति** । कात्पूर्वग्रहणमडभ्यासव्यवायनिवृत्त्यर्थं वा स्यात्—प्राप्त्यर्थं वेति पक्षद्वयसंभवः ॥ **अविशेषेणेति** । कालविशेषानङ्गीकरणमविशेषः । 'तस्मिन्करोतौ सुट् भवति, यत्र भवन् कात्पूर्वो भवति' इत्यडभ्यासविषये निवृत्त्यर्थं कात्पूर्वग्रहणं भवति ॥ **विशेषेण वेति** । यत्रानेकलक्षणसंनिपाताभावस्तत्रानर्थकं कात्पूर्वग्रहणमिति अनेकलक्षणसन्निपाते कात्पूर्वग्रहणं कालावधारणार्थं विज्ञायते—'कात्पूर्वः सुट् कर्तव्यः' । कार्यान्तराच्च प्राक् भवन् कात्पूर्वः कृतो भवति ॥

**तद्यदा द्विःप्रयोग इति** । उच्चारणक्रियाभेदाच्छब्दो भिद्यत इत्यभ्यासेन परस्य ककारादे रूपस्य व्यवधानात्संपरिभ्यामुत्तरोऽनन्तरः करोतिः ककारादिर्न संभवतीति सुटोऽप्रसङ्गः । यदा तु कालावधारणार्थं कात्पूर्वग्रहणं तदा विशेषविधिर्भवतीत्यकृत एव द्विर्वचने सुट् क्रियत इति न दोषः । स्थाने द्विर्वचने स्थानिवद्भावादेक एव करोतिः, स चाव्यवहित इति चकारात्पूर्वः सुट् प्राप्तः कात्पूर्वग्रहणेन ककारात्पूर्वः क्रियत इति दोषाभावः । विशेषविधाने तु पूर्वमेव सुट् क्रियते इति पक्षद्वयेऽपि दोषाभावः ॥

**( उद्योतः )** कात्पूर्वग्रहणेनाडभ्यासविषये यथा सुटो निवृत्तिस्तथा दर्शयति—**कालविशेषानङ्गीकरणमिति** ॥ **यत्रेति** । संस्कर्तेत्यादौ । तत्र टित्त्वादेव कात्पूर्वत्वं सिद्धमिति भावः ॥ **अनेकेति** । यथाऽडभ्यासविषये तद्विधायकवचनसन्निपातः ॥ **कार्यान्तराच्चेति** । 'तदा सुट् कार्यः—यदा कृतः कात्पूर्वः' इति वाक्यार्थ इति भावः ।

**अनन्तरः करोतिः ककारादिर्न संभवतीति** । देशप्रक्लृप्त्यर्थत्वपक्षे 'समादेः परस्य कादेः करोतेः सुट्' इत्यर्थ इति भावः । एवमड्व्यवायेऽपि सुटोऽप्रसङ्गो बोध्यः । संपरिभ्यामुत्तरः करोतिर्न भवतीत्येतावदेव तु वक्तुमुचितम् ॥ **'यदा हि स्थाने'** इत्यादि भाष्यं व्याचष्टे—**स्थाने द्विर्वचने इति** ॥ **चकारात्पूर्व इति** । कात्पूर्वग्रहणसामर्थ्यात्संस्कर्तेत्यादौ चरितार्थटित्त्वस्य सङ्कोच इत्यर्थः ॥ अथापि **विशेषे**त्यादि भाष्यं व्याचष्टे—**विशेषेति** ॥

**( आक्षेपनिरासभाष्यम् )**

**द्विःप्रयोगे चापि द्विर्वचने न दोषः ।**

**संपरिभ्यामिति नैषा पञ्चमी ।**

**का तर्हि ?**

**तृतीया । संपरिभ्यामुपसृष्टस्येति । व्यवहितश्चाप्युपसृष्टो भवति ॥**

**( प्रदीपः ) उपसृष्ट इति** । संबद्ध इत्यर्थः । द्विःप्रयोगे च द्विर्वचने द्वयोः साधारणोऽर्थ इति द्वावप्यर्थवन्ताविति परस्य

१ तद्वैयर्थ्यम्—कात्पूर्वग्रहणवैयर्थ्यम् । संस्कर्तेत्यादौ कात्पूर्वस्यैव सत्त्वात्, अड्द्विर्वचनविषये तु कात्पूर्वस्य सम्भवाभावात् ॥

२ करोतिश्च ककारादिरित्यादि भाष्यस्यार्थमाह—यः ककारादिरिति ॥

३ इदं—आतिदेशिककरोतित्वम् ॥

४ द्विःप्रयोगो द्विर्वचनमिति पक्षेऽपि आतिदेशिकत्वमुपपादयति—चुत्वे कृते वेति । कुहोश्चुरिति चुत्वे कृते तस्य स्थानिवद्भावात्करोतित्वमिति आतिदेशिकं करोतित्वमुपपद्यते ॥

५ चिन्त्यमिति । आतिदेशिकत्वमडागमसहितस्य भाष्यकृतामपि सम्मतम् । अनागमकानां सागमका इत्यादि यत्कैय्यटेनोक्तं तच्चिन्त्यमित्यर्थः ॥

६ अत्र 'ना'शब्दो न दृश्यते क. छ. ञ. पुस्तकेषु ॥

७ 'द्विष्प्रयोगो वा' इति पाठः ट. पुस्तके ॥

८ 'यद्यविशेषेण' इति क. ट. पाठः ॥

९ पक्षद्वयेति । सुटष्टित्वात्कात्पूर्वग्रहणाच्चाडभ्यासविषयेऽप्रवृत्तिः, कात्पूर्वग्रहणेन च कालावधारणं क्रियत इति अडभ्यासविषये ततः पूर्वं प्राप्तिरपीति पक्षद्वयोपपत्तिः ॥

१० ननु अर्थद्वारकोपसर्गसम्बन्धः समुदाये, अवयवस्त्वनर्थक इति कथं परेण संबन्धोऽत आह—द्विरिति । एक एवार्थो द्वाभ्यामुच्यत इत्यर्थः । वचनसामर्थ्याच्च न पौनरुक्त्यमित्याशयः ॥

११ द्वयोः—अभ्यासस्योत्तरखण्डस्य च ॥

रूपस्यार्थद्वारक उपसर्गसंबन्धो न विरुध्यते । स[1]मुदायस्य त्वर्थवत्तामाश्रित्य वक्ष्यते—'विसुष्वापेति केन न' 'अनर्थकः' इति ॥

( उद्द्योतः ) भाष्ये—द्विःप्रयोगे चापीति । देशप्रकृत्यर्थत्वपक्षेऽपि न दोष इत्यर्थः । लक्ष्यासिद्धिरूपदोषस्यायं परिहारः । वै[2]यर्थ्यरूपो दोषस्त्ववस्त्येवेति बोध्यम् ॥ समुदायस्य त्विति । अर्थावृत्त्यभावादिदमेव युक्तम् ॥ वक्ष्यते इति । 'सुविनिर्दुर्भ्यः सुपिसूति—'इति सूत्रे । तत्र 'विस्वप् अ' इति स्थिते 'पूर्वत्रासिद्धमद्विर्वचने' इत्युक्तेः—उपसर्गसंसर्गाश्रयत्वेनान्तरङ्गत्वाच्च द्वित्वात्पूर्वप्राप्तषत्वनिवृत्तये सुपीति कृतसंप्रसारणग्रहणम् । अभ्यासस्य संप्रसारणे कृतेऽपि तस्यानर्थकत्वात्षत्वाभाव इत्युक्तम् । इह तु प्रकारान्तरेण दोषनिवृत्तेरुक्तत्वादनास्थावादेन भगवतेदमुक्तमिति भावः । वस्तुतोऽभ्यासोऽनर्थक एव, उत्तरखण्डस्त्वर्थवानेवेति 'एकाचो द्वे' इत्यत्र निरूपितमिति न भाष्ययोः कश्चिद्विरोध इति बोध्यम् । 'द्वावप्यर्थवन्तौ'इति कैयटस्तु चिन्त्य एवेति दिक् ॥ केन नेत्यन्ता शङ्का । अनर्थक इत्युत्तरम् । 'संपरिभ्याम्'इत्यस्य तृतीयान्तत्वेऽड्व्यवाये इत्यपि न कार्यम् । एवं स्थाने द्विर्वचने कात्पूर्वग्रहणसार्थक्यमुक्तम् । तेन द्विःप्रयोगे तद्व्यर्थमेवेति सूचितम् ॥

( ६२४६ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ उपदेशिवद्वचनं च ॥ * ॥

( भाष्यम् ) उपदेशिवद्भावश्च वक्तव्यः ।

किं प्रयोजनम् ?

( प्रदीपः ) उपदेशिवद्वचनं चेति । अन्यथा पदद्वयाश्रयत्वात् सुटो बहिरङ्गत्वादसिद्धत्वाल्लिटि गुणो न स्यात् । चङि च 'दीर्घो लघोः' इति दीर्घप्रसङ्गः ॥

( उद्द्योतः ) ननु सुटि संयोगादित्वाद्गुरुत्वाच्च गुणदीर्घाभावौ सिद्धाविति किमुपदेशिवद्वचनेन ? इत्यत आह—अन्यथेति । उपदेशिवद्वचने तु सुटोऽन्तरङ्गत्वेनासिद्धत्वाभावाद्गुणदीर्घाभावौ सिद्धाविति भावः । 'उपदेशिवत्' इत्यस्य च प्रत्ययोत्पत्तेः पूर्वमित्यर्थः । एवञ्चास्य बहिर्भूतोपसर्गापेक्षत्वम्, गुणदीर्घयोश्च बहिर्भूतप्रत्ययापेक्षत्वमिति समतेत्याशयः ॥

( ६२४७ उपसंख्यानप्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ लिटिगुणचङिदीर्घप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) लिटि गुणार्थं चङि दीर्घप्रतिषेधार्थम् ।

लिटि गुणार्थं तावत्—संचस्करतुः, संचस्करुः ।

चङि दीर्घप्रतिषेधार्थं च—समचिस्करत् ॥

( उपसंख्यानप्रयोजनान्यथासिद्धिसाधकभाष्यम् )

लिटि गुणार्थेन तावन्नार्थः ।

व[3]क्ष्यत्येतत्—*संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम्* इति ॥

च[4]ङि दीर्घप्रतिषेधार्थेनापि नार्थः ।

प[5]दमितीयं भगवतः कृत्रिमा संज्ञा ।

युक्तमिह द्रष्टव्यम्-किमन्तरङ्गं किं बहिरङ्गमिति ।

धातूपसर्गयोः कार्यं यत्तदन्तरङ्गम् ।

कुत एतत् ?

पूर्वं हि धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेति ।

नैतत्सारम् ।

पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण । साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम् ।

सत्यमेवमेतत् ।

यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते ।

अवश्यं चैतदेवं विज्ञेयम्, यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति[6] तस्य 'आस्यते गुरुणा' इत्यकर्मकः 'उपास्यते गुरुः' इति केन[7] सकर्मकः स्यात् ।

एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति ।

का[8]त्पूर्वग्रहणं चापि शक्यमकर्तुम् ॥

( प्रदीपः ) संयोगोपधग्रहणमिति । ततो वचनेनासि[9]द्धत्वं बाध्यते ॥

---

१ ननु प्रत्येकमर्थवत्त्वाङ्गीकारे सुविनिर्दुर्भ्य इति सूत्रभाष्ये 'विसुष्वापेत्यत्र षत्वमाशङ्क्य सुपेरनर्थकत्वान्न' इति वक्ष्यमाणं विरुद्धं स्यादत आह—समुदायस्येति ॥

२ वैयर्थ्यरूपेति । कात्पूर्वग्रहणस्येत्यादिः ॥

३ वक्ष्यतीति । ऋतश्च संयोगादेर्गुणः ( ७।४।१० ) इति सूत्रे भाष्य उक्तमेतत् । तत्र हि—'संयोगोपधग्रहणं कर्तव्यम् । इहापि यथा स्यात्—सञ्चस्करतुः । यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन । इदं तु न सिध्यति—सञ्चस्करतुः । किं कारणम् ? सुटो बहिरङ्गत्वात् । संयोगादिग्रहणे क्रियमाणे संयोगोपधग्रहणमनन्यार्थं विज्ञायते' इत्युक्तम् । संयोगोपधग्रहणसामर्थ्याच्च सुटो बहिरङ्गासिद्धत्वं नास्तीति भावः ॥

४ चङि दीर्घेति । 'समचिस्करत्' इत्यत्र दीर्घो लघोरित्यनेन प्राप्तस्य दीर्घस्य वारणेनापि नार्थ इति भावः ॥

५ ननु सुटः पदद्वयाश्रयत्वं दीर्घस्य चैकपदाश्रयत्वमित्यन्तरङ्गत्वं सुडपेक्षया दीर्घस्येति प्रथमतो दीर्घेऽनिष्टरूपापत्तिस्तां वारयितुमाह—पदमितीयमिति । तस्याः कृत्रिमसंज्ञत्वात्तदन्तरङ्गत्वं न युक्तमित्याशयः ॥

६ 'उपसर्गेणेति आस्यते' इति क. ट. अ. पाठः । तेषु 'तस्य'शब्दो न दृश्यते ॥

७ केन सकर्मक इति । पूर्वं धातुः साधनेन युज्यते चेत् केन कारणेन भाववाचिनः 'आस्' इत्यस्य उपशब्दप्रयोगे पश्चात्कृतेऽपि तस्य कर्मवाचित्वं स्यादित्यर्थः ॥

८ धातूपसर्गसंबन्धस्य सर्वतोऽन्तरङ्गत्वात् साधनवाचकप्रत्ययनिमित्तकस्य कार्यस्य सुटः पूर्वं प्राप्त्यभावात् पूर्वं सुटि रूपस्य सिद्धत्वादाह—कात्पूर्वेति ॥

९ असिद्धत्वं—बहिरङ्गासिद्धत्वम् ॥

**पदमिति** । अनेन पदद्वयाश्रयत्वं सुटो निवार्यते । अनुत्पन्नेष्वेव तिङ्क्षु धातूपसर्गसंबन्धे सुटा भाव्यमित्यर्थः । करोतिना चेह तदादिविधिर्नास्ति, विशेष्यस्यासंनिधानात् । 'अतः कृकमि–'इत्यत्र समासाधिकारात्समासेनाक्षिप्तमुत्तरपदं कृशब्देन विशेष्यत इति भवति तदादिविधिः । 'अनिगन्तोऽञ्चतौ वप्रत्यये' इत्यत्र वप्रत्ययग्रहणेन ज्ञापितम्–'धातुना विशेषणेन तदादिविधिर्भवति'इति ॥

**युक्तमिति** । यद्युक्तं तदेव दर्शनमर्हति, तदेवाश्रयणीयमित्यर्थः ॥

**पूर्वं धातुरिति** । विशिष्टा[2] क्रिया साधनेनार्थलाभाय संबध्यत इति पूर्वं विशेषणेन[3] युज्यत इत्यर्थः ॥

इतरो लब्धस्वरूपा क्रिया विशेषणमाकाङ्क्षतीति मत्वाऽऽह—**नैतदिति** ॥

इतरो विशिष्टा क्रिया साधनेन साध्यते, न तु साधनाल्लब्धस्वरूपाऽन्यतो विशेषं लभत इति मत्वा बुद्धिनिरूपितविशिष्टसाध्यभाविसाधनसंबन्धाश्रयेणाह—**सत्यमिति** ॥

**सर्वत इति** । धातुसंज्ञाया अपीत्यर्थः । यस्माद्धातूपसर्गसमुदायेन विशिष्टा क्रिया प्रतिपाद्यते, अडादिव्यवस्थार्थं तु पृथग्धातूपसर्गप्रकल्पनम्, तत्र 'सं कृ'शब्दे व्यवस्थित एव सुट् भवति । पश्चात्समुदायावयवस्य तेनार्थेनार्थवतो धातुसंज्ञा ॥

**( उद्योतः )** ननु कृतेऽपि संयोगोपधग्रहणे सुटोऽसिद्धत्वात्कथं गुणोऽत आह—**तत इति** ॥

**निवार्यत इति** । पदद्वयाश्रयत्वात्सुटो बहिरङ्गत्वं यदुक्तं तन्निराक्रियत इत्यर्थः ॥ **अनुत्पन्नेष्विति** । करोतौ धातौ परतस्तद्विधानादिति भावः ॥ ननु 'अतः कृ–' इत्यादिवत् 'करोत्यादौ पदे' इत्यर्थात्कथं तिङुत्पत्तेः पूर्वं सुट् ? अत आह—**करोतिना चेति** ॥ सत्वविधौ त्वस्ति तत्संनिधानमित्याह—**अतः कृ इति** । समासाधिकारश्च 'नित्यं समासे–' इत्यतः । अनेनात्र[5] 'कर्णीपूत्तरपदेषु'इति वाक्यैकदेश उच्चारित इति बोध्यते । अयमेवाक्षेप[6] इति बोध्यम् ॥ ननु वर्णग्रहणाभावात्कथं तदादिग्रहणमत आह—**अनिगन्त इति** ॥

भाष्ये—**द्रष्टव्यम्**–इत्यर्हे[7] भावे कृत्य इत्याह—**तदेव दर्शनमिति** । 'किमन्तरङ्गं बहिरङ्गम्'इति प्रश्ने यद्युक्तं तदेवाश्रयणीयमिति भाष्यार्थः ॥ युक्तं दर्शनमेवाह—भाष्ये—**धातूपसर्गयोरिति** । एवञ्च सुटोऽन्तरङ्गत्वेनासिद्धत्वाभावाल्लघुत्वाभावेन न दीर्घप्रसङ्गः, संयोगादित्वाच्च गुणसिद्धिरित्यर्थः ॥

**अर्थलाभायेति** । 'उपास्यते गुरुः' इत्यादौ साधनेन कर्मणा स्वान्वययोग्यार्थलाभायेत्यर्थः ।

भाष्ये—**नैतत्सारमिति** । वक्ष्यमाणोऽभिप्रायः । तस्यासारतां दर्शयन् 'पूर्वं धातुः साधनेन'इत्यस्य युक्तत्वं दर्शयति—**साधनं हीति** ॥ **क्रियां**—तत्प्रतीतिम्[8] । साधनयोगेन[9] हि साध्यत्वेन धात्वर्थप्रतीतिः, साध्यत्वस्य साधननिरूप्यत्वात् । क्रियायोगे चोपसर्गत्वमिति भावः । तदाह—**तामुपसर्ग इति** ॥ **तां**–साध्यत्वेन प्रतीताम् । तत्र विशेषणीभूतमर्थमुपसर्गो द्योतयतीत्यर्थः ॥ **अभिनिर्वृत्तस्य**—साध्यत्वेन ज्ञातस्य, **विशेषः**—विशेषणम्, उपसर्गेण शक्यो द्योतयितुम् । एवञ्च पूर्वं धातुरुपसर्गेणेति न सारमिति भावः ॥ इतर एतदङ्गीकुर्वन्नेवान्तरङ्गत्वं व्युत्पादयितुमाह—**सत्यमेवमेतत् । यस्त्वसाविति** । उपसर्गसंज्ञकशब्दयोगात्पूर्वं साधनयोग इति सत्यमेव । परन्तु त्वदभिमतं धातूपसर्गसंबन्धकृतमर्थमभ्यन्तरं कृत्वा–स्वबोध्यं कृत्वा धातोः[10] पूर्वं नियमेनाकाङ्क्षितार्थत्वात् साधनतत्कार्यप्रत्यययोगे कृते क्रियात्वावगतावुपसर्गसंज्ञकशब्दयोगः । अन्यथा[11] केवलधातुतः सर्वत्राप्रतीयमानः सोऽर्थः कथं श्रोत्रा बुध्येतेति भावः ॥ **यो हि मन्यते** इति । शब्दसंबन्धवदर्थसंबन्धोऽपि पश्चादिति यो मन्यत इत्यर्थः ॥

**अन्तरङ्गतरक इति** । साधनसंबन्धोत्तरमुपसर्गसंबन्धे[12] 'सं कृ ति' इति स्थितेऽन्तर्भूतार्थकनिमित्तकत्वाद्बाह्यसाधनसंबन्धनिमित्तद्वित्वादिकार्यात्सुडन्तरङ्गतर इत्यर्थः । ईदृशे स्थलेऽयमेव साधुत्वान्वाख्यानप्रकारः । अत एव 'उपपदमतिङ्'इति सूत्रे धातूपसर्गयोः समासमाशङ्क्य 'पूर्वं धातुः साधनेन'इति पूर्वं तिङि विशिष्टेनैव सामर्थ्यं स्यात् । तत्र 'अतिङ्'इति निषेधान्न तिङन्तेनैकार्थीभाव इति समाहितम् । तिङां द्योतकत्वमेवेति तद्भावः । **किञ्च** संपरिभ्यामुपसृष्टस्येत्यर्थेन समो योगात्पूर्वमेव सुट् । संपरिभ्यामित्यस्य पञ्चम्यन्तत्वेऽपि ताभ्यां

---

१ तदादिविधिर्नास्तीति । एवं च संपरिभ्यामित्यस्य संपरिभ्यामुत्तरस्य कृधातोरित्येवार्थः स्यात् । तथा च साधनबोधकप्रत्ययनिमित्तत्वात्सुटोऽन्तरङ्गत्वमिति भावः । धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति परिभाषायास्त्वत्र न प्राप्तिः । धातोः कार्यस्यैवाभावात् । प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यकत्वाभावाच्च ॥

२ विशिष्टक्रिया' इति च. झ. पाठः ॥

३ विशेषणेन–उपसर्गद्योत्यार्थेन ॥

४ तत्संनिधानं–विशेष्य संनिधानम् ॥

५ अनेनात्रेति । अतः कृकमीत्यत्र समासपदानुवर्तनात् कृकमिकंसकुंभपात्रकुशाकर्णीषु इत्येतत्सूत्रकृत्कृतस्य कर्णीपूत्तरपदेष्विति वाक्यस्यैकदेश उच्चारित इति भावः ॥

६ अयमेवाक्षेप इति । न तु पीनो देवदत्त इत्यादिवदाक्षेपः, किन्तु वाक्यैकदेशोच्चारणरूप एवाक्षेप इति तात्पर्यम् ॥

७ 'अर्हेऽर्थे भावे' इति झ. पाठः ॥

८ ननु क्रियानिर्वर्तकत्वं कर्तुरेवेति कथमुच्यते साधनं हि क्रियामित्यादि ? अत आह—तत्प्रतीतिमिति ॥

९ साधनयोगेनेति । साधनसंबन्धानन्तरं साध्यत्वेन प्रतीतौ क्रियात्वमुपपद्यते ततश्च तत्संबन्धात्प्रादीनामुपसर्गत्वमिति धातूपसर्गयोः कार्यं नान्तरङ्गमित्याशयः ॥

१० धातोः पूर्वमिति । साधनसंबन्धात्पूर्वं धात्वर्थस्य नियमेनाकांक्षितत्वात् उपसर्गद्योत्यार्थमुपसंगृह्यैव साधनसंबन्धो भवतीति धातूपसर्गयोः कार्यस्यान्तरङ्गत्वमिति सिद्धान्तिनोच्यते । ततश्चोपसर्गसंज्ञकस्य शब्दस्य संबन्धो भवति ॥

११ तत्रोपपत्तिमाह—अन्यथेति ॥

१२ धातूपसर्गकार्यस्यान्तरङ्गत्वमुपपादयति—साधनसंबन्धोत्तरमिति । उपसर्गद्योत्यार्थमुपसंगृह्य साधनसंबन्धे जाते उपसर्ग–साधनबोधकप्रत्यययोश्च कार्योत्पत्तिवेलायां उपसर्गद्योत्यार्थस्य प्रथममुपसंगृहीतत्वात्तदेव कार्यमन्तरङ्गमित्याशयः ॥

परत्वयोग्यस्येत्यर्थेन ततः पूर्वमेव सुट् । अत एव निविशत इत्यादौ न समासः, नेः परत्वयोग्यादित्यर्थेन पूर्वमेवात्मनेपदप्राप्तेः, नेर्विशेष्यस्येत्यर्थाद्वा । स्पष्टं चेदं 'नेर्विशः' इत्यत्र भाष्ये इति **परे** ॥

**लब्धस्वरूपेति**। प्रतिपन्नस्वरूपा–इत्यर्थः, तल्लाभश्च साधनायत्त इति भावः। निष्पन्नस्वरूपा–इति तु नार्थः, निष्पत्तेर्विशेषणसंबन्धेऽनुपयोगात् ॥ 'सत्यम्'इत्यङ्गीकाराशयमाह—**बुद्धीति**। बुद्ध्या निरूपितं विशिष्टं यत्साध्यं तस्य भावी यः साधनसंबन्धस्तदाश्रयेणेत्यर्थः। एवमपि पूर्वोक्तार्थस्यानुपपत्त्या कथं भाष्यस्वारस्यमिति **चिन्त्यम्** ॥

**धातुसंज्ञाया इति** । करोताविति श्तिपा[1] निर्देशात्कथं ततः प्राक्सुट् ? इति **चिन्त्यम्**। 'यस्माद्धातु–'इत्यादिकमपि कथं भाष्यस्वरससिद्धमिति **चिन्त्यम्**। **'सं कृ़शब्दे'** इत्यपि **चिन्त्यम्**, भाष्येण साधनकार्योत्तरमुपसर्गयोगप्रतीतेः। एवञ्च 'सं कृ ति' इति प्रयोक्तुमुचितम् । अन्यथा[2]ऽत्रैव धातूपसर्गयोः समासापत्तिः ॥ **तेनार्थेन—समुदायार्थेन**। आरोपादिति भावः ॥

भाष्ये—**कात्पूर्वग्रहणं चापीति** । ड्वित्वाडादिभ्यः[3] प्रागेव सुडुत्पत्तेः 'स्थाने द्विर्वचन'पक्षेऽपि तन्न कर्तव्यमिति भावः ॥

**( वार्तिकावतरणभाष्यम् )**

**यदि पुनरयं सुट् कात्पूर्वान्तः क्रियते ।**

**( प्रदीपः ) यदि पुनरिति**। 'सुक्'इति ककारानुबन्धं कृत्वेत्यर्थः ॥

**(उद्योतः)** ननु 'सुट् पूर्वान्तः' इति विरुद्धमत[4] आह—**ककारमिति** ॥

**( ६२४८ पूर्वान्तत्वाक्षेपवार्तिकम् ॥ १० ॥ )**

**॥ * ॥ कात्पूर्वान्त इति चेद्रुविधिप्रतिषेधः ॥ * ॥**

**( भाष्यम् ) कात्पूर्वान्त इति चेत् रुः कश्चिद्विधेयः, कश्चित्प्रतिषेध्यः। संस्कर्ता। समो विधेयः, सुटः प्रतिषेध्यः ॥**

**( प्रदीपः ) संस्कर्तेति**। 'समः सुकि'इत्युच्यमाने संभक्तत्वात्सुकः पौर्वापर्याभावात्सकारस्य[5] रुत्वं न प्राप्नोति। सुकस्तु पदान्तत्वाद्रुत्वप्रसङ्गः ॥

**( उद्योतः ) पौर्वापर्याभावादिति** । एवञ्च मस्य रुत्वाप्राप्तिः;तत्सूत्र[6]मसंबद्धं च स्यादिति भावः ॥ **पदान्तत्वादिति**। 'ससजुषोः–'इत्यनेन ॥

**( समाधानभाष्यम् )**

**समस्तावन्न विधेयः।**

**वक्ष्यत्येतत्[7]—*संपुंकानां सत्वम्* *रुत्वविधौ ह्यनिष्टप्रसङ्गः* इति ॥**

**सुटश्चापि न प्रतिषेध्यः।**

**'समः सुटि' ( ८।३।५ ) इति द्विसकारको निर्देशः[8]। सुटि सकारादाविति ॥**

**( प्रदीपः ) संपुंकानामिति**। एतच्च यथान्यासेऽपि[9] वक्तव्यमिति भावः ॥

**सुटि सकारादाविति** । यथान्यासाश्रयेणैतदुच्यते[10]। 'सुकि सकारादौ'इति तु वक्तव्यम्। तत्र सकारादित्वविशेषणान्यथानुपपत्त्या सुको रुत्वाभावः। पौर्वापर्यं च श्रुतिकृतमाश्रयिष्यते ॥

**( उद्योतः ) यथान्यासेऽपीति**। अन्यथा 'संस्कर्ता'इत्यादौ 'वा शरि'इति पक्षे विसर्जनीयः स्यादिति भावः ॥ **पौर्वापर्यं चेति**। वचनसामर्थ्यादिति भावः। इदं च 'संपुंकानाम्–'इति वार्तिकारम्भेऽप्यावश्यकम्। अन्यथा तस्यापि सुकि परत एव प्रवृत्तेर्दोषतादवस्थ्यमेव । 'रुर्विधेयः'[11]इति वदन्तं प्रति वार्तिकविरोधप्रदर्शनाय तु सूत्रं विहाय वार्तिकाश्रयेण समाहितमिति बोध्यम् ॥

**( वार्तिकावतरणभाष्यम् )**

**अथवा परादिः करिष्यते।**

**( ६२४९ परादित्वाक्षेपवार्तिकम् ॥ ११ ॥ )**

**॥ * ॥ परादाविड्गुणप्रसङ्गः ॥ * ॥**

**( भाष्यम् ) यदि परादिः, इड्गुणौ प्राप्नुतः। संस्कृषीष्ट, 'ऋतश्च संयोगादेः' ( ७।२।४३ ) इतीट् प्राप्नोति।**

**संस्क्रियते, 'गुणोर्तिसंयोगाद्योः' (७।४।२९) इति गुणः प्राप्नोति ॥**

**( वार्तिकावतरणभाष्यम् )**

**एवं तर्ह्यभक्तः करिष्यते।**

---

१ श्तिपेति। धातुनिर्देश एव श्तिपः संबन्धात् धातुसंज्ञातः प्राक् सुडशक्य इति चिन्त्यत्वे बीजम् ॥

२ अन्यथेति । यदि 'सं कृ' इत्यवस्थायामेव सुटः प्राप्तिर्निरूप्यते तदा पूर्वं समास एव स्यादिति भावः ॥

३ डित्वाडादिभ्य इति । साधनबोधकप्रत्ययस्य पूर्वमुत्पत्तावपि तन्निमित्तकार्योत्पत्तेः पूर्वं सुडिति भावः ॥

४ विरुद्धमिति। टित्वेऽपि पूर्वान्तत्वमिति विरोधः ॥

५ 'भावान्मकारस्य' इति क. च. झ. पाठः। वस्तुतस्तूद्द्योते 'एवं च मस्य रुत्वाप्राप्तिः' इति दर्शनात् 'भावात्सकारस्य' इत्येव पाठः श्रेयान्। ट. इत्यादिपुस्तकेषु तथैव पाठ उपलभ्यते। सुकः संभक्तत्वेन सकारस्य पौर्वापर्याभावकथन एव प्रदीपतात्पर्यात् । सुकः संभक्तत्वात् सकारस्य पौर्वापर्याभावाद्रुत्वं न प्राप्नोतीत्यन्वयः। कथमन्यथा भट्टाचार्यैः 'एवं च मस्य रुत्वाप्राप्तिः' इति व्याख्यातं संगच्छेतेति सुस्पष्टं तद्विदाम् ॥

६ तत्सूत्रं–समः सुटीति सूत्रम् ॥

७ वक्ष्यत्येतदिति। समः सुटि ( ८।३।५ ) इति सूत्रे भाष्ये ॥

८ द्विसकारकनिर्देशस्यार्थमाह—सुटि सकारादाविति । एतदपि समः सुटीति सूत्रभाष्य उक्तम् ॥

९ यथान्यासेऽपि–समः सुटीति न्यासेऽपि। यत् समः सुटीति न्यासे भावश्यकं तेनैव परिहारेण 'सुकि' इति न्यासे परिहारेऽपि नास्माकं दोष इत्याशयः ॥

१० ननु 'सुकि' इति न्यासे 'सुटि सकारादाविति वक्तव्यम्' इति समाधानमयुक्तमित्यत आह—यथान्यासेति ॥

११ रुर्विधेय इति। 'कात्पूर्वान्त इति चेद्रुविधिप्रतिषेधः' इति वार्तिकेन रुर्विधेय इति वदन्तमित्यर्थः ॥

(प्रदीपः) अभक्त इति। टकारोऽनुबन्धो न करिष्यते ॥

( ६२५० अभक्तत्वाक्षेपवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ अभक्ते स्वरे दोषः[1] ॥ * ॥**

( भाष्यम् ) यद्यभक्तः स्वरो न सिध्यति । संस्करोति, 'तिङ्ङतिङः' ( ८।१।२८ ) इति निघातो न प्राप्नोति ।

ननु चात्र सुडेवातिङ् ।

न सुटः परस्य निघातेन भवितव्यम् ।

किं कारणम् ?

नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । नञ्युक्तमिव युक्तं चान्यस्मिन् सदृशे कार्यं विज्ञायते, तथा ह्यर्थो गम्यते ।

तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं क्षत्रियमानयति, नासौ लोष्टमानीय कृती भवति ।

एवमिहापि 'अतिङ्'इति प्रतिषेधादन्यस्मादतिङस्तिङ्सदृशात्कार्यं विज्ञास्यते ।

किं चान्यदतिङ् तिङ्सदृशम् ?

पदम् ॥

(प्रदीपः) स्वरो न सिध्यतीति । 'स्वरविधौ व्यञ्जनमविद्यमानवत्'इति परिभाषा नास्ति, कथं तर्हि–हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्'इति । तदेवमभक्तपक्षे स्वरदोषप्रसङ्गात्परादिः सुद् क्रियते । इड्गुणयोस्तु प्रतिषेधो वक्तव्य एव । अथवा 'एकाच उपदेशेऽनुदात्तात्' इत्यतः 'उपदेशे'ग्रहणम् 'ऋतश्च संयोगादेः–' इत्यत्रानुवर्तते । तेनोपदेशे संयोगादेरिड्विधानात्सुटि कृते न भविष्यति । 'गुणोर्तिसंयोगाद्योः'इत्यत्रापि 'नित्यं छन्दसि'इत्यतो नित्यग्रहणानुवृत्त्या नित्यं यः संयोगादिस्तस्य गुणविधानात्सुटि कृते संयोगादेर्गुणाभावः ॥

(उद्योतः) अथ वेति । 'हलोऽनन्तराः–' इति सूत्रे 'प्रत्येकं संयोगसंज्ञा'इति पक्षे संहृषीष्ट संह्वियत इत्यत्रानयोरिड्गुणयोरनापादनपरभाष्यविरोधादिदं चिन्त्यम्[2] । तस्माद्वचनमेव शरणम् ॥

( १११८ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८३ )

## २५७९ अपाच्चतुष्पाच्छकुनिष्वालेखने[3] ॥ ६ । १ । १४२ ॥

( ६२५१ अर्थोपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ किरतेर्हर्षजीविकाकुलाय[4]करणेषु ॥ * ॥**

(भाष्यम्) किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् । अपस्किरते वृषो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वाऽऽश्रयार्थी ॥

( प्रदीपः ) किरतेरिति । हर्षादय एवोपाधय उपादातव्याः, न चतुष्पाच्छकुनयः । तथा चात्मनेपदविधौ हर्षादय एवोपात्ताः, न चतुष्पाच्छकुनयः । न[5] चातिप्रसङ्गः, विशिष्टहर्षादिविषयत्वात्सुडात्मनेपदयोः । प्रयुक्तानां शब्दानां साधुत्वान्वाख्यानात् ॥

( उद्योतः ) सूत्रोपात्तोपाधेर्विशेषेऽवस्थापनाय वार्तिकम् । तत्रात्मनेपदवत् सुटोऽपि विषयविशेषेऽभिधानस्वाभाव्यादेव सिद्धौ सत्यां सूत्रोपात्तोपाधिरनर्थक इत्याह—हर्षादय एवेति । एतत्समानाकारमेवात्मनेपदविधायकम्, एतान्येव चोदाहरणानि ।

( १११९ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८४ )

## २५८१ अपरस्पराः क्रियासातत्ये ॥ ६ । १ । १४४ ॥

( सातत्यपदार्थबोधकभाष्यम् )

किमिदं सातत्य इति ?

सन्ततस्य भावः सातत्यम् ।

यद्येवं 'सांतत्ये' इति भवितव्यम् ॥

( प्रदीपः ) किमिदमिति । मकारलोप[6]लक्षणानुपलम्भान्निपातनाश्रयणेन बाधकत्वान्निपातनानां संततशब्दस्य बाधप्रसङ्गात् प्रश्नः ॥

---

१ 'अभक्ते स्वरः' इत्येव वार्तिकं च. छ. पुस्तकयोः ॥

२ इड्गुणयोरनापादनेति । तत्र हि सूत्रे भाष्ये–प्रत्येकं संयोगसंज्ञायां 'संहृषीष्ट' इत्यत्र ऋतश्च संयोगादेरितीट् प्राप्नोति । नैवं विज्ञायते संयोग आदिर्यस्येति । कथं तर्हि ? संयोगौ आदी यस्य सोऽयं संयोगादिः संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम्—इति संहृषीष्टेत्यत्रानापत्तिरुक्ता । यदि ऋतश्च संयोगादेरिति सूत्रे उपदेशपदानुवृत्तिस्तदा तेनैव वारणे व्यर्थोऽयं प्रयासः स्यात् । केचित्तु झ. पुस्तके 'इड्गुणयोरापादानपरभाष्यविरोधात्' इति पठन्ति । तदसमीचीनम् । प्रत्येकं संयोगसंज्ञायां संहृषीष्टेत्यत्रेट् प्राप्तौ उपदेशपदानुवर्तनेन दोषवारणमुचितमिति ॥

३ आलेखनं–खननम् ॥

४ कुलायः–नीडम् । भाष्यकृता 'अपस्किरते श्वा आश्रयार्थी' इत्युदाहरणदानादत्र कुलायशब्दो वासस्थानमात्रपरः ॥

५ न चातिप्रसङ्ग इति । सूत्रे यदुक्तं–चतुष्पाच्छकुनिष्वालेखन इति तदपनीय किरतेर्हर्षेति वाच्यमिति वार्तिककृदभिप्रायः । न चैवं 'अपकिरति कुसुमम्' इत्यत्रापि सुडात्मनेपदे स्यातामिति वाच्यम् । अभिधानस्वाभाव्यात् चतुष्पाच्छकुनिहर्षादिष्वेव तयोः प्रयोगात् । अत एवात्मनेपदविधायके चतुष्पादित्यादेरनुपादानेऽपि नेतरत्र प्रवृत्तिः ॥

६ मकारलोपेति । सातत्यमित्यत्र मकारलोपो दृश्यते, तद्विधायकं लक्षणं च नोपलभ्यते । अतः 'क्रियासातत्ये' इत्येतन्निपातनमेवाश्रयणीयम् । निपातनानि च बाधकानि भवन्ति–इति मकारलोपस्य निपातनात् संततशब्देऽपि मकारश्रवणानापत्तिरित्याशयेन प्रश्नः ॥

( उद्योतः ) ननु मलोपस्य लक्षणाभावेऽपि निपातनादेव साधुत्वं स्यादत आह—निपातनाश्रयण इति । निपातनानां बाधकत्वं च सर्वादिसूत्रे भाष्ये स्थापितम् ॥

( ६२५२ सातत्यरूपसाधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ समो हिततततयोर्वा लोपः ॥ * ॥

( भाष्यम् ) समो हिततततयोर्वा लोपो वक्तव्यः । संहितम्, सहितम् । संततम्, सततम् ॥

( प्रदीपः ) इतरो लक्षणान्तरं शब्दान्तरसिद्ध्यर्थमवश्याश्रयितव्यमिति मन्यमान आह—समो हिततततयोर्वेति । अव्यविकन्यायाश्रयेण तु संततस्य भाव इति वाक्यमेव भवति, न तु ष्यञ्-इति सांतत्यमिति न भवति । संहितायां समासे वैषां मकारलोप इष्यते, नान्यत्रेत्याहुः ॥

( उद्योतः ) ननु सन्ततस्य साधुत्वे सान्तत्यमित्यपि स्यादत आह—अव्यविकेति । अत[1] एव सर्वादिसूत्रे भाष्ये 'निपातनान्मलोपे सन्ततमिति न सिध्यति' इत्युक्तम्, न तु 'सूत्रोच्चारितसजातीयं सान्तत्यमिति न सिध्यति'इत्युक्तम् । अत्र च 'सान्तत्य इति भवितव्यम्'इत्युक्तम् ॥ नन्वेवम्—'अवश्यं कर्तव्यम्'इति न स्यादत आह—संहितायां समासे वेति ॥

( ६२५३ मलोपसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ समतुमुनोः कामे ॥ * ॥

( भाष्यम् ) सम्तुमुनोः कामे लोपो वक्तव्यः । सकामः । भोक्तुकामः ॥

( मलोपसाधकभाष्यम् )

मनसि चेति वक्तव्यम् । समनाः । भोक्तुमनाः ॥

( ६२५४ मलोपसाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अवश्यमः कृत्ये ॥ * ॥

( भाष्यम् ) अवश्यमः कृत्ये लोपो वक्तव्यः । अवश्यभाव्यम् ॥

( ११२० विधिसूत्रम् ॥ ६ । १ । ५ आ. ८५ )

## २५८२ गोष्पदं सेवितासेवितप्रमाणेषु ॥ ६ । १ । १४५ ॥

( असेवितपदप्रयोजनभाष्यम् )

इदमतिबहु क्रियते—सेविते-असेविते-प्रमाण इति, सेवितप्रमाणयोरित्येव सिद्धम् ।

केनेदानीमसेविते भविष्यति ?

नञा सेवितप्रतिषेधं विज्ञास्यामः ॥

नैवं शक्यम् ।

सेवितप्रसङ्ग एव स्यात्, असेविते न स्यात् । असेवितग्रहणे पुनः क्रियमाणे बहुव्रीहिरयं विज्ञास्यते—अविद्यमानसेविते-असेवित इति ।

तस्मादसेवितग्रहणं कर्तव्यम् ॥

( प्रदीपः ) सेवितप्रसङ्ग इति । यत्र सेवनं संभवति तत्रैव स्यात्, यत्र तु गवामत्यन्तमसंभवस्तत्र न स्यात् । 'असेवित'ग्रहणसामर्थ्यात्तु बहुव्रीहिराश्रीयते । तेन यत्र गवामत्यन्तमसंभवस्तत्रैवागोष्पदशब्दः प्रयोक्तव्यः, न तु सेवितप्रसङ्ग इति केचिदाहुः । अन्ये तु—अविशेषेणागोष्पदशब्दप्रयोगमिच्छन्ति । असेविते गोष्पदशब्दस्यासंभवादगोष्पदशब्दार्थमसेवितग्रहणम् ॥ इह प्रमाणे गोष्पदशब्दो निपात्यते । यदा वर्षादेः परिच्छेदः प्रतिपाद्यते-'गोष्पदपूरं वृष्टो देवः' 'गोष्पदमात्रं क्षेत्रम्'इति । नात्र गोष्पदं स्वार्थमुपादीयते । यथा-चेलक्नोपं वृष्टो देव इत्यसत्यपि चेलक्नोपे प्रयुज्यते, तथा-'गोष्पदपूरं वृष्टो देवः' इत्यसत्यपि गोपादपूरणे ॥

( उद्योतः ) यत्र सेवनमिति । ग्रामादौ, नञिवयुक्तन्यायादिति भावः ॥ नन्वसेवितग्रहणेऽप्ययं दोषस्तदवस्थोऽत आह—सामर्थ्यादिति ॥ तेन यत्रेति । अरण्यादौ ॥ अविशेषेणेति । अरण्यादौ, ग्रामादौ चेत्यर्थः । अत्रारुचिबीजं तु बहुव्रीहिसमाससमात्रप्रदर्शकभाष्यविरोधः । किञ्च गोष्पदशब्देनैव नञ्समासबहुव्रीहिभ्यां सिद्धेऽसेवितग्रहणसार्थक्यं दुरुपपादमेवेत्याहुः ॥ नन्वसेवितेऽपि गोष्पदस्यैव निपादनात् 'अगोष्पदानि'इत्युदाहरणमयुक्तमत आह—असेवित इति । गवां यत्पदं-स्थानं तत्र गोभिरसेवनासंभवादिति भावः ॥ परिच्छेदः—अल्पत्वरूपः । एवञ्च गोष्पदशब्दः स्वार्थपरित्यागपूर्वकमल्पत्वरूपे प्रमाणमात्रे वर्तत इति तात्पर्यम् ॥-तत्र दृष्टान्तमाह—यथेति । 'चेले क्नोपेः'इत्यत्र हि 'वर्षप्रमाणे' इति वर्तते ॥

( ११२१ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८६ )

## २५८३ विष्किरः[2] शकुनौ वा ॥ ६ । १ । १५० ॥

( ६२५५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥*॥ विष्किरः शकुनौ विकिरो वा ॥*॥

( भाष्यम् ) विष्किरः शकुनौ विकिरो वेति वक्तव्यम् । शकुनौ वेत्युच्यमाने शकुनौ वा स्यादन्यत्रापि नित्यम् ॥

---

१ अत एव-सान्तत्यमित्यस्यैवासाधुत्वादेव ॥

२ विष्किर इति । इदानींतनोपलब्धाष्टाध्यायीपाठे तु सूत्रमेतदपस्करो रथाङ्गमित्यस्याग्रे १५० संख्याकं दृश्यते । अत्र तु आस्पदं प्रतिष्ठायामित्यतः प्राक् व्याख्यातम् । पत्वभाविनः सुडनुक्रमेऽस्य पाठ उचित इति प्राग्व्याख्यातमिति प्रतीयते ॥

(प्रदीपः) 'विष्किरः शकुनौ वा'इति सूत्रपाठमाश्रित्य वार्तिकारम्भः ॥ **शकुनौ वा स्यादिति ।** इह सिद्ध[1]स्य शब्दस्य विकल्पेनाभिसंबन्धो नास्ति । यथा–मेध्यः पशुर्विभाषित इति नात्र पशुत्वं विकल्प्यते, किं तर्हि ? आलंभनम् । ततश्चाधिकरणविकल्पः[2] प्राप्नोतीति भावः । यदि तर्ह्यन्यत्रापि स्यात्, किमर्थं शकुनिग्रहणमिति चेत्; तत्तुल्यजातीयप्रतिपत्त्यर्थं स्यात् । शकुनौ वा भवति, तत्तुल्यजातीये चान्यस्मिन्नर्थे–इति ॥

( उद्द्योतः ) **इति सूत्रपाठमिति ।** 'विष्किरः शकुनिर्विकिरो वा'इत्यनार्षः पाठ इति भावः ॥ ननु शकुनौ सुडागमनिपातनस्य विकल्पे विकिरस्य सिद्धेर्वार्तिकं व्यर्थमत आह—**इहेति** ॥ **अधिकरणविकल्प इति ।** शकुनौ वाऽन्यत्र वेत्याकारः ॥ तदुक्तम्—भाष्ये—**अन्यत्रापि नित्यमिति** ॥ **तुल्यजातीये इति ।** प्राणित्वादिना तुल्यजातीय इत्यर्थः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**तत्तर्हि वक्तव्यम् ।**

**न वक्तव्यम् । न वावचनेन शकुनिरभिसंबध्यते ।**

**किं तर्हि ?**

**निपातनमभिसंबध्यते—विष्किर इत्येतन्निपातनं शकुनौ वा निपात्यत इति ॥**

( प्रदीपः ) **न वावचनेनेति ।** सुटो भावो विकल्प्यत इत्यर्थः ॥

( उद्द्योतः ) भाष्ये 'निपातन'शब्देन कर्मव्युत्पत्त्या सुडुच्यते, निपातनद्वारा सुडप्राप्तो विधीयते इति तस्यैव विकल्पेन योगः । यथा व्रीहिभिर्यजेतेत्यादौ व्रीहिसाधनो यवसाधनश्च यागो विकल्पेन विधीयत इत्यर्थः । 'विष्किर'इत्येतन्निपातनमित्यनेन निपात्यमानः सुट् शकुनौ वा निपात्यते–बोध्यत इति भाष्याक्षरार्थः ॥

---

(११२२ अधिकारसूत्रम् ॥ ६ । १ । ५ आ. ८७ )

## २५८४ आश्चर्यमनित्ये ॥ ६ । १ । १४७ ॥

( ६२५६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आश्चर्यमद्भुते ॥ * ॥

( भाष्यम् ) **आश्चर्यमद्भुत इति वक्तव्यम् । इहापि यथा स्यात्–आश्चर्यमुचता वृक्षस्य, आश्चर्यं नीला द्यौः, आश्चर्यमन्तरिक्षेऽवन्धनानि नक्षत्राणि न पतन्तीति ॥**

(प्रदीपः) **आश्चर्यमद्भुत इति ।** अद्भुतं–विस्मयहेतुः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**तत्तर्हि वक्तव्यम् ।**

**न वक्तव्यम् । 'अनित्ये' इत्येव सिद्धम् ।**

**इह तावत्—आश्चर्यमुचता वृक्षस्येति, आश्चर्यग्रहणेन न वृक्षोऽभिसंबध्यते ।**

**किं तर्हि ?**

**उच्चता । सा चानित्या ॥**

**आश्चर्यं नीला द्यौरिति, नाश्चर्यग्रहणेन द्यौरभिसम्बध्यते ।**

**किं तर्हि ?**

**नीलता । सा चानित्या ॥**

**आश्चर्यमन्तरिक्षेऽवन्धनानि नक्षत्राणि न पतन्तीति, नाश्चर्यग्रहणेन नक्षत्राण्यभिसम्बध्यन्ते ।**

**किं तर्हि ?**

**पतनक्रिया । सा चानित्या ।**

**तत्रानित्य इत्येव सिद्धम् ॥**

(प्रदीपः) **अनित्य इत्येवेति ।** निपातनाचानित्यविशेषो विस्मयहेतुर्गृह्यते ॥ **सा चानित्येति ।** वृक्षान्तरे तथाविधाया उच्चताया अदर्शनात् ॥ **नीलतेति ।** सा च सदा दिवि न दृश्यत इत्यनित्यता ॥ **पतनक्रियेति ।** नञर्थयुक्तेति भावः । अबन्धनस्यापतनं न दृश्यत इत्यनित्यम् ॥

( उद्द्योतः ) ननु 'अनित्ये'इत्युच्यमाने घटादावप्याश्चर्यशब्दप्रयोगः स्यादत आह–**निपातनाच्चेति** ॥ **अनित्यम्**–अनियतम् ॥

---

( ११२३ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८८ )

## २५९१ मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ ६ । १ । १५४ ॥

( मस्करिग्रहणप्रयोजनभाष्यम् )

**मस्करिग्रहणं शक्यमकर्तुम् ।**

**कथं मस्करी परिव्राजक इति ?**

**इनिनैतन्मत्वर्थीयेन सिद्धम् । मस्करोस्यास्तीति ।**

**न वै मस्करी मस्करोऽस्यास्तीति–परिव्राजकः ।**

**किं तर्हि ?**

**मा कृत कर्माणि मा कृत कर्माणि शान्तिर्वः श्रेयसीत्याह, अतो मस्करी–परिव्राजकः ॥**

( प्रदीपः ) **मा कृतेति ।** 'अयं मा कृत–अयं मा कृत' इत्युपक्रम्योपशान्तितः काम्यकर्मपरिहानिर्युष्माकं श्रेयसीत्युपदेष्टा मस्करीत्युच्यते । माङ्पूर्वात्करोतेरिनिः । सुडागमः[1], माङो ह्रस्वश्च निपात्यते ॥

---

[1] सिद्धस्य शब्दस्य–विष्किरशब्दस्य ॥
[2] अधिकरणविकल्पः–अधिकरणविशेषे प्रवृत्तिविशेषः, तस्यैव स्वरूपमुद्द्योते आह—शकुनौ वेति ॥
[1] छ. ट. पुस्तकयोः 'इति'शब्दो न दृश्यते ॥

( उद्द्योतः ) भाष्ये—न वै मस्करी मस्करोऽस्येति । एतदर्थको न मस्करिशब्दः, न हि सर्वः परिव्राजको दण्डधरः, नापि तन्मात्रेण परिव्राजकत्वमिति भावः ॥

अयं मा कृतेति । 'अयं त्यक्तवानयं त्यक्तवान्कर्माणि' इत्युपक्रम्य स्वयं कर्माणि परित्यज्य परान्प्रत्येवमुपदेष्टेत्यर्थः । भाष्ये—'कर्म'शब्देन काम्यकर्माण्युच्यन्ते । नित्यनैमित्तिकानि तु मुमुक्षोरपि कर्तव्यान्येव । अत एव—

'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।'

इति गीतायामुक्तमिति भावः ॥ करोतेरिति । ताच्छील्ये णिनौ प्राप्त इनिर्निपात्यत इत्यर्थः ॥

—०:०:०—

( ११२४ विधिसूत्रम् ॥ ६ । १ । ५ आ. ८९ )

## २५९४ पारस्करप्रभृतीनि च संज्ञायाम् ॥ ६ । १ । १५७ ॥

( गणस्वरूपसाधकभाष्यम् )

**अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः । पारस्करो देशः । कारस्करो वृक्षः । रथस्पा नदी । किष्किन्धा गुहा । किष्कुः ॥**

**तद्बृहतोः करपत्योश्चोर-देवतयोः सुट्तलोपश्च ।**

**तस्करः, बृहस्पतिः ॥**

**प्रायस्य चित्तिचित्तयोः सुडस्कारो वा ।**

**प्रायश्चित्तिः । प्रायश्चित्तम् ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये षष्ठाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥**

(प्रदीपः) तत्करोतीति—तस्करः । तच्छब्देन चोरकर्म प्रसिद्धं नित्यं परामृश्यते ॥ अस्कार इति । अस्य स्थानेऽस्कारः–अस्करः । शकन्ध्वादित्वात् पररूपम् ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य प्रथमपादे पञ्चममाह्निकम् ॥

( उद्द्योतः ) नित्यं प्रसिद्धं चौरकर्मेत्यन्वयः ॥ अस्य स्थाने इति । प्रायशब्दान्त्याकारस्थान इत्यर्थः । अन्यथा सर्वादेशः स्यादिति भावः । चिनोतेः क्तिन्नपुंसके भावे क्तश्च ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठाध्यायस्य प्रथमपादे पञ्चममाह्निकम् ॥

—०:०:०—

( ११२५ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९० )

## २५९५ अनुदात्तं पदमेकवर्जम् ॥ ६ । १ । १५८ ॥

( सूत्रार्थनिर्णायकभाष्यम् )

**किमनुदात्तानि[2] पदानि भवन्ति एकं पदं वर्जयित्वा ?**

**नेत्याह ।**

**पदे येषामुदात्तप्रसङ्गस्तेऽनुदात्ता भवन्ति एकमचं वर्जयित्वा ॥**

(प्रदीपः) किमनुदात्तानीति । 'पदम्' इति जातावेकवचनं मन्यते[3] । यथा–ग्रहं संमार्ष्टीति ग्रहार्थस्य[4] संस्कार्यत्वात् प्राधान्यात् संख्याया अविवक्षा, तथा 'पदम्' इत्यत्रापि, पदस्य संस्कार्यत्वात् । अनुदात्तशब्दं च लौकिकं मन्यते । लोका हि 'उदात्तं पदम्–अनुदात्तं पदम्' इति व्यपदिशन्ति । अनुदात्तगुणयोगात्पदमनुदात्तम् । तत्राचामनुदात्तगुणयोगे व्यञ्जनमपि तत्साहचर्यात्तद्धर्म[5] गृह्यत इति अज्झलसमुदायरूपं पदमनुदात्तगुणयोगात् 'अनुदात्तम्' इति सामानाधिकरण्येन निर्देश उपपद्यते । 'एकवर्जम्' इत्यत्रैकशब्देन प्रत्यासत्त्या पदमेवोच्यते ।

१ ननु मस्करो वेणुदण्डः सोऽस्यास्तीत्यर्थो दण्डिनामुपपद्यत एवेति कथमुच्यते–न वै मस्करी मस्करोऽस्यास्तीत्यादि ? तदाह—न हि सर्वः परिव्राजक इति ॥

२ 'अनुदात्तानि भवन्ति' इति पदाभिशब्दरहितः क. ट. पाठः ॥

३ मन्यते इति । पूर्वपक्षीति शेषः ॥

४ ग्रहार्थस्येति । 'दशापवित्रेण ग्रहं समार्ष्टि' इति सोमपात्राणां संमार्जनं विधीयते । तत्रेत्थं शंक्यते—यथा पशुना यजेतेत्यादौ पशुगतमेकत्वं विवक्ष्यतेऽतो नानेकपशुकरणको यागो भवति, तथाऽत्रापि ग्रहस्योद्देश्यत्वेन ग्रहगतमेकत्वं विवक्षणीयम् । तेनैकस्यैव ग्रहस्य संमार्जनं प्राप्नुयात् । यद्युच्येत—ग्रहमित्यत्र जातावेकवचनम्–इति । जातिवाचकत्वेऽपि जातेः संस्कारसम्भवाभावात्तदाश्रयभूते यस्मिन् कस्मिन्नपि द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवतीति एक एव ग्रह सम्मार्जनीयः । सोमयागे हि एकादशग्रहा भवन्ति तेषु यस्य कस्यचन संमार्जनं संभवतीति । अत्रोच्यते—प्रतिप्रधानं गुण आवर्तनीयः, न प्रतिगुणं प्रधानमावर्तनीयम् । तथा चात्र ग्रहमिति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं ज्ञायते । संमार्गश्चात्र गुणः । एवञ्च ग्रहस्य प्राधान्यात् संमार्जनस्य गुणत्वात् यावन्तो ग्रहास्तावत्संमार्जनं विधीयत इति सर्वेऽपि ग्रहाः सम्मार्जनीयाः । नन्वेवं पशुना यजेतेत्यत्रापि गुणभूतपशुगतसंख्याया अविवक्षणादनेकपशुकरणकयागः सम्भवेदिति चेन्न । तत्र हि पशुर्गुणभूतः, यागो मुख्यः । यदि पशुगतसंख्याया अविवक्षणं स्यात्तदा यावन्तः पशवस्तावन्तो यागा इति प्रतिगुणं प्रधानावृत्तिः स्यात् । सा च पूर्वोक्तन्यायविरुद्धा । एतन्न्यायविरोधाच्च पशुगतसंख्याया निश्चयः करणीयः । तत्र च श्रूयमाणमेकत्वमाश्रीयत इति ग्रहं समार्ष्टीत्यतो भेदः । तद्वदत्रापि पदस्य संस्कार्यत्वाद्ग्रहवत्प्राधान्यमिति न तदुत्तरमेकवचनं विवक्षणीयमिति भावः ॥

५ 'तद्धर्मा' इति ज्ञ. पाठः । 'तद्धर्मि' इति क. ठ. पाठः । अनिजन्तमेतत्पदमित्युद्द्योतव्याख्यानात् 'तद्धर्मि' इत्यशुद्धमेव । नपुंसकेन व्यञ्जनेन सामानाधिकरण्यात् 'तद्धर्मा' इत्ययुक्तम्, उपधादीर्घस्याभावात् ॥

तत्रायं सूत्रार्थः-वाक्ये पदमेकं वर्जयित्वा पदान्तराण्यनुदात्तानि भवन्तीति **पूर्वपक्षः** ॥

**पदे येषामिति** । यथा-'पशुना यजेत' इति व्यक्तिगतमेकत्वं पशोर्गुणत्वा[1]द्यागस्य प्राधान्याद्विवक्ष्यते, तथा 'पदम्' इत्यत्रापि पदानुवादेनाचामनुदात्तविधानात्पदस्य गुणत्वात् गुणे च संख्याया विवक्षितत्वात् । कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय इति च न्यायादनुदात्तशब्देनाच उच्यन्ते । 'एकवर्जम्' इत्यत्राप्येकशब्देनाजेव गृह्यते । यदि ह्येकशब्देन पदं गृह्येत ततो नियम[2]कारणाभावात्सर्वेषां पदानां पर्यायेण वर्जनात् स्वरनियमो न स्यात् । अचस्तु ग्रहणे यस्याचः स्वरो बलवान् स वर्ज्यत इत्यनियमाभावः ॥

**( उद्योतः )** ननु सूत्रे 'पदम्' इत्युक्तेः 'पदानि' इति भाष्यमयुक्तमत आह—**जाताविति** ॥ तत्र दृष्टान्तमाह—**यथा-ग्रहमिति** । सङ्ख्याया अविवक्षा चेयमेव यज्जातावेकवचनकरणम् ॥ **संस्कार्यत्वम्**—अनुवाद्यत्वम् ॥ नन्वनुदात्तादिशब्दस्याऽचि परिभाषितत्वात्पदेन सामानाधिकरण्यमयुक्तमत आह—**अनुदात्तशब्दमिति** ॥ **गुणयोगादिति** । गुणगुणिनोरभेदोपचारादित्यर्थः ॥ नन्वज्धर्मानुदात्तत्वादिना कथमज्समुदायरूपपदस्य व्यपदेशोऽत आह—**तत्राचामिति** ॥ **तद्धर्मेति**—बहुव्रीहावनिजन्तम् ॥

भाष्ये—**नेत्याहेति** । लक्ष्यविरोधादिति भावः ॥ भाष्ये—**पदे येषामुदात्तप्रसङ्ग इति** । येषामचां मध्ये कस्यचिदुदात्तप्रसङ्ग इत्यर्थः । उदात्तग्रहणमुपलक्षणं स्वरितस्यापि ॥ **पदानुवादेनाचामिति** । एवं च पदस्य साक्षान्न संस्कार्यत्वमपीति भावः । **परे तु**—एकत्वविवक्षाकथनस्य नोपयोगः । **किञ्च** विवक्षायां पदान्तरे स्वरो न स्यात् । तस्माद्यावति पदत्वं समाप्तं तावत्यस्य प्रवृत्तिरिति न दोष **इत्याहुः** ॥ **अच उच्यन्त इति** । पदेन[3] सामानाधिकरण्यं तु अर्शआद्यचा बोध्यम् ॥ ननु पदस्याऽपि श्रवणात् एकशब्देन तस्यापि ग्रहणं स्यादत आह—**यदि हीति** ॥ **सर्वेषामिति** । सर्वेषामपि तत्तद्रूपेणैकपदत्वादिति भावः ॥ **बलवानिति** । सति-शिष्टत्वादि[4]नेत्यर्थः ॥

**( न्यासे न्यूनत्वाक्षेपभाष्यम् )**

**स तर्हि तथा निर्देशः कर्तव्यः—अनुदात्ताः पदे, अनुदात्ताः पदस्येति वा ॥**

**( प्रदीपः ) स तर्हीति** । अज्झल्[5]समुदायवाचिनः पदशब्दस्याज्मात्रवाचिनाऽनुदात्तशब्देन सामानाधिकरण्यमनुपपन्नमिति भावः ॥

**( समाधानभाष्यम् )**

**न कर्तव्यः ।**

**'अनुदात्तं पदमेकवर्जम्' इत्येव सिद्धम् ।**

**कथम् ?**

**मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा—पुष्पका[6] एषां ते पुष्पकाः, कालका एषां ते कालका इति ।**

**अथवा-अकारो मत्वर्थीयः । तद्यथा—तुन्दः, घाट इति ॥**

**( प्रदीपः ) मतुब्लोप इति** । अवयवावयविनोरभेदोपचारादनुत्पत्तिरेव मतुब्लोपः । न तु 'गुणवचनेभ्यो लुक्' इति मतुब्लोपः । अनुदात्तशब्दस्या[7]चि संज्ञात्वेन विनियोगात् गुणवचनत्वाभावात् ॥ **पुष्पका इति** । त्रयो बिन्दव उच्यन्ते । तद्योगाद्बिडालाः-**पुष्पका** इत्याहुः ॥

**अथवेति** । भेदसम्बन्धाश्रयेण प्रतिपाद्यते । अर्शआदेराकृतिगणत्वादकारः ॥

**( उद्योतः )** वक्ष्यमाणरीत्या गुणवचनत्वाभावात् मतुब्लोपाऽसङ्गतेराह—**अवयवेति** ॥ **गुणवचनत्वाभावादिति** । संज्ञासं[8]ज्ञायां गुणवचनसंज्ञाबाधकत्वस्याकडारसूत्रे भाष्ये उक्तत्वादिति भावः । सौत्रोऽत्र मतुब्लोप इति भाष्याशयमन्ये ॥

---

१ पशोर्गुणत्वादिति । यदि पशुपदोत्तरैकवचनार्थैकत्वं न विवक्ष्यते तदाऽनेकपशुकरणयागः प्राप्नोति । प्रधानस्य च यागस्य गुणानुरोधेनावृत्तिः स्यादिति प्रतिप्रधानं गुण आवर्तत इति न्यायो विरुध्येतेति भावः । ननु 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहस्य प्राधान्यादेकत्वस्य च गुणत्वात्तत्रैकत्वं न विवक्ष्यत इति युक्तम्, तथैव पशुना यजेतेत्यत्र यागस्य मुख्यत्वेन पशोश्चामुख्यत्वेन तदुत्तरप्रत्ययार्थैकत्वस्य सुतरामविवक्षणात्कथमेकत्वं तत्र विवक्षितमिति चेत्, अत्रैकत्वस्याविवक्षैव, प्रति प्रधानमिति न्यायानुरोधात् । ननु पशोरेकत्वस्य विवक्षणेऽपि श्रुतिप्रमाणात् तस्य पशुनैवान्वयो न तु यागेन । यजेतेति पदान्तरेणोपात्तयागेन तु वाक्यरूपप्रमाणादेकत्वसम्बन्धावगतिः । वाक्याच्च श्रुतिर्बलीयसीति पशुनैव तस्यान्वयो न यागेनेत्यनेकपशुकरणकयागेऽपि न क्षतिरिति चेन्मैवम् । 'पशुना' इति यद्यप्येकं पदम्, तथापि प्रकृत्या पशुर्निर्दिष्टः, प्रत्ययेन कारकत्वम्-एकत्वमित्युभयं निर्दिष्टम् । तत एकत्वस्य पश्वपेक्षया सन्निहिततरे कारके प्रथमं सम्बन्धो भवति । कारकत्वं नाम क्रियाजनकत्वम् । तथा सति कारकद्वारा क्रियायामपि सम्बन्धः प्रत्ययेनैवावगतः । क्रियाविशेषश्च सन्निहितपदान्तरोपात्तो याग इति यजनाङ्गत्वमेकत्वस्य सिद्ध्यति । तच्चैकत्वं स्वयममूर्ततया यागक्रियां निष्पादयितुमसमर्थं सत्तत्र समर्थं पशुद्रव्यं पश्चादवच्छिनत्ति । तत एकत्वस्य यागाङ्गत्वान्नानेव पशुकरणकयागसिद्धिः । एवञ्चैकत्वस्य क्रियायामन्वय एव श्रौतः पशुद्रव्येण च वाक्यादवगम्यत इति स दुर्बलः । तथा प्रस्तुतेऽपि पदमनुदात्तं भवतीत्यत्र पदशब्दोत्तरप्रथमायाः कारकविभक्तित्वेन तदुपस्थितैकत्वस्य क्रियायामन्वयः श्रौत इति तस्य विवक्षणमिति भावः ॥

२ नियमकारणाभावादिति । यथैकपदेनाचो ग्रहणे यस्याचः स्वरो बलवान् स वर्ज्यत इति नियमो वक्तुं शक्यते । तथा एकशब्देन पदस्य ग्रहणे कस्य पदस्य स्वरो बलवानिति नियमो वक्तुं न शक्यते, कारणाभावादिति भावः ॥

३ ननु अनुदात्तशब्दस्याज्बोधकत्वे कथं तस्य पदशब्देन सामानाधिकरण्यमत आह—पदेनेति । अनुदात्तशब्दोऽर्शआद्यजन्त इति भावः ॥

४ स्वरस्य बलवत्त्वे हेतुमाह—सति शिष्टेति ॥

५ 'अल्समुदाय' इति क. पाठः ॥

६ 'पुष्यकाः' इति ट. पाठः ॥

७ 'शब्दस्यापि संज्ञात्वेन' इति ठ. पाठः ॥

८ संज्ञासंज्ञायामिति । तत्र हि सूत्रे भाष्येऽर्थवच्छब्दमात्रस्य प्रातिपदिकसंज्ञां विधायान्याः संज्ञा विधीयन्ते । ततश्च तस्याः प्रातिपदिकसंज्ञाया गुणवचनसंज्ञा, ततश्च समासादिसंज्ञाः । गुणवचनसंज्ञा च प्रातिपदिकसंज्ञया समाविशति, संज्ञान्तरविनिर्मुक्तस्थलाभावात् । ततः पराश्च संज्ञा गुणवचनसंज्ञाया बाधिका भविष्यन्तीति गुणवचनशब्देनात्र शास्त्रे जातिसंज्ञाऽव्ययकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्दो गृह्यत इति बोध्यम् । अतोऽनुदात्तशब्दात् 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति लुक् न भवति, अनुदात्तसंज्ञया गुणवचनसंज्ञाबाधादित्यर्थः ॥

( सूत्राक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

( प्रदीपः ) **किमर्थमिति** । पर्याययौगपद्ययोर्वक्ष्यमाणेन ज्ञापकेन निरासाचार्थः सूत्रेणेति मत्वा **प्रश्नः** ॥

( सूत्रप्रयोजने श्लोकभाष्यम् )

**आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।**
**पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥**

**आगमस्य—'चतुरनडुहोरामुदात्तः' (७।१।९८) । चत्वारः, अनड्वाहः ।**

**विकारस्य—'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (७।१।७५) । अस्थ्ना, दध्ना ।**

**प्रकृतेः—गोपायति, धूपायति ।**

**प्रत्ययस्य च—कर्तव्यम्, तैत्तिरीयः ।**

**एतेषां पदे युगपत्स्वरः प्राप्नोति । इष्यते चैक एव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यनुदात्तं पदमेकवर्जम् । एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) **चत्वार इति** । 'चतेरुरन्'इति चतुःशब्द आद्युदात्तः, आमुदात्तः । तत्र विरोधाभावादुदात्तद्वयप्रसङ्गः ॥ **अनड्वाह इति** । अनो वहतीति अनसि वहेः 'क्विप् डश्चानसः' इति क्विप् । अनश्शब्दोऽसुन्प्रत्ययान्त आद्युदात्तः । 'गतिकारकोपपदात्कृत्'इति उत्तरपदप्रकृतिस्वरेण धातुरन्तोदात्तः ॥

**अस्थ्नेति** । 'असिसञ्जिभ्यां क्थिन्'इत्याद्युदात्तोऽस्थिशब्दः, दधिशब्दः 'नब्विषयस्यानिसन्तस्य'इत्याद्युदात्तः ॥

( उद्द्योतः ) **अनड्वाह इति** । अत्रोपपदस्वराम्स्वरयोः श्रवणप्रसङ्गो दोषः ॥ **नब्विषयस्य**—नपुंसकविषयस्य ॥ तित्तिरिः—मध्योदात्तः ॥

( सूत्राक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् ।**

( सूत्रप्रयोजनसाधकज्ञापकश्लोकभाष्यम् )

**यौगपद्यं तवै सिद्धम्**

**यदयं 'तवै चान्तश्च युगपत्' (६।२।५१) इति सिद्धे यौगपद्ये यौगपद्यं शास्ति तज्ज्ञापयत्याचार्यः—न युगपत्स्वरो भवतीति ॥**

( प्रदीपः ) **तवै चान्तश्च युगपदिति** । अनेन गतेः पूर्वस्य पदस्य प्रकृतिस्वरो विधीयते, तवैप्रत्ययान्तस्य चान्तोदात्तत्वम् । तत्र 'युगपत्'ग्रहणमन्तरेण विरोधाभावाद्यौगपद्ये सिद्धे युगपद्ग्रहणमन्यत्र यौगपद्याभावस्य ज्ञापकम् ॥

( उद्द्योतः ) वार्तिके 'तवै'ग्रहणं सूत्रोपलक्षणम् ॥

( प्रत्याक्षेपभाष्यम् )

**पर्यायस्तर्हि प्राप्नोति ।**

( प्रदीपः ) **पर्यायस्तर्हीति** । ज्ञापकेन यौगपद्ये निरस्ते पर्यायप्रसङ्गः ॥

( प्रत्याक्षेपसमाधानश्लोकभाष्यम् )

**पर्यायो रिक्तशासनात् ।**

**यदयं 'रिक्ते विभाषा' (६।१।२०८) इति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यः-न पर्यायो भवतीति ॥**

( प्रदीपः ) **रिक्ते विभाषेति** । अनेनाद्युदात्तत्वम् । पक्षे त्वन्तोदात्तत्वं तस्य प्रत्ययस्वरेण । तदेवं पर्याययौगपद्यनिरासे परनित्यत्वादियुक्तः स्वरो भविष्यतीति नार्थः सूत्रेण ॥

( उद्द्योतः ) **अनेनाद्युदात्तत्वमिति** । 'विकल्पेन विधीयते' इति शेषः ॥

( प्रयोजनाक्षेपश्लोकभाष्यम् )

**उदात्ते ज्ञापकं त्वेतत्**

**एतदुदात्ते ज्ञापकं स्यात् ॥**

( प्रयोजनसाधकश्लोकभाष्यम् )

**स्वरितेन समाविशेत् ॥**[1]

**स्वरितेन समावेशः प्राप्नोति । स्वरितेऽप्युदात्तोऽस्ति । तस्मान्नार्थोऽनेन योगेन ॥**

( प्रदीपः ) **स्वरितेनेति** । उदात्तस्वरितयोरेकस्मिन् पदे समावेशप्रसङ्गः ॥ **स्वरितेऽपीति** । उदात्ते पर्याययौगपद्यनिरासे ज्ञापकात्कृते स्वरितेऽप्युदात्तसद्भावादुदात्तस्वरितयोरपि पर्याययौगपद्यनिरासः सिद्ध इत्यर्थः । उदात्तश्रुतिमात्रविषयस्य ज्ञापकस्याश्रयणादेवं लभ्यते । यत्तु—उदात्तश्रुत्या स्वरितस्याग्रहणमिह शास्त्रे, तद्युक्तम् । मुख्यस्योदात्तस्याचः सञ्ज्ञिनो ग्रहणस्य युक्तत्वात् । तथा च 'उदात्तस्वरितयोः—' इत्यादौ भेदेन स्वरितो निर्दिष्टः ॥

( उद्द्योतः ) **उदात्तस्वरितयोरपीति** । उदात्तश्रुतिसामान्यविषयज्ञापकाश्रयणादस्वरकस्याऽच उच्चारणासंभवाच्चानुदात्तत्वसिद्धिरिति तात्पर्यम् ॥ नन्वेवमुदात्तग्रहणेन स्वरितस्यापि ग्रहणे स्वरितादनुदात्तस्यापि स्वरितः[3] स्यादत आह—**यत्त्विति** ॥ अत्रैवार्थे लिङ्गमप्याह—**तथा चेति** । अनेन स्वरितविषयत्वं ज्ञापकस्यासङ्गतमित्युक्तम् ॥

---

१ 'स्वरितेन तु समावेशः' इति च झ. पाठः ॥

२ उदात्तस्वरितयोः शास्त्रेऽसंकरात्कथं स्वरितसाधारण्यमत आह—उदात्तेति । उदात्तस्वरितयोः संकरे 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्ठञ्' इति सूत्रेऽन्तोदात्तपदेनान्तस्वरितस्यापि ग्रहणे—अन्तोदात्तात्किम् ? शर्कराधानम् । अत्र शर्कराधानशब्दे धाशब्दाकार उदात्तः कृदुत्तरपदप्रकृतिस्वरेण ङित्स्वरस्यावस्थानात् । ततश्च 'उदात्तादनु—' इति स्वरिते शर्कराधानशब्दादपि ठञ्प्रसङ्गः ॥

३ स्वरित इति । उदात्तादनुदात्तस्य स्वरित इत्यनेन ॥

( वार्तिकावतरणभाष्यम् )

**आरभ्यमाणेऽप्येतस्मिन्योगे—**

**(प्रदीपः) आरभ्यमाणेऽपीति ।** ज्ञापकादस्पष्टा सन्दिग्धा वा प्रतिपत्तिर्भवति । साक्षाद्विधाने तु स्पष्टा चासन्दिग्धा चेति यदि योग आरभ्यते तदाऽऽरभ्यमाणे दोषप्रसङ्गः । इदमेवानुदात्तस्य विधायकं लक्षणमिति मत्वा दोषोपन्यासः । एकमचं वर्जयित्वा शिष्टानामचामनेनानुदात्तत्वं क्रियते । तत्र येषामचामुदात्तत्वं स्वरितत्वं वा साक्षान्न विधीयते तेऽस्यावकाश इति येषां शास्त्रेणोदात्तत्वं स्वरितत्वं वा विधीयते तच्चैषां न निवर्तयेत् । यथा 'आमलकीजः' इत्यत्र चतुर्णामुदात्तत्वं शास्त्रेण विधीयते–ङीषः प्रत्ययाद्युदात्तत्वम्, 'गतिकारकोपपदात्कृत्' इति कृत्स्वरः, 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इति पूर्वपदाद्युदात्तत्वम्, 'अन्त्यात्पूर्वं बह्वचः' इति लकाराकारस्योदात्तत्वमिति विरोधाभावाद्युगपदुदात्तचतुष्टयं स्यात् । शिष्टस्य चानुदात्तत्वम् । 'एकवर्जम्'इत्यस्माद्धि वचनाद्यस्य यस्योदात्तस्वरितविधानं स स वर्ज्यत इति विप्रतिषेधानुपपत्तिश्चोद्यते । तथा च 'अन्तश्च तवै युगपत्' इत्यादिषु पूर्वोक्तेन प्रकारेण द्वावपि वर्ज्येते । उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वं न भवति, 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' इति पक्षे प्रतिषेधात् ॥

**( उद्योतः )** एतन्मूलकमेव भाष्यकार आह—**आरभ्यमाणेऽपीति** ॥ तत्र युक्त्यन्तरमप्याह—**ज्ञापकादिति** ॥ **अस्पष्टत्वम्**–विलम्बितत्वम् । सामान्यविषयत्वविशेषविषयत्वाभ्यां ज्ञापकं सन्दिग्धम् ॥ नन्वस्याः परिभाषात्वे 'दीर्घकाश–' इत्यादावस्या उपस्थानात् 'आमलकीजः' इत्यादावुभयोः स्वरयोरसंभवाद्विप्रतिषेध उपपद्यत एवेत्यत आह—**इदमेवेति** ॥ **एकमचमिति** । एकग्रहणं शास्त्रान्तरविहितस्वरकोपलक्षणम् ॥ **न निवर्तयेदिति । एषाम्**–अचां, **तच्च**–उदात्तत्वं त्वरितत्वं च, **इदं**–शास्त्रं न निवर्तयेदित्यन्वयः । अप्राप्तविधाने चरितार्थत्वात्प्राप्तनिवृत्तौ व्यापाराऽभाव इति भावः ॥ **कृत्स्वर इति ।** जकाराकारस्येत्यर्थः ॥ **शिष्टस्य**—मकाराकारस्य ॥ नन्वेकग्रहणात्कथं चतुर्णामुदात्तानां श्रवणमत आह—**एकवर्जमित्यस्मादिति ।** अस्याशय उक्तः ॥ इदं च परिभाषापक्षेऽपि समानमित्याह—**तथा चेति ।** एतदुत्तरमुक्तप्रयोगे स्वरितत्वाभावव्युत्पादनं पाक्षिकं कैयटेन कृतं तत्किमर्थमिति **चिन्त्यम्** ॥

(६२५७ सूत्रस्यानुदात्तत्वविधायकत्वे दोषवार्तिकम् ॥१॥)

**॥ * ॥ अनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन् युगपत्संभवात् ॥ * ॥**

( भाष्यम् ) **अनुदात्ते विप्रतिषेधो नोपपद्यते । पठिष्यँति ह्याचार्यो विप्रतिषेधम्—*जे दीर्घाद्बह्वचः* इति, स विप्रतिषेधो नोपपद्यते ।**

**किं कारणम् ?**

**एकस्मिन् युगपत्संभवात् । असति खलु सम्भवे विप्रतिषेधो भवति, अस्ति च सम्भवो यदुभयं स्यात् ।**

**कथं सम्भवः ?**

**यदाऽनुदात्तं पदमेकवर्जमित्युच्यते । तदिह नास्ति ।**

**किं कारणम् ?**

**नानेनोदात्तत्वं प्रतिषिध्यते ।**

**किं तर्हि ?**

**अनुदात्तत्वमनेन क्रियते, अस्ति च सम्भवो यदुभयोश्चोदात्तत्वं स्यात्, अन्येषां चानुदात्तत्वम् ॥**

**( प्रदीपः ) एकस्मिन्निति ।** पद इत्यर्थः ॥

**नानेनोदात्तत्वं प्रतिषिध्यत इति ।** यदि 'नोदात्तं पदमेकवर्जम्' इति सूत्रन्यासं कृत्वा उदात्तत्वं प्रतिषिध्येत, न स्याद्दोषः; एकमचं वर्जयित्वा सर्वेषामुदात्तत्वनिषेधात् । क्वचित्पाठः–'नानेनोदात्तत्वं क्रियते' इति । तत्रायमर्थः–यदि 'उदात्तं पदमेकम्' इति सूत्रं कृत्वोदात्तमेकमेव पदे भवतीति नियमायोदात्तत्वं क्रियते तदा न स्याद्दोषः ॥

**( उद्योतः ) यदि नोदात्तं पदमिति ।** अत्र न्यासे 'एक'पदं एकत्वसङ्ख्यावत्परम्, 'तवै चान्तश्च–' इत्यादौ तु युगपद्ग्रहणसामर्थ्यात्समावेश इति भावः ॥

( अस्याधिकारत्वमाश्रित्य दोषनिवारकभाष्यम् )

**यदि पुनरयमधिकारो विज्ञायते ।**

**किं कृतं भवति ?**

**अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठते ।**

---

१ सूत्रप्रतिपादितार्थस्यान्यथासिद्धत्वे तदारंभणं वृथा–इत्याशङ्कावारणायाह—ज्ञापकादिति ॥

२ ननु एकवर्जमितरत्सर्वमनुदात्तं भवतीत्युच्यते, तथाचामलकीज इत्यत्र कथं चतुर्णामुदात्तत्वं भवति ? तदाह—एकवर्जमित्यस्माद्धीति ॥

३ ननु आमलकीज इत्यत्र मकाराकारस्य स्वरितत्वं स्यादिति शिष्टस्यानुदात्तस्य श्रवणं न स्यादत आह—उदात्तादिति ॥

४ एतन्मूलकमेव–ज्ञापकस्य स्वरितविषयत्वाभावमूलकमेव ॥

५ ज्ञापकस्य सन्दिग्धत्वमुपपादयति—सामान्येति ॥

६ चिन्त्यमिति । अनुदात्तं पदमेकवर्जमित्यस्यानुदात्तविधायकत्वे तस्य श्रवणमावश्यकम् । यदि च तस्य स्वरितेनापहारः स्यात्तदाऽस्य सूत्रस्य वैयर्थ्यं स्यादित्याशङ्क्य तत्प्रदर्शनमिति कैय्यटाशयो युक्त एवेति केचित् ॥

७ पठिष्यतीति । 'दीर्घकाशतुषभ्राष्ट्रवटं जे' (६।२।८२) इति सूत्रे इति शेषः ॥

जे दीर्घान्तस्यादिरुदात्तो भवति, उपस्थितमिदं भवति-अनुदात्तं पदमेकवर्जमिति ।

'अन्त्यात्पूर्वं बह्वचः' (६।२।८३), उपस्थितमिदं भवति—अनुदात्तं पदमेकवर्जमिति ।

तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति परेण भविष्यति, परत्वात् ॥

( प्रदीपः ) आचार्यदेशीय आह—यदि पुनरिति । अस्य स्वातन्त्र्याभावादुत्तरैर्वाक्यैरेकवाक्यत्वे सति यस्य स्वरो विधीयते तद्वर्जमन्येषामनुदात्तत्वं क्रियत इति द्वयोरपि योगयोरस्योपस्थाने क एकोऽनुदात्तत्वे वर्ज्यते को न वर्ज्यत इत्युपपद्यते विप्रतिषेधः ॥

( उद्द्योतः ) अत्र पक्षे विप्रतिषेधोपपत्तिं दर्शयति—अस्य स्वातन्त्र्याभावादिति ॥ क एक इति । किं 'दीर्घकाश–' इति किं वा 'अन्त्यात्पूर्वम्–' इतीत्यर्थः ॥

( अधिकारत्वे दोषभाष्यम् )

नैवं शक्यम् । एवमपि षाष्ठिक एव स्वरः संगृहीतः स्यात्, येऽन्ये सप्ताध्याय्यां स्वरास्ते न संगृहीताः स्युः-'समानोदरे शयित ओ चोदात्तः' (४।४।१०८) 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (७।१।७५) इति ॥

( प्रदीपः ) नैवं शक्यमिति । अधिकार आश्रयितुमशक्यः, अव्याप्तिप्रसङ्गात् ॥

( उद्द्योतः ) भाष्ये—षाष्ठिक एव स्वर इति । षष्ठाध्यायस्थस्वरप्रकरणस्य इत्यर्थः ॥ येऽन्ये सप्ताध्याय्यामिति । षाष्ठिकातिरिक्ता ये सप्ताध्याय्यां स्वरा इत्यर्थः । अष्टमे तु नास्याः सिद्धान्तेऽप्युपस्थितिः, व्याख्यानादिति भावः । षष्ठेऽपि 'सं[1]हस्य सः' इत्यादेरसङ्ग्रहः ॥

( ६२५८ न्यासान्तरेण दोषनिवारकवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं त्वेकाननुदात्तत्वात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

एकाननुदात्तत्वात् ।

एकाननुदात्तं पदं भवतीति वक्तव्यम् ।

किमिदमेकाननुदात्तत्वादिति ?

न उदात्तः—अनुदात्तः, न अनुदात्तः—अननुदात्तः । एकः—अननुदात्तोऽस्मिंस्तदिदमेकाननुदात्तम् । एकाननुदात्तत्वादिति ।

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( प्रदीपः ) सिद्धं त्विति । 'एकाननुदात्तं पदम्' इति परि[2]भाषा कर्तव्या । य[3]स्याचः स्वरो विधीयते स एवाविद्यमानोदात्तो न भवति । शिष्टस्त्वविद्यमानोदात्त इति उदात्तनिषेधः सम्पद्यते । य[4]त्र चैकस्य स्वरो विधीयते तत्रेदमुपतिष्ठते इति उभयोरस्योपस्थाने विप्रतिषेधोपपत्तिः ॥

( उद्द्योतः ) ननु न्यासान्तरेऽपि विधित्वे स एव दोषोऽत आह—परिभाषेति । नन्वेवमपि 'एकोदात्तं पदम्' इत्येव परिभाषा कर्तव्या । एक एवोदात्तो यत्र तादृशमर्थाच्छिष्टमुदात्तरहितमित्यर्थलाभात्–इति चेत्, सत्यम् । तत्रैव तात्पर्यात्, नञ्द्वयस्य भावदार्ढ्यबोधकत्वात् ॥ यत्र चैकस्येति—तत्तदुदात्तादिशास्त्रस्योद्देश्यपरम् ॥

( परिभाषात्वस्वीकारेण न्यासान्तरनिवारकभाष्यम् )

यथान्यासमेवास्तु ।

ननु चोक्तम्—*अनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन् युगपत्संभवात्* इति ।

नैष दोषः ।

परिभाषेयम् ।

किं कृतं भवति ?

कार्य[5]कालं संज्ञापरिभाषम् । यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम् ।

जे दीर्घान्तस्यादिरुदात्तो भवतीत्युपस्थितमिदं भवति—'अनुदात्तं पदमेकवर्जम्' इति ।

'अन्त्यात्पूर्वं बह्वचः' इत्युपस्थितमिदं भवति-'अनुदात्तं पदमेकवर्जम्' इति ।

[6]तत्र पूर्वेणास्तु वर्ज्यमानता परेण वेति-परेण भविष्यति, परत्वात् ॥

अथवा नेदं पारि[7]भाषिकानुदात्तस्य ग्रहणम् ।

किं तर्हि ?

अन्वर्थग्रहणम् । अविद्यमानोदात्तम्-अनुदात्तमिति ॥

( प्रदीपः ) परिभाषेयमिति । न्यासान्तरे यदि परिभाषात्वमाश्रीयते तदा यथान्यासेऽपि न दोषः, फले विशेषाभावात् । स्वरविधिलिङ्गा चेयं परिभाषा । एकशब्दः संख्येयवाची । अनुदात्तश्रुत्युपादानात्तद्विरोधी स्वरित उदात्तश्च संख्येयो[8] गृह्यते । ततश्चोदात्तस्वरितविधावस्या उपस्थानाद्द्वयोर्लक्षणयोरस्या उपस्थाने विप्रतिषेधोपपत्तिः ॥

अथवेति । लक्षणमिदमुदात्तत्वप्रतिषेधार्थम्, एकवर्जमित्यनेन तु प्रतिषेधपर्युदासः क्रियत इति लक्षणद्वयस्यैकस्मिन्

१ सहस्येति । तत्र हि सूत्रे भाष्ये सादेशस्याद्युदात्तनिपातनं करिष्यत इत्युक्तम्, तस्यासंग्रहः स्यात् । अस्याधिकारत्वेऽपि स्वरप्रकरण एवोपस्थानं भवेत्, न तु तद्बहिर्भूते सहस्य स इत्यत्रेति भावः ॥

२ ननु न्यासान्तरेऽप्यधिकारत्वे स एव दोषोऽत आह—परिभाषेति ॥

३ एकपदार्थमाह—यस्याच इति ॥

४ पूर्ववार्तिकोक्तं विप्रतिषेधं साधयति—यत्रेति ॥

५ 'कार्यकालं हि संज्ञा' इति छ. पाठः ॥

६ भाष्यकारो विप्रतिषेधं साधयति—तत्र पूर्वेणास्त्विति ॥

७ 'पारिभाषिकस्यानुदात्तस्य' इति ट. पाठः ॥

८ संख्येयः–एकपदवाच्यः । वर्जशब्दार्थभेदप्रतियोगीत्यर्थः ॥

पदे सन्निपाते को वर्ज्यताम्–इत्युपपद्यते विप्रतिषेधः । स्वरितेऽप्युदात्तोऽस्तीति तस्यापि प्रतिषेधोऽनेन विधीयते ॥

(उद्द्योतः) ननु विधित्वे उद्भावितदोषस्य परिभाषात्वेन कथं परिहारः? अत आह—न्यासान्तर इति ॥ तद्विरोधीति । अनुदात्तस्य विधेयत्वेन तद्वर्जनासम्भव इति भावः ॥

उदात्तत्वप्रतिषेधार्थमिति । सर्वं पदमुदात्तरहितं भवतीत्यर्थादिति भावः ॥ प्रतिषेधपर्युदास इति । कस्यैकस्य पर्युदास इति चेत्, यस्य लक्षणान्तरेण स्वरविधिरिति गृहाण । तत्रोदात्तत्वप्रतिषेधेऽनुदात्तत्वमेव भवति, अनुदात्तपदे उपस्थितत्वात् । तेन नैकश्रुतिः, नाप्यस्वरकता । स्वरितेऽप्युदात्तोऽस्तीति । इदम् 'उदात्तस्वरितयोः–' इति ज्ञापकात्पूर्वोक्तादयुक्तमिति परिभाषापक्ष एव युक्तः ॥

(६२५९ आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ एकवर्जमिति चाप्रसिद्धिः सन्देहात् ॥ * ॥

(भाष्यम्) एकवर्जमिति चाप्रसिद्धिः ।

कुतः?

सन्देहात् । न ज्ञायते क एको वर्जयितव्य इति ॥

(प्रदीपः) एकवर्जमिति चाप्रसिद्धिरिति । परनित्यान्तरङ्गत्वेन सर्वत्र व्यवस्था नाभिमतेति भावः ॥

(उद्द्योतः) ननु परत्वादिभिर्व्यवस्थायाः सुगमत्वात् 'सन्देहात्' इति हेतुरसिद्धोऽत आह—परेत्यादि ॥ सर्वत्रेति । 'गोपायति' 'ऋतीयते' 'औपगवत्वम्' इत्यादौ ॥

(६२६० समाधानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ सिद्धं तु यस्मिन्ननुदात्त उदात्तवचनानर्थक्यं तद्वर्जम् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ।

कथम्?

यस्मिन्ननुदात्ते उदात्तवचनमनर्थकं स्यात्स एको वर्जयितव्यः ॥

(प्रदीपः) सिद्धं त्विति । अनवकाशः स्वरो वर्ज्येत इत्यर्थः ॥

(६२६१ समाधानाक्षेपवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः ॥ * ॥

(भाष्यम्) प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः स्यात् ।

प्रकृतिस्वरस्यावकाशः—यत्रानुदात्तः प्रत्ययः । पचति, पठति ।

प्रत्ययस्वरस्यावकाशः—यत्रानुदात्ता प्रकृतिः । समत्वम्, सिमत्वम् ।

इहोभयं प्राप्नोति—कर्तव्यम्, तैत्तिरीयः ॥

(प्रदीपः) अनवकाशत्वेन सर्वत्र व्यवस्था नोपपद्यत इति मत्वाऽऽह—प्रकृतिप्रत्यययोरिति ॥

(उद्द्योतः) समत्वमिति–अत्र 'त्वत्त्वसमसिमेत्यनुच्चानि' इति प्रकृतिरनुदात्ता । तित्तिरिः–'शकुनीनां च लघुपूर्वम्' इति मध्योदात्तः ॥

(समाधानभाष्यम्)

विप्रतिषेधात्प्रत्ययस्वरः । विप्रतिषेधात्प्रत्ययस्वरो भविष्यति ।

नैवम् । विप्रतिषेधे परमित्युच्यते । न परः प्रत्ययस्वरः ।

नैष दोषः । इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥

(६२६२ भाष्योक्तसमाधानाक्षेपवार्तिकम् ॥ ६ ॥)

## ॥ * ॥ विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्याद्यादिषु चित्करणम् ॥ * ॥

(भाष्यम्) विप्रतिषेधात् प्रत्ययस्वर इति चेत्काम्यादयश्चितः कर्तव्याः । पुत्रकाम्यति, गोपायति, ऋतीयते ।

नैष दोषः ।

प्रकृतिस्वरोऽत्र बाधको भविष्यति ॥

(प्रदीपः) विप्रतिषेधादिति । पूर्वविप्रतिषेधादित्यर्थः ॥ काम्याद्यादय इति । काम्यचश्चित्करणं प्रत्याख्यातं तत्कर्तव्यमेव, आयेयङोस्त्वपूर्वं चित्त्वं कर्तव्यमिति–उभयोपादानम् । अन्यथा पूर्वविप्रतिषेधात् धातुस्वरं बाधित्वा प्रत्ययाद्युदात्तत्वं स्यात् ॥

प्रकृतिस्वर इति । धातुस्वरः सति शिष्टत्वाद्भविष्यतीति भावः ॥

(उद्द्योतः) परत्वस्य पूर्वविप्रतिषेधेन बाधात् कथं प्रकृतिस्वरस्य बाधकत्वमत आह—धातुस्वर इति । प्रत्ययत्वप्रयुक्तस्वरस्य प्रत्ययसन्नियोगशिष्टत्वाद्धातुत्वप्रयुक्तस्वरस्य सति शिष्टत्वमिति भावः ॥ ननु काम्यचश्चित्त्वस्य कृतत्वात्कर्तव्यतोक्तिरसङ्गतेत्यत आह—काम्यच इति ॥ प्रत्ययाद्युदात्तत्वमिति । काम्यायेयङामित्यर्थः ॥

(आक्षेपभाष्यम्)

प्रकृतिस्वरे प्रत्ययस्वराभावः । कर्तव्यम् । तैत्तिरीयम् ॥

---

१ 'मध्योदात्तम्' इति ग. ज. पाठः ॥

२ धातुस्वर इति । गोपायतीत्यादौ गुपधातोः सत्यये विशिष्टस्य 'सनाद्यन्ता–' इति धातुत्वे धातुस्वरस्य सतिशिष्टत्वमिति भावः ॥

३ गोपायतीत्यादौ धातुस्वरस्य सतिशिष्टत्वं सयुक्तिकमाह—प्रत्ययत्वेति ॥

४ 'शिष्टप्रकृतिस्वरत्वमिति' इति झ. पाठः ॥

५ प्रकृतिस्वर इति । एतद्वार्तिकमिति मायः सर्वेपून्यासः । अ-पुस्तके नैतद्वार्तिकम् । उद्द्योतेऽपि 'शङ्कते–भाष्ये' इत्युपन्यासेन नैतद्वार्तिकमिति निश्चीयते ॥

( उद्द्योतः ) 'प्रकृतिस्वरोऽत्र' इत्यस्य परत्वादित्याशयं बुद्ध्वा शङ्कते भाष्ये—प्रकृतिस्वरे प्रत्ययस्वराभाव इति। परत्वात्प्रकृतिस्वर एव स्यादित्यर्थः। फिट्स्वरोऽपि पाष्ठ एवेति तैत्तिरीयेऽपि दोषः। यद्वा फिट्सूत्राणि पाणिन्यपेक्षया आधुनिककर्तृकाणीति परत्वं बोध्यम्॥

( ६२६३ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ सिद्धं तु प्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वरभावः ॥ * ॥

( भाष्यम् ) सिद्धमेतत्।

कथम्?

प्रकृतिस्वराद्बलीयस्त्वात् प्रत्ययस्वरस्य भावः सिद्धः।

कथम्?

प्रकृतिस्वरात् प्रत्ययस्वरो बलीयान् भवतीति वक्तव्यम्॥

( प्रदीपः ) सिद्धमिति। प्रकृतिस्वराद्बलीयस्त्वम्—इति सुप्सुपेति समासः। सति शिष्टबलीयस्त्वाद्धि 'कर्तव्यम्' इत्यादौ प्रकृतिस्वरं बाधित्वा प्रत्ययस्वरो भवति। गोपायतीत्यादौ धातुस्वर एव सति शिष्ट इति प्रत्ययस्वराभावः॥

( उद्द्योतः ) समाधत्ते—सिद्धं त्विति॥ ननु प्रकृतिस्वरस्य बलीयस्त्वं कथं प्रत्ययस्वरभावे हेतुरत आह—प्रकृतिस्वरादिति। नात्र षष्ठीसमास इति भावः॥

( ६२६४ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ सति शिष्टस्वरबलीयस्त्वं च ॥ * ॥

( भाष्यम् ) सति शिष्टस्वरो बलीयान् भवतीति वक्तव्यम्॥

( उद्द्योतः ) एवमपि गोपायतीत्यादौ दोषोऽत आह—भाष्ये—सति शिष्टेति। एवं च व्यापकत्वादिदमेवादर्तव्यमिति भावः। तद्ध्वनयन्नाह—'सति शिष्टबलीयस्त्वात्' इति॥

( ६२६५ उपसंख्यानप्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ तच्चानेकप्रत्ययसमासार्थम् ॥ * ॥

( भाष्यम् ) तच्चावश्यं सति शिष्टस्वरबलीयस्त्वं वक्तव्यम्।

किं प्रयोजनम्?

अनेकप्रत्ययार्थमनेकसमासार्थं च।

अनेकप्रत्ययार्थं तावत्—औपगवः, प्रकृतिस्वरमणस्वरो बाधते। औपगवत्वम्, त्वस्वरोऽणस्वरं बाधते। औपगवत्वकम्, त्वस्वरं कस्वरो बाधते।

अनेकसमासार्थम्—राजपुरुषः, राजपुरुषपुत्रः, राजपुरुषपुत्रपुरुषः॥

( प्रदीपः ) कः पुनर्विशेषः-काम्यादयश्रितः क्रियेरन्, सतिशिष्टबलीयस्त्वं वोच्येत-इत्याशङ्क्याह—तच्चेति॥

औपगवत्वमिति। एकयोगलक्षणोऽत्र स्वर इति विप्रतिषेधेन व्यवस्थाया असिद्धत्वात्॥

( उद्द्योतः ) प्रयोजनस्योक्तत्वात्प्रयोजनान्तरकथनमयुक्तमिति शङ्कामपनिनीषन्नाह—कः पुनरिति॥

( सति शिष्टबलीयस्त्वाक्षेपभाष्यम् )

यदि सति शिष्टस्वरबलीयस्त्वमुच्यते, स्यादिस्वरः सार्वधातुकस्वरं बाधेत। सुनुतः, धिनुतः, चिनुतः॥

( प्रदीपः ) स्यादिस्वर इति। विकरणस्वर इत्यर्थः। सर्वधातुके परतः स्यादीनां विधानात् तत्स्वरः सति शिष्टः॥

( ६२६६ समाधानवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात् ॥ * ॥

( भाष्यम् ) स्यादिस्वरस्य चाप्रसङ्गः।

कुतः?

तासेः परस्यानुदात्तवचनात्। यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यः सति शिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इति॥

( प्रदीपः ) तासेः परस्येति। परत्वाल्लादेशेषु कृतेषु तासिः—इति प्रक्रियाश्रयेण ज्ञापकमुच्यते। लावस्थायां तु तासौ कृते सार्वधातुकोत्पत्तौ न ज्ञापकं भवति। लसार्वधातुकस्वरस्य सति शिष्टतया प्रसङ्गात् तद्बाधनार्थत्वादनुदात्तविधानस्य॥

( उद्द्योतः ) लावस्थायां त्विति। अत्र पक्षेऽयमर्थो वाचनिक एवेति बोध्यम्॥

---

१ ननु प्रकृतिस्वरः फिट्सूत्रेण विधीयत इति कथं तस्याष्टाध्यायीपाठकृतप्रत्ययस्वरापेक्षया परत्वन्तदाह—फिट्स्वरोऽपीति॥

२ फिट्स्वराणां षाष्ठे पाठेऽपि कस्मिन् पादे तेषां समावेश इत्याशङ्कायामाह—यद्वेति। नैतदष्टाध्यायीपाठकृतपरत्वम्, किन्त्वेतादृशमपि परत्वं विप्रतिषेधे परमिति सूत्रे परशब्देन गृह्यत इत्याशयः॥

३ प्रकृतिस्वरबलीयस्त्वादित्यस्यार्थमाह—प्रकृतिस्वरादिति। प्रकृतिस्वरापेक्षया बलीयस्त्वादित्यर्थः॥

४ 'भवतीति वक्तव्यम्' इति क. छ. पुस्तकयोर्न॥

५ 'स्वरबलीयस्त्वं च वक्तव्यम्' इति भ. क. ट. पाठः॥

६ ध्वनयन्नाहेति। प्रदीपे इति शेषः। सतिशिष्टस्वरबलीयस्त्वोपसंख्यानेन गोपायति-तैत्तिरीयमित्यादेः सिद्धत्वात्प्रकृतिस्वरबलीयस्त्वोपसंख्यानं न कर्तव्यमिति भावः॥

७ सतिशिष्टस्वरबलीयस्त्वोपसंख्यानस्य व्यापकत्वमुपपादयन् पूर्वोक्तप्रयोजनापेक्षया भिन्नप्रयोजनान्याह भगवान्—अनेकेति॥

८ 'सतिशिष्टतायाप्रसङ्गात्' इति क. ठ. पाठो दृश्यते॥

( ६२६७ प्रकारान्तरेण समाधानवार्तिकम् ॥ ११ ॥ )

॥ * ॥ शास्त्रपरविप्रतिषेधानियमाद्वा शब्दपरविप्रतिषेधात्सिद्धम् ॥ * ॥

( भाष्यम् ) अथवा शास्त्रपरविप्रतिषेधे न सर्वमिष्टं संगृहीतं भवतीति कृत्वा शब्दपरविप्रतिषेधो विज्ञास्यते ।

यदि शब्दपरविप्रतिषेधो भवति, काम्याद्यश्चितः कर्तव्याः । पुत्र काम्यति । गोपायति । ऋतीयते ।

नैष दोषः ।

शब्दपरविप्रतिषेधो नाम स भवति यत्रोभयोर्युगपत्प्रसङ्गः, न च काम्यादिषु युगपत्प्रसङ्गः ॥

( प्रदीपः ) शास्त्रपरेति । 'विप्रतिषेधे परं कार्यम्' इत्यत्र नायं नियमः–लक्षणयोर्विप्रतिषेधे परं भवति–इति । किं तर्हि–एक लक्षणविहितयोरपि कार्ययोर्विप्रतिषेधे परशब्दविषयत्वात्परं कार्यं भवति–इत्येषोऽप्यर्थ आश्रीयते ॥

यदीति । पुत्रकाम्यतीत्यत्र काम्यप्रत्ययस्याद्युदात्तत्वं प्राप्नोति । न ह्यत्र शब्दपरविप्रतिषेधोपपत्तिः, एकत्वात्प्रत्ययस्येति भावः ॥

यत्रोभयोरिति । 'गोपायति' इत्यादौ तु प्रत्ययाद्युदात्तत्वस्य धातुस्वरस्य च युगपत्प्रसङ्गाभावः, कृते प्रत्ययस्वरे आयाद्यन्तस्य धातुत्वे सति धातुस्वरस्य प्रसङ्गात् । तस्मादत्र सतिशिष्टस्यैव बलीयस्त्वमाश्रयणीयम् ॥

( उद्योतः ) वार्तिकेऽनियमो नाम सर्वेष्टासङ्ग्रह इति व्याचष्टे—भाष्ये–न सर्वमिति । कैय्यटस्तु सूत्रे शास्त्रयोर्विप्रतिषेध एव ग्राह्य इति नियमाभावादित्यर्थमाह ॥ ननु शब्दपरविप्रतिषेधः कथं शास्त्राल्लभ्यत इत्यत आह—परशब्दविषयत्वादिति । यथा कार्यस्य स्वतःपरत्वासंभवात्कारणभूतलक्षणद्वारा परत्वाश्रयणं तथा विषयभूतशब्दद्वारेणाप्युपचर्यत इत्यर्थः ॥

यद्यपि 'अचः परस्मिन्' इत्यादौ शब्दपरविप्रतिषेधो भाष्ये दूषितः, अन्तरङ्गत्वेन पूर्वस्यैवापत्तेरिति, तथापि तदनाश्रयणेन दोषान्तरेणैवास्य निराकरणमाह—भाष्ये—यदि शब्दपरेति ॥ न ह्यत्रेति । धातुप्रत्ययस्वरयोरित्यर्थः ॥

शब्दपरविप्रतिषेधाभावे युक्त्यन्तरमप्याह—भाष्ये—यत्रोभयोरिति । एवं चैकत्वाद्युगपत्प्राप्त्यभावाच्च तेन न सिद्धिरित्यर्थः ॥ कृते प्रत्ययस्वरे इति । विशिष्टप्रत्ययस्यैव विधानादिति भावः ॥

( ६२६८ बलीयस्त्वबोधकवार्तिकम् ॥ १२ ॥ )

॥*॥ विभक्तिस्वरान्नञ्स्वरो बलीयान् ॥*॥

( भाष्यम् ) विभक्तिस्वरान्नञ्स्वरो बलीयान् भवतीति[3] वक्तव्यम् ।

विभक्तिस्वरस्यावकाशः—तिस्रस्तिष्ठन्ति ।

नञ्स्वरस्यावकाशः— अब्राह्मणः, अवृषलः ।

इहोभयं प्राप्नोति—अतिस्रः ।

नञ्स्वरो भवति ॥

( प्रदीपः ) विभक्तिस्वरादिति । सतिशिष्टत्वाद्विभक्तिस्वरे प्राप्ते वचनम् ॥

तिस्र इति । 'तिसृभ्यो जसः' इति विभक्तेरुदात्तत्वम् ॥

अतिस्र इति । 'तत्पुरुषे तुल्यार्थ–' इति नञः प्रकृतिस्वरो भवति ॥

( उद्योतः ) भाष्ये—इहोभयं प्राप्नोतीति–आपातप्राप्तिमात्रेण, सति शिष्टत्वाद्विभक्तिस्वरस्यैव प्राप्तेः । अतिस्र इत्यत्र समस्ताद्विभक्तावपि तिसृशब्दात्परत्वमस्त्येवेति 'तिसृभ्यो जसः' इत्यस्य प्राप्तिः । एवञ्च सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणस्वरान्नञ्स्वराच्चेति फलितम् ॥

( ६२६९ बलीयस्त्वबोधकवार्तिकम् ॥ १३ ॥ )

॥ * ॥ विभक्तिनिमित्तस्वराच्च ॥ * ॥

( भाष्यम् ) विभक्तिनिमित्तस्वराच्च[4] नञ्स्वरो बलीयानिति वक्तव्यम् ।

विभक्तिनिमित्तस्वरस्यावकाशः—चत्वारः, अनड्वाहः ।

नञ्स्वरस्य स एव ।

इहोभयं प्राप्नोति—अचत्वारः, अनड्वाहः ॥

( प्रदीपः ) विभक्तिनिमित्तस्वरादिति । विभक्तिर्निमित्तं यस्य तस्य यः स्वरः, तस्मादित्यर्थः ॥

( उद्योतः ) विभक्तिर्निमित्तं यस्येति । आम इत्यर्थः ॥

( ६२७० बलीयस्त्वबोधकवार्तिकम् ॥ १४ ॥ )

॥ * ॥ यच्चोपपदं कृति नञ् ॥ * ॥

( भाष्यम् ) यच्चोपपदं[5] कृति नञ्तस्य च स्वरो बलीयानिति वक्तव्यम् । अकरणिर्हि ते वृषल ॥

(प्रदीपः) अकरणिरिति । 'आक्रोशे नञ्यनिः' इत्यनिः । 'गतिकारकोपपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरो नञ्स्वरेण बाध्यते ॥

( उद्योतः ) गतिकारकेति । परत्वात्कृदुत्तरपदप्रकृतिस्वरे प्राप्ते वचनम् ॥

( ६२७१ बलीयस्त्वबोधकवार्तिकम् ॥ १५ ॥ )

॥ * ॥ सहनिर्दिष्टस्य च ॥ * ॥

( भाष्यम् ) सहनिर्दिष्टस्य[5] च नञः[6] स्वरो बलीयानिति वक्तव्यम् । अव्यथी ॥

---

१ 'नैष दोषः' इति ट. पुस्तके एव दृश्यते नान्यत्र ॥

२ आश्रीयत इति । शब्दपरविप्रतिषेधाश्रयणेन 'औपगवम्' इत्यादिष्वपि स्वरसिद्धिरिति भाकः ॥

३ 'भवति'शब्दो बहुषु पुस्तकेषु न दृश्यते ॥

४ 'विभक्तिनिमित्तस्वराच्च' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

५ 'यच्चोपपदं कृति नञ्' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

५ 'सहनिर्दिष्टस्य च' इत्यस्य क. ट. पुस्तकयोर्न पाठः ॥

६ 'नञ्स्वरो' इति क. ट. पाठः ॥

( प्रदीपः ) अव्यथीति । 'जिदृक्षि-' इतीनिप्रत्ययः । अत्र 'अव्यथ' इति धातुना सह निर्दिष्टो नञ्, न पृथक्-इति प्रत्ययस्वरं बाधित्वा नञ्स्वरो भवति । नञः सप्तमीनिर्देशाभावादुपपदत्वाभावात् पृथग्वचनमारब्धम् । तत्राव्यथेति निपातनान्नञो धातुना समासे लोपे च कृते प्रत्यय इति सति शिष्टः प्रत्ययस्वरः प्राप्नोतीति वचनम् ॥

( उद्द्योतः ) ननु धातुना समासः कथमत आह—तत्राव्यथेति ॥

( ११२६ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९१ )

## २५९६ कर्षात्वतो घञोऽन्त उदात्तः ॥ ६ । १ । १५९ ॥

( विकृतग्रहणप्रयोजनभाष्यम् )

**किमर्थं कृषेर्विकृतस्य ग्रहणं क्रियते 'न कृषात्वतः' इत्येवोच्येत ?**

**यस्य कृषेर्विकरण एतद्रूपं तस्य यथा स्यात् ।**

**इह मा भूत्—हलस्य कर्ष इति ॥**

( प्रदीपः ) यस्य कृषेरिति । विकरणान्तस्यानुकरणं 'कर्ष' इति निर्दिष्टमित्यर्थः ॥

**हलस्य कर्ष इति** । अत्राद्युदात्तत्वमेव भवति ॥

(उद्द्योतः) विकरणान्तस्येति । घञन्तानुकरणं तु न, 'घञः' इत्युक्तेरिति भावः । अत्र—तौदादिकप्रकृतिकघञन्ते ॥

( मतुबन्तग्रहणप्रयोजनभाष्यम् )

**अथ किमर्थं मतुपा निर्देशः क्रियते, न 'कर्षातः' इत्येवोच्येत ?**

**'कर्षातः' इतीयत्युच्यमाने यत्रैवाकारादनन्तरो घञस्ति तत्रैव यथा स्यात् । दायः, धायः ।**

**इह न स्यात्—पाकः, पाठः ॥**

**न कचिदाकारादनन्तरो घञस्ति । इहापि-दायः, धायः—इति युका व्यवधानम् ॥**

**एवमपि विहितविशेषणमाकारग्रहणं विज्ञायेत-आकारायो विहित इति ।**

**मतुब्ग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **अथ किमर्थमिति** । आकारात्परो न कचित् घञस्तीति सामर्थ्यात्तद्वतो ग्रहणं सिध्यतीति **प्रश्नः** ॥ **युका व्यवधानमिति** । परत्वान्नित्यत्वाच्च युक् । तेन व्यवधानादानन्तर्याभावः ॥

**एवमपीति** । घञा धातुराक्षिप्तः 'आतः' इत्यनेन विशेष्यत इति तदन्तविधौ विज्ञायमान आनन्तर्यासंभवाद्विधानं विशेष्यत इति मतुन्निर्देशः सर्वसंग्रहार्थं क्रियते ॥

( उद्द्योतः ) ननु मतोरभावे आकारान्तायत्र घञ् तत्रैव स्यात्, 'पाकः' इत्यादौ न स्यादतो मतुरावश्यकोऽत आह—**आकारात्पर इति** ॥ भाष्ये—**आकारादनन्तर इति** । घञुत्पत्तिकाले आकारादनन्तरः 'दायः' इत्यादावस्तीत्याशयः ॥ स्वरप्रवृत्तिकालिकमानन्तर्यमेव स्वरप्रवृत्तिनिमित्तमित्याशयेनाह—**इहापि-युकेति** । युकि कृते अङ्गभक्तो युगित्याकारघञोर्व्यवधायक इति भावः ॥

न ह्याकारमात्राद्घञो विधानमस्तीत्यत आह—**घञेति** ॥ सति 'तस्मादित्युत्तरस्य' इत्यस्मिन् कथं विहितविशेषणं लभ्यते ? तत्राह—**आनन्तर्यासंभवादिति** ।

( ११२७ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९२ )

## २५९८ अनुदात्तस्य च यत्रोदात्तलोपः ॥ ६ । १ । १६१ ॥

( पदकृत्यभाष्यम् )

**अनुदात्तस्येति किमर्थम् ?**

**प्रासङ्गं वहति प्रासङ्ग्यः ॥**

( प्रदीपः ) **अनुदात्तस्येति किमर्थमिति** । 'यत्रोदात्तलोपः' इत्येवानुदात्ते लोपो लभ्यते । न ह्यन्यत्रोदात्तो लुप्यत इति **प्रश्नः** ॥

**प्रासङ्ग्य इति** । प्रासज्यत इति प्रासङ्गः, कर्मणि घञ् । थाथादिस्वरेणान्तोदात्तत्वम् । तद्वहति-इति यत्प्रत्ययः । 'तित् स्वरितम्' इति स्वरितः ॥

( उद्द्योतः ) न ह्यन्यत्रेति । आक्षिप्तस्तच्छब्देन तस्यैवात्र स्वरे कार्यित्वेन प्रतिनिर्देशादिति भावः ॥

**स्वरित इति** । एवञ्च स्वरितेऽप्युदात्तलोपसद्भावात्तद्व्यावृत्तये तच्चरितार्थमिति भावः ॥

( ६२७२ अनुदात्तस्येति पदस्य प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् ॥ * ॥**

( भाष्यम् ) **उदात्तलोपे स्वरितोदात्तयोरभावा-**

---

१ ननु धातुना समासासंभवात् प्रत्ययान्तेन समासे नञ्स्वर एव सतिशिष्ट इति न वचनवैयर्थ्यमत आह—तत्राव्यथेतीति ॥

२ घञ इत्युक्तेरिति । ननु घञ इत्युक्तिरात्वत इत्येतदर्थं सफलेति कथमुच्यते घञन्तानुकरणं नेति चेन्न, घञ इत्युक्तेरनुपपत्तेरित्यर्थात् ॥

३ तौदादिकेति । शब्विकरणप्रकृतिककृषेर्घञि अस्य सूत्रस्य प्रवृत्तिः । यत्र च तौदादिकप्रकृतिकघञन्तस्तत्र नेदं प्रवर्तते, कर्षादिति विकृतनिर्देशादित्याशयः ॥

४ 'आत्काराज्ञात्' इति च. छ. पाठः ॥

५ 'आकारान्तायो' इति ट. पाठः ॥

६ 'सर्वसंग्रहार्थः क्रियते' इति क. च. छ. झ. ठ. पाठः । सर्वसंग्रहार्थः-पाक इत्यादीनां संग्रहार्थः ॥

७ अन्यत्र-उदात्तस्वरितपरत्वे ॥

८ तच्छब्देन-अनुदात्तशब्देन । तस्यैव-अनुदात्तस्यैव ॥

दनुदात्तग्रहणमनर्थकम् । न हि कश्चिदुदात्त उदात्ते स्वरिते वा लुप्यते, सर्वोऽनुदात्त एव ।

ननु चायमुदात्तः स्वरिते लुप्यते—प्रासङ्गं वहति —प्रासङ्ग इति ।

एषोऽपि निघाते कृतेऽनुदात्त एव लुप्यते ।

इदमिह संप्रधार्यम्—निघातः क्रियताम्, लोप इति; किमत्र कर्तव्यम् ?

परत्वाल्लोपः ।

एवं तर्ह्ययमद्य निघातस्वरः सर्वस्वराणामपवादः । न चापवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वाऽपवादविषयं तत उत्सर्गोऽभिनिविशते ।

तत्र तावदत्र कदाचिदन्तोदात्तस्याथादिस्वरो भवति, अपवादं निघातं प्रतीक्षते ।

तत्र-निघातः क्रियतां लोप इति, यद्यपि परत्वाल्लोपः सोऽसावविद्यमानोदात्तः-अनुदात्ते लुप्यते ॥

( प्रदीपः ) सोऽसाविति । अलब्धोदात्तगुण एवाकारो लुप्यत इत्यर्थः । तदेवमनुदात्तग्रहणं प्रत्याख्यातम् ॥

(उद्द्योतः) भाष्ये—निघाते कृत इति । 'तित्स्वरितम्' इत्यैकवाक्यतापन्ने इत्यर्थः ॥ निघातः क्रियतामिति । स्वरितविध्येकवाक्यतापन्न इत्यर्थः ॥

अयम्—पूर्वोक्तः । सर्वस्वराणाम्—ततः प्राग्भाविनाम् ॥ अपवादः—सति शिष्टत्वाद्बाधकः ॥

परत्वादिति । स्वरितात्परत्वाल्लोपे प्रत्ययस्याविद्यमानोदात्तत्वादेवानुदात्ते लोपसत्त्वादनुदात्तग्रहणेऽपि दोषाग्मदुक्तरीत्योदात्तलोप एव नास्तीति त्वयाऽपि वाच्यम्, एवं चानुदात्तग्रहणं व्यर्थमेवेति भावः । 'अविद्यमानोदात्तः-अनुदात्ते लुप्यते' इति पाठः । एतेन—अनुदात्तस्येतिपदसत्त्वेऽपि तस्याविद्यमानोदात्तस्य-इत्येवार्थ इति सूचितम् ॥ अविद्यमानोदात्त इत्यत्रोदात्तशब्दो गुणमात्रपर इत्याह—अलब्धेति । एवञ्चोदात्तलोपाभावान्नास्यातिव्याप्तिरित्यर्थः ॥

( वार्तिकावतरणभाष्यम् )

किं पुनरनुदात्तस्यान्त उदात्तो भवति, आहोस्विदादिः ?

कश्चात्र विशेषः ?

( प्रदीपः ) किं पुनरिति । यदि 'अन्त'ग्रहणमनुवर्तते, ततोऽन्तस्य भवितव्यम् । अथ नानुवर्तते, तदा क्रमानुल्लङ्घनादादेर्भाव्यम्-इति पक्षद्वयसंभवः ॥

( उद्द्योतः ) 'अविद्यमानोदात्तकं यं निमित्तीकृत्य उदात्तलोपस्तस्य उदात्तः' इत्यर्थः, उत 'निमित्तत्वानादरेण यत्र-अविद्यमानोदात्ते वर्णे परत उदात्तलोपस्तस्य वर्णस्योदात्तः' इत्यर्थं इत्याशयेन पृच्छति भाष्ये—किं पुनरिति ॥ अनुवर्तत इति-आद्यपक्षे तदनुवृत्तिः, अथ नानुवर्तते इति-द्वितीयपक्षे तदननुवृत्तिः, फलाभावादसंभवाच्च । अत एवायचश्चित्त्वं चरितार्थम् । द्वितीयपक्षे त्वर्थादादेरेव ॥ क्रमानुल्लङ्घनादिति । एषा युक्तिस्तु चिन्त्या, 'आद्युदात्तश्च' इत्यादावादिग्रहणस्य वैयर्थ्यापत्तेः ॥

( ६२७३ अन्तोदात्तत्वे दोषवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अन्त इति चेत् श्नम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरः ॥ * ॥

( भाष्यम् ) अन्त इति चेत् श्नम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरो न सिध्यति ।

श्नम्—विन्दाते, खिन्दाते । श्नम् ॥

क्स—मा हि धुक्षाताम्, मा हि धुक्षाथाम् । क्स ॥

युष्मदस्मद्—युष्मभ्यम्, अस्मभ्यम् ॥

इदम्किम्लोपः—इयान्, कियान् ॥

अस्तु तर्ह्यादिः ।

( प्रदीपः ) विन्दात इति । 'विद विचारणे' 'खिद दैन्ये' इत्यनयो रूपे । 'तास्यनुदात्तेत्—' इति लसार्वधातुकस्यानुदात्तत्वम् । श्नमः प्रत्ययत्वादुदात्तत्वम्, 'श्नसोरल्लोपः' । तत्राकारस्योदात्तत्वमिष्यते, एकारस्य तु प्राप्नोति ॥ ननु 'आगमा अनुदात्ता भवन्ति' इति श्नमोऽनुदात्तत्वं प्राप्नोति । एवं तर्हि तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति धातुस्वरः परत्वादागमानुदात्तत्वं बाधते ॥

मा हि धुक्षातामिति । दुहेर्माङि लुङ् । आत्मनेपदम् । च्लेः क्सः । 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वम् । क्सः प्रत्ययस्वरेणान्तोदात्तः । 'क्सस्याचि' इत्यकारलोपः । माङ्प्रयोगोऽडागमनिवृत्त्यर्थः । अटि हि सति पदमाद्युदात्तं भवति । हिशब्दप्रयोगः 'हि च' इति निघातप्रतिषेधार्थः ॥

युष्मभ्यमिति । 'भ्यसोऽभ्यम्' इत्यभ्यमादेशः । 'शेषे लोपष्टिलोपः' इति प्रक्रियाश्रयेण चोद्योद्भावनम् । यदा तु 'भ्यम्' आदेशः 'शेषे लोपश्चान्त्यलोपः' तदा दोषाभावः ॥

इयानिति । 'किमिदंभ्यां वो घः' इति वतुप् । स च पित्त्वादनुदात्तः । वकारस्य घः । घस्येयादेशः । 'इदं-किमोरीश्की' इति ईश्कीशब्दावादेशौ । 'यस्य-' इति ईकारलोपः ॥

१ निघात इति । अनुदात्तं पदमेकवर्जमित्यनेन ॥

२ कदाचित्थाथादि' इति च. छ. झ. पाठः ॥

३ 'अविद्यमानोदात्तोऽनुदात्तो लुप्यते' इति क. च. छ. पाठः ॥

४ व्यर्थमिति । अविद्यमानोदात्तस्वरिते अविद्यमानोदात्तस्यैव प्रासङ्गाकारस्य लोपेन उदात्तलोपाभावादनुदात्तग्रहणमनर्थकम्-मत्याख्येयमेवेति तात्पर्यम् ॥

५ फलाभावादिति । यस्मिन् वर्णे परत उदात्तलोपस्तस्मिन् वर्णे परत इति पक्षेऽन्तग्रहणानुवर्तनेऽपि वर्णस्यान्त इत्यर्थे फलाभावात्, वर्णस्यान्तस्यासंभवाच्चेत्यर्थः ॥

६ अत एव-अन्तशब्दस्याननुवर्तनादेव ॥

७ 'माङ्प्रयोगो-' इति झ. निर्दिष्टः पाठः ॥

( उद्योतः ) अनुदात्तत्वं प्राप्नोतीति । ततश्चो[1]दात्तलोपाभावादस्य स्वरस्य नायं विषय इति भावः ॥ एवं तर्हीति । इदं चिन्[2]त्यम्, अन्तरङ्गत्वात्पूर्वं धातुस्वरे श्नमि कृते पुनः कथं तत्[3]प्रवृत्तिः ? अत्रेदं तत्त्वम्—'आगमा अनुदात्ताः' इति नापूर्वम्, किन्तर्हि ? शेषनिघातमूलकमिति तृ[4]तीये निरूपितम् । तस्य च यत्र विशिष्य स्वराप्राप्तिस्तद्विषयत्वान्न प्रकृते दोष इति बोध्यम् ॥

( ६२७४ आदेरुदात्तत्वे दोषवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ आदिरिति चेदिन्धीत द्वयमित्यन्तः ॥ * ॥

( भाष्यम् ) आदिरिति चेदिन्धीत द्वयमित्यन्तोदात्[5]तत्वं विधेयम् । इन्धीत, द्वयम्-त्रयम् ॥

( प्रदीपः ) इन्धीतेति । इन्धेर्लिङ् । 'तास्यनुदात्तेत्-' इत्यनुदा[6]त्तत्वम् । सीयुट् । तस्यागमत्वादनुदात्तत्वम् । श्नम् । 'श्नान्नलोपः' इति न लोपः । 'श्नसोरल्लोपः' इत्यकारलोपे कृते ईकारस्योदात्तत्वप्रसङ्गः ॥ द्वयमिति । द्वाववयवावस्य, 'संख्याया अवयवे तयप्' । 'द्वित्रिभ्यां तयस्यायज्वा' इत्ययजादेशः, अनुदात्तस्थानिकत्वादनुदात्तः । 'यस्येति च' इतीकारलोपे कृते आदेरुदात्तत्वप्रसङ्गः, अन्तस्य चेष्यते, तदर्थं चित्वमयचः कर्तव्यम् । इह त्वन्तग्रहणानु[7]वृत्तौ न कर्तव्यमिति मत्वोपन्यासः ॥

( ६२७५ आद्युदात्तत्वस्थापकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ आदौ सिद्धम् ॥ * ॥

( भाष्यम् ) अस्तु तर्ह्यादिरुदात्तो भवतीति ॥

( वार्तिकावतरणभाष्यम् )

**ननु चोक्तम्-आदिरिति चेदिन्धीत द्वयमित्यन्त इति ॥**

( ६२७६ आद्युदात्तत्वे दोषवारकवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम् ॥ * ॥

( भाष्यम् ) विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं लिङि नेति वक्तव्यम् ॥

लिङ्ग्रहणेन नार्थः, अविशेषेण विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं नेत्येव ।

इदमपि सिद्धं भवति—विन्दाते, खिन्दाते ॥

अयचि कथम् ?

( प्रदीपः ) विदीन्धिखिदिभ्य इति । लसार्वधातु[8]कानुदात्तत्वे प्रतिषिद्धे प्रत्ययस्वरेण तशब्द उदात्तः । सीयुट् आगमत्वादनुदात्तः । अथ[9]वा न विकरणस्वरो लसार्वधातुकस्वरं बाधत इति वर्ज्यमानस्वरेण श्नमनुदात्त इति न कश्चिद्दोषः ॥ इदमपीति । अन्तग्रहणानुवृत्तावपि श्नमो लोपे दोषो नास्तीति भावः ॥

( उद्योतः ) लसार्वधातुकेति । 'यत्राविद्यमानोदात्तके प्रत्यये परत उदात्तलोपः क्रमोल्लङ्घने मानाभावात्तदादेरुदात्तः' इत्यर्थे 'ईत'शब्दस्याविद्यमानोदात्तकत्वाभावान्न दोष इति भावः ॥ नन्वेवमपि श्नमः स्वरेण तशब्दस्यापि निघाताद्दोष एव । किञ्च यदा 'आहोस्विदादेः[10]' इति भाष्यस्य निमित्तत्वानादरेण 'यत्रानुदात्ते वर्णे परत उदात्तलोपस्तस्य वर्णस्य उदात्तः' इत्यर्थः सूत्रस्येत्याशयः, तदा दोषतादवस्थ्यादाह—अथवेति ॥

ननु 'विन्दाते' इत्यादौ लसार्वधातुकानुदात्तत्वप्रतिषेधेन विनाऽप्यनेन स्वरेण मध्योदात्तत्वसिद्धेः किमुच्यते 'इदमपि-'इत्यत आह—अन्तग्रहणेति ॥ श्नमो[11] लोप इति । श्नमो वर्ज्यमानस्वरेणानुदात्तत्वादुदात्तलोपाभावादिति भावः । [12]अनेन क्सा[13]दिविषयं दोषान्तरमस्त्येवेति सूचितम् ॥

---

१ उदात्तलोपाभावादिति । 'विनद्-आते' इति स्थिते श्नम आगमानुदात्तत्वे तस्य च लोपे उदात्तलोपाभावादिति भावः ॥

२ चिन्त्यमिति । पूर्वं धातुस्वरे ततः श्नमि तन्मध्यपतितत्वाद्विशिष्टस्यापि धातुग्रहणेन ग्रहणे पुनर्धातुस्वरस्य प्रवृत्तिकथनमेव चिन्त्यम्, लक्ष्ये लक्षणन्यायेन पुनर्धातुस्वरप्रवृत्तेरभावात् ॥

३ तत्प्रवृत्तिः—धातुस्वरस्य प्रवृत्तिः ॥

४ तृतीये इति । आद्युदात्तश्च ( ३।१।३ ) इति सूत्रे भाष्ये । तत्र हि 'आचार्यप्रवृत्तिर्ज्ञापयति-आगमा अनुदात्ता भवन्ति-इति यदयं यासुट् परस्मैपदेषूदात्तो ङिच्चेत्याह' इति ॥

५ 'दात्तत्वं न सिद्ध्यति' इति क. ष. ङ. पाठः । अनुदात्तस्यादिरुदात्तो भवतीति पक्षाश्रयणे 'इन्धीत-द्वयम्' इत्यत्रान्तोदात्तत्वं न स्यात्तद्विधेयमिति वार्तिकार्थः ॥

६ 'अनुदात्तत्वे सीयुट्' इति घ. पाठः ॥

७ अन्तग्रहणानुवृत्ताविति । अनुदात्तस्य च यत्रोदात्तलोप इत्यत्रान्तग्रहणानुवृत्तौ 'अनुदात्तस्यान्त उदात्तो भवति' इत्यर्थस्वीकारेऽयजादेशस्यानुदात्तत्वेन तदन्त उदात्त इत्यर्थाद्दिष्टसिद्धौ अयचश्चित्करणं नापेक्ष्यम् । तच्चानुदात्तस्यादिरुदात्तो भवतीतिपक्षे चित्करणमावश्यकं स्यादित्याशयेनायं दोषः ॥

८ लसार्वधातुकेति । तास्यनुदात्तेदिति सूत्रेण विधीयमानं लसार्वधातुकानुदात्तत्वं तस्मिन् सूत्रे भाष्ये 'अनुदात्त ङिद्ग्रहणाद्वा' इत्यनेन श्नम्विकरणेभ्यः प्रतिषिद्धम् । प्रतिषिद्धे हि तस्मिन् इन्धीतेत्यत्र प्रत्ययस्वरेण तशब्द उदात्त इत्यर्थः ॥

९ तास्यनुदात्तेदिति सूत्रे भाष्ये ङितोऽनुदात्तत्वे विकरणेभ्यः प्रतिषेधो वक्तव्य इति भाष्योक्तपक्षानुसारेणाह—अथवेति ॥

१० आहोस्विदादेरिति भाष्यस्य-आहोस्विदादेरित्यर्थकस्य भाष्यस्येत्यर्थः । भाष्यपाठस्तु 'आहोस्विदादिः' इत्येव ॥

११ ग. ज. पुस्तकयोः 'श्नमोल्लोप इति' इति प्रतीकं दृश्यते । ब. पुस्तकेऽत्र संगृहीत एव पाठो दृश्यते । प्रदीपपुस्तकेषु 'श्नमोल्लोपः' इत्यस्यादर्शनादस्य पाठस्य सुस्पष्टत्वेऽपि स नाश्रितः ॥

१२ ननु अन्तानुवर्तने श्नमि दोषाभावे तदनुवर्तने का हानिरत आह—अनेनेति ॥

१३ 'क्सादिलोपविषयं' इति ङ. पाठः ॥

( ६२७७ दोषवारकवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ अयचि चित्करणात् ॥ * ॥**

( भाष्यम् ) **अयचि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति ॥**

**अयचीति** । चित्करणमेव[1] ज्ञापकम्–अन्त इतीह न संबध्यते, तत्संबन्धे चित्त्वेन नार्थः स्यात् ॥

( ११२८ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९३ )

## २५९९ धातोः ॥ ६ । १ । १६२ ॥

( वार्तिकावतरणभाष्यम् )

**किं धातोरन्त उदात्तो भवति, आहोस्विदादेरिति ?**

**कश्चात्र विशेषः ?**

( प्रदीपः ) **किं धातोरिति** । यद्यन्तग्रहणमभिसंबध्यते ततोऽन्तस्योदात्तत्वेन भाव्यम् । अथ न संबध्यते तदा क्रमानुल्लङ्घनादादेरिति प्रश्नः ॥

(उद्द्योतः) **आदेरितीति** । इदं चिन्त्यमित्युक्तम्[2], तस्माद्भाष्यस्यायं भावः—पूर्वसूत्रेऽन्तग्रहणासंबन्धे आद्युदात्तत्वस्य निर्णीतत्वेन तत्साहचर्यात्–इति । यद्वा[3]—आदिस्वरप्रकरणे इदं सूत्रं पठनीयमिति भावः । कृत्वा चिन्तया विचार इति बोध्यम् ॥

( ६२७८ अन्तोदात्तत्वे दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ धातोरन्त इति चेदनुदात्तेचबग्रहणम् ॥ * ॥**

( भाष्यम् ) **धातोरन्त इति चेदनुदात्तेचबग्रहणं कर्तव्यम् ।**

**'अभ्यस्तानामादिः' 'अनुदात्ते च' ( ६।१।१८९; १९० ) इति वक्तव्यम्[4] ।**

**बग्रहणं च कर्तव्यम् । बान्तश्च पिबतिराद्युदात्तो भवतीति वक्तव्यम् ॥**

( प्रदीपः ) **अनुदात्त इति** । 'ददा ति' इति स्थिते 'धातोः' इत्यन्तोदात्तत्वे प्राप्ते आद्युदात्तार्थम् 'अनुदात्ते च'इति वक्तव्यम् ॥

**पिबतीति** । लघूपधगुणनिवृत्त्यर्थोऽदन्तः पिबिरादेशः । ततश्चान्तोदात्तत्वबाधनार्थमाद्युदात्तत्वं वक्तव्यम् ॥

( उद्द्योतः ) **धातोरित्यन्तोदात्तत्वे प्राप्त इति** । अन्तरङ्गत्वात्पूर्वं स्वरे ततो द्वित्वे शेषनिघातबलात्समावेशाभावेऽपि पक्षेऽन्तोदात्तत्वे प्राप्ते इत्यर्थः । स्पष्टं चेदं 'परस्मैपदानाम्–' इति सूत्रे भाष्ये । 'अभ्यस्तानामादिः'इति तु जक्षतीत्यादौ झिस्वरेण प्रकृतेरनुदात्तत्वादाद्युदात्तश्रवणार्थमिति 'अनुदात्ते च'इत्यस्य ग्रहणमिति दिक् ॥

**वक्तव्यमिति** । पक्षान्तरे न वक्तव्यमिति लाघवमित्याशयः । ननु पिबेरेकाच्त्वात्किमनेनेत्यत आह—**लघूपधेति** ॥

( ६२७९ अन्तोदात्तत्वे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ संश्च नित् ॥ * ॥**

( भाष्यम् ) **संश्च नित्कर्तव्यः ।**

**किं प्रयोजनम् ?**

**चिकीर्षति, जिहीर्षति—नितीत्याद्युदात्तत्वं यथा स्यात् ॥**

**अस्तु तर्ह्यादिः ।**

( प्रदीपः ) **संश्चेति** । धातुस्वरबाधनाय ॥

( ६२८० आद्युदात्तत्वे दोषवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वम् ॥ * ॥**

( भाष्यम् ) **आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वं न सिध्यति ।**

**ऊर्णोति । ऊर्णु ॥**

**प्रत्ययधातु—गोपायति, धूपायति, ऋतीयते ॥**

( ६२८१ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अन्तोदात्तवचनात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **अस्तु तर्ह्यन्तोदात्तो भवतीति ॥**

**ननु चोक्तम्—धातोरन्त इति चेदनुदात्तेचबग्रहणं कर्तव्यमिति ।**

**यत्तावदुच्यते-अनुदात्ते च ग्रहणं कर्तव्यमिति ।**

**क्रियते न्यास एव—'अभ्यस्तानामादिः, अनुदात्ते च'इति ॥**

**बग्रहणं कर्तव्यमिति ।**

( प्रदीपः ) **क्रियते न्यास एवेति** । 'अनुदात्ते च' इत्येतदेव ज्ञापकम्–इहान्तग्रहणाधिकारस्य ॥

( उद्द्योतः ) **ज्ञापकमिहेति** । एतेन विच्छिन्नानुवृत्तिः कथमित्यपास्तम् । वस्तुत आद्युदात्तविधानेऽपि उक्तरीत्योत्तरखण्डस्याद्युदात्तत्वं स्यादिति उभयोरपि तदावश्यकमिति भाष्याशयः ॥

---

१ चित्करणमेवेति । चित्करणाज्ज्ञापकादन्त इतीह न संबध्यते । आदेरित्यनुवृत्तिर्नास्त्येवेति अनुदात्त उदात्तो भवत्येवार्थः सूत्रस्येति सिद्धान्तः ॥

२ चिन्त्यमित्युक्तमिति । पूर्वस्मिन्सूत्रे तदुक्तम् । यदि मानाभावात्क्रमोल्लंघनमस्मिन् शास्त्रे नाश्रीयते तदा 'आद्युदात्तश्च' इति सूत्रे आदिपदं व्यर्थं स्यात् । अतो नैतदाश्रीयतेऽस्मिन् शास्त्रे इत्याशयः ॥

३ ननु आद्युदात्तत्वस्य निर्णीतत्वे का युक्तिरत आह—यद्वेति । यदि धातोराद्युदात्तत्वमिष्टं चेदिदं सूत्रमाद्युदात्तत्वविधायकप्रकरण एव पठनीयमिति भाष्याशय इति भावः ॥

४ वक्तव्यमिति । धातोरन्त इत्युच्यमाने 'अभ्यस्तानामादिः' इत्यनन्तरं 'अनुदात्ते च' इति सूत्रमवश्यं वक्तव्यमित्यर्थः । यदि धातोरादिरुदात्तस्तदा सूत्रमेतन्न कार्यमित्याशयः ॥

( ६२८२ सिद्धान्तसाधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ पिबौ निपातनात् ॥ * ॥

( भाष्यम् ) पिबावाद्युदात्तनिपातनं क्रियते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ॥

*संश्च नित्कर्तव्य इति ।

अवश्यं सनो विशेषणार्थो नकारः कर्तव्यः ।

क्व विशेषणार्थेनार्थः ?

'सन्यङोः' (६।१।९) इति ।

सयङोरितीयत्युच्यमाने-हंसः, वत्सः—अत्रापि प्राप्नोति ।

'अर्थवद्ग्रहणेनानर्थकस्य'इत्येवं न भविष्यति ।

इहापि तर्हि न प्राप्नोति—जुगुप्सते, मीमांसत इति ।

अर्थवानेषः ।

न वै कश्चिदर्थ आदिश्यते[1] ।

यद्यपि कश्चिदर्थो नादिश्यते, अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति-इति-अन्ततः स्वार्थे भविष्यति ।

कश्चास्य स्वार्थः ?

प्रकृत्यर्थः ।

इहापि तर्हि प्राप्नोति—हंसः, वत्सः-इति ।

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥

स एषोऽनन्यार्थो नकारः कर्तव्यः ।

न कर्तव्यः ।

क्रियते न्यास एव ॥

अथवा धातोरिति वर्तते । धातोः सशब्दान्तस्य द्वे भवत इति ॥

( प्रदीपः ) अर्थवद्ग्रहण इति । अव्युत्पन्नत्वादुणादीनामानर्थक्यं मन्यते ॥

जुगुप्सत इति । सनोऽर्थानिर्देशात्समुदायस्यैवार्थवत्त्वं मन्यते ॥

अन्तत इति । यस्यार्थान्तरं न निर्दिश्यते स प्रत्यासन्ने स्वार्थे भवति ॥

इहापीति । व्युत्पत्तिपक्षाश्रयेण चोद्यम् । पक्षान्तराश्रयेण परिहारः ॥

उणादय इति । एतदनन्तरम् 'अथवा धातोरिति वर्तते-' इति ग्रन्थेन भाव्यम् । लेखकप्रमादात्तु स्थानान्तरे न्यस्तः । पाठक्रमाद्वाऽर्थक्रमस्य बलीयस्त्वादत्र प्रदेशे संबध्यते । 'लिटि धातोरनभ्यासस्य' इत्यतो धातुग्रहणानुवर्तनात्सान्तस्य धातोर्द्विर्वचनविधानात् 'हंसः-वत्सः' इत्यादौ द्विर्वचनाभावः सिद्ध इति स्वरार्थ एव सनो नकारः कर्तव्यः । स च कृत एव ॥

( उद्द्योतः ) हनिवधोः 'स'प्रत्ययविधानात्कथमानर्थक्यमत आह—अव्युत्पन्नत्वादिति ॥

गुपादिसनः प्रत्ययत्वेनार्थवत्त्वाच्छङ्काऽनुपपत्तिरत आह—सन इति ॥

'अनन्यार्थः-' इति भाष्यं व्याचष्टे—स्वरार्थ एवेति ॥

( ११२९ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९४ )

## २६०० चितः ॥ ६ । १ । १६३ ॥

( प्रदीपः ) 'अन्तः' इति वर्तते । घुरच्-आदेः प्रत्ययस्य कुण्डिनच्-आदेरप्रत्ययस्य चेह ग्रहणम् ॥

( उद्द्योतः ) पूर्वसूत्रेऽनुवृत्तस्येहापि संबन्ध इत्याह—अन्त इतीति ॥ 'प्रत्ययाप्रत्यययोः-'इति परिभाषा तु नेह प्रवर्तते, लक्ष्यानुसारात्-इत्याह—घुरजादेरिति ॥

( ६२८३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ चितः सप्रकृतेर्बह्वकजर्थम् ॥ * ॥

( भाष्यम् ) चितः सप्रकृतेरिति वक्तव्यम् ।

किं प्रयोजनम् ?

बह्वकजर्थम् । बहुजर्थमकजर्थं च ।

बहुजर्थं तावत्—बहुभुक्तम्, बहुकृतम् ।

अकजर्थम्-सर्वकैः, विश्वकैः, उच्चकैः, नीचकैः, सर्वके, विश्वके ॥

( प्रदीपः ) बह्वकजर्थमिति । बहुच्-अकचोरन्तोदात्तत्वे प्राप्ते 'चितः सप्रकृतेः' इति वचनम् ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

तर्त्तर्हि वक्तव्यम् ।

न वक्तव्यम् । मतुब्लोपोऽत्र द्रष्टव्यः ।

तद्यथा-पुष्पका एषां ते पुष्पकाः, कालका एषां ते कालकाः ॥

अथवाऽकारो मत्वर्थीयः ।

तद्यथा—तुन्दः, घाट इति ।

पूर्वसूत्रनिर्देशश्च[2]—चित्वान्-चित इति ॥

( प्रदीपः ) मतुब्लोप इति । चिदवयवत्वात्समुदायश्चिदुच्यते । लक्षानुरोधाच्च गौणोऽप्यर्थः क्वचिदाश्रीयते । अकचश्चित्त्वमस्यैवार्थस्य लिङ्गम् । अन्यथैकाच्[3]त्वादकचश्चित्त्वं न कुर्यात् ॥

अथवेति । मुख्य एव शब्दार्थ एवमाश्रितो भवति ॥ नन्वेवं 'चितस्य[4]'इति भाव्यमित्याह—पूर्वसूत्रनिर्देश इति ।

१ 'न वै कस्मिंश्चित्' इति क. ट. पाठः ॥

२ पूर्वसूत्रनिर्देशश्चेति । पूर्वस्मिन् व्याकरणे कार्यी प्रथमान्ततया निर्दिश्यत इति चित्वानित्येतदर्थकं चित इत्येतत्प्रथमान्तं ज्ञेयमित्यर्थः ॥

३ अन्यथेति । एकाच्त्वादकचः प्रत्ययत्वेनैवोदात्तत्वसिद्धेश्चित्करणानर्थक्यमित्यर्थः ॥

४ चितस्येति । मत्वर्थीयाकारप्रत्ययान्तत्वे षष्ठ्यन्तं चितस्येति स्यादित्यर्थः ॥

पूर्वव्याकरणे प्रथमया कार्यी निर्दिश्यते । तेन चित्त्वान्समुदायोऽन्तोदात्तत्वं प्रतिपद्यत इत्यर्थः । कुण्डिनजादयोऽपि व्यपदेशिवद्भावाच्चित्वन्त उच्यन्ते ॥

( उद्योतः ) चिच्छब्दस्यागुणवचनत्वात् मतुब्लोपाप्राप्तेराह—चिदवयवत्वादिति । एवञ्च गम्यमानार्थत्वादप्रयोग एव लोप इति भावः । सौत्रो मतुलोप इत्याशयमन्ये ॥ अस्यैवार्थस्य गौणग्रहणरूपस्य ॥ चित्वानिति—मतुबन्तम् ॥

( ११३० विधिसूत्रम् ॥ ६ । १ । ६ आ. ९५ )

## २६०३ तिसृभ्यो जसः ॥ ६।१।१६६ ॥

( विभक्त्युदात्ताधिकरणम् )

( प्रदीपः ) अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचननिर्देशः । अन्तोदात्तस्य त्रिशब्दस्य स्थाने तिसृशब्द आदेशः स्थानिवद्भावादन्तोदात्तः । ततः परस्य जसोऽनुदात्तत्वापवाद उदात्तत्वं विधीयते । 'उदात्तयणो हल्पूर्वात्' इत्यत्रासर्वनामस्थानग्रहणानुवर्तनाज्जस उदात्तत्वं न प्राप्नोतीति वचनम् ॥

( उद्योतः ) ननु तिसृशब्दस्यैकत्वाद्बहुवचनमयुक्तमत आह—अर्थगतमिति ॥ स्थानिवद्भावादिति । आन्तरतम्यादित्यर्थः ॥ ननु 'तिसृ'शब्दस्यान्तोदात्तत्वादुदात्तस्य स्थाने यणः सत्त्वात् 'उदात्तयणः—' इत्युदात्तत्वं सिद्धमत आह—उदात्तयण इति ॥

( जस्ग्रहणप्रयोजनभाष्यम् )

**जस इति किमर्थम् ?**
**तिसृका ॥**

( प्रदीपः ) तिसृकेति । स्वार्थे कन् प्रत्ययः । तिस्रभावे 'संज्ञायां कन्युपसंख्यानम्' इति तिस्रादेशः ॥

(उद्योतः) स्वार्थे कनिति । स्वार्थिकानां प्राकृतलिङ्गसङ्ख्याऽतिवर्तनादेकवचनान्तत्वम् । बहुवचनान्तमेवेदं भाष्य इत्यन्ये ॥

( ६२८४ प्रयोजनाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् ॥ * ॥

**( भाष्यम् ) तिसृभ्यो जस्ग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**अन्यत्राभावात् । न ह्यन्यत् तिसृशब्दादन्तोदात्तत्वं प्रयोजयति, अन्यदतो जसः ।**

**किं कारणम् ?**

**बहुवचनविषय एव तिसृशब्दः, तेनैकवचनद्विवचने न स्तः ।**

**शसि भवितव्यम्—'उदात्तयणो हल्पूर्वात्' ( ६।१।१७४ ) इति ।**

**अन्याः सर्वा हलादयो विभक्तयः, तत्र 'षट्त्रिचतुर्भ्यो हलादिः' 'झल्युपोत्तमम्' ( ६।१।१७९;८० ) इत्यनेन स्वरेण भवितव्यम् ।**

**तत्रान्तरेण जसो ग्रहणं जस एव भविष्यति ॥**

**ननु चेदानीमेवोदाहृतम्—तिसृका—इति ।**

**नित्स्वरोऽत्र बाधको भविष्यति । नाप्राप्तेऽन्यस्वरे तिसृस्वर आरभ्यते, स यथैव 'अनुदात्तौ सुप्पितौ' ( ३।१।४ ) इत्येतं स्वरं बाधते, एवं नित्स्वरमपि बाधेत ॥**

**नैष दोषः । येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्तेऽनुदात्तौ सुप्पिताविस्येतस्मिंस्तिसृस्वर आरभ्यते, नित्स्वरे पुनः प्राप्ते चाप्राप्ते च ॥**

**अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवं तिसृस्वरोऽनुदात्तौ सुप्पिताविति स्वरं बाधिष्यते, नित्स्वरं न बाधिष्यते ॥**

( प्रदीपः ) न चाप्राप्त इति । तिसृकेत्यत्रापि टापा सहैकादेशस्यादिवद्भावात्पित् स्वरः प्राप्नोतीति भावः ॥

अथवेति । पूर्वविज्ञातबाध्यविषये प्रवृत्त्या चरितार्थं विधिं विप्रतिषेधात्परो विधिर्बाधते ॥

(उद्योतः) तिसृभ्यो जस्ग्रहणानर्थक्यमिति । 'तिसृभ्यः' इति विहितविशेषणमिति तदाशयः ॥ ननु 'तिसृका' इत्यत्रैतत्स्वराप्राप्तेः कथं तेन येन नाप्राप्तिरत आह—तिसृकेत्यत्रापीति ॥

( जस्प्रयोजनभाष्यम् )

**उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति । अतितिस्रौ, अतितिस्रः ॥**

( प्रदीपः ) उपसमस्तार्थमिति । समासेऽपि तिसृशब्दात्परः सुब्भवतीति 'अतितिस्रौ' इत्यत्र 'अतेरकृत्पदे' इत्यत्र 'अतेर्धातुलोप इति वक्तव्यम्' इति वचनात्प्राप्तमन्तोदात्तत्वं बाधित्वा विभक्तेरुदात्तत्वं स्यात् । अत्र च 'उदात्तस्वरितयोर्यण—' इति स्वरितो भवति । अतितिस्र इत्यत्र त्विष्यत एव जस उदात्तत्वमित्युदाहरणत्वेन भाष्यकृतोपन्यस्तम् ॥

( उद्योतः ) एवं वार्तिककृता प्रत्याख्यातमपि जस्ग्रहणं भाष्यकृदाचार्यान्तरमवष्टभ्य स्थापयति—उपसमस्तार्थमिति । विहितविशेषणे न मानमिति तदाशयः ॥ अतेर्धातुलोप इति । 'अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः' इत्यर्थकसूत्रेणैव प्राप्तेर्वार्तिकोपन्यासे बीजं चिन्त्यम् ॥ बाधित्वेति । सति शिष्टत्वादिति भावः ॥ 'अतितिस्रः' इत्यस्य प्रत्युदाहरणत्वभ्रमं वारयति—अतितिस्र इत्यत्रेति ॥

१ 'न ह्यन्यत्र' इति च. छ. पाठः ॥
२ बाधित्वेति । जस्ग्रहणाभाव इति शेषः ॥
३ अत्रेति । सूत्रे जस्ग्रहणसत्त्वे इत्यादिः ॥
४ 'इत्यर्थकेन सूत्रेणैवा' इति झ. पाठः । स साधुतरः ॥

( ११३१ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९६ )

## २६०४ चतुरः शसि ॥ ६ । १ । १६७ ॥

(उद्द्योतः) 'शसि परतश्चतुःशब्दस्यान्त उदात्तः' इत्यर्थः ॥

( प्रतिषेधोपसंख्यानभाष्यम् )

शसि स्त्रियां प्रतिषेधो वक्तव्यः । चतस्रः पश्य ॥

( प्रदीपः ) स्त्रियामिति । स्थानिवद्भावात् प्राप्नोति ॥[1]

( ६२८५ प्रतिषेधाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् ॥ * ॥

( भाष्यम् ) चतुरः शसि स्त्रियामप्रतिषेधः । अनर्थकः प्रतिषेधः—अप्रतिषेधः ।

शसि स्वरः कस्मान्न भवति ?

आद्युदात्तनिपातनात् । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः शसि स्वरस्य बाधको भविष्यति ॥

( प्रदीपः ) आद्युदात्तनिपातनमिति । स्थानिवद्भावादाद्युदात्तत्वे सिद्धे पुनराद्युदात्तनिपातनमन्यस्य[2] स्वरस्य बाधकमित्यर्थः ॥

( उद्द्योतः ) स्थानिवद्भावादाद्युदात्तत्वे सिद्ध इति । चतुरः—चतेरुरन्प्रत्ययान्तत्वेन, 'ञ्नःसङ्ख्यायाः' इति वाऽऽद्युदात्तत्वादिति भावः ॥

( उपदेशिवद्भावोपसंख्यानभाष्यम् )

एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः शसि स्वरं बाधते, एवं विभक्तिस्वरमपि बाधेत-चतसृणामिति ॥

( प्रदीपः ) एवमपीति । उपदेशिवद्भावात्सति शिष्टेन विभक्तिस्वरेण निपातनस्वरो बाध्यते ॥

( उद्द्योतः ) सति शिष्टेन—'षट्त्रि–'इत्यनेन ॥

( ६२८६ उपदेशिवद्भावाक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ विभक्तिस्वरभावश्च हलादिग्रहणात् ॥ * ॥

( भाष्यम् ) विभक्तिस्वरस्य च भावः सिद्धः । कुतः ?

हलादिग्रहणात् । यदयं 'षट्त्रिचतुर्भ्यो हलादिः' (६।१।१७९) इति हलादिग्रहणं करोति तज्ज्ञापयत्याचार्यः—न निपातनस्वरो विभक्तिस्वरं बाधत इति ।

कथं कृत्वा ज्ञापकम् ?

( ६२८७ आक्षेपसाधने ज्ञापनसाधकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् ॥ * ॥

( भाष्यम् ) आद्युदात्तनिपातने हि सति हलादिग्रहणमनर्थकं स्यात् । न ह्यन्यद्धलादिग्रहणं प्रयोजयति-अन्यदतश्चतसृशब्दात् ॥

षट्संज्ञास्तावन्न प्रयोजयन्ति ।

किं कारणम् ?

बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।

जसिशसी[3] चातो लुप्येते ।

अन्याः सर्वा हलादयो विभक्तयः ॥

त्रिशब्दश्चापि[4] न प्रयोजयति ।

किं कारणम् ?

बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।

असर्वनामस्थानमिति वचनाज्जसि न भविष्यति ।

शसि भवितव्यम्—'एकादेश उदात्तेनोदात्तः' इति ।

अन्याः सर्वा हलादयो विभक्तयः ॥

तिसृशब्दोऽपि[5] न प्रयोजयति ।

किं कारणम् ?

बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।

असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम् ।

शसि भवितव्यम्—'उदात्तयणो हल्पूर्वात्' (६।१।१७४) इति ।

अन्याः सर्वा हलादयो विभक्तयः ॥

चतुःशब्दश्चापि न प्रयोजयति ।

किं कारणम् ?

बहुवचनविषयत्वात् । तेन द्विवचनैकवचने न स्तः ।

असर्वनामस्थानमिति वचनाज्जसि न भवितव्यम् ।

शसि भवितव्यम्—'चतुरः शसि' इति ।

अन्याः सर्वा हलादयो विभक्तयः ॥

---

१ 'स्थानिवद्भावेन प्रा—' इति च. झ. पाठः ॥
२ 'निपातनमस्य' इति घ. झ. पाठः ॥
३ 'जस्शसी चात्र' इति झ. पाठः । 'जश्शसी चातो' इति घ. छ. पाठः ॥
४ 'त्रिशब्दोऽपि' इति च. पाठः ॥
५ 'तिसृशब्दश्चापि' इति घ. छ. झ. ट. पाठः ॥

तत्र चतसृशब्दादेकस्माच्छस्-असर्वनामस्थानमजादिर्विभक्तिरस्ति । यदि चात्र निपातनस्वरः स्यात् हलादिग्रहणमनर्थकं स्यात् ॥

(प्रदीपः) बहुवचनविषयत्वादिति । विहितविशेषणाश्रयणादुत्तरपदार्थस्योपसर्जनत्वाद्वा समासे न भाव्यमिति भावः ॥

तत्र चतसृशब्दादिति । यदि च निपातनस्वरेण विभक्तिस्वरो बाध्येत तदा हलादिग्रहणमनर्थकं स्यात् । 'चतस्रः पश्य' इत्यत्र निपातनस्वरेणैव बाधितत्वाद्विभक्तिस्वरस्याप्रसङ्गात् किं तन्निवृत्त्यर्थेन हलादिग्रहणेन ? तत् क्रियमाणं विभक्तिस्वरस्य बलीयस्त्वं ज्ञापयतीति 'चतसृणाम्' इत्यत्र विभक्तिस्वरसिद्धिः ॥

( उद्द्योतः ) ननु 'अत्यादयः-' इति समासे 'अतिपथः' इत्यादावेकवचनाद्यपि संभवतीति 'बहुवचनविषयत्वात्' इत्ययुक्तमत आह—विहितेति । अत्र च व्याख्यानमेव शरणम् ॥ उपसर्जनत्वाद्वेति । भाष्यप्रामाण्यात्प्रधानीभूतप्रसिद्धार्थबोधकपथ्यादीनामेव ग्रहणादिति भावः । एतेनाचारक्विबन्तप्रकृतिककर्तृक्विबन्तादावेकवचनादिसंभव इति परास्तम् । अभिव्यक्तेति न्यायाच ॥

( सिद्धान्तभाष्यम् )

नैव वा पुनरत्र शसि स्वरः प्राप्नोति ।

किं कारणम् ?

यणादेशे कृते शसः पूर्व उदात्तभावी नास्तीति कृत्वा ।

अवशिष्टस्य तर्हि प्राप्नोति ।

ऋकारेण व्यवहितत्वान्न भविष्यति ।

यणादेशे कृते नास्ति व्यवधानम् ।

स्थानिवद्भावाद्व्यवधानमेव ।

प्रतिषिध्यते तत्र स्थानिवद्भावः-स्वरविधिं प्रति न स्थानिवद्भवतीति ।

नैपोऽस्ति प्रतिषेधः । उक्तमेतत्प्रतिषेधे—स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति ॥

( प्रदीपः ) नैव वेति । चतस्रः पश्येत्यत्र । ततश्चाद्युदात्तनिपातनमपि न कर्तव्यम् ॥

यणादेशे कृत इति । 'अचि र ऋतः' इत्यनेन स्वरात् पूर्वं परत्वादिति भावः ॥

अवशिष्टस्येति । तकाराकारस्येत्यर्थः ॥ ऋकारेणेति । पूर्वविधौ रेफस्य स्थानिवद्भावात् ॥

( उद्द्योतः ) एवं वार्तिककृता वर्णितमपि ज्ञापकं 'उपसमस्त्रार्थमेके' इति 'तिसृभ्यः-' इति सूत्रस्यस्योक्तरीत्या तत्रास्यापि चारितार्थ्येनासङ्गतमिति मत्वा 'चतस्रः पश्य' इत्यत्रास्याप्राप्तिं प्रकारान्तरेणोपपादयति—( भाष्ये )—नैव वा पुनरिति ॥

ननु 'इको यणचि' इत्यस्य पूर्वसवर्णदीर्घेण बाधात् 'यणादेशे कृते' इत्यसङ्गतमत आह—अचि र इति ॥ ननु रेफादेशात्पूर्वमेव स्वरः किं नेत्यत आह—परत्वादिति ॥ भाष्ये—शसः पूर्व इति । 'सौर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्यस्य तु नात्र प्रवृत्तिः, लक्ष्यानुसारेण ज्ञापकसिद्धत्वेन चासार्वत्रिकत्वात्–इति दिक् ॥

तकाराकारस्येति । हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वादिति भावः ॥

( ११३२ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९७ )

## २६०५ सावेकाचस्तृतीयादिर्विभक्तिः ॥ ६ । १ । १६८ ॥

( सुपदार्थनिर्णायकभाष्यम् )

साविति किमिदं प्रथमैकवचनस्य ग्रहणम्, आहोस्वित्सप्तमीबहुवचनस्य ?

कुतः सन्देहः ?

समानो निर्देशः ।

सप्तमीबहुवचनस्य ग्रहणम् ।

कथं ज्ञायते ?

यदयं 'न गोश्वन्साववर्ण-' ( ६।१।१८२ ) इति गोशुनोः प्रतिषेधं शास्ति ।

कथं कृत्वा ज्ञापकम् ?

यदि प्रथमैकवचनस्य ग्रहणं स्यात् गोशुनोः प्रतिषेधवचनमनर्थकं स्यात् ।

ननु चार्थसिद्धिरेवैषा ।

अनुगृहीताः स्मः । यैरस्माभिः प्रथमैकवचनमास्थाय 'गोशुनोः प्रतिषेधो वक्तव्यः' इति स न वक्तव्यो भवति ।

भवेत्प्रतिषेधो न वक्तव्यः ।

दोषास्तु भवन्ति ।

तत्र को दोषः ?

खिना, खिना । अन्तोदात्तत्वन्न प्राप्नोति ।

खिखिनौ न स्तः । उक्तमेतत्—

**एकाक्षरात्कृतो जातेः**
**सप्तम्यां च न तौ स्मृतौ ॥**

स्वान् स्वान् इत्येव भवितव्यम् ॥

१ 'विहितविशेषणादुत्तर' इति क. च. पाठः ॥

२ समासेन भाव्यमिति । 'न' इति पृथक् पदम् । समासेऽस्याप्रवर्तनादेकवचनद्विवचनपरकत्वं न सम्भवतीति भावः ॥

३ हलादिग्रहणम्—'षट्त्रिचतुर्भ्यो हलादिः' इति सूत्रे ॥

४ अत्र च—विहितविशेषणाश्रयणे ॥

५ उत्तरपदार्थस्योपसर्जनत्वाद्वेत्याश्रयणस्य फलमाह—एतेनेति ॥

६ सौर्यं इति । यदि अस्यात्र प्रवृत्तिरिष्टा तदा 'तिसृभ्यो जसः' इत्यनन्तरं 'चतुरः शसः' इत्येव सूत्रकृता सूत्रं कृतं स्यात् । शसीति सप्तम्यन्तपदोपादानादेव 'सौर्यः–' इत्यस्य नात्र प्रवृत्तिरिति भावः ॥

७ सकारादिना व्यवधानेऽपि तकाराकारस्य प्राप्तिमुपपादयति—हल्स्वरप्राप्ताविति ॥

८ 'स्विन्स्विनौ' च. छ. झ. पाठः ॥

इह तर्हि—याड्भ्याम्-याड्भिः-इति न सिध्यति ।
**तस्मात्सप्तमीबहुवचनस्य ग्रहणम् ॥**

( प्रदीपः ) **साविति किमिति** । यदि शास्त्रीयं सुरूपं गृह्यते तदा प्राथम्यात् प्रथमैकवचनस्य ग्रहणेन भाव्यम् । अथ प्रायोगिकं ततः सप्तमीबहुवचनस्य । तद्धि प्रयोगे सुरूपं श्रूयते । प्रथमैकवचनं तु विकृतरूपं प्रयोगे न सुरूपमिति संशयानः पृच्छति—**यदयसिति** । 'गोषु–श्वसु'इति सप्तमीबहुवचन एकाच्त्वात् 'गोभ्यां–श्वभ्याम्'इत्यादौ विभक्तेः प्राप्तमुदात्तत्वं प्रतिषिध्यते । प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोऽनर्थकः । प्रथमैकवचने हि यदेकाच्छब्दरूपं 'गौः' इत्यौकारान्तं 'श्वा'इत्याकारान्तं न च तस्मात्तृतीयादिविभक्तिः परा संभवतीति प्राप्त्यभावात्किं प्रतिषेधेनेति भावः । प्रकृतिग्रहणे हि विकृतेर्ग्रहणं भवति, स्थानिवद्भावात्; न तु विकृतिग्रहणे प्रकृतेः ॥

**अनुगृहीता इति** । प्रतिषेधमन्तरेणेष्टस्यार्थस्य सिद्धत्वात् ॥ **स्विनेति** । प्रथमैकवचने 'स्त्री'इति विकृतप्रयोगात्तृतीयादौ प्रकृतिरूपस्य श्रवणाद्विकृत्या प्रकृतेरग्रहणादित्यर्थः । सप्तमीबहुवचने तु 'स्विषु'इति प्रकृतिरूपस्य प्रयोगात् स्वरविधौ नलोपस्यासिद्धत्वात्तस्यैव च तृतीयादौ प्रयोगात्सिध्यत्यन्तोदात्तत्वम् ॥

**याड्भ्यामिति** । सप्तमीबहुवचने 'यात्सु'इति यदेकाच् तत एव तृतीयादिरिति सिध्यत्यन्तोदात्तत्वम् । प्रथमैकवचने 'यान्'इति यद्रूपं न तस्मात्तृतीयादिरित्युदात्तत्वं न प्राप्नोतीत्यर्थः । न च तन्मध्यपतितत्वान्नुमो भेदकत्वाभावः, विशिष्टरूपशब्दविषयत्वात्तन्मध्यपतितपरिभाषायाः । तथाच 'नेदमदसोरकोः'इति तथाभूतमेवास्य[1] ज्ञापकम् । **अन्ये तु**—अन्वादेशेऽशमुदाहरन्ति—एभ्यः, एभिरिति । सप्तमीबहुवचने 'एषु' इत्यशादेशे कृते भवत्येकाच् । प्रथमैकवचने 'अयम्' इत्येकाज्न भवतीति स्वराप्रसङ्गः । 'ऊडिदम्' इत्यत्रान्तोदात्ताधिकारादशादेशस्यानुदात्तत्वादनेन स्वरेण प्रयोजनम् ॥

( उद्द्योतः ) ननु 'अनड् सौ' इत्यादिवत्प्रथमैकवचनस्य ग्रहणे सति कुतः सन्देहोऽत आह—**यदीति** ॥ **यदेकाच्छब्दरूपमिति** । भाष्यप्रामाण्यादेकग्रहणाच्च[2] रूपाश्रयणमिति भावः । तत्फलं तु 'कौभ्यां[3] कुलाभ्याम्' इत्यादावेतत्स्वराभावः । अत्र ज्ञापकेन सप्तमीबहुवचनग्रहणं साधयताऽन्यत्र प्रथमैकवचनग्रहणमेवेति सूचितम् ॥

भाष्ये—**दोषा इति**—एकस्मिन्नपि बहुत्वारोपेण बहुवचनम्, तदाह—**को दोष इति** ॥

ननु सप्तमीबहुवचनेऽपि नलोपे सति विकृतरूपस्यैव प्रयोगोऽत आह—**स्वरविधाविति** । 'नलोपः सुप्स्वर–' इत्यनेन । 'न तस्मात्तृतीयादिरित्युदात्तत्वं न प्राप्नोति'इति पाठः ॥

**न च तन्मध्येति** । तन्मध्यपतितन्यायेन यादृग्ग्रहणेन ग्रहणेऽपि श्रौतरूपभेदः कुतो नेति **चिन्त्यम्** ॥ **विशिष्टेति** । यथा 'सर्वादीनि–' इत्यादौ ॥ नन्वेभ्य इत्यादौ 'ऊडिदम्–' इत्यनेन विभक्त्युदात्तत्वं सिद्धमिति किमनेन स्वरेण प्रयोजनमत आह—**ऊडिदमिति** । 'एभिरग्ने' इत्यादौ सर्वानुदात्तपदश्रवणं तु छान्दसमिति तद्भावः ॥

( ६२८८ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधो वक्तव्यः । त्वया, मया ॥**

( प्रदीपः ) **त्वन्मदोरिति** । सौ यत् दृष्टं तस्मादेकाचः परा तृतीयादिरुदात्ता भवतीति सूत्रार्थाश्रयेण प्रतिषेध उच्यते । तृतीयादावेकाच्त्वमाश्रीयते न तु सावित्यर्थः ॥

( उद्द्योतः ) ननु सप्तमीबहुवचने युष्मदस्मदोरेकाच्त्वाभावेन स्वराप्राप्त्या प्रतिषेधोऽनर्थकोऽत आह—**सौ यद्दृष्टमिति** । वार्तिकाशयवर्णनमात्रमेतत्, 'सौ'इत्यस्य वैयर्थ्यापत्तेः ॥

( ६२८९ उपसंख्यानाक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**यस्मादत्र तृतीयादिर्न[4] तत्सावस्ति ॥**

**यद्यपि तत्[5] सौ नास्ति, प्रकृतिस्तस्य सावस्ति ॥**

( ६२९० आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रकृतेस्त्वनेकाच्त्वात्[6] ॥ * ॥**

( भाष्यम् ) **यद्यपि तस्य प्रकृतिरस्ति सावनेकाच्तु[7] सा भवति ॥**

( प्रदीपः ) **प्रकृतेश्चेति** । सौ यदेकाच् तस्मात्परा तृतीयादिरुदात्तेति सूत्रार्थ आश्रीयत इत्यर्थः ॥

(उद्द्योतः) **सौ यदिति** । एकाच्त्वोपलक्षणाय 'सौ'इत्युपात्तमित्यर्थः । एकवचनान्तप्रकृतिकण्यन्तप्रकृतिकक्विबन्तानामनभिधानं बोध्यम् । अन्यथा 'त्वासु' इति सौ यदेकाच् ततः परा 'त्वाभ्याम्' इत्यादौ तृतीयादिविभक्तिरस्त्वेवेति प्रत्याख्यानासङ्गतिः स्पष्टैव । 'अभिव्यक्तपदार्था ये' इति न्यायेन वा तयोर्वार्तिकेऽग्रहणमिति दिक् ॥

---

१ 'मेवास्या ज्ञापकम्' इति च. झ. पाठः ॥

२ भाष्यप्रामाण्यादिति । 'यदयं न गोश्वन्साववर्ण–इति गोश्वनोः प्रतिषेधं शास्ति' इति भाष्यप्रामाण्याद्रूपग्रहणम् ॥

३ कौभ्यामिति । अस्मिन्सूत्रे हि सप्तमीबहुवचने परे यद्रूपमित्यस्याश्रवणात्सप्तमीबहुवचने परे 'के' इति रूपं तत्रत्स्यात्तत्रैवास्य प्रवृत्तिरिति कौभ्यामित्यत्र न प्रवृत्तिरिति भावः ॥

४ तृतीयादिर्विभक्तिर्न' इति च. छ. झ. पाठः ॥

५ 'यद्यप्येतत्' इति च. छ. झ. पाठः ॥

६ 'प्रकृतेश्चानेकाच्त्वात्' इति च. छ. झ. पाठः ॥

७ 'सावनेकाच्सा' इति भ. क. पाठः ॥

( ११३३ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९८ )

## २६०६ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ ६ । १ । १६९ ॥

( उत्तरपदग्रहणजिज्ञासाभाष्यम् )

**उत्तरपदग्रहणं किमर्थम् ?**

(प्रदीपः) **उत्तरपदग्रहणमिति** । 'अनित्यसमासे' इत्याधारसप्तमी विज्ञास्यते । अनित्यसमासस्यान्तोदात्तादेकाचः परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवतीति सूत्रार्थ आश्रयिष्यत इति नार्थ उत्तरपदग्रहणेनेति भावः ॥

( उद्द्योतः ) अन्तोदात्तत्वैकाच्त्वयोरुत्तरपदविशेषणत्वाय तदावश्यकमिति कथं तदाक्षेपोऽत आह—**अनित्येति** । अनित्यसमासस्थं यदन्तोदात्तमेकाच् ततः परमित्युक्ते तादृशमुत्तरपदमेवेति भावः ॥

( उत्तरपदप्रयोजनभाष्यम् )

**यथैकाज्ग्रहणमुत्तरपदविशेषणं विज्ञायेत—एकाजुत्तरपदादिति ।**

**अथाक्रियमाण उत्तरपदग्रहणे कस्यैकाज्ग्रहणं विशेषणं स्यात् ?**

**समासविशेषणम् ।**

**अस्ति चेदानीं कश्चिदेकाच्समासः, यदर्थमेकाज्ग्रहणं स्यात् ?**

**अस्तीत्याह । शुनः ऊर्क्–श्वोर्क्, श्वोर्जा, श्वोर्जे इति ॥**

( प्रदीपः ) **समासविशेषणमिति** । 'अनित्यसमासे' इति सत्सप्तमी विज्ञायेत । ततश्च समासस्य श्रुतत्वात्तस्यैवैकाज्ग्रहणमन्तोदात्तत्वं च विशेषणं विज्ञायेत । न त्वश्रुतस्योत्तरपदस्येत्यर्थः ॥

( उद्द्योतः ) **सत्सप्तमीति** । 'अनित्यसमासे सति अन्तोदात्त एकाच्च यः समासः' इत्यर्थः । पञ्चम्यर्थे सप्तमी स्यादित्यन्ये ॥

—०००—

( ११३४ विधिसूत्रम् ॥ ६ । १ । ६ आ. ९९ )

## २६०८ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ ६ । १ । १७१ ॥

( पदादिविषये विशेषबोधकभाष्यम् )

**पदादिषु निश्पर्यन्तानि प्रयोजयन्ति । अन्यानि पदादीनि उदात्तनिवृत्तिस्वरेण सिद्धानि ॥**

( प्रदीपः ) **पदादिष्विति** । 'पद्दन्नोमास्–' इति सूत्रनिर्दिष्टाः पदादयो गृह्यन्ते । एकाज्ग्रहणं चेहानुवर्तत इति निशः परेऽनेकाच्त्वान्न गृह्यन्ते । यदा त्वल्लोपे कृते एकाचो भवन्ति तदोदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं सिद्धम् । येऽप्याद्युदात्तानां स्थाने विधीयन्ते आदेशास्तेऽन्तोदात्ता निपात्यन्त इति भाष्यकारवचनाद्विज्ञायते ॥

( उद्द्योतः ) **पद्दन्न इति** । निश्पर्यन्ततायास्तेष्वेव प्रसिद्धत्वादिति भावः ॥ 'ग्रीवायां बद्धोऽपि कक्ष्य आसनि' इत्यादावल्लोपाभावे मध्योदात्तत्वं श्रूयते, तदश्रवणार्थमेवाग्रिमाणामपि ग्रहणं स्यादत आह—**एकाज्ग्रहणं चेति** ॥ भाष्योक्तहेतुस्तूदाहरणविशेषविषय इत्याह—**यदा त्विति** ॥ **तदोदात्तनिवृत्तिस्वरेणेति** । सावर्णान्तं यद्रूपं ततः परत्वाभावात् 'न गोश्वन्–' इति तन्निषेधो नेति भावः ॥ नन्वसृक्यकृदादीनामाद्युदात्तानां स्थाने येऽनेकाच आदेशास्ते आन्तरतम्यादाद्युदात्ता इति कथं तद्विषये उदात्तनिवृत्तिस्वरेणेष्टसिद्धिरत आह—**येऽपीति** । प्रकृत्यन्तरत्वपक्षे तु फिट्स्वरेणान्तोदात्तत्वं बोध्यम् ॥

( ६२९१ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ऊठ्युपधाग्रहणम् ॥ * ॥

( भाष्यम् ) **ऊठ्युपधाग्रहणं कर्तव्यम् ।**

**किं प्रयोजनम् ?**

**अन्त्यप्रतिषेधार्थम् । अन्त्यस्य मा भूदिति । अक्षद्युवा, अक्षद्युवे ॥**

( प्रदीपः ) **ऊठ्युपधाग्रहणमिति** । उपधारूप ऊठ् गृह्यते न त्वन्य इत्यर्थः ॥

( उद्द्योतः ) **उपधारूप इति** । अन्यथा पञ्चमीनिर्देशादन्त्य एव गृह्येतेति भावः । 'विश्वौहः' इत्युदाहरणम् ॥

—०००—

( ११३५ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०० )

## २६०९ अष्टनो दीर्घात् ॥ ६।१।१७२ ॥

( दीर्घपदवैयर्थ्यबोधकभाष्यम् )

**दीर्घग्रहणं किमर्थम् ?**

**अष्टसु प्रक्रमेषु ब्राह्मण आदधीत ॥**

**दीर्घादिति शक्यमकर्तुम् ।**

**कस्मान्न भवति—अष्टसु प्रक्रमेषु ब्राह्मण आदधीतेति ?**

**षट्स्वरोऽत्र बाधको भविष्यति ।**

**नाप्राप्ते षट्स्वरे अष्टनः स्वर आरभ्यते स यथैव दीर्घाद्बाधते, एवं ह्रस्वादपि बाधेत ।**

---

१ येऽपीति । यूषासृगुदकशब्दाः । तत्र यूषशब्दो घन्नन्तत्वात्, असृक्–पूर्वपदप्रकृतिस्वरेण, उदकः–नद्विषयस्यानिसन्तस्येति ॥

२ भाष्यकारेति । 'उदात्तनिवृत्तिस्वरेण सिद्धानि' इत्यस्य वचनस्य अन्यथान्तोदात्तत्वं पिपाऽसंभवात् ॥

३ 'कर्तव्यम् । अन्त्यस्य मा भूदिति' इत्येव पाठः अ. क. पुस्तकयोः ॥

४ 'दीर्घादिति किमर्थं' इति च. ट. पाठः ॥

५ षट् स्वर इति । इत्युपोत्तम् ( ६।१।१८० ) इत्यनेनोक्तः ॥

न दीर्घात्षट्स्वरः प्राप्नोति ।

किं कारणम् ?

आत्वे कृते षट्संज्ञाऽभावात् ॥

अत उत्तरं पठति—

(प्रदीपः) दीर्घग्रहणमिति । 'अष्टन आ विभक्तौ' इति नित्यत्वादात्वविधेर्व्यभिचाराभावात् विकल्पेऽपि चात्वस्य ह्रस्वान्तात्परत्वात् षट्स्वरेण भाव्यमिति प्रश्नः ॥

अष्टस्विति । अस्मादेव दीर्घग्रहणादात्वं विकल्पितमिति भावः ॥

(उद्द्योतः) विकल्पेऽपि चेति । अस्मादेव दीर्घग्रहणाद्विकल्पोऽनुमास्यत इति भावः । ह्रस्वान्तात्षट्स्वरेण भाव्यमित्यन्वयः । तत्र हेतुः-परत्वादिति ॥ षट्स्वरः—'झल्युपोत्तमम्'इति । अयं[1] च दीर्घान्तात्प्रवृत्त्या चरितार्थः । तत्र[2] हि न षट्त्वम्, ह्रस्वान्ते तु नलोपस्यासिद्धत्वात्षट्त्वमिति भावः ॥

( ६२९२ दीर्घात्पदस्य ज्ञापकत्वस्थापकवार्तिकम् ॥ १ ॥ )

॥ * ॥ अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम् ॥ * ॥

( भाष्यम् ) अष्टनो दीर्घग्रहणं क्रियते ज्ञापकार्थम् ।

किं ज्ञाप्यम् ?

एतज्ज्ञापयत्याचार्यः—भवत्यात्वे कृते षट्संज्ञेति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

आकारान्तस्य नुडर्थम् । आकारान्तस्य नुट् सिद्धो भवति—अष्टानामिति ॥

ननु च नित्यमात्वम् ।

एतदेव ज्ञापयति-विभाषा आत्वमिति, यदयं दीर्घग्रहणं करोति । इतरथा हि 'अष्टनः' इत्येव ब्रूयात् ॥

( प्रदीपः ) अष्टनो दीर्घग्रहणमिति । न्यायसिद्धस्यैवार्थस्य दीर्घग्रहणं लिङ्गम्, आत्वस्य[3] बहिरङ्गत्वादन्तरङ्गायां षट्संज्ञायां कर्तव्यायामसिद्धत्वान्नान्तत्वादेव षट्संज्ञायाः सिद्धत्वात् ॥

एतदेवेति । दीर्घग्रहणेनान्यथाऽनुपपत्त्याऽयमर्थो ज्ञाप्यते ॥

( उद्द्योतः ) न्यायसिद्धस्यैवेति । यद्यपि कार्यकालपक्षे 'षट्त्रि–' इत्येकवाक्यतापन्ना संज्ञा आत्वेन समैव, तथापि यथोद्देशपक्षेऽन्तरङ्गत्वमिति भावः । न च नान्तत्वावस्थायां जातेऽपि षट्त्वे आकारे कृते नुट् न स्यादिति वाच्यम्, एकदेशविकृतन्यायेन नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपषट्त्वस्याकारान्तेऽपि सुलभत्वादिति तात्पर्यम् । अस्मादेव ज्ञापकादेतद्विषये यथोद्देशस्यैवाश्रयणमिति बोध्यम् ॥

दीर्घग्रहणेनेति । अन्यथाऽनुपपत्तिर्ह्यनेकस्याप्यर्थस्य ज्ञापिकेत्यर्थः ॥

---

( ११३६ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०१ )

## २६१० शतुरनुमो नद्यजादी

## ॥ ६ । १ । १७३ ॥

( ६२९३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानं कर्तव्यम् । बृहती, बृहता । महती, महता ॥

( प्रदीपः ) बृहन्महतोरिति । शतृवद्भावादेव सिद्धत्वान्नियमार्थमेतत्, पृषदादिभ्यो मा भूदित्येवमर्थम् । ये तु गौरादिषु बृहन्महदिति पठन्ति तेषामनर्थकोऽसौ पाठः । अनुपसर्जनाधिकाराच्च 'अतिबृहती-अतिमहती'इति गौरादिङीष् नास्तीति ङीबेवोगिल्लक्षणः कर्तव्यः, तस्मानेनोदात्तत्वम् ॥ नन्वत्र तदन्तविध्यभावाच्च प्राप्नोति । नैतदस्ति । तदन्तेऽपि बृहन्महद्भ्यां परे नद्यजादी भवतः ॥

( उद्द्योतः ) शतृवद्भावादिति । 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च'इत्यनेन ॥ अनर्थकोऽसौ पाठ इति । 'नद्यर्थः'[4] इति शेषः । तन्मतेऽपि कर्तव्यतां दर्शयति—अनुपसर्जनेति ॥ तदन्तविध्यभावादिति । विशेष्यासन्निधानादित्यर्थः । अनेनैव सिद्धे गौरादिषु पाठः किमर्थं इति तु चिन्त्यम् ॥

---

( ११३७ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०२ )

## २६११ उदात्तयणो हल्पूर्वात्

## ॥ ६ । १ । १७४ ॥

( पदकृत्यभाष्यम् )

हल्पूर्वादिति किमर्थम् ?

अग्नये[5], वायवे ॥

( उद्द्योतः ) भाष्ये—अग्नये इति । उदात्तस्थानिको यण्शब्देन विहितोऽन्यथा[6] वा, सर्वस्य ग्रहणं स्यात् । हल्पूर्वग्रहणे तु यण्शब्दविहितस्यैव ग्रहणमित्यभिमानः ॥

---

१ अयं च-अष्टनो दीर्घादित्येतत्सूत्रविहितश्च ॥

२ दीर्घान्ते झल्युपोत्तममित्यस्याप्राप्तिं दर्शयति—तत्र हीति ॥

३ 'आत्वस्य बहिरङ्गत्वायां षट्संज्ञायां कर्तव्यायामसिद्धत्वात्' इति च. झ. पाठः । स च पाठः प्रामादिकः, षट्संज्ञाया बहिरङ्गत्वाभावात् । उद्योतदर्शनादपि पाठस्यास्य प्रामादिकत्वं सुस्पष्टम् ॥

४ अनेनैवेति । बृहन्महच्छब्दयोर्गौरादिगणे पाठे वार्तिकोपसंख्यानं निष्फलम् । पाठेनैव सिद्धे वार्तिकं न कर्तव्यमिति भावः ॥

५ अग्नये इति । अत्र हि उदात्तस्येकारस्य स्थाने जायमानो य एकारस्तस्य स्थाने जायमानस्यायादेशस्योदात्तस्थाने जायमानत्वेन प्राप्तिः ॥

६ अन्यथा—यण्शब्दाविहितः ॥

(६२९४ न्यासान्तरेण लक्ष्यसिद्धिबोधकवार्तिकम् ॥ १ ॥)

## ॥ * ॥ उदात्तयणि हल्ग्रहणं नकारान्तार्थम् ॥ * ॥

**(भाष्यम्) उदात्तयणि हल्ग्रहणं कर्तव्यम्।**

**किं प्रयोजनम्?**

**नकारान्तार्थम्। नकारान्तादपि यथा स्यात्। वाक्पत्नी, चित्पत्नी ॥**

(प्रदीपः) **उदात्तयणीति**। 'उदात्तयणः' इत्यपनीय दात्तहलः' इति वक्तव्यमित्यर्थः ॥ **वाक्पत्नीति**—तत्पुरुषः। 'न भूवाक्चिद्दिधिषु' इति पूर्वपद[1]प्रकृतिस्वरनिषेधात्समासान्तोदात्तत्वम्। 'विभाषा सपूर्वस्य' इति नकारादेशः ॥

(उद्द्योतः) ननु हल्ग्रहणस्य कृतत्वात्कुतस्तस्य कर्तव्यत्वोक्तिरत आह—उदात्तयण इतीति ॥ तत्पुरुष इति। वाचः पतिरिति विग्रहः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वादुदात्तस्थानिकहलोऽप्रसिद्धिरिति भावः ॥ ननु तत्पुरुषेऽपि 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरः स्यादत आह—न भूवागिति ॥

(६२९५ हल्पूर्वग्रहणानर्थक्यबोधकवार्तिकम् ॥ २ ॥)

## ॥ * ॥ हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वात् ॥ * ॥

**(भाष्यम्) हल्पूर्वग्रहणं चानर्थकम्।**

**किं कारणम्?**

**समुदायादेशत्वात्। समुदायोऽत्रादेशः ॥**

(प्रदीपः) **हल्पूर्वग्रहणानर्थक्यमिति**। यथा 'उरण्रपरः' इत्यनेनाणनण्समुदायस्य सौधातकिरित्यादौ[2] रपरत्वं न भवति, एवमग्नय इत्यादौ यणयण्समुदाय उदात्तस्य स्थाने विधीयते न यणेव केवल इति स्वरो न प्रवर्तिष्यत इत्यर्थः ॥

(उद्द्योतः) [3]उक्तप्रयोजनाभावं दर्शयति—**यथा 'उरण्-' इति** ॥

(६२९६ आनर्थक्योपष्टम्भकवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ स्वरितत्वे वावचनात् ॥ * ॥

**(भाष्यम्) स्वरितत्वे च हल्पूर्वग्रहणस्यावचनात् मन्यामहे—हल्पूर्वग्रहणमनर्थकमिति ॥**

(प्रदीपः) **स्वरितत्वे चेति**। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्यत्र समुदायादेशस्याश्रयणादेव 'अग्नये' इत्यादौ स्वरितत्वनिवृत्त्यर्थं हल्पूर्व[4]ग्रहणं न कृतमित्यर्थः ॥

(उद्द्योतः) **स्वरितत्वनिवृत्त्यर्थमिति**। ननु 'अग्नये' इत्यत्र 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन विभक्तेः स्वरितत्वमिष्टमेव, इतिचेन्न; 'अग्नये जुष्टम्' इत्यादौ विशेषात्। तत्र हि 'जुष्ट'शब्दः 'जुष्टार्पिते च च्छन्दसि' इत्याद्युदात्तः। तत्र हि 'नोदात्तस्वरितोदयम्-' इत्यनेन 'उदात्तादनुदात्तस्य-' इत्यस्य निषेधात्। अनन्तरत्वाद्धि तस्यैव स निषेधः, न 'उदात्तस्वरितयोः-' इत्यस्येति दिक् ॥

(वार्तिकत्रयप्रत्याख्यानभाष्यम्)

**यत्तावदुच्यते—उदात्त[5]यणि हल्ग्रहणं नकारान्तार्थमिति, क्रियते न्यास एव। द्विनकारको निर्देशः—उदात्तयणो हल्पूर्वान्नोङ्धात्वोरिति ॥**

**यदप्युच्यते—हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वादिति, अयमस्ति केवल आदेशः—बहुतितवा, बहुतितवे—इति ॥**

(प्रदीपः) **द्विनकारक इति**। तत्रैको नकारो लुप्तपञ्चमीको निर्दिष्टः, तस्योदात्तग्रहणेन विशेषणादुदात्तनकारादपि परस्या नद्या उदात्तत्वं भवति। भाष्यकारेण भक्त्यतिशयः सूत्रकारं प्रति दर्शितः, न त्वियं स्पष्टा गतिः ॥

**बहुतितवेति**। बहूनि तितऊन्यस्या इति बहुव्रीहिः। 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यतिदेशादन्तोदात्तत्वम्[6], अत्र विभक्तेरुदात्तत्वनिवृत्तये हल्पूर्वग्रहणं कृतम्[7], 'उदात्तस्वरितयोर्यणः-' इत्यनेन तु स्वरितत्वं भवति ॥

(उद्द्योतः) ननु नकारनिर्देशे तस्य पञ्चम्यन्तत्वं समस्तोदात्तशब्दस्य तेनान्वय इत्यतिक्लिष्टमेतदत आह—**भाष्यकारेणेति**। 'उदात्त'[8] इति लुप्तषष्ठ्यन्तमिति भाष्याशयमन्ये ॥

ननु बहुव्रीहौ पूर्वपदप्रकृतिस्वरप्राप्तेरुदात्तस्थानिकत्वाभावोऽत आह—**बहोर्नञ्वदिति**। 'उदात्तस्वरितत्वं भवति' इति पाठे उदात्तस्थानिकयण्णिमित्तकं स्वरितत्वं भवतीत्यर्थः ॥ भाष्ये—**बहुतितवा इति**—तृतीयान्तम्। 'बहुतितवे' इति प्रसङ्गोच्चारितम्, तत्र हि 'घेर्ङिति' इति गुणेन[9] भाव्यम् ॥

---

१ पूर्वपदप्रकृतिस्वरनिषेधादिति। 'पत्यावैश्वर्ये' इत्यस्यायं निषेधः ॥

२ सौधातकिरित्यादाविति। 'सुधातुरकङ् च' इत्यनेन ऋकारस्य स्थाने जायमानोऽकङ् समुदायादेशत्वात् रपरो न भवति, अग्नये इत्यादावयादेशस्य यणयण्समुदायरूपत्वात् रपरत्वमिव न प्रवर्तेत इत्यर्थः ॥

३ उक्तप्रयोजनाभावम्—हल्पूर्वादिति पदप्रयोजनाभावम् ॥

४ हल्पूर्वग्रहणं न कृतमिति। 'अग्नये' इत्यत्रानुदात्तस्यैकारस्य 'उदात्तस्वरितयोर्यणः-' इत्यनेन प्राप्तस्य स्वरितस्य निषेधार्थं हल्पूर्वग्रहणं सूत्रकृता न कृतम्, तत्र हि अयादेशस्य समुदायादेशत्वादुदात्तस्वरितयोः स्थाने यणोऽभावान्न दोष इति तदाशयः ॥

५ 'उदात्तस्य यणि' इति च. झ. पाठः ॥

६ अन्तोदात्तत्वम्—'नञ्सुभ्याम्' ६।२।१७२ इत्यनेन ॥

७ 'कृतमुदात्तस्वरितत्वं भवति' इति अ. पाठः ॥

८ उदात्तेति। उदात्तयणो हल्पूर्वादिति सूत्रे 'उदात्त' इति पृथक्पदं लुप्तषष्ठीकमिति भावः ॥

९ गुणेनेति। 'बहुतित उ ए' इत्यवस्थायां यणं बाधित्वा घेर्ङितीति गुणे कृतेऽवादेशे 'अतो गुणे' इति पररूपे रूपं सिद्ध्यति। तत्र यणोऽभावान्न तद्धल्पूर्वग्रहणस्य प्रयोजनमिति प्रसङ्गोच्चारितन्तदित्याशयः ॥

( ११३८ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०३ )

## २६१३ ह्रस्वनुड्भ्यां मतुप्
## ॥ ६ । १ । १७६ ॥

( ६२९७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ मतुबुदात्तत्वे रेग्रहणम् ॥ * ॥

( भाष्यम् ) मतुबुदात्तत्वे रेग्रहणं कर्तव्यम् । आरेवानेतु नो विशः ॥

( प्रदीपः ) आरेवानिति । रयिरस्यास्तीति मतुप् । 'रयेर्मतौ बहुलम्'इति संप्रसारणम्, पूर्वैकादेशः, 'आद्गुणः', ततो ह्रस्वाभावान्मतुप्स्वरो न प्राप्नोतीति वचनम् ॥

( ६२९८ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ त्रिप्रतिषेधश्च ॥ * ॥

( भाष्यम् ) त्रेश्च प्रतिषेधो वक्तव्यः । त्रिवतीर्याज्यानुवाक्या भवन्ति ॥

( प्रदीपः ) त्रिवतीरिति । 'छन्दसीरः' इति वत्वम् । 'वा छन्दसि'इति पूर्वसवर्णदीर्घः ॥

---

( ११३९ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०४ )

## २६१४ नामन्यतरस्याम् ॥ ६।१।१७७ ॥

( उद्देश्यतावच्छेदकनिर्णायकभाष्यम् )

इह कस्मान्न भवति—किशोरीणाम्, कुमारीणाम् ?

ह्रस्वादिति वर्तते ।

इहापि तर्हि न प्राप्नोति—अग्नीनाम्, वायूनाम् ।

किं कारणम् ?

दीर्घत्वे कृते ह्रस्वाभावात् ।

इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां स्वर इति, किमत्र कर्तव्यम् ?

परत्वाद्दीर्घत्वम् ।

एवं तर्हि—

( ६२९९ ह्रस्वोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नाम्स्वरे मतौ ह्रस्वग्रहणम् ॥ * ॥

( भाष्यम् ) नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यम्—'मतौ ह्रस्वान्तात्'इति ॥

( प्रदीपः ) मतौ ह्रस्वान्तादिति । मतुपि ह्रस्वान्तं यद्दृष्टं तस्मात्परो नामन्यतरस्यामुदात्तो भवतीत्यर्थः ॥

( उद्द्योतः ) 'मतौ ह्रस्वान्तात्'इति न्यासेऽग्नीनामित्यसिद्धिस्तदवस्थैव । मतौ ह्रस्वान्तं 'अग्नि'इति, नामस्तस्मात् परत्वाभावात्; अतस्तस्य सिद्धिप्रकारं दर्शयितुमर्थमाह—मतुपीति ॥

( ह्रस्वग्रहणे प्रत्याख्यानभाष्यम् )

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम् । आहायम्—ह्रस्वान्तादिति, न च नामि ह्रस्वान्तोऽस्ति, तत्र भूतपूर्वगतिर्विज्ञास्यते—ह्रस्वान्तं भूतपूर्वमिति ॥

सांप्रतिकाभावे भूतपूर्वगतिर्विज्ञायते ।

अयं चास्ति सांप्रतिकः—तिसृणाम्, चतसृणामिति ।

नैतदस्ति । 'षट्त्रिचतुर्भ्यो हलादिः' (६।१।१७९) इत्यनेनात्र भवितव्यम् । तस्मिन्नित्ये प्राप्ते इयं विभाषाऽऽरभ्यते ।

एवं तर्हि योगविभागः करिष्यते-'षट्त्रिचतुर्भ्यः', नामुदात्तो भवति ।

ततः—'हलादिः', हलादिश्च विभक्तिरुदात्ता भवति षट्त्रिचतुर्भ्य इति ॥

इदं तर्हि—त्वं नृणां नृपते जायसे शुचिः ।

ननु चात्रापि 'नृ चान्यतरस्याम्' (६।१।१८४) इत्येष स्वरोऽत्र बाधको भविष्यति ।

न सिद्ध्यति ।

किं कारणम् ?

झल्ग्रहणं तत्रानुवर्तते ।

किं पुनः कारणं झल्ग्रहणं तत्रानुवर्तते ?

इह मा भूत्—त्रा, त्रे । 'उदात्तयणो हल्पूर्वात्' (६।१।१७४) इत्येष स्वरो[1]ऽत्र बाधको भविष्यति ॥

इदं तर्हि—नरि ।

नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात् 'नाम्' इत्येव ब्रूयात् । तत्र वचनात् भूतपूर्वगतिर्विज्ञास्यते—ह्रस्वान्तं यद्भूतपूर्वमिति ॥

अथवा नैवं विज्ञायते—नाम्स्वरे मतौ ह्रस्वग्रहणं कर्तव्यमिति ।

कथं तर्हि ?

नाम्स्वरे मतौ ह्रस्वादिति वर्तत इति ॥

( प्रदीपः ) भूतपूर्वगतिरिति । अकृते दीर्घे ह्रस्वान्तात्परः 'नाम्' अभूत्-इति कृते दीर्घे स्वरः प्रवर्तते ॥

षट्त्रिचतुर्भ्यः, नामिति । विकल्पे प्राप्ते नित्यार्थो योगविभाग इति सांप्रतिकाभावाद्भूतपूर्वगतिराश्रीयते ॥

नैकमुदाहरणमिति । 'ह्रस्वनुड्भ्यां मतुप्' इत्यत्र ह्रस्वग्रहणस्य स्वरितत्वमिहार्थं प्रतिज्ञातम्, तच्च सर्वह्रस्वसंग्रहार्थमिति

---

१ अ. पुस्तके नेदं वार्तिकं दृश्यते ॥

२ 'ह्रस्वान्तं यद्भूत' इति च. छ. ट. झ. पाठः ॥

[1] 'स्वरो बाधको' इति छ. क. पाठः ॥

विषयसंकोचो न युक्तः । अन्यथा लाघवाय 'नृ चान्यतरस्याम्' इत्यस्यानन्तरं 'नाम्' इति ब्रूयादित्यर्थः ॥

**मतौ ह्रस्वादिति वर्तत इति** । मतुब्ग्रहणमिहानुवृत्तं सामर्थ्यात्सप्तम्यन्तं संपद्यते । ततो मतौ यद्ध्रस्वान्तं दृष्टं तस्मात्परः 'नाम्' उदात्तो भवतीत्यर्थः संपद्यते ॥

(उद्योतः) भाष्ये—सांप्रतिकसत्तां समर्थयते—**तस्मिन्निति प्राप्ते इति** ॥

**विकल्पे प्राप्ते इति** । 'नामन्यतरस्याम्' इति विकल्पे प्राप्ते इत्यर्थः ॥ **सांप्रतिकाभावादिति** । योगविभागेन चतसृणामित्यत्रास्य विकल्पस्य बाधादप्रवृत्तेरिति भावः ॥

भाष्ये—**उदात्तयणो हल्पूर्वादित्येष स्वरो बाधक इति** । यद्यपि 'कर्त्री-कर्त्रि' इत्यादौ चरितार्थस्यास्य नृभिरित्यादौ चरितार्थेन 'नृ चान्यतरस्याम्' इत्यनेन परत्वाद्बाधः प्राप्नोति, तथापि पूर्वविप्रतिषेधेनाऽत्र तदेवेति भाष्ये पूर्वपक्ष्येकदेश्यभिमान इत्याहुः ॥ **नैकमुदाहरणमिति** । नृणामित्येतत् ॥ नन्वत्र ह्रस्वग्रहणाभावात्कस्य वचनस्य सामर्थ्यम्? अत आह—**ह्रस्वनुडिति** ॥ तत्र युक्तिमाह—**अन्यथेति** । 'नाम्-' इति सूत्रे च नृग्रहणमनुवर्ततेऽन्यतरस्यामिति च, ह्रस्वग्रहणानुवृत्तिरप्यत्र द्रष्टव्या । अन्यथा दीर्घनृशब्देऽपि स्यात् । न चेष्टापत्तिः, सामर्थ्यायोगादिति भावः ॥ भाष्ये—**नैवं विज्ञायत इति** । 'मतौ ह्रस्वग्रहणम्' इति वार्तिकस्य 'कर्तव्यम्' इति न शेषः, किन्तु 'वर्तते' इति शेष इत्यर्थः ॥

( ११४० निषेधसूत्रम् ॥ ६ । १ । ६ आ. १०५ )

## २६१९ न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ ६ । १ । १८२ ॥

( एकदेशिनः 'सौ' इति सप्तमीबहुवचननिर्णयभाष्यम् )

**साविति किमिदं प्रथमैकवचनस्य ग्रहणम्, आहोस्वित्सप्तमीबहुवचनस्य?**

**कुतः सन्देहः?**

**समानो निर्देशः ।**

**पुरस्तादेष निर्णयः—सप्तमीबहुवचनस्य ग्रहणमिति, इहापि तदेव भवितुमर्हति ॥**

( प्रदीपः ) **इहापीति** । एकप्रकरणोपादानादिति भावः ॥

( उद्योतः ) **एकप्रकरणोपादानादिति** । एकप्रकरण उभयोरुपादानादित्यर्थः ॥

( सप्तमीग्रहणे आक्षेपभाष्यम् )

**यदि सप्तमीबहुवचनस्य ग्रहणम्, ताभ्यां ब्राह्मणाभ्याम्-याभ्यां ब्राह्मणाभ्याम्-अत्र न प्राप्नोति ।**

**विधिरप्यत्र[1] न सिध्यति ।**

**किं कारणम्?**

**न ह्येतद्भवति—यत्सौ[2] रूपम् ।**

**इदं तर्हि—तेभ्यो ब्राह्मणेभ्यः, येभ्यो ब्राह्मणेभ्यः ।**

**विधिश्च सिद्धो भवति ।**

**प्रतिषेधस्तु न प्राप्नोति ॥**

( प्रदीपः ) **ताभ्यामिति** । सप्तमीबहुवचने 'तेषु' इत्यवर्णान्तत्वाभावात्प्रतिषेधो न प्राप्नोति ॥

**विधिरप्यत्रेति** । 'तेषु' इति सप्तमीबहुवचने यदेकारान्तं रूपं न तस्मादत्र परा तृतीयादिः ॥

( उद्योतः ) न **तस्मादत्रेति** । एवञ्च विधेः प्राप्त्यभावान्निषेधाप्रवृत्तावपि न दोष इत्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**अस्ति पुनः सप्तमीबहुवचनस्य ग्रहणे किंचिदिष्टं संगृहीतं भवति, आहोस्विद्दोषान्तमेव ।**

**अस्तीत्याह ।**

**इह-'याभ्यो ब्राह्मणीभ्यः' 'ताभ्यो ब्राह्मणीभ्यः' इति । विधिश्च सिद्धो भवति प्रतिषेधश्च ।**

( प्रदीपः ) **ताभ्य इति** । 'तासु' इति सप्तमीबहुवचनेऽवर्णान्तत्वात् ॥

( साविति प्रथमैकवचकग्रहणे दोषभाष्यम् )

**अस्तु तर्हि प्रथमैकवचनस्य ग्रहणम् ।**

**यदि प्रथमैकवचनस्य ग्रहणम्, 'तेन' इति स्वरः पुंसि न सिद्ध्यति ।**

**न चावश्यं पुंस्येव, स्त्रियां पुंसि नपुंसके च । तेन ब्राह्मणेन, तया ब्राह्मण्या, तेन कुण्डेन-इति ।**

**सप्तमीबहुवचनस्यापि ग्रहणे एष दोषः ॥**

( प्रदीपः ) **तेनेति**[3] । 'सः' इति प्रथमैकवचने यदवर्णान्तं न तस्मात्परं तृतीयैकवचनम्, किं तर्हि? रूपान्तरयुक्तात् ॥ **तयेति** । 'सा' इति प्रथमैकवचने यदवर्णान्तं न तस्मात्परा तृतीया, नपुंसके च 'तत्' इति साववर्णान्तमेव न भवतीति 'तेन ब्राह्मणकुलेन' इति प्रतिषेधाप्रसङ्गः ॥

**सप्तमीबहुवचनस्यापीति** । 'तेषु' इति पुंनपुंसकयोस्तावदवर्णान्तं न भवति । 'तासु' इति स्त्रियां यद्यप्यवर्णान्तं तथापि 'तया' इत्यत्र रूपान्तरयुक्तात्परा तृतीया-इति प्रतिषेधो न प्राप्नोति ॥

( उद्योतः ) **'तेन'** इत्यत्र सप्तमीबहुवचने यत् 'ते' इति रूपं ततः परा 'न' इति तृतीयादिर्विभक्तिरेकदेशविकृतन्यायेन-इति विधेः प्राप्तिर्बोध्या ॥

---

१ विधिरप्यत्रेति । 'साधेकाचस्तृतीयादिर्विभक्तिः' इत्ययं विधिरत्र न सिद्ध्यति ॥

२ 'यत्सौ भवति रूपम्' इति क. च, ञ. पाठः ॥

३ तेनेतीति । इदमुपलक्षणम् । 'तेभ्यो ब्राह्मणेभ्यः' इत्यादावप्युप द्धारो बोध्यः ॥

( यत्तदोर्ग्रहणेन प्रथमैकवचनस्थापनभाष्यम् )

**तस्मादुभाभ्यामपि प्रतिषेधे यत्तदोश्च ग्रहणं कर्तव्यम्-इति । 'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः' 'यत्तदोश्च' इति ॥**

( प्रदीपः ) **तस्मादिति** । प्रथमैकवचनस्य त्विह ग्रहणम्-इति निर्णयः । तेन वृक्षवानित्यादावपि मतुप उदात्तत्वप्रतिषेधो भवति । सप्तमीबहुवचने त्ववर्णान्ता वृक्षादयो न भवन्तीति मतुप [1]उदात्तनिषेधो न स्यात् ॥

**तेनेति यदुपन्यस्तं प्राप्तस्तत्र कथं स्वरः ।**
**एकारान्तं यदेकाच् सौ तस्मादत्र परो न टा ॥**
**न चाङ्गुणे कृते प्राप्तिर्निषेधादुभयाश्रये ।**
**विधावन्तादिवत्त्वस्य चिन्[2]त्यं तस्मादिदं बुधैः ॥**

( उद्द्योतः ) **इति निर्णय इति** । 'चौ' इति सूत्रस्थभाष्यप्रामाण्यान्मतुप्पदानुवृत्त्या विभक्तिमतुब्विषये प्राप्तस्वरमात्रस्यायं निषेध इत्यपि निर्णयो बोध्यः । '**यत्तदोः**' इत्येव भाष्योक्तेः 'केभ्यः' इत्यादौ निषेधो न भवत्येव । सावर्णान्तं यद्रूपं तस्मात्परत्वं विभक्त्याद्युत्पत्तिकालावच्छिन्नं ग्राह्यम्, तेन न 'चौ' इति सूत्रस्थभाष्यविरोधः । तत्र हि 'वेतस्वान्' इत्यत्रास्य प्राप्तिः शङ्किता । नापि 'कुमारी'इत्यादावुदात्तनिवृत्तिस्वरनिषेधशङ्कापरभाष्यविरोधः, 'यत्तदोश्च' इत्यस्य च सार्थक्यमिति बोध्यम् ॥

**चिन्त्यमिति** । एवं च 'सावेकाचः' इत्यस्य प्राप्त्यभावादेवेष्टस्वरसिद्धिरिति भावः । वस्तुतो भाष्यमते 'टाङसि-' इति सूत्रे नादेशस्यैव सत्त्वेनैकदेशविकृतन्यायेनान्तवत्त्वानुपयोगाच्च चिन्त्यमेव **चिन्त्यम्** ॥

—※—

( ११४१ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०६ )

## २६२२ तित्स्वरितम् ॥ ६ । १ । १८५ ॥

( स्वरिताधिकरणम् )

( ६३०० उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तिति प्रत्ययग्रहणम् ॥ * ॥**

**( भाष्यम् ) तिति प्रत्ययग्रहणं कर्तव्यम् ।**

**इह मा भूत्—'ऋृत इद्धातोः' ( ७।१।१०० ) किरति, गिरति ॥**

(प्रदीपः) **किरतीति** । तिता[3] प्रत्यायितः संज्ञाधर्मेण संज्ञी कथ्यते-इत्यस्ति तिद्व्यपदेश आदेशस्य । यथा 'अचो यत्' इति प्रत्ययस्य । इत्संज्ञा हि [4]प्रत्यायक एव व्यवस्थितस्य प्रवर्तते । लोपविधानद्वारेण च तस्यासत्त्वं [5]प्रत्याय्ये प्रतिपाद्यते । तथा चायमर्थः-अजन्ताद्धातोर्यः प्रत्ययो भवति स च तित्कार्यं लभत इति । अनेकप्रयोजनदर्शनाच्चानुबन्धानां तकारस्तत्कालग्रहणार्थश्च स्यात्, स्वरितार्थश्च । प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इति परिभाषा तु [6]भाष्यकारवार्तिककाराभ्यां न क्वचिदाश्रिता ॥

( उद्द्योतः ) ननु 'ऋृत इत्-' इत्यादौ प्रत्यायकस्य तित्त्वेऽपि तपरसूत्रबलात्प्रत्याय्यस्य विधेयस्येकारस्य तित्त्वाभावात्कथमत्र प्राप्तिरत आह—**तितेति** । 'ऋृत[7] इद्धातोः' इति सूत्रस्थेन इच्छब्देनेत्यर्थः । 'तेन[8] प्रत्यायितः संज्ञी 'द्विरेफो भ्रमरः'इति वच्छब्दार्थयोरभेदोपचारात्संज्ञाधर्मेण कथ्यते' इत्यन्वयः । '**इता प्रत्यायितः**' इति पाठान्तरम् ॥ ननु [9]यदादिप्रत्ययस्य मुख्यमेव तित्त्वम्, नेत्याह—**इत्संज्ञा हीति** ॥ **प्रत्यायक एव**—सूत्रोपात्त एव । [10]उपदेशोत्तरकाले तद्विधानादिति भावः ॥ **तस्यासत्त्वं प्रत्याय्ये इति** । पदार्थोपस्थितेरनुबन्धविनिर्मुक्ताया एव जायमानत्वादिति भावः ॥ ननु तस्य[11] तपरसूत्रप्रवृत्त्या चरितार्थस्य कथं संज्ञ्युपकारकत्वं स्यात्? अत आह—**अनेकेति** । '**अनुबन्धानाम्**' इति पूर्वान्वयि । वस्तुतो विधीयमानत्वेन तपरसूत्रप्रवृत्तौ फलाभाव इति **चिन्त्यम्** ॥ **न क्वचिदाश्रितेति** । 'अङ्गस्य' इति सूत्रे आश्रितत्वाच्चिन्त्यमिदम् । यद्वा न क्वापि लक्ष्यसिद्ध्यर्थमाश्रितेत्यर्थः । 'अङ्गस्य' इति सूत्रे तु तत्प्रत्याख्यानायैकदेशिनोपन्यस्ता, न तु सिद्धान्तिना-इत्याशयः । '[12]अग्नौ' इत्यादौ स्थानिवद्भावेन प्रत्ययत्वेऽपि नेदम्, विधानकालिकप्रत्ययत्ववत एव ग्रहणात्-इत्याहुः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**तत्तर्हि वक्तव्यम् ।**
**न वक्तव्यम् ।**
**नैष तकारः ।**
**कस्तर्हि ?**
**दकारः ॥**

( दकारकरणे दोषनिवारकभाष्यम् )

**यदि दकार आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति । भाव्यमानेन सवर्णानां ग्रहणं नेत्येवं न भविष्यति ॥**

( भाव्यमानोऽप्युकार इति परिभाषासाधकभाष्यम् )

**यदि भाव्यमानेन सवर्णानां ग्रहणं नेत्युच्यते**

---

१ 'उदात्तत्वनिषेधो न' इति च. क. झ. पाठः ॥

२ चिन्त्यमिति । तत्रेयं चिन्ता—भाष्ये हि 'टाङसि-' इत्यत्र इनादेशं प्रत्याख्याय नादेशस्य व्यवस्थापनात् । 'तेन' इत्यत्र इनादेशे 'आङि चापः' इत्यत्र 'आङि' इति योगविभागात् भाष्यकारकृतात् टायामकारान्तस्यैत्वे कृते 'तेन' इति सिद्धौ सप्तमीबहुवचने यदेकारान्तं 'ते' इति तस्मात्परः 'न' इति टादेश इत्यस्ति 'सावेकाचः-' इत्यस्य प्राप्तिरिति ॥

३ 'इता प्रत्यायितः' इति अ. पाठः ॥

४ प्रत्यायके—सूत्रोपात्ते ॥

५ प्रत्याय्ये—विधेये ॥

६ 'भाष्यवार्तिककाराभ्यां' इति च. झ. पाठः ॥

७ कैयटोक्ततितापदस्यार्थमाह—ऋृत इद्धातोरितीति ॥

८ तिता प्रत्यायित इत्यादिप्रदीपपङ्क्त्यन्वयमाह—तेनेत्यादिना ॥

९ यदादिप्रत्ययस्य—अचो यदिति सूत्रविहितयदादिप्रत्ययस्य ॥

१० इत्संज्ञा हि सूत्रोपात्ते एव प्रवर्तत इत्यत्र हेतुमाह—उपदेशोत्तरेति । उपदेशोत्तरकालमित्संज्ञा इति प्रथममित्संज्ञैव प्रवर्तते ॥

११ तस्य—अनुबन्धस्य तकारस्य ॥

१२ ननु 'अग्नौ' इत्यत्र तित्स्वरितमित्यौकारः स्वरितः स्यादत आह—अग्नावित्यादाविति ॥

'अदसोसेर्दादुदोमः' ( ८।२।८० ) अमूभ्यामित्यत्र न प्राप्नोति ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणम्-इति, यदयं 'दिव उत्' ( ६।१।१३१ ) इति उकारं तपरं करोति ॥

( उद्योतः ) भाष्ये—यदयं दिव उदिति । एतद्भाष्यविरोधात् 'एतत्तपरकरणसामर्थ्यादेव द्युभ्यामित्यादौ भाविदीर्घव्यावृत्तिः' इति संप्रसारणसंज्ञासूत्रस्थकैयटादयश्चिन्त्या एव । ज्ञापिते चारितार्थ्यं तु द्युभ्यामित्यादावूठो ह्रस्वप्रवृत्त्या बोध्यम् । यदि तु 'च्छ्वोः—' इति सूत्रे क्ङितीत्यनुवृत्तिपक्षे तत्रोठेव दुर्लभस्तदा 'ऋत उत्' इति तपरत्वं ज्ञापकं बोध्यम् । तच्च ऋकाराकारयोः स्थाने आन्तरतम्यात्प्राप्तदीर्घव्यावृत्त्यर्थम् । क्वचिद्भाष्येऽपि तथैव पाठः । 'अदसोसेः—' इत्यत्र समाहारद्वन्द्वनिर्देश इति तु 'दिव उत्' इति सूत्रे दूषितमस्माभिः ॥

( उपसंख्यानोपष्टम्भकभाष्यम् )

एवमर्थमेव तर्हि प्रत्ययग्रहणं कर्तव्यम्, अत्र मा भूदिति ॥

( प्रदीपः ) एवमर्थमेवेति । उकारार्थमित्यर्थः ॥

( उपसंख्यानाक्षेपभाष्यम् )

नैष तकारः ।

कस्तर्हि ?

दकारः ।

यदि दकारः, न ज्ञापकं भवति ।

( प्रदीपः ) कस्तर्हि दकार इति । इत्संज्ञायां च कर्तव्यायां 'वाऽवसाने' इति चर्त्वस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वात्तित्वाभावात् स्वरितत्वाभावः ॥

( समाधानभाष्यम् )

एवं तर्हि 'तपरस्तत्कालस्य' ( १।१।७० ) इति दकारोऽपि चर्त्वभूतो निर्दिश्यते ।

यद्येवं चर्त्वस्यासिद्धत्वात् 'हशि च' (६।१।११४) इत्युत्वं प्राप्नोति ।

सौत्रो निर्देशः ।

अथवा-असंहितया निर्देशः करिष्यते-'अणुदित्सवर्णस्य चाप्रत्ययः' 'त्तपरस्तत्कालस्य' इति ॥

( प्रदीपः ) दकारोऽपीति । नन्वेवं सति 'तपरस्तत्कालस्य' इत्यत्र पञ्चमीसमासस्याश्रयणात् 'ऋदोरप्' इत्यत्रोकारस्य दपरत्वाद्भिन्नकालग्रहणाप्रसङ्गः । एवं तर्हि थकारस्य स्थाने जश्त्वं कृत्वा निर्देशः 'ऋदोरप्' इति करिष्यते । जश्त्वस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वाद्दपरत्वाभावः । अन्यत्रापि भाष्ये यदुक्तम्-'नैष तकारः । कस्तर्हि ? दकारः' इति, तत्रापि थस्य जश्त्वेन यो दकारः स विज्ञेयः ॥

( उद्योतः ) एवं तर्हि थकारस्येति । वस्तुतोऽनित्यत्वात्पञ्चमीसमासस्य न दोषः ॥

( ११४२ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०७ )

## २६२३ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ ६ । १ । १८६ ॥

( अनुदात्ताधिकरणम् )

( अकारान्तं यदुपदेश इत्यर्थकरणपरभाष्यम् )

अदुपदेशादिति कथमिदं विज्ञायते—अकारो य उपदेश इति, आहोस्विदकारान्तं यदुपदेश इति ?

किं चातः ?

यदि विज्ञायते-अकारो य उपदेश इति, 'हतः, हथः' इत्यत्रापि प्राप्नोति ।

अथ विज्ञायते—अकारान्तं यदुपदेश इति, न दोषो भवति ।

ननु चाकारान्तं यदुपदेश इत्यपि विज्ञायमानेऽत्रापि प्राप्नोति । एतदपि हि व्यपदेशिवद्भावेनाकारान्तं भवत्युपदेशे ।

अर्थवता व्यपदेशिवद्भावः ॥

( प्रदीपः ) कथमिति । [1]यदोपदेशोऽकारेण विशेष्यते तदा तदन्तविधिसद्भावात् 'अकारान्त उपदेशः' इत्यर्थः संपद्यते । यदा तूपदेशेनाकारो विशेष्यते निपातनाच्च विशेषणस्य परनिपातस्तदा 'अकार उपदेशः' इत्यर्थ इति पक्षद्वयसंभवात्प्रश्नः ॥

हत इति । हन्तेरकार उपदेशो भवति ततः परं लसार्वधातुकमिति स्वरप्रसङ्गः । हन्तिस्त्वकारान्त उपदेशे न भवतीति 'अकारान्त उपदेशः' इति विज्ञायमाने न दोषः ॥

एतदपीति । अथ हकार एवादन्ततया कस्मान्नाश्रीयते । नैतदस्ति । समुदायपरत्वादुपदेशस्य नास्ति [2]हकारस्याकारान्तस्योपदेशत्वम् । तथा हि—हन्तिर्नकारान्तो व्यवसित उपदेशे, हकारस्तु कल्पितोऽकारान्तत्वेन-इति नासाविह गृह्यते ॥

अर्थवतेति । यच्छब्दोऽर्थवान् सोऽर्थस्य त्यागोपादानाभ्यां भेदं प्रतिपद्यते । यथा 'इयाय' इत्यत्रेण्धातुस्ततश्चैकाजिति व्यपदिश्यते । अनर्थकस्य तु भेदनिबन्धनाभावाद्व्यपदेशिवद्भावाभावः ॥

( उद्योतः ) यदोपदेश इति । कर्मघञन्त उपदेशशब्द इति भावः । भाष्यं तु फलितार्थपरं बोध्यम् ॥

हन्तेरिति । अकारस्य विशेष्यत्वे यः केवलोऽकार उपदिश्यते यश्च धात्वादिस्थस्तस्य सर्वस्य ग्रहणं स्यादिति भावः ॥

१ भाष्योक्तपक्षद्वयोपपत्तिमाह— यदोपदेश इति ॥

२ 'हकारस्याकारोपदेशत्वं' इति क. ठ. च. झ. पाठः ॥

समुदायपरत्वादिति । तस्य[1] कार्यार्थत्वात्तदुपदेश एव तात्पर्यम् । तन्निष्पादकतया त्ववयवानामपि प्रत्येकमुपदिश्यमानत्वम्, न तु 'ह्'इति समुदायस्य तत्त्वमिति भावः ॥ व्यवसितः—पृथक् कृतः ॥

अर्थवतेति—भाष्ये । यो वर्णोऽर्थबोधनेऽसहायः स्वत एवार्थवान् तत्र व्यपदेशिवद्भावः, नात्र तथेत्यर्थः । एवञ्चार्थवत्त्वेनासहायत्वमुपलक्ष्यते । अर्थवता शब्देन व्यपदेशिसदृशो भावः—कार्यं लभ्यत इत्यक्षरार्थ इति परे ॥ भेदनिबन्धनाभावादिति । भेदनिमित्ताभावादित्यर्थः ॥

( अकारान्तं यदुपदेश इत्यर्थस्वीकारे दोषनिवारकभाष्यम् )

**यदि तर्हि अकारान्तं यदुपदेश इति विज्ञायते, मा हि धुक्षाताम्-मा हि धुक्षाथाम्—अत्रापि प्राप्नोति ।**

**अस्तु, अनुदात्तत्वे कृते लोपः, उदात्तनिवृत्तिस्वरेण सिद्धम् ।**

**न सिध्यति ।**

**इदमिह संप्रधार्यम्-अनुदात्तत्वं क्रियताम्, लोप इति; किमत्र कर्तव्यम् ?**

**परत्वाल्लोपः ।**

**एवं तर्हि—इदमद्य लसार्वधातुकानुदात्तत्वं प्रत्ययस्वरस्यापवादः[2] । न चापवादविषय उत्सर्गोऽभिनिविशते । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते ।**

**तन्न[3] तावदत्र कदाचित्प्रत्ययस्वरो भवति, अपवादं[4] लसार्वधातुकानुदात्तत्वं प्रतीक्षते ।**

**तत्रानुदात्तत्वं क्रियताम्, लोप इति, किमत्र कर्तव्यम् ?**

**परत्वाल्लोपः ।**

**यद्यपि परत्वाल्लोपः सोऽसाववविद्यमानोदात्तेऽनुदात्ते उदात्तो लुप्यते ॥**

( प्रदीपः ) **मा हि धुक्षातामिति** । लोपे कृतेऽकारादुपदेशात्परं लसार्वधातुकं न भवतीति नास्त्यनुदात्तत्वप्रसङ्गः । उपदेशे यदकारान्तमित्यत्र तु पक्षे क्सस्योपदेशेऽकारान्तत्वात् कृते लोप एकदेशविकृतस्यानन्यत्वात्तत उत्तरं लसार्वधातुकमिति स्वरप्रसङ्गः ॥

**तन्न तावदत्रेति** । लसार्वधातुकस्य प्रत्ययाद्युदात्तत्वं न प्रवर्तत इत्यर्थः ॥

**सोऽसाविति** । परत्वाल्लोपे कृते उदात्तनिवृत्तिस्वरः क्रियतां लसार्वधातुकानुदात्तत्वं चेति विचारे यद्यपि परत्वाल्लसार्वधातुकानुदात्तत्वं भवति तथापि पुनः प्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भवत्येव ॥

( उद्द्योतः ) लोपे कृते इति । 'क्सस्याचि'इत्यनेन ॥ ननु लोपे कृते योऽकारान्तः स नायं, तद्बुद्धेरभावात्—इत्यत आह—**एकदेशविकृतस्यानन्यत्वादिति** । संप्रत्यकारान्तत्वाभावेऽपि औपदेशिकं तदादाय कार्यसंभवादेकदेशविकृतन्यायस्य स्थानिवत्त्वस्य वा क उपयोगः, अल्विधित्वादिना तयोरप्राप्तिश्च—इति **चिन्त्यम्** ॥

लसार्वधातुकस्य प्रत्ययाद्युदात्तत्वमिति । क्सस्य तु प्रवर्तत एवेति भावः । तत्प्रयुक्तशेषनिघातस्तु न, लसार्वधातुकस्य विकरणस्वरस्यात्रत्यतासिग्रहणेन लसार्वधातुकनिघाताप्रयोजकत्वज्ञापनात् ॥

ननु परत्वाल्लोपेऽपि उदात्तनिवृत्तिस्वरात्परत्वादिदमनुदात्तत्वमेव स्यादत आह—**यद्यपीति** ॥

( ६३०१ सप्तमीनिर्देशोपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः ॥ * ॥

( भाष्यम् ) **तास्यादिभ्यश्चा[5]नुदात्तत्वे सप्तमीनिर्देशः कर्तव्यः, 'लसार्वधातुके' इति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**अभ्यस्तसिजर्थम्[6] । अभ्यस्तानामादिरुदात्तो भवति लसार्वधातुके, सिजन्तस्यादिरुदात्तो भवति लसार्वधातुके ।**

**'लसार्वधातुकम्'इत्युच्यमाने तस्यैवाद्युदात्तत्वं स्यात् ॥**

**यदि सप्तमीनिर्देशः क्रियते, तास्यादीनामेवानुदात्तत्वं प्राप्नोति ।**

**नैष दोषः । 'तास्यादिभ्यः' इत्येषा पञ्चमी 'लसार्वधातुके' इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' ( १।१।६७ ) इति ॥**

( प्रदीपः ) **तस्यैवाद्युदात्तत्वं स्यादिति** । असति सप्तमीनिर्देशे 'अभ्यस्तानामादिरुदात्तः, लसार्वधातुकं चोदात्तम्'इति सूत्रार्थः स्यात् । वचनसामर्थ्याच्च यौगपद्यं स्यात् । यथा 'अन्तश्च तवै युगपत्' इत्यत्र । पर्यायो वा प्रसज्येत । न चैतच्छक्यते वक्तुम्—लसार्वधातुकमित्यप्युच्यमानेऽर्थाद्विभक्तिविपरिणामो भविष्यतीति, यथाश्रुतसंबन्धसंभवे विभक्तिविपरिणामस्यायोगात् ॥

---

१ तस्य—समुदायस्य ॥

२ प्रत्ययस्वरस्यापवाद इति । प्रत्ययाद्युदात्तत्वं पूर्वं न प्रवर्तत इति लसार्वधातुकस्यानुदात्तत्वमेव । एवं च पूर्वं लोपेऽपि तस्यानुदात्तत्वेनोदात्तनिवृत्तिस्वरः सिद्ध्यतीति भावः ॥

३ 'तन्नात्र तावत्' इति अ. पाठः ॥

४ 'अपवादविषयं' इति च. क. पाठः ॥

५ 'तास्यादिभ्योऽनुदात्तत्वे' इति च. छ. क. झ. पाठः ॥

६ 'अभ्यस्तसिजर्थः' इति क. च. झ. छ. पाठः ॥

**तास्यादिभ्य इत्येषेति ।** अकृतार्था हि पञ्चमी, सप्तमीनिर्देशस्तूत्तरत्र कृतार्थः ॥

**(उद्द्योतः)** ननु 'अभ्यस्तानाम्'इति निर्देशात्तेषामेवादिरुदात्तः स्यादिति कथं लसार्वधातुकस्य स्यात्? अत आह—**असतीति ।** भाष्ये—**एवकारो**ऽप्यर्थ इति भावः ॥ ननु तत्र युगपद्ग्रहणात्[1]समावेशे प्रकृते कथं समावेशः, 'अनुदात्तं पदम्–'इति परिभाषणादत आह—**पर्यायो वेति ॥ अर्थाद्विभक्तीति ।** उत्तरत्रेत्यर्थः । चकाराभावात्, अन्यस्य कार्यित्वेन निर्देशाच्चेति भावः ॥

**यथाश्रुतेति ।** उक्तरीत्येत्यर्थः । **परे** तु–अभ्यस्तानां सम्बन्धि लसार्वधातुकमाद्युदात्तमित्यर्थः स्यात् । 'आदिः'इति नामैकदेशग्रहणम् । अत एव भाष्ये 'तस्यैव'इत्युक्तम् । सप्तम्यां 'आदिः सिचः–' इति सूत्रे फलाभावादसंबन्धः, सिचो लसार्वधातुकपरस्यैव सत्त्वात् । प्रथमायां तु तस्याद्युदात्तत्वाय संबन्धः स्यादिति दोष इति मत्वा 'सिजर्थम्' इति, न तु तत्र सप्तम्यन्तसंबन्धावश्यकत्वाभिप्रायम्–' इत्याहुः ॥

ननु विपरीतं किं न स्यात्? अत आह—**अकृतार्था हीति ॥**

( ६३०२ विप्रतिषेधबोधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन ॥ * ॥

**( भाष्यम् ) चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं भवति विप्रतिषेधेन ।**

**चित्स्वरस्यावकाशः-चलनः, चोपनः ।**

**तास्यादिभ्योऽनुदात्तत्वस्यावकाशः-आस्ते, शेते ।**

**इहोभयं प्राप्नोति—आसीनः, शयानः ।**

**तास्यादिभ्योऽनुदात्तत्वं भवति विप्रतिषेधेन ।**

**नैष युक्तो विप्रतिषेधः ।**

**किं कारणम् ?**

**द्विकार्ययोगो हि विप्रतिषेधः, न चात्रैको द्विकार्ययुक्तः । आदेरनुदात्तत्वम्, अन्तस्योदात्तत्वम् ।**

**नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।**

**किं तर्हि ?**

**असंभवोऽपि ।**

**ननु चात्राप्यस्ति संभवो यदुभयं स्यात्—आदेरनुदात्तत्वमन्तस्य चोदात्तत्वमिति, अस्ति च संभवो यदुभयं स्यात् ।**

**नैषोऽस्ति संभवः-आदेरनुदात्तत्वमन्त्यस्य चोदात्तत्वमिति ।**

**कथम् ?**

**वक्ष्यत्येतत्—स्वरविधौ सङ्घातः कार्यी भवति—इति ॥**

**( प्रदीपः ) संघातः कार्यीति ।** ततश्चानस्य सर्वस्यानुदात्तत्वेन भाव्यम्, न तु 'आदेः परस्य'इति वचनादादेः । तत्रोदात्तानुदात्तयोरेकविषयत्वादस्ति विरोध इति परत्वात् चित्स्वरं बाधित्वाऽनुदात्तत्वं भवतीत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**आदेरनुदात्तत्वमिति ।** 'आदेः परस्य'इति वचनादिति भावः ॥ **स्वरविधौ सङ्घातः कार्यीति**- 'भीह्री–'इति सूत्रे वक्ष्यति ॥

( ६३०३ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ मुकश्चोपसंख्यानम् ॥ * ॥

**( भाष्यम् ) मुकश्चोपसंख्यानं कर्तव्यम् । पचमानः, यजमानः । मुका व्यवहितत्वाददुपदेशाल्लसार्वधातुकमनुदात्तं भवतीत्यनुदात्तत्वं न प्राप्नोति ।**

**ननु चायं मुगदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते ।**

**न सिध्यति ।**

**अङ्गस्य मुगुच्यते, विकरणान्तं चाङ्गं सोऽसौ सङ्घातभक्तोऽशक्यो मुक् अदुपदेशग्रहणेन ग्रहीतुम् ॥**

**( उद्द्योतः )** भाष्ये—**अदुपदेशेति ।** अकारोपदेशे एव मुख्यतात्पर्याद्दुपदिश्यमानमकारान्तं शप्यस्ति । अकारावयवत्वस्य शास्त्रेण बोधनादकारग्रहणेन तद्विशिष्टग्रहणं 'यदागमाः–' इति न्यायेन बोध्यत इति भावः । यत्तु 'दाधाघ्व–' इति सूत्रेऽर्थवतो ह्यागम इत्युक्तम्, तत्प्रकृताभिप्रायम् । 'द्योत्यार्थेन विकरणानामप्यर्थवत्त्वान्नक्षतिः' इत्यन्ये ॥

( अङ्गभक्तत्वेनोपसंख्यानानर्थक्यबोधकभाष्यम् )

**अथायमतो भक्तः स्यात्, गृह्येतायमदुपदेशग्रहणेन ।**

**बाढं गृह्येत ।**

**अङ्गभक्तस्तर्हि भविष्यति ।**

**तत्कथम् ?**

**वक्ष्यत्येतस्य परिहारम् ॥**

**(प्रदीपः) वक्ष्यतीति ।** सप्तमेऽध्यायेऽङ्गस्य योऽकारस्तस्य मुगिति सूत्रार्थव्यवस्थापनात् । तत्र स्वावयवेन व्यवधानाभावाददुपदेशग्रहणान्मुकि सत्यध्यर्धमात्रत्वेऽपि प्रवर्तते निघातः । 'आतो ङितः'इतीयादेशस्त्वाकारस्य 'आतः'इति तपरकरणान्न भवति । स्वरविधौ व्यञ्जनमविद्यमानवदिति परिहारो नोक्तः, हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येवं व्यवस्थापनात् ॥

**( उद्द्योतः )** ननु तपरत्वादध्यर्धमात्रस्य कथं ग्रहणम्? अत आह—**उपदेशग्रहणादिति ।** न चैवं 'पचमानः'इत्यत्र 'अकः सवर्णे–'इति दीर्घापत्तिः, मुग्विधानसामर्थ्येन तस्या अनित्यत्वकल्पनान्नेकवर्जमिति परिभाषासत्त्वादप्यत्र न समावेश इति भावः ॥

१ 'समावेशेऽपि प्रकृते' इति घ. ङ. पाठः । तथ 'चान्तश्चेति सूत्रे युगपद्ग्रहणात्समावेशेऽपि अत्र युगपद्ग्रहणाभावात्समावेशो न स्यात्, अनुदात्तं पद-

२ 'ननु चात्राप्यस्त्यसम्भवः' इति ङ. पाठः ॥

दोषः॥ तपरकरणादिति । उपदेशग्रहणस्य तत्राभावादिति भावः॥ व्यवस्थापनादिति । स्वरानुद्देश्यके विधावित्यर्थः॥

( ६३०४ एकदेशिन उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ इतश्चोपसंख्यानम् ॥ * ॥

( भाष्यम् ) इतश्चोपसंख्यानं कर्तव्यम् । इड्भिश्च व्यवहितत्वादनुदात्तत्वं न प्राप्नोति । पचतः, पठतः॥

( प्रदीपः) इतश्चेति । 'तुदतः' इत्यादौ सावकाशं वचनं 'पचतः' इत्यादौ न प्रवर्त्तेत, शप उपदेशे हलन्तत्वादकारान्तत्वाभावादिति वचनमित्संज्ञकादनुदात्तार्थम्॥

( उद्द्योतः ) 'इतः' इति व्याचष्टे—इत्संज्ञकादिति । तद्वत इत्यर्थः । न च 'अकारान्तादुपदिश्यमानात्'इत्यर्थे न दोषः, 'अनेकान्तत्वात्'इत्यनेन तस्यैवार्थस्योक्तत्वात् । तावत उपदिश्यमानत्वेन तस्य तेऽनवयवा इति तदर्थः॥

( ६३०५ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ इतश्चानेकान्तत्वात् ॥ * ॥

( भाष्यम् ) अनेकान्ता अनुबन्धाः॥

(प्रदीपः) अनेकान्ता इति । यद्यपि 'तस्य लोपः'इत्यत्रैकान्तपक्षः स्थापितस्तथापि पक्षान्तराश्रयेणात्र परिहार उक्तः। एकान्तपक्षेऽपि 'उदीचां माङः' इति कृतात्त्वस्य निर्देशात् । ज्ञापकात्कार्येष्वनुबन्धानामप्रतिबन्धकत्वमनुमीयते॥

( उद्द्योतः ) एकान्तपक्षेऽपीति । माङो व्यतीहारे वृत्त्यभावात् कृतात्वस्य मेङ एव ग्रहणमिति वाच्यम् । आत्वं च ङकारे सत्यनेजन्तत्वान्न प्राप्नोतीति ज्ञापकमित्यर्थः॥

( अनेकान्तत्वे दोषभाष्यम् )

यद्यनेकान्ता अनुबन्धा अदिप्रभृतिजुहोत्यादिभ्यः प्रतिषेधो वक्तव्यः । अत्तः, जुहुत इति । 'अदुपदेशात्'इत्यनुदात्तत्वं प्राप्नोति ॥

( प्रदीपः ) अत्त इति । यथा 'पचावः' इति कृतेऽपि दीर्घत्व उपदेशग्रहणान्निघातो भवति, एवं श्लोपेऽपि प्राप्नोतीति भावः॥

( उद्द्योतः ) ननु 'अत्तः' इत्यादावदुपदेशात्परत्वाभावात्कथं स्वरप्राप्तिः ? अत आह—यथेति॥

( ६३०६ दोषनिवारकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः स्थान्यादेशाभावात् ॥ * ॥

( भाष्यम् ) तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रतिषेधः । अनर्थकः प्रतिषेधः-अप्रतिषेधः । अनुदात्तत्वं कस्मान्न भवति ?

स्थान्यादेशाभावात् । नैवात्र स्थानिनं नैवादेशं[1] पश्यामः[2]॥

( प्रदीपः ) नैवात्रेति । आदेशस्यात्राभावरूपत्वाददुपदेशात्परं लसार्वधातुकं न भवति । न च स्थानिवद्भावोऽस्ति, अल्विधित्वात् । नापि प्रत्ययलक्षणम्, वर्णाश्रयत्वात् । पचाव इत्यत्र तु दीर्घोऽभूतोऽकारो विद्यत एवेति प्रवर्तते निघातः॥

( उद्द्योतः ) नन्वादेशस्य लुगादेः सत्त्वात् 'नैवं वाऽऽदेशम्' इत्ययुक्तमत आह—आदेशस्यात्रेति । अभावस्यापि बुद्धिकृतपरत्वसंभवाच्चिन्त्यमिदम्॥ वर्णाश्रयत्वादिति । प्रत्ययासाधारणरूपेणानाश्रयणादस्य प्रत्ययलक्षणत्वाभाव इति तत्त्वम् । एतेन वर्णप्राधान्ये एव तत्प्रवृत्तिः, अकारान्तादुपदेशादित्यर्थे च न तत्प्राधान्यमिति परास्तम्॥ पचाव इत्यत्रेति । दीर्घस्यापि स्थानिवत्त्वासम्भवाच्चिन्त्यमिदम्॥

( ६३०७ ज्ञापकेन दोषनिवारकवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अनुदात्तङिद्ग्रहणाद्वा ॥ * ॥

( भाष्यम् ) अथवा यदयमनुदात्तङिद्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—न[3] लुप्तविकरणेभ्योऽनुदात्तत्वं भवतीति ।

नैतदस्ति ज्ञापकम् ।

अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ?

श्नमर्थमेतत्स्यात्—विन्दाते, खिन्दाते ॥

यत्तर्हि ङिद्ग्रहणं करोति, न हि श्नम्विकरणो ङिदस्ति ॥

( प्रदीपः ) अनुदात्तङिद्ग्रहणाद्वेति । आस्ते शेत इत्येवमाद्यर्थात्॥ विन्दात इति । विदीन्धिखिदिभ्यः[4] प्रतिषेधमनाश्रित्येदमुक्तम्॥

( उद्द्योतः ) इत एवास्वरसाद्भाष्ये पक्षान्तरमाह—अनुदात्तेति॥ अनाश्रित्येति । एवं चेदं भाष्यमेकदेश्युक्तिः । एवं च तदपि ज्ञापकमेव, एतत्त्रितयातिरिक्तस्यानुदात्तेतस्तद्गणे[5]ऽभावादिति भावः॥

( प्रतिषेधोपसंख्यानभाष्यम् )

ङितोऽनुदात्तत्वे विकरणेभ्यः प्रतिषेधो वक्तव्यः। चिनुतः, सुनुतः, लुनीतः, पुनीतः । ङित इत्यनुदात्तत्वं प्राप्नोति ॥

( ६३०८ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ८ ॥ )

॥ * ॥ ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् ॥ * ॥

( भाष्यम् ) ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः, अनर्थकः प्रतिषेधः—अप्रतिषेधः ।

---

१ 'पदेशाभावात्कथं' इति घ. झ. पाठः ॥

२ सर्वेषूपलब्धेषु भाष्यपुस्तकेषु 'नैवादेशं' इत्येव दृश्यते । उद्द्योतपुस्तकेषु एवमेव पाठः ॥

३ 'न लुक्श्लुविकरणेभ्यः' इति झ. पाठः ॥

४ प्रतिषेधमिति । अयं च प्रतिषेधः 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रे भाष्ये उक्तः ॥

५ एतत्त्रितयातिरिक्तस्य—विदीन्धिखिदिभ्योऽतिरिक्तस्य ॥

६ तद्गणे—रुधादिगणे ॥

अनुदात्तत्वं कस्मान्न भवति ?

सर्वस्योपदेशविशेषणत्वात् । सर्वमुपदेशग्रहणेन विशेषयिष्यामः—

उपदेशेऽनुदात्तेतः,

उपदेशे ङितः,

उपदेशेऽकारान्तादिति ॥

( प्रदीपः ) विकरणेभ्य इति । 'सिद्धं तु पूर्वस्य कार्यातिदेशात्' इत्यनपेक्ष्य चोद्यप्रतिसमाधाने उक्ते ॥

( उद्योतः ) सिद्धं त्विति । गाङ्कुटादिसूत्रे इदमुक्तम् । 'आतो ङितः' इत्यादौ स्वकार्यस्याप्यतिदेशात्तदनपेक्षेति भावः ॥

---

( ११४३ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०८ )

## २६२४ आदिः सिचोऽन्यतरस्याम् ॥ ६ । १ । १८७ ॥

( आद्युदात्ताधिकरणम् )

( ६३०९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सिचं आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् ॥ * ॥

( भाष्यम् ) सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानं कर्तव्यम्[1] । मा हि कार्षम्[2] ।

अनिट इति किमर्थम् ?

मा हि लाविषम् ॥

( प्रदीपः ) अनिटः पित इति । अनिटः सिचः परः पित् पक्ष उदात्तो भवति, पक्षे त्वनुदात्तः । तेन मा हि कार्षमिति तिङन्तं पक्षे आद्युदात्तम्, पक्षे त्वन्तोदात्तं भवति । अन्यथा धातुस्वरेण नित्यमाद्युदात्तं स्यात् ॥

मा हि लाविषमिति । पक्ष आद्युदात्तं[3] तिङन्तम्, पक्षे मध्योदात्तं सिचः[4] स्वरेण, न त्वन्तोदात्तम् ॥

( उद्योतः ) 'अनिटः' 'पितः' इत्यनयोः सामानाधिकरण्यभ्रमं निराकुर्वन् व्याचष्टे—अनिटः सिच इति । उदाहरणे माङ्प्रयोगोऽट्स्वरनिवृत्त्यर्थः । हिप्रयोगः 'हि च' इति निघातप्रतिषेधार्थः ॥

पक्षे आद्युदात्तमिति । धातुस्वरेणेत्यर्थः ॥ पक्षे त्विति । प्रकृतवार्तिकेनेति भावः ॥ सिचः स्वरेणेति । चित्त्वसामर्थ्यादिट आगमानुदात्तत्वं बाधित्वोदात्तत्वादित्यर्थः ॥ न त्वन्तोदात्तमिति । प्रकृतवार्तिकाप्रवृत्तेरिति भावः ॥

---

( ११४४ विधिसूत्रम् ॥ ६ । १ । ६ आ. १०९ )

## २६२५ स्वपादिर्हिंसामच्यनिटि ॥ ६ । १ । १८८ ॥

( ६३१० विप्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) स्वपादीनां वावचनादभ्यस्तस्वरो भवति विप्रतिषेधेन ।

स्वपादीनां वावचनस्यावकाशः—स्वपन्ति[5], श्वसन्ति ।

अभ्यस्तस्वरस्यावकाशः—ददति, दधति ।

इहोभयं प्राप्नोति—जाग्रति ।

अभ्यस्तस्वरो भवति विप्रतिषेधेन ॥

( प्रदीपः ) आगणान्ताः स्वपादयः ॥ स्वपन्तीति । पक्षे आद्युदात्तं पदम्, पक्षे प्रत्ययस्वरेण मध्योदात्तम् ॥

( उद्योतः ) इदं विकल्पेन धातोराद्युदात्तविधायकम् । 'अभ्यस्तानामादिः'[6] इति तु पुनरादिग्रहणान्नित्यमाद्युदात्तविधायकमजादावनिटि लसार्वधातुके परे ॥

---

( ११४५ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११० )

## २६२७ अनुदात्ते च ॥ ६ । १ । १९० ॥

( ६३११ 'अनुदात्ते' इत्यत्र बहुव्रीहिबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ॥ * ॥

( भाष्यम् ) अनुदात्ते चेति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानोदात्ते-अनुदात्त इति वक्तव्यम् ।

किं प्रयोजनम् ?

लोपयणादेशार्थम् । लोपयणादेशयोः कृतयोराद्युदात्तत्वं यथा स्यात् । मा हि स्म दधात्, दधात्यत्र ॥

( प्रदीपः ) मा हि स्म दधादिति । शास्त्रीयेऽनुदात्ते[7] गृह्यमाणे नित्यत्वादन्तरङ्गत्वाद्वेकारलोपे कृतेऽचोऽनुदात्तस्य परस्याभावादाद्युदात्तं न स्यात् । बहुव्रीहिविज्ञाने तु भवति ॥

---

१ सिच इति । सिजन्तस्याद्युदात्तप्रकरणेऽनिटः सिचः परः पित् उदात्तो भवतीति उपसंख्यानं कर्तव्यमिति वार्तिकार्थः ॥

२ कार्षमिति । अनेन हि उपसंख्यानवार्तिकेन षकारोत्तरोऽकार उदात्तः । अस्य वार्तिकस्याभावे 'आदिः सिचोऽन्यतरस्याम्' इति सूत्रेण ककाराकार उदात्तः प्राप्तः । अत्र 'मा हि कार्षम् । मा हि कार्षम्' इति झ. पाठः ॥

३ आद्युदात्तं तिङन्तम्—आदिः सिचोऽन्यतरस्यामित्यनेन ॥

४ सिचः स्वरेणेति । सिचश्चित्वात् 'चितः' सप्रकृतिकस्य चित अन्तोदात्तः स्यादित्यनेन मध्योदात्त इति भावः ॥

५ स्वपन्तीति । स्वपादिर्हिंसामित्यनेन स्वेत्यत्राकार उदात्तः । यदा च नैतत्तदा प्रत्ययस्वरेणान्तिरन्तोदात्तः ॥

६ 'स्वपादिर्हिंसामच्यनिटि' इति सूत्रे विकल्पानुवृत्तावपि अभ्यस्तानामादिरित्यत्र विकल्पाननुवृत्तौ बीजमाह—अभ्यस्तानामिति ॥

७ शास्त्रीयेऽनुदात्ते—अनुदात्ते स्वरे ॥

दधात्यत्रेति । अत्र यणादेशस्य बहिरङ्गत्वादसिद्धत्वादपि स्वरः सिध्यति ॥

(उद्द्योतः) ननु 'इतश्च'इति लोपात्परत्वात्स्वरे बहुव्रीह्यङ्गीकारो निष्फलोऽत आह—शास्त्रीय इत्यादि॥ बहिरङ्गत्वादिति । द्विपदाश्रयत्वादिति भावः । स्थानिवद्भावोऽप्यत्र प्राप्नोति, स्वरे निषेधस्तु लोपरूपाजादेशविषय एव—इत्यपि बोध्यम् । तस्मात्तदुभयमनाश्रित्येदं वार्तिकमिति बोध्यम् ॥

( ११४६ विधिसूत्रम् ॥ ६ । १ । ६ आ. १११ )

## २६२८ सर्वस्य सुपि ॥ ६ । १ । १९१ ॥

( प्रदीपः ) सर्वशब्द उणादिष्वन्तोदात्तो निपातितः । सर्वस्य विकारः सार्व इत्यत्रानुदात्तादिलक्षणोऽञ् यथा स्यादिति । तस्य सुप्याद्युदात्तत्वं विधीयते ॥

( उद्द्योतः ) 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तत्वस्य सिद्धत्वादाह—सर्वशब्दइति । 'सर्वनिघृष्वरिष्व-'इत्यनेन ॥ तत्फलं दर्शयति—सर्वस्येति । अनुदात्तादिप्रकृतिकसुबन्तादञिति तदर्थः । 'सुपि'इति तु अत्यन्तस्वार्थिकतरवाद्यन्तसर्वतर इत्यादिव्यावृत्त्यर्थम्, तेषां सुबुत्पत्तेः प्रागेव विधानात्—इति वृत्तौ, 'पुंयोगात्—'इति सूत्रे भाष्ये च स्पष्टम् ॥

( ६३१२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सर्वस्वरोऽनकच्कस्य ॥ * ॥

( भाष्यम् ) सर्वस्वरोऽनकचकस्येति वक्तव्यम् । इह मा भूत्—सर्वके ॥

( प्रदीपः ) सर्वस्वरोऽनकचकस्येति । 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति साकच्कस्याप्युदात्तत्वे प्राप्ते वचनम् ॥

( ११४७ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११२ )

## २६२९ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ॥ ६ । १ । १९२ ॥

( प्रदीपः ) 'अनुदात्ते च'इत्याद्युदात्तत्वे प्राप्ते वचनम् ॥

( उद्द्योतः ) सूत्रे 'जागराम्'इति सौत्रो निर्देशः, जागर्त्यादिप्रयोगस्थस्य कृतगुणस्यानुकरणं वा ॥ अनुदात्ते चेतीति । अत्राप्यभ्यस्तग्रहणमनुवर्तत इति भावः ॥

( भ्यादिप्रयोजनभाष्यम् )

भ्यादिग्रहणं किमर्थम् ?

इह मा भूत्—ददाति, दधाति ।

(प्रदीपः) भ्यादिग्रहणमिति । 'अनुदात्ते च'इत्यनेनाद्युदात्तत्वं विधीयते, अनेन च प्रत्ययात्पूर्वस्योदात्तत्वमिति विरोधाल्लक्ष्यस्य दर्शनवशात् भ्यादीनामेव प्रत्ययात्पूर्वस्योदात्तत्वं भविष्यतीति प्रश्नः ॥

ददातीति । वचनमन्तरेण विषयविभागो न लभ्यत इति भावः ॥

(उद्द्योतः) विरोधादिति । विरोधात् युगपत्प्राप्त्यभावेनावश्याश्रयणीये विषयविभागे लक्ष्यानुसारेण व्यवस्थेति भावः ॥

वचनमन्तरेणेति । 'मन्दमतिभिः'इति शेषः ॥

( एकदेश्याक्षेपभाष्यम् )

नैतदस्ति प्रयोजनम् । अभ्यस्तस्वरोऽत्र बाधको भविष्यति ॥

( प्रदीपः ) पूर्वोक्तेनाभिप्रायेण चोदक आह—अभ्यस्तस्वर इति ॥

( सिद्धान्तभाष्यम् )

अन्तत उभयं स्यात् ।

अनवकाशाः खल्वपि विधयो बाधका भवन्ति, सावकाशश्चाभ्यस्तस्वरः ।

कोऽवकाशः ?

मिमीते ॥

( प्रदीपः ) सिद्धान्तवाद्याह—अन्तत इति । विरोधात्समावेशाभावे पर्यायेणोभयं स्यादित्यर्थः ॥ अथवा सर्वेषामभ्यस्तानां पितो लसार्वधातुकात्पूर्वस्योदात्तत्वं स्यादिति प्रतिपादयितुमाह—अनवकाशा इति ॥ मिमीत इति । ङित्वाँल्लसार्वधातुकानुदात्तत्वे कृते 'अनुदात्ते च'इत्याद्युदात्तत्वम् ॥

( उद्द्योतः ) पर्यायेणेति । एकविषये द्वयोः प्रवृत्त्युपपत्तौ विषयभेदाश्रयणायोगात्—इत्यर्थः ॥ अथवा सर्वेषामिति । पितोऽभावादस्याप्राप्तेर्मिमीते इत्यादौ 'अनुदात्ते च'इति विधिः सावकाश इति तं परत्वाद्बाधित्वा इदमेव स्यादिति दोष इति भावः । 'पूर्वस्योदात्तत्वं स्यात्'इत्यस्य पूर्वस्यैवोदात्तत्वं स्यादित्यर्थः ॥

---

१ तदुभयम्—बहिरङ्गत्वं स्थानिवद्भावश्च ॥

२ तदर्थ इति । अनुदात्तादेरञ् ( ४।२।४४ ) इति सूत्रस्यार्थः ॥

३ सर्वके इति । तन्मध्यपतितन्यायेन सर्वस्य सुपीत्यस्य प्रवृत्तौ आद्युदात्तत्वं स्यात्, तन्मा भूदित्येतदर्थं वार्तिकम् । तेन च सर्वक इत्यत्र चित्स्वरप्रवृत्तौ वकाराकार उदात्त इति भावः ॥

४ ददातीति । सूत्रे भ्यादिग्रहणाभावे 'प्रत्ययात्पूर्वं पिति' इत्येव सूत्रं स्यात्, तथा च पित्प्रत्ययाभावेऽनुदात्ते चेत्यस्य चारितार्थ्येन पिति प्रत्ययेऽस्यैव प्रवृत्तिरिति ददातीत्यादौ दोष इति भावः ॥

५ इदमुदाहरणं च. झ. पुस्तकयोरेव दृश्यते ॥

६ पूर्वोक्तेनेति । 'भ्यादिग्रहणं किमर्थम्' इति भाष्यस्य सूत्रे भ्यादिग्रहणाभावेऽपि लक्ष्यदर्शनवशात् भ्यादीनामेव प्रत्ययात्पूर्वमुदात्तं स्यादित्याशयादयं चोदक आहेत्यर्थः ॥

७ ङित्वादिति । 'मिमीते' इत्यत्र धातोर्ङित्वात् तास्यनुदात्तेन्ङिद्दुपदेशादितिसूत्रेण लसार्वधातुकस्यानुदात्तत्वमित्यर्थः ॥

( प्रत्ययात्पदप्रयोजनभाष्यम् )

**अथ प्रत्ययग्रहणं किमर्थम् ?**

**प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यात्, आटः पूर्वस्य मा भूदिति । विभयानि ।**

**न चैवास्ति विशेषः-प्रत्ययाद्वा पूर्वस्योदात्तत्वे सति, आटो वा । अपि च पिद्भक्तः पिद्ग्रहणेन ग्राहिष्यते ।**

**इदं तर्हि प्रयोजनम्—प्रत्ययात्पूर्वस्योदात्तत्वं यथा स्यात्, आट एव मा भूदिति ।**

**एतदपि नास्ति प्रयोजनम् ।**

**पिद्भक्तः पिद्ग्रहणेन ग्राहिष्यते ।**

**एवं तर्हि सिद्धे सति यत्प्रत्ययग्रहणं करोति तज्ज्ञापयत्याचार्यः—स्वरविधौ सङ्घातः कार्यो भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

***चित्स्वराद्यास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन[1]* इति यदुक्तं तदुपपन्नं भवति ॥**

( प्रदीपः ) **अथ प्रत्ययग्रहणमिति** । भ्यादिभ्यः परः प्रत्यय एव पित् संभवतीति **प्रश्नः** ॥

**आटः पूर्वस्येति** । 'आडुत्तमस्य पिच्च' इति पित्त्वमाट एव विधीयत इति पक्षाश्रयेणेदमुक्तम् । आट् चागमो न प्रत्ययः ॥

**प्रत्ययाद्वेति** । अत्र हि यः प्रत्ययात् पूर्वः स एवाट इति विशेषाभावः ॥ **अपि चेति** । पित्त्वं लोडुत्तमस्यैव विधीयते न त्वाट इत्याट्सहितो लोडुत्तमः पिद्भवति । ततश्च पूर्वस्योदात्तत्वं भवत्येवेत्यर्थः ॥

**आट एवेति** । लोडादेशात्पितः पूर्वं आट् भवति । प्रत्ययात्तु पूर्वो न भवति, आट्सहितस्य प्रत्ययत्वात् ॥

**पिद्भक्त इति** । ततश्च स्वावयवेन पौर्वापर्याभावः ॥ **एवं तर्हीति** । प्रत्ययग्रहणमन्तरेण साट्कात्पितः पूर्वस्योदात्तत्वे सिद्धे प्रत्ययग्रहणं प्रत्ययात् पूर्वस्याच उदात्तत्वं यथा स्यात्, संघातस्य मा भूदित्येवमर्थम् । संघातस्य च कार्यित्वे पर्यायेणोदात्तत्वप्रसङ्गः । यदि च स्वरविधौ संघातः कार्यो भवति ततस्तन्निवृत्त्यर्थमिह प्रत्ययग्रहणमर्थवद्भवतीत्यर्थः ॥

**चित्स्वरादिति** । यतो लसार्वधातुकस्य सर्वस्यानुदात्तत्वं न त्वादेः, ततो विप्रतिषेध उपपद्यते । एकस्मिन् विषये प्रसङ्गादुदात्तानुदात्तयोरित्यर्थः ॥

( उद्योतः ) **भ्यादिभ्य इति** । भ्यादिसंबन्धिपिति परतस्ततः पितः पूर्वमुदात्तमित्यर्थं इति भावः ॥

आड्विशिष्टस्य पित्त्वेऽनुक्तिसंभवग्रस्तोऽयं पक्ष इत्यत आह—**पित्त्वमाट एवेति** ॥

**स एवाट इति** । आटः प्रत्ययावयवत्वादिति भावः ॥ ननु 'विभयैव[2]' इत्यादौ उदात्तत्वाभावाय प्रत्ययग्रहणं स्यात्, अतः-भाष्ये-**अपि चेति** ॥ नन्वाटः स्वत एव पित्त्वात्पिद्भक्तत्वेन पिद्वचनमयुक्तमित्यतस्तद्भावमाह—**पित्त्वमिति** । एतद्विधेयस्यैवाट एतद्विधेयपित्त्वं प्रति अनुवाद्यत्वायोगादिति भावः ॥ **ततश्चेति** । एवञ्च पितः पूर्वस्य स्वरविधानेऽप्याटः पूर्वस्य भविष्यतीत्यर्थः ॥

ज्ञापकमुपपादयति—**प्रत्ययग्रहणमन्तरेणेति** ॥ ननु 'अनुदात्तं पदम्-' इति परिभाषणात्कथं सङ्घातस्य कार्यित्वम्? अत आह-**सङ्घातस्य चेति** । एतज्ज्ञापकोपयोगश्चानुदात्तविधावेव[3] । अन्यत्र सर्वत्र क्वचिदादिग्रहणस्य क्वचिदन्तग्रहणस्य सत्त्वात् 'अनुदात्तं पदम्-' इति परिभाषणाच्च नोपयोग इति बोध्यम् ॥

( पूर्वग्रहणप्रयोजनभाष्यम् )

**अथ पूर्वग्रहणं किमर्थम् ?**

**न 'तस्मिन्निति निर्दिष्टे पूर्वस्य' ( १।१।६६ ) इति पूर्वस्यैव[4] भविष्यति ।**

**एवं तर्हि सिद्धे सति यत्पूर्वग्रहणं करोति तज्ज्ञापयत्याचार्यः—स्वरविधौ सप्तम्यस्तदन्तसप्तम्यो भवन्ति-इति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**'उपोत्तमं रिति' ( ६।१।२१७ ) रिदन्तस्य । 'चङ्यन्यतरस्याम्' ( २१८ ) चङन्तस्य ॥**

**यद्येतज्ज्ञाप्यते, 'चतुरः शसि' ( १६७ ) इति शसन्तस्यापि प्राप्नोति ।**

**शस्ग्रहणसामर्थ्यान्न भविष्यति । इतरथा हि तत्रैवायं ब्रूयात्—ऊडिदं पदाद्यप्पुम्रैद्युभ्यः-चतुर्भ्यश्च-इति ॥**

( प्रदीपः ) **पूर्वग्रहणमिति** । 'प्रत्यये पिति' इति वक्तव्यमिति **प्रश्नः** ॥

**स्वरविधौ सप्तम्य इति** । संघातस्य प्रत्ययान्तस्य कार्यनिवृत्त्यर्थं पूर्वग्रहणं स्वरविधौ तदन्तस्य कार्यित्वं ज्ञापयतीत्यर्थः । तदन्तपक्षे चायमर्थः स्यात्-भ्यादिविहितपिदन्तस्योदात्तत्वं भवतीति ॥

**उपोत्तमं रितीति** । अत्र हि रिति प्रत्यये परत उपोत्तमोदात्तप्रसङ्गः, रित्प्रत्ययान्तस्य चोपोत्तमोदात्तत्वमिष्यते ॥

**चतुर्भ्यश्चेति** । असर्वनामस्थानग्रहणानुवृत्त्या[5] 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेन पर्यायेणानुदात्तो विधीयेतेत्यर्थः ॥

१ 'प्रतिषेधेनेत्युक्तं' इति क. ट. च. झ. पाठः ॥

२ विभयावेति । सूत्रे प्रत्ययग्रहणाभावे विभयावेत्यत्र वप्रत्ययस्य ङित्त्वेऽपि 'आडुत्तमस्य पिच्च' इत्यनेन पित्त्वं विधीयते इति पिति परतः पूर्वस्याट उदात्तत्वं स्यादित्यर्थः ॥

३ एतज्ज्ञापकेति । स्वरविधौ संघातः कार्यो भवतीति ज्ञापनस्य 'तिङ्ङतिङः' इत्याद्यनुदात्तविधावेवोपयोगः । अस्याभावे तिङ्ङतिङ इत्यनेन तिङन्तस्य

४ 'पूर्वस्य भविष्यति' इति क. च. पाठः ॥

५ ननु ऊडिदंपदाद्यप्पुम्रैद्युभ्यश्चतुर्भ्यश्चेत्युच्यमाने जसि परतोऽपि उदात्तत्वं स्यादत आह—असर्वनामस्थानेति । ऊडिदमिति सूत्रे तदनुवर्तनाज्जसि परतो दोष इति भावः । चतुर्भ्य इत्यादौ दोषवारणायाह—षट्त्रीति ॥

तुभ्यौं हलादिः' इति हलादेश्चोदात्तत्वविधानाच्छस एव भविष्यतीति भावः ॥

( उद्योतः ) प्रत्यये इति । 'तस्मिन्–' इति परिभाषया पूर्वस्य सिद्धमित्यर्थः ॥

श्यादिविहितेति । एवं च सर्वेषामचां पर्यायेणोदात्तत्वं स्यात्, एकस्य प्रत्ययात्पूर्वस्यैवेष्यत इति तदर्थं पूर्वग्रहणमुक्तार्थज्ञापकमिति भावः ॥

अत्र हीति । 'ब्राह्मणजातीयः' इत्यादावेव स्यादिति भावः ॥

अत्र न्यासे शसन्यविभक्तेरुदात्तत्वाभावं दर्शयति—असर्वनामस्थानेति । चतुःशब्दस्य द्विवचनैकवचनयोरभावादिति भावः । 'षट्त्रि–' इत्यस्य तदन्तेऽप्रवृत्तिरिति वार्तिकमते 'चतुरः शसि' इत्यस्यापि विहितविशेषणाश्रयणेन तदन्तेऽप्रवृत्तिः । भाष्यमते तूभयोरपि तदन्ते प्रवृत्तिरिति न दोषः ॥

( पिद्ग्रहणप्रयोजनभाष्यम् )

**अथ पिद्ग्रहणं किमर्थम् ?**

**इह मा भूत्—जाग्रति ।**

**नैतदस्ति प्रयोजनम्, भवत्येवात्र पूर्वेण ।**

**इदं तर्हि प्रयोजनम्—दरिद्रति ।**

**आकारेण व्यवहितत्वान्न भविष्यति ।**

**लोपे कृते नास्ति व्यवधानम् ।**

**स्थानिवद्भावाद्व्यवधानमेव ।**

**प्रतिषिध्यतेऽत्र स्थानिवद्भावः–'स्वरविधिं प्रति न स्थानिवद्भवति' इति ॥**

( प्रदीपः ) **भवत्येवात्र पूर्वेणेति** । 'अभ्यस्तानामादिः' इत्यनेन । ननु च स्वरभेदो भवति । अनेन पूर्वस्य ऋकारस्योदात्तत्वं भवति । ततश्च 'उदात्तस्वरितयोर्यणः–' इति स्वरितप्रसङ्गः । 'अभ्यस्तानामादिः' इत्यनेन तूदात्तत्वे पदमाद्युदात्तं भवति । एवं तर्हि नित्यत्वात् पूर्वं यणादेशे कृते नास्ति स्वरभेदः ॥ ननु स्वरभिन्नस्य प्राप्नुवन् यणादेशोऽप्यनित्यः । एवं तर्हि स्पष्टोदाहरणान्तरसद्भावान्न सुष्ठु भाष्यकारेणैतन्निरूपितम् ॥

**दरिद्रतीति** । अत्रेकारस्योदात्तत्वं मा भूत्, आद्युदात्तत्वमेव यथा स्यादित्येवमर्थं पिद्ग्रहणमित्यर्थः ॥

**लोपे कृत इति** । 'श्नाऽभ्यस्तयोरातः' इति परत्वाल्लोपः ॥

( उद्योतः ) **ननु च स्वरभेद इति** । स्वरभिन्नस्य प्राप्तेर्यणोऽप्यनित्यत्वेनोभयोरनित्ययोः परत्वात्स्वर इति भावः ॥ **नित्यत्वादिति** । स्वरस्तु यणि कृते तस्य न प्राप्नोतीत्यनित्य इति भावः । 'स्वरभिन्नस्य–' इति नाश्रीयत इति तात्पर्यम् ॥ **स्पष्टोदाहरणेति** । 'दरिद्रति' इत्येतत् ॥

**आद्युदात्तत्वमेवेति** । 'अभ्यस्तानामादिः' इत्यनेन ॥

१ इत्यादावेवेति । रित्प्रत्ययात्पूर्वस्य बह्वच्कस्येति तात्पर्यम् ॥

२ ननु चतुर्भ्यश्चेति न्यासे परमचतुरौ परमचतुरोरित्यादौ दोषस्तदवस्थ एवेत्यत आह—षट्त्रीत्यस्येति । वार्तिकमते तदन्ते उभयोरप्रवृत्तिः । भाष्यमते च प्रवृत्तिरिति न दोष इति भावः ॥

( ११४८ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११३ )

## २६३२ अचः कर्तृयकि ॥ ६।१।१९५ ॥

( ६३१३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ यकि रपर उपसंख्यानम् ॥ * ॥

( भाष्यम् ) **यकि रपर उपसंख्यानं कर्तव्यम् । स्तीर्यते स्वयमेव ॥**

( ६३१४ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उपदेशवचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) **उपदेश इति वक्तव्यम् ॥**

( ६३१५ आनर्थक्यप्रकारे आक्षेपवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ उपदेशवचने जनादीनाम् ॥ * ॥

( भाष्यम् ) **उपदेशवचने जनादीनां स्वरो न सिध्यति । जायते स्वयमेव । जायते स्वयमेव ॥**

( प्रदीपः ) **जायते स्वयमेवेति** । अन्तर्भावितण्यर्थत्वाज्जनिः कर्मकर्तृयग्विषयः । 'एकं द्वादशधा जज्ञे' इत्यादौ चान्तर्भावितण्यर्थस्य सकर्मकस्य दृश्यते प्रयोगः ॥

( उद्योतः ) जनेरकर्मकत्वात्कर्मकर्तृत्वमनुपपन्नमत आह—अन्तर्भावितेति । ततः सौकर्याय ण्यर्थत्यागे कर्मकर्तृत्वं बोध्यम् ॥

( ६३१६ समाधानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

( भाष्यम् ) **योगविभागः करिष्यते—'अजन्तानां कर्तृयकि', वाऽऽदिरुदात्तो भवति । चीयते स्वयमेव–चीयते स्वयमेव । जायते स्वयमेव–जायते स्वयमेव ।**

**ततः 'उपदेशे', उपदेशे चाजन्तानां कर्तृयकि वा आदिरुदात्तो भवति । स्तीर्यते स्वयमेव–स्तीर्यते स्वयमेव ॥**

( उपदेशपदानुवर्तनबोधकभाष्यम् )

**तत्तर्ह्युपदेशग्रहणं कर्तव्यम्, न ह्यन्तरेणोपदेशग्रहणं योगाङ्गं जायते ।**

**न कर्तव्यम्, प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' ( ६।१।१८६ ) इति ।**

**ननु चोक्तम्—उपदेशे जनादीनां स्वरो न सिद्ध्यतीति ।**

३ जायते स्वयमेवेति । एकत्रानेन सूत्रेणादिरुदात्तः । अपरत्र चास्य विकल्पादप्रवृत्तौ यकू–उदात्तः ॥

४ 'उपदेशे जनादीनामिति' इति च. झ. पाठः । 'उपदेशवचने जनादीनां स्वरो न सिद्ध्यतीति' इति क. ट. पाठः ॥

नैष दोषः । नैवं विज्ञायते—उपदेशवचने जनादीनां स्वरो न सिध्यतीति ।

कथं तर्हि ?

जनादीनामप्यात्वे उपदेशवचनं कर्तव्यमिति ।

तत्तर्हि तत्रोपदेशग्रहणं कर्तव्यम् ।

न कर्तव्यम्, प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (६।४।३७) इति ॥

(प्रदीपः) न कर्तव्यमिति । योगविभागमन्तरेणोपदेशग्रहणानुवृत्त्यैव सिद्धत्वात् । तत्र 'ये विभाषा' इति यकारादिप्रत्ययविषयभाव उपदेशे जनादीनामात्वविधानात्, इह च तास्यादिसूत्रादुपदेशग्रहणानुवर्तनादुपदेशेऽजन्तस्य कर्तृयक्याद्युदात्तस्य विधानात् सर्वत्रेष्टविषये स्वरः सिद्धः ॥

(उद्योतः) भाष्ये—न ह्यन्तरेणेति । अनुवर्तमानेन योगविभागासंभवादिति भावः ॥

'न कर्तव्यम्'इति समाधानाशयमाह—योगविभागमिति । 'ये विभाषा'इत्यत्रापि उपदेशग्रहणानुवृत्तेरिति भावः । यद्यप्यनुवर्तमानेन वाक्यभेदः संभवति, तथापि प्रकारान्तरेणैव समाधानसंभवात्तन्नोक्तम् ॥

उक्ताशयमजानानः शङ्कते—ननु चेत्यादि ॥ समाधत्ते—नैवं विज्ञायत इत्यादि । उपदेशग्रहणानुवृत्तौ जनादीनां स्वरो न सिध्यतीति दोषपरं न 'उपदेशे जनादीनाम्' इति वार्तिकं व्याख्यायते, किन्तु जनादीनामात्वेऽप्युपदेश इति कर्तव्यमिति व्याख्यायत इत्यर्थः । आत्वविधावुपदेशग्रहणानुवृत्तौ 'ये' इति विषयसप्तमी आश्रयितव्या, परसप्तम्यामनन्वयापत्तेः—इत्याशयेनाह—तत्र ये इति । न चाङ्गाधिकारे कथं विषयसप्तमी, अङ्गत्वस्य विधानप्रतिबद्धत्वात् । उपदेशग्रहणसामर्थ्येनाङ्गसंज्ञानिमित्तयादिविषय इत्यर्थाङ्गीकारान्न दोषः ॥ उपदेशेऽजन्तस्येति । यगुपदेशे इत्यर्थः ॥

~

(११४९ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११४)

## २६३३ थलि च सेटीडन्तो वा ॥ ६ । १ । १९६ ॥

(सेड्ग्रहणप्रयोजनभाष्यम्)

सेड्ग्रहणं किमर्थम्, न थलीडन्तो वेत्युच्येत ?

'इडन्तो वा'इत्युच्यमान इहापि प्रसज्येत—पपक्थ ।

नैतदस्ति प्रयोजनम्, अच[1] इति वर्तते ।

इदं तर्हि प्रयोजनम्—ययाथेति ॥

(प्रदीपः) सेड्ग्रहणमिति । इड्ग्रहणादेव थल् सेड् ग्रहीष्यत इति प्रश्नः ॥

पपक्थेति । 'थलि'इत्यनेन थलन्तस्य ग्रहणादत्राप्यन्तोदात्तत्वम्, पक्षे चाद्युदात्तत्वं स्यात्; लित्स्वरेण मध्योदात्तत्वं चेष्यते । इड्ग्रहणं तु यदेडागमः क्रियते—पेचिथ—इति तदोदात्तत्वार्थं स्यात्, यथा च लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तत्वविधाने ययिथेत्यादौ चतुर्थाभावेऽपि पर्यायेणोदात्तत्रयं भवति, एवमिडभावेऽपि पपक्थेत्यत्र स्यात् ॥

(उद्योतः) नन्वादेरन्तस्येटश्च विकल्पेन स्वरविधानादिडभावे कथं प्रवृत्तिः स्यात्? अत आह—इड्ग्रहणं त्विति ॥ तदुपपादयति—यथेति ॥ पर्यायेणेति । 'अनुदात्तं पदम्—' इति परिभाषणादिति भावः । एतेन सन्नियोगशिष्टत्वाभावो दर्शितः । चतुर्थाभावेऽपि—अन्यतरस्याङ्ग्रहणबोधितलित्स्वराभावेऽपि ॥ भाष्ये—अच इति वर्तते इति । अजन्तात्थलि सति इडादिः पर्यायेणोदात्त इत्यर्थः ॥

~

(११५० विधिसूत्रम् ॥ ६ । १ । ६ आ. ११५)

## २६४१ संज्ञायामुपमानम् ॥ ६।१।२०४ ॥

(सूत्राक्षेपभाष्यम्)

किमर्थमिदमुच्यते, न 'ञ्नित्यादिर्नित्यम्' (६।१।१९७) इत्येव सिद्धम् ?

ञ्नितीत्युच्यते, न चात्र ञ्नितं पश्यामः ।

प्रत्ययलक्षणेन ।

न लुमता तस्मिन्निति प्रत्ययलक्षणप्रतिषेधः ।

अङ्गाधिकारोक्तस्य स प्रतिषेधः 'न लुमताङ्गस्य' (१।१।६३) इति ।

अत उत्तरं पठति—

(प्रदीपः) प्रत्ययलक्षणेनेति । चञ्चेव—चञ्चा, वध्रिकेव वध्रिका—इत्यादौ 'संज्ञायाम्'इति विहितस्य कनः 'लुम्मनुष्ये' इति लुब्विधानात् ॥

अङ्गाधिकार इति । 'सौवर्यः सप्तम्यस्तदन्त सप्तम्यः' इति वचनात् 'न लुमता तस्मिन्'इति न्यासेऽपि नास्ति प्रत्ययलक्षणप्रतिषेध इत्यर्थः ॥

(उद्योतः) चञ्चासदृशे[3] व्यक्तिविशेषे रूढेः संज्ञात्वम् । ननु तस्मिन्निति न्यासे उक्तस्य प्रतिषेधस्य 'अङ्गाधिकारोक्तस्य—'इत्यनेन कथं निवृत्तिः ? अतस्तन्न्यासेऽपि तदप्रवृत्तिमाह—सौवर्य इति ॥

---

१ अच इतीति । अचः कर्तृयकीति सूत्रादच इत्यनुवर्तते । तथा च—अजन्तेभ्यो विहितो यस्थल् सेट् तदन्ते पदे इट् अन्त आदिश्चोदात्ता वा स्युरिति सूत्रार्थः । वाग्रहणात्पक्षे लित्स्वरः । आदिर्णमुलन्यतरस्यामिति सूत्रादन्यतरस्यामित्यनुवर्तमाने पुनर्वाग्रहणं कार्यिविकल्पार्थं सदादेरपि कार्यं प्रापयति । अन्यतरस्यामित्यनुवर्तनात्कार्यविकल्पोऽपि भवति, तेन च लित्स्वरः सिद्धः ॥

२ सूत्रे 'सेटि' इति पदाभावे सूत्रार्थमाह—अजन्तात्थलीति ॥

३ चञ्चाशब्दस्य संज्ञाशब्दत्वमुपपादयति—चञ्चासदृश इति ॥

( ६३१७ सूत्रप्रयोजनबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य ॥ * ॥**

**( भाष्यम् ) उपमानस्याद्युदात्तवचनं ज्ञापकार्थं क्रियते ।**

**किं ज्ञाप्यम् ?**

**एतज्ज्ञापयत्याचार्यः-अनुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**गर्गाः[1], वत्साः, विदाः, उर्वाः[2] । उष्ट्रग्रीवा वामरज्जुः । ञ्नितीत्याद्युदात्तत्वं न भवति ।**

**इह च—अत्रेय[3] इति 'तद्धितस्य' 'कितः'[4] ( ६।१।१६४;१६५ ) इत्यन्तोदात्तत्वं न भवति ॥**

( प्रदीपः ) अनुबन्धलक्षण इति । अनुबन्धमात्राश्रयस्वरविषयं ज्ञापकमित्यर्थः ॥

उष्ट्रग्रीवेति । 'इवे प्रतिकृतौ' इति विहितस्य कनः 'जीविकार्थे चापण्ये' इति लुप् ॥

( उद्द्योतः ) अनुबन्धमात्रेति । न तु ञ्नित्स्वरविषयमेवेत्यर्थः ॥ तत्फलं भाष्ये दर्शितम्—इह चात्रय इत्यादिनेति । कित्तद्धितान्तस्यान्त उदात्त इत्यर्थं मत्वेदम् । एतेन प्रत्ययनिमित्तकार्यस्य प्रत्ययलक्षणेनातिदेशेऽपि प्रत्ययस्थानिकस्य नातिदेशः, 'नखनिर्भिन्नः' इत्यादावैसापत्तेः—इति परास्तम् ॥

( ज्ञाप्याक्षेपभाष्यम् )

**यद्यनुबन्धलक्षण इत्युच्यते, पथिप्रियः-मथिप्रिय इति, 'पथिमथोः सर्वनामस्थाने' ( १९९ ) इत्याद्युदात्तत्वं प्राप्नोति[5] ॥**

(प्रदीपः) पथिप्रिय इति। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वर आद्युदात्तत्वं प्राप्नोति, अन्तोदात्तत्वं चेष्यते ॥

( उद्द्योतः ) ननु पथिप्रिये 'समासस्य'इत्यन्तोदात्तत्वात्कथमाद्युदात्तत्वप्राप्तिरत आह—बहुव्रीहाविति । 'पथिमथोः'इति सूत्रेऽपि तदन्तसप्तमीति भावः । 'वा प्रियस्य'इत्युक्तेः पथिशब्दस्य पूर्वनिपातः ॥ अन्तोदात्तत्वं चेति । आद्युदात्तत्वाप्राप्तौ पथिशब्दस्य फिट्स्वरेणान्तोदात्तत्वात् पूर्वपदप्रकृतिस्वरेणेत्यर्थः ॥

( समाधानभाष्यम् )

**एवं तर्ह्याचार्यो ज्ञापयति-स्वरे प्रत्ययलक्षणं न भवतीति ॥**

( ज्ञाप्याक्षेपभाष्यम् )

**एवमपि सर्पिरागच्छ—सप्तागच्छतेति 'आमन्त्रितस्य च'[6] ( १९८ ) इत्याद्युदात्तत्वं न प्राप्नोति ।**

**इह च-मा हि दाताम्, मा हि धाताम् 'आदिः सिचोऽन्यतरस्याम्' ( १८७ ) इत्येष स्वरो न प्राप्नोति ॥**

( समाधानभाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः—सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणं न भवतीति ॥**

( ज्ञाप्याक्षेपभाष्यम् )

**एवमपि सर्वस्तोमः-सर्वपृष्ठः 'सर्वस्य सुपि' ( १९१ ) इत्याद्युदात्तत्वं न प्राप्नोति ॥**

( प्रदीपः ) सर्वस्तोम इति। 'बहुव्रीहौ प्रकृत्या–'इत्याद्युदात्तत्वं सर्वशब्दस्येष्यते ॥

( समाधानभाष्यम् )

**एवं तर्हि[7] 'अनुबन्धलक्षणे' इत्येव । कथं पथिप्रियः, मथिप्रियः ?**

**वक्तव्यमेवैतत्—*पथिमथोः[8] सर्वनामस्थाने लुकि* लुमता लुप्ते प्रत्ययलक्षणं न भवतीति ॥**

( प्रदीपः ) अनुबन्धलक्षण इत्येवेति। एवं च कित्स्वरोऽपि[9] प्रत्ययलक्षणेन न भवति । सिच्सर्वामन्त्रितस्वरास्तु[10] भवन्ति। अत्रय इत्यत्र 'इतश्चानिञः' इति ढकः 'अत्रिभृगुकुत्स–' इति लुक् । सर्पिरागच्छेत्यत्र 'स्वमोर्नपुंसकात्' इति सोर्लुक् । मा हि दातामित्यत्र 'गातिस्थाघु–' इति सिचो लुक् ॥

( उद्द्योतः ) एवञ्चेति । 'अत्रयः' इत्यादावाद्युदात्तत्वं सिद्धमिति भावः । एवञ्चैतद्भाष्यविरोधात्[11] 'सौवर्यः सप्तम्यः' इत्यस्य यत्र

---

१ गर्गा इति । गर्गशब्दाद्यञि यञञोश्चेति यञो बहुत्वे लुकि यदि प्रत्ययलक्षणं स्यात् ञ्नित्यादिरिति आद्युदात्तत्वं प्रसज्येत ॥

२ अ. क. पुस्तकयोः 'उर्वाः' इत्युदाहरणं नास्ति ॥

३ अत्रय इति । अत्रिशब्दात् 'इतश्चानिञः' इति ढकि अत्रिभृगुकुत्सेत्यनेन बहुत्वे लुकि प्रत्ययलक्षणेनान्तोदात्तत्वं प्राप्तं प्रत्ययलक्षणनिषेधान्न भवति ॥

४ ननु 'कितः' इति सूत्रस्य कितस्तद्धितस्यान्त उदात्त इत्यर्थात् अत्रय इत्यत्र तद्धितस्य लोपे प्रत्ययलक्षणेऽपि कथं स्वरप्रवृत्तिरत आह—कित्तद्धितान्तस्यान्तेति ॥

५ आद्युदात्तत्वमिति । पथिमथोः सर्वनामस्थान इति विहितमाद्युदात्तत्वं प्राप्नोतीत्यर्थः ॥

६ 'आमन्त्रितस्याद्युदा' इति अ. पाठः ॥

७ 'अस्तु तर्हि' इति ट. छ. च. झ. पाठः ॥

८ पथिमथोरिति । न लुमताऽङ्गस्येति सूत्रे वार्तिकमेतत् ॥

९ कित्स्वरोऽपीति । अत्रय इत्यत्र ढकः कित्त्वात् 'कितः' इति अन्तोदात्तत्वं प्रत्ययलक्षणेन न भवतीत्यर्थः ॥

१० स्वरास्त्विति । आदिः सिचोऽन्यतरस्यामित्यादयो येऽननुबन्धलक्षणाः स्वरास्ते भवन्तीत्यर्थः । स्वरे प्रत्ययलक्षणं न भवतीति स्वीकारे सिच्सर्वामन्त्रितस्वरा न भविष्यन्तीति भावः ॥

११ एतद्भाष्यविरोधादिति। अस्मिन् सूत्रे चध्वेव–चध्वा–इत्यादौ ञ्नित्यादिर्नित्यमित्येव सिद्धे संज्ञायामुपमानमित्यस्य वैयर्थ्यमाशङ्क्यानुबन्धलक्षणे स्वरे प्रत्ययलक्षणं न भवतीत्यर्थे संज्ञायामित्यस्य या ज्ञापकता भाष्ये उक्ता तद्भाष्यविरोधादित्यर्थः ॥

परसप्तमीतदन्तसप्तम्योः फलभेदस्तत्रैव प्रवृत्तिः, ज्ञापकस्य विशेषापेक्षत्वात्–इति नव्योक्तं परास्तम्[1]। सर्वस्तोमे 'सर्वस्य सुपि' इत्यस्या[2]प्रवृत्त्यापत्तेः ॥

( ११५१ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११६ )

## २६४२ निष्ठा च द्व्यजनात् ॥६।१।२०५॥

( ६३१८ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥*॥ निष्ठायां यञि दीर्घत्वे प्रतिषेधः ॥*॥**

( भाष्यम् ) निष्ठायां यञि दीर्घत्वे प्रतिषेधो वक्तव्यः । दत्ताभ्याम्, गुप्ताभ्याम् ॥

( प्रदीपः ) निष्ठायां यञीति । 'अनाकारान्ता या निष्ठा' इत्याश्रित्य[3] वार्तिकारम्भः ॥

( उद्द्योतः ) ननु 'अनाकारात्परा निष्ठा' इत्यर्थात् प्रतिषेधाप्राप्तेः 'अनात्' इति प्रतिषेधप्रतिषेधो[4] व्यर्थ इत्यत आह—अनाकारान्तेति ॥

( ६३१९ उपसंख्यानानुपयोगवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥**

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम् ?

बहिरङ्गलक्षणत्वात् । बहिरङ्गोऽत्र दीर्घः, अन्तरङ्गः स्वरः, असिद्धं बहिरङ्गमन्तरङ्गे ॥

( आक्षेपसमाधानानावश्यकत्वबोधकभाष्यम् )

अन्तरेण प्रतिषेधमन्तरेण चैतां परिभाषां सिद्धम् ।

कथम् ?

नैवं विज्ञायते—न चेदकारान्ता निष्ठेति ।

कथं तर्हि ?

न चेदाकारात्परा निष्ठेति ॥

यद्येवं निर्देशश्चैवं[5] नोपपद्यते, न ह्येषा आकारात्परा पञ्चमी युक्ता[6]। इह च प्राप्नोति—आप्तः[7], राद्ध इति ॥

एवं तर्हि—न चेदवर्णात्परा निष्ठेति ।

भवेन्निर्देश उपपन्नः, इह तु प्राप्नोति—आप्तः, राद्ध इति, इह च न प्राप्नोति—यतः, रत इति ॥

एवं तर्हि विहितविशेषणमकारान्तग्रहणम्—न चेदकारान्ताद्विहिता निष्ठेति ।

एवमपि—दत्तः-अत्र न प्राप्नोति, इह च प्राप्नोति—आप्तः, राद्ध इति ॥

एवं तर्हि कार्यिविशेषणमाकारग्रहणम्—न चेदाकारः कार्यी भवति[8]।

एवमपि—अद्याष्टः, कदाष्टः[9]—अत्र न प्राप्नोति ।

तस्मात्सुष्ठूच्यते—*निष्ठायां यञि दीर्घत्वे प्रतिषेधः* न वा बहिरङ्गलक्षणत्वात्* इति ॥

(प्रदीपः) निर्देश इति । 'अनातः' इति भाव्यमित्यर्थः ॥

इह च प्राप्नोतीति । विधिः, प्रतिषेधाभावात् ॥

न चेदाकार इति । तेन 'आप्तः-राद्धः' इत्यादावाकारस्योदात्तत्वाभावः ॥

अद्याष्ट इति । एकादेशे कृते आकारः कार्यीत्याद्युदात्तत्वं न प्राप्नोति । तस्मात्कार्यिविशेषणपक्षेऽप्यवश्याश्रयितव्या बहिरङ्गपरिभाषा–इत्याह—तस्मादिति ॥ बहिरङ्गलक्षणत्वादित्येतत् सुष्ठूच्यते, अवश्याश्रयितव्यत्वादस्याः परिभाषायाः । ततश्च 'अद्याक्तः' इत्यत्रैकादेशस्य बहिरङ्गत्वादसिद्धत्वात् 'अनात्' इति प्रतिषेधाभावः ॥

( उद्द्योतः ) भाष्ये–'यद्येवं निर्देशश्चैव' इति पाठः । निर्देश एव च नोपपद्यत इत्यन्वयः ॥

प्रतिषेधाभावादिति । निष्ठाया आकारात्परत्वाभावादिति भावः ॥

अद्याक्त इति । अञ्चेरद्यशब्देन सवर्णदीर्घः । 'अद्याष्टः' इति पाठे 'अशू व्याप्तौ' इत्यस्य रूपम् । भाष्ये परिहारवार्तिकस्यैव समीचीनत्वमुच्यते, न तु चोद्यवार्तिकस्यापि–इत्याह—तस्मात्कार्यीति । एवञ्च कार्यिविशेषणम् 'अनात्' इति स्थितम् । 'अनाकारान्ता या निष्ठा' इत्यर्थे 'आप्तः–राद्धः' इत्यादौ दोषादिति बोध्यम् ॥

---

१ परास्तमिति । भाष्यकृता हि संज्ञायामित्यस्य ज्ञापकत्वमुक्तं तत् 'ञ्निति' इत्यस्य तदन्तसप्तमीत्वे न लुमता तस्मिन्निति न्यासेन निषेधाप्राप्त्या प्रत्ययलक्षणप्रवृत्त्योपपादयितुं शक्यम् । ञ्नितीत्यत्र तदन्तसप्तमीपक्षे परसप्तमीपक्षे वा फले विशेषाभावान्नव्योक्तं परास्तमिति भावः ॥

२ अप्रवृत्त्यापत्तेरिति । सर्वस्य सुपीत्यत्र सुबन्तस्य सर्वशब्दस्यादिरुदात्त इत्यर्थे सुपि परतः सर्वशब्दस्यादिरुदात्त इत्यर्थे वा फले विशेषाभावेन सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्यस्याप्रवृत्त्यापत्तौ सुपि परतः सर्वशब्दस्यादिरुदात्त इत्येवार्थे सर्वस्तोमशब्दे सुप्परकत्वाभावान्नाद्युदात्तः स्यादिति भावः ॥

३ इत्याश्रित्येति । अनाकारान्ता या निष्ठा तदन्तस्यादिरुदात्त इति सूत्रार्थमाश्रित्य निष्ठायां यञीति वार्तिकारम्भ इत्यर्थः । वस्तुत आकारात्परा या निष्ठा तदन्तस्यादिरुदात्त इत्यर्थे नायं दोषः ॥

४ अनादिति प्रतिषेधप्रतिषेधः—अनादिति यः प्रतिषेधस्तस्य प्रतिषेधः—'निष्ठायां यञि दीर्घत्वे प्रतिषेधः' स च व्यर्थ इत्यर्थः ॥

५ 'निर्देशश्चैवं' इति ट. पाठः, झ. पुस्तके निर्दिष्टः पाठः । निर्देशानुपपत्तौ कारणमाह—न ह्येषेति ॥

६ युक्तेति । आशब्दान्ङसिप्रत्यये टाङसिङसामिनात्स्या इत्यस्याप्राप्तौ 'आत्' इति पञ्चमी न युज्यत इत्यर्थः ॥

७ आप्त इति । आप्त इत्यत्राकारात्परा निष्ठा नास्ति, पकारेण व्यवधानादिति अत्र प्राप्नोतीत्यर्थः ॥

८ 'भवतीति' इति क. च. झ. पाठः ॥

९ 'अद्याक्तः, कदाक्तः' इति घ. पाठः ॥

( ११५२ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११७ )

## २६४४ आशितः कर्ता[1] ॥ ६।१।२०७ ॥

( जिज्ञासाभाष्यम् )

**किं निपात्यते ?**

( प्रदीपः ) सकर्मकत्वादशेः कर्तर्यप्राप्तः क्तो निपात्यते । न चाविवक्षितकर्मत्वादकर्मकव्यपदेशात्कर्तरि क्तो लभ्यते । पचिददात्यादीनामपि कर्मविशेषाविवक्षायां कर्तरि क्तप्रसङ्गात् । तस्मायस्य न कदाचिदेकस्मिन्नेवार्थे द्रव्यकर्मणा संबन्धः सोऽकर्मकः, नान्यः ॥

( उद्द्योतः ) वृत्त्युक्तं प्रकारमाशङ्क्य दूषयति—न चेति ॥ द्रव्यकर्मणेति । देशकालाद्यतिरिक्तकर्मणेत्यर्थः ॥ नान्य इति । अविवक्षितकर्मादिरित्यर्थः । अत्र चेदमेव भाष्यं मानमित्याशयः । वस्तुतस्तु 'आशितःकर्तेत्ययुक्तो निर्देशः' इत्याद्यनुक्तेरविवक्षितकर्मणां तत्राग्रहणमित्यर्थे मानाभावः । अन्यथा तथैव शङ्क्येत । तस्मात्केवललक्ष्यैकचक्षुष्कतयैवात्र[2] निपातनाश्रयणमिति भाष्याशयः । एवञ्च 'आशित ओदनं देवदत्तः' इत्यपि भाष्यरीत्या साध्विति बोध्यम् ॥

( ६३२० निपातनबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आशिते[3] कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च ॥ * ॥

**( भाष्यम् ) आशित इति कर्तरि निपात्यते । आशितवान्-आशितः । उपधादीर्घत्वमाद्युदात्तत्वं च निपात्यते ॥**

( वार्तिकैकदेशप्रत्याख्यानभाष्यम् )

**आद्युदात्तत्वमनिपात्यम्, अधिकारात् सिद्धम् ।**
**उपधादीर्घत्वमनिपात्यम्, आङ्पूर्वस्य प्रयोगः ।**
**यद्येवमवग्रहः प्राप्नोति ।**
**न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् ।**
**यथालक्षणं पदं कर्तव्यम् ॥**

( प्रदीपः ) **आङ्पूर्वस्येति** । थाथादिस्वरापवाद आद्युदात्तत्वं विधीयते ॥ **न लक्षणेनेति** । संहितैवापौरुषेयी, पदानि तु पौरुषेयाणीति भावः ॥

( उद्द्योतः ) थाथादीति । आङोऽशितेन समासे समासान्तोदात्तत्वं बाधित्वा 'तत्पुरुषे तुल्यार्थ–' इति पूर्वपदप्रकृतिस्वरः प्राप्तः, तं बाधित्वा 'गतिकारकोपपदात्'इत्युत्तरपदप्रकृतिस्वरः प्राप्तः, तं बाधित्वा थाथादिस्वरः प्राप्त इति भावः । यद्यप्युत्तरपदप्रकृतिस्वरेणाप्यन्तोदात्तत्वमेव प्राप्तम्, तथापि न्याय्यत्वादिदमेवोक्तम् ॥

( ११५३ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११८ )

## २६४५ रिक्ते विभाषा[5] ॥ ६।१।२०८ ॥

( ११५४ विधिसूत्रम् ॥ ६ । १ । ६ आ. ११९ )

## २६५२ विभाषा वेण्विन्धानयोः[6] ॥ ६ । १ । २१५ ॥

( विभाषानिर्धारकभाष्यम् )

**किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ? कथं च प्राप्ते, कथं चाप्राप्ते ?**

**यदि 'संज्ञायामुपमानम्' 'निष्ठा च द्व्यजनात्' (६।१।२०४;२०५) इति वा नित्ये प्राप्ते आरम्भस्ततः प्राप्ते, अन्यथा[7] त्वप्राप्ते ॥**

**वेणुरिक्तयोरप्राप्ते[8] विभाषा, प्राप्ते नित्यो विधिः । वेणुरिव वेणुः । रिक्तो नाम कश्चित् ॥**

( प्रदीपः ) **वेणुरिक्तयोरिति** । संज्ञायां पूर्वविप्रतिषेधान्नित्यो विधिः प्रवर्तत इति भावः ॥

( उद्द्योतः ) भाष्ये—वेणुरिक्तयोरिति दर्शनादिन्धानशब्दे संज्ञाविषये परत्वाद्विकल्प एवेत्येके । इन्धानस्य संज्ञाविषये प्रयोगाभाव एवेति कश्चित् ॥

( ११५५ विधिसूत्रम् ॥ ६ । १ । ६ आ. १२० )

## २६५४ उपोत्तमं[9] रिति ॥ ६।१।२१७ ॥

( पदकृत्यभाष्यम् )

**उपोत्तमग्रहणं किमर्थम्, न 'रिति पूर्वम्'इत्येवोच्यते[10] ?**

---

१ आशितः कर्तेति । कर्तृवाची आशितशब्द आद्युदात्त इति सूत्रार्थः ॥

२ केवललक्ष्यैकचक्षुष्कतयैवेति । कर्मणोऽविवक्षायामाशित इत्यत्र कर्तरि क्तप्रत्ययो भवति–इति, कर्मणोऽविवक्षायां पचिददात्यादिभ्यस्तु न, तादृशलक्ष्यस्यानिष्टत्वादित्याशयः ॥

३ 'आशित इति क्तः कर्तरि' इति ट. च. छ. झ. पाठः ॥

४ 'आशित इति क्तः कर्तरि' इति झ. पाठः ॥

५ रिक्ते विभाषेति । यदा रिक्तशब्द उपमानं संज्ञायां तदा संज्ञायामुपमानमिति नित्य आद्युदात्तः प्राप्तः, यदा चोपमानभिन्नः संज्ञावाची तदा 'निष्ठा च द्व्यजनात्' नित्यं प्राप्तः ॥

६ वेण्विन्धानयोरिति । वेणुशब्दः 'स्थोणुः' इत्यनुवर्तमाने 'जॄवृरिभ्यो निच्च' इत्यनेन नित्प्रत्ययान्तत्वान्नित्यमाद्युदात्तः । इन्धानशब्दो यदि चानशन्तस्तदा चित्वादन्तोदात्तः । यदा शानजन्तस्तदा लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः ॥

७ 'अन्यत्र वाऽप्राप्ते' इति छ. च. झ. पाठः ॥

८ अप्राप्ते इति । वेणुरिक्तयोः संज्ञातिरिक्तस्थले विभाषा, यत्र च संज्ञा तत्र पूर्वविप्रतिषेधान्नित्यो विधिरिति भावः ॥

९ उपोत्तममिति । रित्प्रत्ययान्तस्योपोत्तममुदात्तं स्यादिति सूत्रार्थः । यदा ह्वनीये–इत्युदाहरणम् ॥

१० इत्येवोच्यते इति । 'उपोत्तमं रिति' इति यथाऽवस्थिते सूत्रे सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति वचनेन रिदन्तस्येत्यर्थो जायते, तदोपोत्तमग्रहणमावश्यकम् । 'रिति पूर्वम्' इति न्यासे तु पूर्वग्रहणसामर्थ्यात् रिदन्तस्येत्यर्थो न भवतीति 'रिति पूर्वम्' इति न्यासस्योपक्षेपः । रित्पदेनान्त्यो वर्णो गृह्यते न प्रत्ययः ॥

तत्रायमप्यर्थः—'मतोः पूर्वमात्संज्ञायां स्त्रियाम्' (२१९) इत्यत्र पूर्वग्रहणं न कर्तव्यं भवति ॥

एवं तर्हि-उपोत्तमग्रहणमुत्तरार्थम् । 'चङ्यन्यतरस्याम्' (२१८) उपोत्तममित्येव ।

इह मा भूत्-मा हि स्म दधत् ॥

(प्रदीपः) न रितीति । र इदस्येति अन्तो वर्णो रिच्छब्देनोच्यते । तस्मिन् पूर्वमुदात्तमिति विज्ञायमाने नार्थं उपोत्तमग्रहणेनेत्यर्थः ॥ मा हि स्म दधदिति । धेटः 'विभाषा धेट्श्व्योः' इति च्लेश्चङादेशः । तत्र त्रिप्रभृतीनामभावादुपोत्तमं चङन्तस्य नास्तीति चङ एवोदात्तत्वं भवति । पूर्वग्रहणे तु क्रियमाणे चङः पूर्वस्य धातोः स्यात् ॥

(उद्योतः) नन्वसत्युपोत्तमग्रहणे पूर्वग्रहणे च सति रितः प्रत्ययात्पूर्वस्योदात्तत्वं स्यात्, 'करणीयम्' इत्यादौ रिदन्तोपोत्तमस्येष्यते; अत आह—र इदिति ॥ अन्त्यो[1] वर्ण इति । समीपे[2]ऽवयवत्वारोपेण समासः, अनुबन्धानेकान्तत्वे समुदायस्याप्येवमेव रित्त्वोपपादनात् । तत्र व्याख्यानादन्त्यवर्णस्यैव ग्रहणमिति भावः । अन्त्यश्चानीयरादौ यकारः । पूर्वग्रहणाच्च 'सौवर्यः सप्तम्यः' इत्यस्याप्रवृत्तिः ॥ चङ इति । 'चङ्यन्यतरस्याम्'इत्यस्याप्रवृत्तौ प्रत्ययस्वरेणेति भावः । वस्तुतः 'एकान्ता अनुबन्धाः' इति पक्षेऽन्तवर्णस्य रिच्छब्देन ग्रहणे मानाभावादिहार्थमपि तत्-इति-इदं भाष्यमेकदेश्युक्तिः ॥

(११५६ विधिसूत्रम् ॥ ६ । १ । ६ आ. १२१)

## २६५७ अन्तोऽवत्याः ॥ ६ । १ । २२० ॥

(११५७ विधिसूत्रम् ॥ ६ । १ । ६ आ. १२२)

## २६५८ ईवत्याः ॥ ६ । १ । २२१ ॥

(सूत्रद्वयप्रयोजनभाष्यम्)

किमर्थमिदमुभयमुच्यते[3], न[4] 'वत्याः' इत्येवोच्येत?

'वत्याः' इतीयत्युच्यमाने राजवती-अत्रापि प्रसज्येत ।

अथ 'अवत्याः' इत्युच्यमाने कस्मादेवात्र न भवति?

असिद्धो नलोपः, तस्यासिद्धत्वान्नैषोऽवतीशब्दः ।

कस्तर्हि?

अन्वतीशब्दः ।

यथैव तर्हि नलोपस्यासिद्धत्वान्नावतीशब्दः, एवं वत्वस्या[5]सिद्धत्वान्नावतीशब्दः ।

आश्रयात्सिद्धत्वं स्यात् ॥

(११५८ विधिसूत्रम् ॥ ६ । १ । ६ आ. १२३)

## २६५९ चौ[6] ॥ ६ । १ । २२२ ॥

(६३२१ उपसंख्यानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ चोरतद्धिते ॥ * ॥

(भाष्यम्) चुस्वरः 'अतद्धिते' इति वक्तव्यम् ।

इह मा भूत्-दाधीचः, माधूच इति ॥

(प्रदीपः) चोरतद्धित इति । चौ यः स्वरो विधीयते स चोः संबन्धी भवतीति षष्ठीनिर्देशः कृतः ॥

(उद्योतः) ननु चौ परतः पूर्वस्यान्तोदात्तत्वं विधीयते, तेन 'चोः' इति निर्देशोऽयुक्तोऽत आह—चौ य इति ॥

(वार्तिकाक्षेपभाष्यम्)

तत्तर्हि वक्तव्यम्?

न वक्तव्यम् ।

प्रत्ययस्वरोऽत्र बाधको भविष्यति ॥

(प्रदीपः) प्रत्ययस्वरोऽत्रेति । यत्रानुदात्तः प्रत्ययः स चुस्वरस्यावकाशः-दधीचः, दधीचा-इति भावः ॥

(उद्योतः) ननु सर्वत्र प्रत्ययस्वरप्राप्तावयमनवकाशोऽत आह—यत्रानुदात्त इति । शब्दपरविप्रतिषेधाद्बाधकत्वमित्यर्थः । यद्यपि वेदे 'अञ्चेश्छन्दसि-' इत्यन्तोदात्तत्वम्, तथापि भाषायामवकाश इति भावः ॥

(समाधानभाष्यम्)

स्थानान्तरप्राप्तश्चुस्वरः । प्रत्ययस्वरस्यापवादः 'अनुदात्तौ सुप्पितौ' (३।१।४) इति । अनुदात्तौ सुप्पितावेतस्योदात्तनिवृत्तिस्वरः । उदात्तनिवृत्तिस्वरस्य चुस्वरः ।

स यथैवोदात्तनिवृत्तिस्वरं बाधते, एवं प्रत्ययस्वरमपि बाधेत ॥

(प्रदीपः) स्थानान्तर प्राप्त इति । अपवादस्थानं प्राप्तो बलवानित्यर्थः ॥ तदेवापवादत्वं दर्शयति—प्रत्ययस्वरस्येति । प्रत्ययस्वरस्यैवोदात्तनिवृत्तिस्वरेण प्रत्यापत्तिः क्रियत इति प्रत्ययस्वरापवादश्चुस्वर इत्यर्थः । कृत्स्वरेण चाञ्चतेरकार उदात्तः ॥

(उद्योतः) किमिदं स्थानान्तरप्राप्तत्वं नाम, तत्राह—अपवादस्थानमिति । प्रत्ययोत्तरमल्लोपोत्तरं प्राप्तेरिति भावः ॥ ननु 'प्रत्ययस्वरापवादः' इत्युपक्षिप्योदात्तनिवृत्तिस्वरबाधकत्वोपपादनमयुक्तमत आह—प्रत्ययस्वरस्यैवेति ॥ अत्रोदात्तनिवृत्तिस्वरप्राप्तये आह—कृत्स्वरेणेति ॥ प्रत्ययस्वरमपीति—भाष्ये—बाध्यसामान्यचिन्तयेति भावः । अञ्चत्युत्तरपदाद्धि सुब्ङीप्तद्धिता एव प्रत्ययाः, नान्ये इति बोध्यम् ॥

---

१ इदानीं तनोपलब्धोद्द्योतपुस्तकेषु 'अन्त्यो वर्ण-इति' इत्येव प्रतीकं दृश्यते। उपलब्धप्रदीपपुस्तकेषु च 'र इदस्येति अन्तोवर्ण' इत्येवोपलभ्यते ॥

२ समीपे इति । न तु सामीप्यं षष्ठ्यर्थ इति भावः ॥

३ इदमुभयं—अन्तोऽवत्याः-ईवत्या इत्येत् ॥

४ न वत्या इति । अवतीशब्दे ईवतीशब्दे च वतीशब्दस्य सत्वेन 'वत्या अन्तः' इत्येवं न्यासः किं न कृत इति प्रश्नः ॥

५ 'वत्वस्याप्यसिद्धत्वात्' इति छ. झ. पाठः ॥

६ चौ-इति । लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यादिति सूत्रार्थः ॥

( समाधानाक्षेपभाष्यम् )

**नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति ।**

**किं कारणम् ?**

**'न गोश्वन्साववर्ण-' (६।१।१८२) इति प्रतिषेधात् ॥**

( प्रदीपः ) **न गोश्वन्निति** । अञ्चतिर्धातुरेव तत्रोपात्तः, न तु 'नाञ्चेः पूजायाम्' इति प्रतिषिद्धनलोपः क्विन्नन्तः ॥

( उद्योतः ) भाष्ये—नात्रेति । चुस्वरविषये इत्यर्थः ॥

ननु 'न गोश्वन्' इत्यत्राकृतनलोपाञ्चतेर्ग्रहणात्कथं दधीचेत्यादौ तेन निषेधोऽत आह—**अञ्चतिर्धातुरेवेति** । 'प्रतीचो बाहून्'[1] इत्यादि तु छान्दसं बोध्यम् । 'अञ्चेश्छन्दसि-' इत्यनेन वा सिद्धम् । 'अञ्चेश्छन्दसि-' इति हि अस्यापवाद इति भाष्याशयः । एवञ्चास्य कमपि प्रति नापवादत्वमिति प्रत्ययस्वरापवादत्वाभावेन स एवास्य बाधको भविष्यतीति वचनं व्यर्थमिति तात्पर्यम् ॥

( प्रत्याक्षेपभाष्यम् )

**नैष[2] उदात्तनिवृत्तिस्वरस्य प्रतिषेधः ।**

**कस्य तर्हि ?**

**तृतीयादिस्वरस्य[3] ॥**

( प्रदीपः ) **तृतीयादिस्वरस्येति** । 'न गोश्वन्-' इत्यत्र 'सावेकाचः-' इत्यतस्तृतीयादिग्रहणमनुवर्तते ॥

( उद्योतः ) आरम्भवाद्याह—नैष इति ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**यत्र तर्हि तृतीयादिस्वरो नास्ति—दधीचः पश्येति ॥**

( प्रदीपः ) **यत्र तर्हीति** । तत्रोदात्तनिवृत्तिस्वरस्य बाधक एव चुस्वर इत्यर्थः ॥

( उद्योतः ) **यत्र तर्हीति** । यत्र चेत्यर्थः । एवमस्य व्याख्यानं विप्रतिषेधसूत्रे कैयटे स्पष्टम् । अत्र येन केनापि प्राप्तस्य तृतीयादिस्वरस्य निषेध इत्येवमर्थेऽपि निषेधाप्राप्तिरित्यर्थः ॥ तदेवाह—**तत्रोदात्तेति** । एवञ्च तत्र परत्वाद्यथा चुस्वर[4] उदात्तनिवृत्तिस्वरं बाधते तथा प्रत्ययस्वरमपि बाधेतेति वचनमावश्यकमिति भावः ॥

( सिद्धान्तभाष्यम् )

**एवं तर्हि न तृतीयादिलक्षणस्य प्रतिषेधं शिष्मः ।**

**किं तर्हि ?**

**येन केन चिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधम् ।**

**यदि विभक्तिस्वरस्य प्रतिषेधः, वृक्षवान्-प्लक्षवान्-अत्र न प्राप्नोति ।**

**मतुब्ग्रहणमपि प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'ह्रस्वनुड्भ्यां मतुप्' (१७६) इति ।**

**यदि तदनुवर्तते, वेतस्वान्-अत्रापि प्राप्नोति ।**

**मतुब्ग्रहणमनुवर्तते, ड्मतुश्चैषः ।**

**यदि तर्हि मतुपो ग्रहणे ड्मतुपो ग्रहणं न भवति, वेतस्वानिति वत्वं न प्राप्नोति ।**

**सामान्यग्रहणं वत्वे, इह पुनर्विशिष्टस्य ग्रहणम् ।**

**यत्र तर्हि विभक्तिर्नास्ति—दधीची-इति ।**

**यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत ।**

**नैवं शक्यम् ।**

**इहापि प्रसज्येत—कुमारीति ॥**

**सति शिष्टः खल्वपि चुस्वरः ।**

**कथम् ?**

**'चौ' इत्युच्यते । यत्रास्यैतद्रूपम् ।**

**क्व चास्यैतद्रूपम् ?**

**यजादावसर्वनामस्थानेऽभिनिर्वृत्ते नकारलोपेऽकारलोपे च ।**

**तस्माच्चुष्टूच्यते—चोरतद्धित इति ॥**

( प्रदीपः ) **एवं तर्हीति** । 'न गोश्वन्-' इत्यत्र विभक्तिग्रहणमेवानुवर्तते, न तृतीयादिग्रहणमित्यर्थः । ततश्चुस्वरः प्रत्ययस्वरस्य न बाधक इति उपसंख्यानं नारब्धव्यम्, प्रत्ययस्वरेण सिद्धत्वात् ॥

**वृक्षवानिति** । मतुपो विभक्तित्वाभावात्प्रतिषेधाभावे 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वं प्राप्नोति ॥

**वेतस्वानिति** । कुमुदनडवेतसेभ्यो ड्मतुप्प्रत्ययः । तत्र लक्षणविशेषानपेक्षे उदात्तत्वमात्रप्रतिषेधे विज्ञायमान उदात्तनिवृत्तिस्वरस्यात्र निषेधः प्राप्नोतीत्यर्थः ॥

**ड्मतुश्चैष इति** । तदनुबन्धकग्रहणे नातदनुबन्धकस्येति मतुब्ग्रहणेन ड्मतुपो ग्रहणं न भवति । वत्वविधौ तु 'मतोः' इत्यपकारानुबन्धकनिर्देशात् परिभाषानुपस्थानाद्द्वयोरपि ग्रहणम् ॥

**यत्र तर्हीति** । ततश्च स्थानान्तरप्राप्तत्वमस्त्येव चुस्वरस्येत्यर्थः ॥

**कुमारीति** । कुमारशब्दः साववर्णान्त इति ईकारस्योदात्तनिवृत्तिस्वरप्रतिषेधप्रसङ्गः । तस्मात् 'दधीची' इत्यत्र स्थानान्तरप्राप्त एव चुस्वर इति 'चोरतद्धिते' इति वक्तव्यमेव ॥

**सति शिष्ट इति** । 'दधि अच् अस् अ' इति स्थिते 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते लुङ्निमित्तं च'-इति पूर्वं तद्धितः पश्चात् 'अचः' इत्यल्लोपः ॥

---

[1] प्रतीचो बाहूनिति । अञ्चेश्छन्दसीति सूत्रे सावेकाचस्तृतीयादिर्विभक्तिरित्यतस्तृतीयादिरित्यनुवर्तमानेऽसर्वनामस्थानेग्रहणं शसपरिग्रहार्थम् । तेन प्रतीच इत्यत्र विभक्तिरनेनोदात्तेति भावः ॥

[2] नैष इति । न गोश्वन्साववर्णेत्ययं निषेधो न 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यस्येत्यर्थः ॥

[3] तृतीयादिस्वरस्येति । सावेकाचस्तृतीयादिर्विभक्तिरित्यस्य ॥

[4] 'चुस्वर उदात्तस्वरं बाधते' इति ख. घ. पाठः । 'चुस्वरं बाधते' इति ज. पाठः ॥

( उद्द्योतः ) ( भाष्ये ) प्रत्याख्यानबाधाह—एवं तर्हीति ॥ तदेवाह—ततश्चुस्वर इति ॥ मतुप उदात्तत्वमिति । अनुदात्तत्वं चेष्यत इत्यर्थः ॥ उदात्तनिवृत्तिस्वरस्येति । अन्तोदात्तवेतसशब्दाकारस्यानुदात्ते ड्मतुपि लोपे इष्टोदात्तनिवृत्तिस्वरस्य प्रतिषेधः स्यादित्यर्थः ॥

तदनुबन्धकेति । ह्यनुबन्धकग्रहणे त्र्यनुबन्धकाग्रहणादिति भावः ॥

ततश्चेति । क्वचित् प्रत्ययस्वरप्रतिप्रसवरूपोदात्तनिवृत्तिस्वरप्राप्तेरस्य परत्वात्तद्बाधकत्वात्तेनैव न्यायेन प्रत्ययस्वरस्यापि बाधापत्त्या 'दाधीचः' इत्यादौ प्रतिषेधो वक्तव्य इत्यर्थः ॥ प्रकारान्तरेणापि तस्यावश्यवक्तव्यतामाह—सति शिष्ट इति-भाष्ये ॥ ननु 'दधि अच् अस्'इति स्थिते पूर्वमेव भत्वादकारलोपे तद्धितात्पूर्वमेव चुस्वरप्राप्त्या प्रत्ययस्वरात्सति शिष्टत्वमसिद्धमत आह—अन्तरङ्गानपीति ॥

( ११५९ विधिसूत्रम् ॥ ६ । १ । ६ आ. १२४ )

## २६६० समासस्य ॥ ६ । १ । २२३ ॥

( ६३२२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् ॥ * ॥

( भाष्यम् ) समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम् । राजदृषत्, ब्राह्मणसमित् ॥

( प्रदीपः ) व्यञ्जनान्तेष्विति । 'उच्चैरुदात्तः' इत्यत्र 'अचः' इत्यनुवर्तनादजन्तस्य समासस्यान्तोदात्तत्वविधानाद्धलन्तस्य न प्राप्नोतीति वचनम् ॥

( उद्द्योतः ) ननु व्यञ्जनानामस्वरकत्वेन तद्वर्जमन्त्यस्याचः स्वरस्य सिद्धत्वात् किमुपसङ्ख्यानेनेत्यत आह—उच्चैरिति ॥ एवं चोच्चैरुपलभ्यमानोऽजुदात्तः, सचाचः स्थाने-इति तदर्थः; तदाह—अजन्तस्येत्यादि । उपसङ्ख्यानारम्भे तु व्यञ्जनान्तेऽन्तोऽजुदात्त इत्यर्थः ॥

( ६३२३ परिभाषोपस्थापकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हल्स्वरप्राप्तौ[2] वा व्यञ्जनमविद्यमानवत् ॥ * ॥

( भाष्यम् ) अथवा हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् भवतीत्येषा परिभाषा कर्तव्या ॥

( उद्द्योतः ) भाष्ये—हल्स्वरप्राप्तौ[3] वेति । उपसङ्ख्यानं वा कर्तव्यम्, एषा परिभाषा वा कर्तव्येत्यर्थः ॥

( उभयकरणाक्षेपभाष्यम् )

किमर्थमिदमुभयमुच्यते, न हल्स्वरप्राप्तावविद्यमानवदित्येवोच्येत, स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति-इति वा ।

द्विर्बद्धं सुबद्धं भवति[4] ॥

( प्रदीपः ) हल्स्वरप्राप्ताविति । हल एव प्रकृतत्वादविद्यमानत्वं विज्ञायते ॥ स्वरप्राप्ताविति । प्रकृतत्वाद्व्यञ्जनस्यैव प्राप्तिः प्रत्येष्यते ॥

द्विर्बद्धमिति । उभयोपादाने स्पष्टाऽवगतिर्भवतीत्यर्थः ॥

(उद्द्योतः) (भाष्ये) किमर्थमिदमुभयमिति । परिभाषायां हल्ग्रहणं, व्यञ्जनग्रहणं च-इत्यर्थः ॥ हल एवेति । श्रुतसंबन्धेनोपपत्तावश्रुतकल्पनाया अयोगादिति भावः ॥

( परिभाषास्वरूपाक्षेपभाष्यम् )

यदि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यते, दधि—'उदात्तादनुदात्तस्य स्वरितः' ( ८।४। ६६ ) इति स्वरितत्वं न प्राप्नोति ।

उदात्ताच्च स्वरितविधौ व्यञ्जनमविद्यमानवद्भवतीत्येषा परिभाषा कर्तव्या ॥

( प्रदीपः ) स्वरितत्वं न प्राप्नोतीति । हल्स्वरप्राप्त्यभावाद्धकारस्य व्यवधायकत्वात् ॥

( परिभाषाप्रयोजनजिज्ञासाभाष्यम् )

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

( उद्द्योतः ) भाष्ये—कान्येतस्या इति । 'हल्स्वरप्राप्तौ' इत्येतस्या इत्यर्थः ॥

( ६३२४ प्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः ॥ * ॥

( भाष्यम् ) लित्यति प्रयात्पूर्वमुदात्तं भवति-इति, इहैव स्यात्—भौरिकिविधम्, भौलिकिविधम् । चिकीर्षकः, जिहीर्षक इत्यत्र न स्यात् ॥

ञ्नित्यादिरुदात्तो भवति-इति, इहैव स्यात्—अहिचुम्बकायनिः, आग्निवेश्यः, गार्ग्यः । कृतिः-इत्यत्र न स्यात् ॥

धातोरन्त उदात्तो भवति-इति, इहैव स्यात्-ऊर्णोति । पचति-इत्यत्र न स्यात् ॥

( प्रदीपः ) भौरिकिविधमिति । भौरिकीणां विषयो

१ समासस्येति । अत्र 'अन्तोऽवत्याः' इत्यतोऽन्त इत्यनुवर्तते । समासस्यान्त उदात्त इत्यर्थः । अनेकपदस्वरप्राप्ते सूत्रमिदमारभ्यते ॥

२ 'स्वरप्राप्तौ व्यञ्जनं' इति च. झ. क. पाठः, । 'हल्स्वरप्राप्तौ च' इति ट. पाठः ॥

३ 'हल्स्वरप्राप्तौ व्येति' इति प्रतीकपाठः झ. पुस्तके । 'हल्स्वरप्राप्तौ चेति' इति ख. पाठः ॥

४ 'भवतीति' इति क. च. झ. पाठः ॥

देशः । 'भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ' इति विधल्प्रत्ययः ॥ चिकीर्षक इति । रेफषकाराभ्यामीकारस्य व्यवधानात् ॥ अहिचुम्बकायनिरिति । 'प्राचामवृद्धात् फिन् बहुलम्' इति फिन् ॥ आग्निवेश्य इति । गर्गादित्वाद्यञ् ॥ गार्ग्य इति । हलादित्वादच आदित्वाभावात् ॥

( उद्योतः ) ईकारस्य व्यवधानादिति । 'अत्र न स्यात्' इति भाष्यस्य—इष्टेकारस्य न स्यात्, व्यञ्जनस्य पक्षेव स्यादित्यर्थ इति भावः ॥

( परिभाषास्वरूपाक्षेपभाष्यम् )

इदं तावदयुक्तम्-यदुच्यते-हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवतीति ।

कथं हि हलो नाम स्वरप्राप्तिः स्यात् ?

तच्चापि ब्रुवता 'उदात्ताच्च स्वरितविधौ' इति वक्तव्यम् ।

तथाऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति ॥

( प्रदीपः ) कथं हीति । अज्धर्मत्वादुदात्तादीनाम् ॥

( एकदेशिनः परिभाषास्वरूपोपस्थापकभाष्यम् )

यदि पुनः स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यते ।

अथ स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्युच्यमानेऽनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्किं सिद्धं भवति व्यञ्जनादेर्व्यञ्जनान्ताच्च ?

बाढं सिद्धम् ।

कथम् ?

स्वरविधिरिति सर्वविभक्त्यन्तः समासः । स्वरेण विधिः-स्वरविधिः, स्वरस्य विधिः-स्वरविधिः स्वरतो विधिः-स्वरविधिरिति ।

नैवं शक्यम् ।

इह हि दोषः स्यात्—उदश्वित्वान् घोषः, विद्युत्वान् बलाहक इति, 'ह्रस्वनुड्भ्यां मतुप्' ( ६।१। १७६ ) इत्येष स्वरः प्रसज्येत ॥

( प्रदीपः ) सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्तावयवत्वात्सर्वविभक्त्यन्तः । सर्वग्रहणमनेकोपलक्षणार्थम्, सप्तानां विभक्तीनामिहानुपयोगात् ॥

( उद्योतः ) ननु समासादेकविभक्तेरेव श्रवणेन सर्वविभक्त्यन्तता तस्य न युक्तेत्यत आह—सर्वेति ॥

( परिभाषास्वरूपस्थापकभाष्यम् )

अस्तु तर्हि हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति-इति ।

ननु चोक्तम्—कथं हि हलो नाम स्वरप्राप्तिः स्यात्-इति ।

'उच्चैरुदात्तः' (१।२।२९) 'नीचैरनुदात्तः' (३०) इत्यत्र षष्ठीनिर्दिष्टमज्ग्रहणं निवृत्तम्, तस्मिन्निवृत्ते हलोऽपि स्वरप्राप्तिर्भवति ॥

यदप्युच्यते—उदात्ताच्च स्वरितविधाविति वक्तव्यमिति ।

न वक्तव्यम् ।

नेदं पारिभाषिकस्यानुदात्तस्य ग्रहणम् ।

किं तर्हि ?

अन्वर्थग्रहणम् । अविद्यमानोदात्तमनुदात्तं भवति । उदात्तादनुदात्तस्य स्वरित इति ॥

यदप्युच्यते—अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोति-इति ।

आचार्यप्रवृत्तिर्ज्ञापयति—तत्र सिद्धं तद्भवति व्यञ्जनादेर्व्यञ्जनान्ताच्चेति, यदयं नोत्तरपदेऽनुदात्तादावित्युक्त्वा 'अपृथिवीरुद्रपूषमन्थिषु' इति प्रतिषेधं शास्ति ॥

( प्रदीपः ) अविद्यमानोदात्तमिति । अज्झलसमुदायोऽनुदात्त उदात्तात्पर इति दधिशब्दे स्वरितः सिद्धः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटविरचिते भाष्यप्रदीपे षष्ठाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

पादश्च प्रथमः समाप्तः ॥

( उद्योतः ) भाष्ये—अज्ग्रहणं निवृत्तमिति । 'अचश्च' इति सूत्रे षष्ठीनिर्दिष्टमित्यर्थः । तदनुवृत्तौ हि अच् उदात्तादिसंज्ञकः, स चाऽचः स्थाने इत्यर्थः स्यादिति न स्याद्धलः स्वरप्राप्तिः । तन्निवृत्तौ तु उदात्तादिशब्दानामक्षु सङ्केतादादिरुदात्तादिगुणकः स्यादित्यर्थे तत्तदन्तरतमः कश्चिदच्स्यादित्यस्ति हलः स्वरप्राप्तिरिति भावः ॥ (भाष्ये) प्रतिषेधं शास्तीति । तेन हि स्वरोद्देश्यके विधौ व्यञ्जनस्याविद्यमानत्वं ज्ञाप्यत इत्यर्थः । एतन्मूलकमेव पठ्यते 'स्वरविधौ व्यञ्जनम्–' इति । स्वरोद्देश्यके विधावित्यर्थः ॥

( परिभाषाज्ञापकोपपादकभाष्यम् )

सा तर्ह्येषा परिभाषा कर्तव्या ।

न कर्तव्या ।

आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येषा परिभाषेति, यदयं 'यतोऽनावः' ( ६।१।२१३ ) इति नावः प्रतिषेधं शास्ति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

पादश्च समाप्तः ॥

( उद्योतः ) भाष्ये—यदयं यतोऽनाव इति । अयं भावः—अत्रादिर्नकारो न स्वरयोग्यः, यश्चाकारस्तद्योग्यो नासावादिः । नन्वादिरेव नकार उदात्तगुणविशिष्टाज्वानस्तु इति चेन्न । तथा सति निमित्तत्वव्यञ्जकत्वविनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तेः । एवं च प्रतिषेधोऽनर्थकः सन् ज्ञापक इति ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

पादश्च समाप्तः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निके ३ | आह्निके ४ | आह्निके ५ | आह्निके ६ | सर्वयोगः |
| व्याख्यातसूत्राणि | १०३४ | १० | १४ | २७ | १४ | २४ | ३६ | ११५९ |
| अव्याख्यातसूत्राणि | १४०३ | २ | १३ | १७ | ४ | ३२ | ३० | १५०१ |
| समुदितसूत्राणि | २४३७ | १२ | २७ | ४४ | १८ | ५६ | ६६ | २६६० |
| वार्तिकानि | ५९४६ | ६३ | ४२ | ६५ | ८३ | ५७ | ६८ | ६३२४ |

षष्ठाध्यायस्य प्रथमपादः समाप्तः ॥



( ११६० विधिसूत्रम् ॥ ६ । २ । १ आ. १ )

## २६६१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ ६ । २ । १ ॥

( पूर्वपदप्रकृतिस्वराधिकरणम् )

( सूत्राक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ?**

( प्रदीपः ) **किमर्थमिति** । अन्तरेणैतत्सूत्रमिष्टस्यार्थस्य सिद्धिं मत्वा **प्रश्नः** ॥

( सूत्रप्रयोजने श्लोकवार्तिकम् )

**बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् ।**

( भाष्यम् ) **सुकृत्-आचार्यः समासान्तोदात्तत्वे प्राप्ते बहुव्रीहिस्वरमपवादं शास्ति ॥**

( प्रदीपः ) **समासान्तविधेरिति** । समासान्तस्योदात्तविधानात्तद्बाधनार्थमिदमित्यर्थः ॥ **सुकृदिति** । शोभनं लक्षणं कृतवान्-इति 'सुकर्मपाप-' इति क्विप् ॥

( उद्द्योतः ) ननु समासान्तानां षजादीनां विधानस्यैतत्सूत्रारम्भे हेतुत्वं नोपपद्यतेऽत आह—**समासान्तस्येति** ॥ **शोभनमिति** । अनेनास्य प्रत्याख्यानमशक्यमिति दर्शयति ॥

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् ॥**

( सूत्रप्रयोजनाभावबोधकं श्लोकवार्तिकम् )

**नञ्सुभ्यां नियमार्थं[1] तु**

( भाष्यम् ) **'नञ्सुभ्याम्'[2] ( ६।२।१७२ ) इत्येतन्नियमार्थं भविष्यति । नञ्सुभ्यामेव बहुव्रीहेरन्त उदात्तो भवति, नान्यतः[3]-इति ॥**

( प्रदीपः ) **नञ्सुभ्यामिति** । 'सिद्धे विधिरारभ्यमाणो नियमाय भवति' इति न्यायात् ॥

( आक्षेपसमर्थकभाष्यम् )

**एवमपि कुत एतत्—पूर्वपदप्रकृतिस्वरत्वं[4] भविष्यति, न पुनः परस्येति ॥**

( प्रदीपः ) **एवमपीति** । नानास्वरपदप्राप्तौ[5] समासान्तोदात्तत्वविधानान्नियमेन तद्व्यावृत्तौ द्वयोरपि पूर्वपदोत्तरपदयोः प्रकृतिस्वरप्रसङ्गः ॥

( उद्द्योतः ) **द्वयोरपीति** । पर्यायेणेत्यर्थः ॥

( नियमसंपादकं श्लोकवार्तिकम् )

**परस्य शिति शासनात् ॥ १ ॥**

( भाष्यम् ) **'शितेर्नित्याबह्वच्-'[6] ( १३८ ) इत्येतन्नियमार्थं—भविष्यति शितेरेव, नान्यत इति ॥**

( प्रदीपः ) **परस्येति** । उत्तरपदस्य नियमादसति प्रकृतिस्वरे पारिशेष्यात् पूर्वपदस्यैव प्रकृतिस्वरो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) परशब्दार्थमाह—**उत्तरपदस्येति** ॥

( आक्षेपनिरासभाष्यम् )

**यत्तावदुच्यते—नञ्सुभ्यामित्येतन्नियमार्थमिति[7] ।**

( नियमाक्षेपे श्लोकवार्तिकम् )

**क्षेपे विधिर्नञोऽसिद्धः**

( भाष्यम् ) **'उदराश्वेषुषु'[8] 'क्षेपे' ( १०७-१०८ ) इत्येतस्मिन् प्राप्ते तत एतदुच्यते ॥**

( प्रदीपः ) **क्षेपे विधिरिति** । 'अनुदरः'[9] इत्यादौ पूर्वपदान्तोदात्तत्वं 'क्षेपे' इति प्राप्तं तद्बाधनार्थं 'नञ्सुभ्याम्' इति स्यात्, न तु नियमार्थम् । विधिनियमसंभवे विधेर्बलवत्त्वात् । नञ्ग्रहणमुपलक्षणम्, सोऽपि क्षेपविषयत्वसंभवात् ॥

( उद्द्योतः ) **पूर्वपदान्तोदात्तत्वमिति** । समासान्तोदात्तत्वापवादभूतमित्यर्थः ॥ ननु[10] क्षेपे नियमार्थत्वं किं न स्यादत आह—**विधिनियमेति** । क्षेपे नञो विधिः सम्भवतीति नियमोऽसिद्ध इति वार्तिकार्थः[11] ॥ ननु सुग्रहणं नियमार्थं भविष्यतीत्यत आह—**सोऽपीति** । विपरीतलक्षणयेति भावः ॥

( आक्षेपनिरासभाष्यम् )

**यदप्युच्यते—परस्य शिति शासनादिति ।**

( नियमाक्षेपे श्लोकवार्तिकम् )

**परस्य नियमो भवेत् ।**

( भाष्यम् ) **परस्यैष नियमः स्यात्—शितेर्नित्याबह्वजेव, नान्यदिति ॥**

( प्रदीपः ) **शितेर्नित्याबह्वजेवेति** । शिति ललाटा[12]दिषूत्तरपदप्रकृतिस्वरो नियमेन निवर्त्यते, न तु चित्रगुप्रभृतिष्वित्यर्थः । तदेवं सूत्रं कर्तव्यत्वेन स्थापितम् ॥

---

१ 'नञ्सुभ्यां नियमार्थमिति' च. छ. पाठः ॥
२ नियममुपपादयति—नञ्सुभ्यामेवेति ॥
३ 'नान्यस्येति' इति च. छ. पाठः ॥
४ विपरीतनियममाक्षिपति—पूर्वपदेति ॥
५ 'नानापदस्वरप्राप्तौ' इति, 'नानास्वपदप्राप्तौ' इति च. झ. पाठः ॥
६ शितेर्नित्येति । शितेः परं नित्याबह्वच्कं प्रकृत्येत्यर्थः । शितिपादः—शित्यं स—इत्युदाहरणम् ॥
७ नञ्सुभ्यामिति । बहुव्रीहावुत्तरपदमन्तोदात्तमित्यर्थः । अव्रीहिः—सुमाष इत्युदाहरणम् ॥
८ उदरेति । एषूत्तरपदेषु बहुव्रीहौ संज्ञायां पूर्वपदमन्तोदात्तं स्यादित्यर्थः । वृकोदर—इत्युदाहरणम् ॥ क्षेप इति । उदराश्वेषुषु पूर्वमन्तोदात्तं बहुव्रीहौ निन्दायामित्यर्थः । घटोदर इत्युदाहरणम् ॥
९ 'अनुदरः सूदर इत्यादौ' इति क. च. झ. इति पाठः ॥
१० 'नन्वक्षेपे' इति ज. पाठः । 'न च क्षेपे' इति झ. पाठः ॥
११ विपरीतलक्षणयेति । सुमाष इत्यत्र क्षेपविषयत्वं विपरीतलक्षणयेति तात्पर्यम् । नञ्सुभ्यामित्यस्य क्षेपविषयत्वमेव, न तदतिरिक्तत्वम्, तेनास्य नियमत्वं संभवति ॥
१२ ललाटादिषु—नित्यबह्वच्केषु ॥

( उद्योतः ) शिति ललाटादिष्विति । आगन्तूनामन्ते निवेशेन तदुत्तरमेवैवकारौचित्यादिति भावः ॥

( सूत्राक्षेपभाष्यम् )

**यदि तर्हि पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं बाधते, 'चप्रियः-वाप्रियः' अत्रापि बाधेत ।**

( प्रदीपः ) चप्रिय इति । 'चादयोऽनुदात्ताः' इति च-वाशब्दावनुदात्तौ, तयोः प्रकृतिस्वरे सति समासान्तोदात्तत्वं न प्राप्नोति ॥

( उद्योतः ) समासान्तोदात्तत्वं न प्राप्नोतीति । पूर्वपदप्रकृतिस्वरेण बाधितत्वादिति भावः ॥

( समाधाने श्लोकवार्तिकम् )

**अन्तश्च वा प्रिये सिद्धम्**[1]

( भाष्यम् ) **अन्तोदात्तत्वं च वा प्रिये सिद्धम् ।**

( समाधानजिज्ञासाभाष्यम् )

**कुतः ?**

( समाधानसाधकं श्लोकवार्तिकम् )

**संभवात्**

( भाष्यम् ) **असति खल्वपि संभवे बाधनं भवति, अस्ति च संभवो यदुभयं स्यात् ॥**

( प्रदीपः ) अस्ति च संभव इति । उदात्तानुदात्तयोर्भिन्नविषययोर्विरोधाभावात् ॥

( समाधानाक्षेपभाष्यम् )

**सत्यपि संभवे बाधनं भवति । तद्यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे पूर्वपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं बाधिष्यते ॥**

( प्रदीपः ) सत्यपीति । सामान्यविशेषविषयत्वनिबन्धनत्वात् बाध्यबाधकभावस्य । ननु चासत्यपि समासान्तोदात्तत्वे प्रियशब्दः प्रत्ययस्वरेणान्तोदात्त एव भविष्यति, न च[2] प्रत्ययस्वरस्य बाधकः पूर्वपदप्रकृतिस्वरः । एवं तर्ह्युदाहरणदिक् भाष्यकारेण प्रदर्शिता । इदं तूदाहरणं-समपादः-इति । समशब्दः सर्वानुदात्तः, पादशब्दो वृषादित्वादाद्युदात्तः । तत्र पूर्वपदप्रकृतिस्वरेण समासान्तोदात्तत्वे बाधिते पादशब्द आद्युदात्तः श्रूयेत ॥

( उद्योतः ) असंभवाभावे किंनिबन्धनो बाध्यबाधकभावोऽत आह—सामान्यविशेषेति ॥ प्रत्ययस्वरेणेति । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययान्तत्वादिति भावः ॥ न च प्रत्ययस्वरस्येति । तत्र नाप्राप्ते पूर्वपदप्रकृतिस्वरानारम्भादिति भावः ॥ सर्वानुदात्त इति । 'स्वत्वसमसिमेत्यनुच्चानि' इति फिट्सूत्रादिति भावः । भाष्यप्रामाण्याद्वृषादित्वेन प्रियशब्दोऽप्याद्युदात्त एवेति भाष्याशयमन्ये ॥

( वार्तिकावतरणभाष्यम् )

**एवं तर्हि—**

( समाधाने श्लोकवार्तिकम् )

**प्रकृताद्विधेः ॥ २ ॥**

( भाष्यम् ) **बहुव्रीहौ प्रकृत्या पूर्वपदं प्रकृतिस्वरं भवतीति ।**

**किं च प्रकृतम् ?**

**उदात्त इति वर्तते ॥**

**एवमपि कार्यप्रियः-हार्यप्रिय इत्यत्र न प्राप्नोति ।**

**स्वरितेऽप्युदात्तोऽस्ति ।**

**अथवा स्वरितग्रहणमपि प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'तित्स्वरितम्' ( ६।१।१८५ ) इति ॥**

( प्रदीपः ) प्रकृताद्विधेरिति । उदात्तत्वस्य[3] यत्प्रकृतं विधानं तस्मात् प्रकृतिभावद्वारेणानुज्ञायमानाच्च प्रियादौ प्रकृतिस्वरो[4] न भवतीत्यर्थः ॥

स्वरितेऽपीति । नन्वच उदात्तसंज्ञा विहिता, वर्णैकदेशश्च वर्णग्रहणेन न गृह्यते । एवं तर्ह्युदात्तावयवत्वात् स्वरितोऽप्युदात्तग्रहणेन गृह्यते । गौणमुख्यन्यायश्च लक्ष्यदर्शनवशान्नाश्रीयते । अत एवास्मिन् पक्षेऽसमाश्वस्य पक्षान्तरमाह—अथ वेति ॥

( उद्योतः ) 'प्रकृताद्विधेः'इत्यत्र कथमन्वयोऽत आह—उदात्तत्वस्येति । विधिः-इति भावे किः । बहुव्रीहौ समासे पूर्वपदस्थो य उदात्तः शास्त्रान्तरेण विहितः स प्रकृत्या-स्वभावेनावतिष्ठते, विकारमनुदात्तं न प्रतिपद्यते इति सूत्रार्थ इति भावः । अनुदात्तस्तु 'अनुदात्तं पदम्-'इति परिभाषया तत्तद्विध्येकवाक्यतापन्नया भवतीति उदात्तविधिबाधपूर्वकमेव तद्बाधात्समासान्तोदात्तत्वापवादत्वमस्य बोध्यम् ॥

एवं तर्ह्युदात्तेति । उदात्तत्वानुदात्तत्वसमाहाररूपे स्वरित उदात्तस्यावयवत्वेन विद्यमानत्वादुदात्तशब्देन स्वरित उच्यते । धर्मधर्मिणोरभेदोपचारादजपि तेन गृह्यत इति भावः ॥

( पदकृत्ये श्लोकवार्तिकम् )

**बहुव्रीहावृते सिद्धम्**[5]

( भाष्यम् ) **अन्तरेणापि बहुव्रीहिग्रहणं सिद्धम् ।**

**तत्पुरुषे कस्मान्न भवति ?**

**'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' ( ६।२।२ ) इत्येतन्नियमार्थं भविष्यति ।**

---

[1] 'वाप्रिये सिद्धः' इति च. छ. ट. पाठः ॥

[2] न च प्रत्ययेति । प्रत्ययस्वरस्य पूर्वपदप्रकृतिस्वरस्य च परस्परं सामान्यविशेषविषयत्वाभावात् ॥

[3] 'उदात्तस्य' इति च. झ. पाठः ॥

[4] प्रकृति स्वरो नेति । चप्रियो वाप्रिय इत्यत्र पूर्वपदे उदात्तस्याभावेन प्रकृतिस्वरो न भवतीत्यर्थः ॥

[5] 'बहुव्रीहिसृते सिद्धम्' इति अ. पाठः ॥

द्विगौ तर्हि कस्मान्न भवति?

इगन्ते द्विगावित्येतन्नियमार्थं भविष्यति ।

द्वन्द्वे तर्हि प्राप्नोति ।

'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु' (६।२।३४) इति नियमार्थं भविष्यति ।

अव्ययीभावे तर्हि प्राप्नोति ।

'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' (६।२।३३) इत्येतन्नियमार्थं भविष्यति ॥

( प्रदीपः ) बहुव्रीहाविति । विनाऽपि बहुव्रीहिग्रहणेन बहुव्रीहौ प्रकृत्या पूर्वपदप्रकृतिस्वरः सिद्ध इत्यर्थः ॥

द्विगौ तर्हीति । यद्यपि द्विगुस्तत्पुरुषस्तथापि तत्र नियमान्तरप्रतिपादनाय प्रश्नः ॥

(उद्द्योतः) कृते योगे सप्तम्या अभावेन 'बहुव्रीहावृते' इति निर्देशोऽयुक्तोऽत आह—विनाऽपीति । बहुव्रीहाविति[1] शब्दपरमिति भावः ॥

द्विगुस्तत्पुरुष इति । अत एव तत्समावेशार्थः[2] 'द्विगुश्च' इति चकारः । एवं च तत्पुरुषनियमेनैव सिद्धमिति भावः ॥

( इष्टनियमसम्भवबोधकं भाष्यम् )

एवमपि कुत एतत्—एवं नियमो भविष्यति—एतेषामेव तत्पुरुषादिषु—इति, न पुनरेवं नियमः स्यात्—एतेषां तत्पुरुषादिष्वेव—इति ॥

( इष्टनियमे श्लोकवार्तिकम् )

इष्टतश्चावधारणम् ।

( भाष्यम् ) इष्टतश्चावधारणं भविष्यति ।

( प्रदीपः ) इष्टतश्चेति । प्रयुक्तानामन्वाख्यानान्नानिष्टार्था शास्त्रप्रवृत्तिः ॥

( इष्टनियमाक्षेपभाष्यम् )

एतेषां तर्हि बहुव्रीहेश्च पर्यायः प्राप्नोति ॥

( प्रदीपः ) एतेषामिति । तत्पुरुषादीनामित्यर्थः । असति बहुव्रीहिग्रहणे समासान्तोदात्तत्वस्य पूर्वपदप्रकृतिस्वरस्य चैकविषयत्वाद्विरोधाच्च पर्यायः प्राप्नोति चित्रगुः-तुल्यश्वेतः-पञ्चारत्निरित्यादौ । यस्मात्तत्पुरुषादिषु तुल्यार्थादीन्येव पूर्वपदप्रकृतिस्वराणि भवन्ति नान्यानि—इत्येवंरूपो नियमः कृतः, न तु प्रकृतिस्वराण्येव—इति नियमः, ततश्च पर्यायप्रसङ्गः ॥

( उद्द्योतः ) तत्पुरुषादीनामित्यर्थ इति । तुल्यार्थादितत्पुरुषादीनामित्यर्थः । एवं च तत्पुरुषादिसंबन्धिनो बहुव्रीहिसंबन्धिनश्च पूर्वपदप्रकृतिस्वरस्य समासान्तोदात्तत्वेन पर्यायापत्तिरिति भाष्यार्थ इति भावः ॥ विरोधाच्चेति । 'अनुदात्तं पदम्—' इति परिभाषणादिति भावः ॥ ननु तत्पुरुषादिषु नियमे जाग्रति कथं पर्यायोऽत आह—यस्मादिति । भूतपूर्वादिष्वपि 'विस्पष्टादीनि गुणवचनेषु' इति नियमार्थं भविष्यतीति भावः ॥

( समाधाने श्लोकवार्तिकम् )

द्विपाद्दिष्टिर्वितस्त्योश्च पर्यायो न प्रकल्पते ॥ ३ ॥

( भाष्यम् ) यदयं 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' 'दिष्टिवितस्त्योश्च' ( ६।२।१९७,३१ ) इति सिद्धे पर्याये पर्यायं शास्ति तज्ज्ञापयत्याचार्यः—पर्यायो न भवतीति ॥

( प्रदीपः ) द्विपादिति । द्वौ पादावस्य द्विपात्—इत्यादौ समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरौ पर्यायेण सिद्धाविति 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ' इत्यन्तोदात्तविकल्पो न विधेयः, विहितस्तु ज्ञापयति—बहुव्रीहिरन्तोदात्तो न भवतीति । तथा 'दिष्टिवितस्त्योश्च' इति ज्ञापकम्—येषामिह पूर्वपदप्रकृतिस्वरो नियम्यते तेषां समासान्तोदात्तत्वं पक्षे न भवति—इति बहुव्रीहिग्रहणं प्रत्याख्यातम् ॥

( उद्द्योतः ) दिष्टिवितस्त्योश्चेति । एतयोरुत्तरपदयोर्वा पूर्वपदं प्रकृतिस्वरं द्विगौ—इति तदर्थः ॥ तच्च सामान्यापेक्षं ज्ञापकमित्याह—येषामिहेति । कार्यशब्दो यतस्तित्त्वात्स्वरितः ॥

( ज्ञापनसमर्थकं श्लोकवार्तिकम् )

उदात्ते ज्ञापकं त्वेतत् ।

( भाष्यम् ) उदात्त एतज्ज्ञापकं स्यात् ॥

( प्रदीपः ) उदात्ते ज्ञापकमिति । इहोदात्तग्रहणानुवृत्त्या द्वयोरुदात्तयोः पर्यायो मा भूत्, ज्ञापकात् । कार्यप्रिय इत्यादौ तूदात्तस्वरितयोः समावेशः प्राप्नोत्येवेत्यर्थः ॥

( उद्द्योतः ) समावेशः—पर्यायः । 'स्वरितेन समाविशेत्' इत्येव वार्तिकोक्तिः । एवं च 'बहुव्रीहौ' इति कर्तव्यमेव । 'स्वरितेऽप्युदात्तोऽस्ति' इत्येकदेश्युक्तिः । 'उदात्तस्वरितयोः—' इत्यत्र स्वरितग्रहणेन उदात्तग्रहणेन गौणाग्रहणस्य बोधनादिति बोध्यम् ॥

( ज्ञापकसमर्थकं श्लोकवार्तिकम् )

स्वरितेन समाविशेत् ॥

( भाष्यम् ) स्वरितेन च समावेशः प्राप्नोति । स्वरितेऽप्युदात्तोऽस्ति ॥

( प्रदीपः ) स्वरितेऽपीति । एतत् पूर्वमेव व्याख्यातम् ॥

( संग्रहः )

बहुव्रीहिस्वरं शास्ति
समासान्तविधेः सुकृत् ।
नञ्सुभ्यां नियमार्थं तु
परस्य शिति शासनात् ॥ १ ॥

---

१ बहुव्रीहाविलीति । 'बहुव्रीहावृते सिद्धम्' इति वार्तिके बहुव्रीहिशब्दः शब्दपर इति भावः । तेनेयमधिकरणसप्तमी बोध्या ॥

२ तत्समावेशार्थः—द्विगुसंज्ञया तत्पुरुषसंज्ञासमावेशार्थ इत्यर्थः ॥

क्षेपे विधिर्नञोऽसिद्धः
परस्य नियमो भवेत् ।
अन्तश्च वा प्रिये सिद्धं
संभवात्प्रकृताद्विधेः ॥ २ ॥
बहुव्रीहावृते सिद्ध-
मिष्टतश्चावधारणम् ।
द्विपाद्दिष्टेर्वितस्तेश्च
पर्यायो न प्रकल्पते ॥ ३ ॥
उदात्ते ज्ञापकं त्वेत-
त्स्वरितेन समाविशेत् ॥

( ११६१ विधिसूत्रम् ॥ ६ । २ । १ आ. २ )

## २६६२ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ ६ । २ । २ ॥

( ६३२५ एकदेशिनः प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः ॥ * ॥

( भाष्यम् ) तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधो वक्तव्यः । परमं कारकम्-परमकारकम् । परमेण कारकेण-परमकारकेण । परमे कारके-परमकारके इति ॥

( प्रदीपः ) कर्मधारये प्रतिषेध इति । विशेषणसमासो न प्रथमान्तानामेव भवति, अपि तु द्वितीयाद्यन्तानामपीति भावः ॥

( उद्योतः ) भाष्ये—विभक्तिप्रकृतिस्वरत्वे इति । विभक्तिनिमित्तप्रकृतिस्वरत्वे इत्यर्थः ॥

द्वितीयाद्यन्तानामपीति । 'परिनिष्ठितविभक्त्या समासः' इति पक्षस्यापि सत्त्वादिति भावः ॥

( ६३२६ उपसंख्यानानर्थक्यबोधकं वार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥ * ॥

सिद्धमेतत् ।

कथम् ?

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यो द्वितीयासप्तमीतृतीयासमासस्तस्य ग्रहणम्, लक्षणोक्तश्चायम् ॥

( प्रदीपः ) लक्षणोक्त इति । विभक्तिविशेषमनुपादाय सामान्यलक्षणेनायं समासो विहित इत्यर्थः ॥

(उद्योतः) लाक्षणिकत्वमुपपादयति—विभक्तिविशेषमिति । वार्तिकस्य विभक्तिस्वरविषयकतया प्रवृत्तेर्भाष्ये द्वितीयाद्यंशस्यैवोल्लेखः, न त्वेतावताऽन्यांशे एतत्सूत्रविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरिति भ्रमः कार्यः । अत एव 'मयूरव्यंसकादयश्च' इति सूत्रे-उपमानांशे प्रतिपदोक्तपरिभाषा कैयटेनोक्ता-इति कश्चित् । परे तु-भाष्यवार्तिकस्वारस्यादन्यांशे तदप्रवृत्तिमेवेच्छन्ति ॥

( वार्तिकावतरणभाष्यम् )

अव्यये परिगणनं कर्तव्यम् ॥

( ६३२७ परिगणनोपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अव्यये नञ्कुनिपातानाम् ॥ * ॥

( भाष्यम् ) अव्यये नञ्कुनिपातानामिति वक्तव्यम् ।

नञ्-अब्राह्मणः, अवृषलः । नञ् ॥

कु-कुब्राह्मणः, कुवृषलः । कु ॥

निपात-निष्कौशाम्बिः, निर्वाराणसिः ।

क्व मा भूत् ?

स्नात्वाकालकः, पीत्वास्थिरकः ।

( प्रदीपः ) नञ्कुनिपातानामिति । निपातत्वादेव सिद्धे नञ्ग्रहणं विस्पष्टार्थम् । अकरणिरित्यादौ कृत्स्वरादिबाधनार्थम्, तेन यच्चोपपदं कृति नञ् तस्य च स्वरो बलीयान् भवति । सहनिर्दिष्टस्य च नञ्स्वरो बलीयान् भवतीति न वक्तव्यं भवति ॥

( उद्योतः ) फलान्तरमप्याह—अकरणिरित्यादाविति । पुनर्विधानस्य बाधकबाधनार्थत्वात् परमपि कृत्स्वरं बाधित्वा अयमेव

---

१ 'द्वितीयातृतीयासप्तमीसमास' इति ट. च. छ. झ. पाठः ॥

२ चायमिति । अयं-परमकारकं-परमकारकेणेत्यादिः परिनिष्ठितविभक्त्या कर्मधारयः ॥

३ ननु 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यो द्वितीयासप्तमीतृतीयासमासः' इति भाष्यतस्तत्पुरुषे तुल्यार्थ इति सूत्रे विभक्तिविषय एव लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तिः स्यादत आह—वार्तिकस्येति । वार्तिकानुरोधत एव भाष्ये द्वितीयाद्यंशस्योल्लेखः, न तु तदतिरिक्तविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरित्यभिप्रायेण ॥

४ तदप्रवृत्तिमेवेति । द्वितीयादिसमासस्तत्तच्छब्दानुवादेन विधीयत इति लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिः सुकरा । उपमानादिसमासस्तत्तच्छब्दानुवादेन न विधीयत इति न तत्र तत्परिभाषाप्रवृत्तिरित्याशयः ॥

५ 'बाधनार्थं वा, तेन' इति च. झ. पाठः ॥

६ सहनिर्दिष्टस्य चेति । अनुदात्तं पदमेकवर्जमिति सूत्रे भाष्यकृता यदुक्तं तत्र वक्तव्यं भवतीति भावः ॥

७ फलान्तरमिति । सूत्रे निपातग्रहणादेव सिद्धे नञ्ग्रहणस्य फलान्तरमित्यर्थः ॥

८ बाधकबाधनार्थत्वादिति । नञः पुनरुपादानेन परस्यापि बाधसिद्धिर्वाक्यान्तरकल्पनया भवतीति भावः ॥

स्वर इत्यर्थः ॥ सह निर्दिष्टस्य चेति । 'अव्ययी' इत्यादौ सति शिष्टमपि प्रत्ययस्वरं बाधित्वाऽयमेवेत्यर्थः ॥

( ६३२८ एकदेशिन उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ क्त्वायां वा प्रतिषेधः ॥ * ॥

( भाष्यम् ) क्त्वायां वा प्रतिषेधो वक्तव्यः । स्नात्वाकालकः, पीत्वास्थिरकः ॥

उभयं न वक्तव्यम् ॥

( प्रदीपः ) क्त्वायां वेति । परिगणनं वा कर्तव्यम्, क्त्वायां प्रतिषेधो वा वक्तव्य इत्यर्थः । ननु भिन्नफलत्वाद्विकल्पोऽनुपपन्नः, परिगणने सति सामिकृतं स्वयंधौतमित्यादिषु प्रकृतिस्वराभावः, क्त्वायां प्रतिषेधे तु प्रकृतिस्वरप्रसङ्ग इति चिन्त्यमेतत् ॥

( उद्द्योतः ) चिन्त्यमेतदिति । वस्तुतस्तु त्वान्तेतरपूर्वपदके तत्पुरुषे नञ्कुनिपातातिरिक्तपूर्वपदके च दासीभारादित्वात्पूर्वपदप्रकृतिस्वर एवेष्ट इति भाष्याशयमन्ये ॥

( ६३२९ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

॥ * ॥ निपातनात्सिद्धम् ॥ * ॥

( भाष्यम् ) निपातनादेतत्सिद्धम् ।

किं निपातनम् ?

अवश्यमत्र समासार्थं ल्यबभावार्थं च निपातनं कर्तव्यम्, तेनैव यत्नेन स्वरो न भविष्यति ॥

( प्रदीपः ) अवश्यमत्रेति । अनेकप्रयोजनसंपत्तिर्निपातनाद्भवतीत्यर्थः ॥ तेनैवेति । अन्तोदात्तानां पाठेनेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—निपातनादिति । मयूरव्यंसकादिपाठादित्यर्थः ॥ भाष्ये—ल्यबभावार्थं चेति । नञ्पूर्वके[२] न ल्यप्—इत्यर्थं इदम् ॥

( ११६२ विधिसूत्रम् ॥ ६ । २ । १ आ. ३ )

## २६७१ सदृश[३]प्रतिरूपयोः सादृश्ये ॥ ६ । २ । ११ ॥

( ६३३० सदृशपदाक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ सदृशग्रहणमनर्थकं तृतीयासमासवचनात् ॥ * ॥

( भाष्यम् ) सदृशग्रहणमनर्थकम् ।

किं कारणम् ?

तृतीयासमासवचनात् । सदृश[४]शब्देन तृतीयासमास उच्यते, तत्र तृतीयापूर्वपदं प्रकृतिस्वरं भवतीत्येव सिद्धम् ॥

( पदसमर्थकभाष्यम् )

षष्ठ्यर्थं तर्हीदं वक्तव्यम्, पितुः सदृशः—पितृसदृश इति ॥

( ६३३१ पदसमर्थनाक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् ॥ * ॥

( भाष्यम् ) षष्ठ्यर्थमिति चेत् तृतीयासमासवचनमनर्थकं स्यात् ।

किं कारणम् ?

इहास्माभिस्त्रैशब्द्यं साध्यम्—पित्रा सदृशः, पितुः सदृशः, पितृसदृश इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरेण वृत्तिर्भविष्यति अविरविकन्यायेन । तद्यथा—अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति—आविकमिति ।

एवं पितुः सदृश इति विगृह्य पितृसदृश इति भविष्यति ।

पित्रा सदृश इति विगृह्य वाक्यमेव भविष्यति ॥

( प्रदीपः ) अविरविकन्यायेनेति । 'अविरविकः' इति समुदायैकदेशानुकरणमिति सुप्त्वाभावाल्लोपाभावः । अनेनैतद्दर्शयति—अवेर्मांसमिति प्राप्तोऽपि तद्धितोऽनभिधानान्न भवति, किं पुनः पित्रा सदृश इत्यत्राविहितस्तृतीयासमासो भविष्यति ॥

( उद्द्योतः ) 'अविरविकः' इत्यत्र समासावयवसुपः कथमलुगत आह—सुप्त्वाभावादिति । सङ्ख्याकर्मादिवाच्यत्वाभावेनेति भावः ॥ अविहित इति । 'पूर्वसदृश—' इत्यत्र सदृश[५]ग्रहणाभावे इति भावः ॥

( समाधानभाष्यम् )

अवश्यं तृतीयासमासो वक्तव्यः । यत्र षष्ठ्यर्थो नास्ति तदर्थम्—भोजनसदृशः, अध्ययनसदृश इति।

यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यम्, इदं न वक्तव्यम् ।

---

१ विकल्पः—अव्यये नञ्कुनिपातानामित्येतद्वा वक्तव्यम्, क्त्वायां वा प्रतिषेध इत्ययं विकल्पः ॥

२ नञ्पूर्वक इति । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति सूत्रे वार्तिककृता 'समासनिपातनाद्वा' इत्युक्तम् । भाष्यकृता च 'अवश्यमत्र समासार्थं निपातनं कर्तव्यम्, तेनैव यत्नेन ल्यबपि न भविष्यति' इत्युक्तम् । निपातनं च स्नात्वाकालकादीनां मयूरव्यंसकादिगणे पाठः, स चान्तोदात्तत्वेन स्वरसिद्धिः । नञ्पूर्वकेऽपि ल्यबादेशो न भवतीति भाष्याशयः ॥

३ सदृशेति । सदृशप्रतिरूपयोः शब्दयोः परतः पूर्वं प्रकृत्येत्यर्थः ॥

४ सदृशशब्देनेति । सूत्रे सदृशग्रहणेन पूर्वसदृशेति समासो लक्षणप्रतिपदोक्तपरिभाषया गृह्यते, स च तृतीयासमास इति सदृशशब्देन तृतीयासमासग्रहणमिति भावः ॥

५ सदृशग्रहणाभाव इति । यदि तु भोजनेन कृतः सदृश इत्यर्थे पूर्वसूत्रेण समासे तत्पुरुषे तुल्यार्थ इत्यनेन स्वरोऽपि सिद्ध इत्युच्यते तदा सदृशग्रहणं व्यर्थमेवेति पूर्वसदृशेति सूत्रे कैयटेन ध्वनितम् । तदनुरोधेन 'इत्यत्राविहितस्तृतीयासमासः' इति प्रदीपे उक्तम् ॥

**इदमप्यवश्यं वक्तव्यम्, यत्र षष्ठी श्रूयते तदर्थम्-दास्याःसदृशः, वृषल्याःसदृश इति ॥**

( प्रदीपः ) **भोजनसदृश इति** । 'हेतौ' इति भोजनादिभ्यस्तृतीया । अत्र षष्ठ्यभावात् षष्ठीसमासाभावः ॥ **दास्याःसदृश इति** । 'षष्ठ्या आक्रोशे' इत्यलुक् । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥

( उद्द्योतः ) अत्र षष्ठ्यभावादिति । तृतीयासमानार्थषष्ठ्यभावादिति भावः । एवं च भोजनहेतुकसादृश्यवानित्यर्थे भोजनसदृश इत्यस्य साधुत्वार्थं समासविधौ सदृशग्रहणमावश्यकमिति तात्पर्यम् । 'अवश्यं तृतीयासमासो वक्तव्यः' इत्यादि 'वृषल्याः सदृशः' इत्यन्तं भाष्यमेकदेश्युक्तिरिति 'पूर्वसदृश–' इति सूत्रे कैयटेन सूचितम् ॥ उदात्तयण इति । दासीवृषल्यावन्तोदात्तौ ॥

---

( ११६३ विधिसूत्रम् ॥ ६ । २ । १ आ. ४ )

## २६८९ इगन्तकालकपालभगालशरावेषु द्विगौ ॥ ६ । २ । २९ ॥

( ६३३२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इगन्तप्रकृतिस्वरत्वे यणगुणयोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) **इगन्तप्रकृतिस्वरत्वे यणगुणयोरुपसंख्यानं कर्तव्यम् । पञ्चारत्न्यः, दशारत्न्यः । पञ्चारत्नयः, दशारत्नयः । यणगुणयोः कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोति ॥**

( प्रदीपः ) **यणगुणयोरिति** । पदस्य स्वरविधानात् सुप्युत्पन्ने नित्यत्वाद्यणगुणयोः कृतयोरिगन्तत्वाभावात् प्रकृतिस्वरो न प्राप्नोतीति वचनम् ॥ **पञ्चारत्न्य इति** । पञ्चारत्नयः प्रमाणमेषामिति तद्धितार्थे द्विगुः । 'प्रमाणे लो द्विगोर्नित्यम्'इति मात्रचो लुक् । जस्, 'जसि च' इति गुणः 'जसादिषु छन्दो वावचनम्' इति वचनाच्च भवति, तयोर्यणादेशः ॥

( उद्द्योतः ) नन्वन्तरङ्गत्वात्पूर्वमेव स्वरो भविष्यतीत्यत आह—**पदस्येति** । 'अनुदात्तं पदम्–' इत्यनेनैकवाक्यत्वादिति भावः ॥ ननु गुणेन बाधात्कथं यण् ? अत आह—**जसि चेतीति** ॥

( ६३३३ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) **न वा वक्तव्यम् ।**

**किं कारणम् ?**

**बहिरङ्गलक्षणत्वात् । बहिरङ्गौ यणगुणौ । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्तरङ्गे ॥**

( प्रदीपः ) **न वेति** । पदग्रहणस्य परिमाणार्थत्वात् प्राक् सुबुत्पत्तेः स्वरो भवन्नन्तरङ्गः संपद्यते । यणगुणौ तु सुबपेक्षत्वात् बहिरङ्गत्वात् स्वरे कर्तव्ये असिद्धावित्यर्थः ॥

---

( ११६४ विधिसूत्रम् ॥ ६ । २ । १ आ. ५ )

## २६९३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ६ । २ । ३३ ॥

( ६३३४ एकदेशिनो विप्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) **परिप्रत्युपापेभ्यः 'वनं समासे' ( ६।२।१७८ ) इत्येतद्भवति विप्रतिषेधेन ।**

**परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्वित्यस्यावकाशः-परित्रिगर्तम्, परिसौवीरम् ।**

**वनं समास इत्यस्यावकाशः-प्रवणे यष्टव्यम् ।**

**इहोभयं प्राप्नोति—परिवनम्, अपवनम् ।**

**'वनं समासे' इत्येतद्भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **परिप्रत्युपापेभ्य इति** । सर्वनिर्देशेऽप्यपपरी एव गृह्येते, तयोरेव वर्जनविषयत्वसंभवाद्वनशब्दस्य च वर्ज्यमानार्थत्वसंभवात् ॥

**प्रवण इति**—तत्पुरुषः । 'वनं समासे' इत्येतत् सूत्रं क्रमापेक्षया प्राथम्यात् बहुव्रीहितत्पुरुषपूर्वपदप्रकृतिस्वरस्यापवादं मत्वा विप्रतिषेधोपन्यासः । अनेन तु सूत्रेण पारिशेष्याद्व्ययीभावे स्वरविधिः ॥

**परिवनमिति** । वनं वर्जयित्वेत्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः ॥

(उद्द्योतः) **सर्वनिर्देशेऽपीति** । वनस्य नाहोरात्रावयवत्वम्, प्रत्युपयोश्च न वर्जनविषयत्वमित्यर्थः ॥

**तत्पुरुष इति** । प्रकृष्टं वनमिति विशेषणसमासः ॥ ननु 'वनं समासे' इत्यस्य पूर्वपदप्रकृतिस्वरापवादत्वाद्विप्रतिषेधोऽयुक्तोऽत आह—**क्रमापेक्षया प्राथम्यादिति** । अष्टाध्यायीपाठक्रमापेक्षयेत्यर्थः । 'मत्वा'इत्यनेनैवंविधन्यायस्य शास्त्रेऽनाश्रयणं सूचयति ॥ अस्य सूत्रस्याव्ययीभावविषय एवावकाशदाने बीजमाह—**अनेन**

---

१ इगन्ते द्विगाविति । इगन्ते शब्दे कालादिषु च परतो द्विगुसमासे पूर्वं प्रकृत्येत्यर्थकेन प्रकृतसूत्रेणेति भावः ॥

२ परिप्रत्युपापेति । एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि चोत्तरपदे–इत्यर्थः । परित्रिगर्तं वृष्टो देव इत्युदाहरणम् ॥ इत आरभ्य पञ्च सूत्राणि द्वन्द्वाव्ययीभावविषयाणीति शेखरे स्पष्टम् ॥

३ वनमिति । समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम्–इत्यर्थः ।

तस्येदिमे प्रवणे–इत्युदाहरणम् ॥

४ सर्वनिर्देशे–वार्तिके परिप्रत्युपापेभ्य इत्येवं सूत्रगृहीतानां सर्वेषां निर्देशः । विप्रतिषेधसंभावना तयोरुभयोः सूत्रयोरेकविषयत्व एव संभवति । सा चैकविषयताऽपपरिभ्यामेव वनस्येति भावः ॥

५ 'सूत्रक्रमापेक्षया' इति च. पाठः ॥

६ 'शास्त्रेऽनाश्रयणं' इति झ. पाठः ॥

ष्विति । बहुव्रीहितत्पुरुषयोः सिद्धत्वादित्यर्थः ॥ पञ्चम्येतीति । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी ॥

( ६३३५ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् ) न वाऽर्थो विप्रतिषेधेन ।

किं कारणम् ?

वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ।

सिद्धमत्रान्तोदात्तत्वमुत्सर्गेणैव । तस्य पुनर्वचन एतत् प्रयोजनं—येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् ।

स यथैव तदपवादमव्ययस्वरं बाधते, एवमिममपि बाधिष्यते ॥

( प्रदीपः ) स यथैवेति । बाध्यसमुदायापेक्षायां विशेषाभावात् सर्वस्य प्रकृतिस्वरस्यासौ बाधकः ॥

( उद्द्योतः ) सिद्धान्त्याशयमाह—बाध्येति ॥ भाष्ये—अव्ययस्वरम्—अव्ययत्वप्रयुक्तं[1] तत्पुरुषपूर्वपदप्रकृतिस्वरम्[2] ॥

( ११६५ विधिसूत्रम् ॥ ६ । २ । १ आ. ६ )

## २६९६ आचार्योपसर्जनश्चान्तेवासी[3] ॥ ६ । २ । ३६ ॥

( ६३३६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्संदेहः[4] ॥ * ॥**

( भाष्यम् ) आचार्योपसर्जनेऽनेकस्यापि पदस्य पूर्वपदत्वात्संदेहो भवति—आपिशलपाणिनीयव्याडीयगौतमीयाः ।

एकं पदं वर्जयित्वा सर्वाणि पूर्वपदानि, तत्र न ज्ञायते—कस्य पूर्वपदस्य स्वरेण भवितव्यमिति ॥

( प्रदीपः ) अनेकस्यापीति । द्वयोर्द्वन्द्वेऽस्य चरितार्थत्वात् बहूनां द्वन्द्वे संदेहादप्रतिपत्तिः, पर्यायो वा प्राप्नोति ॥

( उद्द्योतः ) ननु सन्देहो न दोषाय, 'न हि सन्देहादलक्षणम्'इति न्यायात्—अत आह—द्वयोरिति । सन्दिग्धविषयकलक्षणानुपप्लवेऽप्रतिपत्तिः, तदुपप्लवे तु पर्यायः ॥

( ६३३७ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ लोकविज्ञानात्सिद्धम् ॥ * ॥**

( भाष्यम् ) तद्यथा—लोकेऽमीषां ब्राह्मणानां पूर्वमानयेति यः सर्वपूर्वः स आनीयते । एवमिहापि यत्सर्वपूर्वपदं तस्य प्रकृतिस्वरत्वं भविष्यति ॥

( प्रदीपः ) लोकविज्ञानादिति । आद्यस्याव्यभिचारिपूर्वपदत्वम् । मध्यमस्य तु परापेक्षया पूर्वपदत्वम्, पूर्वापेक्षया तु न पूर्वपदत्वमिति तस्याग्रहणम् ॥ सर्वपूर्व इति । सर्वेषां पूर्व इत्यवयवावयविसंबन्धे षष्ठीं विधाय समासो विधेयः ॥

( उद्द्योतः ) तस्याग्रहणमिति । गौणमुख्यन्यायादिति भावः । एवं च न्यायबलात्पूर्वशब्दस्य समासाद्यावयवे रूढिरिति तात्पर्यम् ॥ 'सर्वपूर्वः' इत्यत्र 'न निर्धारणे' इति निषेधात् षष्ठीसमासानुपपत्तेराह—सर्वेषां पूर्व इति । सर्वेषां समुदायभावमापन्नानां यः पूर्वोऽवयव इत्यर्थः ॥

( ११६६ विधिसूत्रम् ॥ ६ । २ । १ आ. ७ )

## २६९९ महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु[5] ॥ ६ । २ । ३९ ॥

( प्रवृद्धशब्दाक्षेपसमाधानभाष्यम् )

किमर्थं महतः प्रवृद्धशब्द उत्तरपदे पूर्वपदप्रकृतिस्वरत्वमुच्यते, न 'कर्मधारयेऽनिष्ठा' ( ६।२।४६ ) इत्येव सिद्धम् ?

न सिध्यति ।

किं कारणम् ?

श्रेण्यादिसमास[6] इत्येवं तत् ।

किं पुनः कारणं श्रेण्यादिसमास इत्येवं तत्[7] ?

इह मा भूत्—महानिरष्टो दक्षिणा दीयते ॥

---

१ 'अव्ययत्वप्रयुक्तं पूर्वपद–' इति झ. पाठः ॥

२ अव्ययत्वप्रयुक्तम्–'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इत्यनेन पूर्वपदप्रकृतिस्वरम् ॥

३ आचार्योपसर्जनेति–आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृत्येत्यर्थः । पाणिनीयरौढीया इत्युदाहरणम् । सूत्रे षष्ठीबहुवचनस्थाने प्रथमैकवचने । 'द्वन्द्वे' इत्येतद्विशेषणत्वादपेक्षिते ये बहुवचने तयोः स्थाने प्रथमैकवचने इत्यर्थः । आचार्य उपसर्जनं–विशेषणं यस्य स आचार्योपसर्जनः । समानाधिकरणाभ्यामाचार्योपसर्जनान्तेवासिपदाभ्यामाचार्यप्रकारकशिष्यविशेष्यकोपस्थितिजनकानां द्वन्द्वे पूर्वपदं प्रकृत्येति फलितम् । आचार्योपसर्जनान्तेवासिग्रहणं द्वन्द्वविशेषणम्, भाष्य एतादृशानामेव द्वन्द्वस्योदाहरणत्वेन प्रदर्शनमूलकाद्वृत्त्यादिसंमतव्याख्यानात् ॥

४ संदेह इति । पूर्वपदशब्दस्य यौगिकत्वे एकं पदं विहाय सर्वेषां पूर्वपदत्वसंभवात्संदेहः । पूर्वपदशब्दस्य समासप्रथमावयवे रूढिमाश्रित्य समाधानम् ॥

५ महान्व्रीह्यपराह्णगृष्टीष्विति । महच्छब्दः प्रकृत्या व्रीह्यादिषु दशस्वित्यर्थः । अत्रापि 'द्वन्द्वे' इत्यस्य संबन्धान्महाव्रीहिरित्यादिर्द्वन्द्व एवेति केचित् । तन्न । यदि 'द्वन्द्वे' इत्यस्य प्रकृतसूत्रे संबन्धः स्यात्तदा 'न 'कर्मधारयेऽनिष्ठा' इत्येव सिद्धम्' इति भाष्यविरोधः स्पष्ट एव ॥

६ श्रेण्यादिसमासे–श्रेण्यादयः कृतादिभिः ( २।१।५९ ) इत्यनेन विहितसमास इत्यर्थः ॥

७ 'किं पुनः कारणं श्रेण्यादिसमास इत्येवं तत्' इति च, छ. पुस्तकयोर्न पठ्यते । अ. क. ट. पुस्तकेष्वस्य पाठोऽस्त्येव ॥

( प्रदीपः ) **श्रेण्यादिसमास इति।** लक्षणप्रतिपदोक्त-परिभाषया क्रान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहण-मित्यर्थः ॥

**(उद्योतः)** भाष्ये—**किमर्थमिति।** प्रतिपदोक्तत्वात् 'सन्म-हत्–'इति समास एवास्य प्रवृत्तिः, न तु षष्ठीसमास इति भावः ॥ **कर्मधारये इति ।** कर्मधारयसमासे क्रान्ते उत्तरपदेऽनिष्टान्तं पूर्वपदं प्रकृत्येत्यर्थः।

श्रेण्यादिसमास एव तत्प्रवृत्तौ बीजमाह—**लक्षणप्रतिपदेति।** अत्र तु 'सन्महत्–'इति समास इति भावः ॥

( ११६७ विधिसूत्रम् ॥ ६ । २ । १ आ. ८ )

## २७०२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ६।२।४२॥

( ६३३८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कुरुवृज्योर्गार्हपते ॥ * ॥**

( भाष्यम् ) **कुरुवृज्योर्गार्हपते इति वक्तव्यम्। कुरुगार्हपतम्, वृजिगार्हपतम् ॥**

( उपसंख्यानभाष्यम् )

**कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलोदासीभारादीनामिति वक्तव्यम् । इहापि यथा स्यात्-देवहूतिः, देवनीतिः, वसुनीतिः, ओषधिश्चन्द्रमाः ॥**

( प्रदीपः ) **दासीभारादीनामिति वक्तव्यमिति।** दासीभाराणामिति बहुवचनं द्वन्द्वसमासार्थाश्रयं मत्वा वचनम्[1], विभक्त्यलोपस्तु सौत्रत्वान्निर्देशस्य स्यात् ॥

( **उद्योतः** ) ननु बहुवचननिर्देशेन 'अर्धर्चाः' इतिवदाद्यर्थावगतौ[2] किं वचनेनेत्यत आह—**द्वन्द्वसमासेति** ॥ ननु द्वन्द्वे 'तैतिलकद्रूः' 'पण्यकम्बलः' इति विभक्तिश्रवणं न स्यादत आह—**विभक्त्यलोप इति** ॥

( योगविभागेनोपसंख्यानार्थसाधकभाष्यम् )

**तर्हि वक्तव्यम् ।**

**न वक्तव्यम् ।**

**योगविभागः करिष्यते—'कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलः' इति ।**

**ततः—दासीभाराणां च-इति । तत्र बहुवचननिर्देशात् 'दासीभारादीनां च–' इति विज्ञास्यते ॥**

( प्रदीपः ) **योगविभाग इति।** नायं द्वन्द्वः[3], किं तर्हि ? असमस्तान्येव पदानि निर्दिष्टानि । तथा च 'तैतिलकद्रूः' 'पण्यकम्बलः' इति विभक्तिरुचारिता । तत्र दासीभारशब्दसहचरितेषु तद्रूपारोपेण बहुवचननिर्देशः । एवं च गणपाठः संगृहीतो भवति ॥

( उद्योतः ) ननु द्वन्द्वे सति कथं विभागोऽत आह—**नायं द्वन्द्व इति ।** आद्यौ[4] लुकाऽविभक्तिकौ निर्दिष्टौ, इतरे प्रथमैकवचनान्ताः, प्रथमा च षष्ठ्याः स्थाने इति भावः ॥ कथं बहुवचनादाद्यर्थावगतिस्तत्राह—**तत्रेति** ॥ **एवं चेति।** अन्यथा सोऽनर्थकः[5] स्यादिति भावः । अत्र भाष्ये योगविभागेन सर्वेषां भिन्नपदत्वं सूचितम् ॥

( ६३३९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ पण्यकम्बलः संज्ञायाम् ॥ * ॥**

( भाष्यम् ) **पण्यकम्बलः संज्ञायामिति वक्तव्यम्। यो हि पणितव्यः कम्बलः, पण्यकम्बल एवासौ स्यात् ॥**

**अपर आह—पण्यकम्बल एव यथा स्यात् ।**

**क्व[6] मा भूत् ?**

**पण्यगवः, पण्यहस्ती ॥**

( प्रदीपः ) **पण्यकम्बलः संज्ञायामिति ।** कृत्यप्रत्ययान्तत्वात् पूर्वपदप्रकृतिस्वरे सिद्धे[7] नियमार्थं वचनम्-संज्ञायामेव[8] पण्यकम्बलः प्रकृतिस्वरपूर्वपदो भवति, नान्यत्रेति । तत्र नियतप्रमाणो नियतमूल्यो व्यावहारिको यः कम्बलस्तस्य पण्यकम्बल इति संज्ञेत्याहुः ॥

**अपर आहेति ।** कम्बल[9] एवोत्तरपदे पण्यशब्दः प्रकृतिस्वरो यथा स्यात्, अन्यत्र मा भूदिति नियमः ॥

---

१ वचनमिति । दासीभारादिशब्दग्रहणार्थं दासीभारादीनामिति वक्तव्यमिति वचनमित्यर्थः ॥

२ इतिवदिति । अर्धर्चाः पुंसि चेति सूत्रे बहुवचननिर्देशेनार्धर्चादिर्गणो गृह्यते तद्वदत्रापि दासीभाराणामिति बहुवचननिर्देशाद्दासीभारादिर्गणो गृह्येतेत्यर्थः ॥

३ नायं द्वन्द्व इति । कुरुगार्हेत्यारभ्य पण्यकम्बल इत्यन्तो द्वन्द्वो न, किन्तु पृथक्पदानीमानीत्यर्थः । पृथक्पदानीमानीत्यर्थे सूत्रकृत्सम्मतिमाह—तथा चेति ॥

४ आद्यौ—कुरुगार्हपत-रिक्तगुरु-इत्येतौ । अत्र प्रथमाया अनुपपन्नत्वादाह—प्रथमा च षष्ठ्या इति ॥

५ सोऽनर्थकः—गणपाठे दासीभारादिगणपाठोऽनर्थक इत्यर्थः ॥

६ 'क्व मा भूत्' इत्यस्य स्थाने 'इह मा भूत्' इति च. पुस्तके एव पाठः ॥

७ स्वरे सिद्धे इति । तत्पुरुषे तुल्यार्थतृतीयेति सूत्रेणेति भावः ॥

८ नियमस्वरूपं वार्तिककृन्मतेनाह—संज्ञायामेवेति । तेन यो हि पणितव्यः कम्बलस्तत्र समासस्येत्यन्तोदात्तत्वं भवति ॥

९ नियमस्वरूपं भाष्यकृन्मतेनाह—कम्बल एवेति । तेन संज्ञायां कुरुगार्हेत्यनेन पूर्वपदप्रकृतिस्वरत्वम् । पणितव्ये कम्बले च तत्पुरुषे तुल्यार्थेति भावः ॥

**पण्यगव इति** । पण्यो गौरिति विशेषणसमासः । 'गोरतद्धितलुकि' इति टच् समासान्तः । अत्र तु चित्त्वादेवान्तोदात्तत्वं सिद्धमिति द्वितीयमुदाहरणमुक्तम् ॥ **पण्यहस्तीति** । 'कृत्यतुल्याख्या अजात्या' इत्येतत्तु गुणक्रियावाचिनोर्विशेषणविशेष्यभावस्यानियमात् पूर्वनिपातानियमप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थं वचनं न तु जातिप्रतिषेधार्थम् । 'अजात्या' इति तु वचनं न्यायसिद्धार्थानुवाद एवेति भाष्यकारमतानुसारिण आहुः । 'तत्पुरुषे तुल्यार्थ–' इत्यत्र प्रतिपदोक्तपरिभाषा कृत्येषु यदा नाश्रीयते तदा नियमार्थत्वमुच्यते । तदाश्रयणे तु विध्यर्थत्वानियमानुपपत्तिः । नापि पण्यगव इत्यादौ प्रकृतिस्वरप्रसङ्गः ॥

**( उद्योतः ) कृत्यप्रत्ययान्तत्वादिति** । न च 'लक्षणप्रतिपदोक्त–'परिभाषया 'कृत्यतुल्याख्या–' इति समासे एव पूर्वपदप्रकृतिस्वरः । न चात्र तेन समासः, कम्बलस्य जातित्वात्–इति वाच्यम् । भाष्यादिप्रामाण्येनैतदंशे तत्परिभाषाया अप्रवृत्तेः । किञ्च स्वरविधायके 'कृत्यतुल्याख्या' इत्येव वक्तव्ये कृत्यतुल्याख्ययोर्वियोगपाठेनार्थपदघटितपाठेन च तदंशे परिभाषाया अप्रवृत्तिरित्याशयात् ॥

**अत्र त्विति** । नियमसाध्यान्तोदात्तत्वस्य चित्स्वरेणैव सिद्धिरित्यर्थः । 'पण्यगवयः' इति पाठ इत्यन्ये ॥ ननु 'अजात्या' इति निषेधात्कथमत्र विशेषणसमासोऽत आह—**कृत्येत्यादिः** । यत्र सामान्यलक्षणेन समासे पूर्वनिपातानियमप्राप्तिस्तत्र तन्नियमार्थमिदम्, स च गुणक्रियावाचिभ्यां समास एवेति अन्यत्रास्याप्रसक्तिरिति कृत्यांशे न्यायसिद्धार्थकथनं 'अजात्या' इतीत्यर्थः । यदि तु क्वचित् 'भोज्य ओदनः' इत्यादौ समासो नेष्यते तर्हि स एव बाहुलकात्साध्य इति तेषामाशयः ॥ **यदा नाश्रीयते इति** । अनाश्रयणमेवोचितमिति प्रागुक्तम् ॥

( ११६८ विधिसूत्रम् ॥ ६ । २ । १ आ. ९ )

## २७०७ अहीने द्वितीया ॥ ६।२।४७ ॥

( पदकृत्यभाष्यम् )

**अहीन इति किमर्थम्?**

कान्तारातीतः, योजनातीतः ॥

( प्रदीपः ) थाथादिस्वरापवादो योगः ॥ **अहीन इति किमर्थमिति** । प्रत्याख्यानाय **प्रश्नः** ॥

**कान्तारातीत इति** । कान्तारं त्यक्तवानित्यर्थे 'द्वितीयाश्रिता–' इति समासः । हीनवाच्यत्र द्वितीयान्तमिति थाथादिस्वरो भवति ॥

( उद्योतः ) 'तत्पुरुषे तुल्यार्थ–' इत्यनेन सिद्धे सूत्रं व्यर्थमत आह—**थाथादीति** ॥ **हीनवाचीति** । विभागवद्वाचीत्यर्थः ॥

( ६३४० उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अहीने द्वितीयाऽनुपसर्गे ॥ * ॥

**( भाष्यम् ) अहीने द्वितीयाऽनुपसर्गे इति वक्तव्यम् ।**

**इह मा भूत्—सुखं प्राप्तः-सुखप्राप्तः । दुःखं प्राप्तः-दुःखप्राप्त इति ॥**

( प्रदीपः ) **सुखप्राप्त इति** । अत्रापि थाथादिस्वरः । अनुपसर्गग्रहणे चेह क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पठितव्यः, आरूढशब्दस्य सोपसर्गत्वादेतत्स्वराभावे थाथादिस्वरेणान्तोदात्तत्वस्य सिद्धत्वात् ॥

( अहीनपदाभावे उपसंख्यानबोधकभाष्यम् )

**तत्तर्हि वक्तव्यम् । यद्यप्येतदुच्यते, अथ वै तर्हि हीनग्रहणं न करिष्यते । इहापि-कान्तारातीतः, योजनातीत इति–'अनुपसर्गे' इत्येव सिद्धम् ॥**

( ११६९ विधिसूत्रम् ॥ ६ । २ । १ आ. १० )

## २७०९ गतिरनन्तरः ॥ ६ । २ । ४९ ॥

( पदकृत्यभाष्यम् ).

**अनन्तर इति किमर्थम्?**

**इह मा भूत्—अभ्युद्धृतम्, उपसमाहृतम् ॥**

**(प्रदीपः) अनन्तर इति किमर्थमिति** । किं व्यवहितगतिनिवृत्त्यर्थम्, अथानन्तरस्यैवापूर्वपदस्यापि गतेस्थाथादि-

---

१ विध्यर्थत्वादिति । यदा तत्पुरुषे तुल्यार्थेति सूत्रे लक्षणप्रतिपदोक्तपरिभाषाऽऽश्रीयते तदा कृत्यतुल्याख्या अजात्येति विहितसमासे एव तत्पुरुषे तुल्यार्थेति सूत्रं प्रवर्तेत, कुरुगार्हेति तु तदतिरिक्तसमास इति विध्यर्थत्वमुपपद्यते ॥

२ पण्यगव इत्यादाविति । अत्र तत्पुरुषे तुल्यार्थेति सूत्रं प्रतिपदोक्तसमासाभावान्न प्रवर्तते, कुरुगार्हेत्यस्य तु प्राप्तिरेव नास्तीति न प्रकृतिस्वरप्रसङ्ग इति भावः ॥

३ वियोगपाठेनेति । तत्पुरुषे तुल्यार्थेति सूत्रे कृत्यतुल्यशब्दयोः पृथक् व्यवहितपाठेन, तुल्याख्यशब्दस्थाने च तुल्यार्थशब्दग्रहणेनेति भावः ॥

४ ननु 'अजात्या' इत्येतन्न जातिनिषेधार्थं किन्तु न्यायसिद्धार्थानुवाद एवेति कैयटमतस्वीकारे भोज्य ओदन इत्यादावपि समासः स्यादत आह—यदि तु क्वचिदिति । भोज्य ओदन इत्यादावतिप्रसङ्गादजात्येत्येतज्जातिनिषेधार्थमेवेत्याश्रीयमाणे पणगव इत्यादौ बाहुलकात्समास इति भावः ॥

५ अहीने द्वितीयेति । अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्येत्यर्थः । न हीनं–त्यक्तं–अहीनम् पूर्वपदद्वारेण समासस्याहीनवाचित्वम् । कान्तारातीत इत्यत्र कान्तारं त्यक्तमिति समासस्य हीनवाचित्वमिति न पूर्वपदप्रकृतिस्वर इति कौमुदीकाराणामर्थः । उद्द्योतकारास्तु अहीनवाचिन्युत्तरपदे परे द्वितीयान्तं प्रकृत्येत्यर्थः । अहीनवाचिनीत्यस्याविभागवाचिनीत्यर्थः । अविभागवाचीत्यत्र विभागवाचिशब्दप्रकृतिकसुबन्तेन नञः समासः, न तु विभागशब्देन सह समासः । विभागवाचकत्वं च यथा कथञ्चित्, न तु प्राधान्येनैवेत्याग्रहः । कष्टश्रित इति समासघटकश्रितशब्दार्थे कथमपि विभागस्य न घटकता, कान्तारातीत इत्यत्र तु अतीतशब्दस्य विभागानुकूलव्यापाराश्रयवाचकतया विशेषणतया विभागस्यास्त्येव वाचकत्वमित्याहुः ॥

६ सिद्धे सूत्रमिति । एवं च तत्पुरुषे तुल्यार्थेति सूत्रस्य थाथादिस्वरोऽपवादः । तस्य चायमपवाद इति बाधकबाधनार्थोऽयं योग इति भावः ॥

७ किं व्यवहितेति । अभ्युद्धृतमित्यत्र 'उत्'शब्दस्य पूर्वपदत्वाभावेन प्रकृतिस्वरस्याप्राप्तेरनन्तरग्रहणसामर्थ्यादपूर्वपदस्याप्युच्छब्दस्य प्राप्तिरिति प्रथमनियमस्यार्थः ॥

८ अथानन्तरस्यैवेति । अनन्तरग्रहणसामर्थ्यादपूर्वपदस्यापि गतेस्थाथादिस्वरबाधनार्थमनन्तरस्यैव प्रकृतिस्वरविधानार्थमिति द्वितीयनियमस्यार्थः ॥

स्वरबाधनार्थं प्रकृतिस्वरविधानार्थम्, अथ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषाज्ञापनार्थम्–इत्यनेकार्थसंभवात् प्रश्नः ॥

अभ्युद्धृतमिति । कृद्ग्रहणपरिभाषया क्तान्त उद्धृतशब्दे परतोऽभिशब्दस्य प्रकृतिस्वरो मा भूदित्येवमर्थमनन्तरग्रहणम् । ननु च क्रियमाणेऽप्यनन्तरग्रहणे प्राप्नोत्येव, उद्धृतशब्दस्य क्तान्तस्यानन्तर एव हि गतिर्भवतीति । अनन्तरग्रहणसामर्थ्याद्धातोरनन्तरो गतिराश्रीयत इत्यदोषः ॥

(उद्योतः) अपूर्वपदस्यापीति । 'अभ्युद्धृतम्' इत्यादौ उद्धृतशब्देनाऽभेः समासे तं प्रत्युदादेः पूर्वपदत्वाभावाद्विध्यर्थमिति भावः । तदाह—प्रकृतिस्वरविधानार्थमिति ॥ सिद्धान्तपक्षमाह—अथ कृदिति ॥ आनन्तर्यं च अनन्तरग्रहणसामर्थ्याद्गत्याक्षिप्तधातुनिरूपितं बोध्यम् । तदाह—धातोरनन्तर इति ॥

( ६३४१ अनन्तरग्रहणाक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ गतेरनन्तरग्रहणमनर्थकं गतिर्गताविति वचनात् ॥ * ॥

( भाष्यम् ) गतेरनन्तरग्रहणमनर्थकम् ।

किं कारणम्?

'गतिर्गतौ'[2] इति वचनात् । गतौ परतो गतेरनुदात्तत्वमुच्यते, तद्बाधकं भविष्यति ॥

( प्रदीपः ) तद्बाधकमिति । परत्वादिति भावः । तस्माद्व्यवहितगतिनिवृत्त्यर्थमनन्तरग्रहणं न कर्तव्यम् ॥

( उद्योतः ) परत्वादितीति । अस्यावकाशः–प्रकृतः–इति । 'गतिर्गतौ' इत्यस्यासमासेऽभ्युद्धरतीत्यवकाशः । समासेऽभ्युद्धृतमित्यत्र परत्वान्निघात इति भावः ॥ तस्माद्व्यवहितेति । धातोर्व्यवहितेत्यर्थः ॥

( ६३४२ अनन्तरपदसत्त्वेऽपि दोषवार्तिकम् ॥ २ ॥ )

॥ * ॥ तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वप्रसङ्गः ॥ * ॥

( भाष्यम् ) तत्र यस्य गतेरप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वं प्राप्नोति—'अन्तः' 'थाथघञ्क्ताजबित्रकाणाम्' ( ६।२।१४३;१४४ ) इति ॥

(प्रदीपः) तत्र यस्येति । 'गतिर्गतौ' इति निघाते कृते अभेः प्रकृतिस्वरो नास्ति, तस्मात्तु परस्योद्धृतशब्दस्य सति शिष्टत्वात् थाथादिस्वरेणान्तोदात्तत्वं प्राप्नोति, तत्कथम्? उच्यते—उद्धृतशब्दे तावत्समासस्वराव्ययस्वरकृत्स्वरथाथादिस्वरेषु प्राप्तेषु गतिस्वरः, ततोऽभेः समासे कृते कक्ष्यान्तरप्राप्तस्याथादिस्वरः प्राप्नोति, कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य क्तान्तत्वात् । तथा हि—समासे कृते समासान्तोदात्तत्वं प्राप्नोति । ततस्तदपवादः कृत्स्वरेणोद उदात्तत्वं प्राप्नोति । ततस्तदपवादथाथादिस्वरप्रसङ्गः ॥

( उद्योतः ) तत्कथमिति । सति शिष्टत्वं कथमिति प्रश्नः ॥ कृद्ग्रहणपरिभाषयेति । यद्यप्यग्रे इयं ज्ञापनीयेति नाद्याप्येषा सिद्धा, तथापि व्याकरणान्तरप्रसिद्धा, 'पुंयोगात्–' इति सूत्रभाष्योक्तलक्ष्यानुरोधेन च इयमपि लक्ष्यसंस्कारिकेति भावः । अग्रे तु सूत्रकृताऽपि बोधिताश्रयणा–इत्येतावद्बोध्यत इति बोध्यम् ॥ कक्षान्तरप्राप्तत्वमुपपादयति—तथाहीति ॥

( ६३४३ अनन्तरपदसत्त्वे दोषापोहवार्तिकम् ॥ ३ ॥ )

॥ * ॥ प्रकृतिस्वरवचनाद्ध्यन्तोदात्तत्वम् ॥ * ॥

( भाष्यम् ) प्रकृतिस्वरवचनसामर्थ्यादन्तोदात्तत्वं न भविष्यति ।

यदि हि स्यात्, प्रकृतिस्वरवचनमिदानीं किमर्थं स्यात्?

( प्रदीपः ) प्रकृतिस्वरवचनादिति । नाप्राप्ते थाथादिस्वरे गतिस्वर आरभ्यमाणस्तद्बाधकः ॥

(उद्योतः) उक्तमर्थमजानतः 'प्रकृतिस्वरवचनात्' इति वचनमित्याह—नाप्राप्ते इति ॥

( ६३४४ प्रकृतिस्वरफलबोधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ प्रकृतिस्वरवचनं किमर्थमिति चेत् एकगत्यर्थम् ॥ * ॥

( भाष्यम् ) प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् । य एको गतिस्तदर्थमेतत् स्यात् । प्रकृतम्, प्रहृतम् ॥

( प्रदीपः ) य एको गतिरिति । एकस्मिन्नेव गतावस्य बाधकत्वम् । अभ्युद्धृतादौ तु कक्ष्यान्तरप्राप्तत्वात्थाथादिस्वर एव सतिशिष्टत्वात् बलवत्त्वात् प्राप्नोति ॥

( अनन्तरग्रहणप्रयोजनभाष्यम् )

एवमर्थमेव तर्ह्यनन्तरग्रहणं कर्तव्यम्, अत्र यथा स्यात् ।

क्रियमाणेऽपि वै अनन्तरग्रहणेऽत्र न सिध्यति ।

किं कारणम्?

गतिरनन्तरं पूर्वपदं[4] प्रकृतिस्वरं भवतीत्युच्यते । यश्चात्र गतिरनन्तरः, नासौ पूर्वपदम् । यच्च पूर्वपदम्, नासावनन्तरः ॥

---

१ प्रदीपप्रदर्शितप्रथमनियमासम्भवमाह वार्तिककारः—गतेरनन्तरेति ॥
२ 'गतिर्गतावनुदात्तवचनात्' इति च. छ. झ. पाठः ॥
३ 'सामर्थ्याद्ध्यन्तोदात्तत्वं' इति च. छ. झ. पाठः ॥
४ 'गतिरनन्तरः पूर्वपदं' च. छ. झ. पाठः ॥

**अपूर्वपदार्थे तर्हीदं वक्तव्यम् । अपूर्वपदस्यापि गतेः प्रकृतिस्वरत्वं यथा स्यात् ॥**

**( प्रदीपः ) एवमर्थमेवेति ।** कक्ष्यान्तरप्राप्तस्यापि थाथादिस्वरस्य बाधनार्थमनन्तरग्रहणमित्यर्थः । यत्र ह्येक एव गतिस्तत्रानन्तरग्रहणेन[1] न प्रयोजनमित्यनेकगतिसंनिधावप्राप्तस्य गतिस्वरस्यानन्तरग्रहणेन पुनः श्रुत्या प्राप्तिः क्रियते ॥

**क्रियमाणेऽपीति ।** 'कुगतिप्रादयः' इत्यत्र 'सुपा' इति निवृत्तं, सुबित्यनुवर्तत एव निष्कृतादिषु पदकार्यप्रसिद्ध्यर्थम् । तत्र युगपत् सुबन्तसमुदायस्य सुबन्तत्वाभावात् समासस्याऽप्रसङ्गात् क्रमेणासौ[2] विधेयः, ततोऽभिशब्दस्योद्धृतशब्देन समासे सति अभिशब्द एव पूर्वं पदं नोच्छब्द इति पूर्वपदस्य गतेः प्रकृतिस्वरो विधीयमानः सत्यप्यन्तरग्रहणेऽपूर्वपदत्वादुदो न प्राप्नोतीत्यर्थः ॥

**अपूर्वपदार्थे तर्हीति ।** श्रुत्या प्रकरणं दुर्बलं बाध्यते । तत्र योगविभागः क्रियते—**गतिः**, पूर्वपदं प्रकृतिस्वरो भवति । ततः—**अनन्तरः**, गतिरपूर्वपदमपि प्रकृत्येति ॥

**( उद्द्योतः ) थाथादिस्वरस्य बाधनार्थमिति ।** पुनर्विधानद्वारेति भावः ॥ **पुनःश्रुत्येति ।** वाक्यभेदेन पुनर्विधानात् 'अभ्युद्धृतम्' इत्यत्र कक्षान्तरप्राप्तः सतिशिष्टोऽपि थाथादिस्वरो बाध्यत इत्यर्थः ॥

नन्वभ्युदोर्युगपदेव क्तान्तेन समासेऽविशेषाद्द्वयोरपि पूर्वपदत्वमस्त्येवेति शङ्कायां वास्तवमेव समाधानमाह—**कुगतीति** ॥ **सुबन्तसमुदायस्येति ।** गतिसमुदायस्य गतिग्रहणेनाग्रहणादित्यपि बोध्यम् । एवं च 'सुबित्यनुवर्तते' इत्यादेरुपयोगश्चिन्त्यः, तदननुवृत्तेरेव तत्रत्यभाष्यालाभाच्च ॥

नतु पूर्वपदाधिकारे सति कथमपूर्वपदार्थत्वम् ? अत आह—**श्रुत्येति** ॥ ननु कथमपूर्वपदार्थत्वम्, प्रकृतमित्यादौ चारितार्थ्यादत आह—**तत्र योगेति** ॥

**(६३४५ अनन्तरपदस्यापूर्वपदार्थत्वे आक्षेपवार्तिकम् ॥५॥)**

## ॥ * ॥ अपूर्वपदार्थमिति चेत् कारकेऽतिप्रसङ्गः ॥ * ॥

**( भाष्यम् ) अपूर्वपदार्थमिति चेत्कारकेऽतिप्रसङ्गो भवति । आगतः, दूरादागतः । स यथैव गतिपूर्वपदस्य भवति, एवं कारकपूर्वपदस्यापि प्राप्नोति ॥**

**( प्रदीपः ) इदानीमतिप्रसङ्गमाह—अपूर्वपदार्थमिति चेदिति ॥ दूरादागत इति ।** अत्र कर्मणि क्तो विधेयः । 'तृतीया कर्मणि' इत्यत इह कर्मग्रहणानुवर्तनात्कर्मवाचिनः क्तस्य ग्रहणम् । अत्र[3] थाथादिस्वर इष्यते । गतिस्वरोऽनन्तरग्रहणात्प्राप्नोति ॥

**( उद्द्योतः )** कर्तरि क्ते एतदप्राप्तिं दर्शयति—**तृतीयेति** । उदाहरणे 'स्तोकान्तिक–' इति समासः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् । गतिस्वरः—आङ्स्वरः ॥

**( ६३४६ समाधानवार्तिकम् ॥ ६ ॥ )**

## ॥*॥ सिद्धं तु गतेरन्तोदात्तप्रसङ्गात् ॥*॥

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम् ?**

**यत्तत् 'अन्तः' 'थाथघञ्क्ताजवित्रकाणाम्' इत्येतद्गतेर्न[4] प्रसङ्क्ष्यम् ।**

**किं कृतं भवति ?**

**कृत्स्वरापवादोऽयं भवति ।**

**तत्र गतिरन्तर इत्यस्यावकाशः—प्रकृतम्, प्रहृतम् ।**

**'अन्तः' 'थाथघञ्क्ताजवित्रकाणाम्' इत्यस्यावकाशः-दूराद्गतः, दूरायातः ।**

**इहोभयं प्राप्नोति—आगतः, दूरादागतः ।**

**'अन्तः' 'थाथघञ्क्ताजवित्रकाणाम्' इत्येतद्भवति विप्रतिषेधेन ॥**

**( प्रदीपः ) सिद्धं त्विति ।** थाथादिसूत्रे कारकोपपदग्रहणमेवानुवर्तते न गतिग्रहणम्, अस्वरितत्वात् । ततश्च गतिस्वरः कृत्स्वरस्यापवादो न थाथादिस्वरस्य, तत्र दूरादागते कृत्स्वरापवादयोर्गतिस्वरथाथादिस्वरयोः प्रसङ्गे परत्वात् थाथादिस्वर एव प्रवर्तते । अन्तरग्रहणं त्वपूर्वपदार्थमभ्युद्धृतादावेव स्वरं संपादयति ॥

**प्रकृतमिति ।** अवकाशप्रदर्शनमात्रमेवानेन कृतम्, अनन्तर इत्यस्य त्वभ्युद्धृतादिरवकाशः प्रदर्शयितव्यः ॥

**( उद्द्योतः ) न थाथादिस्वरस्येति ।** एवञ्च थाथादिस्वरेण न गतिस्वरः स्पर्धत इति भावः । तदाह—**तत्रेति** ॥ नन्वनन्तरग्रहणसामर्थ्यादभ्युद्धृते कृत्स्वरबाधवदेव थाथादिस्वरस्यापि बाधः स्यादत आह—**अनन्तरग्रहणं त्विति** । अयं भावः—अनन्तरशब्दोऽनन्तरमपेक्ष्य प्रवर्तते । तत्रानन्तरो गतिरित्युक्तेऽनन्तरोऽपि गतिरेव प्रतीयते, सन्निधानात् । ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधाने एवापूर्वपदभूतस्यानन्तरस्य प्रकृतिस्वरत्वं प्रापयति—इति ॥ तदाह—**अभ्युद्धृतादावेवेति** । न तु दूरादागतादावित्यर्थः ॥ **अवकाशप्रदर्शनमात्रमिति** । गतिस्वरस्यैवमादिरवकाश इत्येव विवक्षितोऽर्थः, विशेषस्तु विमर्शदशायां प्रतिपत्तुं शक्यत इत्याह—**अभ्युद्धृतादिरिति** ॥

**( थाथादिसूत्रे गतिग्रहणाननुवर्तने दोषभाष्यम् )**

**अवश्यं गतेस्तत् प्रसङ्क्ष्यम्, भेदः-प्रभेद इत्येवमर्थम् ॥**

---

[1] 'अनन्तरग्रहणस्य न प्रयोजनं' इति च. झ. पाठः ॥
[2] 'युगपत्समुदायस्य समासे' इति च. झ. पाठः ॥
[3] अत्र-दूरादागत इत्यत्र ॥
[4] तत्-थाथघञ्क्ताजवित्रकाणामित्येतत् ॥

( प्रदीपः ) अवश्यं गतेरिति । थाथादिसूत्रेऽवश्यानुवर्त्यं गतिग्रहणम्, अन्यथा प्रभेद इत्यत्र कृत्स्वरेण घञो ञित्वाद्धातोरुदात्तत्वं स्यात्, अन्तोदात्तत्वं चेष्यते ॥

( उद्योतः ) अन्तोदात्तत्वं चेष्यत इति । 'थाथादिस्वरेण' इति शेषः ॥

( दोषापोहभाष्यम् )

**एवं तर्हि योगविभागः करिष्यते—अन्तः, थाथघञ्क्ताजबित्रकाणाम् । ततः-क्तः, क्तान्तमुत्तरपदमन्तोदात्तं भवति । अत्र कारकोपपदग्रहणमनुवर्तते, गतिग्रहणं निवृत्तम् ॥**

**अथ वोपरिष्टाद्योगविभागः करिष्यते। इदमस्ति-'सूपमानात् क्तः' 'संज्ञायामनाचितादीनाम्' 'प्रवृद्धादीनां च' ( ६।२।१४५,१४६,१४७ ) इति ।**

**ततो वक्ष्यामि—कारकात् । कारकाच्च क्तान्तमुत्तरपदमन्तोदात्तं भवति-इति ।**

**ततः—दत्तश्रुतयोरेवाशिषि, कारकादिति ॥**

( प्रदीपः ) एवं तर्हीति । थाथादिसूत्रात् क्तग्रहणमपनीय पृथक् कर्तव्यम् ॥ गतिग्रहणं निवृत्तमिति । ननु 'विशुष्कः' इत्यादौ कृत्स्वरेणोत्तरपदाद्युदात्तत्वं प्राप्नोति, 'शुष्कधृष्टौ' इत्याद्युदात्तत्वविधानात्; अन्तोदात्तत्वं चेष्यते—इत्याशङ्क्य योगविभागान्तरमाह-कारकादिति । तत्र 'दूरादागतः' इत्यादौ थाथादिस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात् 'कारकात्' इत्ययं योगो 'गतिरनन्तरः' इत्यस्य बाधको विज्ञायते ॥

( उद्योतः ) ननु पृथक् क्तग्रहणाभावात्कथं योगविभागः स्यादत आह—थाथादिसूत्रादिति ॥ ननु विशुष्क इति । अत्राकर्मकत्वेन कर्तृक्तान्तत्वात् गतिस्वरो नास्ति ॥ 'कारकात्'इति योगविभागे यथेष्टसिद्धिस्तथा दर्शयति—तत्रेति ॥ बाधक इति । 'दूरादागतः' इत्यादौ ॥

( अनन्तरग्रहणवैयर्थ्यबोधकभाष्यम् )

**एवञ्च कृत्वा नार्थोऽनन्तरग्रहणेन ॥**

**कथमभ्युद्धृतम् ?**

**उत् हरतिक्रियां विशिनष्टि । उदा विशिष्टामभिर्विशिनष्टि । तत्र 'गतिरनन्तरः' इति च प्राप्नोति, 'गतिर्गतौ' ( ८।१।७० ) इति च ।**

**गतिरनन्तर इत्यस्यावकाशः-प्रकृतम्, प्रहृतम् ।**

**गतिर्गतावित्यस्यावकाशः—अभ्युद्धरति, उपसमादधाति ।**

**इहोभयं प्राप्नोति—अभ्युद्धृतम्, उपसंहृतम्, उपसमाहितम् ।**

**गतिर्गतावित्येतत् भवति विप्रतिषेधेन ॥**

( प्रदीपः ) एवञ्चेति । 'कारकात्'इति योगविभागे सति अनन्तरग्रहणं न कर्तव्यम् । कथमिति चेत्, उच्यते—आगत इत्यस्य गतिस्वरेणाद्युदात्तत्वे प्रवृत्ते दूरशब्दस्य 'स्तोकान्तिक-' इति समासः, ततः कथ्यान्तरप्राप्त्या समासस्वरः प्राप्नोति । ततः कृत्स्वरः, ततः क्तस्वर-इत्येवं क्तस्वरे सिद्धे 'कारकात्'इति सूत्रं नियमार्थम् । तत्र च गतिग्रहणमनुवर्त्तते, तेनायमर्थः-कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति । तेनाभ्युद्धृत इत्यादौ परत्वात् गतिनिघाते कृते उदात्तस्वरितानुवृत्त्या सर्वानुदात्तस्य प्रकृतिभावाभावे थाथादिस्वरे च नियमेन निवर्तिते कृत्स्वरेण उद एवोदात्तत्वं भविष्यतीत्यर्थः ॥

कथमिति । अपूर्वपदत्वादुच्छब्दस्य गतिस्वरो न प्राप्नोतीति तदर्थमनन्तरग्रहणं स्यात्-इति मत्वा प्रश्नः ॥

उत् हरतिक्रियामिति । अयमर्थः—उच्छब्देन हरतेः सम्बन्धादेक उद्धृतशब्दयोः समासः, तत्रोच्छब्दस्य पूर्वपदत्वाद्भवति गतिस्वरः । पश्चादभिशब्दस्य समासेऽभेर्गतिस्वरं बाधित्वा निघातेन भाव्यम् । तत्र कृदुत्तरपदप्रकृतिस्वरेण उद एव गतिस्वरो भविष्यति, नार्थोऽनन्तरग्रहणेन । अथवा-उत् हरतिक्रियामित्यादिनाऽभेर्गतित्वं प्रतिपाद्यते ॥

(उद्योतः) 'एवं'शब्दार्थमाह—कारकादितीति । इदमुपलक्षणम्, गतिग्रहणानुवृत्तिपक्षेऽपि हृतं प्रति उदः पूर्वपदत्वाक्षत्या गतिस्वरे कृदुत्तरपदप्रकृतिस्वरेण सिद्धेऽनन्तरग्रहणमनर्थकमेवेत्यपि बोध्यम् ॥ क्तस्वरः—'थाथघञ्-'इत्यन्तोदात्तत्वम् ॥ गतिपूर्वपदमिति । 'गतिकारकोपपदात्'इत्यत एकदेशे स्वरितत्वप्रतिज्ञया पञ्चम्यन्तगतिग्रहणानुवृत्त्याऽयमर्थो लभ्यते ॥ ननु परत्वान्निघातेऽपि पुनःप्रसङ्गविज्ञानात् 'गतिरनन्तरः' इति प्रकृतिस्वरः स्यादत आह—उदात्तस्वरितेति ॥

ननूक्तन्यायेनाभ्युद्धृतस्य सिद्धेः प्रश्नानुपपत्तिरत आह—अपूर्वपदत्वादिति । युगपत् द्वाभ्यां समास इत्यभिमानः ॥

क्रमेण समासप्रवृत्त्या स्वरसिद्धिरित्याह—अयमर्थ इति ॥ अभेर्गतित्वमिति । उद्धरणक्रियाविशेषणत्वात् । तेन गतिनिघातप्रवृत्त्युपपत्तिर्दर्शिता । अत्राद्यव्याख्यानमेव युक्तम् ॥

( सिद्धान्तभाष्यम् )

**एवं तर्हि सिद्धे सति यदनन्तरग्रहणं करोति तज्ज्ञापयत्याचार्यः—भवत्येषा परिभाषा कृद्ग्रहणे गतिकारकपूर्वस्यापि-इति ।**

( प्रदीपः ) एवं तर्हीति । परविप्रतिषेधमनपेक्ष्य व्यवहितगतिनिवृत्त्यर्थमनन्तरग्रहणं क्रियते । यदि च कृद्ग्रहणपरिभाषा न स्यात् ततः क्तान्त उत्तरपदे गतेः स्वरो विधीयमानो गतिस्वरः स्यादित्यत उपायमाह—एवं तर्हीति ॥

---

१ कृत्स्वरेणेति । प्रभेद इत्यत्र तत्पुरुषसमासे गतिकारकोपपदात्कृदित्यनेन प्रकृतिस्वरे ञ्नित्यादिर्नित्यमिति धातोरुदात्तत्वं स्यादित्यर्थः ॥

२ यदि थाथघञिति सूत्रे गतिग्रहणमनुवर्तेत तदा गतिरनन्तर इत्येतत् थाथादिस्वरस्यापवादः स्यात् । तेन दूरादागत इत्यत्र थाथादिस्वरं बाधित्वा

३ 'एवशब्दार्थमाह' इति ख. पाठः ॥

४ 'गतिग्रहणनिवृत्तिपक्षेऽपि' इति झ. ख. पाठः ॥

व्यवहितस्य न प्राप्नोतीति किं तन्निवृत्त्यर्थेनानन्तरग्रहणेन ? तत् कृतमेतां परिभाषां ज्ञापयति । परिभाषाज्ञापनार्थमेव च परप्रतिषेधो नापेक्ष्यते । ननु च कृद्ग्रहणे गतिपूर्वस्यापि ग्रहणं ज्ञाप्यताम्, कारकपूर्वस्य कथं ज्ञाप्यते ? उच्यते—पूर्वाचार्यैस्तावदेषा परिभाषा पठिता । इह त्वनन्तरग्रहणेन सैवाभ्यनुज्ञायते ॥

( उद्द्योतः ) परविप्रतिषेधमनपेक्ष्येति । क्वचित्तु 'पूर्वप्रतिषेधमपेक्ष्य' इति पाठः। एवं चाभ्युद्धृतमित्यादौ 'गतिर्गतौ' इत्यतः पूर्वविप्रतिषेधेन 'गतिरनन्तरः' इति प्रवृत्तेर्व्यवहितनिवृत्त्यर्थमनन्तरग्रहणमित्यर्थः । वस्तुतो यदाऽभिशब्दः पादादौ तदा 'गतिर्गतौ' इत्यस्य प्रवृत्तिरेव नेति तत्र व्यवहितनिवृत्त्यर्थमनन्तरग्रहणमिति भाष्याशयः ॥ व्यवहितस्य नेति । उद्धृतशब्दस्य क्तान्तत्वाभावादिति भावः ॥ सैवाभ्यनुज्ञायत इति । एकदेशानुमतिद्वारा कृत्स्ना परिभाषा ज्ञाप्यत इत्यर्थः ॥

( परिभाषाफलबोधकभाष्यम् )

किमेतस्य ज्ञापने प्रयोजनम् ?

अवतप्ते[1] नकुलस्थितं त एतत्, उदके विशीर्णं त एतत् । सगतिकेन सनकुलेन च समासः सिद्धो भवति ॥

( ११७० विधिसूत्रम् ॥ ६ । २ । १ आ. ११ )

## २७१० तादौ[2] च निति कृत्यतौ ॥ ६ । २ । ५० ॥

( पदकृत्यभाष्यम् )

कृद्ग्रहणं[3] किमर्थम् ?

यथा तकारादिग्रहणं कृद्विशेषणं विज्ञायेत—तकारादौ निति कृतीति ।

अथाक्रियमाणे कृद्ग्रहणे तकारादिग्रहणं कस्य विशेषणं स्यात् ?

उत्तरपदविशेषणम् ।

तत्र को दोषः ?

इहैव स्यात्—प्रतरिता, प्रतरितुम् ।

इह न स्यात्—प्रकर्ता, प्रकर्तुम् ।

( प्रदीपः ) गतेः स्वरविधानात् क्रियायोगे गतिसंज्ञाविधानात्तकारादिः कृदेव सम्भवति नान्य इति मत्वाऽऽह—कृद्ग्रहणं किमर्थमिति ॥

यथेति । 'निति' इत्यनेन प्रत्ययग्रहणपरिभाषया तदन्तस्योपस्थानात्तस्यैव तकारादित्वं विशेषणं स्यात् । कृद्ग्रहणे तु श्रुतस्य तादित्वं विशेषणं विज्ञायते ॥

(उद्द्योतः) ननु 'प्रभृत्तिका' इत्यादावकृन्निवृत्त्यर्थं कृद्ग्रहणं स्यादत आह—गतेरिति । तिङां तु नित्त्वस्यैवाभावादिति भावः ॥ प्रत्ययग्रहणपरिभाषयेति । 'अतो' इति पर्युदासेन नितः प्रत्ययस्यैव ग्रहणादिति भावः ॥ अनिष्टमिति । नित्कृदन्ते तकारादावुत्तरपदे इत्यर्थरूपम् ॥

( ६३४८ कृद्ग्रहणाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥*॥ तादौ निति कृद्ग्रहणानर्थक्यम् ॥*॥

( भाष्यम् ) तादौ निति कृद्ग्रहणमनर्थकम् । क्रियमाणेऽपि वै कृद्ग्रहणेऽनिष्टं शक्यं विज्ञातुम्—तकारादौ उत्तरपदे निति कृति—इति ।

अक्रियमाणेऽपि चेष्टम्—नियस्तकारादिस्तदन्त उत्तरपद इति ।

यावता क्रियमाणे चानिष्टं विज्ञायते, अक्रियमाणे चेष्टम् ।

अक्रियमाण एवेष्टं विज्ञास्यामः ॥

(प्रदीपः) तादौ नितीति । यथा 'उतश्च प्रत्ययादसंयोगपूर्वात्' इत्यत्र विशेषणविशेष्यभावे कामचारादसंयोगपूर्वग्रहणेनोकारो विशेष्यते, न तु प्रत्ययः; तथेहापि तादिग्रहणेन निद्विशेष्यते न तु तदन्तम् ॥

(उद्द्योतः) नन्वसति कृद्ग्रहणे प्राधान्यात्तदन्तविशेषणतैव युक्ता, न तु प्रत्ययविशेषणता—इत्यत आह—यथा 'उतश्चेति । 'गुणः कृतात्मसंस्कारः' इति न्यायादिति भावः ॥

( ६३४९ समाधानवार्तिकम् ॥ २ ॥ )

### ॥*॥ कृदुपदेशो वा ताद्यर्थमिडर्थम् ॥*॥

(भाष्यम्) कृदुपदेशो तर्हि ताद्यर्थमिडर्थं कृद्ग्रहणं कर्तव्यम् । कृदुपदेशो यस्तकारादिः—इत्येवं यथा विज्ञायेत ।

किं प्रयोजनम् ?

इडर्थम् । इडादावपि सिद्धं भवति—प्रलपिता[4], प्रलपितुम् ॥

(प्रदीपः) कृदुपदेशो वेति । वाशब्दस्त्वर्थे । कृतामुपदेशः—शास्त्रम्, तत्र यस्तादिरिति प्रत्ययार्थं[5] कृद्ग्रहणमित्यर्थः ॥

( उद्द्योतः ) पूर्वप्रयोजनस्य दूषितत्वेन वाशब्दोऽसङ्गतोऽत आह—तर्ह्यर्थे इति ॥ उपदेशः शास्त्रमिति । करणल्युडन्तत्वेति भावः । एवं च कृच्छब्देन कृच्छास्त्रं लक्ष्यत इति तात्पर्यम् ॥

---

१ 'प्रतप्ते' इति च. पाठः ॥

२ तकारादौ निति तुशब्दवर्जिते कृति परेऽनन्तरो गतिः प्रकृत्येत्यर्थः । स्वरप्रवृत्तिवेलायां तादित्वाभावेऽपि पूर्वं तत्सत्त्वात् यस्मिन्विधिरित्येव सिद्धे आदिग्रहणं स्पष्टार्थम् ॥

३ कृद्ग्रहणमिति । तकारादेर्नित् प्रत्ययस्याकृतोऽभावात् गतिग्रहणेन धातोराक्षेपेण तत्प्रकृतिकप्रत्ययस्यैव ग्रहणाच्च कृल्लाभे कृद्ग्रहणं कृत्संज्ञाप्रवृत्तिकाले यस्तद्ग्रहणार्थमिति शेखरः ॥

४ 'प्रलविता, प्रलवितुम्' इति छ. झ. ट. पाठः ॥

५ प्रत्ययार्थं—प्रतीत्यर्थम् ॥

( ११७१ विधिसूत्रम् ॥ ६ । २ । १ आ. १२ )

## २७१२ अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ६ । २ । ५२ ॥

( ६३५० अतिप्रसङ्गापादकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्गः ॥ * ॥**

(भाष्यम्) अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावः, प्राप्नोति । प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः ॥

(प्रदीपः) अनिगन्तेति । प्रतीच इत्यादावर्थवदनिगन्तग्रहणमिति 'प्रत्यङ्'इत्यत्र यणादेशे कृतेऽनिगन्तत्वात् प्रकृतिस्वरप्रसङ्गः ॥

( उद्योतः ) ननु अनिगन्तग्रहणसामर्थ्याद्यणादेशेऽपि प्रतिषेधः सिद्धोऽत आह—प्रतीच इत्यादाविति ॥ यणादेशे इति । अन्तरङ्गत्वादिति भावः ॥ चुस्वरेणेति । लुप्ताकारनकारेऽञ्चतौ परे विधानेन सति शिष्टत्वात् 'चौ'इति पूर्वपदान्तोदात्तत्वेनेत्यर्थः ॥

( अनिगन्तपदाक्षेपभाष्यम् )

अनिगन्तवचनमिदानीं किमर्थं स्यात् ?

( ६३५१ अनिगन्तपदप्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अनिगन्तवचनं किमर्थमिति चेद्यणादिष्टार्थम् ॥ * ॥**

( भाष्यम् ) अयणादेशार्थमेतत् स्यात् । यदा यणादेशो न ।

कदा च यणादेशो न ?

यदा शाकलम् ॥

( प्रदीपः ) अनिगन्तवचनमिति । प्रतीच इत्यादिषु चुस्वरेण भाव्यमिति अनवकाशमनिगन्तग्रहणं मन्यते ॥

( ६३५२ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) किमुक्तम् ?

समासे शाकलं न भवति-इति ॥

(उद्योतः) भाष्ये—उक्तं वेति । 'अनिगन्त-'इत्येतदपेक्षया विकल्पः ॥

( प्रयोजनभाष्यम् )

यत्र तर्ह्यञ्चतेरकारो लुप्यते । प्रतीचः, प्रतीचा ।

चुस्वरस्तत्र बाधको भविष्यति ।

अयमेवेष्यते ।

वक्ष्यति ह्येतत्-चोरनिगन्तोऽञ्चतावप्रत्यय इति ॥

यत्तर्हि—न्यध्योः प्रकृतिस्वरं शास्ति ।

एष हि यणादिष्टार्थमारम्भः ।

एतदप्ययणादिष्टार्थमेव, यदा यणादेशो न ।

कदा च यणादेशो न ?

यदा शाकलम् ।

उक्तं वा ।

किमुक्तम् ?

समासे शाकलं न भवतीति ॥

यत्र तर्ह्यञ्चतेरकारो लुप्यते—अधीचः, अधीचा ।

चुस्वरस्तत्र बाधको भविष्यति ।

अयमेवेष्यते ।

वक्ष्यति ह्येतत्—चोरनिगन्तोऽञ्चतावप्रत्यय इति ॥

यत्तर्हि नेरेव प्रकृतिस्वरं शास्ति ।

एष हि यणादिष्टार्थ आरम्भः ।

एतदप्ययणादिष्टार्थमेव ।

कथम् ?

अकृते यणादेशे पूर्वपदप्रकृतिस्वरत्वे कृते 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (८।२।४) इत्येष स्वरः सिद्धो भवति । न्यङ् ॥

तस्मात्सुष्ठूच्यते—अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्ग इति ॥

( प्रदीपः ) यत्तर्हि न्यध्योरिति । न्यध्योरेव कृते यणादेशे प्रकृतिस्वरः, नान्यस्य-इति नियम आश्रीयते ॥

यत्र यर्हीति । 'अधीचा' इत्यादावित्यर्थः ॥

यत्तर्हि नेरेवेति । निशब्दस्यैकाच्त्वात् 'नीचा' इत्यादौ चुस्वरस्य प्रकृतिस्वरस्य च विशेषो नास्ति ॥

एष हि यणादिष्टार्थ इति । ननु नेर्यणादेशे कृतेऽनच्कत्वात्कस्य स्वरः ? एवं मन्यते-यत्र यण् भविष्यते तस्मिन् विषयेऽन्तरङ्गमपि यणं बाधित्वा पूर्वं नेः स्वरो भवति । एवं प्रत्यङादिषु 'अनिगन्तः' इति प्रतिषेधो भविष्यति, पश्चाद्यणादेशः ॥

एतदपीति । वचनसामर्थ्यादकृत एवान्तरङ्गे यणादेशे निशब्दस्वरो भवति, यणि कृते स्वरभाजोऽभावात् । प्रत्यङादिषु तु यणादेश एवान्तरङ्गत्वात् प्राप्नोति ॥

तस्मादिति । न च यणादेशस्य स्थानिवद्भावोऽस्ति । पूर्वपदप्रकृतिस्वरविधानादपूर्वविधित्वात् ॥

( उद्योतः ) अयमेवेष्यत इत्यस्यायमेव चुस्वरस्य बाधक इष्यते न त्वस्य चुस्वर इत्यर्थः ॥

तत्र बीजमाह—वक्ष्यति ह्येतच्चोरनिगन्तेति । एवञ्च परत्वात्प्राप्तस्यास्य निवृत्तयेऽनिगन्तग्रहणं चरितार्थमिति यणादेशेऽपि स्वरः प्राप्नोत्येवेति भावः ॥ अथ ज्ञापकात्समाधातुमाह—यत्तर्हि न्यध्योरिति । तद्व्याचष्टे—न्यध्योरेवेति । यणि सति अनिगन्तत्वेन पूर्वेणैव सिद्धावयमारम्भो नियमार्थ इति भावः ॥

अधिशब्दान्नेः को विशेषोऽत आह—निशब्दस्येति ॥ भविष्यत इति । प्राप्स्यते इत्यर्थः । 'भविष्यति' इति क्वचित्पाठः । ननु

१ 'भविष्यति' इति क. च. पाठः ॥

नेः 'अनिगन्त–' इति प्रकृतिस्वरेण सिद्धावस्य यणादिष्टार्थत्वे प्रकृते किमायातमत आह—**एवं प्रत्यङादिष्विति** । अत्रापि तद्वत् यणं बाधित्वा प्राप्तः स्वरोऽनिगन्त इति प्रतिषिध्यते । ततः कृदुत्तरपदप्रकृतिस्वरे पूर्वस्य निघाते उदात्तस्वरितयोगित्वाभावान्नैतत्स्वरप्रवृत्तिरिति–इष्टसिद्धिरित्यर्थः । निग्रहणेनान्तरङ्गादपि पूर्वं स्वरप्रवृत्तिरिति सामान्येन ज्ञाप्यत इति तात्पर्यम् ॥ नन्वयणादिष्टार्थत्वेऽपि तेनैव न्यायेन प्रत्यङादिषु स्वरसिद्धेरुक्तत्वात्को दोष इत्यतो वैषम्यमाह—**वचनसामर्थ्यादिति** ॥ **अपूर्वविधित्वादिति** । तत्सहितस्य पूर्वपदत्वेनानादिष्टादचः पूर्वविधित्वाभावादिति भावः ॥

भाष्ये—तस्मात्सुष्ठ्विति–पूर्वपक्षः समीचीन एव । समाधिस्तु सुकरत्वान्नोक्तो वार्तिककृतेति भावः । स च 'नेन्द्रस्य–' इति निषेधेन स्वरसन्धेः पूर्वं पूर्वोत्तरपदनिमित्तकार्यज्ञापनरूप इति बोध्यम् ॥

( ६३५३ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ चौरनिगन्तोऽञ्चतावप्रत्यये ॥ * ॥**

( भाष्यम् ) चुस्वरादनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन ।

चुस्वरस्यावकाशः—दधीचः पश्य, दधीचा, दधीचे ।

अनिगन्तोऽञ्चतावप्रत्यय इत्यस्यावकाशः-पराङ्, पराञ्चौ, पराञ्चः ।

इहोभयं प्राप्नोति—अवाचा, अवाचे ।

अनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन ॥

( ६३५४ विप्रतिषेधासंभवबोधकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादः ॥ * ॥**

( भाष्यम् ) न वा एतद्विप्रतिषेधेनापि सिध्यति ।

कथं तर्हि सिध्यति ?

चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधात् । चुस्वरः पूर्वपदप्रकृतिस्वरभाविनः प्रतिषेध्यः । इतरथा हि सर्वापवादश्चुस्वरः । अक्रियमाणे हि प्रतिषेधे सर्वापवादोऽयं चुस्वरः ।

कथम् ?

प्रत्ययस्वरस्यापवादः–'अनुदात्तौ सुप्पितौ' (३।१।४) । अनुदात्तौ सुप्पितावित्यस्योदात्तनिवृत्तिस्वरः । उदात्तनिवृत्तिस्वरस्य चुस्वरः ।

स यथैवोदात्तनिवृत्तिस्वरं बाधत एवमनिगन्तस्वरमपि बाधेत ॥

यदि तावत्संख्यातः साम्यम्, अयमपि चतुर्थः । समासान्तोदात्तत्वस्यापवादोऽव्ययस्वरः ।

अव्ययस्वरस्य कृत्स्वरः ।

कृत्स्वरस्यायम् ।

उभयोश्चतुर्थयोर्युक्तो विप्रतिषेधः ॥

सति शिष्टस्तर्हि चुस्वरः ।

कथम् ?

चावित्युच्यते, यत्रास्यैतद्रूपं भवति ।

कचास्यैतद्रूपम् ?

यजादावसर्वनामस्थानेऽभिनिर्वृत्ते अकारलोपे नकारलोपे च कृते ।

तस्मात्सुष्ठूच्यते—न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवाद इति ॥

( प्रदीपः ) **यदि तावदिति** । सर्वापवादत्वं चुस्वरस्य निवर्तयति । लक्षणगणनायां द्वयोरपि चतुर्थत्वमित्यर्थः ॥

**अव्ययस्वर इति** । 'तत्पुरुषे तुल्यार्थ–'इति प्रकृतिस्वरः । इह च गतिग्रहणमनुवर्तते ॥

**सतिशिष्ट इति** । ततः सर्वापवाद एव चुस्वरः ॥

( उद्योतः ) नन्वनव्ययविषयेऽयं चरितार्थोऽत आह—**इह च गतिग्रहणमिति** । तेन पूर्वपदप्रकृतिस्वरापवादकृत्स्वरापवादत्वमस्य युज्यत इत्याशयः ॥ ततः **सर्वापवाद एवेति** । सति शिष्टतया सर्वबाधकत्वं वार्तिके विवक्षितम्, न तूत्सर्गापवादभावेनेति भावः ॥ भाष्ये—पूर्वपदप्रकृतिस्वरभाविनीत्यस्यायमर्थः—पूर्वपदप्रकृतिस्वरस्य भावः–सत्ता यत्रास्तीति ॥

( ६३५५ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ विभक्तीषत्स्वरात्कृत्स्वरः ॥ * ॥**

( भाष्यम् ) विभक्तिस्वरात्–ईषत्स्वराच्च कृत्स्वरो भवति विप्रतिषेधेन ।

विभक्तिस्वरस्यावकाशः—अक्षशौण्डः, स्त्रीशौण्डः ।

कृत्स्वरस्यावकाशः—इध्मप्रव्रश्चनः, पलाशशातनः ।

इहोभयं प्राप्नोति—पूर्वाह्णे स्फोटकः, अपराह्णे स्फोटकः ।

कृत्स्वरो भवति विप्रतिषेधेन ॥

ईषत्स्वरस्यावकाशः—ईषत्कडारः, ईषत्पिङ्गलः ।

कृत्स्वरस्य स एव ।

इहोभयं प्राप्नोति—ईषद्भेदः ।

कृत्स्वरो भवति विप्रतिषेधेन ॥

( उद्योतः ) भाष्ये—**ईषत्स्वरादिति** । 'ईषदन्यतरस्याम्' इति विहितादित्यर्थः । पूर्वपदप्रकृतिस्वरविधायकमेतत् ॥

( ६३५६ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ चित्स्वराद्धारिस्वरः ॥ * ॥**

( भाष्यम् ) चित्स्वराद्धारिस्वरो भवति विप्रतिषेधेन ।

१ 'प्रकृतिस्वरेणासिद्धौ' इति झ. पाठः । वस्तुतः 'अनिगन्तोऽञ्चतौ–' इत्युत्तरसूत्रेण 'न्यधी च' इत्यनेन प्रकृतिस्वरेण सिद्धाविसेवोचितोऽर्थः ॥

चित्स्वरस्यावकाशः—चलनः, चोपनः।
हारिस्वरस्यावकाशः—याज्ञिकाश्वः, वैयाकरणहस्ती।
इहोभयं प्राप्नोति—पितृगवः, मातृगवः।
हारिस्वरो भवति विप्रतिषेधेन॥

( विप्रतिषेधोपसंख्यानभाष्यम् )

कृत्स्वराद्धारिस्वरो विप्रतिषेधेन।[1]
कृत्स्वरस्यावकाशः—इध्मव्रश्चनः, पलाशशातनः।
हारिस्वरस्य स एव।
इहोभयं प्राप्नोति—अक्षद्यूतः, वाडवहार्यः।
हारिस्वरो भवति विप्रतिषेधेन॥

(प्रदीपः) कृत्स्वरादिति। पूर्वविप्रतिषेधोऽत्र विवक्षितः॥ अक्षद्यूत इति। अनुदाहरणमेतदित्याहुः। अत्र हि 'तृतीया कर्मणि' इत्यनेन कृत्स्वरापवादथाथादिस्वरापवादः पूर्वपदप्रकृतिस्वरत्वं प्राप्नोति, तत्परत्वादेव हारिस्वरो बाधते॥

(उद्योतः) 'अक्षद्यूतः' इत्यत्र तृतीयासमास इत्याशयेनाह—अनुदाहरणमेतदित्याहुरिति। अत्रारुचिबीजं तु सप्तमीसमासे दोषाभावः, अक्षविषयद्यूतोंऽशः सर्वथा देय इत्याचार इति-अत्रापि हारित्वसत्त्वादित्यन्ये॥

( ६३५७ कृत्स्वरविप्रतिषेधानर्थक्यबोधकवार्तिकम् ॥८॥ )

॥ * ॥ न वा हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य ॥ * ॥

( भाष्यम् ) न वाऽर्थो विप्रतिषेधेन।
किं कारणम्?
हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य। यदयं 'अहरणे' इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—न कृत्स्वरो हारिस्वरं बाधत इति।
नैतदस्ति ज्ञापकम्। 'अनो भावकर्मवचनः' (६।२।१५०) इत्येतस्मिन् प्राप्ते तत एतदुच्यते॥
यद्येवं साधीयो ज्ञापकम्। कृत्स्वरस्यापवादः—'अनो भावकर्मवचनः' इति। बाधकं किलायं बाधते, किं[2] पुनस्तन्न बाधिष्यते?

( प्रदीपः ) न कृत्स्वर इति। परोऽपीत्यर्थः॥ अनो भावकर्मवचन इत्यनेनान्तोदात्तत्वं विधीयते। कर्मवाची[3] हरणशब्दः, वाडवहरणमित्युदाहरणम्॥ किं पुनस्तमिति। कृत्स्वरमित्यर्थः। तस्मात् 'अहरणे' इति प्रतिषेधो येन केनचिल्लक्षणेन प्राप्तस्य स्वरस्य हारिस्वरो बाधक इति ज्ञापयतीत्यर्थः॥

( उद्योतः ) बाधकत्वे बीजमाह—परोऽपीति। हारिस्वरः—आद्युदात्तत्वम्॥ कर्मवाची हरणशब्द इति। 'करणवाची' इति तु क्वाचित्कोऽपपाठः, भावकर्मवाच्यत्व एव तत्प्रवृत्तेः। अत एव कृत्स्वरस्य इध्मप्रव्रश्चन इत्यवकाशो भाष्योक्तः सङ्गच्छते। 'कर्मणि च येन संस्पर्शात्–' इति बहुलग्रहणाद्वा कर्मणि ल्युट्। करणे त्वर्थासङ्गतिः। अश्वानां बीजनिषेकादुत्तरकालं यत् शरीरपुष्ट्यर्थं दीयते तद्धि हरणमुच्यते, हार्यं इति च। वाडवः—बीजाश्वः॥ 'कृत्स्वरे हारिस्वरबाधकत्वं यत् परत्वात्प्राप्तं तदभावोऽहरण इति प्रतिषेधेन ज्ञाप्यते' इत्युक्तेऽपर आह—नैतदस्ति ज्ञापकमिति॥ ज्ञापकत्वाभावमुपपादयति—(भाष्ये) अनो भावेति। यतः कृत्स्वरे प्राप्ते हरणोत्तरपदेऽपवादतया 'अनो भाव–' इति प्राप्नोति॥ तत एतदिति। तत्प्राप्त्यनन्तरम्। एतत्—'सप्तमीहारिणौ धर्म्येऽहरणे' इत्युच्यते इत्यर्थः। एवं च तस्याबाधकत्वज्ञापनसंभवेऽपि कृत्स्वरसाबाधकत्वज्ञापनासंभव इति भावः॥

समाधत्ते—यद्येवं साधीय इति॥ परस्य 'अनो भाव–' इत्यस्यैतदबाधकत्वे ज्ञापितेऽर्थादस्य तद्बाधकत्वं फलितमित्याशयेनाह—बाधकं बाधते किं पुनस्तमिति। अयं भावः—पूर्वविप्रतिषेधेन हि अस्य तद्बाधकत्वं वाच्यं। तत्र सामान्यत एव कृद्विषये प्राप्तस्य सर्वस्य परस्वरस्य पूर्वविप्रतिषेधेनायं स्वरो बाधक इति कल्प्यत इति। तदाह—तस्मादिति॥

( विप्रतिषेधबोधकभाष्यम् )

युक्तस्वरश्च[4] कृत्स्वराद्भवति विप्रतिषेधेन।
युक्तस्वरस्यावकाशः-गोबल्लवः, अश्वबल्लवः।
कृत्स्वरस्य स एव।
इहोभयं प्राप्नोति-गोसंख्यः, पशुसंख्यः, अश्वसंख्यः।
युक्तस्वरो भवति विप्रतिषेधेन॥

( प्रदीपः ) युक्तस्वरश्चेति। पूर्वपदाद्युदात्तत्वम्। अत्रापि पूर्वविप्रतिषेधो विवक्षितः॥ गोसंख्य इति। नन्वत्र थाथादिस्वरः प्राप्नोति, न कृत्स्वरः। एवं तर्हि मूलप्राप्तिमाश्रित्योक्तमित्यदोषः॥

( उद्योतः ) पूर्वपदाद्युदात्तत्वमिति। 'युक्ते च' इत्यनेन। युक्तवाचिनि समासे पूर्वपदमाद्युदात्तमिति तदर्थः। बल्लवादयः शब्दा गवादीनां पालके वर्तन्ते। युक्तशब्देन तत्पर उच्यते। गाः संचष्ट इति गोसंख्यः[5]। गोगणनतत्पर एवमुच्यते॥ मूलप्राप्तिमिति। विचारेण तु थाथादिस्वरात्–इति प्रत्येतव्यमित्यर्थः॥

---

१ 'कृत्स्वराच्च हारिस्वरो भवति विप्रतिषेधेन' इति ट. पाठः। 'कृत्स्वराच्च हारिस्वरो विप्रतिषेधेन' इति क. पाठः। 'कृत्स्वराच्च* कृत्स्वराच्च हारिस्वरो भवति विप्रतिषेधेन' इति छ. झ. पाठः॥
२ 'किं पुनस्तम्?' इति छ. झ. पाठः॥
३ 'करणवाची हरणशब्दः' इति ठ. पाठः॥
४ 'युक्तस्वरश्च* युक्तस्वरश्च कृत्स्वराद्भवति विप्रतिषेधेन' इति छ. झ. पाठः॥
५ 'गोसङ्ख्यः'। 'समिख्यः' इति कः; गोगणन–' इति झ. पाठः॥

( ११७२ विधिसूत्रम् ॥ ६ । २ । १ आ. १३ )

## २७४० उपमानं शब्दार्थप्रकृतावेव ॥ ६ । २ । ८० ॥

( उद्योतः ) उपमानवाचिपूर्वपदं शब्दार्थकधातुप्रकृतिकणिन्यन्ते एवोत्तरपदे आद्युदात्तमिति तदर्थः ॥

( उपमानपदप्रयोजनभाष्यम् )

**उपमानमिति किमर्थम् ?**

**शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वेणातिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायेत ।**

**तत्र को दोषः ?**

**इह न स्यात्-पुष्पहारी, फलहारी ।**

**उपमानग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **उपमानमिति किमर्थमिति** । योगविभागकरणसामर्थ्याच्छिष्टप्रयोगाच्चोपमानमेव नियम्यत इति **प्रश्नः**॥ इतरः सत्यपि योगविभाग इष्टा व्यवस्था न लभ्यते । लक्ष्यानुसारेण च प्रतिपत्तिगौरवप्रसङ्ग इत्याह—**शब्दार्थप्रकृतावेवेति** ॥

( उद्योतः ) ननूपमानविषयनियमलाभाय तदावश्यकमत आह—**योगविभागेति** । 'णिनीत्यनेन' इति शेषः । यदि तस्यैव नियमः स्यात् 'णिनि शब्दार्थप्रकृतावेव' इत्येकयोगमेव कुर्यादित्यर्थः ॥ विशेषो दुर्ज्ञेयोऽत आह—**शिष्टेति** । मन्दबुद्ध्यनुग्रहार्थमुपमानग्रहणमित्युत्तराशयः ॥

( शब्दार्थपदप्रयोजनभाष्यम् )

**अथ शब्दार्थग्रहणं किमर्थम् ?**

**उपमानं प्रकृतावेवेतीयत्युच्यमाने इहापि प्रसज्येत-वृकवञ्ची, वृकप्रेक्षी ।**

**शब्दार्थग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **अथ शब्दार्थग्रहणमिति** । प्रकृतिग्रहणादेव विशिष्टार्था प्रकृतिर्ग्रहीष्यत इति **प्रश्नः** ॥ इतरस्तु दुर्ज्ञानो विशेष इति मत्त्वाऽऽह—**उपमानमिति** ॥ वृकं वञ्चतीति 'कर्तर्युपमाने' इति णिनिः । कृत्स्वर एवात्र भवति ॥

( उद्योतः ) **प्रकृतिग्रहणादेवेति** । प्रकृतिं विना णिनोऽसंभवेनानर्थकं तदिति तत्सामर्थ्याद्विशिष्टार्थप्रकृतिग्रहणमिति भावः ॥ **कृत्स्वर एवेति** । कृत्स्वरे प्राप्त एव 'णिनि-'इत्यारम्भादिति भावः ॥

( प्रकृतिग्रहणप्रयोजनभाष्यम् )

**अथ प्रकृतिग्रहणं किमर्थम् ?**

**शब्दार्थप्रकृतिरेव यो नित्यं तत्र यथा स्यात् ।**

**इह मा भूत्—कोकिलाभिव्याहारी, गर्दभोच्चारी ।**

( प्रदीपः ) **शब्दार्थप्रकृतिरेव यो नित्यमिति** । उपसर्गसंबन्धमन्तरेणैव यो धातुः शब्दे वर्तते स इह गृह्यते । यस्य तूपसर्गेण शब्दार्थत्वं द्योत्यते तस्य ग्रहणं न भवतीत्यर्थः ॥

( उद्योतः ) **उपसर्गमन्तरेणेति** । 'शब्दार्थे' इत्येव शब्दार्थके णिन्यन्ते उत्तरपदे इत्यर्थे कृद्ग्रहणपरिभाषया गर्दभोच्चारीत्यादावपि स्यात् । प्रकृतिग्रहणे तु तत्सामर्थ्याद्विशेषलाभेन नात्र दोष इति भावः ॥

( एवपदप्रयोजनभाष्यम् )

**अथैवकारः किमर्थः ?**

**नियमार्थः ।**

**नैतदस्ति प्रयोजनम् । सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ।**

**इष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत-उपमानं शब्दार्थप्रकृतावेवेति ।**

**मैवं विज्ञायि-उपमानमेव शब्दार्थप्रकृताविति ।**

**शब्दार्थप्रकृतौ ह्युपमानं चानुपमानं चाद्युदात्तमिष्यते । साध्वध्यायी, विलम्बिताध्यायी ॥**

( ११७३ विधिसूत्रम् ॥ ६ । २ । १ आ. १४ )

## २७४२ दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ६ । २ । ८२ ॥

( विप्रतिषेधबोधकभाष्यम् )

**जे दीर्घान्तस्यादिरुदात्तो भवतीत्येतस्मात् 'अन्त्यात्पूर्वं बह्वचः' इत्येतद्भवति विप्रतिषेधेन ।**

**जे दीर्घान्तस्यादिरुदात्तो भवतीत्यस्यावकाशः-कुटीजः, शमीजः ।**

**अन्त्यात्पूर्वं बह्वच इत्यस्यावकाशः-उपसरजः, मन्दुरजः ।**

**इहोभयं प्राप्नोति—आमलकीजः, वलभीजः ।**

**अन्त्यात्पूर्वं बह्वच इत्येतद्भवति विप्रतिषेधेन ॥**

( ११७४ निषेधसूत्रम् ॥ ६ । २ । १ आ. १५ )

## २७५१ न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ ६ । २ । ९१ ॥

( उपसंख्यानभाष्यम् )

**आद्युदात्तप्रकरणे दिवोदासादीनां छन्दसि उपसंख्यानं कर्तव्यम् । दिवोदासाय गायत वध्र्यश्वाय दाशुषे ॥**

---

१ 'वृकवञ्चीति । वृकं वञ्चतीति कर्तर्युपमाने' इति क. च. झ. पाठः ॥
२ 'जे दीर्घाद्बह्वचः* जे' इति छ. ट. झ. पाठः ॥
३ 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्* आद्युदात्तप्रकरणे-' इति छ. झ. च. पाठः ॥
४ 'गायते' इति च. झ. क. पाठः ॥

( प्रदीपः ) दिवोदासायेति । 'दिवश्च दासे' इति अलुक् ॥

( ११७५ अधिकारसूत्रम् ॥ ६ । २ । १ आ. १६ )

## २७५२ अन्तः ॥ ६ । २ । ९२ ॥

( ११७६ विधिसूत्रम् ॥ ६ । २ । १ आ. १७ )

## २७५३ सर्वं गुणकार्त्स्न्ये ॥ ६।२।९३ ॥

( प्रदीपः ) यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति । यथा-सर्वशुक्ल इति, शुक्लेन गुणेन सर्वावयवानां व्यापनात् ॥

( उद्योतः ) गुणकार्त्स्न्यं व्युत्पादयति—यत्रेति । सर्वशुक्ले 'पूर्वकालैक-' इत्यादिना समासः ॥

( सर्वपदप्रयोजनभाष्यम् )

सर्वग्रहणं किमर्थम् ?

'गुणकार्त्स्न्ये' इतीयत्युच्यमाने इहापि प्रसज्येत-परमशुक्लः, परमकृष्ण इति ।

सर्वग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

( प्रदीपः ) परमशुक्ल इति । आश्रयव्याप्त्या शुक्लस्य पारम्यमिति गुणकार्त्स्न्यमस्ति ॥

( उद्योतः ) कथं पुनः प्रकर्षवाचिनः परमशब्दस्य गुणकार्त्स्न्ये वृत्तिरत आह—आश्रयव्याप्त्येति । यद्यप्यौज्ज्वल्यादिनाऽपि पारम्यं संभवति, तथापि प्रकृते एवं विवक्षितमित्यर्थः ॥ विकारविषयमिति । स्वर्णविकारेण सर्वावयवानां व्यापनादिति भावः ॥

( गुणपदप्रयोजनभाष्यम् )

अथ गुणग्रहणं किमर्थम् ?

'सर्वं कार्त्स्न्ये' इतीयत्युच्यमाने इहापि प्रसज्येत-सर्वसौवर्णः, सर्वराजत इति ।

गुणग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

(प्रदीप) सर्वसौवर्ण इति । विकारविषयमत्र कार्त्स्न्यम्, न गुणविषयम् ॥

( कार्त्स्न्यग्रहणप्रयोजनभाष्यम् )

अथ कार्त्स्न्यग्रहणं किमर्थम् ?

'सर्वं गुणे' इतीयत्युच्यमाने इहापि प्रसज्येत-सर्वेषां श्वेतः-सर्वश्वेत इति ।

कथं चात्र समासः ?

षष्ठी सुबन्तेन समस्यते इति ।

गुणेन नेति प्रतिषेधः प्राप्नोति ।

एवं तर्हि—

( प्रदीपः ) अथ कार्त्स्न्यग्रहणमिति । सर्वशब्दः कार्त्स्न्य एव वर्तेत इति प्रश्नः ॥ सर्वेषां श्वेत इति । सर्वशब्दोऽत्र गुणिकार्त्स्न्ये वर्तते, न गुणकार्त्स्न्ये । सर्वेषां श्वेतो गुण इत्यर्थः ॥

( उद्योतः ) भाष्ये—सर्वं गुण इतीति । सर्वशब्दः पूर्वपदं गुणवाचके उत्तरपदे परेऽन्तोदात्तमित्यर्थः ॥ कार्त्स्न्यग्रहणे तु गुणकार्त्स्न्ये वर्तमानः सर्वशब्दोऽर्थात् गुणे उत्तरपदेऽन्तोदात्त इत्यर्थान्न दोषः, तदाह—सर्वशब्दोऽत्रेति ॥

( ६३५८ समासोपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥*॥ गुणात्तरेण समासस्तरलोपश्च ॥*॥

( भाष्यम् ) गुणात्तरेण समासो वक्तव्यः, तरलोपश्च । सर्वेषां श्वेततरः-सर्वश्वेतः ॥

( प्रदीपः ) गुणात्तरेणेति । गुणात्परो यस्तरप् तदन्तेनेत्यर्थः । 'सर्वेषाम्'इति गुणसंबन्धे षष्ठी । पटस्य शौक्ल्यमिति यथा ॥ श्वेततर इति । गुणवाचिन एवाश्रितगुणान्तरप्रकर्षनिमित्तप्रत्ययः[1] । सर्वेषां पटानां द्रव्यान्तराधारश्वेतगुणापेक्षया सातिशयः श्वेतो गुण इत्यर्थः ॥

( उद्योतः ) गुणात्परो य इति । अत्र सूत्रात्सर्वपदमनुवर्तते । तेन सर्वशब्दस्यैवायं समासः । एतद्बोधयितुमेव स्वरप्रकरणेऽत्र पठितम् । अनेन च षष्ठीसमास एव, 'गुणेन न' इति प्रतिषेधे आरम्भस्य भाष्ये उक्तत्वात्–इत्याहुः ॥ भाष्ये–'न निर्धारणे' इति निषेधप्राप्त्यनुल्लेखे बीजं दर्शयितुमाह—गुणसंबन्धे षष्ठीति ॥ नन्वेवं तरबुत्पत्तिः कथमत आह—आश्रितगुणान्तरेति । अन्याधाराश्रितं यद्गुणान्तरं तत्प्रकर्षनिमित्त इत्यर्थः । द्रव्यान्तरं—घटादि । 'द्रव्यान्तराधार' इति बहुव्रीहिः ॥

( ११७७ विधिसूत्रम् ॥ ६ । २ । १ आ. १८ )

## २७६५ उत्तरपदवृद्धौ सर्वं च ॥ ६ । २ । १०५ ॥

( उत्तरपदवृद्धिपदार्थबोधकभाष्यम् )

अयुक्तोऽयं निर्देशः, न ह्युत्तरपदं नाम वृद्धिरस्ति ।

कथं तर्हि निर्देशः कर्तव्यः ?

वृद्धिमत्युत्तरपद इति ।

स तर्हि तथा निर्देशः कर्तव्यः ।

न कर्तव्यः । नैवं विज्ञायते—उत्तरपदं वृद्धिः-उत्तरपदवृद्धिः, उत्तरपदवृद्धाविति ।

कथं तर्हि ?

उत्तरपदस्य वृद्धिरस्मिन् सोऽयम्-उत्तरपदवृद्धिः,

उत्तरपदवृद्धाविति ॥

( प्रदीपः ) 'वृद्धौ' इत्येव वृद्धिमदुत्तरपदमिति परिग्रहे सिद्धे उत्तरपदग्रहणं तदधिकारविहितवृद्धिपरिग्रहार्थम् ॥

( उद्योतः ) भाष्ये—नैवमिति—न कर्मधारयः, किन्तु बहुव्रीहिरित्यर्थः । 'उत्तरपदस्य' इत्येवमधिकारस्था वृद्धिर्यस्मिंस्तस्मिन्-

[1] 'निमित्तः प्रत्ययः' इति क. पाठः ॥

त्तरपदे सर्वशब्दस्यान्त उदात्त इति सूत्रार्थ इति भावः ॥ ईदृशार्थलाभे बीजमाह—वृद्धाविव्येवेति । उत्तरपदग्रहणं विनाऽपि 'अमें चा-' इत्यादाविवोत्तरपदलाभ इति भावः । स्वरितत्वबलाद्वा । इदं च 'वृद्धिरादैच्' सूत्रे निरूपितम् ॥

( ११७८ विधिसूत्रम् ॥ ६ । २ । १ आ. १९ )

## २७६६ बहुव्रीहौ विश्वं संज्ञायाम् ॥ ६ । २ । १०६ ॥

( ६३५९ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः ॥ * ॥

( भाष्यम् ) बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्त इत्येतद्भवति विप्रतिषेधेन ।

'बहुव्रीहौ विश्वं संज्ञायाम्' इत्यस्यावकाशः—विश्वदेवः, विश्वयशाः ।

मित्राजिनयोरन्त इत्यस्यावकाशः-कुलमित्रम्, कुलाजिनम् ।

इहोभयं प्राप्नोति—विश्वमित्रः, विश्वाजिनः ।

मित्राजिनयोरन्त इत्येतद्भवति विप्रतिषेधेन ॥

( उद्योतः ) भाष्ये—'इहोभयं प्राप्नोति विश्वमित्रः' इति पाठः, 'मित्राजिनयोः' इति सूत्रे ऋषिप्रतिषेधस्य वक्ष्यमाणत्वात् । 'विश्वामित्रः' इति तु क्वाचित्कोऽपपाठः ॥

( उपसंख्यानभाष्यम् )

अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानं कर्तव्यम् । मरुद्वृधः सुवया उपतस्थे ॥

( ११७९ विधिसूत्रम् ॥ ६ । २ । १ आ. २० )

## २७६७ उदराश्वेषुषु ॥ ६ । २ । १०७ ॥

( ११८० विधिसूत्रम् ॥ ६ । २ । १ आ. २१ )

## २७६८ क्षेपे ॥ ६ । २ । १०८ ॥

( उद्योतः ) अत्र वृत्तौ 'क्षेपे' इति योगविभागः पूर्वत्र च 'संज्ञायाम्'इत्यनुवर्तते इत्युक्तं तदेकसूत्रत्वप्रतिपादकैतद्भाष्यविरुद्धम् । अन्यथा सूदरादौ संज्ञाविषयेऽपि परत्वात् 'नञ्सुभ्याम्' इत्यस्य दुर्वारत्वेन क्षेपपर्यन्तधावनानुपपत्तिः । वृत्तिभाष्योभयप्रामाण्येन संज्ञाविषये पूर्वविप्रतिषेधोऽङ्गीकार्य इत्यन्ये ॥

( ६३६० विप्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ उदरादिभ्यो नञ्सुभ्याम् ॥ * ॥

( भाष्यम् ) 'उदराश्वेषुषु' 'क्षेपे' इत्येतस्मात् 'नञ्सुभ्याम्' ( १७२ ) इत्येतद्भवति विप्रतिषेधेन ।

'उदराश्वेषुषु' 'क्षेपे' इत्यस्यावकाशः—कुण्डोदरः, घटोदरः ।

नञ्सुभ्यामित्यस्यावकाशः—अयवः, अतिलः, अमाषः, सुयवः, सुतिलः, सुमाषः ।

इहोभयं प्राप्नोति—अनुदरः, सूदरः ।

नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ॥

( प्रदीपः ) सूदर इति । प्रकरणादिवशादत्र क्षेपप्रतिपत्तिः ॥

( उद्योतः ) ननु सूदरे कथं क्षेपोऽत आह—प्रकरणेति । विपरीतलक्षणयेति भावः ॥

( ११८१ विधिसूत्रम् ॥ ६ । २ । १ आ. २२ )

## २७७७ सोर्मनसी अलोमोषसी ॥ ६ । २ । ११७ ॥

( ६३६१ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सोर्मनसोः कपि ॥ * ॥

( भाष्यम् ) 'सोर्मनसी अलोमोषसी' इत्येतस्मात् 'कपि पूर्वम्' ( १७३ ) इत्येतद्भवति विप्रतिषेधेन ।

'सोर्मनसी अलोमोषसी' इत्येतस्यावकाशः—सुशर्माणमधिनावं रुहेम, सुशर्मासि सुप्रतिष्ठानः, सुस्रोताः, सुपयाः, सुवर्चाः ।

'कपि पूर्वम्' इत्यस्यावकाशः—अयवकः, अतिलकः ।

इहोभयं प्राप्नोति—सुशर्मकः, सुस्रोतस्कः ।

'कपि पूर्वम्' इत्येतद्भवति विप्रतिषेधेन ॥

( ११८२ विधिसूत्रम् ॥ ६ । २ । १ आ. २३ )

## २७८१ कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ ६।२।१२१ ॥

( ६३६२ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पर्यादिभ्यः कूलादीनामाद्युदात्तत्वम् ॥ * ॥

( भाष्यम् ) पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन ।

१ 'विश्वामित्रः' इति च. पाठः ॥

'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु'इत्यस्यावकाशः—परित्रिगर्तम्, परिसौवीरम्।

कूलादीनामाद्युदात्तत्वस्यावकाशः—अनुकूलम्, अतिकूलम्।

इहोभयं प्राप्नोति—परिकूलम्।

कूलादीनामाद्युदात्तत्वं भवति विप्रतिषेधेन॥

(११८३ विधिसूत्रम्॥ ६।२।१ आ. २४)

## २७८९ चेलखेटकटुककाण्डं गर्हायाम्

॥ ६।२।१२६॥

(११८४ विधिसूत्रम्॥ ६।२।१ आ. २५)

## २७९० अकर्मधारये राज्यम्

॥ ६।२।१३०॥

(६३६३ विप्रतिषेधवार्तिकम्॥ १॥)

॥ *॥ चेलराज्यादिभ्योऽव्ययम्॥ *॥

(भाष्यम्) चेलराज्यादिस्वरादव्ययस्वरो भवति विप्रतिषेधेन।

चेलराज्यादिस्वरस्यावकाशः-भार्याचेलम्, पितृचेलम्, ब्राह्मणराज्यम्।

अव्ययस्वरस्यावकाशः—निष्कौशाम्बिः, निर्वाराणसिः।

इहोभयं प्राप्नोति—कुचेलम्, कुराज्यम्।

अव्ययस्वरो भवति विप्रतिषेधेन॥

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।

न वक्तव्यः।

इष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवति।

(११८५ अधिकारसूत्रम्॥ ६।२।१ आ. २६)

## २७९६ कुण्डं वनम्॥ ६।२।१३६॥

(६३६४ उपसंख्यानवार्तिकम्॥ १॥)

॥ *॥ कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम्॥ *॥

(भाष्यम्) कुण्डाद्युदात्तत्वे तत्समुदायग्रहणं कर्तव्यम्। वनसमुदायवाची चेत्स कुण्डशब्दो भवतीति वक्तव्यम्। इह मा भूत्—मृत्कुण्डम्॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

(प्रदीपः) कुण्डशब्दोऽस्ति भाजनविशेषवाची। अस्ति समुदायवाची,इक्षुकुण्डम्—इक्षुसमुदाय इत्यर्थः। तत्र वनशब्देन भाजनविशेषवाची निवर्त्यते। वनशब्दस्तु समुदायवाच्यप्यस्ति-आम्रवणमिति। जलपर्यायोऽप्यस्ति। ततश्च यथा तटाकादयो विशिष्टाधारजलवाचिनः, एवं कुण्डशब्दोऽपि। यथा—नीलकुण्डमिति[1]। ततश्च वनग्रहणेऽप्युपादीयमाने नास्त्यतिप्रसङ्गनिवृत्तिरित्याह—**कुण्डाद्युदात्तत्व इति**। तच्छब्देन पूर्वपदार्थपरामर्शः॥ **वनसमुदायवाचीति**। वनमेव समुदायः—वनसमुदायः, वनशब्दवाच्यत्वा च वनं समुदाय उच्यते। समुदायवाची वनशब्दोऽत्राश्रयणीयः, न तूदकवाचीत्यर्थः। **अन्ये त्वाहुः**—वनानां समुदायः—वनसमुदाय इति। तेन शरवणसमुदायः शरकुण्डशब्देनोच्यते॥ **मृत्कुण्डमिति**—भाजनविशेषवाची। विशिष्टसंस्थानाधारजलवाची वाऽत्र कुण्डशब्दः॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे षष्ठस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्॥

(उद्द्योतः) **भाजनविशेषेति**। जलाधारेत्यर्थः॥ तत्र कृतेऽपि तस्मिन्भाजनविशेषवाचिनि वृत्तिर्न सिध्यतीत्याह—**वनशब्दस्त्विति**॥ **ततश्चेति**। जलवाचिवनशब्देन भाजनविशेषाधारजलस्याप्यभिधानेन तन्निवृत्त्ययोग इति भावः॥ **नीलकुण्डमिति**। नीलाख्यनागस्य विशिष्टाधारस्थं जलमित्यर्थः॥ **तच्छब्देनेति**। पूर्वपदार्थसमुदाये यदि कुण्डशब्दस्तदाऽऽद्युदात्त इति वार्तिकार्थः। इक्षुकुण्डमित्युदाहरणम्॥ **वनमेवेति**। एवकारोऽभेदस्य द्योतकः कर्मधारयसमासत्वद्योतनाय॥ समुदाये वनाभेदे बीजमाह—**वनशब्दवाच्यत्वाचेति**। एवं च वनशब्दवाच्यसमुदायवाची चेत्कुण्डशब्द इति भाष्याक्षरार्थः, तत्फलितमाह—**समुदायवाचीति**॥

**अन्ये त्विति**। अत्र पक्षे वार्तिके तच्छब्देन वनमेवोच्यते॥ **विशिष्टसंस्थानाधारेति**-बहुव्रीहिः। मृत्पात्रविशेषस्थं जलमित्यर्थः।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्ट कृते भाष्यप्रदीपोद्द्योते षष्ठस्य द्वितीये पादे प्रथममाह्निकम्॥

(११८६ विधिसूत्रम्॥ ६।२।२ आ. २७)

## २७९९ गतिकारकोपपदात्कृत्

॥ ६।२।१३९॥

(गतिकारकपदप्रयोजनभाष्यम्)

गतिकारकोपपदादिति किमर्थम्?

इह मा भूत्—परमं कारकं-परमकारकम्।

गतिकारकोपपदादित्युच्यमानेऽप्यत्र प्राप्नोति।

एतदपि हि कारकम्।

इदं तर्हि—देवदत्तस्य कारकं-देवदत्तकारकम्॥

[1] 'नीलं कुण्डमिति' इति क. च. ठ. पाठः॥

इदं चाप्युदाहरणम्—परमं कारकं-परमकारकमिति ।

ननु चोक्तं-गतिकारकोपपदादित्युच्यमानेऽप्यत्र प्राप्नोति, एतदपि हि कारकमिति ।

नैतत्कारकम् । कारकविशेषणमेतत् । यावद् ब्रूयात्—प्रकृष्टं कारकं शोभनं कारकमिति, तावदेतत्परमकारकमिति ॥

( प्रदीपः ) परमकारकमिति । विचार्यं किंचिदत्रास्तीत्यस्योपन्यासः । यथा संप्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति, तथा कारकशब्दोऽपि । तदुक्तम्—

स्वशब्दैरभिधाने तु सधर्मो नाभिधीयते ।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥ इति ।

एवं च तद्विशेषणमपि परमशब्दः कारकवाची न भवतीति प्रत्युदाहरणम् ॥

एतदपीति । न ह्यकारकस्य कारकशब्देनाभिधानम्, तंतस्तद्विशेषणस्यापि कारकत्वमस्त्येव । यथा घटं करोति भीष्ममित्यादौ ॥

देवदत्तस्येति । शेषविवक्षायां षष्ठी । 'तृजकाभ्यां कर्तरि' 'कर्तरि च'इति कारकपष्ठ्याः समासप्रतिषेधादिह षष्ठीसमासो भवत्येव ॥

नैतत्कारकमिति । कृदन्ता हि क्रियायोग्यताविष्टद्रव्यवाचिनः, न तूद्भूतां कारकतां प्रतिपादयन्ति । परममित्येतच्च न करोतिक्रियाविशेषणम्, यतः कर्मकारकमेतत्स्यात्; अपि तु द्रव्यविशेषणम् । तथा च समानाधिकरणसमास उपपद्यते ॥

( उद्द्योतः ) असन्दिग्धे देवदत्तस्य कारकमित्युदाहरणे सति किमितीदमुपन्यस्यतेऽत आह—विचार्यमिति । न्यायव्युत्पादनार्थमेतदुदाहृतमित्यर्थः ॥

स्वशब्दैः—कारकसंप्रदानादिशब्दैः । स धर्मः—शक्तिलक्षणः । असावुपकारः—शक्तिलक्षणः । शब्दशक्तिस्वाभाव्यादिति भावः । आदिशब्दोऽत्राश्रयवाची, - विभक्तिरूपैराश्रयैर्वाचकैरित्यर्थः ॥

विशेष्यस्यैवं कारकत्वाभावे विशेषणस्य सुतरान्तत्वाभाव इत्याह—एवं चेति ॥

न हीति । उक्ताभिप्रायमजानतः शङ्केति भावः ॥

शेषविवक्षायामिति । कर्मषष्ठ्यां समासानुपपत्तिरिति भावः ॥

पाकक्रियाया अकरणदशायामपि पाचकादिव्यवहारदर्शनादाह—योग्यताविष्टेति ॥ उद्भूतां कारकतामिति । शक्तिविशेषरूपामित्यर्थः । एवञ्च कारकशब्दवाच्यस्यानुद्भूतशक्तिकस्यैतद्विशेषणं न तु 'कटं भीष्मं'इत्यादाविवोद्भूतशक्तिकस्येति नेदं कृत्प्रकृत्यर्थकारकमिति भाष्यार्थ इति भावः ॥ क्रियाविशेषणमिति । भेदेन विशेषणमित्यर्थः ॥ तद्भनयन्नाह—यतः कर्मेति । तथा सति षष्ठ्यापत्तिः । कृधात्वर्थफलेऽभेदेन विशेषणत्वे तु समासानापत्तिरिति भावः ॥ तदाह—तथा चेति ॥

( कृद्ग्रहणप्रयोजनभाष्यम् )

अथ कृद्ग्रहणं किमर्थम् ?

इह मा भूत्—निष्कौशाम्बिः, निर्वाराणसिरिति । अतं उत्तरं पठति—

( प्रदीपः ) अथ कृद्ग्रहणमिति । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो नान्यं प्रतीति प्रश्नः ॥

निष्कौशाम्बिरिति । क्रमणक्रियापेक्षमस्ति निसो गतित्वमिति भावः ॥

( उद्द्योतः ) क्रमणक्रियेति । शिष्यबुद्धिपरीक्षार्थं जात्युत्तरमिदमित्यर्थः ॥

( ६३६९ कृद्ग्रहणानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात् ॥ * ॥

( भाष्यम् ) गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणमनर्थकम् ।

किं कारणम् ?

अन्यस्योत्तरपदस्याभावात् । न ह्यन्यद्गत्यादिभ्य उत्तरपदमस्ति, अन्यदतः कृतः ।

किं कारणम् ?

धातोर्हि द्वये प्रत्यया विधीयन्ते-तिङः, कृतश्च । तत्र कृता सह समासो भवति, तिङा च न भवति । तत्रान्तरेण कृद्ग्रहणं कृत एव भविष्यति ॥

ननु चेदानीमेवोदाहृतम्—निष्कौशाम्बिः, निर्वाराणसिरिति ।

यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः, न च निसः कौशाम्बीशब्दं प्रति क्रियायोगः ॥

( प्रदीपः ) अन्यस्योत्तरपदस्याभावादिति । गतिकारकाभ्यां तावत्संबन्धात् क्रियावाचि कृदन्तमेवोत्तरपदमाक्षिप्तम् । उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते इति तेनापि कृदन्तमेवाक्षिप्तम् ॥

( उद्द्योतः ) संबन्धादिति । क्रियायोगे गतित्वात् क्रियाऽपेक्षत्वाच्च कारकत्वस्येति भावः ॥ कृदन्तमेवेति । तिङन्तस्य तूत्तरपदत्वासंभवः, केवलधातोश्च तत्त्वासंभवोऽतः कृदन्तग्रहणमिति भावः । योऽपि पर्यभूषदित्यादिस्तिङन्तोत्तरपदकः सोऽपि छान्दस इति बोध्यम् ॥ प्रत्यासत्त्योत्तरपदनिमित्तगतित्वादेरेव ग्रहणेन निष्कौशाम्ब्यादौ न दोष इत्याह—भाष्ये—न च निस इति ॥

१ 'ततश्च तद्विशेषण' इति च. झ. पाठः ॥
२ 'विशेष्यस्यैवं' इति झ. पाठः ॥
३ 'कर्मषष्ठ्या' इति घ. झ. पाठः ॥
४ 'अत उत्तरं पठति' इत्ययमंशः 'अ. क.' पुस्तकयोर्न दृश्यते ॥
५ 'मनर्थकम् । किं कारणम् ? अन्यस्यो-' इति छ. पाठः ॥

( ६३७० कृद्ग्रहणप्रयोजनवार्त्तिकम् ॥ २ ॥ )

॥ * ॥ कृत्प्रकृतौ वा गतित्वादधिकार्थं कृद्ग्रहणम् ॥ * ॥

( भाष्यम् ) कृत्प्रकृतौ तर्हि गतित्वादधिकार्थं कृद्ग्रहणं कर्तव्यम् ।

कृत्प्रकृतिर्धातुः । धातुं च प्रति क्रियायोगः । तत्र यत्क्रियायुक्तास्तं प्रति-इति इहैव स्यात्—प्रणीः, उन्नीः-इति ।

इह न स्यात्—प्रणायकः, उन्नायकः ॥

( प्रदीपः ) कृत्प्रकृतौ वेति । वाशब्दस्तर्ह्यर्थे । धातु-प्रत्ययसमुदायपरिग्रहार्थं कृद्ग्रहणम्, अन्यथा धातावेवोत्तरपदे स्वरः स्यादित्यर्थः ॥

प्रणीरिति । अव्ययस्वरापवादोऽत्र कृत्स्वरः ।

(उद्योतः) उक्तप्रयोजनस्य दूषितत्वात् वाशब्दानुपपत्तेराह—तर्ह्यर्थे इति ॥ अन्यथा धातावेवेति । 'यत्क्रिया'इत्यत्र यस्य क्रियेति षष्ठीसमासे यस्य धातोर्वाच्या क्रियेत्यर्थेन यत्तदोर्नित्यसंबन्धाद्धातोरेव ग्रहणे तस्यैव प्रत्यासत्तिन्यायेनोत्तरपदत्वे प्रणीरित्यादावेव स्यान्न तु 'प्रणायकः' इत्यादाविति भावः ॥

'प्रणीः'इत्यत्र समासान्तोदात्तत्वेनैव सिद्धेराह—अव्ययस्वरेति ॥

( वार्त्तिकप्रयोजननिरासभाष्यम् )

एतदपि नास्ति प्रयोजनम् । यत्क्रियायुक्ता इति नैवं विज्ञायते-यस्य क्रिया-यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति ।

कथं तर्हि ?

या क्रिया-यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति ।

न[1] च कश्चित्केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात् । केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वा कृदधिकस्य भविष्यति ॥

( प्रदीपः ) यस्य क्रियेति । अन्वयव्यतिरेकाभ्यां यस्य वाच्या क्रियेत्यर्थः । धातोरेव च क्रिया वाच्येति तमेव प्रति गत्युपसर्गसंज्ञाप्रसङ्गः ॥

या क्रियेति । क्रियालक्षणमर्थं प्रति गत्युपसर्गसंज्ञे भवतः । केवलायाश्च क्रियाया व्यवहारानङ्गत्वाद्धस्त्वन्तरसंसृष्टक्रियावाचिकृदन्तपरिग्रहः सिद्ध इत्यर्थः ॥

न च कश्चित् केवल इति । केवलक्रियावाचित्वात् 'केवलः' इत्युक्तम् ॥

( उद्योतः ) अर्थं प्रतीति । अर्थनिमित्तिका गत्यादिसंज्ञेत्यर्थः ॥

केवलायाश्चेति । शब्दे व्यवहारे साधनसंसृष्टाया एव क्रियाया अङ्गत्वं, केवलायाः शब्देन कचिदप्यप्रत्यायनादिति भावः ॥ केवलत्वमर्थद्वारा शब्दस्य विशेषणमित्याह—केवलेति । एवं च 'न कश्चित्केवलः' इत्यस्य विवरणं भाष्ये—यस्तस्यार्थस्येति । तन्मात्रार्थस्येत्यर्थ इति भावः ॥

( कृद्ग्रहणप्रयोजनभाष्यम् )

ननु चायं तस्यैवार्थस्य वाचकः—प्रणीः, उन्नीरिति ।

एषोऽपि हि कर्तृविशिष्टस्यैव[2] ॥

अयं तर्हि तस्यैवार्थस्य वाचकः—प्रभवनमिति ।

तस्मात्कृद्ग्रहणं कर्तव्यम् ॥

( प्रदीपः ) इतरस्तु शब्दकैवल्यमनेनोक्तमिति मत्वा चोदयति—ननु[3] चायमिति ॥

एषोऽपीति । तस्मात्कारकसहिताया एव क्रियायाः सर्वत्र प्रतिपादनात् प्रणीप्रयाणकादीनां न कश्चिद्भेदः ॥ प्रभवनमिति । भावे ल्युड्विधानात् कारकासंसृष्टैव क्रियाऽभिधीयते ॥

( उद्योतः ) तद्भनयन्नाह—भाष्ये—ननु चायं तस्यैवार्थस्य वाचक इति । प्रणीरित्यत्र शब्दान्तरमदृष्ट्वा क्रियामात्रार्थकत्वं मन्यते । एवं च 'इतरस्तु-'इत्यादि कैयटोक्तं किमर्थमिति चिन्त्यम् । किञ्च तथा सति केवलक्रियारूपस्येत्यर्थकस्य 'तस्यैवार्थस्य'इत्यस्य भाष्येऽसङ्गतिः ॥

भावे ल्युडिति । न तु करणादावित्यर्थः ॥

( कृद्ग्रहणेऽतिव्याप्त्यव्याप्तिनिरासभाष्यम् )

यदि कृद्ग्रहणं क्रियते, आमन्ते स्वरो न प्राप्नोति—प्रपचतितराम्, प्रजल्पतितराम्, प्रजल्पतितमाम् ॥

असति पुनः कृद्ग्रहणे क्रियाप्रधानमाख्यातम्, तस्यातिशये तरबुत्पद्यते । तरबन्तात् स्वार्थे आम्, तत्र यत्क्रियायुक्ता इति भवत्येव संघातं प्रति क्रियायोगः ।

न च कश्चित् केवलः शब्दोऽस्ति यस्तस्यार्थस्य वाचकः स्यात्, केवलस्तस्यार्थस्य वाचको नास्तीति कृत्वाऽधिकस्य भविष्यति ।

ननु चायं तस्यार्थस्य वाचकः—प्रभवनमिति ।

एषोऽपि हि द्रव्यविशिष्टस्य वाचकः ।

कथम् ?

कृदभिहितो भावो द्रव्यवद्भवति क्रियावदपीति ॥

(प्रदीपः) प्रपचतितरामिति । प्रशब्दस्यामन्तेन समासः । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः'[4]इत्यस्य त्वयमर्थः—यदा गत्यादीनां कृद्भिः सह समासो भवति तदा प्राक् सुबुत्पत्तेरिति, न तु कृद्भिरेव समास इति । तेन तद्धितान्तेनापि सुबुत्पत्तेः समासः प्रवर्तते ॥

[1] 'न च कश्चिच्छब्दोऽस्तिकेवलः' इति क. च. पाठः ॥
[2] 'कर्तृविशिष्टस्य' इति छ. झ. पाठः ॥
[3] 'ननु चेति' इत्येवं प्रतीकं अ. ठ. पुस्तकयोर्दृश्यते ॥
[4] 'सुप्युत्पन्ने समासः' इति च. झ. पाठः ॥

नन्वसत्यपि कृद्ग्रहणेऽत्र स्वरो न सिध्यति, संख्याकालसाधनोपग्रहविशिष्टायाः क्रियाया अभिधानान्न केवलाया इत्याह—**असति पुनरिति ॥**

**द्रव्यविशिष्टस्येति ।** धातुः साध्यरूपतां प्रतिपादयति, प्रत्ययस्तु द्रव्यधर्मलिङ्गसंख्यायुक्तमर्थमिति भावः ॥

**द्रव्यवदिति ।** प्रसिद्धघटादिद्रव्यापेक्षो वतिनिर्देशः । यथा घटादि द्रव्यं घटादिभिः शब्दैर्लिङ्गसंख्याकर्मादिशक्तियुक्तमभिधीयते तथा पाकादिभिः शब्दैः पाकादिको भावः ॥ **क्रियावदपीति ।** तेन भोक्तुं पाक इत्यादौ क्रियोपपदाश्रयः प्रत्ययः । तदेवमव्याप्तिप्रसङ्गात् प्रत्याख्यातं कृद्ग्रहणम् ॥

**(उद्द्योतः)** ननु गतिकारकोपपदानां कृद्भिरेव समासविधानात्कथमामन्तेन समासोऽत आह—**गतिकारकेति ।** अत्रेदं बोध्यम्—तरबन्तादत्यन्तस्वार्थिकत्वेन भिन्नपदसापेक्षसमासात्पूर्वमेवान्तरङ्गत्वादाम् । तत्राम्रहिततरबन्तस्य तिङन्तप्रकृतिकस्य आमं विना क्वाप्यर्थबोधकत्वाभावेन तेनैकार्थीभावस्य वक्तुमशक्यत्वम्, अतस्तरबन्तेन न समासः किन्त्वामन्तेनैवेति । 'सुप्युत्पन्ने समासः प्रवर्तते' इति पाठे तदुत्पत्त्यनन्तरमपि समासे क्षत्यभाव इति भावः । क्वचित्तु 'सुबुत्पत्तेः'इति पाठः । तत्राप्यनन्तरमिति शेषः । पूर्वमिति शेष इत्यन्ये । गतिसमासविधायके सुपेत्यस्य निवृत्तेरिति तद्भावः ॥

**सङ्ख्याकालेति ।** ततश्चामन्तं प्रति प्रशब्दस्यागतित्वात्स्वरासिद्धिरित्यर्थः ॥ भाष्ये—**द्रव्यविशिष्टस्येति ।** द्रव्यधर्मविशिष्टस्येत्यर्थः, तदाह—**धातुरित्यादि ॥**

ननु पाकादीनां द्रव्यरूपत्वे द्रव्यवदिति वतिर्न युक्तोऽत आह—**प्रसिद्धेति ।** न च 'प्रकृत्या'इत्यादौ केवलसत्त्वभूतक्रियामात्रवाचकमुत्तरपदमस्तीति वाच्यम् । उत्तरकालिकत्वादीनां त्वादिद्योत्यानां सत्त्वेन तत्रापि तन्मात्रार्थकत्वाभावात् । यत्र तु प्रपचतिदेश्यादौ स्वरो नेष्यते तत्र बाहुलकेन समासाभावाद्वारणीयः । तत्पुरुषत्वाभावाद्वा । अत एव 'उदात्तवता'इति 'कुगति–'इत्यत्र 'सुप्सुपा–'इत्यत्र च भाष्ये पठितं । तत्र **तिङिस्य** तिङ्घटितेनेत्यर्थः । क्रियाप्रधानेनेत्यर्थो वा । एतेन 'तिङि चोदात्तवति'इति सूत्रे 'यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति, प्रपचतितरां, तस्मान्नार्थस्तिङ्ग्रहणेन'इति भाष्योक्तं विरुध्यते । नित्यसमासत्वेन कृदुत्तरपदप्रकृतिस्वरे शेषनिघातेन प्रशब्दस्य निघातसिद्धेरिति परास्तम् । 'सुप्सुपा' इत्यनेन समासे तत्पुरुषत्वाभावेनास्याप्राप्तौ तद्ग्रन्थसामञ्जस्यात् । तेन समासस्य वैकल्पिकत्वेन तदभावे तद्ग्रन्थसत्त्वाच्च । ईदृशे विषये 'कुगति–'इति समासस्तु न, तत्राप्यतिङिस्यपकर्षात् । अतिङिस्य तिङन्ताघटितः समास इत्यर्थादिति दिक् ।

**प्रत्याख्यातमिति ।** परे तु 'कर्तृविशिष्टस्य'इत्यस्य 'कर्तृविशेषणक्रियावाचकः' इति प्रणायकतोऽविशेष इत्यर्थः, 'प्रभवनम्'इत्ययं तुविशेष्यतया तस्यैवार्थस्य वाचक इति कृद्ग्रहणं कर्तव्यमिति सिद्धान्तिनोक्ते, एकदेशिना–प्रपचतितरामित्यादौ समासाभावे शङ्किते शङ्कान्तमेव भाष्यम् । **समाधिस्तु** निघातविधायके तिङ्ग्रहणप्रत्याख्यानादव्ययपूर्वपदप्रकृतिस्वरतः परत्वात्तेन प्रशब्दस्य निघाते सिद्धे नानेन तत्रार्थ इति गूढः[2] । अत एवात्र नार्थः कृद्ग्रहणेनेति भाष्ये नोक्तम् । तस्मात्क्रियाविशेषणकत्वोधजनकेनापि समासे स्वरप्रवृत्त्यर्थं कृद्ग्रहणम् । किञ्च प्रधानभूतशुद्धक्रियाबोधकेऽत्रैव स्यान्नतु क्वापि कृदन्ते इति कृद्ग्रहणमावश्यकम् । इदमेव ज्ञापयति—'क्रियावाचक'ग्रहणे प्रधानीभूतसाध्यमात्रावस्थक्रियाग्रहणम् । तेन तुमुन्—भोक्तुं गतो भोक्तुं पाक इत्यादौ न । यत्तु क्रियारूपार्थनिमित्तं कार्यं तत्तु गुणभूतायां सिद्धावस्थक्रियायामपि भवति । यथा कारकविभक्तयः क्त्वसुजादि चेत्याहुः ॥ **तेन भोक्तुमिति ।** इदं चिन्त्यम्, पाक इत्यादौ द्रव्यत्वस्य क्त्वेत्यादौ क्रियात्वस्येति व्यवस्थायाः 'एकस्य सक्तच'इति सूत्रे स्वयमुक्तत्वात् । किञ्च एवं व्याख्याने 'प्रभवनम्'इत्यत्रैव क्रियावाचकत्वादत्र तुमुन्वत्स्वरः स्यादिति सर्वत्र स्वरप्रवृत्त्यर्थं कृद्ग्रहणमावश्यकं स्यादिति दिक् ॥

( ११८७ अधिकारसूत्रम् ॥ ६ । २ । २ आ. २८ )

## २८०३ अन्तः ॥ ६ । २ । १४३ ॥

( अन्तशब्दस्य विशेषणद्वयाक्षेपकभाष्यम् )

**किं समासस्यान्त उदात्तो भवति, आहोस्विदुत्तरपदस्य ?**

**कुतः संदेहः ?**

**उभयं प्रकृतम्, तत्रान्यतरच्छक्यं विशेषयितुम् ।**

**कश्चात्र विशेषः ?**

( प्रदीपः ) **उभयं प्रकृतमिति ।** समासस्येत्यपि प्रकृतम्, 'उत्तरपदादिः' इत्यत उत्तरपदग्रहणमपि ॥ **तत्रान्यतरदिति ।** अन्तोदात्तविधानेन विशेषेऽवस्थापयितुमित्यर्थः । अथवा समासेनोत्तरपदमुत्तरपदेन वा समास इत्यर्थः ॥

( उद्द्योतः ) ननु तयोर्विशेषणत्वाद्विशेषयितुमित्यनुपपन्नमत आह—**विशेषेऽवस्थापयितुमिति ।** अन्तोदात्तस्यानित्वलक्षणे विशेषेऽन्यतरस्यावस्थापनार्थमित्यर्थः ॥ **अथवेति ।** समाससंबन्धि यदुत्तरपदं तस्यान्त इति वा, उत्तरपदान्त्यस्य समासस्येति वा–इत्यर्थः ॥

( ६३७१ समासस्यान्तस्वीकारे दोषवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन्तोदात्तत्वं समासस्येति चेत्कप्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) **अन्तोदात्तत्वं समासस्येति चेत् कप्युपसंख्यानं कर्तव्यम् ।**

---

१ 'इत्यादौ कृद्ग्रहणात्स्वराभावे शङ्किते' इति ग. पाठः । 'इत्यादौ स्वराभावे शङ्किते' इति ङ. पाठः ॥

२ गूढ इति । प्रपचतितरामित्यादौ 'उदात्तवता गतिमता' इत्यामन्तेन समासेऽव्ययस्वरात्परत्वात्तिङि चोदात्तवतीति गतेर्निघातः प्रशब्दस्येति तत्र गतिकारकोपपदादित्यस्योपयोग इति कृद्ग्रहणमधिकार्थसंग्राहकमेवेति भावः । ततोऽन्यार्थासंस्पृष्टक्रियामात्रार्थकोत्तरपदासंभवेन प्रणीः प्रणायकः प्रभवनमित्यादेरविशेषेण सर्वत्रैव प्रवृत्तिर्दुर्वारेति व्यर्थं कृद्ग्रहणमित्यर्थकमन्यो व्यर्थ एव स्यात् । साध्यमात्रस्वभावप्रधानीभूतक्रियाग्रहणज्ञापनार्थं कृद्ग्रहणमिति तु सर्वत्र साम्यप्रतिपादकभाष्यविरोधादयुक्तमेव । प्रभवनमित्यत्र प्रधानीभूतसाध्यमात्रस्वभावक्रियाविशेष्यतया प्रतिपाद्यत इत्यर्थोऽप्यसङ्गतः, लिङ्गसंख्यासंसृष्टप्रतीतेः । अन्यासंसृष्टार्थवाचकत्वाभावप्रतिपादकभाष्यविरोधात् । प्रत्याख्यानमित्यनुक्तिस्तु स्पष्टत्वादेव–इति केचित् ॥

'इदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने' कपि चेति वक्तव्यम्[1] ।

इहापि यथा स्यात्—इदंप्रथमकाः ।

अस्तु तर्ह्युत्तरपदस्य ॥

( प्रदीपः ) इदंप्रथमका इति । मशब्दाकारस्यान्तोदात्तत्वमिष्यते, कपस्तु समासान्तत्वात् प्राप्नोतीति 'कपि च' इति वक्तव्यम् । तेन कपि परतः पूर्वस्योदात्तत्वं सिध्यति ॥

( उद्योतः ) कपस्तु समासान्तत्वादिति । समासान्ताः समासस्यैवान्तावयवाः, न तूत्तरपदावयवा इति भावः । किञ्च समासान्तानां समासार्थेऽलौकिकप्रक्रियावाक्ये एव प्रवृत्तिः, अन्यथा समासान्तापेक्षया परत्वात् 'इदमेतत्तद्भ्यः–' इति स्वरे, पश्चात् कपि, तत्र स्वरसिद्धेर्वचनारम्भो व्यर्थः स्यादिति बोध्यम् । उत्तरपदस्यान्तोदात्तत्वविधाने तु तस्यान्तो 'म'शब्दाकार इतीष्टस्वरसिद्धिः ॥

( ६३७२ उत्तरपदस्यान्तस्वीकारे दोषवार्तिकम् ॥ २ ॥ )

॥ * ॥ उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् ॥ * ॥

( भाष्यम् ) उत्तरपदस्यान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं वक्तव्यम् । अनृचः, बह्वृचः ॥

(प्रदीपः) अनृच इति । अकारः समासस्यावयवो नोत्तरपदस्य–इति तस्योदात्तत्वं न प्राप्नोति ॥

( उत्तरपदस्यान्तस्वीकारे दोषभाष्यम् )

अपर आह[2]—उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वं वक्तव्यम् । अज्ञकः, अस्वकः । 'कपि पूर्वम्' ( ६।२।१७३ ) इत्यस्यापवादः–'ह्रस्वान्तेऽन्त्यात्पूर्वम्' ( १७४ ) इति ।

तत्र ह्रस्वान्तेऽन्त्यात्पूर्वं उदात्तभावी नास्तीति कृत्वोत्सर्गेणान्तोदात्तत्वं प्राप्नोति ॥

( प्रदीपः ) अपर आहेति । प्रकारान्तरसद्भावात् पूर्वस्माद्भेदः ॥ अज्ञक इति । अत्र कप उदात्तत्वमिष्यते, तच्च उत्तरपदस्य कार्यित्वे न सिध्यति । समासे तु कार्यभाजि सिध्यति ॥ कपि पूर्वमित्यस्यापवाद इति । अज्ञकशब्दे नञः परस्य कपि पूर्वस्य एकाच्त्वादन्त्यात् पूर्वं उदात्तभावी नास्तीति 'नञ्सुभ्याम्' इत्यनेन स्वरेण भाव्यम् । स च स्वरः कपो न सिध्यति ॥

( उद्योतः ) ननूदाहरणान्तरप्रदर्शनमात्रेण कथं पक्षान्तरत्वमत आह—प्रकारान्तरेति । तच्च 'कपि पूर्वमित्यस्यापवादः' इत्यादिना भाष्ये एव स्फुटम् ॥ नञ्सुभ्यामित्यनेनेति । 'कपि पूर्वम्' इत्येतत् 'अन्त्यात्–' इत्यनेन बाधितमिति तन्न प्रवर्तते । 'ह्रस्वान्तेऽन्त्यात्–' इत्यपि न, निमित्ताभावात्–इति उत्सर्गेण 'नञ्सुभ्यां' इत्यनेनैव भाव्यमित्यर्थः ॥

( ६३७३ अपरमतप्राप्तदोषवारकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ न वा कपि पूर्ववचनं ज्ञापकमुत्तरपदान्तोदात्तत्वस्य ॥ * ॥

( भाष्यम् ) न वा एष दोषः ।

किं कारणम् ?

यदयं कपि पूर्वमित्याह, तत् ज्ञापयत्याचार्यः–उत्तरपदस्यान्तोदात्तत्वं न भवतीति ॥

एवमपि कुत एतत्—समासस्यान्त उदात्तो भवतीति ?

( प्रदीपः ) नन्वन्त्यात् पूर्वो यत्रोदात्तभाव्यस्ति–अयवक इत्यादौ तत्र 'कपि पूर्वम्' इत्येतत् बाध्यताम्, अज्ञकादौ तु कथं बाध्यते ? न ह्यपवादोऽप्रवर्तमान एवोत्सर्गं बाधते । नैष दोषः । यथा 'हलादिः शेषः' इत्यभ्यासजातेराश्रयणादाटतुरित्यादावप्यनादेर्हलो निवृत्तिर्भवति, एवं 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इत्यत्रापि ह्रस्वजातेराश्रयणात्तक्रकौण्डिन्यन्यायात्सर्वत्र ह्रस्वान्ते 'कपि पूर्वम्' इत्यस्याप्रवृत्तिः । अथवा 'ह्रस्वान्तेऽन्त्यात्' इत्येव वक्तव्यम् । 'कपि पूर्वम्' इत्यतः पूर्वग्रहणमनुवर्तिष्यते । तत्र पूर्वग्रहणं नियमार्थम्–ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति न तु कपि पूर्वमिति । एवं पक्षद्वये दोषमभिधाय लिङ्गेन समासस्य कार्यित्वं प्रतिपादयितुमाह—न वेति । अकुमारीक इत्यादौ कपि पूर्वस्य उदात्तार्थं 'कपि पूर्वम्' इत्युच्यते । यदि च 'नञ्सुभ्याम्' इत्यनेनोत्तरपदस्यान्तोदात्तत्वं स्यात्तत्स्तेनैव सिद्धत्वात् 'कपि पूर्वम्' इति न कर्तव्यं स्यात् ॥

( उद्योतः ) नन्वन्त्यादिति । यद्विषयेऽपवादप्रवृत्तिस्तस्यामेवोत्सर्गबाधो न्याय्यो नान्यत्रेति भावः ॥ परिहरति—नैष इति ॥ 'हलादिः शेषः' इत्यत्रास्य समाधेरजादिद्वित्वविषये दोषापत्त्या दूषितत्वादाह—अथवेति ॥ तत्रेति । पूर्वग्रहणाद्वाक्यद्वयम् । तत्राद्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते, द्वितीयेन नियमः क्रियत इत्यर्थः ॥ लिङ्गेन समासस्येति । 'नञ्सुभ्यामित्यत्र' इति शेषः ॥

( ६३७४ दोषवारणसमर्थकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ प्रकरणाच्च समासान्तोदात्तत्वम् ॥ * ॥

( भाष्यम् ) प्रकृतं समासग्रहणमनुवर्तते ।

क्व प्रकृतम् ?

'चौ' 'समासस्य' ( ६।१।२२२;२२३ ) इति ॥

( प्रथमदोषनिवारकभाष्यम् )

ननु चोक्तम्—अन्तोदात्तत्वं समासस्येति चेत् कपि उपसंख्यानमिति ।

नैष दोषः । उत्तरपदग्रहणमपि प्रकृतमनुवर्तते ।

[1] 'अन्तोदात्तत्वञ्च वक्तव्यम्' इति च. पाठः ॥

[2] 'अपर आह–*उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम्* उत्तरपदान्तोदात्तत्वे' इति अ. क. ङ. पाठः ॥

क्व प्रकृतम् ?

'उत्तरपदादिः' ( ६।२।१११ ) इति ।

तत्रैवमभिसंबन्धः करिष्यते—नञ्सुभ्यां समासस्यान्त उदात्तो भवतीति ।

इदमेतत्तञ्चः प्रथमपूरणयोः क्रियागणने, उत्तरपदस्येति ॥

( प्रदीपः ) नञ्सुभ्यामिति । नञ्सुभ्यां यदुत्तरपदं[1] तदन्तस्य समासस्येत्यर्थः ॥

( उद्द्योतः ) नञ्सुभ्यां समासस्येत्यत्र पञ्चम्यनन्वयमाशङ्क्याह—नञ्सुभ्यामिति ॥

( ११८८ विधिसूत्रम् ॥ ६ । २ । २ आ. २९ )

## २८०८ कारकाद्दत्तश्रुतयोरेवाशिषि ॥ ६ । २ । १४८ ॥

( प्रदीपः ) 'संज्ञायामनाचितादीनाम्'इति विहितमन्तोदात्तत्वमनेन नियम्यते, तेन देवपालित इत्यादौ न भवति । 'तृतीया कर्मणि' इत्यनेन तु पूर्वपदप्रकृतिस्वरो भवति ॥

( उद्द्योतः ) ननु संज्ञायां गतिकारकोपपदात्क्तान्तमन्तोदात्तमित्येव सिद्धे किमर्थमिदमत आह—संज्ञायामिति । 'कारकाद्दत्तश्रुतयोरेवोत्तरपदयोर्नान्यस्य'इति नियमः । 'संज्ञायामनाचिता—'इति च 'तृतीया कर्मणि' इत्यस्यापवादः । तत्राशीर्विषयनियमादनाशिषि संज्ञायामिति प्राप्नोतीति प्रतिषेधारम्भः ॥

( ६३७५ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधः ॥ * ॥

( भाष्यम् ) कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः । अनाहतो नदति देवदत्तः ॥

( प्रदीपः ) अनाहत इति । देवदत्तशब्दः शङ्खविशेषस्य संज्ञा । तत्राशीरभावादन्तोदात्तत्वाभावः ॥

( उद्द्योतः ) शङ्खविशेषस्येति । न हि तत्र देवा एनं देयासुरित्यर्थप्रतीतिरिति भावः । तेनात्रापि पूर्वपदप्रकृतिस्वरत्वमेव ॥

( ६३७६ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तूभयनियमात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

उभयनियमात् । उभयतो नियमः करिष्यते—कारकाद्दत्तश्रुतयोरेवाशिषि, आशिष्येव कारकाद्दत्तश्रुतयोरिति ॥

( प्रदीपः ) सिद्धं त्विति । तन्त्रेण सूत्रद्वयस्योच्चारणादेकं सूत्रम् ॥ आशिष्येवेति । भिन्नक्रमत्वादेवकारस्येति भावः ॥

( उद्द्योतः ) एकवाक्ये नियमद्वयालाभः, यदि तल्लाभाय सूत्रद्वयं स्वीक्रियते तदा एकसूत्रपाठोऽसङ्गतोऽत आह—तन्त्रेणेति ॥ एकं सूत्रमिति । 'पाणिनिना पठितम्' इति शेषः ॥

( ११८९ विधिसूत्रम् ॥ ६ । २ । २ आ. ३० )

## २८१९ संज्ञायां मित्राजिनयोः ॥ ६ । २ । १६५ ॥

( ६३७७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ऋषिप्रतिषेधो मित्रे ॥ * ॥

( भाष्यम् ) ऋषिप्रतिषेधो मित्रे वक्तव्यः । विश्वामित्र ऋषिः ॥

( प्रदीपः ) विश्वामित्र इति । 'मित्रे चर्षौ' इति दीर्घः । परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते, ततः 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वं भवति ॥

( उद्द्योतः ) विश्वामित्रे विश्वं मित्रमस्येति विग्रहः । परत्वादिति । 'बहुव्रीहौ विश्वं'—इत्यस्यावकाशः—विश्वदेवः, विश्वयशाः । अस्यावकाशः—देवमित्रः ॥

( ११९० विधिसूत्रम् ॥ ६ । २ । २ आ. ३१ )

## २८३५ बहोर्नञ्वदुत्तरपदभूम्नि ॥ ६ । २ । १७५ ॥

( सूत्रप्रयोजननिराकरणभाष्यम् )

किमर्थं बहोर्नञ्वदतिदेशः क्रियते, न 'नञ्सुबहुभ्यः' इत्येवोच्येत ?

नैवं शक्यम् । 'उत्तरपदभूम्नि'इति वक्ष्यति तद्बहोरेव यथा स्यात्, नञ्सुभ्यां मा भूदिति ।

नैतदस्ति प्रयोजनम् । एकयोगेऽपि हि सति यस्योत्तरपदभूमाऽस्ति तस्य भविष्यति ।

कस्य चास्ति ?

बहोरेव ॥

इदं तर्हि प्रयोजनम्—'न गुणादयोऽवयवाः' ( १७६ ) इति वक्ष्यति तद् बहोरेव यथा स्यात्, नञ्सुभ्यां मा भूदिति ।

एतदपि नास्ति प्रयोजनम् । एकयोगेऽपि हि सति यस्य गुणादयोऽवयवाः सन्ति तस्य भविष्यति ।

कस्य च सन्ति ?

बहोरेव ॥

---

[1] 'यदुत्तरपदं तस्य समासः' इति क. ठ. पाठः ॥

अत उत्तरं पठति—

( प्रदीपः ) **यस्य गुणादय इति** । यस्य विशेष्या इत्यर्थः । ननु च 'अगुणः-सुगुणः' इत्यादौ नञ्सुभ्यामुत्तरे गुणादयः सन्त्येव । एवं तर्हुत्तरपदभूमग्रहणेन पूर्वपदस्य विशेषणात् बहोरेव परेषां गुणादीनां प्रतिषेधो भविष्यति—यस्योत्तरपदभूम्नि वर्तमानस्येति हि भाष्यकाराभिप्रायः ॥

( उद्द्योतः ) ननु च न बह्वर्थस्य गुणादयोऽवयवप्रतिपादकाः किन्तु रज्ज्वादीनाम्, बहुगुणा रज्जुरित्यादौ तथैव प्रतीतेः । एवञ्च[1] यस्य गुणादयोऽवयवा इत्ययुक्तमत आह—**यस्य विशेष्या इति** ॥ उक्तेऽर्थे भाष्यं सोपस्कारं कृत्वा योजयति—**यस्योत्तरपदेति** ॥

( ६३७८ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥*॥ बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् ॥*॥**

( भाष्यम् ) **बहोर्नञ्वदतिदेशः क्रियते, उत्तरपदस्याद्युदात्तार्थम् । उत्तरपदस्याद्युदात्तत्वं यथा स्यात् ।**

**विदेशस्थमपि यन्नञः कार्यं तदपि बहोर्यथा स्यात्—'नञो जरमरमित्रमृताः' ( ६।२।११६ ) । अजरः, अमरः[2], बहुजरः, बहुमित्रः, बहुमृतः[3] ॥**

( ११९१ विधिसूत्रम् ॥ ६ । २ । २ आ. ३२ )

## २८३७ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ॥ ६ । २ । १७७ ॥

( प्रदीपः ) नित्यं यदेकरूपं तदिह ध्रुवं गृह्यते । निर्गतं ललाटमस्य निर्ललाट इति । ललाटस्य नित्यं निर्गमनात् ध्रुवत्वम् । इह तु न भवत्यन्तोदात्तत्वम्—उद्बाहुः क्रोशतीति, न हि बाहोर्नित्यमूर्ध्वदिगवस्थानम् ॥

( उद्द्योतः ) ननु शरीरस्यानित्यत्वात्कथं स्वाङ्गस्य ध्रुवत्वं विशेषणमत आह—**नित्यं यदेकरूपमिति** । यावत्स्थिति सर्वदैकरूपमित्यर्थः ॥ **न हीति** । किन्तु क्रोशनसमये एवेति भावः ॥

( ६३७९ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं ध्रुवम् ॥ * ॥**

( भाष्यम् ) **मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं ध्रुवं भवति विप्रतिषेधेन ।**

**मुखस्यान्तोदात्तत्वस्यावकाशः—गौरमुखः, श्लक्ष्णमुखः ।**

**'उपसर्गात्स्वाङ्गं ध्रुवम्'इत्यस्यावकाशः-प्रस्फिक्, प्रोदरः ।**

**इहोभयं प्राप्नोति—प्रमुखः ।**

**'उपसर्गात्स्वाङ्गं ध्रुवम्'इत्येतद्भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **प्रमुख इति** । यस्य नित्यं प्रगतं मुखं स प्रमुखः । अत्राहुः-'मुखं स्वाङ्गम्'इति प्राप्तिः 'नाव्ययदिक्छब्द' इति प्रतिषिद्धा, ततो विप्रतिषेधानुपपत्तिः । उच्यते-'नाव्ययदिक्छब्द-'इति प्रतिषेधो बाधकोऽस्तु, अथ 'उपसर्गात्-'इति । तत्र परत्वात्प्रतिषेधं बाधित्वैतदन्तोदात्तत्वं बाधकं वर्तते ॥

( उद्द्योतः ) प्रगतं-प्रकृष्टं । **विप्रतिषेधानुपपत्तिरिति** । प्रतिषेधविषयपरिहारेण विधेः प्रवृत्त्याऽत्र प्राप्त्यभावादिति भावः ॥ **तत्र परत्वादिति** । विधिविप्रतिषेधद्वाराऽयमेव विप्रतिषेधो वार्तिकतात्पर्यविषय इति भावः ॥

( विप्रतिषेधप्रयोजनभाष्यम् )

**कः पुनरत्र विशेषः, तेन[4] वा सत्यनेन[5] वा ?**

**सापवादः[6] स विधिः, अयं पुनर्निरपवादः[7] ।**

**अव्ययात्तस्य[8] प्रतिषेधोऽपवादः ॥**

( ११९२ विधिसूत्रम् ॥ ६ । २ । २ आ. ३३ )

## २८४५ अभेर्मुखम् ॥ ६ । २ । १८५ ॥

( ११९३ विधिसूत्रम् ॥ ६ । २ । २ आ. ३४ )

## २८४६ अपाच्च ॥ ६ । २ । १८६ ॥

( सूत्राक्षेपभाष्यम् )

**किमर्थमिदमुच्यते, न 'उपसर्गात्स्वाङ्गं ध्रुवम्' इत्येव सिद्धम् ?**

( ६३८० सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अभेर्मुखमपाच्चाध्रुवार्थम् ॥ * ॥**

( भाष्यम् ) **अध्रुवार्थोऽयमारम्भः ॥**

( ६३८१ प्रयोजनान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अबहुव्रीह्यर्थो वा ॥ * ॥**

( भाष्यम् ) **अथवा बहुव्रीहेरिति वर्तते । अबहुव्रीह्यर्थोऽयमारम्भः ॥**

( उद्द्योतः ) भाष्ये अध्रुवार्थोऽबहुव्रीह्यर्थ इति । 'अस्वा-

---

१ 'एवं यस्य' इति ज. पाठः ॥
२ 'अमरः, अमित्रः, अमृतः' इति झ. च. पाठः ॥
३ 'बहुमृतः' एतदुदाहरणं छ. पुस्तके न दृश्यते ॥
४ तेन-'मुखं स्वाङ्गम्' इत्यनेन ॥
५ अनेन-'उपसर्गात्' इति प्रकृतसूत्रेण ॥
६ 'सापवादकः' इति च. छ. झ. पाठः ॥
७ 'पुनर्निरपवादकः' इति च. छ. झ. पाठः ॥
८ अव्ययात्तस्येति । अव्ययात्परस्य मुखस्य 'नाव्ययदिक्छब्द-' इति विहितः प्रतिषेधः 'मुखं स्वाङ्गम्' इत्यस्यापवाद इत्यर्थः ॥

ङ्गार्थः' इति तु नोक्तं, स्वाङ्गग्रहणस्यात्राप्यनुवृत्तेरिष्टत्वात् । एवं च वृत्तिश्चिन्त्यैवेति[1] भावः ॥

( ११९४ विधिसूत्रम् ॥ ६ । २ । २ आ. ३५ )

## २८४७ स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनाम नाम च ॥ ६ । २ । १८७ ॥

( सूत्रप्रयोजनाक्षेपभाष्यम् )

**स्फिगपूतग्रहणं किमर्थम्, न 'उपसर्गात्स्वाङ्गं ध्रुवम्'इत्येव सिद्धम्?**

( ६३७७ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स्फिगपूतग्रहणं च ॥ * ॥**

( भाष्यम् ) **किम्?**

**अध्रुवार्थमबहुव्रीह्यर्थमेव वा[2] ॥**

( ११९५ विधिसूत्रम् ॥ ६ । २ । २ आ. ३६ )

## २८५१ अतेरकृत्पदे ॥ ६ । २ । १९१ ॥

( ६३७८ न्यासान्तरबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अतेर्धातुलोपे ॥ * ॥**

( भाष्यम् ) **अतेर्धातुलोप इति वक्तव्यम् । 'अकृत्पदे' इति ह्युच्यमाने इह च प्रसज्येत—शोभनो गार्ग्यः–अतिगार्ग्य इति । इह च न स्यात्–अतिकारकः, अतिपदा शक्करी ॥**

( प्रदीपः ) **अतिकारक इति ।** कारकमतिक्रान्त इति समासः । अतिशब्दो वृत्तिविषये क्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एवात्र लोपः । स्वरव्यङ्गयश्चात्र धातुलोपः । यदा पूर्वपदप्रकृतिस्वरस्तदा शोभनः कारक इत्यतिकारकशब्दस्यार्थः ॥

( उद्योतः ) **शोभनः कारक इति ।** 'स्वती पूजायाम्'इति समासः ॥

( ११९६ विधिसूत्रम् ॥ ६ । २ । २ आ. ३७ )

## २८५७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ ६ । २ । १९७ ॥

( प्रदीपः ) पूर्वपदप्रकृतिस्वरापवादो योगः ॥

( उद्योतः ) **पूर्वपदेति ।** 'बहुव्रीहौ प्रकृत्या–'इति प्राप्तस्य पूर्वपदप्रकृतिस्वरस्यापवाद इत्यर्थः ॥

( पक्षद्वयोपस्थापकभाष्यम् )

**किमिदं द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणम्, आहोस्विन्नकारान्तग्रहणम्[3]? कश्चात्र विशेषः?**

( प्रदीपः ) **किमिदमिति ।** ननु चाकारान्तनिर्देशे मूर्धस्विति भाव्यमिति द्वैतानुपपत्तिः । उच्यते—न शब्दाश्रयं द्वैतं किं तु कार्यिभेदाश्रयम् । यदा समासस्यान्तोदात्तत्वं विधीयते नित्यश्च समासान्त इति पक्षस्तदाऽकारान्तग्रहणमेव सामर्थ्यात् भवति । यदा तूत्तरपदस्यान्तोदात्त इति पक्षस्तदा कृतेऽपि समासान्ते तस्योत्तरपदे अनन्तर्भावान्नकारान्तस्य स्वरविधिरिति पक्षोऽवतिष्ठते ॥

( उद्योतः ) **कार्यिभेदाश्रयमिति ।** नकारान्तः कार्यी, उताऽकारान्त इति विचार्यते । तत्कथम्? इत्यत आह—**यदेति ॥ सामर्थ्यादिति ।** नकारान्तनिर्देशेऽपि तद्रूपसमासाभावात्सामर्थ्यादकारान्तस्यैव कार्यित्वमित्यर्थः । अत एव पाद्दत्साहचर्यमपि न विरुध्यते ॥ **कृतेऽपि समासान्ते इति ।** 'द्वित्रिभ्यां ष मूर्ध्नः' इत्यनेन ॥

( ६३७९ प्रथमपक्षे दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानं कर्तव्यम् । द्विमूर्धा, त्रिमूर्धा॥ अस्तु तर्हि नकारान्तग्रहणम् ।**

( प्रदीपः ) **नकारान्तस्योपसंख्यानमिति ।** समासश्चेत् कार्यी नित्यश्च समासान्तस्तदा नकारान्तस्य साधुत्वं स्वरश्चोपसंख्येय इत्यर्थः ॥

( उद्योतः ) **नकारान्तस्य साधुत्वमिति ।** नित्यसमासान्तविधानादसाधुत्वप्रसङ्ग इति भावः ॥

( ६३८० द्वितीयपक्षे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ नकारान्तेऽकारान्तस्य ॥ * ॥**

( भाष्यम् ) **नकारान्ते सत्यकारान्तस्योपसंख्यानं कर्तव्यम् । द्विमूर्धः, त्रिमूर्धः ॥**

( प्रदीपः ) **द्विमूर्ध इति ।** यदोत्तरपदस्य कार्यित्वं तदा कृते समासान्ते उत्तरपदस्यान्तोदात्तत्वं विधीयमानं प्रत्ययस्य न प्राप्नोति ॥

( उद्योतः ) **प्रत्ययस्य न प्राप्नोतीति ।** समासावयवत्वात्तस्योत्तरपदेऽनन्तर्भावादिति[4] भावः ॥

---

१ वृत्तिश्चिन्त्यैवेति । स्वाङ्गग्रहणस्यात्राप्यनुवृत्तेरिष्टत्वेन 'उपसर्गात्स्वाङ्गमिति सिद्धे वचनमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थञ्च' इति वृत्तिरुपेक्ष्येति भावः । कौमुदीकृद्भिरपि 'अस्वाङ्गार्थंचेदम्' इत्युक्तं वृत्तिकाराभिप्रायेण ॥

२ 'अबहुव्रीह्यर्थमित्येव वा' इति छ. पाठः ॥

३ 'ग्रहणमिति' इति अ. पाठः ॥

४ अनन्तर्भावादिति । ननु द्विमूर्ध इत्यत्रोत्तरपदस्य नकारान्तत्वाभावेन द्वित्रिभ्यामित्येतत्सूत्रं न प्रवर्तेतेति चेन्न । उत्तरपदानन्तर्भावेऽपि समासावयवत्वान्नकारान्तस्य समासचरमावयवत्वाभावेऽपि भूतपूर्वगत्या चरमावयवत्वं द्विमूर्ध इत्यादौ मूर्धन्-शब्दस्य बोध्यमित्याशयः ॥

( ६३८१ द्वितीयपक्षे दोषोद्धारवार्तिकम् ॥ ३ ॥ )

॥ * ॥ उदात्तलोपात्सिद्धम् ॥ * ॥

( भाष्यम् ) अस्तु तर्हि नकारान्तग्रहणम्, अन्तोदात्तत्वे कृते लोपः, उदात्तनिवृत्तिस्वरेण सिद्धम् ॥

( प्रदीपः ) उदात्तलोपादिति । उत्तरपदस्यान्तोदात्तत्वे सति शेषनिघातेन प्रत्ययोऽनुदात्तः, तत्र 'अनुदात्तस्य च यत्रोदात्तलोपः' इति प्रत्ययस्योदात्तत्वं सिद्धमित्यर्थः ॥

( दोषोद्धाराक्षेपभाष्यम् )

इदमिह संप्रधार्यम्—अन्तोदात्तत्वं क्रियतां लोप इति, किमत्र कर्तव्यम्?

परत्वाल्लोपः ॥

( प्रदीपः ) परत्वाल्लोप इति । ततश्चोदात्तलोपो न भवतीत्यर्थः ॥

( उद्योतः ) उदात्तलोपो न भवतीति । मूर्धन्शब्द आद्युदात्त इति भावः ॥

( समाधानभाष्यम् )

एवं तर्हि इदमिह संप्रधार्यम्—अन्तोदात्तत्वं क्रियतां समासान्त इति, किमत्र कर्तव्यम्?

परत्वादन्तोदात्तत्वम् ।

नित्यः समासान्तः । कृतेऽप्यन्तोदात्तत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति ।

अन्तोदात्तत्वमपि नित्यम् । कृतेऽपि समासान्ते प्राप्नोत्यकृतेऽपि प्राप्नोति ।

अनित्यमन्तोदात्तत्वम्, न हि कृते समासान्ते प्राप्नोति । परत्वाल्लोपेन भवितव्यम् ।

भवत्येव लोपः ॥

( प्रदीपः ) एवं तर्हि इदमिहेति । यदा कृते समासे समासान्तः क्रियत इति पक्षस्तदेयं संप्रधारणा । यदा तु समासार्थादुत्तरपदात्समासान्तः क्रियत इति पक्षस्तदा संप्रधारणैवात्र नास्ति ॥

( उद्योतः ) समासार्थादुत्तरपदादिति—उत्तरपदग्रहणं चिन्त्यप्रयोजनम् । समासार्थाद्वाक्यादित्युचितं वक्तुम् । 'समासात्प्रागेवालौकिकविग्रहवाक्ये' इति शेषः ॥ संप्रधारणैव नास्तीति । 'समासान्तानामन्तरङ्गत्वात्' इति शेषः । अयं च पक्षो 'गोस्त्रियोरुपसर्जनस्य', 'अन्तः' इति सूत्रस्थन्याययुक्तभाष्यसंमत इति तद्विरोधादिदं भाष्यमेकदेश्युक्तिरिति ध्वनितम् । न च [1]आद्यपक्षरीत्या संप्रधारणायामपि परत्वादन्तोदात्तत्वे ततः समासान्ते सति शिष्टत्वात्तस्य प्रत्ययाद्युदात्तत्वे कथमुदात्तनिवृत्तिस्वरप्राप्तिरिति वाच्यम् । डचश्चित्त्वेन समासान्तविधौ 'आद्युदात्तश्च' इत्यस्यासंबन्धज्ञापनेन पश्चाज्जातस्य समासान्तस्यानुदात्तत्वमित्याशयात् ॥ द्वितीये[2]पक्षे त्वन्तरङ्गत्वात्समासान्ते ततः स्वरात्परत्वाल्लोपे उदात्तनिवृ[3]त्तिस्वराप्राप्त्या नकारान्तग्रहणे 'द्विमूर्धः' इत्यादौ स्वराऽप्राप्तिदोषः स्थित एवेति बोध्यम् ॥ अन्तोदात्तत्वस्यानित्यत्वं निवर्तयति—भाष्ये—भवत्येव लोप इति । परत्वाल्लोपो भवत्येव, तावताऽपि अन्तोदात्तत्वस्य नानित्यत्वमिति भावः ॥

( सिद्धान्तभाष्यम् )

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च समासान्त एवान्तोदात्तत्वस्य निमित्तं विहन्ति, अवश्यं लक्षणान्तरं लोपः प्रतीक्ष्यः । उभयोर्नित्ययोः परत्वादन्तोदात्तत्वम्, अन्तोदात्तत्वे कृते समासान्तः, टिलोपः, टिलोपे कृते उदात्तनिवृत्तिस्वरेण सिद्धम् ॥

( उद्योतः ) तदेवोपपादयति—यस्य चेति । 'तावत्येव लोपः' इति पाठे समासान्ते कृत एव लोप इत्यर्थः ॥

( सिद्धान्तपक्षस्य युक्तत्वोपपादनभाष्यम् )

युक्तं पुनरिदं विचारयितुम्—नन्वनेनासन्दिग्धेन नकारान्तग्रहणेन भवितव्यम्, यावता मूर्धस्वित्युच्यते ।

यद्यकारान्तग्रहणं स्यात् मूर्धेष्विति ब्रूयात् । सैषा समासान्तार्था विचारणा ॥

एवं तर्हि ज्ञापयत्याचार्यः—विभाषा समासान्तो भवतीति ॥

( प्रदीपः ) युक्तं पुनरिति । ननु कृतेऽपि समासान्ते नकारान्त एव मूर्धशब्द उत्तरपदं सम्भवतीति किमत्रायुक्तम्? एवं मन्यते—यथा पाद्दिति समासान्तनिर्देशः, एवं मूर्धेष्विति समासान्तनिर्देश एव न्याय्यः । एवं ह्यसंदिग्धं समासस्य कार्यित्वं विज्ञायते । न च कृतम् । तस्मादुत्तरपदस्यैव कार्यित्वेन भाव्यम् ॥

सैषा समासान्तार्थेति । यदि नित्यः समासान्तः स्यात्तदा कार्यिविशेषसन्देहव्यावृत्तये प्रक्रमाभेदाय वा समासान्त एवोच्चार्येत । तदनुच्चारणात्तु समासान्तस्यानित्यत्वं ज्ञाप्यते । तत्र यदा समासान्तो नास्ति तदा समासस्योत्तरपदस्य वा कार्यित्वे विशेषाभावः । यदा तु समासान्तः क्रियते तदा समासस्य कार्यित्वे सिद्धं समासान्तस्योदात्तत्वम् । यदाऽप्युत्तरपदस्य कार्यित्वं तदा परत्वादन्तोदात्तत्वे कृते समासान्तस्तत्र टिलोप इति उदात्तनिवृत्तिस्वरेणापि सिद्धम् ॥ ननु प्रत्ययस्वरेण समासान्तस्य भाव्यम् । नैतदस्ति । बहुव्रीहिस्वरेण तस्य बाधनात्, बहुव्रीहिस्वरस्याप्यनेन ॥

( उद्योतः ) ननु कृतेऽपीति । नित्येऽपि समासान्ते उत्तरपदस्य कार्यित्वात्तस्य च नान्तत्वान्मूर्धस्विति निर्देश उपपन्न इत्यर्थः ॥ एवं मूर्धेष्विति । एवं हि न प्रक्रमभङ्गः ॥ हेत्वन्तरमाह—एवं हीति । तस्मादुत्तरपदस्यैवेति । एवञ्च नकारान्तस्यैव कार्यित्वं

---

[1] आद्यपक्षरीत्या—समासे कृते समासान्त इति पक्षरीत्या ॥

[2] द्वितीयपक्षे—समासार्थवाक्यात्स्वयासान्ता इति पक्षे ॥

[3] उदात्तनिवृत्तिस्वराप्राप्त्या—उदात्तलोपाभावादुदात्तनिवृत्तिस्वराप्राप्त्येत्यर्थः ॥

स्थितमिति 'द्विमूर्धः' इत्यसिद्धिरिति भावः । अनेनापि भाष्येण पूर्वभाष्यस्यैकदेश्युक्तित्वं ध्वनितम् ॥ **सैषा समासान्तार्थेति**–सिद्धान्तभाष्यस्य समासान्तस्यानित्यत्वज्ञापनार्थेत्यर्थः ॥ स[1] एव 'एवं तर्हि'-इत्यादीना भाष्ये व्याख्यात इत्याशयेनाह—**यदि नित्य इति** ॥ तत्र समासान्ताभावपक्षे त्रिमूर्धानमित्यादाविष्टस्वरसिद्धिं दर्शयति—**तत्र यदेति** ॥ ननु समासान्तपक्षे तस्य शब्दान्तरत्वाद्विमूर्ध इत्यादौ स्वरो न स्यादत आह—**यदा त्विति** । बहुव्रीहेरेव कार्यित्वे तदेकान्तत्वात्समासान्तस्य इष्टस्वरसिद्धिरित्यर्थः ॥ उत्तरपदस्य कार्यित्वेऽपि समासान्तत्वपक्षे इष्टस्वरसिद्धिं दर्शयति—**यदाऽपीति** । इदं प्राक्तनभाष्यवदेव निरूपितरीत्या प्रौढ्येति बोध्यम् । तस्मादत्र सूत्रे समासस्यैव कार्यित्वमिति तत्त्वम् ॥ **बहुव्रीहिस्वरेण तस्येति** । समासान्ते कृते तस्य समासावयवत्वात् 'समासस्य'इत्यन्तोदात्तत्वं प्राप्तं, तस्य च बहुव्रीहौ प्रकृतिस्वरो बाधकः,तस्यायं विकल्पो बाधक इति स्थिते कुतः प्रत्ययस्वरस्य प्राप्तिः ? ञ्चश्चित्त्वेन समासान्तविधौ 'आद्युदात्तश्च' इत्यस्यासंवन्धज्ञापनात् । अन्यथा विग्रहवाक्य एव समासान्तप्रवृत्तौ तस्य तत्[2]सन्नियोगाशिष्टाद्युदात्तत्वे तदेकवाक्यतापन्ने शेषनिघाते पूर्वपदस्योदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वराप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः ॥

---

( ११९७ विधिसूत्रम् ॥ ६ । २ । २ आ. ३८ )

## २८५९ परादिश्छन्दसि बहुलम् ॥ ६ । २ । १९९ ॥

( सूत्रपूरकभाष्यम् )

अत्यल्पमिदमुच्यते ।

**परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।**
**पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः ॥**

( प्रदीपः ) **व्यत्ययो बहुलं स्मृत इति** । बहुलग्रहणलभ्यः स्वरव्यत्यय इत्यर्थः । त्रिचक्रेणेत्यादौ बहुव्रीहिस्वरे प्राप्तेऽन्तोदात्तत्वं विधीयते ॥

इत्युपाध्यायजैयटपुत्र**कैयटकृते** भाष्यप्रदीपे षष्ठस्याध्यायस्य **द्वितीये** पादे **द्वितीयमाह्निकम्** ॥

द्वितीयः पादश्च समाप्तः ॥

( उद्द्योतः ) **स्वरव्यत्यय इति** । स एव वार्तिककृता दर्शिता इत्यर्थः । **बहुव्रीहिस्वरे**—पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वे ॥

इति श्रीशिवभट्टसुतसतीगर्भज**नागोजीभट्टकृते भाष्यप्रदीपोद्द्योते** षष्ठाध्यायस्य द्वितीये पादे **द्वितीयमाह्निकम्** ॥

पादश्च समाप्तः ॥

( ६३८२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसि ॥ * ॥

( भाष्यम् ) **अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानं कर्तव्यम् । त्रिचक्रेण, त्रिबन्धुरेण, त्रिवृता रथेन ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥**

**पादश्च समाप्तः ॥**

---

१ स एव–सिद्धान्त्येव ॥
२ तत्सन्नियोगाशिष्टेति । बहुव्रीहौ प्रकृत्येत्येतत्सन्नियोगाशिष्टेत्यर्थः ।

यदा विग्रहवाक्ये एव 'आद्युदात्तश्च' इति प्रवर्तते तदा बहुव्रीहौ प्रकृत्येत्यस्य प्राप्तिर्नास्तीत्यर्थः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ११५९ | २६ | १२ | ३८ | ११९७ |
| अव्याख्यातसूत्राणि | १५०१ | ११२ | ४९ | १६१ | १६६२ |
| समुदितसूत्राणि | २६६० | १३८ | ६१ | १९९ | २८५९ |
| वार्तिकानि | ६३२४ | ३९ | १९ | ५८ | ६३८२ |

## अथ षष्ठस्य तृतीयः पादः ।

( ११९८ अधिकारसूत्रम् ॥ ६ । ३ । १ आ. १ )

## २८६० अलुगुत्तरपदे ॥ ६ । ३ । १ ॥

( अलुगधिकरणम् )

( अधिकारमर्यादानिर्णयभाष्यम् )

आ कुतोऽयमधिकारः ?

अलुगधिकारः प्रागानङः ।

उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

(प्रदीपः) आकुतोऽयमिति । अन्येष्वधिकारेषु व्याख्यानादवधिनिर्णयः, अत्र तु सामर्थ्यात्–इति प्रतिपादयितुं चोद्यप्रतिसमाधानोपन्यासः ॥

प्रागानङ इति । उत्तरपदेऽनन्तरस्य ऋकारान्तस्यानङा भाव्यम् । अलुकि च सति विभक्त्या व्यवधानादृकारान्तयोः पूर्वपदोत्तरपदयोरानन्तर्यं न स्यादिति सामर्थ्यात्प्रागानङोऽलुगधिकारः । अथवा कार्यान्तरं प्रकृतस्य विधेर्निवर्तकमित्यलुगधिकारः प्रागानङः ॥

प्रागङ्गाधिकारादिति । प्रत्यये परतोऽङ्गं भवति न तूत्तरपद इति सामर्थ्यादवधिपरिच्छेदः ॥

( उद्योतः ) ननु 'प्रत्ययः' इत्यादाविव अधिकारावधिविषयप्रश्नप्रतिवचनानुपन्यास एव युक्तोऽत आह—अन्येष्विति ॥

कार्यान्तरम्—आनङादि ॥

( अधिकारप्रयोजनजिज्ञासाभाष्यम् )

कानि पुनरुत्तरपदाधिकारस्य प्रयोजनानि ?

( प्रदीपः ) कानीति । समास एव लुक् प्राप्तः प्रतिषिध्यत इति सामर्थ्यात् समासाधिकाराद्वोत्तरपदं लभ्यते । कार्यान्तरविधावपि 'वनं समासे' इत्यतः समासग्रहणानुवृत्त्योत्तरपदलाभ इति प्रश्नः ॥

( उद्योतः ) अलुग्विधावुत्तरपदाधिकारस्य प्रयोजनं नास्तीत्याह—समास एवेति । 'तत्पुरुषे कृति–'इति साहचर्यात्प्रतिपदोक्तपरिभाषयाऽत्र सामासिकलुक एवायमलुगिति भावः ॥ सामर्थ्यपर्यालोचनस्य स्थूलमत्यसाध्यत्वादाह—समासेति । 'वनं समासे' इत्यत इत्यर्थः ॥ अन्यत्र तु सामर्थ्याभावेऽपि अधिकारेणैव तल्लाभ इत्याह—कार्यान्तरेति । आनङादीत्यर्थः । अनुवृत्तसप्तम्यन्तसमासपदं च तदर्थोत्तरपदलाक्षणिकमिति भावः ॥

( ६३८३ अधिकारप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ उत्तरपदाधिकारस्य प्रयोजनं स्तोकादिभ्योऽलुगानङिको-ह्रस्वनलोपाः ॥ * ॥

( भाष्यम् ) 'पञ्चम्याः स्तोकादिभ्यः' ( ६।३।२ ) स्तोकान्मुक्तः, अल्पान्मुक्तः, कतिपयान्मुक्तः ।

उत्तरपद इति किमर्थम् ?

निष्क्रान्तः स्तोकात्–निःस्तोकः ॥

आनङिकोह्रस्वनलोपाः प्रयोजनम् ।

आनङ्–होतापोतारौ ।

उत्तरपद इति किमर्थम् ?

होतापोतृभ्याम् ॥

'इको ह्रस्वोऽङ्यो गालवस्य' (६१) प्रयोजनम् ।

ग्रामणिकुलम्, सेनानिकुलम् ।

उत्तरपद इति किमर्थम् ?

ग्रामणीः, सेनानीः ॥

नलोपः प्रयोजनम् । 'नलोपो नञः' (७३) ।

अब्राह्मणः, अवृषलः ।

उत्तरपद इति किमर्थम् ?

परमन ।

नैषोऽस्ति प्रयोगः ।

इदं तर्हि–नतरां गमनम् ॥

(प्रदीपः) निःस्तोक इति । यद्यप्यत्र 'स्तोकान्तिक–'इति प्रतिपदोक्तसमासाश्रयणाल्लुङ् भवतीति शक्यते वक्तुं तथाप्यन्यार्थोऽवश्यं वक्तव्य उत्तरपदाधिकार इति लक्षणप्रतिपदोक्तपरिभाषा नाश्रिता ॥

होतापोतृभ्यामिति । पोतृशब्दस्यानङ् न भवति । होतापोतारावित्यत्र तु परत्वात् गुणेनानङ् बाध्यत इत्युदाहरणान्तरोपन्यासः । अथ विभक्त्यपेक्षत्वात् गुणो बहिरङ्ग आनङ् तु तदनपेक्षत्वादन्तरङ्गः, तथा सति होतापोताराविस्युदाहरणं भवति ॥ ग्रामणिकुलमिति—षष्ठीसमासः ॥

ग्रामणीरिति । समासाधिकारेऽप्यत्रोत्तरपदस्य ह्रस्वप्रसङ्गः ॥

परमनेति । यथा 'नतराम्'इति प्रतिषेधस्य प्रकर्षः, एवं पारम्यमपीति भावः ॥

नैषोऽस्ति प्रयोग इति । प्रयुक्तानामिदमन्वाख्यानं प्रवृत्तमिति भावः ॥

नतरां गमनमिति । [२]गमनस्यायुक्ततरत्वप्रतिपादनाय प्रतिषेधप्रकर्षाश्रयस्तरपः प्रयोगः । अत्र तु समासानुवृत्त्याऽपि नलोपः शक्यते पराकर्तुम् ॥

( उद्योतः ) पोतृशब्दस्येति । समासग्रहणानुवृत्तावपि समासे ऋकारान्तस्यानङ् भवतीत्यर्थादिति भावः । ननु 'होतापोतारौ'इत्यस्यैवोदाहरणत्वसंभवे किमित्युदाहरणान्तरदानमत आह—होतापोताराविति । पदस्य विभज्यान्वाख्यानमिति पक्षे एतदिति भावः ॥ नन्वसमस्तत्वात्कथं 'समासे' इत्यधिकारेण विधीयमानो ह्रस्वः स्यादत आह—षष्ठीसमास इति । 'इको ह्रस्वोऽङ्यो गालवस्य'इति ह्रस्वः ॥

'परमने'इति विशेषणसमासः, तदाह—यथेति । पारम्यमपि नञर्थविशेषणमिति भावः ॥ ननु प्रतिषेधस्य सर्वत्रैकरूपत्वात्कथं प्रकर्षाश्रयस्तरबत आह—गमनस्यायुक्ततरत्वेति ॥ प्रति-

---

१ अस्य वार्तिकत्वेन निर्देशो ह. पुस्तके ॥

२ 'गमनस्यायुक्ततरस्य' इति ठ. पाठः । 'गमनस्याप्रयुक्ततरत्वप्रति' इति क. पाठः ॥

षेधप्रकर्षेति । प्रतिषेधे प्रकर्षमारोप्य तदाश्रयस्तरविलर्थः । आरोपाश्रयेण तत्करणफलं तु गमनस्यायुक्ततरत्वप्रतिपत्तिरिति भावः । केचित्तु प्रतियोग्यसमानाधिकरणत्वरूपात्यन्तिकत्वमभावगतः प्रकर्षः । प्रवृत्तिनिमित्तगतप्रकर्षे एव तरबादिरिति तु प्रकृत्यर्थगतप्रकर्षासम्भवे । द्योत्यार्थप्रकर्षेऽपि द्योतकान्तरम्भवत्येव । यथा 'नितरांगच्छति'इत्यादौ । 'नतरांगमनम्'इत्यत्र मयूरव्यंसकादित्वात्सुप्सुपेति वा समास इति वदन्ति ॥

( ६३८४ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ एकवच्च ॥ * ॥

**( भाष्यम् ) एकवच्चालुग्भवतीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विगृह्य स्तोकान्मुक्त इत्येव यथा स्यात् ॥**

(प्रदीपः) एकवच्चेति । अर्थातिदेशोऽयम्, तेन द्वावर्थौ बहवश्चैकवत्समासे भवन्तीति स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति समासे स्तोकान्मुक्त इत्येव भवति ॥

( उद्द्योतः ) तेन द्वावर्थाविति । यस्य स्वत एकत्वं नास्ति तस्यैवातिदेशापेक्षा—इतीदं लब्धम् । अलुग्विषयेऽर्थस्यायमेकवद्भाव इति कथं जाताया विभक्तेर्निवृत्तिरिति न शङ्क्यम् ॥

( ६३८५ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ एकवद्वचनमनर्थकम् ॥ * ॥

**( भाष्यम् ) एकवद्भावश्चानर्थकः ॥**

**द्विबह्वोरलुक्कस्मान्न भवति ?**

( प्रदीपः ) द्विबह्वोरिति । भावप्रत्ययमन्तरेणापि वृत्तिविषये द्विबहुशब्दौ द्वित्वबहुत्वयोर्वर्तेते । यथा 'द्व्येकयोः—' इति ॥

( उद्द्योतः ) सङ्ख्येयपरत्वे द्विवचनासङ्गतिं मत्वाऽऽह—भावप्रत्ययमन्तरेणापीति ॥

( ६३८६ अनिष्टनिरासवार्तिकम् ॥ ४ ॥ )

॥ * ॥ द्विबहुष्वसमासः ॥ * ॥

**( भाष्यम् ) द्विवचनबहुवचनान्तानामसमासः ।**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

( ६३८७ अनिष्टनिरासस्साधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

**( भाष्यम् ) किमुक्तम् ?**

**अनभिधानादिति ॥**

**तच्चावश्यमनभिधानमाश्रयितव्यम् ॥**

( प्रदीपः ) अनभिधानादिति । समास उपसर्जनार्थस्य द्वित्वबहुत्वानवगमादभेदैकत्वसंख्याया एवोपजनाद्विशेषपरित्यागात् संख्यासामान्यमभेदैकत्वं संख्योच्यते[1] । यथा सन्तमसे रूपमात्रमवधार्यते न तु शुक्लकृष्णादिर्विशेषः, एवं 'राजपुरुषः' इत्यत्र संख्यावानर्थो[2] न त्वव्ययार्थवदसंख्य इत्येतावान् संप्रत्ययो भवति, न तु संख्याविशेषप्रतिपत्तिः ।

**अन्ये तु**—सर्वसंख्याविशेषाणामविभागोऽभेदैकत्वसंख्येत्याहुः । यथौषधिरसाः सर्वे मधुन्यविभागेनावस्थिता एवमुपसर्जनार्थे संख्याविशेषाः । क्वचित्तु वृत्तावपि संख्याविशेषावगमः, यथा 'तावकीनः' इत्यादावादेशप्रयोगादेकत्वप्रतीतिः । 'मासजातः'—'शौर्पिकः' इत्यादौ प्रातिपदिकस्यैव विशिष्टार्थाभिधायित्वादेकत्वावगमः । 'कुण्डशो ददाति' 'वनशः प्रविशति' इत्यादौ प्रकरणादिवशादेकत्वावसायः । 'स्तोकाभ्यां मुक्तः' इत्यादावपि तद्व्यलुग्विधानात् द्वित्वबहुत्वावगमात्समासोऽस्तु । नैतदस्ति । प्रयुक्तानामन्वाख्यानात्, न च 'स्तोकाभ्यां मुक्तः' इति समासो लोके प्रयुज्यते । तन्निवन्धनस्यैकस्वर्यस्याभावात् । स्तोकाभ्यां मुक्त इत्यादावपादाने पञ्चमी, न तु 'करणे च स्तोकाल्प—' इत्यनेन । धर्ममात्रवाचित्वे द्वित्वबहुत्वयोर्दुर्लभत्वादित्याहुः ॥

( उद्द्योतः ) का नामाभेदैकत्वसङ्ख्येत्यत आह—विशेषपरित्यागादिति । एवञ्च सङ्ख्यात्वेन सङ्ख्या भासते । तत्र चौत्सर्गिकमेकवचनमेवेत्युक्तं भवति ॥ रूपमात्रमिति । चाक्षुषत्वाद्रूपवदिदमिति गम्यते, न तु नीलादिविशेष इत्यर्थः ॥

विशेषातिरिक्तसामान्याभावादाह—अन्ये त्विति । अत्र मते सर्वेषां रसानां मधुनि रसत्वेन भानवद्वृत्तावुपसर्जने सङ्ख्यात्वेन सर्वविशेषभानमित्यर्थः ॥ यत्र तु निमित्तमस्ति तत्रास्त्येव तद्विशेषावगम इत्याह—क्वचिदिति ॥ आदेशेति । 'तवकममकावेकवचने'इति विहितात् । शौर्पिकादावनियतसङ्ख्यत्वे परिच्छेदासंभवेन परिच्छेदबोधकप्रयोगप्रामाण्येनैकत्वविशिष्टस्यैवोपसर्जनार्थस्य प्रतीतिरिति बोध्यम् ॥ प्रकरणादिवशादिति । यदा प्रकरणादित एकत्वावसायस्तदैवैकत्वसङ्ख्यावच्छिन्नार्थाभिधायिनः शस्प्रत्ययो भवतीत्यर्थः । अत्र यत्तत्त्वं तदुपपादितं समर्थसूत्रे भाष्ये इति भाष्योक्तमेव साधु । 'अनभिधानात्'इत्यस्य समासेनात्रानेकव्यक्त्यनभिधानादित्यर्थः । अत्र च कुमार्योरगारं—कुमार्यगारमितिवत्प्राप्तः समासः, अलुको गमकस्य सत्त्वाच्च प्राप्तः समासोऽनभिधानेनैव वारणीय इति दिक् ॥ दुर्लभत्वादिति । 'करणे च—'इति सूत्रेऽसत्ववचनस्येत्युक्तेर्धर्ममात्रवाचित्व एव तेन प्रत्ययः । स चैक एवेति तत्र द्वित्वाद्यभावः । अपादाने पञ्चमी तु धर्मिवाचकादपि भवतीति भावः ॥

( ६३८८ अनभिधानप्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः ॥ * ॥

**( भाष्यम् ) एकवद्वचने हि गोषुचरेऽतिप्रसङ्गः स्यात् । गोषुचरः ॥**

---

१ 'अभेदैकत्वसंख्योच्यते' इति क. च. ञ. पाठः ॥

२ 'संख्यावान् राजार्थो' इति क. च. ञ. पाठः ॥

(प्रदीपः) गोषुचर इति । गोशब्दो बहुवचनान्त एवाप्शब्दवदुदकस्य वाचकः, तत्रैकवद्भावे सति 'गविचरः' इति प्राप्नोति ॥

(उद्योतः) उदकस्येति । न तु साक्षादिमद्वाचिनो व्यक्तिबहुत्वविवक्षायामिदं बहुवचनम्, गोषुचरशब्दात्तथैव प्रतीतेः, नित्यबहुवचनान्तानामेव भाष्ये उदाहरणेषु साहचर्यादिति भावः ॥

(६३८९ अनभिधानप्रयोजनवार्तिकम् ॥ ७ ॥)

॥ * ॥ वर्षाभ्यश्च जे ॥ * ॥

(भाष्यम्) वर्षाभ्यश्च जेऽतिप्रसङ्गो भवति । वर्षासुजः ॥

(प्रदीपः) एवं वर्षासुज इति । वर्षाशब्दो बहुवचनान्त एव ऋतुविशेषवाची न तु ऋतुप्रचयापेक्षमत्र बहुत्वम् ॥

(६३९० अनभिधाने दोषवार्तिकम् ॥ ८ ॥)

॥ * ॥ अपो योनियन्मतिषु चोपसंख्यानम् ॥ * ॥

(भाष्यम्) अपो योनियन्मतिषु चोपसंख्यानं कर्तव्यम्, जे[1] चरे च तत्रातिप्रसङ्गो भवति ।

योनि-अप्सुयोनिः । योनि ॥

यत्-अप्सव्यम् । यत् ॥

मति-अप्सुमतिः । मति ॥

जे-अप्सुजः । जे ॥

चरे-अप्सु चरो गह्वरेष्ठाः ॥

(प्रदीपः) अप्सव्यमिति । अप्सु साधुः । 'तत्र साधुः' इति यत् ॥

(उद्योतः) भाष्ये—अपो योन्यादिषूपसङ्ख्यानं कर्तव्यमिति—'अलुकः' इति शेषः । जे चरे चाऽप उपसङ्ख्यानं कर्तव्यं भवति, तत्रातिप्रसङ्गो भवतीत्यर्थः ॥ अप्सुमतिरिति । वृत्तिहरदत्तादयस्तु[2] वार्तिके मतुप्—इति पठित्वा 'अप्सुमन्तावाज्यभागौ'इत्युदाहरन्ति । भाष्येऽप्येवमेव पाठः । दृश्यमानपाठस्तु लेखकप्रमादादिति तदनुयायिनः । 'हलोऽन्तराः'इति सूत्रे 'हरि'ग्रन्थे तु 'अप्सुमतिः'इत्येव पाठो दृश्यते । युक्तश्चैतत् । एकवचेत्यस्यातिप्रसङ्गव्याजेनास्योपन्यासो भाष्ये । न ह्यप्सुमन्तावित्यत्रास्यातिप्रसङ्गोऽस्ति । 'अप्सु'इत्यनुकरणाद्ध्ययं मतुप् । न हि तत्राप्शब्दो बह्वर्थः, शब्दपरत्वात्, शब्दस्य चैकत्वात् । प्रकृतिवदित्यदेशोऽपि शास्त्रीयधर्मातिदेशकः, न त्वस्य लौकिकस्य । किञ्च 'अस्यवामीयम्'इत्यादाविव तत्र लुकः प्रसक्तिरेव नेति दिक् ॥

(११९९ विधिसूत्रम् ॥ ६ । ३ । १ आ. २)

## २८६१ पञ्चम्याः स्तोकादिभ्यः ॥ ६ । ३ । २ ॥

(६३९१ उपसंख्यानवार्तिकम् ॥ १ ॥)

॥ * ॥ पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम् ॥ * ॥

(भाष्यम्) पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम् । ब्राह्मणाच्छंसी ॥

(६३९२ पञ्चम्यर्थकथनवार्तिकम् ॥ २ ॥)

॥ * ॥ अन्यार्थे च ॥ * ॥

(भाष्यम्) अन्यार्थे चैषा पञ्चमी द्रष्टव्या । ब्राह्मणानि शंसतीति ब्राह्मणाच्छंसी ॥

अथवा युक्त एवात्र पञ्चम्यर्थः । ब्राह्मणेभ्यो[3] गृहीत्वा-आहृत्याहृत्य शंसतीति ब्राह्मणाच्छंसी ॥

(प्रदीपः) अन्यार्थ इति । वृत्तिविषये च द्वितीयार्थे पञ्चमी वक्तव्येत्यर्थः ॥

युक्त एवेति । आहरणाङ्गे शंसने[4] शसिर्वर्तत इत्युपात्तविषयमेतदपादानम् । यथा बलाहकाद्विद्योतते विद्युदिति निस्सरणाङ्गे विद्योतने द्युतिर्वर्तत[5] इति बलाहकोपादानम् ॥

(उद्योतः) 'आहरणाङ्गे' इति बहुव्रीहिः । ऋत्विग्विशेषस्येयं संज्ञा ॥

भाष्ये—ब्राह्मणेभ्य इति । ब्राह्मणाख्यवेदभागविशेषेभ्य इत्यर्थः । 'गृहीत्वा'इत्यस्य व्याख्यानमाहृत्येत्यादि ॥

(१२०० विधिसूत्रम् ॥ ६ । ३ । १ आ. ३)

## २८६२ ओजःसहोऽम्भस्तमसस्तृतीयायाः ॥ ६ । ३ । ३ ॥

(६३९३ उपसंख्यानवार्तिकम् ॥ १ ॥)

॥ * ॥ तृतीयाया[6] अञ्जस उपसंख्यानम् ॥ * ॥

(भाष्यम्) तृतीयाया[6] अञ्जस उपसंख्यानं कर्तव्यम् । अञ्जसाकृतम् ॥

(६३९४ उपसंख्यानवार्तिकम् ॥ २ ॥)

॥ * ॥ पुंसानुजो जनुषान्धो विकृताक्ष इति च ॥ * ॥

(भाष्यम्) पुंसानुजो जनुषान्धो विकृताक्ष इति

---

१ 'जे चरे च' इत्येतत्स्वतन्त्रवार्तिकमिति च. छ. झ. पुस्तकेषु ॥

२ 'वृत्तिकारहरदत्ताः' इति झ. पाठः ॥

३ 'ब्राह्मणेभ्यो गृहीत्वा गृहीत्वाऽऽहृत्याहृत्य' इति च. छ. झ. पुस्तकपाठः ॥

४ 'शंसने शंसिर्वर्तते' इति क. च. पाठः ॥

५ 'विद्युतिर्वर्तते' इति च. झ. पाठः ॥

६ 'तृतीयायामञ्जस–' इति क. च. झ. पाठः । केवलं 'अञ्जस उपसंख्यानम्' इति छ. पाठः ॥

चोपसंख्यानं कर्तव्यम् । पुंसानुजः, जनुषान्धः, विकृताक्षः ॥

( उद्योतः ) पुंसानुज इति । यस्य पुमानग्रजः स पुंसा हेतुनाऽनुज इत्यर्थः । 'जनुषान्धो विकृताक्ष' इति क्वाचित्कप्रयोगस्य वार्तिके उपादानम् । परेतु–विकृदिति भावे क्विबन्तं । तेन तृतीयान्तेन विकारयुक्तमक्षि यस्येत्यर्थे समास इत्याहुः ॥

( १२०१ विधिसूत्रम् ॥ ६ । ३ । १ आ. ४ )

## २८६४ आज्ञायिनि[1] च ॥ ६ । ३ । ५ ॥

( ६३९५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आत्मनश्च पूरणे ॥ * ॥

( भाष्यम् ) आत्मनश्च पूरण उपसंख्यानं कर्तव्यम् । आत्मनापञ्चमः, आत्मनादशमः ॥

( उद्योतः ) अत्र 'आत्मनश्च पूरणे' इति विशिष्टं वार्तिकमिति अत्रत्यभाष्यस्वरसादायाति ॥ 'वैयाकरणाख्यायाम्'इत्यत्र 'परस्य च' इति चेन परशब्दप्रतिद्वन्द्वितया आत्मशब्दस्यैव ग्रहणं, तदुभयश्चैकसूत्रमित्याहुः ॥

( ६३९६ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अन्यार्थे च ॥ * ॥

( भाष्यम् ) अन्यार्थे चैषा तृतीया द्रष्टव्या । आत्मा पञ्चमोऽस्य आत्मनापञ्चमः, आत्मनादशमः ॥

अथवा युक्त एवात्र तृतीयार्थः । आत्मना कृतं तस्य तत्[2] येनासौ पञ्चमः ।

कथं–जनार्दनस्त्वात्मचतुर्थ एव[3]–इति ? ।

बहुव्रीहिरयम् । आत्मा चतुर्थोऽस्येति[4] ॥

( प्रदीपः ) अन्यार्थे इति । आत्मा पञ्चमोऽस्येत्यत्रार्थे आत्मनापञ्चम इत्यादि प्रयुज्यत इत्यर्थः । अत्र च 'वा'इति वक्तव्यम्, तेनात्मपञ्चम इत्यपि भवति ॥

आत्मना कृतमिति । वृत्तिविषये प्रतीयमाना करोतिक्रिया कारकत्वनिमित्तं भवति, हेतौ वा तृतीया कार्या । अथवा दध्योदनादौ उपसेकादिवत् करोतिक्रियाया अन्तर्भावात् करोतेरप्रयोगः, आत्मनापञ्चम इत्युक्ते आत्मनाऽस्य कृतं पञ्चमत्वमिति संप्रत्ययात् ॥ आत्मा चतुर्थोऽस्येतीति । एकस्यैव वस्तुनो बुद्धिप्रकल्पितभेदस्य वर्तिपदार्थत्वमन्यपदार्थत्वं च न विरुध्यते ॥

( उद्योतः ) अन्यार्थशब्देन प्रथमार्थं उच्यते इत्याह— आत्मा पञ्चम इति । एवञ्च बहुव्रीह्यर्थे तृतीयातत्पुरुष इति भाष्यार्थ इति भावः ॥ ननु पूरणार्थशब्दसमभिव्याहारे बहुव्रीह्यर्थे तृतीयासमासविधाने तेन बहुव्रीहिबाधापत्तौ 'आत्मचतुर्थ इति बहुव्रीहिः'इति भाष्यासङ्गतिरत आह—अत्र च वेति वक्तव्यमिति । 'बहुव्रीह्यर्थे तृतीयातत्पुरुषः' इति कल्पितवाक्ये इत्यर्थः ॥

वृत्तिविषये इति । वृत्तावर्थान्तरप्रादुर्भावात् । दध्योदनादिवृत्तौ, 'प्रविश पिण्डीम्'इत्यादौ च प्रतीयमानक्रियापेक्षकारकभावस्यापि दर्शनादिति भावः । हेतौ तृतीयापक्षे 'कृतं तस्य तत्'इति भाष्यं निष्फलं स्यादतः पूर्वोक्तमेव पक्षं दृष्टान्तप्रदर्शनपूर्वकमाह—अथवेति ॥ बुद्धिप्रकल्पितभेदस्येति । 'राहोः शिरः' इतिवदिति भावः ॥

( १२०२ विधिसूत्रम् ॥ ६ । ३ । १ आ. ५ )

## २८६६ वैयाकरणाख्यायां चतुर्थ्याः ॥ ६ । ३ । ७ ॥

( १२०३ विधिसूत्रम् ॥ ६ । ३ । १ आ. ६ )

## २८६७ परस्य च ॥ ६ । ३ । ८ ॥

( ६३९७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) आत्मनेभाषपरस्मैभाषयोरुपसंख्यानं कर्तव्यम् । आत्मनेभाषः, परस्मैभाषः ॥

( उपसंख्यानप्रयोजनभाष्यम् )

तत्कथं कर्तव्यम्?

यदि व्याकरणे भवा–वैयाकरणी, वैयाकरणी आख्या–वैयाकरणाख्या, वैयाकरणाख्यायामिति ॥

अथ हि वैयाकरणानामाख्या–वैयाकरणाख्या, वैयाकरणाख्यायामिति, नार्थ उपसंख्यानेन ॥

(प्रदीपः) व्याकरणे भवेति–'अणृगयनादिभ्यः' इत्यण् । अत्र पक्षे आख्याशब्दः संज्ञापर्यायः । आत्मनेभाषपरस्मैभाषशब्दौ च न केषुचिद्व्याकरणेषु संज्ञात्वेन विनियुक्ताविति अलुकोऽप्रसङ्गः ॥

अथ हीति । आख्या—प्रतिपादनम् । व्यवहार इत्यर्थः । आत्मनेपदिनश्च धातवो वैयाकरणैरात्मनेभाषशब्देन व्यवह्रियन्ते, परस्मैपदिनः परस्मैभाषशब्देनेत्यलुक् सिद्धः ॥

( उद्योतः ) वृद्धत्वाच्छप्रसंगेराह—अणृगेति । अत्र पक्षे 'पुंवत्कर्मधारय–इति पुंवत्त्वं । गुरुभूतषष्ठीतत्पुरुषाश्रयणसामर्थ्यादेवाख्याशब्दः केवलयौगिक इत्याह—प्रतिपादनमिति ॥

( उपसंख्यानस्य निष्प्रयोजनत्वबोधकभाष्यम् )

यद्यपि व्याकरणे भवा–वैयाकरणी, वैयाकरणी आख्या—वैयाकरणाख्या, वैयाकरणाख्यायामिति, एवमपि नार्थ उपसंख्यानेन ।

---

1 आज्ञायिनि च ६।३।५ आत्मनश्च ६।३।६ इत्येव च. झ. पाठः ॥

2 'तत्तस्य येन' इति छ. पाठः ॥

3 'एव' इत्येव इति शब्दरहितः पाठः छ. पुस्तके ॥

4 'चतुर्थोऽस्येति' इत्येव क. च. झ. पाठः ॥

वचनाद्भविष्यति ।

अस्ति वचने प्रयोजनम्[1]—

आत्मनेपदम्, परस्मैपदमिति ।

निपातनादेतत् सिद्धम् ।

किं निपातनम् ?

'अनुदात्तङित आत्मनेपदम्' 'शेषात्कर्तरि परस्मैपदम्' ( १।३।१२;७८ ) इति ॥

( प्रदीपः ) यद्यपीति । आत्मनेपदपरस्मैपदशब्दयोर्निपातनादेवालुकः सिद्धत्वादाख्याशब्देन संव्यवहारमात्रमुच्यत इत्यर्थः ॥

( उद्योतः ) संव्यवहारमात्रमिति । आरम्भसामर्थ्याद्रूढिपरित्यागेन योगपरिग्रह इत्यर्थः ॥

( १२०४ विधिसूत्रम् ॥ ६ । ३ । १ आ. ७ )

## २८६८ हलदन्तात्सप्तम्याः संज्ञायाम् ॥ ६ । ३ । ९ ॥

( ६३९८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ हृद्युभ्यां ङेरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) हृद्युभ्यां ङेरुपसंख्यानं कर्तव्यम् । हृदिस्पृक्, दिविस्पृक् ॥

( ६३९९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ अन्यार्थे च ॥ * ॥

( भाष्यम् ) अन्यार्थे चैषा सप्तमी द्रष्टव्या-हृदयं स्पृशतीति हृदिस्पृक्, दिवं स्पृशतीति दिविस्पृक् ॥

( प्रदीपः ) हृदयं स्पृशतीति । स्पर्शनक्रियायां हृदयस्य कर्मत्वं न त्वधिकरणत्वमिति वृत्तिविषये द्वितीयार्थे सप्तमी वक्तव्येत्यर्थः । 'पद्दन्नोमास्हृन्निश्–'इति छान्दसो हृदयस्य हृदादेशः । 'दिविस्पृक्'इत्येतत्तु भाषायामपि भवति ॥

( उद्योतः ) वृत्तिविषये द्वितीयार्थे इति । हृदयादिनिष्ठसंयोगानुकूलव्यापारवानित्यर्थे एषां प्रयोगाणामिष्टत्वादिति भावः ॥ छान्दस इति । लोकेऽपि तेषां दर्शनात् 'मासश्छन्दसि'इति वार्तिके छन्दोग्रहणाच्च चिन्त्यमिदम् । असंज्ञार्थमिदं वचनम् ॥

( ६४०० एकदेशिन उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ हलदन्ताधिकारे गोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) हलदन्ताधिकारे गोरुपसंख्यानं कर्तव्यम् । गविष्ठिरः ॥

न कर्तव्यम् ।

लुकोऽवादेशो विप्रतिषेधेन । लुक्क्रियतामवादेश इति—अवादेशो भविष्यति विप्रतिषेधेन । अवादेशे कृते हलदन्तादित्येव सिद्धम् ॥

( प्रदीपः ) लुकोऽवादेश इति । ननु चावादेशोऽन्तरङ्गो लुक् बहिरङ्ग इति कुतो विप्रतिषेधः ? अपि च 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते' इत्यवादेशेन न भाव्यम्[2] । एवं तर्ह्यन्तरङ्गबहिरङ्गभावमनपेक्ष्य विप्रतिषेध उच्यते । कृते चावादेशे अलुका भाव्यमिति लुकः प्रवृत्तिः सन्दिग्धेति बाधकत्वमपि लुकः सन्दिग्धमिति विप्रतिषेधोपपत्तिः ।

अन्ये त्वाहुः—किं व्यक्तिपक्षाश्रय[3] एतद्विषयलक्षणस्याचरितार्थत्वात् भाविहलन्तत्वाश्रयेणालुका लुको बाधनादवादेशोऽस्तु, अथ जातिपक्षे सांप्रतिकहलन्तेषु सावकाशोऽलुगत्रानुपजातनिमित्तो नालं लुकं बाधितुमिति लुक् प्रवर्तताम्–इत्येवं-विधो विप्रतिषेधः ॥

( उद्योतः ) लुक् बहिरङ्ग इति । समासप्रातिपदिकापेक्षत्वादिति भावः ॥ अपिचेत्याद्युक्तदोषं परिहरति—कृते चेति ॥

एतद्विषयलक्षणस्य—कृतावादेशगोशब्दविषयस्य ॥ भावीति । लुक्प्रवृत्तेः प्राक् 'अन्तरङ्गानपि–'इति न्यायेनावादेशाप्रवृत्तेरिति भावः ॥ विप्रतिषेधः—विरोधः । तत्र विरोधे प्रसक्ते व्यक्तिपक्षाश्रयणेन परत्वादवादेश इत्याशयः ॥

( ६४०१ विप्रतिषेधाक्षेपवार्तिकम् ॥ ४ ॥ )

॥ * ॥ लुकोऽवादेशो विप्रतिषेधेनेति चेत् भूमिपाशेऽतिप्रसङ्गः ॥ * ॥

( भाष्यम् ) लुकोऽवादेशो विप्रतिषेधेनेति चेत् भूमिपाशेऽतिप्रसङ्गो भवति । भूम्यां पाशो भूमिपाशः ॥

( प्रदीपः ) जातौ पदार्थे दृषदिमाषकादिषु सांप्रतिकहलन्तेष्वलुक् सावकाशो भाविहलन्तत्वाश्रयणेन न शक्नोति लुकं बाधितुम्, अन्तरङ्गाणां च विधीनां बाधको लुगिति मन्यमान आह—लुक इति । अत्रापि यणादेशे कृते हलन्तत्वादलुक्प्रसङ्गः ॥

( उद्योतः ) 'अथ जातिपक्षे' इत्यादिना 'अलं लुकं बाधितुं' इत्यन्तेनोक्तमेवार्थं स्फुटत्वायोपपादयति—'जातौ'इत्यादिना न शक्नोति लुकं बाधितुम्'[4] इत्यन्तेन । अत्र मते व्यक्तिपक्षे संभावनामात्रेणालुका लुको वा बाधो बोध्यः । अत्रारुचिबीजं स्वरूपकथनेनैव सुज्ञानां स्फुटम् ॥

भाष्यकारोऽन्तरङ्गत्वाद्युपेक्ष्य लक्ष्यविरोधादेव विप्रतिषेधं दूषयति—भूमिपाशे इत्यादिना ॥

१ 'प्रयोजनम् । किम् । आत्मने' इति च. छ. झ. पाठः ॥
२ 'अन्तरङ्गभावमनपेक्ष्य' इति झ. पुस्तकेऽधोनिर्दिष्टः पाठः ॥
३ 'व्यक्तिपक्षाश्रये एतद्विषये लक्ष–' इति च. झ. पाठः ॥
४ 'इत्यादिना नालं लुकं' इति झ. पाठः ॥

( ६४०२ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अकोऽत इति वा तत्सन्ध्यक्षरार्थम् ॥ * ॥

( भाष्यम् ) एवं तर्हि अविशेषेण सप्तम्या अलुकमुक्त्वा 'अकोऽतः' इति वक्ष्यामि, तन्नियमार्थं भविष्यति-अकोऽत एव भवति नान्यत इति ।

तत्सन्ध्यक्षरार्थम्, तेन सन्ध्यक्षराणां सिद्धं भवति ।

सिध्यति । सूत्रं तर्हि भिद्यते ।

( प्रदीपः ) अक इति । 'सप्तम्याः संज्ञायाम्' इति कृत्वा 'अकोऽतः' इति नियमार्थं कर्तव्यमित्यर्थः ॥

तत् संध्यक्षरार्थमिति । संध्यक्षरान्तेभ्योऽलुगर्थमित्यर्थः ॥

( उद्द्योतः ) एवञ्च वलवत्त्वाल्लुगेवेत्युपसङ्ख्यानस्य कर्तव्यत्वे प्राप्ते आह—अकोऽत इति वेति । 'हलदन्तात्-'इत्यस्य स्थाने ॥

( सिद्धान्तभाष्यम् )

यथान्यासमेवास्तु ।

ननु चोक्तं हलदन्ताधिकारे गोरुपसंख्यानमिति।

नैष दोषः ।

निपातनात्सिद्धम् ।

किं निपातनम् ?

गविष्ठिरशब्दो बिदादिषु पठ्यते । असकृत्खल्वपि निपातनं क्रियते-'गवियुधिभ्यां स्थिरः' (८।३।९५) इति ॥

( प्रदीपः ) असकृदिति । न-अलुग्विषयमेव निपातनम्, अपि तु सर्वार्थमिति दर्शयति । 'गवियुधिभ्यां स्थिरः' इत्यनेन समासे गविशब्दात्परस्य स्थिरस्य सकारस्य षत्वं विदधत् गविष्ठिरशब्दे सप्तम्या अलुकमभ्यनुजानाति ॥

( उद्द्योतः ) नन्वेकेनैव सिद्धत्वात्किं निपातनान्तरकथनेनेत्याशङ्क्य पूर्वोक्तस्यैव सन्देहनिराकरणेन दृढीकरणाय-इत्याह—नाब्विषयमेवेति ॥ अत्र विशिष्टनिपातनाभावेऽपि निपातनसाम्यान्निपातनव्यवहार इत्याह—समासे गवीत्यादि । तत्र हि 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इति वर्तते ॥

( १२०५ विधिसूत्रम् ॥ ६ । ३ । १ आ. ८ )

## २८६९ कारनाम्नि च प्राचां हलादौ ॥ ६ । ३ । १० ॥

( वार्तिकावतरणभाष्यम् )

किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ? ।

कथं च प्राप्ते, कथं चाप्राप्ते ?

यदि संज्ञायामिति वर्तते ततः-प्राप्ते । अथ निवृत्तं ततः-अप्राप्ते ।

कश्चात्र विशेषः ?

( प्रदीपः ) कारः—स्वामिग्राह्यो भागः ॥ यदि संज्ञायामिति । संज्ञाग्रहणानुवृत्तौ रूढो यः कारो नियतद्रव्यो नियतपरिमाणस्तस्य ग्रहणेन भाव्यम् । यस्तु सांप्रतिकः कारः केनचिदेवोत्पादितस्तस्य ग्रहणाभावः, तत्र पूर्वेण नित्यमलुकि प्राप्ते विभाषेयं सम्पद्यते । अथ संज्ञाग्रहणं नानुवर्तते पूर्वविप्रतिषेधाच्च संज्ञायां नित्येनालुका भाव्यम्, तदा सांप्रतिककाराभिधायिन्यप्राप्तो विभाषाऽलुग्विधीयत इति पक्षोऽवतिष्ठते । तस्मिंश्च पक्षे 'कारनाम्नि'इति नामशब्दो व्यपदेशमात्राभिधायी ॥

( उद्द्योतः ) कारशब्दार्थमाह—स्वामीति । कर एव कारः । प्रज्ञाद्यण् । स च पालयितुः स्वामिनः प्रजाभिर्देयोंऽशो धान्यषड्भागादिः । स च देशभेदेन नियतरूपः ॥ रूढो य इति । कृतालुक् यो रूढ इत्यर्थः ॥ ननु संज्ञाग्रहणाननुवृत्तावपि नामशब्दस्य संज्ञापर्यायत्वात्तत्रैव प्राप्तेः कथमप्राप्तविभाषात्वोपपत्तिरत आह—तस्मिंश्च पक्ष इति ॥

( ६४०३ प्राप्तविभाषायां दोषवार्तिकम् ॥ १ ॥ )

॥ * ॥ कारनाम्नि वावचनार्थं चेद्जादावतिप्रसङ्गः ॥ * ॥

( भाष्यम् ) कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गो भवति ।

इहापि प्राप्नोति-अविकटे उरणो दातव्यः-अविकटोरणः ॥

अस्तु तर्ह्यप्राप्ते ।

( प्रदीपः ) अविकटोरण इति । अवीनां संघातोऽविकटः । संघाते कटच् । उरणः—मेषः । कारविशेषस्य रूढिरियमिति पूर्वेणालुक् प्राप्नोतीत्यर्थः । 'प्राचाम्'इति चैतदुभयथा व्याख्यायते-प्राचामाचार्याणां मतेन हलादावुत्तरपदे कारनाम्न्यलुक् भवति नान्येषाम्-इति विकल्पः संपद्यते, व्यवस्थितविभाषा च विज्ञायते । तेन प्राग्देशे कारनाम्नि हलादौ नित्यमलुक् भवति, देशान्तरे तु कारनाम्नि लुगेव-यूथपशुरिति । अथवा-प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदेऽलुक्, न तु देशान्तरे यूथपशुरित्यादौ-इति सामर्थ्यात् देशभेदेन लुगलुकोर्व्यवस्थानाद्विकल्पः सम्पद्यते । यूथपश्वादय उदग्देशे काराः, हले द्विपदिकादयः प्राग्देशे, अविकटोरणादयः प्रागुदक् चेति ॥

( उद्द्योतः ) भाष्ये-कारनाम्नीति । काररूढे इत्यर्थः ॥

( भाष्ये ) वावचनार्थं चेदिति । 'प्राचाम्'इति विकल्पार्थकं चेदित्यर्थः ॥

पूर्वेणालुगिति । नित्योऽलुगित्यर्थः । लुगेवात्रेष्यते ॥ ननु प्राचामित्यस्य देशविशेषणत्वान्नित्य एवायं विधिरिति विचारोऽयमसङ्गत इत्यत आह—प्राचामिति चैतदिति ॥ ननु प्राचामित्याचार्यनिर्देशे देशविशेषणे यत्फलं तन्न सिध्येदत आह—व्यवस्थितेति ॥ देश-

विशेषणपक्षेऽपि सामर्थ्याद्विकल्पोपपत्तिं दर्शयति—**अथवेति** । इदमेव युक्तम्, अन्यथा पूर्वेण नित्ये प्राप्तेऽस्य विकल्पार्थत्वेन नियमार्थत्वाभावाद्यूथपश्वादिष्वपि पूर्वसूत्रप्रवृत्तिर्दुर्वारा । एवञ्च 'हलादावुत्तरपदे कारनाम्नि चेदलुक् प्राग्देशीय एव'इति नियमादविकटोरणस्याव्यावृत्तेस्तत्र पूर्वसूत्रप्रवृत्तिर्दुर्निवारा, यूथपश्वादौ च नेति बोध्यम् ॥

( ६४०४ अप्राप्तविभाषायां दोषवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अप्राप्ते समासविधानम् ॥ * ॥

**( भाष्यम् ) यद्यप्राप्ते समासो विधेयः । प्राप्ते पुनः सति 'संज्ञायाम्' ( २।१।४४ ) इत्येव समासः सिद्धः ॥**

( अप्राप्तविभाषादोषनिवारकभाष्यम् )

**नैष दोषः । एतदेव ज्ञापयति-भवत्यत्र समास इति, यदयं कारनाम्नि सप्तम्या अलुकं शास्ति ॥**

**यद्यपि तावत्-ज्ञापकात्समासः स्यात्, स्वरस्तु न सिध्यति ।**

**यद्धि तत्सप्तमीपूर्वपदं प्रकृतिस्वरं भवतीति, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं तत् ।**

**नैवात्रानेन स्वरेण भवितव्यम् ।**

**किन्तर्हि ?**[1]

**'सप्तमीहारिणौ धर्म्येऽहरणे' ( ६।२।६५ ) इत्यनेनात्र स्वरेण भवितव्यम् ॥**

**किं च भोः संज्ञा अपि लोके क्रियन्ते, न लोकः संज्ञासु प्रमाणम् । लोके च कारनाम संज्ञा ॥**[2]

( प्रदीपः ) **एतदेवेति** । समासमन्तरेण लुक्प्रसङ्गाभावादलुग्विधानादत्र समासोऽनुमीयत इत्यर्थः । अस्मिंस्थाने अविकटोरणः सांप्रतिककार इत्यभ्युपगमः । यथैव स्तूपेशाणादयः । अत्र हलादिग्रहणादजादिनिवृत्त्यर्थादजादावपि समासानुमानम् ॥

**यद्यपीति** । यथा परमे कारके-परमकारके इत्यत्र पूर्वपदप्रकृतिस्वरो न भवति, लाक्षणिकत्वात्सप्तमीसमासस्य । एवं स्तूपेशाणादावपि पूर्वपदप्रकृतिस्वराप्राप्तिः ॥

इतरो यद्यपि 'संज्ञायाम्'इति प्रतिपदोक्तः सप्तमीसमासो विधीयते तथापि स्वरान्तरेणैवात्र भाव्यमित्याह—**नैवात्रेति** । पूर्वपदाद्युदात्तत्वेन भाव्यमित्यर्थः ॥

एवं स्थिते निर्णेतुमाह—**किं च भो इति** । **अयमर्थः**—संज्ञाग्रहणानुवृत्तौ स्तूपेशाणादयो रूढाः, तन्निवृत्तौ न रूढा इति-एतन्न क्रियते । एकस्य रूढित्वारूढित्वविरोधात् ॥

**लोके चेति** । रूढा एव स्तूपेशाणादयः, ते तु चिरन्तनाः सांप्रतिका वा भवन्तीत्यर्थः । संज्ञाग्रहणानुवृत्त्यैव सिद्धेऽर्थे नामग्रहणं विस्पष्टार्थम् । एवं हि स्फुटा प्राप्ते विभाषा भवति, अन्यथा संज्ञाग्रहणानुवृत्तिः संदिह्येत ॥

( **उद्द्योतः** ) **अस्मिंस्थाने इति**—अस्यां स्थितावेवमङ्गीकारे, सांप्रतिकानामेवोदाहरणत्वाङ्गीकारे इत्यर्थः । एवञ्चोदाहरणभूतस्तूपेशाणादीनां यथा सांप्रतिकत्वं तथाऽविकटोरणस्यापीति न तत्र पूर्वसूत्रप्राप्तिरित्यर्थः ।[3] तत्र संज्ञाग्रहणेन प्राचीनसङ्केतानामेव ग्रहणादित्यभिमानः ॥ नन्वनेन हलादावुत्तरपदे समासानुमानेऽपि अजादौ कथमत आह—**अत्र हलादीति** ॥

**एवं स्तूपे इति** । अत्र सप्तमीसमासस्यानुमेयत्वात्प्रतिपदोक्तत्वाभाव इति भावः ॥

**पूर्वपदाद्युदात्तत्वेनेति** । 'सप्तमीहारिणौ-'इत्यनेन । अत्र तु लक्षणप्रतिपदोक्तपरिभाषा भाष्यप्रामाण्यान्नेति भावः । **'संज्ञा अपि लोके क्रियन्ते'** इति भाष्यस्य—संज्ञात्वं न शास्त्रैकगम्यं, 'संज्ञायाम्'इत्युच्चार्य विहिता एव संज्ञाशब्दा इति नेत्यर्थः । लोकशब्देनात्र शास्त्रम् । कचित्तु 'शास्त्रे' इत्येव पाठः । तत्र हेतुमाह—(भाष्ये) **लोकः संज्ञास्विति** । तेन रूढा एव संज्ञा इत्यर्थः, तदाह—**अयमर्थ इत्यादिना** । 'लोके च कारनाम संज्ञा' इत्यस्य नामशब्दसंज्ञाशब्दौ पर्यायावित्यर्थः ॥ नन्वेवं तदनुवृत्त्यैव सिद्धेऽत्र नामग्रहणं व्यर्थमत आह—**संज्ञाग्रहणेति** ॥

( वार्तिकावतरणभाष्यम् )

**ननु चोक्तं कारनाम्नि वावचनार्थे चेदजादावतिप्रसङ्ग इति ।**[5]

**नैष दोषः ॥**

( ६४०५ प्राप्तविभाषादोषनिवारकवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

**( भाष्यम् ) योगविभागः करिष्यते-'कारनाम्नि च प्राचाम्' । ततः-'हलादौ' । हलादौ च कारनाम्नि सप्तम्या अलुक् भवति ।**[4]

**इदमिदानीं किमर्थम् ?**

**नियमार्थम्-हलादावेव कारनाम्नि सप्तम्या अलुक् भवति नान्यत्र ।**

**क मा भूत् ?**

**अविकटे उरणो दातव्यः-अविकटोरणः ॥**

( प्रदीपः ) **कारनाम्नि च प्राचामिति** । प्राचामेव कारनाम्नि-इति नियमादुदीचां कारेऽविकटोरणेऽलुक् निवर्त्यते । प्राचामपि कारेऽविकटोरणे 'हलादौ'इत्यनेन द्वितीयेन नियमेनालुग्निवृत्तिः ॥

( **उद्द्योतः** ) भाष्ये वाक्यभेदेन नियमद्वयमुक्तं, तत्राद्यस्य स्वरूपव्यावर्त्यं दर्शयति—**प्राचामेवेत्यादि** ॥ **अविकटोरणेऽलुग्निवर्त्यते इति** । इदमुपलक्षणं, यूथपश्वादावप्युदीचां कारनाम्न्यनेनैव व्यावृत्तेरिति बोध्यम् । एवञ्चाविकटोरणस्योदक्कारत्वे कैयटोक्ते दृढं भाष्यारूढं मानं चिन्त्यम् ॥ द्वितीयं दर्शयति—**प्राचामपीति** ।

---

१ 'किन्तर्हि' इत्यस्य स्थाने 'किन्तु' इति अ. पाठः ॥
२ 'संज्ञा अपि वै लोके' 'संज्ञा अपि शास्त्रे' इति छ. निर्दिष्टः पाठः ॥
३ तत्र-पूर्वस्मिन् 'हलदन्तात्सप्तम्याः' इति सूत्रे ॥

४ अनेन-प्रकृतसूत्रे 'हलादौ' इति ग्रहणेन ॥
५ वावचनार्थमिति । इदं सूत्रे प्राचामित्युपादानेनोदीचां नेत्यर्थकल्पनया फलितार्थकथनम् ॥

अभ्यर्हितपर्शौ तु संज्ञात्वाभावात्प्राप्तिरेव नेति तृतीयो नियमो भगवता नादृतः। परे तु 'वावचनार्थं चेत्–'इत्युपक्रमात् 'कारनाम्नि च प्राचाम्'इति सर्वत्र कारनाम्नि विकल्पार्थम्, प्राचाङ्ग्रहणं विकल्पार्थमेव। हलादाविति नियमार्थं, तदुपक्रमेणैव नियमार्थत्वस्य भगवतोक्तेः। अयं च योगविभागसामर्थ्यात्पूर्वस्यापि नियमः। एवञ्च सर्वदेशीयकारनाम्नि हलादौ विकल्पः प्रतीयते, अजादौ च लुगेवेति वदन्ति ॥

( १२०६ विधिसूत्रम् ॥ ६ । ३ । १ आ. ९ )

## २८७० मध्याद्गुरौ ॥ ६ । ३ । ११ ॥

( ६४०६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ गुरावन्ताच ॥ * ॥

( भाष्यम् ) गुरावन्ताच्चेति वक्तव्यम्। अन्तेगुरुः॥

( १२०७ विधिसूत्रम् ॥ ६ । ३ । १ आ. १० )

## २८७२ बन्धे च विभाषा ॥ ६।३।१३ ॥

( विषयनिर्धारणे पूर्वपक्षिभाष्यम् )

स्वाङ्गग्रहणमनुवर्तते, उताहो न।

किं चातः ?

यद्यनुवर्तते, सिद्धम्-हस्तेबन्धः, हस्तबन्धः।

चक्रेबन्धः, चक्रबन्ध इति न सिध्यति।

अथ निवृत्तम्, सिद्धम्-चक्रेबन्धः, चक्रबन्धः।

हस्ते बन्धः, हस्तबन्ध इति न सिध्यति।

किं कारणम् ?

'नेन्सिद्धबध्नातिषु च' ( ६।३।१९ ) इति प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) नेन्सिद्धेति—प्रतिषेधस्यास्य च विकल्पस्य विषयविभागज्ञानायोपन्यस्यति—स्वाङ्गग्रहणमिति। स्वाङ्गग्रहणेऽनुवर्तमाने स्वाङ्गादुत्तरस्याः सप्तम्या अलुको विकल्पः, अन्यस्मात्तु तत्प्रतिषेध इति विषयविभागसिद्धिः ॥

अथ निवृत्तमिति। तदा विकल्पनिषेधयोर्विषयविभागाविज्ञानाद्यथेष्टसिद्ध्यभावः ॥

( उद्योतः ) ननु 'चक्रेबन्धः–चक्रबन्धः'इत्यादिप्रयोगदर्शनेनात्र स्वाङ्गग्रहणाननुवृत्तिनिश्चयात्प्रश्नानुपपत्तिमाशङ्क्य तद्बीजं दर्शयति—नेन्सिद्धेति। उभयत्रापि धातुग्रहणमाश्रित्य किं स्वाङ्गग्रहणानुवृत्त्या विषयविभागलाभः, आहोस्वित्प्रकारान्तरेणेति सन्देहात्प्रश्नोपपत्तिरिति भावः ॥ भाष्ये—अथ निवृत्तं सिद्धं-चक्रे बन्धः, चक्रबन्धः। हस्ते बन्धः, हस्तबन्ध इति न सिध्यतीति। अयं भावः—अत्र स्वाङ्गग्रहणनिवृत्तावस्यास्वाङ्गार्थत्वे निषेधः स्वाङ्गविषयः स्यादिति ॥ विषयविभागाज्ञानादिति। इष्टविषयविभागाज्ञानादित्यर्थः ॥ तदाह—यथेष्टसिद्ध्यभाव इति। उभयत्रापि विकल्पस्येष्टत्वमिति भावः ॥

( विषयनिर्धारणे सिद्धान्तभाष्यम् )

नैष दोषः।

सर्वत्रैवोत्तरपदाधिकारे 'तत्पुरुषे कृति बहुलम्' ( १४ ) इति प्राप्ते 'नेन्सिद्धबध्नातिषु'इति प्रतिषेध उच्यते, तस्मिन्नित्ये प्राप्ते इयं विभाषा आरभ्यते ॥

एवमपि न ज्ञायते—कस्मिन् विषये विभाषा कस्मिन् विषये प्रतिषेध इति।

घञन्तस्येदं बन्धशब्दस्य ग्रहणम्, प्रतिषेधेषु च धातुग्रहणम्। तेन घञन्ते विभाषा, अन्यत्र प्रतिषेधः ॥

( प्रदीपः ) सर्वत्रेति। चक्रबन्धनमित्यादौ सर्वत्र बध्नातिधातवादावुत्तरपदेऽलुक्प्रतिषेधः। अत्र तु सूत्रे बन्धशब्दो घञन्त उपात्तः, न तु धातुमात्रनिर्देश इत्यर्थः ॥

(उद्योतः) 'सर्वत्र'पदार्थमाह—चक्रबन्धनमित्यादाविति ॥ भाष्ये—तस्मिन्नित्ये प्राप्ते इति। अवश्यम्प्राप्ते इत्यर्थः। एवञ्चेदमपि उत्तरसूत्राद् 'तत्पुरुषे' इत्यपकृष्य तत्पुरुष एवेति भावः॥ एवमपि न ज्ञायत इति। उभयत्रापि धातुनिर्देशादिति–अभिमानः। एवञ्च बहुव्रीहावप्यस्य प्रवृत्तिं स्वीकुर्वतां वृत्तिकृतामाशयश्चिन्त्यः ॥ घञन्त इति। तेन पैचाद्यजन्तेऽपि निषेधं एवेति बोध्यम् ॥

( १२०८ विधिसूत्रम् ॥ ६ । ३ । १ आ. ११ )

## २८७३ तत्पुरुषे कृति बहुलम् ॥६।३।१४॥

( ६४०७ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तत्पुरुषे कृति बहुलमकर्मधारये ॥ * ॥

( भाष्यम् ) तत्पुरुषे कृति बहुलमित्यत्राकर्मधारय इति वक्तव्यम्।

इह मा भूत्—परमे कारके-परमकारक इति।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम्। बहुलवचनान्न भविष्यति ॥

( प्रदीपः ) बहुलवचनादिति। प्रकृतत्वादलुगिति विज्ञेयम्। न्यायोऽप्यत्रास्ति–अन्तरङ्गा–कृदन्तवाच्यक्रियानिमित्ता सप्तमी गृह्यते, इह तु क्रियान्तरनिमित्ता परमे कारके निधेहीति बहिरङ्गा–इति न गृह्यते ॥

---

१ स्वाङ्गग्रहणमिति। पूर्वसूत्राद् 'अमूर्धमस्तकात्स्वाङ्गादकामे' इत्यस्मादित्याशयः ॥

२ प्रतिषेधेषु। नेन्सिद्धेत्यादिषु ॥

३ पचाद्यजन्ते। घञन्तभिन्ने बन्धशब्दे इत्यर्थः ॥

४ निषेध इति। नेन्सिद्धबध्नातिषु चेति निषेधः ॥

५ न्यायोऽप्यत्रास्तीति। परमकारक इत्यादौ कर्मधारये तत्पुरुषे कृतीत्यस्याप्रवृत्तौ न्यायोऽस्तीत्यर्थः ॥

(उद्द्योतः) अन्तरङ्गेति । कृति सप्तमीत्युक्त्या [1]प्रत्यासन्नां चेत्यपि बोध्यम् । यथा—स्तम्बेरमादौ ॥

(वार्तिकावतरणभाष्यम्)

**अथ[2] किमर्थं लुगलुगनुक्रमणं क्रियते, न 'तत्पुरुषे कृति बहुलम्' इत्येव सिद्धम् ॥**

(६४०८ अनुक्रमणप्रयोजनवार्तिकम् ॥ २ ॥)

## ॥ * ॥ लुगलुगनुक्रमणं बहुलवचनस्याकृत्स्नत्वात् ॥ * ॥

**(भाष्यम्) लुगलुगनुक्रमणं क्रियते, अकृत्स्नं बहुलवचनमिति ॥**

**[3]यद्यकृत्स्नं बहुलवचनम्, यदनेन कृतमकृतं तत् ।**

**एवं तर्हि न ब्रूमः—अकृत्स्नमिति, कृत्स्नं च—[4]कारकं च, साधकं च, निर्वर्तकं च, यदनेन कृतं सुकृतं तत् ।**

**किमर्थं तर्हि लुगलुगनुक्रमणं क्रियते?**

**उदाहरणभूयस्त्वात् ।**

**ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां [5]लक्षणं प्रपञ्चश्च । केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति ॥**

**अवश्यं खल्वप्यस्माभिरिदं वक्तव्यम्—बहुलम्, अन्यतरस्याम्, उभयथा, एकेषामिति । सर्ववेदपारिषदं हीदं शास्त्रम्, तत्र नैकः पन्थाः शक्य आस्थातुम् ॥**

(प्रदीपः) **अकृत्स्नत्वादिति** । अकृत्स्नकारित्वादित्यर्थः । न हि बहुलग्रहणमात्राल्लुगलुकोर्विषयविभागनिश्चयः ॥

इतरस्त्वपरिपूर्णत्वमकृत्स्नत्वं मन्यमान आह—**यद्यकृत्स्नमिति** ॥ 'कृत्स्नं च' इत्येतावत्युक्ते अवयवसाकल्यमपि कार्त्स्न्यं गम्यत इत्याह—**कारकं चेति** । कृत्स्नकारित्वात् कृत्स्नमित्यर्थः ॥ कारकमपि प्रारब्धस्यान्तागमनात्प्रतिबन्धसद्भावात् अकृत्स्नं स्यादित्याह—**साधकं चेति** ॥ साधकमपि कदाचिदसामर्थ्यादकृत्स्नं स्यादित्याह—**निर्वर्तकं चेति** । सर्वदा सर्वं कार्यं निष्पादयतीत्यर्थः ॥

**उदाहरणभूयस्त्वादिति** । भूयांस्युदाहरणानि प्रपञ्चेन [6]ज्ञायन्त इत्यर्थः ॥

**लक्षणमिति** । सामान्यलक्षणं बहुलग्रहणादियुक्तं विषयविभागस्याप्रतिपादकत्वान्न तथा कारकम्, प्रपञ्चोऽप्यानन्त्यप्रसङ्गान्न कारक इति मध्यमावस्थाऽऽश्रीयत इत्यर्थः ॥

**अवश्यं खल्विति** । प्रातिशाख्यसद्भावेऽपि सर्ववेदसाधारणेनानेन शब्दानां प्रतिपादनं क्रियते, तच्च प्रतिपदपाठस्याशक्यत्वात् बहुलादिग्रहणेन कर्तव्यमित्यर्थः ॥ **सर्ववेदपारिषदमिति** । अध्येतृसंघः परिषत्, तत्र भवं पारिषदम् । सर्ववेदानां पारिषदमिति षष्ठीसमासः ॥ **नैक इति** । वेदेषु वैचित्र्येण व्यवहारात्तदङ्गव्याकरणेऽपि तथैव बहुलादिशब्देन व्यवहारः । तेनैतन्न चोदनीयम्—वाग्रहणमेव क्रियतां व्यवस्थितविभाषा वाऽऽश्रीयतां किं बहुलग्रहणेन—इति ॥

(उद्द्योतः) **विषयविभागेति** । [7]क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषेत्येव बहुलग्रहणेन लभ्यते, न तु विषयविभाग इति मन्दबुद्धीनां विषयविभागज्ञानार्थं लुगलुगनुक्रमणं प्रपञ्चेन क्रियत इति वार्तिकार्थ इति भावः ॥

**अपरिपूर्णत्वम्**—अव्यापकत्वम् ॥ अनेकपर्यायोपादानोपयोगमाह—**एतावतीति** । यथा 'कृत्स्नोऽयं पटः' इत्युक्ते सर्वावयवपूर्णः, न तु केनचिदवयवेन न्यून इति गम्यते । न तु कार्यविषयं साकल्यम् । एवमत्राप्यवयवगतसाकल्यं प्रतीयेत, तन्निवृत्त्यर्थं कारकमित्युक्तमिति भावः ॥ अन्तागमने हेतुः—**प्रतिबन्धसद्भावादिति** । **साधकमित्यस्य**—प्रारब्धकार्यनिष्पत्तिपर्यन्तं साधयतीत्यर्थः ॥ **अकृत्स्नं स्यादिति** । कार्यस्य कदाचिदकरणादकृत्स्नमित्यर्थः ॥

उदाहरणभूयस्त्वस्य तत्करणे हेतुत्वासंभवादाह—**भूयांसीति** । भूय उदाहरणज्ञापनायेति भाष्याक्षरार्थः ॥

ननु प्रपञ्चस्यापि लक्षणत्वात् **'लक्षणं प्रपञ्चश्च'** इत्ययुक्तमत आह—**सामान्यलक्षणमिति** ॥

**प्रातिशाख्येति** । तत्र हि तत्तच्छाखागतानामेव शब्दानां प्रतिपादनं, तदपि न कार्त्स्न्येन, प्रकृतिप्रत्ययविभागानां स्वराणां च सर्वेषां तत्रासङ्ग्रहात् । इदन्तु सर्वेषां वैदिकानां लौकिकानां च शब्दानामनुशासनमित्यर्थः ॥ **'सर्ववेदपारिषदम्'** इत्यस्यार्थः—'सर्ववेदसाधारणेनानेन' इत्यनेन दर्शितः, तमेवावयवार्थकथनेन स्पष्टयति—**अध्येत्रिति** । सर्ववेदशब्दस्य पारिषदशब्देनावयवद्वारकसंबन्धे षष्ठ्यन्तस्य समासः ॥ **बहुलादिशब्देनेति** । वेदाङ्गत्वं बोधयितुं वैदिकैर्व्यवहार इति भावः ॥

(१२०९ विधिसूत्रम् ॥ ६ । ३ । १ आ. १२)

# २८८० षष्ठ्या आक्रोशे ॥ ६ । ३ । २१ ॥

(६४०९ उपसंख्यानवार्तिकम् ॥ १ ॥)

## ॥ * ॥ षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम् ॥ * ॥

**(भाष्यम्) षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्ति-**

---

१ अन्तरङ्गत्वं प्रतिपादयति—प्रत्यासन्नेति ॥

२ ननु परमकारके इत्यादौ लुक्कर्तव्यः स्तम्बेरम इत्यादौ चालुक्—इति लुगलुकोरप्यनुक्रमणमावश्यकमित्यभिप्रायेण शङ्कते—अथ किमर्थमिति । तत्पुरुषे कृति बहुलमित्यत्र बहुलग्रहणात्क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरित्यादि सेत्स्यतीति व्यर्थं लुगलुगनुक्रमणमिति शङ्कितुराशयः ॥

३ अकृत्स्नत्वात्—सर्वार्थसाधकत्वाभावात्, इयमर्थमभिप्रेत्य दूषयति—यद्यकृत्स्नमिति ॥

४ कृत्स्नशब्दस्यार्थविशेषान् साभिप्रायमाह—कारकं चेत्यादि ॥

५ लक्षणं—बहुलमन्यतरस्यामित्यादियुक्तं सामान्यलक्षणम् । प्रपञ्चः—तत्तल्लक्ष्यसाधकसूत्रप्रणयनरूपः ॥

६ 'ज्ञाप्यंते' इति झ. पाठः ॥

७ 'क्वचित्प्रवृत्तिः क्वचिद्विभाषेत्येव' इति ञ. पाठः ॥

दण्डहरेषूपसंख्यानं कर्तव्यम् । वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः ॥

( प्रदीपः ) पश्यतोहर इति । 'षष्ठी चानादरे' इति षष्ठी, पश्यन्तमनादृत्य हरतीत्यर्थः ॥

( उद्द्योतः ) पश्यतोहरे कर्तरि पचाद्यच्-इत्याह—हरतीत्यर्थ इति ॥

( ६४१० उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ आमुष्यायणामुष्यपुत्रिका ॥ * ॥

( भाष्यम् ) आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानं कर्तव्यम् । आमुष्यायणः, अमुष्यपुत्रिका ॥

अमुष्यकुलिकेति च वक्तव्यम्[1] । अमुष्यकुलिका ॥

( ६४११ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ देवानांप्रिय इति च ॥ * ॥

( भाष्यम् ) देवानां प्रिय इति चोपसंख्यानं कर्तव्यम् । देवानांप्रियः ॥

( ६४१२ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसंख्यानं कर्तव्यम् । शुनःशेपः, शुनःपुच्छः, शुनोलाङ्गूलः ॥

( प्रदीपः ) शुनःशेप इति—ऋषिविशेषसंज्ञेयम्[2] । अकारान्तोऽप्यस्ति शेपशब्दो न केवलं सकारान्तः । शुन इव शेपोऽस्येति बहुव्रीहिः ॥

( उद्द्योतः ) शुनःशेपादयो ऋषिविशेषस्य संज्ञाः ॥

( ६४१३ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ दिवश्च दासे[3] ॥ * ॥

( भाष्यम् ) दिवश्च दासे[4] उपसंख्यानं कर्तव्यम् । दिवोदासाय गायत ॥

( १२१० विधिसूत्रम् ॥ ६ । ३ । १ आ. १३ )

## २८८२ ऋतो विद्यायोनिसंबन्धेभ्यः ॥ ६ । ३ । २३ ॥

( ६४१४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणम् ॥ * ॥

( भाष्यम् ) विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणं कर्तव्यम् । विद्यासंबन्धेभ्यो विद्यासंबन्धेषु यथा स्यात् । योनिसंबन्धेभ्यो योनिसंबन्धेषु यथा स्यात् ।

व्यतिकरो मा भूत् ॥

अथैषां व्यतिरेकेण भवितव्यम् ?

बाढं भवितव्यम् । होतुःपुत्रः[5], पितुरन्तेवासी ॥

( प्रदीपः ) तत्पूर्वपदोत्तरपदग्रहणमिति । अन्यनिवृत्तिपरत्वादस्य व्यतिकरेऽपि कार्यप्रवृत्तिः ॥

( उद्द्योतः ) भाष्ये—व्यतिकरो मा भूदिति । विद्यायोनिसंबन्धातिरिक्तसंबन्धेऽलुग्मा भूदित्यर्थः ॥

तत्पूर्वोत्तरपदग्रहणे होतुःपुत्र इत्युदाहरणासङ्गतिरत आह—अन्येति ॥ व्यतिकरेऽपीति । परस्परमनयोः संबन्धे इत्यर्थः । तेन 'पितृधनं'[6] इत्याद्येव व्यावर्त्यमिति भावः ॥

( १२११ विधिसूत्रम् ॥ ६ । ३ । १ आ. १४ )

## २८८४ आनङ् ऋतो द्वन्द्वे ॥६।३।२५॥

( आनङोऽधिकरणम् )

( नकारप्रयोजनभाष्यम् )

कायं नकारः श्रूयते ?

न क्वचिच्छ्रूयते, लोपोऽस्य भवति 'नलोपः प्रातिपदिकान्तस्य' ( ८।२।७ ) इति ।

यदि न क्वचिच्छ्रूयते, किमर्थमुच्चार्यते ?

रपरत्वं मा भूदिति ॥

क्रियमाणेऽपि वै नकारे रपरत्वं प्राप्नोति ।

किं कारणम् ?

नलोपे कृते एषोऽपि हि उः स्थाने अण् शिष्यते ।

नैष दोषः ।

उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते, न चायमुः स्थाने अणेव शिष्यते ।

किं तर्हि ?

अण् चानण् च ॥

( प्रदीपः ) क्वायमिति ॥ कार्यार्थः श्रवणार्थो वा वर्णानामुपदेश इति मत्वा प्रश्नः ॥

क्रियमाणेऽपीति । उः स्थाने यः कृतोऽण् स रपर इति सूत्रार्थं मन्यते ॥

इतरः स्थानग्रहणद्वयानुवृत्त्याश्रयेणाह-नैष दोष इति ॥

( उद्द्योतः ) इति मत्वेति । तदुभयमपि नेहेत्यर्थः । 'मन्यते' इत्यनेन नायं सूत्रार्थस्तत्र स्थित इति दर्शयति ॥

---

१ अ. संज्ञकपुस्तके वार्तिकमेतद्दृश्यते ॥

२ 'ऋषिविशेषसंज्ञयमकारान्ताप्यस्ति । शेपशब्दो न केवलं सकारान्तः' इति झ. पुस्तके पाठः स लेखकप्रमादात् ॥

३ नैतद्वार्तिकमिति अ. क. पुस्तकयोरभिप्रायः ॥

४ 'दासे षष्ठ्या अलुक उपसंख्यानं' इति ट. पाठः ॥

५ अनयोः—होतुः पुत्रस्य चेत्यर्थः ॥

६ 'पितृधन इत्याद्येव' इति झ. पाठः; ग. घ. ज. पुस्तकेषु 'पितृधने इत्या-' इति पाठः ॥

( वार्तिकावतरणभाष्यम् )

कथं पुनरिदं विज्ञायते—किमृकारान्तानां यो द्वन्द्व इति, आहोस्वित् द्वन्द्वे ऋकारान्तस्येति ?

कश्चात्र विशेषः ?

( ६४१५ पूर्वस्मिन् पक्षे उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम् ॥ * ॥**

( भाष्यम् ) ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानं कर्तव्यम् । पितापुत्रौ ॥

( ६४१६ पूर्वस्मिन् पक्षे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ कार्यी चानिर्दिष्टः ॥ * ॥**

( भाष्यम् ) कार्यी चानिर्दिष्टो भवति । ऋकारान्तानां द्वन्द्वे न ज्ञायते—कस्यानङा भवितव्यमिति ॥

( द्वितीयपक्षोपस्थापकभाष्यम् )

अस्तु तर्हि द्वन्द्वे ऋकारान्तस्येति ॥

( ६४१७ द्वितीयपक्षे दोषवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अविशेषेण पितृपितामहादिष्वतिप्रसङ्गः ॥ * ॥**

( भाष्यम् ) अविशेषेण पितृपितामहादिष्वतिप्रसङ्गो भवति । पितृपितामहाविति ॥

( प्रथमपक्षे दोषोद्धारभाष्यम् )

अस्तु तर्हि ऋकारान्तानां यो द्वन्द्व इति ।

ननु चोक्तम् *ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम्* इति ।

नैष दोषः ।

पुत्रग्रहणमपि प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'पुत्रेऽन्यतरस्याम्' ( २२ ) इति ।

यदि तदनुवर्तते, 'विभाषा स्वसृपत्योः' (२४) पुत्रे च—इति पुत्रेऽपि विभाषा प्राप्नोति ।

नैष दोषः ।

सम्बन्धमनुवर्तिष्यते । 'षष्ठ्या आक्रोशे' (२१)। 'पुत्रेऽन्यतरस्याम्' (२२), षष्ठ्या आक्रोशे ॥ 'ऋतो विद्यायोनिसम्बन्धेभ्यः' (२३), पुत्रेऽन्यतरस्याम्, षष्ठ्या आक्रोशे ॥ 'विभाषा स्वसृपत्योः' ( २४ ), पुत्रेऽन्यतरस्याम्, षष्ठ्या आक्रोशे ॥ 'आनङ् ऋतो द्वन्द्वे' । पुत्रग्रहणमनुवर्तते, षष्ठ्या आक्रोश इति निवृत्तम् ॥

( प्रदीपः ) पुत्रेऽपीति । अनाक्रोशेऽपि भ्रातुःपुत्रादाविलभिप्रायः ॥

संबन्धमिति । आक्रोशग्रहणेन संबन्धात् सम्बन्ध्यन्तरेण पुत्रशब्दो न सम्बन्ध्यते तन्निवृत्तौ तु सम्बध्यत इत्यर्थः ॥

(उद्द्योतः) ननु 'पुत्रेऽन्यतरस्याम्'इत्युक्तेः पुत्रे विभाषाप्राप्तिरिष्टैवेत्यत आह—अनाक्रोशेऽपीति । 'पुत्रेऽन्यतरस्याम्'इत्यत्राक्रोश इत्यनुवर्तनाद्दास्याःपुत्र इत्यादौ आक्रोश एव विकल्प इष्यते । 'विभाषा स्वसृ–'इत्यत्रानुवृत्तौ त्वनाक्रोशेऽपि भ्रातुःपुत्रादौ विकल्पेनालुक् प्राप्नोतीति भावः । ऋकारान्तपूर्वपदे पुत्रोत्तरपदे आक्रोशेऽपि पूर्वविप्रतिषेधेन विकल्प एवेष्यते, संबन्धानुवृत्तिपरभाष्यप्रामाण्यात् । एतेन परत्वात्तत्र विषये 'ऋतो विद्यायोनि–'इत्येव प्राप्नोतीति परास्तमिति तात्पर्यम् ॥

संबन्ध्यन्तरेण—अनाक्रोशविषयऋकारान्तपूर्वपदस्थषष्ठ्यलुग्रूपेण ॥

( द्वितीयदोषनिवारकभाष्यम् )

यदप्युच्यते—कार्यी चानिर्दिष्टः इति, कार्यी च निर्दिष्टः ।

कथम् ?

उत्तरपद इति वर्तते । ङिच्चायं क्रियते । सोऽन्तरेणापि कार्यिनिर्देशमृकारान्तस्यैव भविष्यति ॥

पुत्रे तर्हि कार्यी अनिर्दिष्टः ।

पुत्रे च कार्यी निर्दिष्टः ।

कथम् ?

ऋकारग्रहणमपि प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'ऋतो विद्यायोनिसम्बन्धेभ्यः' इति ।

तद्वै पञ्चमीनिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः ।

पुत्र इत्येषा सप्तमी ऋत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति–'तस्मिन्निति निर्दिष्टे पूर्वस्य'इति ॥

( उद्द्योतः ) भाष्ये—ऋत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यतीति । न चोभयोरपि चरितार्थत्वात्परत्वेन 'तस्मादित्युत्तरस्य'इत्येव प्रकल्पकं स्यादिति वाच्यम् । 'उत्तरपदे' इत्यधिकारेणात्रोपस्थितेन सामानाधिकरण्यानुरोधात् सप्तम्या एव प्रकल्पकत्वमित्याशयात् ॥

—०००—

( १२१२ विधिसूत्रम् ॥ ६ । ३ । १ आ. १५ )

## २८८५ देवताद्वन्द्वे च ॥ ६ । ३ । २६ ॥

( ६४१८ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः ॥ * ॥**

( भाष्यम् ) देवताद्वन्द्वे उभयत्र वायोः प्रतिषेधो वक्तव्यः । अग्निवायू, वाय्वग्नी ॥

---

१ अयं 'इति' शब्दः छ. पुस्तके न दृश्यते ॥

२ 'द्वन्द्वे ऋकारस्येति' इति छ. पाठः ॥

(प्रदीपः) उभयत्रेति। पूर्वपदत्वे उत्तरपदत्वे चेत्यर्थः॥

( ६४१९ प्रतिषेधोपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ ब्रह्मप्रजापत्यादीनां च ॥ * ॥

( भाष्यम् ) ब्रह्मप्रजापत्यादीनां च प्रतिषेधो वक्तव्यः । ब्रह्मप्रजापती, शिववैश्रवणौ, स्कन्दविशाखौ ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

स[1] तर्हि वक्तव्यः।

न वक्तव्यः। द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणस्यैतत्प्रयोजनम्—लोकवेदयोर्यो द्वन्द्वस्तत्र यथा स्यात्।

कश्च लोकवेदयोर्द्वन्द्वः?

वेदे ये सहनिर्वापनिर्दिष्टाः । न चैते वेदे सह निर्वापनिर्दिष्टाः ॥

( प्रदीपः ) लोकवेदयोरिति । साहचर्येण यौ लोकवेदयोः प्रसिद्धौ द्वन्द्वसमासवाच्यौ तत्रानङित्यर्थः ॥ सहनिर्वापः-सहदानम्[2] ॥

( उद्द्योतः ) ननु ब्रह्मप्रजापत्यादयो लोकवेदयोः प्रयुक्ता एवेत्यत आह—साहचर्येणेति । पुनर्द्वन्द्वग्रहणात्प्रसिद्धसाहचर्यवाचकद्वन्द्वग्रहणमिति भावः ॥ सहदानमिति। पूर्वं मनसा हविषो दानसङ्कल्पः—'इन्द्रावरुणाभ्यां जुष्टं निर्वपामि'इति, पश्चादग्नौ प्रक्षेपेण स्वत्वनिवृत्तिपर्यन्तं दानं स्वाहादिशब्दोच्चारणेन, तत्सर्वं निर्वापशब्देन विवक्षितमिति भावः । तेन 'स्कन्दविशाखौ[3] तृप्येताम्'इत्युदकदाने सह प्रसिद्धत्वेऽपि न क्षतिः । भाष्ये लोकपदेनात्र कल्पसूत्रम् ॥

( १२१३ विधिसूत्रम् ॥ ६ । ३ । १ आ. १६ )

## २८८७ इद्वृद्धौ ॥ ६ । ३ । २८ ॥

( ६४२० प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ इद्वृद्धौ विष्णोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः । आग्नावैष्णवं चरुं निर्वपेत् ॥

( १२१४ विधिसूत्रम् ॥ ६ । ३ । १ आ. १७ )

## २८९१ मातरपितरावुदीचाम् ॥ ६ । ३ । ३२ ॥

( १२१५ विधिसूत्रम् ॥ ६ । ३ । १ आ. १८ )

## २८९२ पितरामातरा च च्छन्दसि ॥ ६ । ३ । ३३ ॥

( निपातनबोधकभाष्यम् )

किं निपात्यते?

पूर्वोत्तरपदयोर्ऋकारस्यारारौ निपात्येते । मातरपितरौ भोजय[4], मातरपितरावानय, आ मा गन्तां पितरामातरा चा मा सोमो अमृतत्वाय[5] गम्यात् ॥

इति श्रीभगवत्पतञ्जलिप्रणीते महाभाष्ये षष्ठाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

(प्रदीपः) पूर्वोत्तरपदयोरिति—सप्तम्यन्तमेतत्। तत्र मातरपितरावित्यत्र पूर्वपदस्याराशब्दोऽन्तादेशो निपात्यते, उत्तरपदस्य तु 'ऋतो ङिसर्वनामस्थानयोः'इति गुणो रपरत्वं च । पितरामातरेत्यत्र पूर्वपदस्याराशब्दोऽन्तस्य निपात्यते, समासात्तु परस्य प्रथमाद्विवचनस्य 'सुपां सुलुक्'इत्याकारः। पूर्ववत् गुणरपरत्वे ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( उद्द्योतः ) ननु भाष्ये 'पूर्वोत्तरपदयोः'इत्युक्त्या उभयोरप्यृकारस्यारारौ निपात्येते इत्यर्थो भाति । तेन श्यामादावपि मातरपितराभ्यामित्येव—इति चेन्न, औरूपद्विवचनाविवक्षणे मानाभावेनान्यत्र निपातनाभावादित्याशयेनाह—सप्तम्यन्तमिति । पूर्वपदोत्तरपदयोः सतोः पूर्वपदस्यऋकारस्य सूत्रद्वयक्रमेण 'अर-अरा'इत्यादेशौ निपात्येते इत्यर्थः । केचित्तु 'पूर्वोत्तरसूत्रोपात्तनिपात्यमानपदयोः पूर्वपदे' इति शेष इत्यर्थमाहुः। अन्ये तु प्रयोगद्वयेऽपि पूर्वपदोत्तरपदयोर्निपातनम्। तेन 'मातरपितराभ्याम्'इत्येव। उत्तरत्रापि श्यामादेः 'सुपां सुलुक्-'इत्याकारविषये उत्तरखण्डेऽपि 'अरा' आदेशविधानमिति भाष्यार्थमाहुः। स्याद्वयमर्थो यदि तथा लक्ष्यं प्रमितमस्ति इति बहुदर्शिनो निर्णयंतु ॥

भाष्ये—आ मा गन्तामित्यादि। यद्यपि तैत्तिरीये माध्यन्दिनशाखायां च पितरा-इत्यादि भिन्नपदत्वेन पदपाठे पठन्ति, तथापि शाखान्तरे ऐकपद्येन पाठो भाष्यप्रामाण्याद्द्रष्टव्यः। यद्वा पदच्छेदपाठो भ्रान्त्येति बोध्यम्, तत्र तत्रावग्रहवत्। आधुनिकानां वा संप्रदायभ्रंश इति कल्प्यम् ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्य तृतीये पादे प्रथममाह्निकम् ॥

---

१ 'तत्तर्हि वक्तव्यम्। न वक्तव्यम्' इति छ. पाठः ॥

२ सहदानमिति। निर्वापपूर्वकमिति शेषः ॥

३ ननु 'इन्द्रावरुणाभ्यां जुष्टं निर्वपामि' इत्यत्र दानं प्रतीयते तथा स्कन्दविशाखौ तृप्येतामित्यतोऽपि दानं प्रतीयत एवेति निर्वापपदस्य सहदानमित्येवार्थकरणे 'स्कन्दविशाखौ' इत्यादौ सहदानस्य प्रतीतेर्दोषः स्यादत आह—पूर्वं मनसेत्यादि ॥

४ 'भोजयतः' इति छ. पाठः ॥

५ 'चामासोमो अमृतत्वाय' इति भ. पाठः ॥

॥ अथ षष्ठस्य तृतीये द्वितीयमाह्निकम् ॥

( १२१६ विधिसूत्रम् ॥ ६ । ३ । २ आ. १९ )

## २८९३ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ६ । ३ । ३४ ॥

( पुंवद्भावाधिकरणम् )

( भाषितपुंस्कपदार्थे पक्षद्वयोपस्थापकभाष्यम् )

**भाषितपुंस्कादिति कथमिदं विज्ञायते—समानायामाकृतौ यद्भाषितपुंस्कम्, आहोस्वित् क्वचिद्यद्भाषितपुंस्कमिति ?**

**किं चातः ?**

**( प्रदीपः ) कथमिदमिति ।** भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तलक्षणे स भाषितपुंस्क इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वाश्रयणे तद्योगाच्च शब्दस्यापि भाषितपुंस्कत्वविज्ञाने समानायामाकृताविल्यर्थो लभ्यते । प्रत्यासत्त्या च यस्य शब्दस्य पुंवद्भावो विधीयते तेनैव पुमान् भाषित इति गृह्यते । भाषितपुंस्कग्रहणसामर्थ्याच्च[1] । शब्दान्तरेण सर्वस्यार्थस्य भाषितपुंस्कत्वादनन्ततोऽर्थशब्देनापीति व्यवच्छेद्याभावादनर्थकं भाषितपुंस्कग्रहणं स्यात् । यदा तु भाषितः पुमान् येन शब्देन स भाषितपुंस्क इति शब्दोऽन्यपदार्थं आश्रीयते, तदा समानायामाकृताविल्यस्य विशेषस्य नास्ति लाभः ॥

**( उद्योतः )** अन्यपदार्थभूतोऽर्थश्चान्तरङ्गत्वात्प्रवृत्तिनिमित्तलक्षणो गृह्यत इत्याह—**प्रवृत्तिनिमित्तेति** । भाषितः पुमान्यस्य प्रवृत्तिनिमित्तस्याश्रय इति षष्ठ्यर्थे बहुव्रीहिः । मूलोक्ते[2] सप्तम्यर्थे बहुव्रीहौ त्वाधेयस्याधारत्वकल्पनाक्लेश इत्यन्ये ॥

**समानायामिति** । समाने प्रवृत्तिनिमित्ते इत्यर्थः ॥ नन्वेवं सति एकप्रवृत्तिनिमित्ते शब्दान्तरेण पुंसोऽभिधानेऽपि स्यादत आह—**प्रत्यासत्त्येति** । 'वरटाभार्यः' इत्यादौ 'हंसभार्यः' इत्यादि न ॥ प्रौढ्या युक्त्यन्तरमाह—**भाषितेति** ॥ **अन्ततोऽर्थशब्देनापीति** । अर्थशब्दः सामान्यशब्दोऽपि यदा खट्वादिविशेषे तद्गतसामान्यावलम्बेन वर्तते तदा समानं प्रवृत्तिनिमित्तमित्यभिमानः ॥

**नास्ति लाभ इति** । शब्देनासङ्गृहीतत्वादिति भावः ॥

( प्रथमपक्षे दोषभाष्यम् )

**यदि विज्ञायते—समानायामाकृतौ यद्भाषितपुंस्कमिति, गर्भिभार्यः-प्रसूतभार्यः-प्रजातभार्यः-अत्र न प्राप्नोति ॥**

**( प्रदीपः ) गर्भिभार्य इति ।** स्त्रियां वर्तमानस्य गर्भिशब्दस्यानवयवभूतगर्भसंबन्धः प्रवृत्तिनिमित्तम् । गर्भी व्रीह्यादौ तु पुंसि वर्तमानस्यावयवभूतगर्भसंबन्ध इति समानाकृतित्वाभावः । प्रसूतप्रजातशब्दौ स्त्रियां वर्तमानौ गर्भविमोचनं प्रवृत्तिनिमित्तमाश्रयतः । पुंसि तु गर्भाधानमिति समानाकृतित्वाभावः ॥

**( उद्योतः ) पुंसि तु गर्भाधानमिति** । एवं[3] हि गर्भाधानोत्तरं गर्भिण्यामेव स्त्रियां 'प्रसूतो देवदत्तः' इति प्रयोगापत्तिः । तस्माद्गर्भविमोचनवत्स्वीकर्तृत्वं प्रवृत्तिनिमित्तमिति वक्तुं युक्तम् ॥

( द्वितीयपक्षे दोषभाष्यम् )

**अथ विज्ञायते—क्वचिद्यद्भाषितपुंस्कमिति, द्रोणीभार्यः-कुटीभार्यः-पात्रीभार्यः-अत्रापि प्राप्नोति ॥**

**( प्रदीपः ) द्रोणीभार्य इति ।** द्रोण[4]शब्दः परिमाणवृत्तिर्भाषितपुंस्कः, स एव च सादृश्यनिबन्धनप्रत्यभिज्ञानवशात्तत्त्वनिबन्धनप्रत्यभिज्ञानवशाद्वा अभेदेनावसीयमानो गवादन्यां वर्तत इति नास्ति समानाकृतित्वम् । एवं कुटशब्दो घटे भाषितपुंस्कः, गेहे स्त्रीलिङ्गः । पात्रशब्दोऽर्धर्चादित्वात् भाषितपुंस्कः, भाजनविशेषे स्त्रीलिङ्गः ॥

**( उद्योतः ) द्रोणशब्द इति** । आढकचतुर्गुणो द्रोणः ॥ **सादृश्येति** । ज्वालासु 'सैवेयं ज्वाला' इति प्रत्यभिज्ञावदित्यर्थः ॥ **तत्त्वनिबन्धनेति** । 'तदेवेदं रजतम्' इति प्रत्यभिज्ञावदित्यर्थः । 'अर्थभेदाच्छब्दभेदः' इति नये आद्यं, तद्भेदेऽपि शब्दैक्ये द्वितीयम् ॥ **पात्रशब्द इति** । परिमाणादिवाची अर्धर्चादित्वात्पुंल्लिङ्गः । सर्वत्र द्रोण्यादीनां भार्यासामानाधिकरण्यं सदृश[5]परत्वात् ॥

( सिद्धान्तपक्षोपस्थापकभाष्यम् )

**अस्तु तर्हि समानायामाकृतौ यद्भाषितपुंस्कमिति ।**

**कथं[6] तर्हि गर्भिभार्यः-प्रजातभार्यः-प्रसूतभार्य इति ?**

**कर्तव्योऽत्र यत्नः ॥**

**( प्रदीपः ) कर्तव्योऽत्र यत्न इति ।** गर्भिशब्दस्य गर्भसंबन्धः प्रवृत्तिनिमित्तं पुंसि स्त्रियां च समानम्, अवान्तरभेदस्त्वविवक्षितः । प्रसूतप्रजातशब्दयोरपत्यापत्यवत्संबन्धः समानं प्रवृत्तिनिमित्तमस्तीति दोषाभावः ॥

**( उद्योतः ) समानमिति** । एवं हि 'पुंयोगादाख्यायां' इति सूत्रस्थभाष्यग्रन्थविरोधः । तत्र हि 'प्रसूतादेः पुमाख्यत्वं न' इत्युक्तम् । तस्माद्गर्भिणो दाराः प्रसूता दारा इत्यादौ समानायामाकृतौ भाषितपुंस्कत्वमिति वक्तुं युक्तम् ॥ **'कर्तव्योऽत्र यत्नः' इति** भाष्यस्य—यथा समानायामाकृतौ भाषितपुंस्कत्वं भवति तथा यत्नः कार्य इत्यर्थः ॥ **परे** तु शब्दार्थसंबन्धस्य नित्यताहान्या शब्दप्रवृत्तिनिमित्तं न यत्नसाध्यं । गर्भिणीप्रसूतादौ पूर्वपक्षयुक्तप्रवृत्तिनिमित्तभेद

---

१ भाषितपुंस्कग्रहणसामर्थ्यमुपपादयति—शब्दान्तरेणेति ॥
२ 'मूलोक्त सप्तम्यर्थे-' इति ग. ज. पाठः ॥
३ पुंसिगर्भाधानस्यैव प्रवृत्तिनिमित्तत्वे दोषमाह—एवं हीति ॥
४ 'द्रोणीशब्दः' इति ख, घ. पाठः ॥
५ सदृश परत्वात्—द्रोणी-कुटी-पात्रीशब्दानां द्रोणीसदृश इत्याद्यर्थात् भार्यासामानाधिकरण्यमित्यर्थः ॥
६ 'कथं गर्भिभार्यः-' इति छ, पाठः ॥

एव युक्तः । तत्र पुंवत्त्वार्थं वचनमेव[1] कार्यमिति भाष्यार्थः । एवञ्चानवयवभूतगर्भसंबन्धे प्रवृत्तिनिमित्ते गर्भिणीशब्दो नित्यस्त्रीलिङ्ग इति 'गर्भिण्यो दाराः' इत्येव । प्रसूतादिशब्दा अपि गर्भविमोचने प्रवृत्तिनिमित्ते नित्यस्त्रीलिङ्गा एवेत्याहुः ॥

( ऊङो निषेधप्रकरणे पाठोपस्थापकभाष्यम् )

**अथ किमर्थमूङः पृथक् प्रतिषेध उच्यते न यत्रैवान्यः प्रतिषेधस्तत्रैवायमप्युच्येत-'न कोपधायाः' (३७) इत्युक्त्वा ततः 'ऊङश्च'इत्येवोच्येत। तत्रायमप्यर्थः—ङिः प्रतिषेधो न वक्तव्यो भवति ॥**

(प्रदीपः) **पृथगिति** । पृथक् प्रतिषेधः प्रतिषेधान्तराद्वैलक्षण्यं सूचयतीत्यर्थः ॥

( उद्द्योतः ) पृथक् प्रतिषेधेऽपि वचनस्योक्तार्थप्रतिपादने कथं सामर्थ्यमत आह—**पृथगिति** । वैलक्षण्यं च प्रतिषेधविषये विधीयमानस्य विधेरेतद्विषयेऽप्रवृत्तिरिति भावः ॥

( निषेधप्रकरणे पाठे दोषभाष्यम् )

**नैवं शक्यम् । पठिष्यति ह्याचार्यः-पुंवत्कर्मधारये प्रतिषेधार्थमिति । स पुंवद्भावो यथेह भवति—कारिका वृन्दारिका-कारकवृन्दारिका, एवमिहापि स्यात्—ब्रह्मबन्धूर्वृन्दारिका-ब्रह्मबन्धूवृन्दारिकेति ॥**

( पृथक्प्रतिषेधे दोषनिवारकभाष्यम् )

**अथ पृथक्प्रतिषेधेऽप्युच्यमाने यस्मादेव स प्रतिषिद्धार्थ आरम्भः कस्मादेवात्र न भवति ?**

**पृथक्प्रतिषेधवचनसामर्थ्यात् ।**

**अथवा—अनूङिति तत्रानुवर्तिष्यते ॥**

**अथवा—नायं प्रसज्यप्रतिषेधः ।**

**किं तर्हि ?**

**पर्युदासोऽयं यदन्यदूङ इति । स च प्रतिषेधार्थ आरम्भः ॥**

( प्रदीपः ) **अथवा नायमिति** । सत्यामेवानुवृत्तौ पर्युदास आश्रीयते, न प्रसज्यप्रतिषेधः-इति पूर्वस्मात्पक्षादस्य पक्षस्य भेदः । भाष्यकारेणात्रानूङ्ग्रहणस्यैवोत्तरत्रानुवृत्तिर्दर्शिता, न त्वपूरणीप्रियादिष्वित्यस्य । तेन महानवमी महाद्वादशीत्यादावपि पुंवद्भावो भवति ॥

( उद्द्योतः ) नन्वत्रैवाऽनूङ इति पर्युदासे ब्रह्मबन्धूभार्ये माभूदनेन पुंवत्त्वं,ब्रह्मबन्धूवृन्दारिकेत्यत्र 'पुंवत्कर्मधारय-'इति स्यादेव-इति अत्रापि पक्षेऽनुवृत्तिरावश्यकीति पूर्वस्मात्पक्षात्को विशेषोऽत आह—**सत्यामेवेति** ॥ नन्वनुवृत्तौ सत्यां पर्युदासप्रसज्यप्रतिषेधयोः को विशेषः ? **किञ्चैतावता विशेषेण न पक्षान्तरत्वं, समाधेरेकरूपत्वात्-इति चिन्त्यम्** । तस्मादयमत्र भाष्यार्थः-'पुंवत्कर्मधारय-'इत्यत्र नेत्यनुवर्त्य प्रतिषेधविषये कर्मधारयादौ पुंवदित्यर्थो व्याख्येयः । एवञ्चाऽनूङ इत्यस्य पर्युदासत्वे ऊङः शाब्दप्रतिषेधविषयत्वाभावान्नास्य तत्र प्रवृत्तिरिति । तद्ध्वनयन्नाह-(भाष्ये) **स च प्रतिषेधार्थ इति** । एवञ्चात्र पक्षेऽनूङ इत्यस्य व्यवहितस्यानुवृत्तिक्लेशोऽपि नेति लाघवं, पूर्वपक्षाद्विशेषश्च स्पष्ट एव । ऐडविडभार्या[2]ऽसिद्ध्याऽस्य प्रसज्यप्रतिषेधत्वमेव न्याय्यमितीदं **भाष्यमेकदेश्युक्तिः ॥ तेन महानवमीति** । एवञ्चापूरणीप्रियादिष्विति 'न कोपधायाः'इति प्रकरणात् पृथक् प्रतिषेधकरणे फलं **चिन्त्यमेव** । फलकल्पना तु न कार्या, अत्रैव पृथङ्निषेधफलविचारपरभाष्यविरोधादिति भावः । अपूरणीत्यादिश्च प्रसज्यप्रतिषेध एव ॥ **पुंवद्भावो भवतीति** । 'पुंवत्कर्मधारय-' इत्यनेनेति भावः ॥

( स्त्रीग्रहणे पक्षत्रयोपस्थापकभाष्यम् )

**किं पुनरिदम्पुंवद्भावे स्त्रीग्रहणं—स्त्रीप्रत्ययग्रहणम्, उत स्त्रीशब्दस्य ग्रहणम्, आहोस्वित् स्त्र्यर्थस्य ग्रहणम् ।**

**कश्चात्र विशेषः ?**

( प्रदीपः ) **किं पुनरिति** । यदा स्त्रीग्रहणं स्वर्यते तदा स्वरितेनाधिकारगतिर्भवतीति स्त्र्यधिकारविहितटाबादिग्रहणं भवति । तेनभाषितपुंस्कात्परस्यानूङः स्त्रीप्रत्ययस्य पुंवद्भवतीति सूत्रार्थः संपद्यते । यदा तु स्त्र्यर्थवाची शब्दः स्त्रीशब्देनोच्यते तदा शब्दग्रहणं भवति । यदा तु स्त्रीत्वयुक्तं वस्तु स्त्रीशब्देनोच्यते तदाऽर्थग्रहणं भवति । तत्रार्थग्रहणे स्त्रीशब्दो मुख्यः, अर्थस्य तूत्तरपदेन पौर्वापर्यानुपपत्तिः । (शब्दग्रहणे[3] तु स्त्रीशब्दो गौणः, उत्तरपदेन तु शब्दस्य पौर्वापर्योपपत्तिः) ॥

( उद्द्योतः ) **अधिकारगतिरिति** । तदधिकारविहितप्रत्ययप्रतीतिरित्यर्थः ॥ **अनूङ इति** । 'अनूङ्'इति लुप्तषष्ठीकं पदं पर्युदासपरमिति भावः ॥ **स्त्र्यर्थवाची शब्द इति** । लक्षणयेति भावः ॥ नन्वेवं शब्दग्रहणपक्षे जघन्यवृत्त्याश्रयणादर्थपक्ष एव युक्त इत्याशङ्क्य पक्षद्वयेऽपि गौणार्थपरिग्रहः समान इत्याह—**तत्रार्थग्रहण इति** । अर्थपक्षे शब्दद्वारकपौर्वापर्याश्रयणमिति जघन्यार्थाश्रयणं समानमिति भावः । वस्तुतस्तु 'शब्दद्वारकं पौर्वापर्यम्'इत्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य चार्थ आरोप इत्यर्थः । एवञ्च गौणत्वात्तत्र संबन्धे तन्निरूपितसंबन्धे च न विभक्तिः । अत एव 'गङ्गायां घोषः' इत्यत्र गौणाधारेऽधिकरणत्वनिमित्तविभक्तिः स्वरितत्वप्रतिज्ञानादिना साधिता । अत एव तादृशस्थले षष्ठ्यपि न । अत एवार्थग्रहणपक्षे भाष्यकृद्वक्ष्यति-'भाषितपुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ति'इति ॥

---

१ वचनमेवेति । 'स्त्रियाः-' इतिसूत्रे 'स्त्रियाः पुंवत्' इत्येव योगविभागः क्रियते, तेन च गर्भिभार्य इत्यत्र गर्भिणीशब्दस्य नित्यस्त्रीलिङ्गत्वेऽपि पुंवद्भावः । उत्तरसूत्रेण च तस्य काचित्कत्वं बोध्यते । योगविभागप्रदर्शनार्थमेव सूत्रकृता स्त्रियाः पुंवद्भाषितेति सूत्रे भाषितपुंस्काच्छब्दापेक्षया पुंवदित्यस्य पूर्वं पाठः कृत इत्यस्मिन् सूत्रे शेखरे स्पष्टम् ॥

२ ऐडबिडभार्येति । इडविड भार्या यस्येत्यर्थः । इडविडशब्दात् 'जनपदशब्दात्क्षत्रियादञ्' इत्यनेनाञि तस्य 'अतश्च' इति लुकि समासे, इडविडशब्दादूङोऽभावात् निषेधानापत्त्या पुंवद्भावे-अतश्चेति लुकः स्त्रियां विधीयमानत्वादप्राप्तौ 'ऐडबिडभार्यः' इति भवति । अत्रहि अनूङ इति प्रसज्यप्रतिषेधानाश्रये 'वृद्धिनिमित्तस्य च' इति निषेधबाधकत्वं नोपपद्येतेति तात्पर्यम् ॥

३ ( ) एतच्चिह्नान्तर्गतो भागः क. च. झ. पुस्तकेषु दृश्यते ॥

( ६४२१ प्रथमपक्षे दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम् ॥ * ॥**

( भाष्यम् ) पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधोऽयं विज्ञायेत ।

कस्य ?

स्त्रीप्रत्ययस्य ॥

( प्रथमपक्षदोषसंभवाक्षेपभाष्यम् )

किमुच्यते स्त्रीप्रत्ययस्य प्रतिषेध इति, न पुनरन्यदपि किंचित् पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत ?

( उद्योतः ) भाष्ये—'किमुच्यते' इत्यादि 'अतिदिश्येत' इत्याशङ्का । 'अनारंभात्' इत्युत्तरम् ॥

( समाधानभाष्यम् )

अनारम्भात्[1] पुंसि । न किंचित् पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरणे उत्तरपदे भाषितपुंस्कस्यातिदिश्येत । तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः स्त्रीप्रत्ययप्रतिषेधात् ॥

( दोषोपपादकभाष्यम् )

कथं पुनः 'पुंवत्'इत्यनेन स्त्रीप्रत्ययस्य प्रतिषेधः शक्यो विज्ञातुम् ?

वतिनिर्देशोऽयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् ।

तद्यथा—उशीनरवन्मद्रेषु यवाः सन्ति, न सन्तीति । मातृवदस्याः कलाः सन्ति, न सन्तीति ।

एवमिहापि 'पुंवन्न भवति' इत्येवं वाक्यशेषं समर्थयिष्यामहे ।

यथा पुंसः स्त्रीप्रत्ययो न भवति, एवं समानाधिकरणे उत्तरपदे भाषितपुंस्कस्यापि[2] न भवतीति ॥

( प्रदीपः ) कथं पुनरिति । पुंवदित्यनेन प्रतिषेधो न प्रत्याख्यत इति मत्वा प्रश्नः ॥

**वतिनिर्देशोऽयमिति** । उपमानोपमेयभावविषयो वतिः, तत्रोपमाने सत्ताऽसत्ता वा प्रसिद्धोपमेये प्रतिपाद्यत इति यथासम्भवं वाक्यशेषपरिकल्पने कामचार इत्यर्थः । पुंसि च स्त्रीप्रत्ययस्याभावात् स्त्रियामभावोऽतिदिश्यते इति 'न भवति' इति वाक्यशेषः कल्प्यते ॥

( उद्योतः ) न प्रत्याख्यत इति । क्रियापदाश्रवणे लट्परास्तेरेव प्रयोगादिति भावः ॥

**उपमानेति** । 'पुंवत्'इति सप्तम्यन्ताद्वतिः । पुंसि यथा स्त्रीप्रत्ययस्याभावस्तथा स्त्रियामपीत्यर्थ इति सामर्थ्यात् 'न भवति' इति वाक्यशेष इत्यर्थः । अयं चाभावो न प्रागभावः, प्रागेव स्त्रीप्रत्ययस्य कृतत्वादिति 'लुक्तद्धित–'इत्यादिवज्जातनिवृत्तिरूप एव ॥

भाष्ये—**भाषितपुंस्कस्यापीति**—संबन्धे षष्ठी । तस्य स्त्रियामपि स्त्रीप्रत्ययो नेत्यर्थः । तेन जातनिवृत्तिं सूचयति ॥

( ६४२२ प्रथमपक्षस्वीकारे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रातिपदिकस्य च प्रत्यापत्तिः ॥ * ॥**

( भाष्यम् ) प्रातिपदिकस्य च प्रत्यापत्तिर्वक्तव्या । एनी भार्या अस्य-एतभार्यः, श्येनी भार्या अस्य-श्येतभार्यः ॥

पुंवद्भावेन किं क्रियते ?

स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः–स्त्रीत्वम्, तस्यानिवृत्तत्वात् केन नशब्दो न श्रूयेत ?

स्त्रियामित्युच्यमानः प्राप्नोति ॥

( प्रदीपः ) अस्मिन् पक्षे यद्वक्तव्यं तदाह–**प्रातिपदिकस्य चेति** । चशब्दो वक्ष्यमाणापेक्षः ॥ **एनी भार्येति** । एतशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीप्, तकारस्य च नकारः । तत्रैकदेशविकृतमनन्यवदिति भाषितपुंस्कादेतशब्दात् पर ईकार इति तन्निवृत्तावर्थस्यानिवृत्तत्वान्नकारश्रवणप्रसङ्गः । ननु च सन्नियोगशिष्टत्वादीकारनिवृत्तौ नकारस्यापि निवृत्तिर्भविष्यति । एवं तर्हि स्थानिवद्भावात् पुनर्नकारस्योन्मज्जनं न मन्यते, उत्तरपदनिमित्तत्वाच्च स्त्रीप्रत्ययनिवृत्तेः स्थानिवद्भावः ॥

( उद्योतः ) तत्र दोषमाह—भाष्ये—**प्रातिपदिकस्य चेति** ॥ पूर्वं वक्तव्यान्तरस्याभावादाह—**चशब्द इति** ॥ **स्थानिवद्भावादिति** । सन्नियोगशिष्टन्यायकृतनिवृत्तिप्रतिबन्ध एव पूर्वविधिरिति भावः ॥ नन्वयं न परनिमित्तकोऽत आह—**उत्तरपदनिमित्तत्वाच्चेति** ॥

( ६४२३ प्रथमपक्षस्वीकारे दोषवार्तिकम् ॥ ३ ॥)

**॥ * ॥ स्थानिवत्प्रसङ्गश्च ॥ * ॥**

(भाष्यम्) स्थानिवद्भावश्च प्राप्नोति । पट्वी भार्या अस्य-पटुभार्यः[3] ।

पुंवद्भावेन किं क्रियते ?

स्त्रीप्रत्ययस्य निवृत्तिः । तस्य स्थानिवद्भावाद्यणादेशः प्राप्नोति ॥

( दोषद्वयोपसंख्यानतात्पर्यभाष्यम् )

किमर्थमिदमुभयमुच्यते, न प्रातिपदिकस्य प्रत्यापत्तिरित्येव स्थानिवद्भावोऽपि चोदितः स्यात् ? पुरस्तादिदमाचार्येण दृष्टम्–स्थानिवत्प्रसङ्गश्चेति,

---

1 'तत्र च अनारंभात् पुंसि' इति च. छ. झ. पुस्तकेषु निर्दिष्टः पाठः ॥

2 'भाषितपुंस्कस्यापि न संभवति' इति च. पाठः । 'भाषितपुंस्कस्य न भवति' इति छ. पाठः ॥

3 'पटुभार्यः, मृदुभार्यः' इति च. छ. झ. पाठः ॥

तत्पठितम् । तत उत्तरकालमिदं दृष्टम्-प्रातिपदिकस्य प्रत्यापत्तिरिति, तदपि पठितम् ।

न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥

( प्रदीपः ) स्थानिवद्भावोऽपि चोदितः स्यादिति । ननु च 'प्रातिपदिकस्य च प्रत्यापत्तिः'इति परिहारः, 'स्थानिवत्प्रसङ्गश्च'इति तु चोद्यम् । तत्रैवं वक्तव्यं–स्थानिवद्भावोऽपि परिहृतः स्यादिति । नैष दोषः । अयं हि भाष्यार्थः–यथा दोषसद्भावात् प्रत्यापत्तिवचनं परिहारस्तथा स्थानिवद्भावोऽपि चोदितः परिहृतश्च भवति ॥ पुरस्तादिदमिति । यद्यपि पश्चात्पठितं तथापि पाठक्रमो बलवानिति पूर्वं दृष्टमित्युच्यते, पूर्वं चोद्यदर्शनं पश्चात्समाधानमिति न्यायात् ॥ तत्पठितमिति । पुरस्तादपि दृष्टं पश्चात्पठितमित्यर्थः ॥

प्रत्यापत्तिवचनमेव [1]व्यापि अभ्युपगम्यताम्, स्थानिवत्प्रसङ्गश्च–इत्येतत्तु परित्यज्यतामित्याशङ्क्याह—न चेदानीमिति । सूत्रव्याख्यानार्थत्वाद्वाक्यानां विस्पष्टार्थमुभयोरुपादानमित्यर्थः । तत्रैतभार्ये यद्यपि स्थानिवद्भावाश्रयो दोषस्तथापि सन्नियोगशिष्टत्वात् सम्भावितनिवृत्तेर्नकारस्य स्थानिवद्भावाश्रयं पुनरुपस्थानं न त्वीकारो नकारस्य निमित्तम्, ईकारनकारयोः सह विधानात् । यणादेशस्य तु निमित्तमीकार इत्येतावता भेदेनै[2]तभार्यपटुभार्ययोः पृथगुपन्यासः ॥

( उद्द्योतः ) परिहृतश्च भवतीति । एतद्वाक्यशेषपूरणेन भाष्यं व्याख्येयमिति भावः ॥ पश्चात्पठितमिति । 'पठितम्' इत्यत्र 'पुरस्तात्'इति नानुषञ्जनीयमिति भावः ॥

व्यापि अभ्युपगम्यतामिति । व्यापि—उभयार्थसङ्ग्राहि, दोषद्वयपरिहारकमित्यर्थः ॥ ननु प्रयोजनाभावे कुतो न परित्या[3]गोऽत आह—सूत्रव्याख्यानेति ॥ ननूभयत्रापि स्थानिवद्भावकृते दोषेऽन्यतरत्रैव स्थानिवत्त्वचोदना न युक्तेत्याशङ्क्य विशेषमाह—तत्रैतभार्य इत्यादिना । न ह्येतभार्ये स्थानिवत्त्वकृतो नकारश्रवणप्रसङ्गः, किन्तर्हि ? अर्थस्यानिवृत्तत्वादेव । सन्नियोगशिष्टपरिभाषया तु निवृत्तौ प्राप्तायां स्थानिवत्त्वात्पुनरुन्मज्जनमित्येतावदेव । प[4]रा तु स्थानिवत्त्वादेव प्राप्नोतीति विशेष इति भावः ॥

( ६४२४ दोषोपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ वतण्ड्यादिषु पुंवद्वचनम् ॥ * ॥

( भाष्यम् ) वतण्ड्यादिषु पुंवद्भावो वक्तव्यः ।

के पुनर्वतण्ड्यादयः ?

लुगलुगस्त्रीविषयद्विस्त्रीप्रत्ययाः ।

लुक्-गार्ग्यो वृन्दारिकाः—गर्गवृन्दारिकाः ।

पुंवद्भावेन किं क्रियते ?

स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वम्, तस्यानिवृत्तत्वात् केन यशब्दो न श्रूयेत । अस्त्रियामिति हि लुगुच्यते । लुक् ॥

अलुक्-वतण्डी वृन्दारिका-वातण्ड्यवृन्दारिका ।

पुंवद्भावेन किं क्रियते ?

स्त्रीप्रत्ययस्य निवृत्तिः । अर्थोऽनिवृत्तः स्त्रीत्वम्, तस्यानिवृत्तत्वात् 'लुक् स्त्रियां' 'वतण्डाच्च' इति यकारस्य लुक् प्राप्नोति ।

( प्रदीपः ) लुगलुगिति । लुगलुकौ यथायोगमिष्यमाणौ न सिध्यत इति पुंस्त्वलक्षणार्थातिदेशः कर्तव्य इत्यर्थः ॥

( उद्द्योतः ) पुंस्त्वलक्षणेति । ततश्च स्त्रीत्वस्य निवृत्तत्वाल्लुगलुकौ यथेष्टं सिध्यत इति भावः ॥

( एतद्दोषनिवारकभाष्यम् )

यदि पुनरयमीकार एव लुगुच्येत ।

तदीकारग्रहणं कर्तव्यम् ।

न कर्तव्यम् ।

क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम्—स्त्री ई स्त्री, स्त्रियामिति ॥ ईकारविधावप्रत्ययकस्य पाठः क्रियते—वतण्डेति । शार्ङ्गरवादौ वै सप्रत्ययकस्य पाठः करिष्यते ।

स वै तत्र सप्रत्ययकस्य पाठः कर्तव्यः । अन्तरङ्गत्वाच्च लुक् प्राप्नोति । अलुक् ॥

अस्त्रीविषय—कौण्डीवृसी वृन्दारिका-कौण्डीवृस्यवृन्दारिका ।

पुंवद्भावेन किं क्रियते ?

स्त्रीप्रत्ययस्य निवृत्तिः ।

अर्थोऽनिवृत्तः स्त्रीत्वम्, तस्यानिवृत्तत्वात् केन यशब्दः श्रूयेत ?

अस्त्रियामिति हि ञ्यो विधीयते । अस्त्रीविषय ॥

द्विस्त्रीप्रत्यय—गार्ग्यायणी वृन्दारिका—गार्ग्यवृन्दारिका ।

अत्र पुंवद्भावो न प्राप्नोति ।

किं कारणम् ?

भाषितपुंस्कादनूङः समानाधिकरणे उत्तरपदे पुंवद्भावो भवतीत्युच्यते । यच्चात्र भाषितपुंस्कात् परं नैतदुत्तरपदे, यच्चोत्तरपदे, न तद्भाषितपुंस्कात् परमिति ॥

( प्रदीपः ) यदि पुनरिति । 'लुक् स्त्रियाम्'इत्यनेन [5]चेदीकारे परतो लुग्विधीयते तदेकारे पुंवद्भावेन निवर्तिते यकारनिवृत्तौ कर्तव्यायां 'स्थानिवत्प्रसङ्गश्च'इति स्थानिवद्भावे प्रतिषिद्धे वातण्ड्यवृन्दारिकेति सिध्यतीति भावः ॥

स्त्री ई इति । स्त्रि[6]यां य ईकारस्तस्मिन् परत इत्यर्थः ।

१ 'व्याप्यमभ्युपगम्यताम्' इति क. पाठः ॥
२ 'एतभार्य इत्येतभार्ययोः' इति च. झ. पाठः ॥
३ परित्याग इति । स्थानिवत्प्रसङ्गश्चेत्यस्य ॥

४ परा—प्राप्तिः । पटुभार्य इत्यत्र यण्प्राप्तिः स्थानिवत्त्वादेवेति भावः ॥
५ 'चेदिकारे' इति क. अ. ट. पाठः ॥
६ ईकारप्रश्लेषे कृते सूत्रार्थमाह—स्त्रियां य इति ॥

ऐकादेशस्य पूर्वान्तवद्भावात् 'स्त्रियाः' इति इयङादेशः ॥ **ईकारविधाविति ।** शार्ङ्गरवादिगणे वतण्डशब्दः कृतयञ्लुक् पठ्यते, ततश्चाकृते लुकीकारो नास्ति, अकृते चेकारे लुक्षोऽप्रसङ्ग इतीतरेतराश्रयदोषप्रसङ्गः ॥

**अन्तरङ्गत्वाच्चेति ।** उत्तरपदमनपेक्ष्य लुग्विधीयमानोऽन्तरङ्गत्वात् प्रागेव स्त्रीप्रत्ययनिवृत्तिः प्राप्नोति । तत्रैतत् स्यात्-निमित्ताभावाल्लुक् निवर्तिष्यत इति, एतच्च नास्ति । न ह्येषा परिभाषा सर्वत्राश्रीयते, इयानित्यादौ निवृत्तायामपि प्रकृतौ प्रत्ययस्यानिवर्तनात्, असिद्धं वहिरङ्गमन्तरङ्ग इतीकारनिवृत्तेरसिद्धत्वाच्च ॥

**कौण्डीवृस्यवृन्दारिकेति ।** स्त्रीत्वस्यानिवर्तनात् 'व्रातच्फञोरस्त्रियाम्' इति ञ्यो न प्राप्नोति ॥

**गार्ग्यायणीति ।** ष्फस्योत्तरपदेनानन्तर्याभावात् पुंवद्भावेन निवृत्तिर्न प्राप्नोति । ङीषस्त्वभाषितपुंस्कात् विधानात् श्रवणप्रसङ्ग इत्यर्थः ॥

**( उद्द्योतः ) स्थानिवद्भावे प्रतिषिद्धे इति ।** प्रातिपदिकप्रत्यापत्तिवचनेनेति भावः ॥

**स्त्रियामिति ।** स्त्रीशब्दस्यैकारेण 'सुप्सुपा'इति समास इति भावः । स्त्रियां विहितो य ईकारस्तस्मिन्नित्यक्षरार्थः ॥ नन्वेवं स्त्रीशब्दाद्विभक्तेर[2]विधानेन कथमियङत आह—**एकादेशस्येति ।** अनयैव रीत्या नद्यन्तत्वादामाद्यपि बोध्यम् । वस्तुतस्तु कृदतिङ्सूत्रस्थभाष्यरीत्या पूर्ववर्तिधर्मावच्छिन्नोद्देश्यके विधावियङि कर्तव्ये 'अचः परस्मिन्'इति स्थानिवत्त्वेनेयङ् दुर्लभ इति भाष्यप्रामाण्यात्सौत्रत्वेनेयङ् साध्य इति तत्त्वम् ॥

भाष्ये-एतद्दूषयति—**ईकारविधाविति ॥** तद्व्याचष्टे—**शार्ङ्गरवादीति ॥** शङ्कते भाष्ये—**शार्ङ्गरवादाविति ॥** तद्दूषयति—**स वै तत्रेति ।** अनेनापूर्वकर्तव्यतालक्षणो दोष उक्तः ॥ दोषान्तरमप्याह—**अन्तरङ्गत्वाच्चेति ।** एवञ्च वातण्ड्यवृन्दारिकाया असिद्धिस्तदवस्थैवेत्यर्थः ॥ तत्र पुंवद्भावाल्लुकोऽन्तरङ्गत्वं दर्शयति—**उत्तरपदमिति ॥ न ह्येषेति ।** निमित्तापायपरिभाषेत्यर्थः ॥ सत्यामपि परिभाषायां न दोष इत्याह—**असिद्धमिति ।** इदं चिन्त्यम्, अकृतव्यूहपरिभाषाविषये तस्या अप्रवृत्तेरिति । **अस्त्रीविषयेति—** भाष्यस्यास्त्रीविषयप्रत्ययासिद्धिरित्यर्थः । कौण्डीवृसीशब्दो व्रातवाची । गौरादित्वान्ङीष् ॥

भाष्ये—**यच्चात्रेति**—ष्फरूपम् ॥ **नैतदुत्तरपदे इति ।** ङीषा व्यवधानादिति भावः ॥ **यच्चोत्तरपदे इति**—ङीष् ॥ **न तदिति ।** ष्फेण व्यवधानादिति भावः ॥

**( द्वितीयपक्षोपस्थापकभाष्यम् )**

**अस्तु तर्हि स्त्रीशब्दग्रहणम् ॥**

( ६४२५ द्वितीयपक्षे दोषवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वप्रसङ्गोऽविशेषात् ॥ * ॥**

**( भाष्यम् ) स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वस्य स्त्रीशब्दस्य पुंशब्दातिदेशः प्राप्नोति । अस्यापि प्राप्नोति—अङ्गारका नाम शकुनयः, तेषां कालिकाः स्त्रियः । कालिका वृन्दारिकाः-अङ्गारकवृन्दारिकाः प्राप्नुवन्ति ।**

**क्षेमवृद्धयः क्षत्रियाः, तेषां तनुकेश्यः स्त्रियः । तनुकेश्यो वृन्दारिकाः-क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति[3] ।**

**हंसस्य वरटा । कच्छपस्य डुली । ऋश्यस्य रोहित् । अश्वस्य वडवा । पुरुषस्य योषित् ।**

**किं कारणम् ?**

**अविशेषात् । न हि कश्चित् विशेष उपादीयते एवंजातीयकस्य स्त्रीशब्दस्य पुंशब्दातिदेशो भवतीति ।**

**अनुपादीयमाने हि विशेषे सर्वप्रसङ्गः ॥**

**( प्रदीपः ) सर्वप्रसङ्ग इति ।** यथा प्रत्ययपक्षे भाषितपुंस्कात्परः स्त्रीप्रत्यय इति शक्यते विशेषयितुम्, नैवं स्त्र्यर्थाभिधायी शब्दो भाषितपुंस्कात्पर इति शक्यते विशेषयितुम्, शुक्रचुडादौ पुंवद्भावस्याप्रसङ्गात् । न ह्यत्र शुक्राशब्दो भाषितपुंस्कात्परः ॥ **अङ्गारका इति ।** अङ्गारकशब्देन न कदाचित् स्त्रिया अभिधानम्, कालिकाशब्देन च पक्षिजातौ तस्याः स्त्रिया एवाभिधानमिति 'पुंवत्कर्मधारय–' इत्यनेनार्थत आन्तर्यादङ्गारकशब्दादेशप्रसङ्गः । शक्यन्ते हि कालिका अङ्गारकशब्देन साहचर्यादभिधातुम् । एवमन्यत्रापि योज्यम् ॥

**( उद्द्योतः )** स्त्रीशब्दग्रहणे सर्वप्रसङ्गे अविशेषो हेतुरुक्तस्तस्य हेतोरसिद्धिं परिहरति—**यथा प्रत्ययपक्षे इति ॥ न कदाचिदिति ।** न कदाऽपीत्यर्थः ॥ **स्त्रिया एवेति ।** न पुंस इत्यर्थः ॥ नन्वत्र 'न कोपधायाः' इति प्रतिषेधात्कथं पुंवत्वप्राप्तिरत आह—**पुंवत्कर्मधारयेति ॥** नन्वङ्गारकशब्दस्य स्थानिभूतकालिकार्थाभिधाने सामर्थ्याभावात्कथमेतदत आह—**शक्यन्ते हीति ।**

**( द्वितीयदोषोद्भावकवार्तिकावतरणभाष्यम् )**

**कथं च नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते ? ॥**

( ६४२६ द्वितीयपक्षे दोषवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ भाषितपुंस्कानुपपत्तिश्च ॥ * ॥**

**( भाष्यम् ) ह्यर्थे चायं चः पठितः ।**

**सर्वो हि शब्दो भाषितपुंस्कात्परः शक्यः कर्तुम् ॥**

---

[1] स्त्रिया इति निर्देशमुपपादयति—एकादेशस्येति ॥

[2] विभक्तेरविधानेनेति । स्त्रीशब्दादजादिप्रत्ययपरकत्वाभावेनेति भावः ॥

[3] 'तनुकेश्योवृन्दारिकाक्षेमवृद्धि वृं–' इति अ. क. ट. पाठः । 'तनुकेशीवृन्दारिकाः । क्षेम–' इति छ. झ. पाठः ॥

(प्रदीपः) सर्वो हि शब्द इति । 'एताः कालिका-वृन्दारिकाः' इति भवत्येतच्छब्दात् भाषितपुंस्कात्परः कालिका-शब्द इति पुंवत्प्रसङ्गः ॥

(उद्द्योतः) भाष्ये—ह्यर्थे चायमिति । यतः शब्दग्रहण-पक्षे भाषितपुंस्कादिति विशेषणमनुपपन्नं, शुक्लचूडायसिद्धेः—अतः सर्वप्रसङ्ग इत्यर्थः ॥ तथाविशेषणेऽपि उक्तदोषो दुर्वार इत्याह—सर्वो हीति ॥ तद्व्याचष्टे—एताः कालिका इति ॥

(तृतीयपक्षोद्भावकं भाष्यम्)

अस्तु तर्हि अर्थग्रहणम् ॥

(६४२७ तृतीयपक्षे दोषवार्तिकम् ॥ ७ ॥)

॥ * ॥ अर्थातिदेशे विप्रतिषेधानुपपत्तिः ॥ * ॥

(भाष्यम्) अर्थातिदेशे विप्रतिषेधो नोपपद्यते । पठिष्यति ह्याचार्यो विप्रतिषेधं—*पुंवद्भावाद्ध्रस्वत्वं खिद्धादिकेषु* इति स विप्रतिषेधो नोपपद्यते ।

किं कारणम् ?

द्विकार्ययोगो हि नाम विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः, शब्दस्य ह्रस्वत्वम्-अर्थस्य पुंवद्भावः ॥

(प्रदीपः) अर्थातिदेश इति । स्त्र्यर्थस्य पुमर्थो भवति-इति अर्थेऽतिदिष्टे तद्वाची शब्दः प्रवर्तते । भिन्नविषयत्वात्तु विप्रतिषेधानुपपत्तिः, अचो ह्रस्वः-अर्थस्य तु पुंवद्भावः ॥

(उद्द्योतः) नन्वर्थातिदेशे शब्दे किमायातमत आह—अर्थस्येति ॥ विप्रतिषेधानुपपत्तिः—कालिंमन्येत्यादौ ॥

(तृतीयपक्षे द्वितीयोक्तदोषप्राप्तिबोधकभाष्यम्)

किं च—सर्वप्रसङ्गोऽविशेषादिति । सर्वस्य स्त्र्यर्थस्य पुंवदर्थः प्राप्नोति ।

अस्यापि प्राप्नोति—अङ्गारका नाम शकुनयः, तेषां कलिकाः स्त्रियः । कालिका वृन्दारिकाः-अङ्गारकवृन्दारिकाः प्राप्नुवन्ति ॥

क्षेमवृद्धयः क्षत्रियाः । तेषां तनुकेश्यः स्त्रियः । तनुकेश्यो वृन्दारिकाः-क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति ॥

हंसस्य वरटा । कच्छपस्य डुली । ऋश्यस्य रोहित् । अश्वस्य वडवा । पुरुषस्य योषित् ।

किं कारणम् ?

अविशेषात् । न हि कश्चित् विशेष उपादीयते-एवंजातीयकस्य स्त्र्यर्थस्य पुंवदर्थो भवतीति । अनुपादीयमाने हि विशेषे सर्वप्रसङ्गः ।

कथं नाम नोपादीयते यावता भाषितपुंस्कादित्युच्यते ?

भाषितपुंस्कानुपपत्तिश्च भवति । न ह्यर्थेन पौर्वापर्यमस्ति ॥

(विप्रतिषेधानुपपत्तिरूपप्रथमदोषनिवारकमेकदेशिभाष्यम्)

अयं तावद्दोषः—यदुच्यते *अर्थातिदेशे विप्रतिषेधानुपपत्तिः* इति ।

नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।

किं तर्हि ?

असंभवोऽपि । स चात्रास्त्यसंभवः ।

कोसावसम्भवः ?

पुंवद्भावोऽभिनिवर्तमानो ह्रस्वत्वस्य निमित्तं विहन्ति, ह्रस्वत्वमभिनिवर्तमानं पुंवद्भावं बाधते—एषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ॥

(प्रदीपः) पुंवद्भावोऽभिनिवर्तमान इति । स्त्रीप्रत्ययस्य निवृत्तौ दीर्घान्तत्वाभावात् ह्रस्वस्याप्रवृत्तिरित्यर्थः ॥ ह्रस्वत्वमिति । ननु ह्रस्वे प्रवृत्तेऽप्यर्थस्यानिवृत्तत्वात् कथं पुंवद्भावो ह्रस्वेन बाध्यते ? उच्यते-यदि कृतं ह्रस्वत्वं प्रयोगे श्रूयते एवं तत् कृतं भवति, यदि तु कृतमपि पुंवद्भावेन निवर्त्येत तदाऽकृतमेवैतत्स्यादिति परत्वात्प्रवर्तमानं ह्रस्वत्वं पुंवद्भावं बाधते ॥

(उद्द्योतः) यदि कृतमिति । एवञ्च ह्रस्वप्रवृत्तिसामर्थ्यात्पुंवत्त्वबाध इति भावः ॥

(एकदेशिनो द्वितीयपक्षस्थापकभाष्यम्)

अयं तर्हि दोषः—सर्वप्रसङ्गोऽविशेषादिति ।

तस्मादस्तु स एव मध्यमः पक्षः ।

(प्रदीपः) तस्मादस्त्विति । शब्दपक्षे साक्षादुत्तरपदेन पौर्वापर्यसम्भवात् ॥

(उद्द्योतः) नन्वर्थपक्षेऽपि वक्ष्यमाणपरिहारस्य समानत्वात्कुतस्तत्त्यागेन मध्यम-शब्दपक्षस्वीकरणमत आह—शब्दपक्षे इति । न चात्र पक्षे स्त्रीशब्दस्य गौणता दोषः । बाहुल्येन तथा शास्त्रे आश्रयणेन न स दोष इति भावः । किञ्च विप्रतिषेधानुपपत्तिरपि,

१ तथा विशेषणेऽपि—स्त्र्यर्थाभिधायी शब्दो भाषितपुंस्कात्पर इति कैय्यटोक्तप्रकारेण विशेषणेऽपि ॥
२ उक्तदोषः—क्षेमवृद्धिवृन्दारिका इत्यादिभाष्योक्तदोषः ॥
३ पुंवत्कर्मधारयेति (६।३।४२) सूत्रे ।
४ 'सर्वस्य अर्थस्य' इति अ. क. पाठः ॥
५ 'अङ्गारकवृन्दारकाः' इति क. ठ. पाठः ॥
६ 'तनुकेशीवृन्दारिकाः' इति च. छ. झ. पाठः ॥
७ 'यकस्यार्थस्य' इति च. झ. पाठः ॥
८ 'पुंवद्भावः' इति छ. झ. पाठः ॥
९ 'अनुपादीयमाने हि विशेषे सर्वप्रसङ्गः' इत्यस्य छ. पुस्तके न पाठः ॥
१० 'कथं च नाम' इति च. छ. झ. पाठः ॥
११ 'नुपपत्तिर्हि' इति च. छ. झ. पाठः ॥

अर्थपक्षे पुंवद्भावोत्तरमपि ह्रस्वप्रवृत्त्या ह्रस्वोत्तरमपि तत्प्रवृत्त्यां[1] संभवाभावात्, कार्यिभेदाच्च[2] । विप्रतिषेधोपपादनपरभाष्यं त्वेकदेश्युक्तिः । स्पष्टीकृतं च तत्त्वं कैयटेनेति दिक् ॥

( द्वितीयपक्षे दोषवारकभाष्यम् )

**ननु चोक्तम्—स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत्सर्वप्रसङ्गोऽविशेषादिति ।**

**नैष दोषः ।**

**समासनिर्देशोऽयम्, भाषितपुंस्कादनूङ् यस्मिन् सोऽयम्—भाषितपुंस्कादनूङिति ।**

**यद्येवं लुक् प्राप्नोति ।**

**निपातनान्न भविष्यति ।**

**अथवा—अलुक् प्रकृतः सोऽनुवर्तिष्यते ॥**

( प्रदीपः ) **भाषितपुंस्कादनूङ् यस्मिन्निति**—समुदायः समासार्थः, अवयवेन विग्रहः ॥

**निपातनादिति** । नन्वलौकिकत्वादस्य कथं 'निपातनात्' इति परिहारः ? लुकाऽपि तर्ह्यलौकिकत्वान्न भाव्यम् । अथ लुक्प्रसङ्गोऽध्यवसीयते, अलुगप्यध्यवसीयतामित्यदोषः ॥

**अथवेति** । ननु च परार्थत्वात् कथं लक्षणयोः सम्बन्धः ? उच्यते—अलुगधिकारसामर्थ्याल्लक्षणाङ्गमपि लक्षणं भविष्यति संज्ञापरिभाषवत् ॥

( उद्योतः ) **समुदाय इति** । प्रत्ययविशिष्ट इत्यर्थः ॥ **अवयवेनेति** । प्रत्ययरहितार्थकेन[3], प्रत्ययमात्रार्थकेन चेत्यर्थः ॥

**नन्वलौकिकत्वादिति** । शास्त्रातिरेकेण[4] लोकेऽप्रयुज्यमानत्वादित्यर्थः ॥ **इत्यदोष इति** । एवञ्च 'निपातनात्'इत्यस्य सौत्रत्वादित्यर्थ इति भावः ॥

**लक्षणाङ्गमपीति** । शास्त्रमात्राङ्गमपीत्यर्थः । 'गुणः कृतात्मसंस्कारः' इति न्यायेनेति भावः ॥

( प्रथमपक्षोपस्थापकभाष्यम् )

**कथं पुनः 'अनूङ्' इत्यनेन स्त्रीप्रत्ययस्य ग्रहणं शक्यं विज्ञातुम् ?**

**'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः'। नञ्युक्ते चान्यस्मिंस्तत्सदृशे[5] कार्यं विज्ञायते तथा ह्यर्थो गम्यते ।**

**तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश आनीयते नासौ लोष्टमानीय कृती भवति ।**

**एवमिहापि[6] 'अनूङ्' इति ऊङ्प्रतिषेधादन्यस्मिन् ऊङ्सदृशे कार्यं विज्ञास्यते ।**

**किं चान्यत् अनूङ् ऊङ्सदृशम् ?**

**स्त्रीप्रत्यय इति[7] ॥**

( उद्योतः ) नन्वनूङ्शब्देन पुंवद्भावविषयशब्दस्योक्तावत्राप्यनुपपत्तिरिति शङ्कते भाष्ये—कथं पुनरिति ॥

( प्रथमे प्राप्तदोषवारकभाष्यम् )

**एवमपि इडविड् वृन्दारिका—ऐडविडवृन्दारिका, पृथ् वृन्दारिका—पार्थवृन्दारिका, उशिक् वृन्दारिका—औशिजवृन्दारिका, दरद् वृन्दारिका—दारदवृन्दारिका—अत्र पुंवद्भावो न प्राप्नोति ॥**

**कर्तव्योऽत्र[8] यत्नः ॥**

( प्रदीपः ) **इडविडिति** । इडविडोऽपत्यम्, पृथोऽपत्यम्, 'जनपदशब्दात्' इत्यञ् । उशिग्दरद्भ्यां 'द्व्यञ्मगध—' इत्यण् । उभयोः 'अतश्च' इति स्त्रियां लुक् ॥

**कर्तव्योऽत्र यत्न इति** । नेह टाबादीनामेव ग्रहणम्, किं तर्हि ? प्रत्ययमात्रस्य । लुकि च स्थानिवद्भावात्प्रत्ययो भवत्येव । यदा तु भाषितपुंस्कादूङ् यस्मिन्नकृतः स भाषितपुंस्कादनूङ्—इति प्रसज्यप्रतिषेध आश्रीयते, तदा दोषस्याप्रसङ्ग एव ॥

( उद्योतः ) 'पृथोऽपत्यं' इति पाठः । 'पृथोरपत्यं' इत्यपपाठः, पार्थेत्यसिद्ध्यापत्तेः । भाष्येऽपि 'पृथुवृन्दारिका' इति पाठः ॥ **स्त्रियां लुगिति** । भाषितपुंस्कादनूङः[9]—स्त्रीप्रत्ययस्याभावात्प्रत्ययलक्षणेन सत्त्वेऽपि विशेषानतिदेशेन तस्य स्त्रीप्रत्ययत्वाभावात् पुंवत्त्वं न स्यादिति भावः ॥

**नेहेति** । प्रत्ययत्वेन[10] सादृश्यमाश्रीयत इति भावः ॥ **स्थानिवद्भावादिति** । प्रत्ययलक्षणेन, 'स्थानिवदादेशः—' इत्यनेन वा ॥ **प्रसज्यप्रतिषेध इति** । समासस्तु सौत्रत्वादिति भावः । अत्र कर्मधारयसमासोदाहरणानि तु 'पुंवत्कर्मधारय—' इत्यत्राप्यस्यानुवृत्तिं दर्शयितुं तदर्थं निर्णेतुं च । 'ऐडविडभार्यः' इत्यादावपि दोषो बोध्यः, अनन्तरापत्यपरत्वे जातित्वाभावेन 'जातेश्च' इति निषेधाप्रवृत्तेः । **'कर्तव्योऽत्र यत्नः'** इत्यस्य भाष्यस्यायमर्थः—प्रसज्यप्रतिषेध आश्रयणीयः, रूपातिदेशश्च । रूपं च प्रत्यासत्त्या पुंवद्भावभाजः शब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य गृह्यते । तेन हंसवरटादौ न दोषः । यद्यप्यत्राप्यर्थस्यानिवृत्तेर्वा तण्ड्ययुवत्यादौ दोपस्तथापि अतिदिश्यमानरूपविरुद्धस्वाश्रयस्यातिदेशविषयेऽप्रवृत्तेर्न ॥

---

1 'प्रवृत्त्याऽसंभवाभावात्' इति घ. पाठः । संभवाभावादिति पाठे विप्रतिषेधसंभवाभावादित्यर्थः । असंभवाभावादिति पाठे च ह्रस्वस्य पुंवद्भावस्य चासंभवाभावादित्यर्थः ॥

2 कार्यिभेदाच्चेति—अन्त्यस्य ह्रस्वः, शब्दस्य च पुंवद्भाव इति कार्यिभेदः ॥

3 'प्रत्ययपरहितार्थकेन' इति ज. ख. पाठः ॥

4 ननु भाषितपुंस्कादनूङ् यस्मिन्निति विग्रहस्य लौकिकत्वेन कमथलौकिकत्वं कैय्यट उच्यतेऽत आह—शास्त्रातिरेकेणेति । शास्त्रे एव प्रयुज्यमानत्वादस्यालौकिकत्वमिति भावः ॥

5 'नञ्युक्तमिवयुक्तमन्यस्मिन्' इति च. छ. ट. क. पाठः ॥

6 'इहाप्यनूङित्युक्ते' इति च. झ. पाठः ॥

7 इतिशब्दरहितः पाठो मुद्रित पुस्तकेषु ॥

8 'अत्र प्रयत्नः' इति च. झ. पाठः ॥

9 प्रत्ययपक्षे पुंवद्भावाप्राप्तिमुपपादयति—भाषितपुंस्कादनुङ इति ॥

10 प्रत्ययत्वेनेति । 'अनूङ्' इत्यत्र ऊङ्भिन्नः प्रत्ययमात्रो गृह्यत इति भावः ॥

दोषः । स्त्रीप्रत्ययनिवृत्त्यतिदेशपक्षे तु न तयोः कश्चिद्विरोध इति न पूर्वभाष्यासङ्गतिः । किञ्च स्त्रीत्वविशिष्टार्थवाचकशब्दस्थाने पुंस्त्ववाचकशब्दरूपातिदेशे विशिष्टस्य निवृत्तिः-इति अर्थस्यापि निवृत्तिरेव । 'समासनिर्देशोऽयं' इत्यादि 'ऊङ्दशः स्त्रीप्रत्ययः' इति भाष्यं त्वेकदेश्युक्तिः ॥

( सन्देहस्थलनिर्णयभाष्यम् )

**अथेह कथं भवितव्यम्—**

**पट्वीमृद्व्यौ भार्ये अस्य-पट्वीमृदुभार्यः, आहोस्वित् पटुमृदुभार्यः ?**

**पट्वीमृदुभार्य इति भवितव्यम् ।**

**पुंवद्भावः कस्मान्न भवति ?**

**भाषितपुंस्कादित्युच्यते ।**

**ननु च भोः पटुशब्दो मृदुशब्दश्च पुंसि भाष्येते ।**

**समानायामाकृतौ यद्भाषितपुंस्कम्, आकृत्यन्तरे चैतौ भाषितपुंस्कौ ।**

**समानायामाकृतावपि भाषितपुंस्कौ ।**

**कथम् ?**

**आरभ्यतेऽत्र मतुब्लोपः ।**

**एवं तर्हि भाषितपुंस्कादनूङः समानाधिकरण उत्तरपदे पुंवद्भवति-इत्युच्यते । यश्चात्र भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे, कृतस्तस्य पुंवद्भावः । यस्य चाकृतः, नासौ भाषितपुंस्कादनूङ् समानाधिकरण उत्तरपदे ॥**

( प्रदीपः ) **पट्वीमृदुभार्य इति ।** पट्वीशब्दस्योत्तरपदेनानन्तर्याभावात् पुंवद्भावाभावः, मृद्वीशब्दस्यानन्तर्यात् पुंवद्भावः ॥

इतरो यथोक्तमप्रतिपद्याह—**पुंवद्भावः कस्मान्न भवतीति ॥**

**भाषितपुंस्कादिति ।** एकदेशेन समस्तं सूत्रं लक्ष्यते । तत्रोत्तरपदेनानन्तर्याभावात् पट्वीशब्दस्य पुंवद्भावाभावः ॥

इतरस्तु 'भाषितपुंस्कत्वमत्र नास्ति' इत्यनेनोक्तमिति मत्वाऽऽह—**ननु चेति ॥**

इतरः शिष्यबुद्धिपरीक्षार्थमाह—**समानायामिति ॥**

**आकृत्यन्तर इति ।** पटुर्गुणो मृदुर्गुण इति गुणे भाषितपुंस्कौ, भार्यादौ तु स्त्रीलिङ्गाविति भावः ॥

**आरभ्यत इति ।** ततश्च पाटवे मार्दवे च समाने प्रवृत्तिनिमित्ते पटुमृदुशब्दौ पुंसि स्त्रियां च वर्तेते ॥

इदानीमाचार्यः स्वाभिप्रायं प्रकाशयति—**एवं तर्हीति ॥**

( उद्योतः ) **पट्वीशब्दस्येति ।** समुदायस्तु न भाषितपुंस्क इति भावः ॥

१ 'प्राकृतावेतावपि' इति क. पाठः । 'प्राकृतावपि एतौ' इति च. छ. ट. झ. पाठः ॥

तस्योत्तरत्वानुपपत्तेराशयमाह—**एकदेशेनेति ॥**

ततश्च पाटवे इति—गुणे प्रवृत्तिनिमित्ते । द्रव्ये इमौ भाषितपुंस्काविलर्थः । अत्रोत्तरपदेन पूर्वपदं नाक्षिप्यते, एतद्भाष्यप्रामाण्यादिति बोध्यम् ॥

( ६४२८ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ पूरण्यां प्रधानपूरणीग्रहणम् ॥ * ॥

( भाष्यम् ) **पूरण्यां प्रधानपूरणीग्रहणं कर्तव्यम् । प्रधानं या पूरणी तत्रेति वक्तव्यम् ।**

**इह मा भूत्—कल्याणी पञ्चमी अस्य पक्षस्य-कल्याणपञ्चमीकः पक्ष इति ॥**

**अथेह कथं भवितव्यम्-कल्याणी पञ्चमी आसां रात्रीणामिति ?**

**कल्याणीपञ्चमा रात्रय इति भवितव्यम् । रात्रयोऽत्र प्रधानम् ॥**

(प्रदीपः) **कल्याणपञ्चमीक इति ।** पक्षेऽन्यपदार्थेऽवयवानामत्यन्ततिरोधानान्नास्ति पूरण्याः प्राधान्यम् । 'अप्पूरणीप्रमाण्योः' इति समासान्तोऽपि प्राधानपूरण्या एव विहित इति-अत्र न भवतीति 'नद्यृतश्च' इति कप् भवति ॥

इतरस्तु सर्वत्र बहुव्रीहौ वर्तिपदार्थस्याप्राधान्यं मत्वा पृच्छति—**अथेह कथमिति ॥**

**रात्रयोऽत्रेति ।** उद्भूतावयवा रात्रयोऽत्र प्रधानम्, तत्र यथैव प्रथमाया रात्रयः समासाभिधेया एवं पञ्चम्यपीति वर्तिपदार्थस्यान्यपदार्थेऽनुप्रवेशात् प्राधान्यमित्यर्थः । प्रधाने कार्यसम्प्रत्ययात् प्रधानपूरणीग्रहणमित्याहुः ॥

( उद्योतः ) **पक्षेऽन्यपदार्थ इति ।** तिरोहितावयवभेदसमुदायस्य पक्षशब्देनाभिधानात् । तत्रावयवानामनुमीयमानत्वेनाशब्दार्थत्वादप्राधान्यमिति भावः ॥

**रात्रय इति ।** बहुवचनान्तरात्रिशब्दवाच्यः समुदाय इत्यर्थः ॥

( १२१७ विधिसूत्रम् ॥ ६ । ३ । २ आ. २० )

## २८९४ तसिलादिष्वा कृत्वसुचः ॥ ६ । ३ । ३५ ॥

( परिगणनबोधकभाष्यम् )

**इह केचित् तसिलादय आ कृत्वसुचः पठ्यन्ते येषु पुंवद्भावो नेष्यते । केचिच्चान्यत्र पठ्यन्ते येषु पुंवद्भाव इष्यते ।**

**तत्र किं न्याय्यम् ?**

**परिगणनं कर्तव्यम् ॥**

२ छ. पुस्तके 'अत्र' शब्दपाठो न ॥

३ 'दनूङ् समाना' इति छ. झ. पाठः ॥

(उद्योतः) भाष्ये—आकृत्येति पाठः । ननु वृकीशब्दस्य जातिशब्दत्वात् 'जातेश्च' इति पुंवत्त्वप्रतिषेधः स्यादत आह—परिगणनेति ॥

(६४२९ परिगणनवार्तिकम् ॥ १ ॥)

॥ * ॥ तसिलादी त्रतसौ ॥ * ॥

(भाष्यम्) त्रतसौ तसिलादी द्रष्टव्यौ । तस्यां शालायां वसति-तत्र वसति[1] । तस्याः-ततः । यस्याः-यतः ॥

(६४३० परिगणनवार्तिकम् ॥ २ ॥)

॥ * ॥ तरप्तमपौ ॥ * ॥

(भाष्यम्) तरप्तमपौ तसिलादी द्रष्टव्यौ । दर्शनीयतरा । दर्शनीयतमा ॥

(६४३१ परिगणनवार्तिकम् ॥ ३ ॥)

॥ * ॥ चरड्जातीयरौ ॥ * ॥

(भाष्यम्) चरड्जातीयरौ तसिलादी द्रष्टव्यौ । पटुचरी । पटुजातीया ॥

(६४३२ परिगणनवार्तिकम् ॥ ४ ॥)

॥ * ॥ कल्पपदेशीयरौ ॥ * ॥

(भाष्यम्) कल्पपदेशीयरौ तसिलादी द्रष्टव्यौ । दर्शनीयकल्पा । दर्शनीयदेशीया ॥

(प्रदीपः) 'पटुकल्पा' इत्यपपाठः, 'घरूपकल्प–'इति परत्वात् ह्रस्वस्य भावात् । तस्माद्दर्शनीयकल्पेति पाठः ॥

(६४३३ परिगणनवार्तिकम् ॥ ५ ॥)

॥ * ॥ रूपप्पाशपौ ॥ * ॥

(भाष्यम्) रूपप्पाशपौ तसिलादी द्रष्टव्यौ । दर्शनीयरूपा । दर्शनीयपाशा ॥

(६४३४ परिगणनवार्तिकम् ॥ ६ ॥)

॥ * ॥ थम्थालौ ॥ * ॥

(भाष्यम्) थम्थालौ तसिलादी द्रष्टव्यौ । कया आकृत्या-कथम् । यया आकृत्या-यथा ॥

(६४३५ परिगणनवार्तिकम् ॥ ७ ॥)

॥ * ॥ दार्हिलौ ॥ * ॥

(भाष्यम्) दार्हिलौ तसिलादी द्रष्टव्यौ । तस्यां वेलायां-तदा । तस्यां वेलायां-तर्हि ॥

(६४३६ परिगणनवार्तिकम् ॥ ८ ॥)

॥ * ॥ तिलथ्यनौ ॥ * ॥

(भाष्यम्) तिलथ्यनौ तसिलादी द्रष्टव्यौ । वृकी-वृकतिः । अजथ्या यूथिः[2] ॥

(प्रदीपः) वृकतिरिति । लिङ्गविशिष्टपरिभाषया वृकीशब्दात् 'वृकज्येष्ठाभ्याम्' इति तिल्प्रत्ययः । परिगणनसामर्थ्याच्च 'जातेश्च' इति पुंवद्भावप्रतिषेधाभावः ॥ अजथ्येति । पूर्ववदजाशब्दात् 'अजाविभ्यां थ्यन्' इति थ्यन्प्रत्ययः ॥

(६४३७ परिगणनवार्तिकम् ॥ ९ ॥)

॥ * ॥ शसि बह्वल्पार्थस्य ॥ * ॥

(भाष्यम्) बह्वल्पार्थस्य शसि पुंवद्भावो वक्तव्यः । बह्वीभ्यो देहि-बहुशो देहि । अल्पशो देहि ॥

(६४३८ परिगणनवार्तिकम् ॥ १० ॥)

॥ * ॥ त्वतलोर्गुणवचनस्य ॥ * ॥

(भाष्यम्) त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । पट्वीभावः-पटुत्वम्[3] । मृद्वीभावः-मृदुत्वम्[3] । पटुता । मृदुता ॥

गुणवचनस्येति किमर्थम्? कठीभावः-कठीत्वम्[4], कठीता ॥

(उद्योतः) भाष्ये—कठीत्वमिति । आकडारसूत्रे संज्ञाजातिकृदन्ततद्धितान्तसमस्तसर्वनामसङ्ख्याशब्दातिरिक्तशब्दस्यैव गुणवचनत्वोक्तेरिति भावः ॥

(६४३९ परिगणनवार्तिकम् ॥ ११ ॥)

॥ * ॥ भस्याढे तद्धिते ॥ * ॥

(भाष्यम्) भस्याढे तद्धिते पुंवद्भावो वक्तव्यः । हस्तिनीनां समूहो हास्तिकम् ॥

अढ इति किमर्थम्?

श्यैनेयः, रौहिणेयः ॥

(प्रदीपः) हास्तिकमिति । यद्यत्र पुंवद्भावो न स्यात् तदा हस्तिनीशब्दस्य 'यस्येति च' इति लोपे कृते तस्य स्थानिवत्वात् 'असिद्धवदत्राभात्' इत्यसिद्धत्वाच्च 'नस्तद्धिते' इति टिलोपो न स्यादिति पुंवद्भावो विधीयते । 'ठक्छसोश्च' इत्यनेनात्र पुंवद्भावो न भवति, छसा सहचरितस्य ठको ग्रहणात् ॥ श्यैनेय इति । श्येतरोहिताभ्यां 'वर्णात्–' इति ङीप्नकारौ । पुंवद्भावे श्यैतेयो रौहितेय इति स्यात् ॥

(उद्योतः) ननु हस्तिनीशब्दात्समूहे ठकि 'यस्य–'इति लोपे 'नस्तद्धिते' इति टिलोपे रूपसिद्धेः किं वचनेनेत्यत आह—यद्यत्रेति ॥ छसा सहचरितस्येति । 'भवतष्ठक्छसौ' इत्यस्य ॥

रौहितेय इति । पुंवत्त्वेन ङीब्नकारयोर्निवृत्तेरिति भावः । न च 'भस्याऽढे तद्धिते' इत्यत्र 'सिद्धश्च प्रत्ययविधौ' इत्यर्थस्य 'बहुपूग–' इत्यादिसूत्रस्थभाष्ये उक्तत्वेन प्रत्ययोत्पत्तेः पूर्वमेव पुंवत्त्वे 'स्त्रीभ्यो ढक्' इत्यस्याप्रवृत्तौ 'रौहितिः' इति स्यादित्यापादनमुचितमिति

[1] 'वसति । ततः । यतः' इति क. पाठः । 'वसति । तस्याः ततः । यस्यां-यत्र । यस्यां-यतः' इति च. झ. पाठः ॥
[2] 'यूतिः' इति छ. पाठः ॥
[3] 'पट्व्या भावः' 'मृद्व्या भावः' इति च. छ. झ. पाठः ॥
[4] 'कठ्या भावः' इति च. छ. झ. पाठः ॥

वाच्यम् । दोषप्रतिपादने तात्पर्येण तदनपेक्ष्येदमुक्तमिति न दोष इत्याहुः । न च श्येतरोहितयोः शुभ्रादिषु पाठ इति कैयटाशयः, तथा सति श्येनीरोहिणीभ्यामपि लिङ्गविशिष्टपरिभाषया परत्वात्तस्यैवं प्रवृत्तौ स्त्रियां यो ढो विहित इति सिद्धान्तेऽपि पुंवत्त्वापत्तौ श्यैनेयरौहिणेययोरसिद्धिरेव स्यादिति बोध्यम् ॥ अग्नेरिति । न चास्य पुंस्यग्नित्वं प्रवृत्तिनिमित्तं, स्त्रियां त्वग्निसम्बन्ध इति प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कत्वाभावात्कथं पुंवत्त्वमिति वाच्यम्, शक्यतावच्छेदकारोप एव लक्षणेत्यर्थस्य 'पुंयोगादाख्यायाम्'इति सूत्रभाष्ये उक्तत्वेनादोषात् । गङ्गादिशब्दास्तु तटादिरूपं लक्ष्यमपि शास्त्रीयस्त्रीत्वविशिष्टमेवाभिदधतीति न कदाचिदपि ते भाषितपुंस्का इति दिक् ॥

(आक्षेपभाष्यम्)

**यद्यढ इत्युच्यते, अग्नायी देवता अस्य स्थालीपाकस्य—आग्नेयः स्थालीपाकः, अत्र न प्राप्नोति ।**
**इह च प्राप्नोति—कौण्डिन्यः, सापत्न इति ॥**

(प्रदीपः) **अग्नायीति** । 'अग्नेर्ढक्'इति वा 'सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः' इति वा ढक् । तत्र पुंवद्भावप्रतिषेधादाग्नेय इति प्राप्नोति ॥

**कौण्डिन्य इति** । कुण्डिन्या अपत्यं गर्गादित्वात् यञ् । तत्र पुंवद्भावे सति कौण्ड्य इति प्राप्नोति । सपत्नीशब्दादणि सापत इति प्राप्नोति ॥

(उद्योतः) **कौण्ड्य इतीति** । पुंवत्त्वेन स्त्रीप्रत्ययनिवृत्तौ स्थानिवत्त्वाभावात् 'नस्तद्धिते' इति टिलोपापत्तिरिति भावः ॥

**सापत इतीति** । अयं भावः—सपत्नीशब्दस्य स्वामिपर्यायपतिशब्देन समानः पतिर्यस्या इति विग्रहे 'नित्यं सपत्न्यादिषु'इति साधुत्वम् । स्वविवाहितपतिविवाहितद्वितीयादिस्त्रियामेव ङ्यन्तरूढिः, तेन नातिप्रसङ्गः । योगार्थमादाय च भाषितपुंस्कत्वनिर्वाहः । पुंसि तु सपत्निरिति । तत्र शिवादौ सपत्नीशब्दपाठसामर्थ्यात्पुंवत्त्वेऽपि भूतपूर्वसपत्नीशब्दत्वमाश्रित्य पत्युत्तरपदण्यं बाधित्वाऽणि 'सापत्नः' इत्येवेष्यते ॥ **सापत इति—अनिष्टं प्राप्नोतीति** । अस्यानिष्टत्वं च 'यदि पुनरनपत्य इत्युच्यते' इत्यग्रिमभाष्याल्लभ्यते । न हि तदा सापत इति कथमपि सिध्यति । तन्न्यासे एतद्दोषानुपन्यासाच्च—इति ॥

(प्रत्याक्षेपभाष्यम्)

**यदि पुनरनपत्य इत्युच्यते ।**
**नैवं शक्यम् ।**
**इह हि न स्यात्—गार्ग्यायण्या अपत्यं माणवकः—गार्गो जाल्मः ।**

(प्रदीपः) **यदि पुनरिति** । 'अढे' इत्यपनीय'अनपत्ये' इति उच्यमाने आग्नेय इत्यनपत्यत्वात् सिध्यति । श्यैनेयरौहिणेयकौण्डिन्यसापत्नाश्चापत्यप्रत्ययान्तत्वात् सिध्यन्ति ॥ **गार्ग्यायण्या इति** । 'गोत्रस्त्रियाः कुत्सने ण च'इति णे अपत्यप्रत्यये पुंवद्भावो न प्राप्नोति ॥

(उद्योतः) पुंवद्भावो न प्राप्नोतीति । एवञ्च ष्फङीषोर्निवृत्तौ 'गार्ग्यायणः' इति स्यादिति भावः ॥

(समाधानभाष्यम्)

**अस्तु तर्ह्यढ इत्येव ।**
**कथं कौण्डिन्यः सापत्न इति ?**
**कौण्डिन्ये निपातनात् सिद्धम् ।**
**किं निपातनम् ?**
**'आगस्त्यकौण्डिन्ययोः—'इति ।**

**[६]सापत्नः प्रकृत्यन्तरत्वात् ।**

**सपत्नशब्दः प्रकृत्यन्तरमस्ति[७] ।**
**कथमग्नायी देवता अस्य स्थालीपाकस्य-आग्नेयः स्थालीपाक इति ?**
**अस्तु तर्ह्यनपत्य इत्येव ।**
**कथं गार्गो जाल्मः ?**
**गार्ग्यग्नियौ न संवदेते ।**
**कर्तव्योऽत्र यत्नः ॥**

(प्रदीपः) **सपत्नशब्द इति** । 'व्यन्सपत्ने' इति निर्देशोऽत्र लिङ्गं, तस्मादेव शार्ङ्गरवादिषु दृष्ट्व्यान्[८]ङीनि कृते सपत्न्या अपत्यमिति शिवाद्यणि पुंवद्भावे सापत्नः सिध्यति ॥

**कर्तव्योऽत्रेति** । स्त्रियां यो ढो विहितः 'स्त्रीभ्यो ढक्' इत्यनेन तत्र पुंवद्भावप्रतिषेधः, न तु 'अग्नेर्ढक्'इत्यस्मिन्निति व्याख्येयम् ॥

(उद्योतः) भाष्ये—**सापत्नः प्रकृत्यन्तरत्वादिति** । अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरः, तत्त्वादित्यर्थः । एवञ्च सापत्नो न भवदुक्तसपत्नीशब्दप्रकृतिको येन दोषः स्यात्, किन्तु अन्यप्रकृतिक इति तात्पर्यम् ॥ तत्प्रकृत्यन्तरमेवाह—**सपत्नशब्दः प्रकृत्यन्तरमस्तीति** । 'अणः' इति शेषः । एवञ्च शिवादौ सपत्नेत्येव पठ्यत इति भावः । यत्तु स्त्रीप्रत्ययस्य प्रकृत्यन्तरमिति व्याचक्षते । तेषां लक्षणां विना यथाश्रुताक्षरैः साध्यहेत्वोः सामानाधिकरण्यालाभः, [९](हेतोः साध्यवृत्तित्वालाभो वा)इति बोध्यम् ॥ नन्वेवं सपत्न्या अपत्यमित्यर्थे

---

१ तस्यैव—शुभ्रादिभ्यश्चेत्यस्य ॥

२ त्वग्निसंबन्ध इति । वृषाकप्यग्निकुसितेत्यस्य पुंयोगे एव प्रवर्तनात् अग्निसंबन्धः 'अग्नायी'शब्दस्य प्रवृत्तिनिमित्तमित्यर्थः ॥

३ शक्यतावच्छेदकेति । पुंयोगादाख्यायामिति सूत्रे हि भाष्ये 'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यादिति' इत्युक्तम्, तेन च स्त्रियां पुंवाचकस्याग्निशब्दस्य शक्यतावच्छेदकारोप एवेति अग्नित्वं तत्रारोप्यत इति न प्रवृत्तिनिमित्तभेदः ॥

४ नन्वेवं गङ्गाशब्दस्य तटे लक्षणायां गङ्गात्वस्यारोपेऽपि तटवाचित्वाद्भाषितपुंस्कत्वं स्यादत आह—गङ्गादिशब्दास्त्विवति । एवं च शास्त्रीयस्त्रीत्वविशिष्टस्यैवाभिधान्न भाषितपुंस्कत्वमिति भावः ॥

५ 'इत्युच्येत' इति च. छ. झ. पाठः ॥

६ वार्तिकमेतदिति झ. पाठः स प्रामादिकः, उद्द्योते 'भाष्ये' इत्यारभ्य प्रतीकग्रहणात् । छ. पुस्तके नास्य पाठः ॥

७ 'प्रकृत्यन्तरं' इत्येव छ. पाठः ॥

८ 'दृष्टान्' इति क. ठ. झ. पाठः ॥

९ ( ) एतच्चिह्नगतोंऽशः ख. घ. झ. पुस्तकेषु दृश्यते ॥

सापत्नासिद्धिरत आह—तस्मादेवेति ॥ शार्ङ्गरवादीति । पूर्वपक्षयुक्त'सपत्नी'शब्दस्याद्युदात्तत्वात्तत्वकल्पनम् ॥ शिवाद्यणीति । लिङ्गविशिष्टपरिभाषयेति भावः । 'सापत्नो भ्राता'इत्यादिप्रयोगास्तु औपचारिका बोध्याः । केचित्तु सपत्नीत्येवं पाठः । भाष्यं तु लक्षणया व्याख्येयम् । न च पूर्वपक्षयुक्तसपत्नीशब्दादप्यणापत्तौ सापत्नापत्तिः, शिवादौ रूढस्यैव ग्रहणात्—इति वदन्ति । तन्न । तस्यापि स्त्रीविशेषे रूढेरवश्यं स्वीकर्तव्यत्वात्, अन्यथाऽतिप्रसङ्गः स्यात् । एवञ्च ततोऽपि शिवाद्यणापत्तौ सापत्नापत्तेर्दुर्वारत्वात् । तस्माच्छिवादौ सपत्न इति भिन्ना प्रकृतिरेव पठ्यते न तु सपत्नीति—इत्येव भाष्याशयः ॥

स्त्रियां यो ढ इति । 'अढे' इत्यत्र सूत्रस्थं स्त्रियामित्यनुवर्त्य आवर्त्य च स्वरितत्वगुणयुक्तत्वं चाश्रित्य स्त्रीतिशब्दमुच्चार्य विहितढस्यैव ग्रहणादेतदर्थलाभ इति भावः ॥

( ६४४० उपसंख्यानवार्तिकम् ॥ १२ ॥ )

॥ * ॥ ठक्छसोश्च ॥ * ॥

( भाष्यम् ) ठक्छसोश्च पुंवद्भावो वक्तव्यः । भवत्याः छात्राः-भावत्काः, भवदीयाः ।

ठक्ग्रहणं किमर्थम्, न इके कृते 'अजादौ'इत्येव सिद्धम् ?

नैवं शक्यम् ।

*अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः*[2] अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत ।

तद्यथा—मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशो न भवति, एवमिहापि न स्यात् । तसिलादि ॥

( प्रदीपः ) ठक्छसोरिति । छसः सित्वात् तत्र 'सिति च'इति पदसंज्ञाविधानात् भत्वाभावाद्वचनम् ॥

तान्तादिति कादेशो न भवतीति । ठस्येति वर्णमात्रस्य स्थानित्वेऽल्विधित्वात् स्थानिवत्त्वाभावात् । संघातस्य तु स्थानित्वे सन्निपातपरिभाषोपस्थानात् ॥

( १२१८ विधिसूत्रम् ॥ ६ । ३ । २ आ. २१ )

## २८९५ क्यङ्मानिनोश्च ॥ ६।३।३६ ॥

( पदकृत्यभाष्यम् )

मानिन्ग्रहणं किमर्थम् ?

( प्रदीपः ) मानिन्ग्रहणमिति । स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे पूर्वेण सिद्धत्वात् । यथा दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी देवदत्तेति । अत्र ह्येकस्या एव कर्मत्वात् कर्त्रीत्वाच्चास्ति सामानाधिकरण्यम् ॥

( ६४४१ पदप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ मानिन्ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च ॥ * ॥

( भाष्यम् ) मानिन्ग्रहणं क्रियतेऽस्त्र्यर्थमसमानाधिकरणार्थं च ।

अस्त्र्यर्थं तावत्—दर्शनीयां मन्यते देवदत्तो यज्ञदत्तां—दर्शनीयमानी अयमस्याः ।

असमानाधिकरणार्थम्[3]—दर्शनीयां मन्यते देवदत्तां यज्ञदत्ता[4]-दर्शनीयमानिनी इयमस्याः ॥

( १२१९ निषेधसूत्रम् ॥ ६ । ३ । २ आ. २२ )

## २८९६ न कोपधायाः ॥ ६ । ३ । ३७ ॥

( निषेधविषये पक्षद्वयोपस्थापकं भाष्यम् )

किमिदमेवमाद्यनुक्रमणं-आद्यस्य योगस्य विषये, आहोस्वित् पुंवद्भावमात्रस्य ?

किं चातः ?

( प्रदीपः ) आद्यस्येति । पाणिनिपठितसूत्रत्रयस्येत्यर्थः ॥ पुंवद्भावमात्रस्येति । औपसंख्यानिकस्यापीति यावत् ॥

( उद्योतः ) औपसङ्ख्यानिकस्यापीति । तस्यापि यथाकथञ्चित्सूत्रेण सङ्ग्रहादिति भावः । अनेन वार्तिकानामपि सूत्रानुमतत्वं दर्शयति ॥

( प्रथमपक्षे दोषभाष्यम् )

यद्याद्यस्य योगस्य विषये, माध्यमिकीयाः-शाल्कि़कीयाः[5]-अत्र न प्राप्नोति ।

विधिरप्यत्र न सिध्यति ।

किं कारणम् ?

भाषितपुंस्कादनूङित्युच्यते, न ह्येतद्भाषितपुंस्कादनूङ् ।

इह तर्हि विलेपिकाया धर्म्यम्-वैलेपिकम्, विधिश्च सिद्धो भवति, प्रतिषेधश्च न प्राप्नोति ॥

( प्रदीपः ) माध्यमिकीया इति । मध्यमिकायां भव इति 'वेणुकादिभ्यश्छण् वक्तव्यः' इति छण् प्रत्ययः । तत्र 'भस्याढे-' इति पुंवद्भावप्रसङ्गः ॥ शाल्किकीया इति । शाल्कानि विद्यन्तेऽस्यामिति 'वुञ्छण्क-'इति कः । शाल्किकायां भव इति 'वृद्धादकेकान्तखोपधात्' इति छः ॥

विधिरपीति । नगर्यां ग्रामे चाभाषितपुंस्कत्वात् ॥

वैलेपिकमिति । 'अण्महिष्यादिभ्यः' इत्यण् ॥

(उद्योतः) पुंवद्भावप्रसङ्ग इति । एवञ्चेकारश्रवणं न स्यादिति

---

1 'त्येव शिवादौ पाठः' इति ख. ध. पाठः ॥

2 ठाजादावूर्ध्वं द्वितीयादचः ( ५।३।८३ ) इति सूत्रे वार्तिकमेतत् ॥

3 'असमानाधिकरणार्थं च' इति क. ट. पाठः ॥

4 'यज्ञदत्ता देवदत्तां' इति झ. पाठः, 'देवदत्ता यज्ञदत्तां' इति छ. पाठः ॥

5 'माध्यमिकीयः-शाल्किकीयः' इति च. छ. झ. पाठः ॥

भावः ॥ नगर्यामिति । माध्यमिका—नगरी । शाल्कूकिका—ग्रामः । वार्तिके[1]ऽपि सूत्रतो भाषितपुंस्कादनूङ् इत्यस्यानुवृत्तेरिति भावः ॥

( द्वितीयपक्षे दोषभाष्यम् )

अथ पुंवद्भावमात्रस्य विषये, हस्तिनीनां समूहः-हास्तिकम् । जातिलक्षणः[2] पुंवद्भावप्रतिषेधः प्राप्नोति ॥

( सिद्धान्तपक्षोपपादकभाष्यम् )

एवं तर्हि 'न कोपधायाः' इत्ययं योगः[3] पुंवद्भावमात्रस्य विषये[4] । ततं उक्तम्[5]-एवमाद्यनुक्रमणमात्रस्य योगस्य विषये ॥

( प्रदीपः ) एवं तर्हीति । प्रयोगमूलाख्याख्यानाद्यथेष्टविषयविभागलाभः ॥

( ६४४२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥*॥ कोपधप्रतिषेधे तद्धितवुग्रहणम् ॥*॥

( भाष्यम् ) कोपधप्रतिषेधे तद्धितस्य यः ककारो वोश्च यः[6], तस्य ग्रहणं कर्तव्यम् ।

इह मा भूत्—पाकभार्यः, भेकभार्यः ॥

( प्रदीपः ) पाकभार्य इति । पाकशब्दः प्रथमवयोवाची, ततो ङीबपवादोऽजादित्वाट्टाप् ॥ भेकभार्य इति । भेकशब्दः क्रियाशब्दः, मण्डूकजातिवाचित्वे तु भेकीभार्य इति भाव्यम् । 'जातेश्च' इति पुंवद्भावनिषेधात् ॥

( उद्द्योतः ) क्रियाशब्द इति । भययुक्तो भेक इत्यर्थः । भेका भार्या यस्येति विग्रहः ॥

( १२२० निषेधसूत्रम् ॥ ६ । ३ । २ आ. २३ )

## २८९९ स्वाङ्गाच्चेतः ॥ ६ । ३ । ४० ॥

( ६४४३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ स्वाङ्गाच्चेतोऽमानिनि ॥ * ॥

( भाष्यम् ) स्वाङ्गाच्चेतोऽमानिनीति वक्तव्यम् ।

इहापि यथा स्यात्—दीर्घमुखमानी, श्लक्ष्णमुखमानी ॥

यद्यमानिनीत्युच्यते[7], दीर्घमुखमानिनी-श्लक्ष्णमुखमानिनी-इति न सिध्यति ।

प्रातिपदिकग्रहणे[8] लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवं भविष्यति ॥

( प्रदीपः ) 'स्वाङ्गाच्चेतः' इत्येतावत्सूत्रमिति मत्वा वार्तिकारम्भः ॥

( उद्द्योतः ) (भाष्ये) दीर्घमुखमानिनीति । प्रातिपदिकत्वतद्व्याप्यधर्माणां स्त्रीप्रत्ययसमभिव्याहारे विशिष्ट एव पर्याप्त्या मानिन्शब्दस्योत्तरपदत्वाभावादसिद्धिरिति भावः ॥ तर्हि तेनैव न्यायेन मानिन्शब्दत्वमपि विशिष्टे इत्याह—प्रातिपदिकग्रहण इत्यादि । 'यतो[9] यो विहितस्तद्विशिष्टस्यैव तेन ग्रहणम्' इति तु न नियम इति भावः ॥

( १२२१ विधिसूत्रम् ॥ ६ । ३ । २ आ. २४ )

## २९०१ पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ६ । ३ । ४२ ॥

( सूत्राक्षेपभाष्यम् )

किमर्थमिदमुच्यते[10], न सामान्येन सिद्धम् ?

( प्रदीपः ) किमर्थमिति । कर्मधारये 'स्त्रियाः पुंवत्–' इति सिद्धः पुंवद्भावः, जातीयदेशीययोरपि 'तसिलादिष्वा–' इति मत्वा प्रश्नः ॥

( ६४४४ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ पुंवत्कर्मधारये प्रतिषिद्धार्थम् ॥ * ॥

( भाष्यम् ) प्रतिषिद्धार्थोऽयमारम्भः । 'न कोपधायाः' ( ३७ ) इत्युक्तं तत्रापि पुंवद्भावो भवति । कारिका वृन्दारिका-कारकवृन्दारिका, कारकजातीया, कारकदेशीया ॥

'संज्ञापूरण्योश्च' ( ३८ ) इत्युक्तं तत्रापि पुंवद्भ-

---

१ वार्तिकेऽपीति । 'भस्याढे तद्धिते' इत्यादिवार्तिकेष्वपि स्त्रियाः पुंवदिति सूत्रात् 'भाषितपुंस्कादनूङः' इत्यस्यानुवृत्तिर्भवति, तेनाभाषितपुंस्कशब्दयोर्न पुंवद्भावः । एवं च माध्यमिकाशाल्कूकिकाशब्दयोः पुंवद्भावो न प्राप्नोतीति भावः ॥

२ जातिलक्षण इति । 'जातेश्च' इत्यनेन प्राप्तः पुंवद्भावनिषेधः 'भस्याढे तद्धिते' इत्यनेन प्राप्तस्य पुंवद्भावस्य हास्तिकमित्यत्र स्यादिति भावः ॥

३ 'इत्येव योगः' इति झ. पाठः ॥

४ अयं शब्दो न दृश्यते छ. पुस्तके ॥

५ तत उक्तमिति । न कोपधाया इत्ययं निषेधः पुंवद्भावमात्रस्य, सूत्रैर्वार्तिकैश्च प्राप्तस्य पुंवद्भावस्य । ततः पराणि निषेधवचनानि सूत्रत्रयेण प्राप्तस्यैव पुंवद्भावस्य निषेधकानि, न वार्तिकप्राप्तपुंवद्भावस्येति सिद्धान्तः ॥ 'तत उत्तरमेवं–' इति च. छ. क. ट. झ. पाठः ॥

६ 'यः ककारस्तस्य' इति च. छ. झ. पाठः ॥

७ ननु मानिन्शब्दे परे यो निषेधः स मानिनीशब्दे परे न स्यात्तमुपपादयितुमाह—प्रातिपदिकग्रहण इति । एवं च मानिन्शब्दे-स्त्रीप्रत्ययरहिते दृष्टस्योत्तरपदत्वस्य मानिनीशब्दे पर्याप्तिसंबन्धेनातिदेशान्मानिनीशब्दस्यैवात्रोत्तरपदत्वं न मानिन्शब्दस्येति भावः । अत एव दीर्घमुखमानिनीत्यत्र 'अमानिनि' इति न निषेधः ॥

८ मानिन्शब्दत्वमपीति । प्रातिपदिकग्रहणपरिभाषया मानिनीशब्दे तत्त्वमारोप्यत इति न निषेध इति भावः ॥

९ ननु स्त्रीप्रत्ययो न मानिन्शब्दाद्विहितः किन्तु गतिकारकेति परिभाषया ङीबुत्पत्तेः प्राक्समासे विशिष्टात्-दीर्घमुखमानिन्शब्दात्कृत इति स्त्रीप्रत्ययान्तत्वं न मानिनीत्यस्य किन्तु विशिष्टस्येति मानिन्शब्दत्वं मानिनीशब्देनातिदिश्येतेत्यत आह—यतो य इत्यादि । एवं चानुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावादधिकस्य स्त्रीप्रत्ययान्तत्वमिव न्यूनस्यापि मानिनीत्यस्य स्त्रीप्रत्ययान्तत्वमिति भावः ॥

१० 'कर्मधारयजातीयदेशीये किमर्थं' इति च. झ. पाठः ॥

वति । दत्ता वृन्दारिका-दत्तवृन्दारिका, दत्तजातीया, दत्तदेशीया । पञ्चमी वृन्दारिका-पञ्चमवृन्दारिका, पञ्चमजातीया, पञ्चमदेशीया ॥

'वृद्धिनिमित्तस्य-'(३९)इत्युक्तं तत्रापि पुंवद्भावो भवति । स्रौघ्नी वृन्दारिका—स्रौघ्नवृन्दारिका, स्रौघ्नजातीया, स्रौघ्नदेशीया ॥

'स्वाङ्गाच्चेतोऽमानिनि'(४०)इत्युक्तं तत्रापि पुंवद्भावो भवति । श्लक्ष्णमुखी वृन्दारिका-श्लक्ष्णमुखवृन्दारिका, श्लक्ष्णमुखजातीया, श्लक्ष्णमुखदेशीया ॥

'जातेश्च' (४१) इत्युक्तं तत्रापि पुंवद्भवति । कठी वृन्दारिका-कठवृन्दारिका, कठजातीया, कठदेशीया ॥

(प्रदीपः) प्रतिषिद्धार्थमिति । प्रतिषिद्धोऽपि[1] पुंवद्भावो यथा स्यादित्येवमर्थम् ॥

( उद्द्योतः ) प्रतिषिद्धविषयेऽर्थः प्रयोजनं यस्येति भाष्यार्थं इत्याह—प्रतिषिद्धोऽपीति ॥

( ६४४५ उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् ॥ * ॥

( भाष्यम् ) कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः । कुक्कुट्या अण्डं-कुक्कुटाण्डम् । मृग्याः पदं-मृगपदम् । काक्याः शावः—काकशावः ॥

( ६४४६ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

## ॥*॥ न वाऽस्त्रीपूर्वपदविवक्षितत्वात् ॥*॥

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम् ?

अस्त्रीपूर्वपदविवक्षितत्वात् ।

नात्र स्त्रीपूर्वपदं विवक्षितम् ।

किं तर्हि ?

अस्त्रीपूर्वपदं विवक्षितम् । उभयोरण्डम्, उभयोः पदम्, उभयोः शावः ॥

यद्यपि तावदत्रैतच्छक्यते वक्तुम् । इह तु कथं-मृग्याः क्षीरं-मृगक्षीरम्[2] ?

अत्रापि न वाऽस्त्रीपूर्वपदविवक्षितत्वादित्येव ।

कथं पुनः सतो नामाविवक्षा स्यात् ?

सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिका एडका, अनुदरा कन्या ।

असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका, विन्ध्यो वर्द्धितकमिति ॥

( प्रदीपः ) न वेति । पुमान् वृत्तिवाक्यविषयः । स्त्रियां तु वाक्यमेव भवति, वृत्तिस्त्वनभिधानान्न भवति ॥

इह तु कथमिति । न हि पुंसा क्षीरस्य सम्बन्धसम्भवः ॥

अत्रापीति । जात्यन्तरनिवृत्तिपरायां[3] स्त्रीत्वमनुपकारित्वादविवक्षितमित्यर्थः । यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्ष्यत एव, यथाऽजामूत्रेण पर्युक्षितं दातव्यमिति ॥

असतश्चेति । विवक्षाया एव बलीयस्त्वमित्यनेन प्रतिपाद्यते ॥ समुद्रः कुण्डिकेति । असदेव समुद्रत्वं कुण्डिकायाम् असत्–कुण्डिकात्वं समुद्रे[4] चारोप्य शब्दप्रयोगः ॥

( उद्द्योतः ) ननु सतो विवक्षाया एव प्रकृतत्वात् 'असतश्च' इत्यादि प्रकृतानुपयुक्तमत आह—विवक्षाया एवेति । न तु वस्तुसत्पदार्थसत्ताया इति भावः ॥

( ६४४७ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अग्नेरीत्वाद्वरुणवृद्धिर्विप्रतिषेधेन[5] ॥ * ॥

( भाष्यम् ) अग्नेरीत्वाद्वरुणस्य वृद्धिर्भवति विप्रतिषेधेन । अग्नेरीत्वस्यावकाशः—अग्नीषोमौ ।

वरुणस्य वृद्धेरवकाशः—वायुवारुणम् ।

इहोभयं प्राप्नोति—आग्नीवारुणीमनड्वाहीमालभेत ।

वरुणस्य वृद्धिर्भवति विप्रतिषेधेन ॥

( प्रदीपः ) वायुवारुणमिति । उभयत्र वायोः प्रतिषेधो वक्तव्य इत्यानङ् न भवति । वायुवरुणौ देवताऽस्य 'साऽस्य देवता' इत्यण्, 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः ॥

आग्निवारुणीमिति । नन्वीत्वमन्तरङ्गं, बहिरङ्गा तूत्तरपदवृद्धिस्तद्धितापेक्षणात्–इत्ययुक्तो विप्रतिषेधः । नैतदस्ति । 'इद्वृद्धौ'इतीत्वस्यापवाद इत्वं विधीयते, ततोऽपवादविषयापेक्षणान्नास्त्यन्तरङ्गत्वमीत्वस्यात्र विषये ॥

( उद्द्योतः ) [6]'ईदग्नेः–'इति ईत्वस्यापवादः 'इद्वृद्धौ'इति इत्वमित्यन्वयः ॥ ततोऽपवादेति । अपवादविषयप्रकल्पनेनोत्सर्गप्रवृत्त्याऽत्र विषये ईत्वस्य प्रथममप्रवृत्तेर्नान्तरङ्गत्वमिति भावः ।

---

१ प्रतिषिद्धोऽपि—स्त्रियाः पुंवदितिसूत्रे अपूरणीप्रियादिष्विति प्रतिषिद्धोऽपि पुंवद्भावस्तस्यात्राननुवर्तनात् पूरण्यादावनेन कर्मधारये पुंवद्भवतीति भावः । व्याख्यानादेवात्रापूरणीत्यादेरनुवृत्तिर्न । व्याख्यानं च सर्वनिषेधप्रकरणं समाप्य पृथगिदं सूत्रं कृतम् । यदि अपूरणीप्रियादिष्वित्यस्यात्रानुवृत्तिः स्यात्तदा कर्मधारयांशे 'स्त्रियाः–' इति सूत्रस्य प्रकृतसूत्रस्य समानविषयत्वेन प्रकृतसूत्रं निषेधप्रकरणस्य 'न कोपधायाः' इत्यारभ्य कृतस्य बाधकमेवेति मध्येऽपवादन्यायविषयतया स्त्रियाः पुंवदिति सूत्रानन्तरमेवेदं पठितं स्यात्, पुंवदिति चाकृतं स्यात्–इति पुनः पुंवत्करणसामर्थ्याद्व्याख्यानादपूरणीत्यादेरत्रानुवृत्तिः, न कोपधाया इत्यादिनिषेधानां कर्मधारये न प्रवृत्तिरिति तात्पर्यम् ॥

२ 'मृगक्षीरमिति' इति च. छ. झ. पाठः ॥

३ 'निवृत्तिपरायां चोदनायां स्त्रीत्वं' इति क. झ. पाठः ॥

४ 'समुद्रे वाऽऽरोप्य' इति क. झ. पाठः ॥

५ 'वरुणस्य वृद्धि' इति च. छ. क. ट. पाठः ॥

६ इद्वृद्धावितीत्वस्येति कैयटग्रंथस्यान्वयमाह—ईदग्नेरिति ॥

भाष्ये—**अग्नीषोमा**वित्यवकाशप्रदर्शनमुपलक्षणम्, अग्नीवरुणावित्यवकाशो बोध्यः ॥

**( आक्षेपभाष्यम् )**

**नैष युक्तो विप्रतिषेधः ।**

**द्विकार्ययोगो हि विप्रतिषेधः, नात्रैको द्विकार्ययुक्तः ।**

**कथम् ?**

**अग्नेरीत्वम्, वरुणस्य वृद्धिः-इति ॥**

**( समाधानभाष्यम् )**

**नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।**

**किं तर्हि ?**

**असंभवोऽपि, स चात्रास्त्यसम्भवः ।**

**कोऽसावसंभवः ?**

**अग्नेरीत्वमभिनिर्वर्तमानं वरुणस्य वृद्धिं बाधते । वरुणस्य वृद्धिरभिनिर्वर्तमाना अग्नेरीत्वं बाधते । एषोऽसंभवः ।**

**सत्यसंभवे युक्तो विप्रतिषेधः ॥**

(प्रदीपः) **वरुणस्य वृद्धिमिति ।** 'दीर्घाच वरुणस्य'इति निषेधात् ॥

**ईत्वं बाधत इति ।** 'इद्वृद्धौ'[1]इति वचनात् ॥

**( ६४४८ विप्रतिषेधवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ पुंवद्भावात् ह्रस्वत्वं खिद्धादिकेषु ॥ * ॥

(भाष्यम्) **पुंवद्भावाद् ह्रस्वत्वं भवति विप्रतिषेधेन**[2] **।**

**पुंवद्भावस्यावकाशः—पटुभार्यः, मृदुभार्यः ।**

**खिति ह्रस्वत्वं भवतीत्यस्यावकाशः—कालिम्मन्यः, हरिणिम्मन्यः ।**

**इहोभयं प्राप्नोति—कालिम्मन्या, हरिणिम्मन्या ।**

**ह्रस्वो भवति विप्रतिषेधेन ॥**

**घादिषु नद्या ह्रस्वो भवतीत्यस्यावकाशः—नर्तकितरा, नर्तकितमा ।**

**पुंवद्भावस्यावकाशः—दर्शनीयतरा, दर्शनीयतमा ।**

**इहोभयं प्राप्नोति—पट्वितरा, पट्वितमा ।**

**ह्रस्वो भवति विप्रतिषेधेन ॥**

**के ह्रस्वो भवतीत्यस्यावकाशः—नर्तकिका ।**

**पुंवद्भावस्यावकाशः—दारदिका ।**

**इहोभयं प्राप्नोति—पट्विका, मृद्विका ।**

**ह्रस्वत्वं भवति विप्रतिषेधेन ॥**

**अथेदानीं ह्रस्वत्वे कृते पुनः प्रसङ्गविज्ञानात्पुंवद्भावः कस्मान्न भवति ?**

**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ॥**

**( प्रदीपः ) कालिम्मन्य इति ।** कालीमात्मानं मन्यते काली-एवाहमिति मन्यत इत्यर्थः ॥

**नर्तकितरेति ।** अत्र 'न कोपधायाः' इति पुंवद्भावः प्रतिषिद्धः ॥

**दारदिकेति ।** दरदोऽपत्यं स्त्री । 'द्व्यञ्मगध-' इत्यण् । तस्य 'अतश्च' इति लुक् । ततः 'प्रागिवात्कः' इति कः । 'तसिलादिषु-' इति पुंवद्भावः । ननु परिगणितास्तत्रतसिलादयः, न च कप्रत्ययः परिगणितः । एवं तर्हि विप्रतिषेधाभिधानात् कप्रत्ययोऽपि तत्राभ्युपगत इत्यनुमीयते, तेन[3] नासौ परिगणितः ॥

**( उद्द्योतः )** (भाष्ये) **कालिम्मन्य इति ।** स्त्रीलिङ्गोत्तरपदत्वाभावात्पुंवत्त्वाप्राप्तिः । 'कालिम्मन्या' इत्यस्य कालीं स्वप्रियात्वेन मन्यते इत्यर्थे वैयधिकरण्यात्पुंवत्त्वाप्राप्तेरुदाहरणे सामानाधिकरण्यं दर्शयति—**कालीमात्मानमिति ॥**

**अत्र न कोपेति ।** नर्तकिकेत्यत्राप्येतद्बोध्यम् ॥

**विप्रतिषेधाभिधानादिति ।** 'दारदिका' इत्यवकाशप्रदर्शनात्, 'पट्विका' इत्युदाहरणादित्यपि बोध्यम् ॥ **तेन नासाविति ।** तेनास्यात्यल्पविषयता सूच्यते इति भावः ॥

---

**( १२२२ विधिसूत्रम् ॥ ६ । ३ । २ आ. २५ )**

## २९०२ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ६ । ३ । ४३ ॥

**( ह्रस्वाधिकरणम् )**

**( पदकृत्यभाष्यम् )**

**ङीग्रहणं किमर्थम् ?**

**अनेकाचो ह्रस्व इतीयत्युच्यमाने खट्वातरा-मालातरा-अत्रापि प्रसज्येत ।**

**नैतदस्ति प्रयोजनम् । भाषितपुंस्कादित्युच्यते**[4] **॥**

**एवमपि दत्तातरा-गुप्तातरा-अत्रापि प्राप्नोति ।**

**ईत इति वर्तते ।**

**क्व**[5] **प्रकृतम् ?**

---

१ अत्र 'इति'शब्दपाठो मुद्रितपुस्तके न ॥

२ 'विप्रतिषेधेन खिद्धादिकेषु' इति छ. च. झ. पाठः । 'विप्रतिषेधेन क ? खिद्धादिकेषु' इति ट. पाठः ॥

३ 'तेनासौ' इति क. ठ. झ. पाठः ॥ उद्द्योतदर्शनात् 'तेन नासौ' इत्येव पाठः । विप्रतिषेधाभिधानात्कप्रत्ययस्तत्रानुमातुं शक्यत इति न तस्य परिगणनम् । साक्षात्परिगणनाभावस्योपयोगमप्याह भट्टाचार्यः—तेनास्यात्यल्पविषयतेति ॥

४ 'पुंस्कादिति वर्तते' इति छ. झ. पाठः ॥

५ 'क्व प्रकृतम् ? स्वाङ्गाच्चेतोऽमानिनीति' इत्यस्य छ. पुस्तके न पाठः ॥

'स्वाङ्गाच्चेतोऽमानिनि' ( ६।३।४० ) इति ॥

एवमपि ग्रामणीतरः-सेनानीतरः-अत्रापि प्राप्नोति ।

स्त्रियामिति वर्तते ॥

एवमपि ग्रामणीतरा-सेनानीतरा-अत्रापि प्राप्नोति ।

स्त्रियाः स्त्रियामिति वर्तते ॥

शेषप्रकृत्यर्थं तर्हि ङीग्रहणं कर्तव्यम् । 'नद्याः शेषस्यान्यतरस्याम्' ( ६।३।४४ ) इति ।

कश्च शेषः ?

अङी च या नदी, ङ्यन्तं च यदेकाच् ॥

( प्रदीपः ) ईत इति वर्तत इति । 'स्वाङ्गाच्चेतः' इत्यतः ॥

स्त्रियाः स्त्रियामिति वर्तत इति । तेन स्त्रीवाचिन ईकारस्य ह्रस्वो विधीयमानो ग्रामणीशब्दस्य न भविष्यति, अनर्थकत्वादीकारस्य ॥

शेषप्रकृत्यर्थमिति । विशिष्टस्य शेषस्य प्रकृत्यर्थमित्यर्थः ॥

( उद्द्योतः ) ननु ग्रामणीशब्दस्यापि स्त्रीवाचकतया षष्ठ्यन्तस्त्रिया इत्यस्यानुवृत्तौ कथमतिप्रसङ्गनिवृत्तिरत आह—तेनेति ॥

नन्वसत्यपि ङीग्रहणे एकाज्रूपशेषप्रकृतिः सिद्धैव, उपयुक्तादन्यस्य शेषत्वादत आह—विशिष्टस्येति । तच्च 'अङी च या नदी' इत्यादिना भाष्ये दर्शितम् ॥

( ङीग्रहणप्रत्याख्यानभाष्यम् )

अन्तरेणापि ङीग्रहणं प्रकृतः शेषः ।

कथम् ?

ईत[1] इति वर्तते । अनीच्च या नदी, ईदन्तं चापि यदेकाच् ॥

( प्रदीपः ) अनीच्च या नदीति । ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा-इति ॥ ईदन्तं चेति । स्त्रितरा, स्त्रीतरा-इति ॥

( शेषग्रहणप्रत्याख्यानभाष्यम् )

शेषग्रहणं चापि शक्यमकर्तुम् ।

कथम् ?

अविशेषेण घादिषु नद्या[2] अन्यतरस्यां ह्रस्वत्वमुत्सर्गः, तस्य[3] 'अनेकाचः' इति नित्यं ह्रस्वत्वमपवादः ।

तस्मिन्नित्ये प्राप्ते उगितो वि[4]भाषेयमारभ्यते ॥

यद्येवं लक्ष्मितरा-तन्त्रितरा-इति न सिध्यति, लक्ष्मीतरा-तन्त्रीतरा-इति प्राप्नोति ।

इष्टमेवैतत्संगृहीतम्, लक्ष्मीतरा-तन्त्रीतरा-इत्येव भवितव्यम् ।

एवं हि सौनागाः पठन्ति-घादिषु नद्या ह्रस्वत्वे कृन्नद्याः प्रतिषेध इति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठस्याध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ॥

( प्रदीपः ) अविशेषेणेति । ईतोऽनेकाच इति विशेषानाश्रयात् ॥

यद्येवमिति । यदि 'ईतः' इत्यनुवृत्त्या ङीग्रहणं शेषग्रहणं च प्रत्याख्याय स्त्रिया इत्यनेनेकारो विशेष्यते तदा लक्ष्मीतन्त्र्योरीकारः स्त्रियां न विहित इति नित्यह्रस्वत्वं नास्ति। 'नद्या···अन्यतरस्याम्' इत्यत्रापि स्त्रिया इत्यनुवर्तनात् विकल्पेन ह्रस्वत्वं नास्ति । सति त्विह ङीग्रहणे स्त्रिया इत्यस्य प्रयोजनाभावादनुवृत्त्यभावात् 'नद्याः शेषस्य–' इत्यनेन ह्रस्वः सिध्यतीति भावः ॥

इष्टमिति । सति इह ङीग्रहणे 'नद्याः शेषस्य–' इति विकल्पेन प्राप्तं ह्रस्वत्वं वचनप्रतिषेध्यम्, असति तु ङीग्रहणे स्त्रिया इत्यस्य सूत्रद्वयेऽप्यनुवृत्त्या ह्रस्वस्याप्रसङ्गः कृतस्त्रियाः–इति नास्ति लक्ष्यभेद इति सिद्धं सर्वमिष्टम् ॥

इत्युपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे षष्ठाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

( उद्द्योतः ) भाष्ये 'ङी'ग्रहणं विनाऽपि शेषप्रकृतिं प्रदर्श्य शेषग्रहणमपि न कार्यमित्याह—शेषग्रहणं चापीति । 'ङी'ग्रहणं 'च'शब्दार्थः ॥

तस्याऽनेकाच इति । 'स्त्रियां विहितेकारान्तस्य' इति शेषः ॥

नन्वेवं 'उगितश्च' इत्यस्यापि नित्यं ह्रस्वत्वमपवादः स्यात्, एवञ्च विदुषितरेत्यादौ विकल्पानापत्तिरत आह भाष्ये—तस्मिन्नित्ये प्राप्ते इति । उगितः परनद्यन्तस्यैकाचोऽसंभवेन तस्याचारितार्थ्यादिति भावः ॥ उगितो विभाषेयमिति । उगित्परनदीसंबन्धिनीत्यर्थः ॥

ईकारो विशेष्यत इति । ग्रामणीतरेत्यादावतिप्रसङ्गवारणायेति भावः ॥ स्त्रियां न विहित इति । 'अवितॄस्तृ' इत्यादेः स्त्रियामित्यधिकृत्याविधानात्, शब्दशक्त्या तु तयोः स्त्रियां वृत्तिरिति भावः ॥

१ ईत इति वर्तत इति । स्वाङ्गाच्चेतः ( ६।३।४० ) इत्यतः ॥

२ नद्या अन्यतरस्यामिति । नद्याः शेषस्यान्यतरस्यामित्यनेन घादिषु यद्ध्रस्वत्वं विधीयते स उत्सर्गः, तस्य घरूपेतिसूत्रेण अनेकाचो विधीयमानं नित्यं ह्रस्वत्वमपवाद इत्यर्थः ॥

३ 'अस्यानेकाचो नित्यं' इति छ. झ. पाठः ॥

४ 'विभाषाऽऽरभ्यते' इति छ. पाठः ॥ 'उगितश्च' (४५) इत्यनेन विभाषाऽऽरभ्यत इत्यर्थः ॥

५ ईत इति । घरूपेति सूत्रादुभयमपि 'नद्याः शेषस्या–' इत्यत्र नानुवर्तत इत्याशयः ॥

६ 'अवितृस्तृतन्त्रिभ्य ईः' (४३८) इत्युणादिसूत्रेण ईप्रत्ययः, तेन तन्त्रीशब्दः सिद्धः । तस्मिन्नेवाधिकारे 'लक्षेर्मुट् च' (४४०) इत्यनेन लक्ष्मीशब्दः सिद्धः ॥

प्रयोजनाभावादिति । स्त्रियामित्यधिकृत्य ङीबादेर्विधानेन व्यभिचाराभावादिति भावः ॥

भाष्ये—'इतिप्राप्नोति' इत्यस्य-इत्येव प्राप्नोतीत्यर्थः ॥

सूत्रद्वयेऽपीति । 'घरूप-' इत्यत्र 'नद्या ··· अन्यतरस्याम्' इत्यत्र च । एवञ्च ङीग्रहणप्रत्याख्याने शेषग्रहणं[1] 'कृन्नद्याः-'इति च न वक्तव्यमिति महल्लाघवमिति भावः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

॥ अथ षष्ठस्य तृतीये तृतीयमाह्निकम् ॥

( १२२३ विधिसूत्रम् ॥ ६ । ३ । ३ आ. २६ )

## २९०५ आन्महतः समानाधिकरणजातीययोः ॥ ६ । ३ । ४६ ॥

( आत्वाधिकरणम् )

( महद्विषयाक्षेपभाष्यम् )

**इह कस्मान्न भवति—अमहान् महान् संपन्नो महद्भूतश्चन्द्रमा इति ॥**

( प्रदीपः ) **महद्भूत इति ।** महच्छब्दो भूतशब्दश्चैकस्मिन्नर्थे चन्द्रादौ वर्तत इति सामानाधिकरण्यादात्वं प्राप्नोति ॥

( उद्द्योतः ) **महच्छब्द इति ।** इह प्रकृतिविकृत्योरभेदाध्यासविषये 'सुवर्णं कुण्डले भवतः' इत्यादौ विकारस्य प्राधान्येन क्रियासम्बन्धो दृश्यते, प्रकृतेस्तु गुणभावेन । तथा प्रकृतेऽपि महदर्थस्य भवनकर्तृत्वेन प्राधान्यतस्तस्य क्रियासम्बन्धान्महद्भूतशब्दयोः सामानाधिकरण्यादात्वप्राप्तिरिति प्रश्न इति भावः ॥

( महद्भूते आत्वाभावसाधकं श्लोकवार्तिकम् )

### अन्यप्रकृतिरमहान्[2]
### भूतप्रकृतौ महान् महत्येव ।

( भाष्यम् ) **अन्यः-महान् । अन्यः-अमहान् भूतप्रकृतौ वर्तते । महान्-महत्येव ॥**

( प्रदीपः ) **अन्यप्रकृतिरिति । अन्यस्य** महतः **प्रकृतिः**-कारणं-अन्यप्रकृतिरमहान् ॥ **भूतप्रकृताविति ।** भूतशब्दस्य प्रकृतिः-कारणं-अर्थः, अर्थप्रतिपादनाय शब्दोच्चारणाच्छब्दस्यार्थः कारणमुच्यते । तदयमर्थः-भूतशब्दार्थेऽमहान् वर्तते । अमहतो भूतेन सामानाधिकरण्यं, न तु महत इत्यर्थः ॥ **महान्महत्येवेति ।** महच्छब्दो महत्येव वर्तते न तु भूतार्थे, च्विविषये हि प्रकृतिः कर्त्री न विकृतिः । तथा हि— संघीभवन्ति ब्राह्मणाः-पटीभवन्ति तन्तव इति प्रकृतिसंख्याश्रयं वचनं दृश्यते, न विकृतिसंख्याश्रयम् । तथा अत्वं[3] संपद्यते त्वद्भवतीति प्रकृत्याश्रयः प्रथमपुरुषो भवति, न विकृत्याश्रयो मध्यमपुरुषः । ततश्च भूत इति निष्ठाप्रत्ययो भवनक्रियायाः कर्तरि अमहत्युत्पन्नो न तु विकारे महति ॥

( उद्द्योतः ) **कारणमर्थं इति ।** कर्तृरूपोऽर्थ इत्यर्थः । तत्रामहान् शब्दो वर्तत इति भाष्याक्षरार्थः ॥

**अन्यप्रकृतिरिति**—वार्तिकस्थमन्यशब्दं व्याचष्टे—**भाष्ये—अन्यो महानिति ॥** अमहतस्तत्प्रकृतित्वोपपादनायाह—**अन्योऽमहानिति ॥ महत्येवेति ।** न तु भूतप्रकृतावित्यर्थः । महत्त्वरूपेण भूत इत्यर्थावगमादिति भावः ॥ कुतः पुनरयं नियमोऽत आह—**च्विविषये हीति ।** अन्यत्र विकृतेः कर्तृत्वेऽपि शब्दशक्तिस्वाभाव्यात् च्विविषये प्रकृतेरेव कर्तृत्वमिति भावः ॥ तत्र मानान्तरमप्याह—**तथा हीति ॥ सङ्घीभवन्तीति ।** असङ्घा ब्राह्मणाः सङ्घः संपद्यते इत्यर्थः ॥

( आत्वाभावसाधकं श्लोकवार्तिकम् )

### तस्मादात्वं न स्यात्

( भाष्यम् ) **तस्मादात्वं न भविष्यति ॥**

( पुंवद्भावाक्षेपभाष्यम् )

### पुंवत्तु कथं भवेदत्र ॥ १ ॥

( भाष्यम् ) **पुंवद्भावोऽपि तर्हि न प्राप्नोति । अमहती महती संपन्ना महद्भूता ब्राह्मणी ॥ एवं तर्हि—**

( प्रदीपः ) **पुंवत्त्विति ।** वैयधिकरण्यादात्ववत्[4] पुंवद्भावोऽपि न प्राप्नोति । यथा च प्रकृतेः कर्तृत्वं दृश्यते तथा विकृतेरपि, सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इति विकारसंख्याश्रयद्विवचनदर्शनात् । तथा 'क्लृपि संपद्यमाने चतुर्थी' इति विकाराच्चतुर्थी दृश्यते न प्रकृतेः, मूत्राय संपद्यते यवागूः-उच्चाराय कल्प्यते यवान्नमिति । तथा असंघो ब्राह्मणाः संघः संपद्यते-अपटस्तन्तवः पटः संपद्यते-इति विकारसंख्याश्रयं वचनं दृश्यते ॥ तत्र यदि महद्भूतेत्यत्र सामानाधिकरण्यमाश्रित्य पुंवद्भावो विधीयते तदा गोमतीभूतेत्यत्रापि प्राप्नोति । आत्वप्रसङ्गश्च॥ तत्र पुंवद्भावं तावत्साधयितुमाह—**एवं तर्हीति ।** अमहत्यर्थे महच्छब्दो वर्तत इति भूतशब्दसामानाधिकरण्ये पुंवद्भावो भवतीत्यर्थः ॥

( उद्द्योतः ) नन्वत्र विकृतेः कर्तृत्वमाश्रित्य पुंवद्भावः सुलभ इति शङ्कते—**यथा चेत्यादिना ।** 'सङ्घीभवन्ति'इत्यादौ[5] ॥ **क्लृपि संपद्यमान इति ।** तेन संपत्तिक्रियाकर्तरि विधीयमाना चतुर्थी विकारादेवोत्पद्यत इति विकारस्यैव संपत्तिकर्तृत्वमावेदयते इत्यर्थः ॥ उत्तरयति—**तत्र यदीति ॥ आत्वप्रसङ्गश्चेति ।** 'महद्भूतश्चन्द्रमाः'

---

[1] शेषग्रहणमिति । नद्याः शेषस्यान्यतरस्यामिति सूत्रस्थं शेषग्रहणमित्यर्थः ॥

[2] 'प्रकृतिस्त्वमहान्' इति छ. पाठः ॥

[3] 'अत्वं त्वं संपद्यते' इति क. ङ. पाठः ॥

[4] वैयधिकरण्यादिति । महद्भूत इत्यत्र भूतशब्दस्यामहच्छब्देन सामानाधिकरण्यं न महच्छब्देनेति महतो भूतेन वैयधिकरण्यादात्ववत्पुंवद्भावोऽपि नेत्यर्थः ॥

[5] संघीभवन्तीत्यादाविति । प्रकृतेः कर्तृत्वमिति शेषः ॥

इत्यत्र । यदि वैयधिकरण्याश्रयेण आत्ववारणं तदा पुंवत्त्वाप्रसक्तिरिति सेयमुभयतः स्पाशेति भावः ॥

तावदिति । पुंवद्भावे दोषपर्यवसानात्प्रथमं तमेव परिहरतीत्यर्थः ॥ **अमहत्यर्थे इति** । अनेन च्विविषये प्रकृतिविकृत्योरभेदस्यैव विवक्षणान्महच्छब्दस्यापि गौण्या वृत्त्याऽमहद्बोधकतया तस्य च कर्तृत्वात् सामानाधिकरण्याश्रयपुंवत्त्वसिद्धिरिति भावः ॥

( आक्षेपबाधकं श्लोकवार्तिकम् )

**अमहति महान् हि वृत्त-**
**स्तद्वाची चात्र भूतशब्दोऽयम् ।**

**( भाष्यम् ) अमहति हि महच्छब्दो वर्तते, तद्वाची भूतशब्दोऽयं प्रयुज्यते ।**

**किं वाची ?**

**महद्वाची ॥**

( प्रदीपः ) **महद्वाचीति** । अयं भावः—च्व्यन्तोऽत्र महच्छब्दः । च्विप्रत्ययश्च यदा प्रकृतिर्विकाररूपतामापद्यमाना विवक्ष्यते तदोत्पद्यते, परिणाम[2]विषयत्वात् च्विप्रत्ययस्य । यदा चैकोऽर्थः प्रकृतिविकारात्मकतयाऽऽश्रीयते तदा परिणामव्यवहारो भवति । यथोक्तम्—

**जहद्धर्मान्तरं[3] पूर्वमुपादत्ते यदा परम्[4] ।**
**तत्वाद[5]प्रच्युतो धर्मी परिणामः[6] स उच्यते ॥** इति ।

यदा तूत्तरावस्था पूर्वावस्था वा नाश्रीयते तदा च्वेरभावः—तन्तवो भवन्ति पटो भवतीति । उक्तं च हरिणा—

**पूर्वा[7]वस्थामविजहत्संस्पृशन् धर्ममुत्तरम् ।**
**संमूर्छित[8] इवार्थात्मा जायमानोऽभिधीयते[9] ॥** इति ॥

तत्र विकारस्य कर्तृत्वात् भूतशब्देन सामानाधिकरण्यात् सिद्धः पुंवद्भावः ॥

( उद्द्योतः ) ननु 'महद्वाची'इत्ययुक्तं, च्व्यन्ते प्रकृतेरेव कर्तृत्वात्—अत आह—**अयं भाव इति** ॥ **विवक्ष्यते तदोत्पद्यत इति** । 'कृष्णीभूतः' इत्यादौ, तादृ[10]शावस्थाया एवातीतत्वप्रतिपत्तेः ॥ **ध्यात्मकतयेति** । प्रकृतिविकारात्मकतयेत्यर्थः । कचित्तु[11] तथैव पाठः ॥

**जहद्धर्मान्तरमिति** । क्षीरावस्थायां विद्यमानं धर्मं द्रवत्वादिकं जहत्, न तु त्यक्तवान्, किंचिदन्वयात् । परं—दध्यवस्थायामवस्थितं धर्मम् । एवञ्च धर्मस्यैव त्यागोपादाने, धर्मी त्ववस्थित एवेति भावः । तदाह—**तत्त्वादिति** । स्वस्वरूपादित्यर्थः ॥

**पूर्वावस्थामिति** । पूर्वां कारणावस्थामविजहदुत्तरं धर्ममवस्थाविशेषरूपमासादयन् **संमूर्छित इवो**भयरूपतयाऽध्यवसीयमानो **जायमानोऽर्थात्मा** च्व्यन्तेनाभिधीयत इत्यर्थः । एवञ्चैकस्यैव वस्तुनः पूर्वोत्तरावस्थोपाधिव्यवच्छिन्नत्वात् प्रकृतिविकृत्योरुभयोरपि कर्तृत्वमुपपद्यत इति भावः । उभयोः कर्तृत्वेऽपि वचनं प्रकृतिसङ्ख्याश्रयं पुरुषोऽपि प्रकृत्याश्रय एवेति बोध्यम्, शब्दशक्तिस्वभावात् । केचित्तु यतो महान् महच्छब्दस्सादृश्येनामहति वर्ततेऽतो भूतशब्दो महद्वाची—महच्छब्दसमानाधिकरणः, तस्याप्यमहदर्थकत्वादिति भाष्यार्थमाहुः ॥

( पुंवद्भावसाधकं श्लोकवार्तिकम् )

**तस्मात् सिध्यति पुंवत्**

**( भाष्यम् ) तस्मात् सिध्यति पुंवद्भावः ॥**

( वार्तिकावतरणभाष्यम् )

**यद्येवमात्वमपि प्राप्नोति—महद्भूतश्चन्द्रमा इति ॥**

( उद्द्योतः ) 'निवर्त्यमात्वम्' इति वार्तिकमवतारयति—भाष्ये—**यद्येवमिति** । 'इत्याह'इति वाक्यशेषः ॥

( आक्षेपसाधकं श्लोकभाष्यम् )

**निवर्त्यमात्वन्तु मन्यन्ते ॥ २ ॥**

**( भाष्यम् ) आत्वमपि प्राप्नोति ॥**

**नैष दोषः ।**

**कथम्[12] ?**

( प्रदीपः ) **निवर्त्यमिति** । पुंवद्भाववदात्वस्यापि प्रसङ्गात् । तदत्र क्वचित्सामानाधिकरण्यं क्वचिद्वैयधिकरण्यमाश्रित्य प्रयोगाः समर्थ्यन्ते—महद्भूते[13]त्यत्र विकारभागः कर्तृत्वेमाश्रीयते । गोमतीभूतेत्यत्र तु प्रकृतिभागः, महद्भूतश्चन्द्रमा इत्यत्रापि प्रकृतिभागः । संघीभवन्ति ब्राह्मणा इत्यादौ तु प्रकृतेरेव कर्तृत्वम्, च्व्यन्तस्य गतित्वात् गतीनां च क्रियाविशेषकत्वात् संघीभवनलक्षणायां विशिष्टायां क्रियायां ब्राह्मणानां कर्तृत्वात् । संघः संपद्यत इत्यादौ तु वाक्ये जन्ममात्रस्य संघः कर्ता । यथा व्याकरणस्य सूत्रं करोतीति करोतिमात्रस्य सूत्रं कर्म । व्याकरणं सूत्रय[14]तीत्यत्र तु सूत्रविशिष्टस्य करोतेर्व्याकरणम् । एवमिहापि प्रकृतिविकृत्योर्भिन्नक्रियाविषयं कर्तृत्वम् । तेन वृत्तौ प्रकृतिसंख्याश्रयं वचनम् । एवं महद्भूतशब्दः प्रकृतेरेव कर्तृत्वमवगमयितुं

१ 'असहति महच्छब्दो' इति छ. पाठः ॥
२ परिणामविषयत्वात्—परिणामवाचकत्वात् ॥
३ धर्मान्तरं—पिण्डाकारम् ॥
४ परं—कुण्डलाकारम् ॥
५ तत्वात्—सुवर्णत्वात्, स्वस्वरूपात् ॥
६ परिणाम इति । यदा पिण्डाकारं सुवर्णं कुण्डलाकारमुपादत्ते तदा सुवर्णत्वरूपाद्धर्मादप्रच्युतो धर्मी—कुण्डलाकारः परिणाम इत्यर्थः ॥
७ च्विप्रत्ययस्य परिणामवाचित्वे संमतिमाह—पूर्वावस्थामित्यादि ॥
८ संमूर्छितः—उभयरूपतयाऽध्यवसीयमानः ॥
९ अभिधीयते—च्विप्रत्ययेनेति शेषः ॥
१० तादृशावस्थायाः—अकृष्णावस्थायाः, भूतशब्दाद्भूते क्तप्रत्ययोऽकृष्णावस्थाया भूतत्वं प्रतिपाद्यत इत्यर्थः ॥
११ इदानीमुपलभ्यमानपुस्तकेषु एकविध एव पाठो दृश्यते । झ. पुस्तके टिप्पण्यां निर्दिष्टस्तादृशः पाठः ॥
१२ 'कथं' शब्दस्य छ. पुस्तके न पाठः ॥
१३ महद्भूतेत्यत्रेति । महद्भूता ब्राह्मणीत्यत्र । अत्र हि विकारभागो महद्रूपः स एव कर्ता ॥
१४ 'सूत्रयतीत्यत्र सूत्र' इति भ. झ. पाठः ॥

शक्तः, महद्भूतेत्ययन्तु विकृतेरिति दोषाभावः। तत्र विकृतेः कर्तृत्वे प्रकृतिरानुमानिकी। महती संपन्ना, का? इति सामर्थ्यादेवामहतीति गम्यते। प्रकृतेस्तु कर्तृत्वे सामर्थ्याद्विकारावस्था प्रतीयते। अमहान् संपन्नः, केन धर्मेण? इति महत्त्वेनेति गम्यते। अत्वं त्वं संपद्यते–त्वद्भवतीत्यत्र तु वृत्तौ वाक्ये च प्रकृतेरेव कर्तृत्वमिति तदाश्रयः पुरुषो भवति। मध्यमे तु क्रियमाणे युष्मदर्थस्य प्रकृतित्वं प्रतीयेत–त्वमन्यो भवसि। सर्वत्र चात्र शब्दशक्तिः प्रयोगानुसारिणी प्रमाणम्। एष तु न्यायो महद्भूत इत्यत्र परिहारान्तरसंभवात् महद्भूतेत्यत्र च पुंवद्भाववदात्वप्रसङ्गाद्भाष्यकृता नोक्तः॥

( उद्द्योतः ) तमेवार्थं वार्तिके वाक्यशेषपूरणेन स्पष्टयति—( भाष्ये ) आत्वमपीत्यादिना॥

भाष्योक्तप्रकारादन्यप्रकारेण सर्वेष्टलक्ष्यसिद्धिं परोक्तामनूद्य दूषयति—**तदत्र क्वचिदिति**॥ 'असङ्घः सङ्घः संपद्यते–सङ्घीभवन्ति ब्राह्मणाः' इति वाक्यवृत्त्योर्वैषम्यमुपपादयति—**सङ्घीभवन्तीति**। 'व्याकरणं सूत्रयति' इत्यस्य व्याकरणं सूत्ररूपेण करोतीत्यर्थः। **सूत्रविशिष्टस्य करोतेरिति**—प्रकृत्याद्युपादानेन व्युत्पत्तिमात्रं क्रियते। तत्त्वतस्तु विशिष्टक्रियावचनः सूत्रयतिः, तस्य व्याकरणं कर्मेति भावः॥ **भिन्नक्रियाविषयमिति**। केवलविशिष्टभेदेन भिन्नत्वं क्रिययोरित्यर्थः॥ नन्वेकस्यैव कर्तृत्वे परस्य क्रियान्वयः कथमत आह—**तत्र विकृतेरिति**। कर्तृत्वं तु द्वयोरपि। किन्तु कस्यचित्प्राधान्यं कस्यचिद्गुणत्वमित्येतावानेव विशेषः, 'सव्यापारतरः कश्चित्कचिद्धर्मः प्रतीयते' इत्युक्तेः॥ उक्तस्य विषयविभागस्य निदानमाह—**सर्वत्र चेति**॥ तदनाश्रयणे बीजमाह—**एष तु न्याय इति**॥ **महद्भूतेत्यत्र चेति**। न ह्येकस्मिन्प्रयोगे सामानाधिकरण्यं वैयधिकरण्यं चाश्रयितुमुचितमिति भावः॥

( आत्वबाधकं श्लोकभाष्यम् )

**यस्तु महतः प्रतिपदं**
**समास उक्तस्तदाश्रयं ह्यात्वम्।**
**कर्तव्यं मन्यन्ते**
**न लक्षणेन लक्षणोक्तश्चायम्॥ ३॥**

( भाष्यम् ) **एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं यः समासो विहितस्तस्य ग्रहणम्, लक्षणोक्तश्चायम्।**

(प्रदीपः) तद्दर्शयति—**यस्तु महत इति**। 'सन्महत्–' इति प्रतिपदोक्तसमासस्येह ग्रहणम्। महद्भूत इत्यत्र तु 'कुगतिप्रादयः' इति लाक्षणिकः समास इत्यात्वाभावः॥

( उद्द्योतः ) **तद्दर्शयतीति**। परिहारान्तरं दर्शयतीत्यर्थः॥

( प्रत्याक्षेपभाष्यम् )

**इहापि तर्हि न प्राप्नोति—महान् बाहुरस्य–महाबाहुरिति॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**शेषवचनात्तु योऽसौ**
**प्रत्यारम्भात्कृतो बहुव्रीहिः।**
**तस्मात्सिद्ध्यति तस्मिन्**

( भाष्यम् ) **यस्मात् 'शेषो बहुव्रीहिः' (२।२।३) इति सिद्धे 'अनेकमन्यपदार्थे' (२४) इत्याह, तेन प्रतिपदोक्तं तत्र भवति॥**

( प्रदीपः ) **शेषवचनादिति**। शेषग्रहणमन्यपदार्थग्रहणं वा कर्तव्यम्, अन्यतरेणेष्टस्य लाभात्। उभयोपादानं तु पुनर्विधानार्थम्। पुनर्विधानाच्च प्रतिपदोक्तवद्बहुव्रीहिर्भवतीत्यर्थः संपद्यते॥

( उद्द्योतः ) **शेषग्रहणमिति**। ननु शेषग्रहणं प्रथमान्तानां समासलाभार्थं 'शेषाद्विभाषा' इत्यत्र शेषाधिकारस्यादित्यर्थलाभार्थं च। अन्यपदार्थग्रहणं च 'नद्यां ग्राहाः सन्ति' इत्यत्र 'मा स्नाहि' इति वाक्यार्थे मा भूदित्यर्थमिति चेत्, न। 'पञ्च भुक्तवन्तोऽस्य' इति बहुव्रीहेरिवानभिधानेनास्यापि वारणसंभवात्, वार्तिपदार्थप्रधानप्रथमान्तानां शेषग्रहणेनैव वारणसंभवाच्च। संबन्धिपर्यन्तमेकार्थीभावोऽपि लोकत एव सिद्ध इति अन्यपदार्थग्रहणं व्यर्थं सत् पुनर्विधानार्थमित्यर्थः। अत एव भाष्ये 'शेषो बहुव्रीहिरिति सिद्धे' इत्युक्तम्। एवञ्च 'अन्यतरेण' इति चिन्त्यम्॥ **प्रतिपदोक्तवदिति**। यथा प्रतिपदोक्ते झटिति प्रतिपत्तिः पुनर्विधानेऽपि तद्वदिति बहुव्रीहावप्यात्वसिद्धिरिति भावः। वस्तुतोऽनभिधानमाश्रित्य प्रतिपदोक्तत्वोपपादनं न युक्तम्। **किञ्चैवमपि** महच्छब्दोच्चारणेन विहितत्वरूपं प्रतिपदोक्तत्वं दुर्लभमिति अनित्यत्वादत्र परिभाषाऽप्रवृत्तिरित्येव युक्तम्। इत एवास्वरसादग्रे 'प्रधानतो वा यतः' इत्युक्तमिति बोध्यम्॥

( प्रकारान्तरेण समाधानश्लोकभाष्यम् )

**प्रधानतो वा यतो वृत्तिः॥ ४॥**

(भाष्यम्) **अथवा गौणमुख्ययोर्मुख्ये संप्रत्ययः। तद्यथा–गौरनूबन्ध्योऽजोऽग्नीषोमीय इति न वाहीकोऽनुबध्यते?**

**कथं तर्हि वाहीके वृद्ध्यात्वे भवतः—गौस्तिष्ठति, गामानयेति।**

**अर्थाश्रय एतदेवं भवति, यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्ध्यात्वे॥**

( प्रदीपः ) **प्रधानतो वेति**। यस्मात् प्रधानस्य वृत्ति-

१ 'भवसीति' इति च. झ. पाठः॥
२ 'ग्रहणं कर्तव्यं मन्यन्ते, न लक्षणेन' इति च. झ. पुस्तकयोरधिकः पाठः॥
३ 'प्रतिपदं तत्र' इति च. पाठः। 'प्रतिपदं भवति' इति छ. पाठः॥
४ अनभिधानमाश्रित्येति। 'पञ्चभुक्तवन्तोऽस्य' इत्यादीनामनभिधानमाश्रित्य अन्यपदार्थग्रहणं व्यर्थं सत्प्रतिपदोक्तत्वं प्रतिपादयतीत्यादिकथनं न युक्तमित्यर्थः॥
५ 'मुख्ये कार्यसंप्रत्ययः' इति च. छ. झ. पाठः॥
६ 'गौरनुबन्ध्यो' इति च. झ. ट. पाठः॥

रस्ति तस्मात् गौणस्यात्वं न भवतीत्यर्थः । गुणादागतो गौणः । मुखमिव मुख्यः, प्रधानमित्यर्थः । 'शाखादिभ्यो यत्' इति यत्प्रत्ययः । लोके हि शब्द उच्चारिते गौणमुख्यार्थसंभवे मुख्य एवार्थे कार्याणि क्रियन्ते । व्याकरणेऽपि 'स्वं रूपम्-' इत्यत्र रूपग्रहणेन ज्ञापितं–रूपवत् अर्थोऽप्यङ्गीक्रियत इति । तत्रापि मुख्यस्यैवार्थस्य कार्येष्वङ्गीकरणम् ॥ कथं पुनरत्र गौणता महदर्थस्य ? उच्यते—यस्यानुपचरितं महत्त्वं स मुख्योऽर्थः । च्व्यन्तेन तु पूर्वावस्थ उपचरितोत्तरावस्थोऽर्थात्माऽभिधीयत इति महत्वमहत्युपचरितमिति गौणार्थाभिधायी महच्छब्दः, यथा गौर्वाहीक इति वाहीके गोशब्दः । पुंवद्भावे तु शब्दविशेषस्यानाश्रयणात् गौणमुख्यन्यायानवतारान्महद्भूतेति पुंवद्भावः सिद्धः । कथं तर्हि 'ओत्' इत्यत्र शब्दविशेषानाश्रयेऽपि गोऽभधदित्यत्र गौणमुख्यन्यायाश्रयेण प्रगृह्यसंज्ञा परिहृता ? एवं तर्हि महद्भूतेत्यत्र स्त्रीत्वमर्थस्य मुख्यमेव, तदाश्रयश्च पुंवद्भावः । गोमतीभूतेत्यत्र तु प्रकृतेः कर्तृत्वाश्रयणाद्वैयधिकरण्यात् पुंवद्भावाभावः । गोऽभवदित्यत्र त्वोदन्तस्य निपातस्य गौणार्थत्वात्प्रगृह्यसंज्ञाऽभावः ॥

**शब्दाश्रये च वृद्ध्यात्वे इति ।** प्रातिपदिकस्य सर्वनामस्थाने अम्शसोश्च वृद्ध्यात्वविधानात्प्रातिपदिकस्य चान्वयव्यतिरेकाभ्यां कल्पिताभ्यामर्थवत्ताकल्पनात्तस्यामवस्थायां नास्ति गौणार्थत्वम् । पदान्तरसम्बन्धे हि पदस्य गौणार्थत्वाभिव्यक्तिः ॥ **अथवा** शब्दो न कदाचित् स्वार्थपरित्यागेनार्थान्तरमभिदधाति, अनित्यत्वप्रसङ्गात् शब्दार्थसम्बन्धस्य । गोत्वं तु क्वचिदारोपितं गोशब्दप्रयोजकम्—गौर्वाहीक इति । क्वचित्तु मुख्यम् । यथा रज्जुं सर्पत्वेनाध्यवसाय सर्पशब्दः प्रयुज्यमानो न स्वार्थं जहाति । अर्थस्तु विपर्यस्तः । तत्र पदस्य पदान्तरसंबन्धेऽर्थविपर्याससंभवात् पदकार्येष्वेव गौणमुख्यन्यायो न प्रातिपदिककार्येष्वित्यविपर्यस्त एव चार्थे वृद्ध्यात्वे अनुभूय गोशब्दो वाहीके समारोपितगोत्वे प्रवर्तते । अग्निसोमौ माणवकावित्यत्र 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वं न भवति, गौणत्वादग्निसोमशब्दार्थयोः । प्रसिद्ध्यप्रसिद्धिकृतत्वान्मुख्यगौणव्यवस्थायाः ॥

**(उद्योतः)** 'प्रधानतः' इति आद्यादित्वात्तसिरित्याह—**यस्याप्रधानस्येति ।** यतः प्रधानतो वृत्तिरतस्तस्मिन्नेवास्त्वशास्त्रप्रवृत्तिरिति भाष्याक्षरार्थः ॥ **गुणादिति** । धर्मत इत्यर्थः । 'शाखादिभ्य इति यत्' इति पाठः । 'शाखादिभ्यो यः' इति पाठस्तु उगवादिसूत्रस्थभाष्यविरुद्धः ॥ नन्विह शास्त्रे 'स्वं रूपं-' इति वचनाच्छब्दस्वरूपस्यैव ग्रहणादर्थो न गृह्यत इति कुतो गौणमुख्यन्यायोऽत आह—**व्याकरणेऽपीति** ॥ **च्व्यन्तेन त्विति** । प्रकृतिविकृत्योरभेदविवक्षायां हि च्विः । तत्र महत्त्वामहत्त्वयोर्विरोधात् कस्यचिन्मुख्यत्वमपरस्योपचरितत्वमास्थेयमिति लोकानुभवानुरोधेन वस्तुसत्पूर्वावस्थोपचर्यत इति महदर्थस्य गौणतेत्यर्थः ॥

**पूर्वावस्थ इति** । विद्यमानपूर्वावस्थ इत्यर्थः ॥ नन्वनया रीत्या पुंवत्त्वमपि न स्यादत आह—**पुंवद्भावे त्विति । शब्दविशेषस्य**—अर्थोपस्थापकशब्दविशेषस्य । एवञ्च पदान्तरसम्बन्धनिमित्तकोपात्तविशिष्टरूपककार्ये एव गौणमुख्यन्यायः, नैवं पुंवद्भाव इति भावः । यत्तु 'स्त्रियाः' इत्यर्थोपस्थापकम् । स त्वर्थोऽत्रापि मुख्य एवेति तात्पर्यम् । 'अत्वं त्वं संपद्यते त्वद्भवति' इत्यादौ युष्मदाद्यादेशार्थं—पदान्तरेति ॥ **कथं तर्हीति** । इयं शङ्कोपलक्षणम् । पुंवत्त्वेऽपि स्त्रीत्वरूपार्थोपस्थित्या गौणमुख्यन्यायविषयोऽस्तीत्यपि शङ्का बोध्या ॥ तत्रोपलक्षितशङ्कोत्तरमाह—**एवं तर्हीति** ॥ **स्त्रीत्वमर्थस्य मुख्यमेवेति ।** तस्यैवार्थस्योपस्थितेरिति भावः ॥ नन्वेवं 'गोमतीभूता' इत्यत्रापि पुंवत्त्वं स्यादित्यवसरप्राप्तां शङ्कां निरस्यति—**गोमतीभूतेत्यत्रेति ।** वस्तुतो गोमतीभूतेत्यत्र गोमतीनदीभिन्ना गोमतीनदीभूता–इत्यर्थेनाभाषितपुंस्कत्वान्न पुंवत्त्वमिति बोध्यम् । 'गोमतीभूतेत्यत्र तु' इत्यादिर्ग्रन्थः प्रौढ्या, च्व्यन्ते सर्वत्र मूर्च्छितावस्थायाः प्रकृतेरेव कर्तृत्वस्योक्तत्वात् । **किञ्चैवं** महद्भूतेत्यत्रापि पुंवत्त्वानापत्तिः ॥ अथ 'कथन्तर्हि' इत्यादिना कण्ठतः कृतशङ्कोत्तरमाह—**निपातस्य गौणार्थत्वादिति** । निपातपदेन चादित्वेनैव चादीनामुपस्थितौ ये सार्थकास्तेषां तत्तदर्थविशिष्टानामेवोपस्थितेरिति भावः ॥

ननु 'गोतो णित्' इत्यर्थवतो रूपस्य ग्रहणाच्छब्दमात्राश्रयत्वं वृद्धेरसिद्धमत आह—**प्रातिपदिकस्येति** ॥ **तस्यामवस्थायां**—प्रातिपदिकमात्रज्ञानावस्थायाम् । एवञ्च तत्संस्कारवेलायां तन्मात्रपर्यालोचनया गौणार्थस्यानुन्मेषान्नास्ति न्यायस्य विषय इत्यर्थः ॥ अर्थप्रकरणशब्दान्तरसंबन्धादिनिरपेक्षस्वरूपमात्रेण यमर्थं शब्दः प्रत्याययति स मुख्यः, यस्तु तदपेक्षः सोऽमुख्य इति व्यवस्थेति भावः । तदाह—**पदान्तरेति** ॥ अमुं पक्षं दूषयन् गौणत्वं प्रकारान्तरेणाह—**अथवेति** । पूर्वं तु मुख्यार्थपरित्यागेनान्यार्थपरिग्रहः शब्दस्योक्तः, इदानीं तु मुख्यार्थस्यैवारोपेणान्यत्र प्रयोग इत्युच्यत इति भावः ॥ **अनित्यत्वप्रसङ्गादिति** । शब्दार्थसंबन्धस्य नित्यत्वं हि यत्रार्थे यस्य संबन्धग्रहस्तस्य कदाचिदपि तच्छब्दोच्चारणे बोध-

---

१ 'शाखादिभ्यो य इति यप्रत्ययः' इति च. झ. ट. पाठः ॥

२ 'वस्तुसत्पूर्वावस्थे वस्तुनि उत्तरावस्थोपचर्यते' इति ख. झ. पाठः ॥

३ यत्तु स्त्रिया इति । पुंवद्भावविधायके सूत्रे स्त्रिया इत्यर्थोपस्थापकमिति शङ्काशयः । स्त्रीत्वरूपार्थस्यात्र मुख्यत्वमेव न गौणत्वमित्युत्तरम् ॥

४ पदान्तरेतीति । प्रदीपे गौणमुख्यन्यायप्रसरणस्थललक्षणे–पदान्तरसंबन्धनिमित्तकोपात्तविशिष्टरूपककार्ये रूपे पदान्तरपदनिवेशस्त्वद्भवतीत्यादौ युष्मदाद्यादेशार्थ इत्यर्थः ॥

५ 'पुंवत्त्वं स्यादत आह' इत्येव घ. झ. पाठः ॥

६ ननु गोमतीशब्दस्याभाषितपुंस्कत्वाद्गोमतीभूतेत्यत्र न पुंवद्भाव इति समाधाने जागरूके कथं कैयटोक्तं समाधानमत आह—गोमतीभूतेत्यत्र तु इत्यादि ग्रन्थ इति ॥

७ 'ग्रन्थः प्रौढ्योच्यते । सर्वत्र' इति झ. पाठः ॥

८ महद्भूतेत्यत्रापीति । यथा गोमतीभूतेत्यत्र प्रकृतेः कर्तृत्वान्न पुंवद्भावस्तथा च्विप्रत्यये सर्वत्र मूर्च्छितावस्थायाः प्रकृतेः कर्तृत्वेनात्रापि पुंवद्भावानापत्तिरिति शंकाशयः ॥

९ निपातपदेनेति । निपातपदस्य निपातपदवत्त्वोपलक्षितचाद्यन्यतमत्वावच्छिन्ने शक्तेस्तत्प्रयोज्यमुख्यविशेष्यतायाश्चादित्वरूपानुपूर्व्या साक्षादवच्छिन्नस्यैव मुख्यत्वम् । अस्य तु तथोपस्थितेरभावान्न मुख्यत्वमिति भावः ॥

१० 'इत्यत्रार्थवतो' इति ख. घ. पाठः ॥

विषयत्वाभावाभावः । तदुक्तं—**स्वार्थपरित्यागेनेति** । स्वार्थस्य बोधविषयत्वत्यागेनेत्यर्थः । तज्जन्यबोधविषयत्वमेव हि शब्दस्यार्थेन सम्बन्धः । तादात्म्यादिरूपोऽपि बोधविषयताबलकल्प्यः, तदभावे हीयेत । अनेकार्थानां तु तदन्यतमस्य बोधविषयत्वाभावाभाव एव तत्संबन्धनित्यत्वमित्याशयः ॥ **क्वचिदिति** । यथा 'गां दोग्धि' इत्यादौ ॥ अन्यत्रान्यशब्दः स्वार्थापरित्यागेन वर्तत इत्यत्र दृष्टान्तमाह—**यथा रज्जुमिति** । तत्र क्वचिदनाहार्यारोपः, क्वचिदाहार्यारोप इत्यन्यत् ॥ **अर्थस्त्विति** । विशेष्यभूतोऽर्थस्तु इत्यर्थः ॥ अप्रसिद्धार्थकत्वमपि गौणत्वं दर्शयन्नाह—**अग्निसोमाविति** । देवताविशेषवाचिनोर्यदा यदृच्छयाऽन्यत्र सङ्केतस्तदेदमुदाहरणम् । यदा त्वयं माणवकः—अग्निः, अयं सोम इति केनचित्प्रयुक्ते परोऽग्निसोमौ भोजयेति द्वन्द्वं प्रयुङ्क्ते तदा गौणलाक्षणिकत्वमपि गौणत्वमत्रेति बोध्यम् । प्रसिद्धदेवताद्वन्द्ववाच्याग्नीषोमशब्दस्य तत्सदृशपरत्वे 'अग्नीषोमौ माणवकौ' इत्यत्र ईत्वषत्वे भवत एव । तत्प्रवृत्तिवेलायां गौणार्थोपस्थापकत्वाभावात् ॥

( ६४४९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं[1] चासमानाधिकरणार्थम् ॥ * ॥

**( भाष्यम् ) महदात्वे घासकरविशिष्टेषूपसंख्यानं कर्तव्यम्, पुंवद्भावश्चासमानाधिकरणार्थो द्रष्टव्यः । महत्या घासः—महाघासः । महत्याः करः—महाकरः । महत्या विशिष्टः—महाविशिष्टः ॥**

( प्रदीपः ) **महदात्व इति** । केचिदन्वाचये 'च'शब्दं मन्यमाना महतो घासः—महाघास इत्यत्राप्यात्वं वर्णयन्ति । यथा तु भाष्यं तथा समुच्चये 'च'शब्द इति पुंवद्भावसन्नियोगेनात्वं विधीयमानमन्यत्र न भवतीति लक्ष्यते ॥

( उद्द्योतः ) **यथा तु भाष्यमिति** । उपात्तशब्दोदाहरणं[1] विहाय लिङ्गविशिष्टपरिभाषागम्योदाहरणदानादिति भावः ॥

( ६४५० उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अष्टनः कपाले हविषि ॥ * ॥

**( भाष्यम् ) अष्टनः कपाले हविषि उपसंख्यानं कर्तव्यम् । अष्टाकपालः ।**

**हविषीति किमर्थम् ?**

**अष्टकपालं ब्राह्मणस्य ॥**

( प्रदीपः ) **अष्टाकपाल इति** । अष्टसु कपालेषु संस्कृत इति तद्धितार्थे समासः । 'संस्कृतं भक्षाः' इत्यण्, तस्य 'द्विगोर्लुक्' इति लुक् ॥

**अष्टकपालमिति** । समाहारे द्विगुः, 'पात्रादिभ्यः प्रतिषेधः' इति स्त्रीत्वाभावः ॥

( ६४५१ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ गवि च युक्ते ॥ * ॥

**( भाष्यम् ) गवि च युक्त उपसंख्यानं कर्तव्यम् । अष्टागवेन शकटेन ।**

**युक्त इति किमर्थम् ?**

**अष्टगवं ब्राह्मणस्य ॥**

( प्रदीपः ) **अष्टागवेनेति** । अष्टौ गावो युक्ता अस्मिन्निति त्रिपदे बहुव्रीहौ द्वयोर्द्विगुः, 'गोरतद्धितलुकि' इति टच् समासान्तः । तत्र दीर्घत्वेन युक्तार्थसंप्रत्ययात् गतार्थत्वाद्युक्तशब्दस्य निवृत्तिः । अथवा समाहारे द्विगुः, तत्र साहचर्यादभेदोपचाराद्दष्टगवेन युक्तं शकटं—अष्टागवमुच्यते ॥

( उद्द्योतः ) कथं तर्हि युक्तशब्दाभावे तदर्थप्रतीतिरत आह—**अष्टौ गाव इति** ॥ ननु त्रिपदे बहुव्रीहौ दीर्घे सत्यपि युक्तशब्दनिवृत्तिर्दुर्लभा, उपायाभावात्—इत्यत आह—**अथवेति** । अभेदोपचाराभावे तु प्रत्युदाहरणं बोध्यम् ॥

( श्लोकसंग्रहः )

अन्यप्रकृतिरमहान्
भूतप्रकृतौ महान् महत्येव ॥
तस्मादात्वं न स्या-
त्पुंवत्तु कथं भवेत्तत्र ॥ १ ॥
अमहति महान् हि वृत्त-
स्तद्वाची चात्र भूतशब्दोऽयम् ॥
तस्मात्सिद्ध्यति पुंव-
न्निवर्त्यमात्वं तु मन्यन्ते ॥ २ ॥
यस्तु महतः प्रतिपदं
समास उक्तस्तदाश्रयं ह्यात्वम् ॥
कर्तव्यं मन्यन्ते
न लक्षणेन लक्षणोक्तश्चायम् ॥ ३ ॥
शेषवचनात्तु योऽसौ
प्रत्यारम्भात्कृतो बहुव्रीहिः ॥
तस्मात् सिध्यति तस्मिन्
प्रधानतो वा यतो वृत्तिः ॥ ४ ॥

[1] 'च नानासमानाधि' इति च. छ. पाठः ॥

[1] भाष्यस्थचशब्दस्य समुच्चयार्थत्वे हेतुमाह—उपात्तेति ॥

( १२२४ विधिसूत्रम् ॥ ६ । ३ । ३ आ. २७ )

## २९०६ त्र्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ६ । ३ । ४७ ॥

( मर्यादाकरणभाष्यम् )

प्राक्शतादिति वक्तव्यम् ।

इह मा भूत्—द्विशतम्[1], अष्टशतम्, द्विसहस्रम्, अष्टसहस्रम् ॥

( १२२५ विकल्पविधिसूत्रम् ॥ ६ । ३ । ३ आ. २८ )

## २९०८ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ६ । ३ । ४९ ॥

( पदकृत्यभाष्यम् )

सर्वेषां ग्रहणं किमर्थम्?

चत्वारिंशत्प्रभृतौ[2] सर्वेषां ग्रहणं सर्वेषां विभाषा यथा स्यात्, द्व्यष्टनः-त्रेश्च ॥

नैतदस्ति प्रयोजनम् । प्रकृतं द्व्यष्टनोर्ग्रहणमनुवर्तिष्यते ।

यदि तदनुवर्तते, त्रेस्त्रयस्-द्व्यष्टनोश्चेति[3] द्व्यष्टनोरपि त्रयश्चादेशः[4] प्राप्नोति ।

नैष दोषः । मण्डूकगतयोऽधिकाराः ।

तद्यथा—मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ।

( प्रदीपः ) मण्डूकगतय इति । द्व्यष्टशब्दार्थं त्रयआदेशो न शक्नोति वक्तुमिति त्रयआदेशेन संबन्धाभावादिहैव द्व्यष्टनोरभिसंबन्धः ॥

(उद्योतः) नन्वधिकारेषु नदीप्रवाहन्यायस्य युक्तत्वात्कथं मण्डूकगतिरित्याशङ्क्यायोग्यत्वादत्रासम्बन्ध इत्याह—द्व्यष्टशब्दार्थमिति ॥

( प्रकारान्तरबोधकभाष्यम् )

अथवा एकयोगः करिष्यते—द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः, त्रेस्त्रयः । ततः—विभाषा चत्वारिंशत्प्रभृतौ सर्वेषामिति । नैकयोगेऽनुवृत्तिर्भवति ।

अथवा उभयं निवृत्तं तदपेक्षिष्यामहे ॥

( प्रदीपः ) अथवेति । एका भवतिक्रिया आत्वत्रयआदेशकर्तृकोपादीयते । ततो यस्मिन् काले द्व्यष्टनोरात्वं तस्मिन्नेव त्रिशब्दस्य त्रयआदेश[5] इत्यर्थः ॥

अथवोभयमिति । समुदायोऽपेक्ष्यते, स तु एक एव—इति 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'इत्यपि नास्ति ॥

( उद्योतः ) ननु विधेयभेदेन वाक्यभेदस्य युक्तत्वात्कथमेकयोगत्वमत आह—एका भवतिक्रियेति । प्रतिपत्तिवाक्यमेकम्, प्रक्रियावाक्यं तु भिद्यत इति भावः ॥ ननु लौकिकेऽपेक्षालक्षणेऽधिकारेऽपि अनन्तरस्यैवापेक्षा स्यान्न तु व्यवहितस्येत्यत आह—समुदायविति[7] ॥

( १२२६ विधिसूत्रम् ॥ ६ । ३ । ३ आ. २९ )

## २९०९ हृदयस्य हृल्लेखयदण्लासेषु ॥ ६ । ३ । ५० ॥

( हृदादेशाधिकरणम् )

( अण्ग्रहणाक्षेपभाष्यम् )

यदण्ग्रहणमिदं प्रत्ययग्रहणम्, तत्र प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति यदणन्ते प्राप्नोति ॥

( उद्योतः ) भाष्ये—यदणन्ते प्राप्नोतीति । ननु 'प्रत्ययग्रहणे चापञ्चम्याः' इति निषेधात्कथमत्र तदन्तविधिः, यदणोः[8] परत इत्युक्ते कस्मात्—इति आकाङ्क्षासत्त्वेन हृदयाद्यदणोः परतस्तस्यादेश इत्यवगमात् । अत एव 'सुपि च'इत्यादौ न तदन्तविधिरिति चेत्, न । 'उत्तरपदे' इत्यनेनान्वयाय तमेव विशेष्यमाश्रित्य सामर्थ्येन तदन्तविधिरित्यदोषात् । सिद्धान्ते[9] त्वेतद्विषये 'उत्तरपदे' इत्यसंबन्धो ज्ञापकादेवेति बोध्यम् ॥

( ६४५२ समाधानवार्तिकम् ॥ १ ॥ )[6]

### ॥ * ॥ यदण्ग्रहणे रूपग्रहणं लेखग्रहणात् ॥ * ॥

(भाष्यम्) यदण्ग्रहणे रूपग्रहणं द्रष्टव्यम् ।

कुतः?

लेखग्रहणात् । यदयं लेखग्रहणं करोति तत् ज्ञापयत्याचार्यः-न यदणन्ते भवतीति ॥

( प्रदीपः ) रूपग्रहणमिति । स्वरूपस्य ग्रहणम्, न तु तदन्तस्येत्यर्थः ॥

लेखग्रहणादिति । एतद्वचनान्यथाऽनुपपत्त्या च लेखशब्दोऽणन्तो गृह्यते, न तु घञन्त इति घञि हृदयलेख इत्येव भवति ॥

(उद्योतः) रूपग्रहणम्-इत्यस्य 'रूपस्य ग्रहणम्, नार्थस्य' इति नार्थं इत्याह—स्वरूपस्येति ॥

---

१ 'द्विशतम्, द्विसहस्रम्, अष्टशतम्, अष्टसहस्रम्' इति छ. पाठः ॥
२ 'प्रभृतौ सर्वेषां विभाषा' इति छ. पाठः ॥
३ 'द्यष्टनोश्च त्रेश्च' इति झ. पाठः ॥
४ 'प्रकृतं द्यष्टन्ग्रहणम्' इति छ. पाठः ॥
५ 'त्रय आदेशः' इति छ. झ. च. पाठः ॥
६ झ. पुस्तके वार्तिकमेतत् ॥
७ ज. ख. पुस्तकयोः प्रतीकमेतादृशम्, अन्यत्र तु 'समुदाय इति' इत्येवं दृश्यते । मूलग्रन्थस्थ-समुदायो-इत्यस्यापेक्षणात् 'समुदायविति' इति युक्तम् ॥
८ पञ्चम्यन्तात्परत्वं प्रत्ययग्रहणस्योपपादयति—यदणोरिति ॥
९ सिद्धान्ते त्विति । सिद्धान्ते तु 'गिलेगिलस्य' इत्यत्र तदन्तविधिना 'गिलान्ते उत्तरपदे' इत्यर्थे तिमिङ्गिलगिल इत्यस्याप्यनेनैव सिद्धेः 'गिलगिले च' इत्यस्य वैयर्थ्येन 'उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणम्' इत्यपि ज्ञाप्यते, तेन उत्तरपदमिति विशेष्यं नेति भावः ॥

ननु घञन्ते लेखग्रहणस्य चारितार्थ्यात्कथं ज्ञापकत्वमत आह—एतद्वचनेति । एतज्ज्ञापकत्ववचनेत्यर्थः ॥

( सामान्यापेक्षज्ञापकभाष्यम् )

**अपर आह—अत्यल्पमिदं ज्ञाप्यते, सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे रूपग्रहणं द्रष्टव्यम् ।**

**कुतः ?**

**लेखग्रहणादेव ।**

**किं प्रयोजनम् ?**

**कुमारीगौरितरा[1] । घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥**

( प्रदीपः ) **सर्वत्रैवेति** । प्रकरणापेक्षं ज्ञापकमाश्रीयते न त्वेतद्योगापेक्षमेवेत्यर्थः ॥

**कुमारीगौरितरेति** । उदाहरणदिगियम्, समासस्तूदाहार्यः–कुमारगौरितरेति । अत्र हि घान्त उत्तरपदे पुंवद्भावं बाधित्वा ह्रस्वत्वं[2] स्यात्, संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधेः प्रतिषेध[3] इति । उत्तरपदाधिकारे तूत्तरपदस्य घेन विशेषणात्स्यादेव तदन्तविधिः । संज्ञाविधौ तदन्तविधिनिषेधस्य तु फलं दृषत्तीर्ण इत्यत्र धातुतकारस्य नत्वनिवारणम् । विशेष्यानिर्देशान्नत्वे निष्ठया तदन्तविध्यभावात् क्तक्तवतुतकारस्यैव नत्वं प्रवर्तते ॥

(उद्द्योतः) **उदाहरणदिगिति** । भाष्ये—कुमारी गौरितरा–इति स्थिते इत्यर्थ इत्यन्ये । वस्तुतो वयोवाचकानां 'जातेरस्त्रीविषया–'इति सूत्रे जातिलक्षणद्वयप्रणयनेन वैकल्पिकजातिकार्यबोधनात् 'जातेश्च'इति निषेधपक्षे भाष्ये प्रयोगः समास एवेति न दोषः ॥ **बाधित्वेति** । परत्वादिति भावः ॥ ननु संज्ञाश्रये विधौ तदन्तग्रहणाभावस्य 'सुप्तिङन्तं'इत्यन्तग्रहणेन ज्ञापितत्वात्कथमत्र तत्प्रसङ्गोऽत आह—**संज्ञाविधाविति** । संज्ञाया विधेयत्वे स निषेधो न तु तदाश्रयेऽन्यत्रेत्यर्थः ॥ नन्वेवं संज्ञाविधौ तदन्तविधिप्रतिषेधस्य किं फलमत आह—**संज्ञेति** । अन्यथा 'क्तक्तवतू' इत्यनेन तदन्तस्यैव संज्ञायामत्र दोषः ॥ दात्परत्वसंपत्तये–**दृषदिति** । ननु नत्वविधायके निष्ठान्तस्य–इत्यर्थात्स्यादेव दोषोऽत आह—**विशेष्येति** ॥

( ज्ञापकाक्षेपभाष्यम् )

**यद्येतत् ज्ञाप्यते, 'खित्यनव्ययस्य' ( ६।३।६६ ) इति खित्येवानन्तरस्यानव्ययस्य ह्रस्वत्वं प्राप्नोति ॥**

( समाधानभाष्यम् )

**खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा खिदन्ते उत्तरपदे भविष्यति ।**

**ननु चायमस्ति—स्तनन्धय इति ।**

**अत्रापि शपा व्यवधानम् ।**

**एकादेशे कृते नास्ति व्यवधानम् ।**

**एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ।**

**अथवैतज्ज्ञापयत्याचार्यः—खित्यनन्तरस्य न भवतीति यदयमनव्ययस्येति प्रतिषेधं शास्ति । न हि खित्यनन्तरमव्ययमस्ति ॥**

( प्रदीपः ) **ननु चायमिति** । खशैव कर्तुरभिधानाच्छपोऽप्रवृत्तिं मन्यते ॥

**अत्रापीति** । यथा पचतीत्यत्र लेनाभिहिते कर्तरि शप् भवति, एवमत्रापीति भावः ॥

**एकादेशे कृत इति** । अयादेशात् परत्वादेकादेश इति भावः ॥

**स्थानिवद्भावादिति** । श्रुतेर्लिङ्गं दुर्बलमिति स्थानिवद्भावो न बाध्यते ॥

**अथवेति** । न ह्यव्ययात्परः खित्प्रत्ययः संभवति ॥

( उद्द्योतः ) **खशैवेति** । 'कर्तरि'इति विकरणस्यैवार्थनिर्देश इति तदभिमानः[4] ॥

**यथेति** । सार्वधातुकविशेषणं कर्तृग्रहणमिति भावः ॥

नन्वयादेशोत्तरमेकादेशे ह्रस्वभाविनोऽभावान्न दोषोऽत आह—**परत्वादिति** ॥

ननु ज्ञापिततदन्तविध्यभावसामर्थ्यात्स्थानिवत्त्वं बाध्यतामत आह—**श्रुतेर्लिङ्गमिति** । स्थानिवत्त्वं श्रौतम्, तदन्तविध्यभावस्तु लैङ्ग इति भावः ॥

---

( १२२७ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३० )

## २९११ पादस्य पदाज्यातिगोपहतेषु ॥ ६ । ३ । ५२ ॥

( पदादेशाधिकरणम् )

( ६४५३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पदादेशोऽन्तोदात्तनिपातनं[5] पदोपहतार्थम् ॥ * ॥

( भाष्यम् ) **पदादेशोऽन्तोदात्तनिपातनं कर्तव्यम् ।**

**किं प्रयोजनम् ?**

**पदोपहतार्थम् । पादेनोपहतं–पदोपहतम् । 'तृतीया कर्मणि' (६।२।४८) इति पूर्वपदप्रकृतिस्वरत्वे पूर्वपदान्तोदात्त्वं यथा स्यात् ॥**

( प्रदीपः ) पादशब्दो वृषादित्वात् 'स्वाङ्गशिटामदन्तानाम्'इति वाऽऽद्युदात्तः, तदादेश आन्तर्यादाद्युदात्त एव प्राप्नोतीत्याह–**पदादेश इति** ॥

---

[1] कुमारीगौरितरेति । कैयटमते 'कुमारी गौरितरा' इति पृथक् पाठः । शेखरकृन्मते तु 'कुमारीगौरितरा' इति सामासिक एव पाठः ॥

[2] 'ह्रस्वः स्यात्' इति क. झ. पाठः ॥

[3] 'प्रतिषेध उत्तरपदाधिकारे' इति झ. पाठः ॥

[4] तदभिमान इति । स्तनन्धस्य इत्यत्र खित्यनन्तरो ह्रस्वभावी वर्तत इति प्रदर्शनपराणामेकदेशिनामिति भावः । एवं च 'कर्तरि शप्' इत्यस्य सार्वधातुके परे कर्त्रर्थे शबित्यर्थ इत्येकदेशिनामभिप्रायः । 'अत्रापि शपा व्यवधानम्' इति तु मते कर्त्रर्थे सार्वधातुके पर इत्येवार्थः ॥

[5] 'पदादेशोऽन्तोदात्तनिपातनम्' इत्येकं वार्तिकम् 'पदोपहतार्थम्' इति द्वितीयम्–इति च. छ. झ. पाठः ॥

**पदोपहतमिति** । अत्र 'तृतीया कर्मणि'इत्यनेन पूर्वपदप्रकृतिस्वरोऽन्तोदात्तत्वं भवति । तत एकादेशः 'स्वरितो वाऽनुदात्ते पदादौ'इति पक्षे स्वरितः, पक्षे तूदात्तः ॥

( **उद्योतः** ) पदादेशोऽत्रादन्तः[1] ॥ अदन्तानामिति । अबन्तानामिति[2] पाठेऽपि स एवार्थः ॥

भाष्ये—**पूर्वपदप्रकृतिस्वरत्वे इति** । परत्वादेकादेशात्पूर्वं स्वर इत्यर्थः ॥

( ६४५४ उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् ॥ * ॥

( **भाष्यम्** ) **उपदेशिवद्भावश्च वक्तव्यः** ॥

**किं प्रयोजनम्?**

**स्वरसिद्ध्यर्थम् । उपदेशावस्थायामन्तोदात्तनिपातने कृते समासस्वरेण बाधनं यथा स्यात् । पदाजिः, पदातिः ॥**

( **प्रदीपः** ) **उपदेशिवद्वचनमिति** । यथोपदेशिनः स्वरः सतिशिष्टेन स्वरेण बाध्यते तथाऽस्यापीत्यर्थः ॥

**समासस्वरेणेति** । समासाश्रयेण[3] कृत्स्वरेणेत्यर्थः ॥

( **उद्योतः** ) **कृत्स्वरेणेति** । समासान्तोदात्तत्वापवादत्वात्कृदुत्तरपदप्रकृतिस्वरस्येत्यर्थः ॥

( १२२८ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३१ )

# २९१२ पद्यत्यतदर्थे ॥ ६ । ३ । ५३ ॥

( ६४५५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥*॥ पद्भावे इके चरतावुपसंख्यानम् ॥*॥

( **भाष्यम्** ) **पद्भावे इके चरतावुपसंख्यानं कर्तव्यम् । पादेन चरति-पदिकः ॥**

( **प्रदीपः** ) **पदिक इति** । 'पर्पादिभ्यः ष्ठन्'इति ष्ठन् प्रत्ययः ॥

( १२२९ विकल्पविधिसूत्रम् ॥ ६ । ३ । ३ आ. ३२ )

# २९१५ वा घोषमिश्रशब्देषु ॥ ६ । ३ । ५६ ॥

( ६४५६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ निष्के चोपसंख्यानम् ॥ * ॥

( **भाष्यम्** ) **निष्के चोपसंख्यानं कर्तव्यम् । पन्निष्केण । पादनिष्केण ॥**

( १२३० विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३३ )

# २९१६ उदकस्योदः संज्ञायाम् ॥ ६ । ३ । ५७ ॥

( उदादेशाऽधिकरणम् )

( ६४५७ उपसंख्यानवार्तिकम्[4] ॥ १ ॥ )

## ॥ * ॥ संज्ञायामुत्तरपदस्य च ॥ * ॥

( **भाष्यम्** ) **संज्ञायामुत्तरपदस्येति वक्तव्यम् । इहापि यथा स्यात्—लोहितोदः । क्षीरोद इति ॥**

( **प्रदीपः** ) उदकशब्दसमानार्थ उदशब्दो विद्यते, तथा च 'अप्रसन्नः प्रसन्नोदम्'इत्यसंज्ञायामप्युदशब्दः प्रयुज्यते । संज्ञायां तूदकशब्दप्रयोगनिवृत्त्यर्थमुदादेशविधानमित्याहुः । एतदन्ये न मृष्यन्ति, एवमभ्युपगमे वक्ष्यमाणो विकल्पोऽनर्थकः स्यात् ॥

( **उद्योतः** ) **एतदन्य इति** । एवञ्च प्रसन्नोदमिति प्रयोगोऽसाधुरिति सूत्रबलादवसीयत इति भावः । व्यवस्थार्थं स इत्यपरे[5] ॥

( १२३१ विकल्पविधिसूत्रम् ॥ ६ । ३ । ३ आ. ३४ )

# २९१८ एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ६ । ३ । ५९ ॥

( एकहलादिपदाक्षेपभाष्यम् )

**एकहलादाविति किमर्थम्?**

**उदकस्थानम्[6] ॥**

**उच्यमानेऽप्येतस्मिन् वचनेऽत्र[7] प्राप्नोति, एतदप्येकहलादि ।**

**किं कारणम्?**

**एकैकवर्णवर्त्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । एकैकवर्णवर्त्तिनी वाक् न द्वौ युगपदुच्चारयति ।**

**तद्यथा—गौरित्युक्ते यावद्गकारे वाक् प्रवर्तते,**

---

१ अत्रादन्त इति । सूत्रे पदादेशोऽदन्त इत्यर्थः । उत्तरसूत्रे पदिति हलन्तादेशविधानात् ॥

२ अबन्तानामितीति । स्वाङ्गशिटामबन्तानामिति सूत्रपाठेऽपीत्यर्थः ॥

३ ननु समासान्तोदात्तत्वेन बाधनेऽपि अन्तोदात्त एव स्यादिति नानिष्टापत्तिरत आह—समासाश्रयेणेति ॥

४ नैतद्वार्तिकमिति अ. क. पाठः ॥

५ व्यवस्थार्थं स इति । एकहलादाविति वक्ष्यमाणो विकल्पो व्यवस्थार्थम्, तेन यदा पूरयितव्यस्योदपानमिति संज्ञा तदा पूर्वविप्रतिषेधेन 'उदकस्योदः संज्ञायाम्' इत्येव नित्यं प्रवर्तते । 'न वेति विभाषा' इति सूत्रे भाष्ये 'एक हलादौ–' इति सूत्रस्याप्राप्तविभाषात्वस्वीकारात् । एवं च एकहलादाविति सूत्रमसंज्ञायां पूर्वेणाप्राप्तमेवोदादेशं विकल्पयतीत्याशयः ॥

६ 'उदकस्थालम्' इति च. छ. पाठः ॥

७ 'एकहलादावित्युच्यमानेऽत्रापि–' इति ट. पाठः ॥

८ 'अत्रापि' इति च. छ. झ. क. पाठः ॥

९ 'न द्वौ वर्णौ युगप–' इति च. छ. झ. पाठः ॥

न तावदौकारे न विसर्जनीये। यावदौकारे, न तावद्वकारे न विसर्जनीये। यावद्विसर्जनीये, न तावद्वकारे नापि औकारे। उच्चरितप्रध्वंसित्वाच्च वर्णानाम्। उच्चरितो वर्णः प्रध्वस्त इति।

अथापरः[1] प्रयुज्यते, न वर्णो वर्णान्तरस्य[2] सहायः॥

( प्रदीपः ) एकहलादाविति किमर्थमिति। अति[3]प्रसङ्गनिवारणासामर्थ्यादनर्थकमिति भावः॥

एतदपीति। सर्[4]कारस्यैकस्यैवादित्वात्॥

एकैकवर्णवृत्तित्वादिति। यद्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थानशब्द एकहलादिर्न स्यात्। क्रमोच्चारिता अपि वर्णा यद्यवतिष्ठेरन् घटादिवत् तदा स्थानशब्दे युगपद्द्वयोरुपलम्भादादित्वं स्यात्। यतस्[5]तु नोच्चारणे नाप्युपलब्धौ वर्णानां यौगपद्यम्। तस्मादेकस्यैव हल आदित्वमिति नार्थ एकग्रहणेन। 'हलादौ'इत्येवाजादिनिवृत्त्यर्थं वक्तव्यमिति भावः॥

( उद्द्योतः ) 'किमर्थम्'इति किंशब्दः क्षेप इत्याह—अतिप्रसङ्गेति॥

भाष्योक्तं हेतु[6]द्वयं प्रतिपादयति—यद्यनेकस्येति। एकशब्दः संख्यावाचीति भावः॥ एकग्रहणस्यैवायमाक्षेपो न तु हलादिग्रहणस्यापीत्याह—एकग्रहणेनेति॥

( एकहलादिपदप्रयोजनभाष्यम् )

एवं तर्हि 'एकहलादौ'इत्युच्यते, सर्वश्चैवैकहलादिः। तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो य एकहलादिरिति।

कश्च साधीयः?

यत्रैकं हलमुच्चार्याज्ञु[7]च्यते॥

( प्रदीपः ) तत्र प्रकर्षगतिरिति। असहायवाच्येकशब्द आश्रीयते, समानजातीयश्च सहायत्वेन प्रसिद्धतर इति स एव निवर्त्यते। तत्र यद्यप्युच्चारण उपलब्धौ वा वर्णो वर्णस्य न सहायस्तथापि 'बुद्धौ कृत्वा सर्वाश्चेष्टाः' इत्यनेन न्यायेन यस्यानन्तरं द्वितीयो हल् नोच्चार्यते सोऽसहायो हलादिरस्त्वित्याश्रीयते॥

( उद्द्योतः ) असहायवाच्याश्रयेण परिहार इत्याह—असहायेति। यद्यपि 'असिद्वितीयोऽनुससार पाण्डवम्'इत्यादौ विजातीयोऽपि सहायः, तथापि स न प्रसिद्धतर इत्यर्थः। समानजातीयत्वं चोपस्थितहल्त्वेन॥ तत्र यद्यपीति। एवञ्च सर्वत्र वर्णस्यासहायत्वाद्व्यावर्त्याप्रसिद्धिरित्यर्थः॥ तथापीति। बौद्धं साहायकमाश्रित्य व्यावर्त्यप्रसिद्धिरिति भावः॥ तदेव दर्शयति—यस्यानन्तरमिति। [8]भाष्यस्वरसस्तु सङ्ख्यावाच्येकशब्दाश्रयणे एव—इत्यन्ये॥

( १२३२ विधिसूत्रम् ॥ ६। ३। ३ आ. ३५ )

## २९२० इको ह्रस्वोऽङ्यो गालवस्य ॥ ६। ३। ६१॥

( ह्रस्वाधिकरणम् )

( ६४५८ उपसंख्यानवार्तिकम् ॥ १॥ )

॥ * ॥ इको ह्रस्वत्वमुत्तरपदमात्रे ॥ * ॥

( भाष्यम् ) इको ह्रस्वत्वमुत्तरपदमात्रे वक्तव्यम्। इहापि यथा स्यात्—अलाबुकर्कन्धुदन्भुफलम्—इति।

किं पुनः कारणं न सिध्यति?

( प्रदीपः ) उत्तरपदमात्र इति। यस्[9]यान्यापेक्षया व्यभिचार्युत्तरपदत्वं तस्मिन्नपीत्यर्थः॥

( उद्द्योतः ) मात्रशब्दः कार्त्स्न्यवाचीत्याह—यस्येति॥

( ६४५९ उपसंख्यानफलबोधकवार्तिकम् ॥ २॥ )

॥ * ॥ सर्वा[10]न्ते लोकविज्ञानम् ॥ * ॥

( भाष्यम् ) लोकविज्ञानाद्धि यदेतत् सर्वा[11]न्त्यं पदं तस्मिन् पूर्वपदस्य ह्रस्वत्वं स्यात्॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

अथवा एवं विग्रहः करिष्यते—अलाबूश्च कर्कन्धूश्च—अलाबुकर्कन्ध्वौ, अलाबुकर्कन्ध्वौ च दन्भूश्च—अलाबुकर्कन्धुदन्भ्वः, अलाबुकर्कन्धुदन्भूनां फलं—अलाबुकर्कन्धुदन्भुफलम्—इति।

यद्येवं दन्भ्वाः पूर्वनिपातः प्राप्नोति।

राजदन्तादिषु पाठः करिष्यते॥

( प्रदीपः ) अलाबुकर्कन्ध्वाविति। जातिपरत्वाभावादेकवद्भावो न कृतः॥

यद्येवमिति। 'अल्पाच्तरम्'इत्यनेन। त्रयाणां तु द्वन्द्वे तन्त्रे तरप्निर्देशेऽल्पाच्तरत्वाभावात् पूर्वनिपाताप्रसङ्गः॥

---

१ अथापर इति। यद्यपि 'स्थानं' इत्यत्र सकारोत्तरं थकारोऽपरः प्रयुज्यते तथापि सकार एक एव, न वर्णो वर्णान्तरस्य सहायो भवितुमर्हति—इति तदर्थः॥

२ 'वर्णस्य सहायः' इति ट. छ. पाठः॥

३ अतिप्रसङ्गेति। सूत्रे एकशब्दोच्चारणेऽपि उदकस्थानमित्यादौ प्राप्तेः सत्त्वेनातिप्रसङ्गनिवारणसामर्थ्यमस्य 'एक'शब्दस्य नास्तीत्यर्थः॥

४ 'सकारस्यैवादित्वात्' इति झ. च. पाठः॥

५ यतस्त्विति। यतो वर्णानामुच्चारणे उपलब्धौ वा यौगपद्यं नास्ति अतो नार्थ एकग्रहणेनेत्यर्थः॥

६ हेतुद्वयं—एकैकवर्णवृत्तित्वाद्वाचः, उच्चरितप्रध्वंसित्वाच्च—इति हेतुद्वयम्॥

७ 'जुच्चार्यते' इति छ. पाठः॥

८ भाष्यस्वरसस्त्विति। 'एकादाकिनिच्चासहाये' इति सूत्रे असहाय इति विशेषणदानात् यत्र विशेषणरहितः केवल एकशब्द उपादीयते तत्र स शब्दः संख्यावाच्येव, प्रसिद्धत्वात्। एवञ्चात्र 'एकतद्धिते च' इत्यत्रापि एकशब्दः संख्यावाचीति भाष्यस्वरसः॥

९ यस्यान्यापेक्षयेति। यथाकथञ्चित् यस्योत्तरपदत्वं तस्मिन्नपि परतो ह्रस्व इत्यर्थः। तेन कर्कन्धूशब्दस्य दन्भूशब्दापेक्षया पूर्वपदत्वेऽपि तस्मिन् परतः 'अलाबू'शब्दस्य ह्रस्वः सिध्यति॥

१० 'सर्वान्ते हि लोक—' इति च. छ. झ. पाठः॥

११ 'सर्वान्तं' इति च. पाठः॥

(उद्द्योतः) तत्रे तरब्निर्देश इति । द्वयोरेकस्य निर्धारणे एव तरब्विधानात् द्वयोरेव समासे तत्प्रवृत्तिरिति भावः ॥

(उपसंख्यानानर्थक्ये प्रकारान्तरबोधकभाष्यम्)

अथवा एवं विग्रहः करिष्यते-दन्भ्वाः फलं-दन्भुफलं, कर्कन्धूश्च दन्भुफलं च-कर्कन्धुदन्भुफलम्, अलाबूश्च कर्कन्धुदन्भुफलं च-अलाबुकर्कन्धुदन्भुफलमिति ।

एवमपि फलेनाकृतोऽभिसंबन्धो भवति ।

नैष दोषः ।

प्रत्येकं फलशब्दः परिसमाप्यते ॥

(प्रदीपः) प्रत्येकमिति । 'ओरञ्'इत्यत्र फले लुकि कृते नपुंसकाश्रयं ह्रस्वत्वम्-इति प्रकारान्तरेणोक्तं भवति ॥

(उद्द्योतः) ननूक्तसमासे प्रत्येकं फलशब्दसंबन्धो न युक्त इत्याशङ्क्य प्रकारान्तरेणैव फलवाच्त्वमलाब्वादेः, तत्फलसंपत्त्या तु प्रत्येकं फलशब्दसमाप्तिरुक्तेत्याह—ओरञित्यत्रेति । 'ओरञ्' इत्यस्यात्रेत्यर्थः ॥

(६४६० प्रतिषेधोपसंख्यानवार्तिकम् ॥ ३ ॥)

॥ * ॥ इयङुवङव्ययप्रतिषेधः ॥ * ॥

(भाष्यम्) इयङुवङ्भाविनामव्ययानां च प्रतिषेधो वक्तव्यः । श्रीकुलम्, भ्रूकुलम् । काण्डीभूतम्, कुड्यीभूतम्-वृषलकुलम् ॥

(पर्युदासभाष्यम्)

अभ्रूकुंसादीनामिति वक्तव्यम् । भ्रुकुंसः, भ्रूकुंसः । भ्रुकुटिः, भ्रूकुटिः ।

अपर आह—अकारो भ्रूकुंसादीनामिति वक्तव्यम् । भ्रकुंसः । भ्रकुटिः ॥

(उद्द्योतः) 'इयङुवङ्-'इतिनिषेधनिषेधमाह—भाष्ये—अभ्रू इति ॥

(१२३३ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३६)

## २९२१ एकतद्धिते च ॥ ६ । ३ । ६२ ॥

(एकतद्धितेपदप्रयोजनभाष्यम्)

एकतद्धिते किमुदाहरणम् ?

एकत्वम्, एकता-इति ।

नैतदस्ति प्रयोजनम् । पुंवद्भावेनाप्येतत् सिद्धम् ।

कथम् ?

'तसिलादिष्वा कृत्वसुचः' (६।३।३५) इति ॥

इदं तर्हि प्रयोजनम्-एकस्या आगतं-एकरूप्यम्, एकमयम् ।

इदं चाप्युदाहरणम्-एकत्वम्, एकता ।

ननु चोक्तं पुंवद्भावेनाप्येतत्सिद्धमिति ।

न सिद्ध्यति ।

उक्तमेतत्-*त्वतलोर्गुणवचनस्य*इति ॥

(प्रदीपः) त्वतलोर्गुणवचनस्येति । एकशब्दो यदा संख्यावाची तदा गुणवचनः, यदा असहायवाची तदा गुणवचनो न भवति ॥

(उद्द्योतः) भाष्ये—तसिलादिष्विति । तसिलादिषु त्वतलावपि परिगण्येते । 'त्वतलोः-'इति तस्यैव नियामकमिति भावः ॥ नन्वेकशब्दस्य संख्यावाचितया गुणवचनत्वमस्त्येवेत्यत आह—एकशब्द इति । चिन्त्यमेतत्, आकडारसूत्रशेषस्थभाष्योक्तरीत्या संख्याशब्दानां गुणवचनत्वाभावात् ॥

(उत्तरपदे पदप्रयोजनभाष्यम्)

अथोत्तरपदे किमुदाहरणम् ?

एकशाटी ।

नैतदस्ति । पुंवद्भावेनाप्येतत्सिद्धम् ।

कथं पुंवद्भावः ?

समानाधिकरणलक्षणः पुंवद्भावः ।

इदं तर्हि—एकस्याः क्षीरं-एकक्षीरम् ।

इदं चाप्युदाहरणम्—एकशाटी ।

ननु चोक्तं पुंवद्भावेनाप्येतत्सिद्धमिति ।

न सिद्ध्यति । 'न कोपधायाः' (६।३।३७) इति प्रतिषेधः प्राप्नोति ।

नैषोऽस्ति प्रतिषेधः ।

उक्तमेतत्*कोपधप्रतिषेधे तद्धितवुग्रहणम्*इति॥

(प्रदीपः) उक्तमेतदिति । 'न कोपधायाः' इति प्रतिषेधाभावे 'स्त्रियाः पुंवत्-'इत्यनेनात्र पुंवद्भावो न तु 'पुंवत्कर्मधारय-'इत्यनेन, तस्य प्रतिषिद्धार्थत्वात् । अथोच्यते—परत्वात्कर्मधारयलक्षणेन पुंवद्भावेन भाव्यमिति । नैतदस्ति । परत्वाश्रयणे ह्रस्वत्वेनैवानेन परत्वाद्भाव्यम् । भाष्यकारस्तु तात्पर्येणोदाहरणत्वमस्य निराकृतवान्, रूपस्यान्यथासिद्धत्वात् ॥

(उद्द्योतः) ननु 'उक्तमेतत्'इत्यादि व्यर्थम् । प्रतिषेधविषादीनाम्' इति निषेध इत्यर्थः ॥

१ इति भाव इति । एवञ्च त्रयाणां द्वन्द्वे 'अल्पाच्तरम्' इत्येतन्न प्रवर्ततेति दन्भूशब्दस्य न पूर्वनिपातप्रसङ्गः ॥

२ 'अथवा दन्भ्वाः' इति छ. पाठः ॥

३ 'फलशब्दस्य समाप्तिरुक्तेत्यत आह' इति झ. पाठः ॥

४ 'भ्रूकुलम्' इति क. ट. छ. झ. पाठः ॥

५ 'काण्डीभूतं वृषलकुलम्, कुड्यीभूतं वृषलकुलम्' इति ट. च. छ. झ. पाठः ॥

६ निषेधनिनिषेधेति । इयङुवङव्ययप्रतिषेध इति निषेधस्य 'अभ्रूकुं-

७ 'एकता' इत्येव इतिशब्दरहितः पाठः छ. पुस्तके ॥

८ 'कथं पुंवद्भावः' इति छ. च. पाठः ॥

९ आकडारेति । तत्र हि सूत्रे गुणवचनसंज्ञायाश्चैताभिः संज्ञाभिः-'संख्यादिसंज्ञाभिः' बाधनं यथा स्यादित्युक्तम् । एवञ्च संख्यादिशब्दातिरिक्तत्वं गुणवचनत्वमिति संख्यावाचिन एकशब्दस्य न गुणवचनत्वमिति भावः ॥

१० 'पुंवद्भावः' इति पदं छ. पुस्तके न दृश्यते ॥

षयस्य 'पुंवत्कर्मधारय-'इत्यस्यात्र प्राप्तेः । किञ्च समानाधिकरणलक्षणः पुंवद्भाव इत्यप्ययुक्तम्, परत्वेन कर्मधारयलक्षणस्यैवौचित्यादत आह—न कोपधाया इतीति ॥ तात्पर्येणेति । विनापि सूत्र-सिद्धत्वेन–सूत्रस्यैतत्तात्पर्यकत्वाभावेनेत्यर्थः । कृते त्विदमेव प्राप्नोतीत्यन्यत् । न च भाष्यकारोदाहरणान्यपि 'सर्वनाम्नो वृत्तिमात्रे' इत्यनेन सिद्धानीति वाच्यम् । एतत्सूत्रैतद्भाष्याभ्यां तस्य क्वाचित्कत्वकल्पनात् । यत्तु एतस्मादेव ज्ञापकादस्य तद्धितेऽप्रवृत्तिरिति, तन्न, 'दक्षिणोत्तराभ्यामतसुच्'इति सूत्रस्थभाष्यविरोधापत्तेः ॥

( १२३४ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३७ )

## २९२५ खित्यनव्ययस्य ॥ ६।३।६६ ॥

( ६४६१ सूत्रार्थानुपपत्तिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् ॥ * ॥

( भाष्यम् ) खिति ह्रस्वस्याप्रसिद्धिः । कालिम्मन्या । हरिणिम्मन्या ।

किं कारणम् ?

अनजन्तत्वात् । मुमि कृतेऽनजन्तत्वात् ह्रस्वत्वं न प्राप्नोति ॥

(प्रदीपः) खिति ह्रस्वाप्रसिद्धिरिति । इह ह्रस्वश्रुत्याऽच्युपस्थापितेऽचा पूर्वपदस्य विशेषणादजन्तस्य ह्रस्वेन भाव्यम् । पूर्वपदेन त्वचि विशेष्यमाणे वाङ्मन्यादिष्वपि ह्रस्वत्वप्रसङ्गः । तत्र मुमि कृतेऽनजन्तत्वात् ह्रस्वत्वाप्रसङ्गः । अथ स्तनन्धयादिषु सावकाशो मुमागमः कालिम्मन्यादिषु ह्रस्वत्वेन बाध्यते, तथापि मुन्न प्राप्नोतीति मुमर्थो यत्नः कर्तव्यः ॥

( उद्द्योतः ) पूर्वपदस्येति । 'उत्तरपदे'इत्यनेनास्य वाक्यस्य तद्घटितवाक्यैकदेशत्वात्तुमानादिति भावः ॥ तत्र मुमीति । द्वयोरपि निरवकाशत्वेन परत्वादिति भावः ॥ स्तनन्धयादिष्विति । फलाभावाद्ध्रस्वाप्राप्तिं मन्यते ॥ मुन्न प्राप्नोतीति । अपवादेन ह्रस्वेन बाधादिति भावः ॥

( ६४६२ उपपत्तिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

ह्रस्वान्तस्य मुम्भवतीति वक्तव्यम् ॥

( प्रदीपः ) अत्रोत्तरमाह—सिद्धं त्विति ॥

( ६४६३ प्रकारान्तरेणोपपत्तिवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ सन्नियोगाद्वा ॥ * ॥

( भाष्यम् ) अथवा सन्नियोगः करिष्यते ।

क एष यत्नश्चोद्यते सन्नियोगो नाम ?

चकारः कर्तव्यः–मुम् च ।

किंच ?

यच्चान्यत्प्राप्नोति ।

किञ्चान्यत् प्राप्नोति ? ह्रस्वत्वम् ।

सिद्ध्यति । सूत्रं तर्हि भिद्यते ॥

यथान्यासमेवास्तु ।

ननु चोक्तं *खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात्* इति ।

परिहृतमेतत्—*सिद्धन्तु ह्रस्वान्तस्य मुम्वचनात्*इति ।

तत्तर्हि ह्रस्वग्रहणं कर्तव्यम् ।

न कर्तव्यम् । प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

"इको ह्रस्वोऽङ्यो गालवस्य" (६१) इति ।

तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।

'खिति'इत्येषा सप्तमी 'ह्रस्वः' इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१।१।६६) इति ॥

( प्रदीपः ) सन्नियोगाद्वेति । सन्नियोगः–यौगपद्यमित्यर्थः ॥

खितीत्येषा सप्तमीति । इह सूत्रे ह्रस्वस्य विधीयमानत्वात् खितीति सप्तम्या षष्ठीप्रकल्पनं नास्ति । उत्तरसूत्रे तु खितीत्यनुवृत्ता सप्तमी 'ह्रस्वः' इति प्रथमायाः षष्ठीं प्रकल्पयति । तत्र कालिम्मन्यादिषु स्तनंधयादिषु च पर्जन्यवल्लक्षणप्रवृत्त्या कृते ह्रस्वत्वे ह्रस्वान्तस्य मुमागम इति ह्रस्वमुमागमयोर्निमित्तनिमित्तिभावादुत्सर्गापवादभावाभावः ॥

(उद्द्योतः) सन्नियोग इति । 'अरुर्द्विषत्'इति सूत्रे 'मुम् च' इति पाठ्यमित्यर्थः ॥ यदि मुम्विधौ सप्तम्या प्रथमायाः षष्ठीकल्पनं तर्हीहापि स्यादत आह—इह सूत्रे इति ॥ उत्तरसूत्रे त्विति ।

---

१ 'विनापि सूत्रं सिद्धत्वेन' इति ग. घ. ङ. पाठः ॥

२ एतस्मादेव—'सर्वनाम्नो वृत्तिमात्रे' इत्यनुचार्य 'उक्तमेतत्' इति भाष्यादेव ॥

३ अस्य—सर्वनाम्नो वृत्तिमात्र इत्यस्य ॥

४ भाष्यविरोधापत्तेरिति । तत्र हि सूत्रे 'एवं तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः, दक्षिणोत्तरपूर्वाणामित्येवमर्थम्' इत्युक्तम् । एवञ्च तद्धितेऽस्यामवृत्तिरिति वक्तुमशक्यमिति तात्पर्यम् ॥

५ 'ह्रस्वाप्रसङ्गः' इति क. ङ. पाठः ॥

६ 'मुमर्थोऽयं यत्नः' इति अ. ठ. पाठः ॥

७ उत्तरपदे इति । उत्तरपदाक्षिप्तपूर्वपदस्यानव्ययस्येत्यस्याचा विशेषणादित्यर्थः । वस्तुतोऽनव्ययस्य पूर्वपदत्वात्कैयटे पूर्वपदस्येत्युक्तिः । अन्यथा तद्घटितवाक्यानुमानेऽप्याक्षिप्तस्य शाब्देऽन्वयानुपपत्तिरिति सर्वादिसूत्र–येनविधिरितिसूत्रस्थविवरणविरोधादिदं विवरणमसङ्गतमिति प्राहुः ॥

८ 'स्तनंधयादिषु' इत्यस्य च. पुस्तके एव न पाठः ॥

९ 'ह्रस्वे' इति ङ. पाठः । 'कृते ह्रस्वान्तस्य' इत्येव पाठः च. क. पुस्तकयोः ॥

तत्रानुवृत्तिसामर्थ्यादयमर्थः—'पूर्वसूत्रेण यो ह्रस्वो विहितस्तदन्तस्य मुम्'इति ॥ नन्वेवं स्तनन्धयादिषु दोषोऽत आह—तत्र कालिमित्यादि ॥ उत्सर्गापवादभावाभाव इति । बाधकत्वाभाव इति यावत् ॥

( एकदेशिन उपपत्तिभाष्यम् )

**अथवा खिति ह्रस्वो भवतीत्युच्यते । खित्यनन्तरो ह्रस्वभावी नास्तीति कृत्वा भूतपूर्वगतिर्विज्ञास्यते—अजन्तं यद्भूतपूर्वमिति ॥**

( प्रदीपः ) अथवेति । पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वस्यापि ह्रस्वेन भाव्यमित्येकविषयत्वात् ह्रस्वमुमागमयोरुत्सर्गापवादभावाभावात् ह्रस्वमुमागमयोर्विरोधाच्च[1] मुमि कृते भूतपूर्वाजन्तत्वाश्रयेण ह्रस्वः प्रवर्तते ॥

( उद्योतः ) ननु भूतपूर्वगत्याश्रयणेऽपि स्तनन्धयादिषु सावकाशमुमः कालिम्मन्यादौ ह्रस्वेन बाधः स्यादत आह—पर्जन्यवदिति । 'एकविषयत्वात्'इत्यनेन द्वयोर्निरवकाशत्वरूप उत्सर्गापवादभावाभावे हेतुरुक्तः । विरोधाच्चेति पाठः । अनेन प्रथमं मुमः प्रवृत्तौ निमित्तस्य विप्रतिषेधसूत्रस्य प्रवृत्तिबीजं दर्शितम् । मुमि ह्रस्वाप्रवृत्तेर्विरोधः । विरोधाभावाच्चेति पाठे तदुक्तिफलं चिन्त्यम्[2] ॥

( पूर्वपक्षिण उपपत्तिभाष्यम् )

**अथवा 'कार्यकालं संज्ञापरिभाषम्' यत्र कार्यं तत्र द्रष्टव्यम् खिति ह्रस्वो भवतीत्युपस्थितमिदं भवति—अच इति । तत्र वचनादनजन्तस्यापि भविष्यति ।**

**इहापि तर्हि वचनात्प्राप्नोति—वाङ्मन्य[3] इति ।**

**नैतदस्ति । इक इति वर्तते ।**

**एवमपि खट्वंमन्यः, अत्र न प्राप्नोति ।**

**नैष दोषः । आब्ग्रहणमपि प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' (६३) इति ॥**

( प्रदीपः ) तत्र वचनादिति । पूर्वपदेनाजिवशेष्यते खितीत्यनेन च । तत्र 'येन नाव्यवधानम्–'इति न्यायेन मुमि कृते एकहल्व्यवहितस्याचो ह्रस्वप्रवृत्तिः ॥

( सिद्धान्तभाष्यम् )

**एवमपि कीलालपंमन्यः, शुभंयंमन्यः–अत्र न प्राप्नोति ।**

**तस्मात् पूर्वोक्तावेव परिहारौ ॥**

—→⊶—

( १२३५ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३८ )

## २९२७ इच एकाचोऽम्प्रत्ययवच्च ॥ ६ । ३ । ६८ ॥

( मुमोऽधिकरणम् )

( सूत्रप्रयोजनाक्षेपभाष्यम् )

**अमः प्रत्ययवदनुदेशे किं प्रयोजनम् ?**

( ६४६४ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अमः प्रत्ययवदनुदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः ॥ * ॥**

( भाष्यम् ) **अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णगुणेयङुवङादेशाः—प्रयोजनम् ।**

**आत्वं प्रयोजनम्—गांमन्यः ।**

**पूर्वसवर्णः प्रयोजनम्—स्त्रींमन्यः ।**

**गुणः प्रयोजनम्—नरंमन्यः ।**

**इयङुवङौ प्रयोजनम्—श्रियंमन्यः, भ्रुवंमन्यः[4] ॥**

( ६४६५ प्रयोजनाक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् ॥ * ॥**

( भाष्यम् ) **अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णयोरप्रसिद्धिः[5] ।**

**किं कारणम् ?**

**अप्रथमात्वात् । प्रथमयोरित्युच्यते, न चात्र प्रथमां पश्यामः ।**

**किं च भोः 'आत्वं प्रथमयोः' इत्युच्यते ?**

**न खलु प्रथमयोरित्युच्यते, प्रथमयोरिति विज्ञायते ।**

**कथम् ?**

**अम्शसोरित्युच्यते, त एवं विज्ञास्यामः–शसा[6] सहचरितो योऽम्शब्दः ।**

**कश्च शस्सहचरितः[7] ?**

**प्रथमैव ॥**

---

१ 'विरोधाभावाच्च' इति क. ठ. पाठः ॥

२ चिन्त्यमिति । विप्रतिषेधसूत्रप्रवृत्तिबीजप्रदर्शनार्थत्वाय तदुक्तिः—इति चिन्त्यमेव चिन्त्यम् । परत्वस्य व्यवस्थापकत्वेन दृष्टत्वादत्र मुमि भूतपूर्वगत्याश्रयणमिति कैयटाशयमाहुः ॥

३ 'वाङ्मन्यः' इत्येव ङकारघटित इतिशब्दरहितः पाठः छ. पुस्तके झ. संज्ञके च ॥

४ 'भ्रुवंमन्यः' इति छ. झ. ट. पाठः ॥

५ आत्वम् 'औतोम्शसोः' (६।१।९३) इत्यनेन, पूर्वसवर्णश्च 'प्रथमयोः पूर्वसवर्णः' (६।१।१००) इत्यनेन ॥

६ 'शसा सह–' इति च. झ. पाठः ॥

७ 'चरितोऽम् शब्दः' इति क. पाठः ॥

**नतु च प्रत्ययवदनुदेशाद्भविष्यति ।**

**न सिध्यति ।**

**किं कारणम् ?**

( प्रदीपः ) **शस्सहचरित इति** । साहचर्यं विशेषस्मृतिहेतुर्भवति, यथा–रामलक्ष्मणाविति, तथा 'औतोऽम्शसोः' इत्यत्र शस्सहचरितस्यामो ग्रहणादन्यस्य ग्रहणाभावः ॥

( उद्द्योतः ) भाष्ये—अम्शब्दः—प्रथमैवेति । प्रथमापदं द्वितीयालाक्षणिकं बोध्यम् ॥

( ६४६६ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सामान्यातिदेशे हि विशेषानतिदेशः ॥ * ॥**

( भाष्यम् ) **सामान्ये ह्यतिदिश्यमाने विशेषोऽनतिदिष्टो भवति ।**

**तद्यथा—ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यत् ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते ।**

**एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते । यद्विशिष्टं द्वितीयैकवचने भवति-प्रथमयोरिति, न तदतिदिश्यते ॥**

( प्रदीपः ) **सामान्यातिदेश इति**[1] । सामान्यस्य शब्दार्थत्वाद्विशेषाणां त्वशब्दार्थत्वात्सामान्यशब्दोपादानेनातिदेशः क्रियमाणः सामान्यनिबन्धनमेव कार्यं प्रापयति, न तु विशेषनिबन्धनम् । विशेषशब्दाश्रयेण तु अतिदेशे क्रियमाणे, तस्मिन् विशेषे यत्कार्यं सामान्यनिबन्धनं विशेषनिबन्धनं च तत्सर्वमतिदिश्यते । आत्वपूर्वसवर्णवत् गुणस्याप्यसिद्धिर्वक्तव्या ॥

(उद्द्योतः) ननु सामान्ये विशेषाणामन्तर्भावात्कथं तदतिदेशे विशेषानतिदेशोऽत आह—**सामान्यस्येति** । ततश्चेयङाद्येव स्यात्, न तु आत्वादिकमित्यर्थः ॥ नन्वेवं तुल्यन्यायाद्विशेषातिदेशेऽपि सामान्यकार्यानापत्तिरिति 'अम्प्रत्ययवत्' इत्युक्त्याऽपि नेष्टसिद्धिरत आह—**विशेषशब्देति** । व्याप्योपस्थितौ[2] व्यापकस्य नियमेनोपस्थितेरिति भावः ॥ **गुणस्यापीति** । 'नरंमन्यः' इत्यादौ । तस्यापि[3] सर्वनामस्थाननिमित्तत्वेन विशेषकार्यत्वात् । एवञ्च भाष्यमुपलक्षणमिति[4] भावः ॥

( ६४६७ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ सिद्धं तु द्वितीयैकवचनवद्वचनात् ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**द्वितीयैकवचनवद्वचनात् । द्वितीयैकवचनवद्भवतीति वक्तव्यम् ॥**

( ६४६८ प्रकारान्तरेण समाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ एकशेषनिर्देशाद्वा ॥ * ॥**

( भाष्यम् ) **अथवैकशेषनिर्देशोऽयम् । अम् च अम् च-अम् । इच एकाचोऽम् भवति, अम्प्रत्ययवच्चास्मिन् कार्यं भवति ॥**

(प्रदीपः) **एकशेषनिर्देशाद्वेति** । यद्यपि सहविवक्षायामेकशेषः, अत्र च तस्या असंभवः, अमागमस्य[5] विधेयत्वात्–अपरस्यामः प्रत्ययविशेषणत्वात्;तथापि जातिपक्षाश्रयेण वृक्षाद्यर्थः प्रत्याख्यात एकशेषः सहविवक्षाया अभावेऽपि संज्ञापरिभाषावल्लक्षणाङ्गं[6] विज्ञायते ॥

( प्रयोगसाधनाक्षेपभाष्यम् )

**अथेह कथं भवितव्यम्-श्रियं मन्यते ब्राह्मणकुलम्—श्रियंमन्यं ब्राह्मणकुलम्, आहोस्विच्छ्रिमन्यमिति ?**

**श्रियंमन्यमिति भवितव्यम्[7] ।**

**'स्वमोर्नपुंसकात्' ( ७।१।२३ ) इति लुक्कस्मान्न भवति ?**

( प्रदीपः ) **अथेति** । अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिङ्गपरित्यागेन वर्तते, यथा प्रष्ठादयः पुंयोगात् स्त्रियां वर्तमानाः स्वलिङ्गमपहाय स्त्रीलिङ्गमुपाददते ॥

( उद्द्योतः ) ननु यथा गङ्गादयस्तीरे वर्तमाना अपि स्वलिङ्गं न त्यजन्ति, एवं श्रीप्रभृतयो ब्राह्मणकुले वर्तमानाः स्त्रीत्वमेवोपाददत इति कथं लुक्प्राप्तिरत आह—**अत्र विषये इति** । वृत्तिविषये प्रातिपदिकस्यैव 'श्री'इत्यस्य कुले वृत्त्या स्वलिङ्गपरित्यागः, श्रीत्वारोपश्चात्र । यत्र[8] तु स्वलिङ्गप्रयुक्तकार्योत्तरं लक्षणयाऽन्यत्र वृत्तिस्तत्रैव स्वलिङ्गात्याग इति भावः ॥ तत्र दृष्टान्तमाह—**यथा प्रष्ठादय इति** ॥ **स्वलिङ्गमिति** । शक्यार्थगतस्ववाच्यलिङ्गमित्यर्थः ॥

( बाध्यसामान्यचिन्तया प्रयोगसाधकभाष्यम् )

**नाप्राप्ते लुक्यम्-आरभ्यते । स यथैव 'सुपो धातुप्रातिपदिकयोः' ( २।४।७१ ) इत्येतं बाधत एवं 'स्वमोर्नपुंसकात्'इत्येतमपि लुकं बाधेत ॥**

---

१ गुणस्यापीति । नरंमन्य इत्यत्र 'ऋतो ङिसर्वनामस्थानयोः–' (७।३।११०) इत्यस्यापि ॥

२ व्याप्योपस्थिताविति । व्याप्यस्य विशेषधर्मस्योपस्थितौ व्यापकस्य सामान्यधर्मस्य नियमेनोपस्थितिरिति भावः ॥

३ तस्यापि—ऋतो ङिसर्वनामस्थानयोरिति गुणस्यापि ॥

४ भाष्यमिति । आत्वपूर्वसवर्णयोरप्रसिद्धिरिति भाष्यं गुणस्याप्युपलक्षकमिति भावः ॥

५ सहविवक्षाया असम्भवमुपपादयति—**अमागमस्येति** ॥

६ संज्ञापरिभाषावदिति । यथा संज्ञापरिभाषाशास्त्रं विध्यङ्गन्तथैकशेषशास्त्रमपि सूत्रेष्वेकशेषं साधयितुं सूत्राङ्गमिति । लोके तु नास्योपयोगः, जातिपक्षेण निर्वाहात् । तथा च सहविवक्षाया अभावेऽपि सूत्रेषु स प्रवर्ततेति भावः ॥

७ 'श्रियमात्मानं मन्यते' इति क. छ. ट. झ. पाठः ॥

८ यत्र त्विति । गङ्गायां घोष इत्यादौ, तत्र हि गङ्गायामिति पदस्योत्तरत्रानन्वयादिदर्शनात्तीरे वृत्तिः । अतस्तत्र शास्त्रीयस्त्रीत्वविशिष्टमेव लक्ष्यं गंगापदेनाभिधीयत इति तस्य स्त्रीत्वमेव ॥

(प्रदीपः) **नाप्राप्ते लुकीति।** अमागमः 'अम्प्रत्ययवत्'इत्यतिदेशात् कार्याण्यात्मविनाशं वर्जयित्वा प्रतिपद्यते । विधानसामर्थ्याद्धि लुकं न प्रतिपद्यते । यथा 'परिधिर्यूपो भवति'इति यूपकार्याणि तक्षणं विहाय परिधौ क्रियन्ते । 'अतष्टाः परिधयो भवन्ति'इति वचनात्तक्षणे परिधित्वहानिप्रसङ्गात् ॥

(उद्योतः) ननु लुक्यपि प्रत्ययलक्षणेन गुणाद्यर्थमम्विधानं स्यात्, 'न लुमता'इत्यस्य च विधानसामर्थ्यादनित्यत्वाच्च न प्रवृत्तिरत आह—**अमागम इति** । अम्प्रत्ययो हि लुप्तः सन् न गुणादिनिमित्तम्, एवमतिदेशेनायमपि तन्निमित्तं न स्यात् । एवञ्च विधानमेव व्यर्थं स्यादतो लुकं न प्रतिपद्यत इत्यर्थः। **आत्मविनाशं वर्जयित्वा**—इत्यस्य 'तदभावे' इत्यर्थः। प्रतिलक्ष्यं लक्षणभेदादेतद्विषयकामागमविधानसामर्थ्यान्नपुंसकलुकोऽपि बाध इत्याशयः ॥ नन्वस्यामः इजन्तस्योत्तरपदपरत्वसंपत्तये समाससंज्ञाप्रातिपदिकसंज्ञोत्तरं प्रवृत्त्या प्रातिपदिकावयवत्वाभावात्कथमत्र 'सुपो धातु-'इत्यस्य प्राप्तिः? अत एव 'इत्थं भूतलक्षणे'इति सूत्रे 'कमण्डलुपाणिमित्यादिसमासावयवाल्लक्षणवाचकात्कमण्डलुशब्दात्तृतीया प्राप्नोति' इति भाष्यमुपादाय 'न च लुका सिद्धिः, तस्याः कृते समासे उत्पादेन समासप्रातिपदिकानवयवत्वात्तदप्राप्तेः'इति कैयटेनोक्तमिति चेत्, न । **'प्रातिपदिकयोरित्येवं बाधते'**—इत्यस्य 'पश्चादुत्पन्नस्य तदनवयवत्वबोधनद्वारा'इति शेषपूरणेऽनादोषात्। **'इत्येतमपि'**—इत्यस्य 'तत्रार्थवत एवाम्प्रत्ययस्य ग्रहणमित्यर्थबोधनद्वारा'इति शेषः। सिद्धान्तस्य तु येन नाप्राप्तिन्यायेन मध्येऽपवादन्यायेन च 'सुपो धातु-'इत्यस्याप्रवृत्तिनिमित्तार्थज्ञापकतेत्याशयः—इति कैयटानुसारिणः। एतद्भाष्यविरोधात्तस्य कैयटस्य तत्र चिन्त्यतोक्ता—इत्यपरे ॥

( बाध्यविशेषचिन्तयाऽऽक्षेपभाष्यम् )

**न बाधते।**

**किं कारणम्?**

**येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'सुपो धातुप्रातिपदिकयोः'इत्येतस्मिन्नेतदारभ्यते, 'स्वमोर्नपुंसकात्'इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च॥**

**अथवा मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमयममागमः 'सुपो धातुप्रातिपदिकयोः'इत्येतं बाधते, 'स्वमोर्नपुंसकात्'इत्येतन्न बाधते ॥**

( समाधानभाष्यम् )

**एवं तर्हि 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्यामोऽन्तरङ्गलक्षणो लुक् न भविष्यति ॥**

( पूर्वपक्षिणः सिद्धान्तभाष्यम् )

**नैषा परिभाषेहोत्तरपदाधिकारे शक्या विज्ञातुम्। इह हि दोषः स्यात्—द्विषन्तपः, परन्तपः—इति ॥ तस्माच्छ्रियंमन्यमित्येव भवितव्यम् ॥**

( प्रदीपः ) **द्विषन्तप इति।** संयोगान्तलोपो न स्यादिति केचिदाहुः। एतत्तु द्वयोरेकस्य वा तकारस्य श्रुतौ विशेषानवधारणात् अन्ये असाधु मन्यमाना अनुस्वाराप्राप्तिलक्षणं दोषमाहुः। एवञ्च परन्तप इत्यपि समर्थितं भवति ॥

( उद्योतः ) **समर्थितं भवतीति** । अनेनान्त्यपक्षस्यैव युक्तत्वं दर्शितम् । एवञ्च भाष्ये 'संयोगान्तलोपो न स्यात्'इति क्वाचित्कोऽपपाठ इति बोध्यम् । एतत्सर्वं कार्यकालपक्षे बोध्यम् ॥

परे तु 'अथेह कथं भवितव्यम्'इति पूर्वपक्षे सिद्धान्त्याह—**श्रियंमन्यमिति भवितव्यमिति** । पूर्वपक्ष्याह—**स्वमोरिति लुक्स्यान्निति** । सिद्धान्त्याह—**नाप्राप्ते** इत्यादि-**स्वमोरित्येनं लुकमपि बाधेत**—इत्यन्तं। बाध्यसामान्यचिन्तयेति भावः । पूर्वपक्षी बाध्यविशेषचिन्तामाश्रित्याह—**न बाधते किं कारणम्**—इत्यादि ॥ नपुंसकादित्येतं न बाधत इति बाध्यविशेषचिन्तायामप्याह-सिद्धान्ती—**एवं तर्ह्यसिद्धं** इति । पूर्वपक्ष्याह—**नैषा**—इति, **'इत्येव भवितव्यं'**इत्यन्तम्। कार्यकालपक्षेऽपि त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तेर्विसर्जनीयसूत्रे भाष्ये वार्तिकखण्डकसिद्धान्तिनोक्तत्वात् यथोद्देशपक्षेण साधयितुं शक्यत्वाच्चेदं प्रयोजनं शिथिलमिति अत्र तदप्रवृत्तौ मानाभावाच्च 'श्रियंमन्यः' इत्येव रूपमित्याहुः ॥

---

( १२३६ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ३९ )

## २९२९ कारे सत्यागदस्य ॥ ६।३।७० ॥

( ६४६९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अस्तुसत्यागदस्य कार उपसंख्यानम् ॥ * ॥

( भाष्यम् ) **अस्तुसत्यागदस्य कार उपसंख्यानं कर्तव्यम्। अस्तुंकारः, सत्यंकारः, अगदंकारः ॥**

( प्रदीपः ) **अस्तुङ्कार इति।** अभ्युपगमकरणमुच्यते। **सत्यङ्कारः**—शपथकरणम्। अशपथेऽपि डाचं परत्वात् बाधित्वा कारशब्दे मुम् भवति। **अगदङ्कारः**—विषप्रतिपक्षद्रव्यकरणम् ॥

(उद्योतः) 'अस्तु' इति निपातोऽभ्युपगमे । तस्य भावघञन्तकारशब्देन समासमाश्रित्याह—**अभ्युपगमकरणमिति** ॥ समयः—

---

१ विधानसामर्थ्यादिति । अम्विधानसामर्थ्यात् न लुमतेत्यस्यानित्यत्वमाश्रित्याप्रवृत्तिरित्यर्थः। चो हेतौ ॥

२ तदभावे इति । अम्प्रत्ययवदित्यतिदेशादम्प्रत्ययाभावेऽपि कार्याणि प्रतिपद्यत इति भावः ॥

३ 'विधानसामर्थ्याद्धि लुकं न प्रतिपद्यते' इति प्रदीपाशयमाह—प्रतिलक्ष्यमिति ॥

४ तस्याः—तृतीयायाः ॥

५ 'इत्येवममागमः' इति क. पाठः ॥

६ 'बाधिष्यते' इति छ. पाठः ॥

७ 'परन्तपः। संयोगान्तलोपो न स्यात्' इत्येवमधिकः पाठः छ. पुस्तके, 'संयोगान्तलोपो न स्यात्' इत्येवं इतिशब्दोत्तरं पाठः ट. झ. पुस्तकयोः ॥

८ 'मन्यमिति भवितव्यं' इति छ. पाठः ॥

९ 'एवञ्च न परन्तप' इति ठ. पाठः ॥

१० 'सत्यंकारः' इत्युदाहरणं अ. क. पुस्तकयोर्न ॥

शपथः । डाचं–'सत्यादशपथे' इति प्राप्तम् । इदं[1] चिन्त्यम् । 'अथ च्व्यते उपपदे अणा भवितव्यमुत न'इति 'तत्रोपपदम्–'इतिसूत्रस्थ-भाष्यप्रामाण्येन च्विवदेवाणुत्पत्तेः पूर्वं डाचः प्राप्तेर्घञन्तेऽपि समास-प्रवृत्तिकाल एव डाचः प्रवृत्तिरिति । प्रतिपक्षः–विरोधी ॥

( ६४७० उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ भक्षस्य छन्दसि[2] ॥ * ॥

( भाष्यम् ) भक्षस्य च्छन्दस्युपसंख्यानं कर्तव्यम् । तस्य ते भक्षङ्कारस्य ।

छन्दसीति किमर्थम् ?

भक्षकारस्य तन्मतमिति ॥

( प्रदीपः ) भक्षङ्कारस्येति । यागशेषद्रव्यभक्षणस्य कर्तुरित्यर्थः ॥

( उद्द्योतः ) भक्षशब्देन विशिष्टं भक्षमुच्यते इत्याह—यागशेषेति ॥

( ६४७१ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ धेनोर्भव्यायाम्[3] ॥ * ॥

( भाष्यम् ) धेनोर्भव्यायामुपसंख्यानं कर्तव्यम् । धेनुम्भव्या ॥

( प्रदीपः ) धेनुम्भव्याशब्देन भविष्यन्ती धेनुरुच्यते । 'भव्यगेय–इति कर्तरि कृत्यः । धेनुर्भव्या–इति विशेषणसमासः॥

( उद्द्योतः ) भविष्यन्ती धेनुरिति । कालसामान्यविहितकृत्यस्यापि शब्दशक्तिस्वभावाद्भविष्यति काले वृत्तिरित्यर्थः ॥ विशेषणसमास इति । अत एव वचनाद्विशेषणस्य परनिपातः ॥

( ६४७२ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ लोकस्य पृणे ॥ * ॥

( भाष्यम् ) लोकस्य पृण उपसंख्यानं कर्तव्यम् । लोकम्पृणस्य धन्विनः[4] ॥

( प्रदीपः ) लोकम्पृणस्येति । पृणतिः पूरणार्थः । लोकस्य पूरकस्येत्यर्थः ॥

( ६४७३ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ इत्येऽनभ्याशस्य ॥ * ॥

( भाष्यम् ) इत्येऽनभ्याशस्योपसंख्यानं कर्तव्यम् । अनभ्याशमित्यम् ॥

( प्रदीपः ) इत्य इति । अनभ्याशं–दूरमित्यमस्येति समासः । दूरात्परिहर्तव्य इत्यर्थः ॥

( उद्द्योतः ) इत्यं–गन्तव्यम् 'एतिस्तुशास्वृ–इति क्यप् । तुक् ॥

( ६४७४ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ भ्राष्ट्राग्न्योरिन्धे ॥ * ॥

( भाष्यम् ) भ्राष्ट्राग्न्योरिन्ध उपसंख्यानं कर्तव्यम् । भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥

( ६४७५ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ गिलेऽगिलस्य ॥ * ॥

( भाष्यम् ) गिलेऽगिलस्योपसंख्यानं कर्तव्यम् । तिमिंगिलः ।

अगिलस्येति किमर्थम् ?

गिलगिलः ॥

( ६४७६ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ गिलगिले[5] च ॥ * ॥

गिलगिले चेति वक्तव्यम् । तिमिंगिलगिलः ॥

( प्रदीपः ) तिमिङ्गिलगिल इति । तिमेर्गिलगिल इति समासः । तिमिङ्गिलं गिलति–इति व्युत्पत्तौ नार्थ उपसंख्यानेन ॥

( उद्द्योतः ) दशयोजनविस्तारो मीनविशेष–स्तिमिः ॥ नार्थ इति । भाष्यवार्तिकप्रामाण्यादत्रार्थेऽस्यासाधुत्वमाहुः ॥

( ६४७७ उपसंख्यानवार्तिकम् ॥ ९ ॥ )

॥ * ॥ उष्णभद्रयोः करणे ॥ * ॥

( भाष्यम् ) उष्णभद्रयोः करण उपसंख्यानं कर्तव्यम् । उष्णंकरणम्, भद्रंकरणम् ॥

( ६४७८ उपसंख्यानवार्तिकम् ॥ १० ॥ )

॥ * ॥ सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा ॥ * ॥

( भाष्यम् ) सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड् वा भवतीति वक्तव्यम् ।

सूतपुत्री[6], सूतदुहिता–सूत ।

उग्रपुत्री, उग्रदुहिता–उग्र ।

राजपुत्री, राजदुहिता–राज ।

भोजपुत्री, भोजदुहिता–भोज ।

कुलपुत्री, कुलदुहिता–कुल ।

मेरुपुत्री, मेरुदुहिता–मेरु ॥

( उद्द्योतः ) भाष्ये—सूतोग्रराजेति । न चेदं शार्ङ्गरवादिगणे पुत्रशब्दपाठाद्व्यर्थम् । स[7] च 'प्रत्ययस्थात्–' इति सूत्रस्थ 'सूतका-पुत्रिका–'इति वार्तिकादावश्यक इति वाच्यम् । स्वरे भेदात् । ङीनन्तेन तत्पुरुषे सूतादिपुंशब्देभ्यः परत्वे[8] 'पुत्रः पुंभ्यः' इत्यनेन लिङ्गविशिष्ट-

---

[1] इदं–अशपथेऽपि डाचं परत्वाद्बाधित्वेति–कैयटोक्तम् । चिन्त्यत्वमुपपादयति—अथ च्व्यन्ते उत्तरपद इत्यादिना ॥

[2] एतदादिवार्तिकेषु 'उपसंख्यानम्' इत्यधिकं झ. पुस्तके दृश्यते, नैतदन्यत्रोपलभ्यते ॥

[3] ननु विशेषणसमासे भव्याशब्दस्य पूर्वनिपातापत्तिरत आह—अत एवेति ॥

[4] 'धन्विनः' इत्येतत् छ. पुस्तके न ॥

[5] छ. पुस्तके नैतद्वार्तिकम् ॥

[6] छ. पुस्तके केवलमुदाहरणानामेव पाठः, न तदन्ते सूतराजेत्यादीनाम् ॥

[7] ननु सूतोग्रराजेति वक्तव्यम्, शार्ङ्गरवादिगणे पुत्रशब्दो न पाठ्य इत्याशङ्क्याह—स चेति ॥

[8] परत्वे इति—पुत्रशब्दस्येति शेषः ॥

परिभाषया पुकारोकारोदात्तत्वम् । पुत्रडादेशे तु न तत्प्रवृत्तिः, सानुबन्धकत्वात् । अतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम् । कुलशब्दान्तबहुव्रीहौ पुंस्त्वे तत्पूर्वकेऽपि स्वरे विशेष इति दिक् ॥

( १२३७ विकल्पविधिसूत्रम् ॥ ६ । ३ । ३ आ. ४० )

## २९३१ रात्रेः कृति विभाषा ॥ ६ । ३ । ७२ ॥

( विभाषास्वरूपजिज्ञासाभाष्यम् )

**किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ?**
**कथं च प्राप्ते कथं वाऽप्राप्ते ?**
**यदि खितीत्यनुवर्तते, ततो नित्यं प्राप्ते ।**
**अथ नानुवर्तते, तदाऽप्राप्ते ॥**

( विभाषानिर्णयभाष्यम् )

**रात्रेरप्राप्ते[2] विभाषा । प्राप्ते नित्यो विधिः-रात्रिम्मन्यः । अप्राप्ते विभाषा-रात्र्यटः, रात्रिमटः ॥**

( प्रदीपः ) **प्राप्ते नित्य इति** । पूर्वविप्रतिषेधेनेति भावः ॥

(उद्द्योतः) ननु 'खिति'इति निवृत्तावपि प्राप्ते परत्वाद्विभाषया भाव्यमिति उभयत्र विभाषोचितेत्यत आह—**पूर्वविप्रतिषेधेनेति** ॥

( १२३८ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ४१ )

## २९३२ नलोपो नञः ॥ ६ । ३ । ७३ ॥

( नलोपाधिकरणम् )

( अनुबन्धप्रयोजनभाष्यम् )

**किमर्थं नञः सानुबन्धकस्य ग्रहणं क्रियते, न 'नस्य' इत्येवोच्येत ?**

**'नस्य' इतीयत्युच्यमाने 'कर्णपुत्रः-पर्णपुत्रः' इत्यत्रापि प्रसज्येत ।**

**नैष दोषः । 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येवमत्र न भविष्यति ।**

**एवमपि 'प्रश्नपुत्रः-विश्नपुत्रः' इत्यत्रापि प्राप्नोति ।**

**नैष दोषः । 'अननुबन्धकग्रहणे न सानुबन्धकस्य' इत्येवमस्य न भविष्यति ।**

**एवमपि 'वामनपुत्रः-पामानपुत्रः' इत्यत्रापि प्राप्नोति ।**

**तस्मात् सानुबन्धकग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) **किमर्थमिति** । चादिष्वननुबन्धक एव पठ्यताम्, स एव चेहानुक्रियतामिति भावः ॥

**अर्थवद्ग्रहण इति** । उणादीनामव्युत्पन्नत्वान्नस्यानर्थक्यम् । अव्युत्पत्तिपक्षाश्रयणे च नकारोऽपि न भवति, किं तर्हि ? णकारः । व्युत्पत्तिपक्षे हि णत्वस्य[3] पूर्वत्रासिद्धत्वान्नकारो भवति ॥

**तस्मादिति** । अथ क्रियमाणेऽपि सानुबन्धकग्रहणे 'स्त्रैणपुत्रः' इत्यत्र कस्मान्न भवति ? प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्वस्य त्वनन्यार्थत्वात् ॥

( उद्द्योतः ) नन्विह ञकाराभावे चादिषु सानुबन्धकस्य पाठो व्यर्थोऽत आह—**चादिष्विति** ॥

नन्वनयोरपि कृप्रकृतिक-नक्प्रत्ययान्तत्वात्कथं नस्यानर्थकत्वमत आह—**उणादीनामिति** ॥ आनर्थक्यमुपलक्षणमित्याह—**नकारोऽपि नेति** ॥

**अनन्यार्थत्वादिति** । एवञ्चानन्यार्थञित्वे चरितार्थं शास्त्रमन्यत्र न प्रवर्तत इत्यर्थः । इदं चिन्त्यम्, बीजाभावात् । तस्मात्स्त्रैणपुत्रादीनामनभिधानम्-इति भाष्याशयः । एतेन 'नैकधा'इत्यादौ निषेधार्थकनशब्द इति परास्तम् । एतद्भाष्यविरोधेन तस्य खपुष्पायमाणत्वात् । अन्यथा स एव प्रत्युदाहियेत भाष्ये-इति दिक् ॥

( ६४७९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ नञो[4] नलोपे अवक्षेपे तिङ्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) **नञो नलोपेऽवक्षेपे तिङ्युपसंख्यानं कर्तव्यम् । अपचसि वै त्वं जाल्म । अकरोषि वै त्वं जाल्म ॥**

( प्रदीपः ) **अवक्षेपे तिङीति** । अवक्षेपः-निन्दा ॥

( १२३९ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ४२ )

## २९३३ तस्मान्नुडचि ॥ ६ । ३ । ७४ ॥

( तस्मात्पदाक्षेपभाष्यम् )

**किमर्थं तस्मादित्युच्यते, न 'नुडचि'इत्येवोच्येत ?**

**'नुडचि'इतीयत्युच्यमाने नञ एव नुट् प्रसज्येत ॥**

(प्रदीपः) **नञ एवेति** । 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात् । तस्मादिति तूच्यमाने पञ्चमीनिर्देशसामर्थ्यात् 'तस्मादित्युत्तरस्य' इति परिभाषोपस्थानादजादेरुत्तरस्य पदस्य नुट् भवति । सप्तमीनिर्देशोऽप्यागमसंबन्धे युज्यते, अवयवत्वादागमस्यावयविन आधारत्वात् । संबन्धविवक्षायां तु षष्ठी भवति[5] ॥

( उद्द्योतः ) ननु तस्मादित्यस्याभावेऽपि आगमिन आधारत्वेन निर्देशादजादेरेव नुट् भविष्यतीत्यत आह—**तस्मिन्निति** ॥ ननु तत्करणेऽप्यनया परिभाषया नञ एव स्यादत आह—**तस्मादिति** । सप्तमीनिर्देशस्तु 'यस्मिन्विधिः-' इति परिभाषाप्रवृत्त्या चरितार्थ इति भावः ॥ नन्वागमविधौ कथमागमिनः सप्तमीनिर्देशोऽत आह—**सप्तमीति** । यद्यप्यवयवा अवयविन आधारा इति तान्त्रिकाः, तथापि

---

१ 'चाप्राप्ते' इति च. झ. पाठः ॥
२ 'रात्रेरप्राप्ते' इति वार्तिकमिति छ. झ. पाठः । 'रात्रेरप्राप्ते विभाषा' इति क. छ. झ. पाठः ॥
३ अ, क. पुस्तकयोः 'नत्वस्य' इति पाठः । णत्वस्येति पाठे-कर्णपुत्र इत्यत्र कृधातोर्नक्प्रत्यये णत्वस्यासिद्धत्वान्नकार एवावशिष्यत इति नलोपः प्राप्त इति भावः । नत्वस्येति पाठस्तु सुधीभिर्विचारणीयः ॥
४ अ. पुस्तके नैतद्वार्तिकम् ॥
५ 'भवतीति' इति च. झ. पाठः ॥

लौकिकानां 'वृक्षे शाखा' इति व्यवहारादेवमुक्तम् । वस्तुतः षष्ठयर्थे एषा सप्तमी सौत्री 'यस्मिन्विधिः—' इति परिभाषाप्रवृत्तिफलिकेति बोध्यम् ॥

( नुटः पूर्वान्तत्वेन सामाधानभाष्यम् )

एवं तर्हि पूर्वान्तः करिष्यते,तत्रायमप्यर्थः-'तदोः सः सावनन्त्ययोः' ( ७।२।१०६ ) इति तदोर्ग्रहणं न कर्तव्यं भवति । तत्र हि तवर्गानिर्देश एतत्प्रयोजनम्-इह मा भूत्—अनेषः करोति-इति ।

यावता पूर्वान्तोऽयम्[1], न दोषो भवति ॥

( प्रदीपः ) तवर्गानिर्देश इति । 'तदोः' इत्यपनीय 'तोः' इत्येवमनिर्देशे इत्यर्थः ॥ अनेषः करोतीति । परादावपि नुटि बहिरङ्गत्वात्तस्यासिद्धत्वात्[2] 'तोः सः सौ' इत्यपि क्रियमाणे सत्वं न भविष्यतीति चिन्त्यमेतत्[3] ॥

( उद्योतः ) चिन्त्यमेतदिति । बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्गत्वाच्चिन्त्यमेवं चिन्त्यम् ॥

( सिद्धान्तभाष्यम् )

नैवं शक्यम् । इह हि-अनुष्ण इति 'नलोपः प्रातिपदिकान्तस्य' ( ८।२।७ ) इति नलोपः प्रसज्येत ।

नुग्वचनान्न भविष्यति ।

ङमुट् तर्हि प्राप्नोति ।

तस्मात्परादिः कर्तव्यः । परादौ च क्रियमाणे 'तस्मात्' इति च वक्तव्यम् ॥

( १२४० विधिसूत्रम् ॥ ६ । ३ । ३ आ. ४३ )

## २९३५ एकादिश्चैकस्य चादुक् ॥ ६ । ३ । ७६ ॥

( आदुक्स्थापकभाष्यम् )

किमर्थमादुगुच्यते न अदुगेवोच्येत ?

का रूपसिद्धिः ?

'एकान्नविंशतिः-एकान्नत्रिंशत्' सवर्णदीर्घत्वेन सिद्धम् ।

न सिध्यति । 'अतो गुणे' ( ६।१।९७ ) इति पररूपत्वं प्राप्नोति[5] ॥

एवं तर्ह्यदुट् करिष्यते ।

अदुट् चाशक्यः कर्तुम् । आनुनासिक्यं हि न स्यात् ।

यदि तत् 'यरोऽनुनासिकेऽनुनासिको वा' (८।४।४५ ) इति, पदान्तस्येत्येवं तत् ।

किं[6] पुनः कारणं 'पदान्तस्येत्येवं तत्' इति ?

इह मा भूत्—ब्रध्नः, बुध्नः, बध्नाति, गृंभ्णाति[7]- इति ॥

एवन्तर्ह्यनुट् करिष्यते ।

अनुट् चाशक्यः कर्तुम् ।

विभाषयाऽऽनुनासिक्यम् । तेनेदमेव रूपं स्यात्—एकान्नविंशतिरिति । इदं न स्यात्—एकादूनविंशतिरिति ॥

( प्रदीपः ) तुल्यायामपि संहितायां प्रतिपत्तिलाघवाय वृत्तिकारैराडुगाश्रितः, भाष्यकारेण तु न्यायादडुगेव स्थापितः ॥

एवं तर्हीति । अदुटि क्रियमाणे 'एकस्य' इति न वक्तव्यम्, नञः प्रकृतत्वादागमित्वात् । अकारस्य च पदान्तत्वात्पररूपाप्रसङ्गः ॥

( उद्योतः ) ननु संहितया[8] निर्देशस्य साम्यात् 'आदुगुच्यते' इत्यनुपपन्नमत आह—तुल्यायामपीति । एवञ्च 'अदुगुच्येत' इत्यस्य व्याख्यायेत इत्यर्थ इति भावः ॥ प्रतिपत्तीति । 'यं विधिं' इत्यादिन्यायानाश्रयणमेवात्र प्रतिपत्तिलाघवम् ॥ ननु टित्वे एकशब्दस्यादिः स्यात्-इति रूपं न सिध्येदत आह—अदुटीति ॥

( सिद्धान्तभाष्यम् )

अस्तु तर्ह्यदुगेव ।

ननु चोक्तं 'अतो गुण इति पररूपत्वं प्राप्नोति' इति ।

नैष दोषः। अकारोच्चारणसामर्थ्यान्न भविष्यति।

यदि तर्हि प्राप्नुवन् विधिरकारोच्चारणसामर्थ्यात् बाध्यते, सवर्णदीर्घत्वमपि तर्हि न प्राप्नोति ।

यं विधिं प्रत्यकारोच्चारणमनर्थकं भवति स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । पररूपं च प्रत्यकारोच्चारणमनर्थकम्[10], सवर्णदीर्घत्वस्य पुनर्निमित्तमेव ॥



१ 'यावता पूर्वान्तः सोऽप्यदोषो भवति' इति छ. झ. पाठः । 'पूर्वान्तेऽयं न दोषो' इति भ. क. पाठः ॥
२ 'बहिरङ्गत्वान्नस्या' इति झ. पाठः ॥
३ चिन्त्यमिति । तत्रेयं चिन्ता—'इच एकाच-' इति सूत्रे उत्तरपदाधिकारे बहिरङ्गपरिभाषा न प्रवर्तत इति कैयटमते सिद्धान्तयिष्यमाणत्वात् असिद्धत्वाभावात् सत्वं स्यादेव-इति सुष्ठूक्तं भाष्यकृता ॥
४ 'चिन्त्यमेव विचिन्त्यम्' इति झ. पाठः ॥
५ 'न सिध्यति । पररूपत्वं प्राप्नोति' इति भ. पाठः ॥
६ 'किं पुनः कारणं पदान्तस्येत्येवं तदिति' इत्यस्य छ. झ. पुस्तकयोर्न पाठः ॥
७ 'गृभ्णाति' इति छ. पुस्तके न । ट. पुस्तके 'गृह्णाति' इति पाठः ॥
८ 'संहितया' इति ख. घ. झ. पाठः ॥
९ वृत्तिकारैः—भाष्यतः पूर्वतनैर्वृत्तिकारैर्न तु वार्तिककारैः ॥
१० 'प्रत्युपदेशोऽनर्थकः' इति छ. पाठः ॥

( १२४१ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ४४ )

## २९३७ सहस्य सः संज्ञायाम् ॥ ६ । ३ । ७८ ॥

( सादेशाधिकरणम् )

( प्रदीपः ) 'निपाता आद्युदात्ताः' इति सहशब्द आद्युदात्तः ॥

( ६४८० पूर्वपक्षिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सहस्य हलोपवचनम् ॥ * ॥

( भाष्यम् ) सहस्य हलोपो वक्तव्यः ॥

[1]सादेशे हि सति स्वरे दोषः[2] । आन्तर्यत उदात्तानुदात्तयोः स्थाने स्वरित आदेशः प्रसज्येत । सपुत्रः । सभार्यः ॥

( सिद्धान्तभाष्यम् )

स तर्हि लोपो वक्तव्यः ।

न वक्तव्यः । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ।

एवमप्युपदेशिवद्भावो वक्तव्यः । स यथैव निपातनस्वरः प्रकृतिस्वरं बाधते, एवं समासस्वरमपि बाधेत-सेष्टि, सपशुबन्धम्-इति ॥

( प्रदीपः ) प्रकृतिस्वरस्येति । आन्तर्यतः प्राप्तस्य स्वरितस्येत्यर्थः ॥

एवमपीति । तेनैतदाद्युदात्तत्वं सपुत्र इत्यादौ बहुव्रीहौ पूर्वपदप्रकृतिस्वरविधौ श्रूयते । अव्ययीभावे तु समासान्तोदात्तत्वमेव भवति ॥

( उद्योतः ) आन्तर्यत इति । प्रकृतिः-स्थानी, तन्निमित्तस्वर आन्तर्यतो य आदेशस्य प्राप्तस्तस्येति भाष्यार्थ इति भावः ॥

ननु निपातनस्वरस्य समासस्वरेण बाधे क्व निपातनस्वरश्रवणमत आह—तेनेति ॥ पूर्वपदप्रकृतिस्वरविधौ । तद्विधाने सतीत्यर्थः । 'सेष्टि' 'सपशुबन्धं' इत्यव्ययीभावौ । यद्यपि 'पादस्य पदा–' इति सूत्रे 'आद्युदात्तस्याद्युदात्त आदेशः प्राप्नोति' इत्युक्तम्, तथापि तत्रानेकाच्त्वात्तथा वक्तुमौचित्येऽपि इहैकाच्त्वात्स्वरितः स्यादित्युक्तमिति बोध्यम् ॥

---

( १२४२ अधिकारसूत्रम् ॥ ६ । ३ । ३ आ. ४५ )

## २९३८ ग्रन्थान्ताधिके च ॥ ६।३।७९ ॥

( सूत्राक्षेपभाष्यम् )

[3]ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात् ।

'अव्ययीभावे चाकाले' इत्येव सिद्धम् ।

( सिद्धान्तभाष्यम् )

यस्तर्हि कालोत्तरपदो ग्रन्थान्तस्तदर्थमिदं वक्तव्यम् । सकाष्ठं ज्योतिषमधीते । सकलम्, समुहूर्तम् ॥

( प्रदीपः ) यस्तर्हीति । बहुव्रीहौ परत्वाद्विकल्पेन भाव्यमित्यव्ययीभाव एवोदाहरणम् ॥ सकाष्ठमिति । काष्ठादयः शब्दाः कालविशेषवाचिनः उपचारात्तदर्थे ग्रन्थे वर्तन्ते, तत्रान्तवचनेऽव्ययीभावः ॥

( उद्योतः ) ननु 'सपशुबन्धो वेदोऽधीते' इत्यादिबहुव्रीहावपि ग्रन्थान्ते सहशब्दस्य वृत्तिसंभवात्स किं नोदाहृतोऽत आह—बहुव्रीहाविति ॥ काष्ठादय इति । अष्टादश[4] निमेषाः–काष्ठा, तास्त्रिंशत्–कला, त्रिंशत्कलाः–क्षण इत्यादि । तदर्थे ग्रन्थे–तत्प्रतिपादके ग्रन्थे ॥

---

( १२४३ विकल्पसूत्रम् ॥ ६ । ३ । ३ आ. ४६ )

## २९४१ वोपसर्जनस्य ॥ ६ । ३ । ८२ ॥

( ६४८१ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् ॥ * ॥

( भाष्यम् ) उपसर्जनस्य वावचने सर्वप्रसङ्गः, सर्वस्योपसर्जनस्य सादेशः प्राप्नोति ।

अस्यापि प्राप्नोति–सहयुध्वा, सहकृत्वा ।

किं कारणम् ?

अविशेषात् । न हि कश्चिद्विशेष उपादीयते—[5]एवंजातीयकस्य सहशब्दस्योपसर्जनस्य सादेशो भवतीति ।

अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥

( ६४८२ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु बहुव्रीहिनिर्देशात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

बहुव्रीहिनिर्देशात् ।

बहुव्रीहिनिर्देशः कर्तव्यः ॥

( उद्योतः ) भाष्ये—बहुव्रीहिनिर्देशः कर्तव्य इति । 'वोपसर्जनस्य बहुव्रीहौ' इति न्यासः कार्य इत्यर्थः ॥

---

१ अत्र 'सादेशे हि स्वरे दोषः' इत्येतत् वार्तिकं दृश्यते च. छ. ट. पुस्तकेषु ॥

२ 'दोषः स्यात्' इति भाष्यपाठः च. छ. झ. पुस्तकेषु ॥

३ 'ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात्' इति वार्तिकं च. छ. झ. पुस्तकेषु । तदनुकूलश्च कुण्डलनारूपः 'ग्रन्थान्ते वचनमनर्थकम् । किं कारणम् ? अव्ययीभावेन कृतत्वात्' इत्येवमधिकः च. झ. छ. पुस्तकेषु भाष्यपाठः ॥

४ 'अष्टादशनिमेषाः–काष्ठाः, तास्त्रिंशत्–कलाः, त्रिंशत्कला–क्षणः' इति काष्ठाकलाशब्दयोर्बहुवचनान्तत्वं सर्वेषु पुस्तकेषु, तदुपयोगश्चिन्तनीयः ॥

५ 'एवंजातीयकस्य सादेशो' इति छ. पाठः ॥

( सूत्रार्थसंपादकभाष्यम् )

**एवमपि सहयुध्वप्रियः सहकृत्वप्रियः-अत्र प्राप्नोति, बहुव्रीहौ यदुत्तरपदमित्येवं विज्ञास्यते ।**

**नन्वेतदपि बहुव्रीहावुत्तरपदम् ।**

**एवन्तर्हि बहुव्रीहौ यदुपसर्जनमित्येवं विज्ञास्यते ।**

**[[1] नन्वेतदपि बहुव्रीहावुपसर्जनम् ।**

**एवं तर्हि नैवं विज्ञायते-बहुव्रीहौ यदुपसर्जनमिति ।**

**किं तर्हि ? ]**

**बहुव्रीहौ च यदुपसर्जनम्, बहुव्रीहिं प्रति च यदुपसर्जनम् ॥**

( प्रदीपः ) **नन्वेतदपीति** । ननु बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवति, व्यवधानात् । युध्वकृत्वशब्दयोश्च बहुव्रीहावनुत्तरपदत्वात् । एवं तर्हि बहुव्रीहिग्रहणस्य कर्त्तव्यत्वेनास्थितत्वान्नैतद्विचारितम् ॥

( उद्द्योतः ) **नन्विति** । एवं च बहुव्रीहिग्रहणस्योत्तरपदविशेषणत्वे सहयुध्वप्रियादौ दोषाभावे 'नन्वेतदपि' इति भाष्यं न युक्तमिति भावः । [3] युध्वकृत्वशब्दयोश्चोपपदसमासतत्पुरुषोत्तरपदत्वमिति तात्पर्यम् । [4] बहुव्रीहौ घटकं यदुत्तरपदमित्यर्थ इति भाष्याशय इत्यन्ये ॥

भाष्ये—**बहुव्रीहिं प्रति चेति** । बहुव्रीह्यर्थान्यपदार्थे विशिष्टमुपसर्जनं न तु सहशब्द इत्यर्थः । बहुव्रीहिग्रहणसामर्थ्यात्तदर्थ प्रत्येव यदुपसर्जनमित्यर्थ इति भावः ॥

( सूत्रेण सिद्धार्थत्वबोधकभाष्यम् )

**स तर्हि बहुव्रीहिनिर्देशः कर्तव्यः ।**

**न कर्तव्यः ।**

**इह कश्चित्प्रधानानामेव समासः, कश्चिदुपसर्जनानामेव, कश्चित्प्रधानोपसर्जनानामेव ।**

**तत्र उपसर्जनानामेव समासस्तदुपसर्जनस्येदं ग्रहणम् ॥**

**अथवा—अकारो मत्वर्थीयः । तद्यथा-तुन्दः, घाट इति ॥**

**अथवा—मतुब्लोपोऽत्र द्रष्टव्यः । तद्यथा-पुष्यका येषां त इमे पुष्यकाः, कालका येषां त इमे कालका इति ॥**

(प्रदीपः) **तत्र उपसर्जनानामिति** । सहशब्दस्य तावदसत्ववाचित्वाद्द्वन्द्वाभावः, अन्यस्मिंस्तु समासे सहशब्द उपसर्जनमेवेत्युपसर्जनग्रहणसामर्थ्यात्सर्वोपसर्जनावयवः समास उपसर्जनशब्देन, मत्वर्थीयाकारान्तेन वा-उच्यते ॥

( उद्द्योतः ) **सहशब्द उपसर्जनमेवेति** । ननु सहपूर्वाह्णमित्यादौ साहश्येऽव्ययीभावे सहशब्दस्य प्राधान्यमस्तीति नेदं युक्तमिति चेत्, न । उपसर्जनस्य-इति उत्तरपदाक्षिप्तसमासस्यावयवद्वारकं विशेषणम्, व्याख्यानात् । तच्च सहशब्देन द्वन्द्वाभावात्सर्वस्यापि तद्घटितसमासस्यास्तीति सामर्थ्यादुपसर्जनसर्वावयवकस्य ग्रहणमित्याशयात् ॥

भाष्ये—**तदुपसर्जनस्येति** । [6] तदर्थमात्रोपसर्जनस्येत्यर्थः ॥

उपसर्जनसर्वावयवक इत्यर्थं स्फुटं लब्धुमाह—भाष्ये—**अथवाऽकार इत्यादि** ॥ तद्व्याचष्टे—**मत्वर्थीयेति** । सर्वोपसर्जनकः समास उपसर्जनपदेन लक्षणया, मत्वर्थीयाकारान्तेन वोच्यत इत्यन्वयः ॥

भाष्ये—**अथवा मतुब्लोप इति** । सौत्रो मतुब्लोपः । अनेन मत्वर्थे लक्षणयाऽसाधुत्वं बोधितम् । अत्रापि पक्षद्वये [7] उपसर्जन[8]सर्वावयवकग्रहणं मत्वर्थीयसामर्थ्याद्बोध्यम् ॥

( १२४४ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ४७ )

## २९४२ प्रकृत्याशिषि ॥ ६ । ३ । ८३ ॥

( ६४८३ पर्युदासोपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ [9] प्रकृत्याशिष्यगवादिषु ॥ * ॥

**( भाष्यम् ) प्रकृत्याशिष्यगवादिष्विति वक्तव्यम् । इह मा भूत्-स्वस्ति भवते सगवे सवत्साय सहलायेति ॥**

( प्रदीपः ) 'अगोवत्सहलेषु' इति [10] भाष्यवार्तिकदर्शनात्सूत्रे केनचित्प्रक्षिप्तम् ॥

( उद्द्योतः ) **भाष्यवार्तिकेति** । वार्तिकस्थादिशब्देन भाष्योदाहरणात् वत्सहलयोरेव सङ्ग्रह इति भावः ॥

( १२४५ निषेधसूत्रम् ॥ ६ । ३ । ३ आ. ४८ )

## २९४५ चरणे ब्रह्मचारिणि ॥ ६ । ३ । ८६ ॥

( वार्तिकावतरणभाष्यम् )

**[11] अत्र किं निपात्यते ?**

---

१ [ ] चिह्नान्तर्गतः पाठः अ. क. पुस्तकयोर्न ।

२ 'उपसर्जनम् । एवं तर्हि बहुव्रीहौ च-' इति ट. पाटः ॥

३ 'नन्वेतदपि बहुव्रीहावुत्तरपदं' इति भाष्यस्य युक्तत्वाभावे कारणमाह—युध्वकृत्वशब्दयोश्चेति ॥

४ नन्वेतदपीति भाष्यस्य-प्रियशब्दो बहुव्रीहावुत्तरपदमित्याशयेन प्रदीपव्याख्यानम् । वस्तुतस्तु बहुव्रीहिघटकं यदुत्तरपदमित्याशयो भाष्यस्य । तेन च युध्वकृत्वशब्दयोर्बहुव्रीहिघटकत्वादुत्तरपदत्वाच्च नायुक्तत्वं तदाह—बहुव्रीहाविति ॥

५ छ. पुस्तके 'एव'शब्दरहितः पाठः ॥

६ तदर्थमात्रोपसर्जनस्य—अन्यपदार्थमात्रोपसर्जनस्येति भावः ॥

७ पक्षद्वये—भाष्योक्त-अथवाऽकारो मत्वर्थीयाः-अथवा मतुब्लोपो-इति पक्षद्वय इत्यर्थः ॥

८ 'सर्वावयवकं ग्रहणं' इति झ. पाठः ॥

९ प्राचीनैः प्रकृत्याशिष्यगोवत्सहलेषु-इति सूत्रं पठ्यते, तद्विषये प्राचीनाशयं तदयुक्तत्वं चाह—अगोवत्सहलेष्वितीति ॥

१० 'भाष्ये वार्तिकदर्शनात्' इति भ. पाठः ॥

११ 'चरणे किं निपात्यते' इति छ. पाठः । 'अत्र चरणे किं' इति ट. पाठः ॥

(प्रदीपः) सब्रह्मचारिशब्देन चरणेन तुल्य उच्यते । अत एव चरणे सभावो विधीयते । तत्र ब्रह्मणो ग्रन्थत्वाच्चर्यमाणता न संभवतीति निपातनमाश्रयितव्यमिति मत्वा **प्रश्नः-अत्रेति**॥

(उद्योतः) ननु चरणेऽभिधेये ब्रह्मचारिण्युत्तरपदे समानस्य सभावविधानात् 'किं निपात्यते' इति प्रश्नासामञ्जस्यमाशङ्क्य ब्रह्मचारिशब्दविषयमेतच्चोद्यमित्याह—**सब्रह्मचारिशब्देनेति** । चरणशब्देन शाखाध्यायी उच्यते, तेन तुल्यत्वं तदध्येयतुल्याध्येयत्वेन । अयं चार्थो ब्रह्मचारिशब्दनिपातनाश्रयणं विना न लभ्यत इत्याह—**तत्रेति** ॥ **ग्रन्थत्वादिति** । शब्दरूपत्वाच्चरतिकर्मत्वासंभव इत्यर्थः ॥

(६४८४ निपातनबोधकवार्तिकम् ॥ १ ॥)

**॥ * ॥ ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च ॥ * ॥**

**(भाष्यम्) ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिः प्रत्ययो व्रतलोपश्च निपात्यते । समाने ब्रह्मणि [1]व्रतचारीति-सब्रह्मचारी ॥**

(प्रदीपः) **ब्रह्मण्युपपद इति** । अवयवनिपातनद्वारेण विशिष्टेऽर्थे समुदायस्यैव साधुत्वमन्वाख्येयमिति मत्वा समुदायमेव निपात्यत्वेनोपन्यस्यति । **समाने**-सा[2]धारणे **ब्रह्मणि**-वेदे यो व्रतं चरति स सब्रह्मचारीत्यर्थः ॥ **व्रतलोपश्चेति** । गतार्थत्वादप्रयोग एव व्रतशब्दस्य लोपः । ब्रह्मशब्देन हि तादर्थ्याद्व्रतमुच्यते । ब्रह्मणश्च समानत्वात्समानो ब्र[3]ह्मचारीत्युच्यते ॥

(उद्योतः) नन्वेवं समुदायस्य निपात्यत्वेन निर्देशो न युक्तः, अवयवस्यैव तत्त्वात्-अत आह—**अवयवनिपातनेति** ॥ **ब्रह्मणश्चेति** । अवयवसमानत्वात्समुदायार्थस्य समानत्वम् । समानो ब्रह्मचारीति विग्रह इत्यर्थः । सूत्रे 'चरण'शब्दः शाखावाची । चरणे समानत्वेन गम्ये इत्यर्थ इति भावः । अयमेव चार्थो निपातनोक्तिद्वारा भगवतोक्त इति तात्पर्यम् ॥

---

(१२४६ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ४९)

## २९४८ दृग्दृशवतुषु ॥ ६ । ३ । ८९ ॥

(६४८५ उपसंख्यानवार्तिकम् ॥ १ ॥)

**॥*॥ दृग्दृशवतुषु दृक्ष उपसंख्यानम् ॥*॥**

**(भाष्यम्) दृग्दृशवतुषु दृक्ष उपसंख्यानं कर्तव्यम् । सद[4]क्षासः, प्रतिसदृक्षासः ॥**

(प्रदीपः) **सदृक्षास इति** । दृशेः क्सो वक्तव्यः । जसः 'आज्जसेरसुक्'इत्यसुगागमः ॥

---

(१२४७ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५०)

## २९५२ सर्[5]मः समि ॥ ६ । ३ । ९३ ॥

(१२४८ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५१)

## २९७५ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ६ । ३ । ११६ ॥

(पूर्वपदादेशाधिकरणम्)

(क्विग्रहणानर्थक्यबोधकभाष्यम्)

**किमर्थमश्वतिनह्यादिषु क्वि[6]ग्रहणं क्रियते ।**

**इह मा भूत्-समश्वनम्, उपनहनम् ।**

**नैतदस्ति प्रयोजनम् । 'उत्तरपदे' इति वर्तते । न चान्तरेण क्विपमश्वतिनह्यादय उत्तरपदानि भवन्ति ।**

**तत्रान्तरेण क्विब्ग्रहणं क्विबन्त एव भविष्यति ।**

**तदादिविधिना प्राप्नोति ।**

**अत उत्तरं पठति—**

(प्रदीपः) विचारस्य समानत्वात् 'नहि-' आदिग्रहणं कृतम् ॥ **तदादिविधिनेति** । 'अतः कृकमि-'इत्यादौ धातुग्रहणे दृष्टस्तदादिविधिरिति भावः ॥

(उद्योतः) प्रदेशान्तरस्थ'नहिवृति-'इत्यनेनास्य विचारः कथमत आह—**विचारस्येति** ॥

भाष्ये—**न चान्तरेण क्विपमिति** । क्विब्ग्रहणं क्विन्विचोरुपलक्षणम् । अत एव सू[7]त्रे 'वप्रत्यये' इति चरितार्थमिति **केचित्** ॥

नन्वल्ग्रहणाभावात् कथं तदादिविधिरत आह—**अतः कृकमीति** ॥

(६४८६ क्विब्ग्रहणस्य ज्ञापकत्वबोधकवार्तिकम् ॥ १ ॥)

**॥*॥ अश्वतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन् विधिस्तदादावल्ग्रहणे ॥ * ॥**

**(भाष्यम्) अश्वतिनह्यादिषु क्विब्ग्रहणमनर्थकम् ।**

**किं [8]कारणम् ?**

---

१ 'व्रतं चरतीति संब्रह्मचारी' इति छ. झ. पाठः ॥

२ 'साधारणे वेदे' इत्येव ठ. पाठः ॥

३ 'ब्रह्मचारी स ब्रह्मचारीत्युच्यते' इति च. झ. पाठः ॥

४ 'सदृक्षासः' इत्युदाहरणप्रदर्शनादृक्षेपरतः सादेशस्य छान्दसत्वमिति भाष्याशयः । 'प्रतिसदृक्षासः' इत्युदाहरणाच्च मध्यमपदत्वेऽपि समानस्य सादेशः ॥

५ ननु 'विष्वग्देवयोश्च-' (६।३।९२) इत्यतः प्राक् 'समः समि' (६।३।९३) इत्यस्य व्याख्यानं नोचितम्, अष्टाध्यायीपाठक्रमेणैव सूत्राणां व्याख्यातत्वात्-इति चेन्न । विष्वक्देवयोरिति सूत्र उद्द्योते भाष्यकृद्भिः 'समः सम्यश्वतावप्रत्यये' 'विष्वक्देवयोश्च टेरद्रि' 'सहस्य सध्रिः' एवमेव सूत्रपाठाश्रयणस्योक्तत्वात् ॥

६ 'क्विब्ग्रहणं' इति च. छ. ट. झ. पाठः ॥

७ सूत्रे इति । विष्वक्देवयोश्च टेरद्र्यश्वतौ वप्रत्यय इति सूत्रे ॥

८ 'कारणं ? यस्मिन् विधिस्तदादावल्ग्रहण एव भवति' इति छ. पाठः ॥

यस्मिन् विधिस्तदादावल्ग्रहणे । अल्ग्रहणेष्वेत-[1]द्भवति । न चेदमल्ग्रहणम् ।

एवं तर्हि सिद्धे सति यदञ्चतिनह्यादिषु क्विब्ग्रहणं करोति तज्ज्ञापयत्याचार्यः-अन्यत्र धातुग्रहणे तदादिविधिर्भवतीति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इत्यत्र 'अयस्कृत्, अयस्कार' इत्यपि सिद्धं[2] भवति ॥

( प्रदीपः ) एवं तर्हीति । अनल्ग्रहणेऽपि धातुग्रहणे तदादिविधिर्भवतीति ज्ञाप्यते । स च तदन्तविधिवत् विधिविधानविधिभाक्संनिपाते[3] भवति । तत्र 'अतः कृकमि-'इत्यत्र समासानुवृत्त्या समासाक्षिप्तमुत्तरपदं करोतिना विशेष्यते-इति भवति तदादिविधिः । सुड्विधौ[4] तु विशेष्यासंनिधानात्तदादिविध्यभावेऽन्तरङ्गत्वं धातूपसर्गाश्रयत्वात्सुट उच्यते ॥

अयस्कृदयस्कार इत्यपीति । उभयमपीत्यर्थः । अन्यथाऽयस्कृदित्यत्रैव स्यात् ॥

( उद्द्योतः ) ज्ञाप्यत इति । एवं च 'समञ्चनम्'इत्यादिव्यावृत्तये क्विग्रहणमिति भावः ॥ नन्वेवं सुड्विधावपि तदादिग्रहणापत्तौ प्रागुक्तं सुटोऽन्तरङ्गत्वं हीयेतेत्यत आह—स च तदन्तेति ॥ विधिविधानविधिभाक्सन्निपात इति । विधिः-विधेयं । विधानशब्दः करणल्युडन्तो विशेषणपरः । विधिभाक्-विशेष्यमित्यर्थः ॥ ननु विनाऽपि ज्ञापकेनायस्कृतः सिद्धेस्तदुपन्यासोऽयुक्तोऽत आह—अन्यथेति । दृष्टान्तार्थं[5] तदुपादानमिति भावः ॥

( १२४९ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५२ )

## २९५१ विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ ६ । ३ । ९२ ॥

( १२५० विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५३ )

## २९५४ सहस्य सध्रिः ॥ ६ । ३ । ९५ ॥

( ६४८७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) अद्रिसध्र्योरन्तोदात्तत्वं वक्तव्यम् । किं प्रयोजनम् ?

कृत्स्वरनिवृत्त्यर्थम् । कृत्स्वरो मा भूदिति । विष्वद्र्यङ्, विष्वद्र्यञ्चौ, विष्वद्र्यञ्चः । सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः ॥

( प्रदीपः ) विष्वद्र्यङिति । 'उदात्तस्वरितयोः-'इति स्वरितोऽञ्चत्यकारो भवति ॥

( उद्द्योतः ) ननु विष्वद्र्यङादौ यणेकारस्य निवृत्तेः स्वरश्रवणाभावात्किं निपातनेनेत्यत आह—उदात्तस्वरितयोरिति । अन्यथा कृत्स्वरेणोदात्त एव श्रूयेतेति भावः । 'सा कद्रीची-'इत्यादावकारलोपे त्वस्यैव स्वरस्यावस्थानं बोध्यम् । 'समः सम्यञ्चताव-प्रत्यये' 'विश्वग्देवयोश्च टेरद्रिः' 'सहस्य सध्रिः'इति सूत्रपाठ इति एतद्भाष्यात्प्रतीयते ॥

( प्रतिषेधभाष्यम् )

तत्र[6] छन्दसि स्त्रियां प्रतिषेधो वक्तव्यः । विश्वाची, घृताची[7] ।

यदि छन्दसि स्त्रियां प्रतिषेध उच्यते कथं-'सा कद्रीची'[8] ?

एवन्तर्हि 'छन्दसि स्त्रियां बहुलम्'इति वक्तव्यम् ॥

( १२५१ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५४ )

## २९५६ द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ६ । ३ । ९७ ॥

( ६४८८ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ समाप ईत्वप्रतिषेधः ॥ * ॥

( भाष्यम् ) समाप ईत्वंप्रतिषेधो[9] वक्तव्यः । समापं नाम देवयजनम् ॥

अपर आह-ईत्वमनवर्णादिति वक्तव्यम् । समीपम्, अन्तरीपम् ।

इह मा भूत्-प्रापम्, परापम् ॥

( १२५२ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५५ )

## २९५७ ऊदनोर्देशे ॥ ६ । ३ । ९८ ॥

( दीर्घोच्चारणप्रयोजनभाष्यम् )

दीर्घोच्चारणं किमर्थम् ?

---

१ 'अल्ग्रहणे ह्येतत्-' ट. पाठः ॥

२ 'अतः कृकमीत्यत्र अयस्कृत्' इति छ. पाठः ॥

३ 'विशेषणविशेष्यभावसन्निपाते' इति ट. झ. पाठः । अत्रोद्धृतस्तु अ. क. पुस्तकयोः स्फुटतयोपलभ्यते । उद्द्योते तस्यैव व्याख्यानाच्च सोऽत्रादृतः ॥

४ सुड्विधौ-सुट्कात्पूर्व इति सूत्रे । अत्रोत्तरपदाधिकाराभावेन समासानुवृत्तेरभावेन वा विशेष्यासन्निधानम् । तत्र हि सूत्रे भाष्ये 'एवं च कृत्वा सुट् सर्वतोऽन्तरङ्गतरको भवति । कात्पूर्वग्रहणं चापि शक्यमकर्तुम्' इत्युक्तम् । तत्र हि तदादिविधौ सुटोऽन्तरङ्गत्वं भज्येतेति भावः ॥

५ दृष्टान्तार्थमिति । यथाऽयस्कृदित्यत्रातः कृकमीति भवति तथाऽयस्कार इत्यत्रापि ज्ञापनेन सत्वं सिध्यतीति भावः ॥

६ 'तत्र छन्दसि स्त्रियां प्रतिषेधः' इति वार्तिकमधिकं छ. झ. ट. पुस्तकेषु ॥

७ 'घृताची' इत्युदाहरणं अ. क. पुस्तकयोर्न ॥

८ सा कद्रीची कं स्विदर्धं परागात्क्व स्वित्सूते नहि यूथे अन्तः । ऋ. मं. १ सू. १६४ ऋ. १७ ) अत्र कद्रीची न स्यात् ॥

९ 'ईत्वस्य प्रतिषेधः' इति छ. ट. पाठः ॥

न 'उदनोदेशे' इत्येवोच्यते ?

का रूपसिद्धिः ?

अनूपम्, सवर्णदीर्घत्वेन सिद्धम् ।

न सिद्ध्यति । अवग्रहे हि दोषः स्यात् ॥

( प्रदीपः ) अवग्रहे दोषः स्यादिति । 'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्—यथालक्षणं पदं कर्तव्यम्' इति प्रदेशान्तरोक्तेनैतत् विरुध्यते ॥

( उद्योतः ) एतद्विरुध्यत इति । एवञ्च दीर्घोच्चारणं नात्यावश्यकम् । अत एव 'अनूपे गोमान्'इत्यादौ ऋग्वेदे पदपाठे नावगृह्णन्ति । यत्रावग्रहः क्रियते तत्रैतत्पदीयावग्रहस्य शास्त्रानुसारित्वबोधनायात्र दीर्घोच्चारणमिति एकदेश्युक्तिरियमिति भावः ॥

( १२५३ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५६ )

## २९५८ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ ६ । ३ । ९९ ॥

( लक्ष्यसिद्धिसाधकभाष्यम् )

अषष्ठ्यतृतीयास्थस्येत्युच्यते, तत्रेदं न सिध्यति—अन्यस्येदं—अन्यदीयम् । अन्यस्य कारकः—अन्यत्कारक इति ॥

एवं तर्ह्यविशेषेण 'अन्यस्य दुक् छकारकयोः' इत्युक्त्वा ततो वक्ष्यामि—'अषष्ठ्यतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेषु' इति ॥

( १२५४ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५७ )

## २९६० कोः कत्तत्पुरुषेऽचि ॥६।३।१०१॥

( ६४८९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ कद्भावे त्रावुपसंख्यानम् ॥ * ॥

( भाष्यम् ) कद्भावे त्रावुपसंख्यानं कर्तव्यम् । कत्रयः ।

किमिदं कत्रय इति ?

कुत्सितास्त्रयः—कत्रयः । के वा त्रयः, न विभूयुः—कत्रय इति ॥

( प्रदीपः ) के वा त्रय इति । किंशब्दस्य क्षेपार्थस्य कद्भावः ॥

( उद्योतः ) 'के वा त्रयः' इत्यत्र पूर्वसाद्भेदमाह—किं शब्दस्येति । पूर्वत्र कोः, इदानीं किम इति भेदः, क्षेप एव 'न विभूयुः' इति वाक्यशेषेण दर्शितो भाष्ये । भरणसामर्थ्याभावाच्च क्षेपः ॥

( १२५५ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५८ )

## २९६८ पृषोदरादीनि यथोपदिष्टम् ॥ ६ । ३ । १०९ ॥

( निपातनाधिकरणम् )

( आदिपदार्थबोधकभाष्यम् )

पृषोदरादीनीत्युच्यते, कानि पृषोदरादीनि ?

पृषोदरप्रकाराणि ।

कानि पुनः पृषोदरप्रकाराणि ?

येषु लोपागमवर्णविकाराः श्रूयन्ते, न चोच्यन्ते ॥

( प्रदीपः ) कानीति । किमादिशब्दः प्रकारे अथ व्यवस्थायाम्—इति संदेहे प्रकार आदिशब्दः । व्यवस्थार्थे ह्यादिशब्दे 'यथोपदिष्ट'ग्रहणमनर्थकं स्यात् ॥

( उद्योतः ) व्यवस्थार्थत्वे वृत्तिकारादिपठितानामेव साधुत्वं स्यादिति तदपठितानामपि साधुत्वबोधकं 'यथोपदिष्ट'ग्रहणमनर्थकं स्यादिति प्रकारे आदिशब्द इत्याह—प्रकार इति ॥

( यथाशब्दार्थबोधकभाष्यम् )

अथ 'यथा'इति किमिदम् ?

प्रकारवचने थाल् (५।३।२३) ॥

( प्रदीपः ) प्रकारवचने थालिति । येन प्रकारेणोपदिष्टानि तेन साधूनि भवन्तीत्यर्थः ॥

(उद्योतः) 'उपदिष्टं' इति जातावेकवचनम्, तदाह—उपदिष्टानीति ॥ यच्छब्दस्य नित्यं तच्छब्दापेक्षत्वादाह—तेन साधूनीति ॥

( उपदिष्टार्थबोधकभाष्यम् )

अथ किमिदमुपदिष्टानीति ?

उच्चारितानि ।

कुत एतत् ?

दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह—'उपदिष्टा इमे वर्णाः' इति ।

कैः पुनरुपदिष्टानि ?

शिष्टैः ॥

---

१ 'इत्येवोच्येत' इति छ. ट. पाठः ॥

२ 'अवग्रहे दोषः स्यात्' इति च. छ. क. ट. पाठः ॥

३ अनूपे गोमान् गोभिरक्षाः सामौ दुग्धाभिं रक्षाः । मं. ९ सू. १०७ ऋ. ७

४ 'कारकमन्यत्कारकम्' इति छ. झ. पाठः ॥

५ उत्तरपदाधिकारात्सूत्रमेतत्समासविषयकमिति केषाञ्चिदभिप्रायः । एवं च हंसः सिंह इत्यनयोर्नानेन साधुत्वम्, किन्तूणादिनिष्पन्नत्वादेव । केचित्तु इदं तद्धितविषयमपि, पुराणशब्देऽनेन तलोप इति सर्वादिसूत्रे कैयटेनोक्तत्वात् । एवं च हंसादेरप्यनेनैव साधुत्वम्, सर्पिषा—इत्यादौ षत्वमप्यनेनैवेति भट्टाः ॥

६ 'व्यवस्थायामिति संदेहात् प्रश्नः । पृषोदरप्रकाराणीति । प्रकारे' इति च. झ. क. पाठः ॥

७ प्रकारवचनत्वमुपपादयति—येनेति ॥

८ 'उपदिष्टाः' इति च. छ. झ. क. ट. पाठः ॥

(प्रदीपः) अथेति। उपदेशः शास्त्रेण भवति, स चैषां नास्ति; सद्भावे वा किं निपातनेनेति प्रश्नः॥

(उद्द्योतः) उपदेशः—प्रतिपादनम्॥

(शिष्टलक्षणभाष्यम्)

के पुनः शिष्टाः?

वैयाकरणाः।

कुत एतत्?

शास्त्रपूर्विका हि शिष्टिः, वैयाकरणाश्च शास्त्रज्ञाः।

यदि तर्हि शास्त्रपूर्विका शिष्टिः शिष्टिपूर्वकं च शास्त्रम्, तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते।

एवं तर्हि निवासतश्चाचारतश्च।

स चाचार आर्यावर्त एव।

(उद्द्योतः) भाष्ये—वैयाकरणाः—व्याकरणाध्येतारः॥ तेषामेव शिष्टत्वे हेतुप्रश्ने उत्तरम्—शास्त्रपूर्विका हि शिष्टिरिति। शिष्टपदप्रवृत्तिनिमित्तभूतशिष्टेः—शासनस्य शास्त्रपूर्वकत्वात्—शास्त्रज्ञानपूर्वकत्वादित्यर्थः॥

शिष्टिपूर्वकं च शास्त्रमिति। शिष्टशासनमूलकं पृषोदरादिशास्त्रम्—इत्यन्योन्याश्रय इत्यर्थः॥

तत्र शिष्टनिवासदेशमाह—स चाचार इति। एवञ्च स एव शिष्टनिवासदेश इति भावः॥

(आर्यावर्तलक्षणभाष्यम्)

कः पुनरार्यावर्तः?

प्रागादर्शात्—प्रत्यक् कालकवनात्—दक्षिणेन हिमवन्तम्—उत्तरेण पारियात्रम्। एतस्मिन् आर्यावर्ते आर्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारं गतास्तत्र भवन्तः शिष्टाः॥

(प्रदीपः) प्रागादर्शादिति। आदर्शादयः पर्वतविशेषाः। प्राचि देशे प्राक्। 'दिक्छब्देभ्यः—'इत्यस्तातेरुत्पन्नस्य 'अञ्चेर्लुक्'इति लुक्। अञ्चूत्तरपदलक्षणा पञ्चमी॥ दक्षिणेनेति। दक्षिणस्मिन् देशे इति—'एनबन्यतरस्याम्'इत्येनप्। 'एनपा द्वितीया'इति द्वितीया॥ आचारमाह—कुम्भीधान्या इति। कुम्भ्यामेव येषां धान्यम्[1]॥ दम्भार्थं कुम्भीधान्यत्वं स्यादित्याह[2]—अलोलुपा इति॥ अगृह्यमाणकारणा इति। दृष्टं कारणमन्तरेणैव[3] सदाचारानुवर्तिन इत्यर्थः॥ किंचिदन्तरेणेति। विनैवाभियोगादिना सर्वविद्यापारगाः, ते हि साधुत्वपरिज्ञाने प्रमाणम्। तदुक्तम्—

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशेष्यते[4]॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते॥ इति॥

(उद्द्योतः)—(भाष्ये)—कः पुनरार्यावर्त इति। किम्

'आसमुद्राच्च पूर्वस्मादा समुद्राच्च पश्चिमात्।
तयोरेवान्तरा गिर्योरार्यावर्तं प्रचक्षते'। इति मनूक्तः,

किंवा तद्व्याप्य इति प्रश्नः। मनुवाक्ये 'तयोः'इत्यस्य हिमवद्विन्ध्ययोरित्यर्थः,

'हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः' इति पूर्वमुक्तेः॥

(भाष्ये) प्रागादर्शादिति। 'आदर्शः'—कुरुक्षेत्रे पर्वतः। कालकवनं—प्रयागः। पारियात्रः—विन्ध्य एवेति 'मनूक्तमध्यदेश एवात्र भगवतोऽभिमतः' इत्यन्ये॥ कुम्भ्यामेवेति। विशेषणसामर्थ्यादवधारणगर्भः समास इति भावः॥ दम्भः—सर्वेभ्यः स्वस्याधिक्यभावनं। दृष्टं कारणं—लाभपूजादि। विहितबुद्ध्या नित्यादिकर्मकर्तार इत्यर्थः। एवं सदाचारानुष्ठानकृतान्तःकरणशुद्ध्याऽविद्यापगमाद्दिव्यज्ञानावाप्तिस्तेषामिति दर्शयितुं भाष्ये—किञ्चिदन्तरेणेति। तद्व्याचष्टे—विनैवाभियोगादिनेति। अभियोगः—गुरूपदेशः। आदिना—अभ्यासादिः॥ 'कस्याश्चित्'इत्यस्यार्थमाह—सर्वविद्येति। अन्यथा—नामनेकार्थत्वादिति भावः। तपोबलादेव शब्दतोऽर्थतश्च प्रतिभातसर्वविद्याः—इति तात्पर्यम्॥

आविर्भूतेति। अविद्यापगमेन योगाभ्याससहकृतप्रत्यक्षेणाविर्भूतसर्वविषयज्ञानानामित्यर्थः॥ तत्र कारणम्—अनुपप्लुतेति। विहितकर्मानुष्ठानाच्छुद्धान्तःकरणानामित्यर्थः॥ प्रत्यक्षात्—विद्यमानवस्तुविषयासदादिप्रत्यक्षादित्यर्थः॥ अतीन्द्रियान्—बाह्येन्द्रियाग्राह्यान्॥ असंवेद्यान्—अन्यैर्मनसाऽप्यनुपलभ्यमानान्। आर्षेण—योगाभ्याससहकृतदिव्यचक्षुषा। शिष्टवचनविरुद्धमनुमानं न प्रमाणमिति भावः॥

(शास्त्रप्रयोजनभाष्यम्)

यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते?

शिष्टपरिज्ञानार्थाऽष्टाध्यायी।

कथं पुनरष्टाध्याय्या शिष्टाः शक्या विज्ञातुम्?

अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानं येऽत्राऽस्यां विहिताः[5] शब्दास्तान् प्रयुञ्जानम्। स पश्यति—नूनमस्य देवानुग्रहः स्वभावो वा, योऽयं न[6] चाष्टाध्यायीमधीते, ये चास्यां विहिताः शब्दास्तांश्च प्रयुङ्क्ते। नूनमयमन्यानपि जानाति—इति[7]।

एवमेषा शिष्टज्ञानार्थाऽष्टाध्यायी—इति॥

(उद्द्योतः) भाष्ये—नूनमयमन्यानपीति। अष्टाध्याय्यनध्ययनेऽपि तत्प्रतिपादितसाधुज्ञानेन देवानुग्रहं शिष्टत्वं च निर्णीय

[1] 'धान्यं ते कुंभीधान्याः' इति च. झ. पाठः॥
[2] 'धान्यं स्यात्' इति च. झ. क. पाठः। 'कुंभधान्यं स्यात्' इति ठ. पाठः॥
[3] 'दृष्टकारण' इति च. झ. पाठः॥
[4] 'विशिष्यते' इति च. झ. पाठः॥
[5] 'येऽत्र विहिताः' इति छ. झ. पाठः॥
[6] 'अयं नूनं' इति छ. पाठः॥
[7] 'इति' शब्दो न दृश्यते छ. पुस्तके॥

यानन्यानपि प्रयुङ्क्ते तेऽप्यनेन तथैव साधुत्वेन ज्ञाता इति कल्पयन्ति तेषां चानेन सङ्ग्रह इति भावः ॥

( ६४९० विकल्पवार्तिकम् ॥ १ ॥ )

॥ * ॥ दिक्शब्देभ्यस्तीरस्य तारभावो वा ॥ * ॥

( भाष्यम् ) दिक्शब्देभ्यस्तीरस्य तारभावो वा वक्तव्यः । दक्षिणतीरम्, दक्षिणतारम् । उत्तरतीरम्, उत्तरतारम् ॥

( प्रदीपः ) दक्षिणतीरमिति । विशेषणसमासः ॥

( उद्द्योतः ) विशेषणसमास इति । तथैवार्थप्रतीतेरिति भावः ॥

( ६४९१ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ वाचो वादेर्डत्वं वल्भावश्चोत्तरपदस्येञि ॥ * ॥

( भाष्यम् ) वाचो वादेर्डत्वं वक्तव्यं वल्भावश्चोत्तरपदस्य इञि वक्तव्यः । वाग्वादस्यापत्यं-वाड्वलिः ॥

( उद्द्योतः ) भाष्ये—वादेरिति । वाशब्द आदिर्यस्य तस्य वकारस्येत्यर्थः ॥

( ६४९२ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च ॥ * ॥

(भाष्यम्) षष उत्वं वक्तव्यम्, उत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोडन्, षोडश ॥

(प्रदीपः) षोडन्निति । षड् दन्ता अस्य-इति बहुव्रीहिः । 'वयसि दन्तस्य दतृ'इति दत्रादेशः ॥

( ६४९३ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ धासु वा ॥ * ॥

( भाष्यम् ) धासु वेति वक्तव्यम्, उत्तरपदादेः ष्टुत्वं च वक्तव्यम् । षोढा, षड्ढा कुरु ॥

अथ किमर्थं बहुवचननिर्देशः क्रियते, न पुनर्धायामित्येवोच्येत ? नानाधिकरणवाची यो धाशब्दस्तस्य ग्रहणं यथा विज्ञायेत ।

इह मा भूत्—षट् दधातीति षड्धा-इति ॥

( प्रदीपः ) धासु वेति । उत्वं विकल्प्यते, तेन ष्टुत्वं नित्यमेव भवति । उत्तरपदशब्देनात्र भाष्ये धाप्रत्ययोऽभिधीयते । पद्यते-प्रतीयतेऽनेनार्थ इति पदं-प्रत्यय उच्यते, उत्तरं पदमिति विशेषणसमासः ॥

नानाधिकरणवाचीति । अर्थगतं बहुत्वं शब्दे समारोप्य 'धासु'इति बहुवचननिर्देश इत्यर्थः । तेन 'अधिकरणविचाले च'इति विहितस्य धाप्रत्ययस्य ग्रहणम् ॥

षड्धेति । 'न पदान्ताट्टोरनाम्'इति ष्टुत्वप्रतिषेधः ॥

( उद्द्योतः ) ननु 'धासु वा'इत्यनेनैव 'उक्तं वा'इत्यर्थकेन सिद्धे 'उत्तरपदादेः-'इति वचनं व्यर्थमित्यत आह—उत्वं विकल्प्यत इति । अत एव भाष्ये ष्टुत्ववचनं वाशब्दाघटितं पृथगेवोक्तम् । एवञ्चोत्वाभावपक्षे 'षड्ढा'इति ढकारविशिष्ट एव पाठो भाष्ये । यत्तु हरदत्तेनोत्वपक्षे ष्टुत्वं नित्यमित्युक्तम्, तन्न । सन्नियोगशिष्टपरिभाषयैव सिद्धे पृथग्वचनवैयर्थ्यापत्तेरित्याहुः ॥ ननु समासचरमावयवरूढोत्तरपदग्रहणेन कथं प्रत्ययग्रहणमत आह—पद्यते इत्यादि ॥

नानाधिकरणवाची—नानाद्रव्यवाची ॥ तद्ग्रहणेऽपि कथं बहुवचनं स्यादत आह—अर्थगतमिति ॥

( उपसंख्यानभाष्यम् )

दुरो दाशनाशदभध्येषूत्वं वक्तव्यम्, उत्तरपदादेश्च ष्टुत्वम् । दूडाशः, दूणाशः, दूडभः, दूढ्यः ॥

( प्रदीपः ) दूडाश इति । दुःखेन दाश्यते, नाश्यते, दभ्यते-इति खल् । दम्भेर्नलोपोऽत एव निपातनात् । दुष्टं ध्यायति-इति 'आतश्चोपसर्गे' इति कः ॥

( उद्द्योतः ) खलि नलोपः कथमत आह—दम्भेरिति । तत्र रेफस्योत्वे सवर्णदीर्घे दूडभ इत्यादिसिद्धिः ॥ आतश्चोपसर्ग इति । कृन्मेजन्तसूत्रे 'दुर्धियः' इत्यर्थे 'दूढ्यः' इति कैयटेनोक्तम् ॥

( ६४९४ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ स्वरो रोहतौ छन्दस्युत्वम् ॥ * ॥

( भाष्यम् ) स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम् । एहि त्वं जाये स्वो रोहाव-इति ॥

( प्रदीपः ) रोहावेति । लोडुत्तमद्विवचनम् ॥

---

१ 'वादे डत्वं वलभाव' इति छ. पाठः । 'वादे डत्वं वल्भाव' इति झ. क. ट. पाठः ॥

२ 'पद्यतेऽनेनार्थ' इति क. च. झ. पाठः ॥

३ उक्तं वेति । पूर्ववार्तिके-षष उत्वमित्यादावुक्तं वेत्यर्थकेन धासु वेत्यनेन सिद्धे इत्यर्थः । पूर्ववार्तिके उत्ववदुत्तरपदादेः ष्टुत्वमपि विधीयत इति 'उत्तरपदादेः ष्टुत्वं च वक्तव्यम्' इति भाष्यमनुपपन्नमिति भावः ॥

४ हरदत्तेनेति । तेषामयमाशयः-उत्तरपदादेः ष्टुत्वमिति पृथग्ग्रहणात् उत्वाभावविशिष्टं ष्टुत्वघटितं रूपं नास्त्येवेति, तन्न । 'षड्ढा' इति भाष्योदाहरणस्यासिद्ध्यापत्तेः ॥

५ अस्मात्पूर्वं 'दुरोदाशनाशदभध्येषूत्वं' इति वार्तिकं दृश्यते च. छ. झ. पुस्तकेषु । अ. क. ट. पुस्तकेषु च न दृश्यते । 'धासु वा' इत्यनन्तरं यद्येतद्वार्तिकं स्यात्तदा विकल्पानुवृत्तिरत्रापि प्रसज्येत, अतो वार्तिकं न संभवति । अत एवोत्तरवार्तिके पुनरप्युत्वस्योपादानं संगच्छते । अन्यथा एकदेशानुवृत्तौ तस्याप्यनुवृत्तिः संभवतीति पुनरप्युत्वोपादानं व्यर्थमिति तेषामभिप्रायः । केचित्तु 'दुरोदाशनाशदभध्येषूत्वं' इति यदि वार्तिकं स्यात्तदाऽत्र यावत् ष्टुत्वस्यानुवृत्तिर्न संभवतीति नैतद्वार्तिकमित्याहुः ॥

६ 'छन्दसि' इत्येव छ. पाठः ॥

७ 'रोहाव' इत्येव 'इति'रहितः छ. पाठः ॥

( ६४९५ उपसंख्यानवार्तिकम् ॥ ६ ॥ )[1]

॥ * ॥ पीवोपवसनादीनां छन्दसि लोपः ॥ * ॥

( भाष्यम् ) पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः । पीवोपवसनानाम् । पयोपवसनानाम् । श्रियेदम् ॥

( भाष्यम् ) पीवोपवसनानामिति । पीवस्पयस्-इत्येतयोः सलोपः ॥ श्रियेदमिति । श्रिये इदम्-इति स्थिते इकारलोपः ॥

( उद्द्योतः ) भाष्ये—पीवोपवसनादीनामिति । पीवस्-शब्दः सान्तः, 'पीवसा वसाथे'[2] इति लिङ्गात् ॥ तदाह-पीवस्पयसित्येतयोरिति ॥

( १२५६ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ५९ )

## २९७० ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ६ । ३ । १११ ॥

( दीर्घाधिकरणम् )

( पूर्वग्रहणप्रयोजनभाष्यम् )

पूर्वग्रहणं किमर्थम्, न 'तस्मिन्निति निर्दिष्टे पूर्वस्य' ( १।१।६६ ) इति पूर्वस्य[3] भविष्यति ?

न सिध्यति । न हि ढ्रलोपेनानन्तर्यमस्ति[4] ॥

अथेह[5] कस्मान्न भवति-करणीयम्-हरणीयम्-इति ।

नैष दोषः । नैवं विज्ञायते—ढ्रोर्लोपः-ढ्रलोपः, ढ्रलोप इति ।

कथं तर्हि ?

ढ्रौ लोपोऽस्मिन् सोऽयं-ढ्रलोप इति[6] ।

यद्येवं, नार्थः पूर्वग्रहणेन । भवति हि ढ्रलोपेनानन्तर्यम्[7] ॥

इदं तर्हि प्रयोजनम्—'उत्तरपदे' इति वर्तते, तेनानन्तर्यमात्रे यथा स्यात् । औदुम्बरी राजा[8]। धूमाकी रथेन । पुना रूपाणि प्रकल्पयन् ॥

( प्रदीपः ) न हि ढ्रलोपेनेति । आचार्यदेशीयस्तत्पुरुषं मत्वा परिहरति । निर्दिष्टग्रहणस्य प्रयोजनमुक्तं-शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यात्, अर्थे मा भूत् । शब्दो हि शब्दाद्बहिर्भूतः । अर्थस्त्वबहिर्भूतः, निःशब्दो हि बहिर्भाववाच्याश्रीयते ॥

( उद्द्योतः ) ननु 'ढ्रलोपे' इत्यस्य बहुव्रीहित्वे आनन्तर्यसंभवादाह—तत्पुरुषं मत्वेति । अभावेन पौर्वापर्याऽसंभव इति भावः ॥ ननु लोपेनापि बुद्धिकृतं पौर्वापर्यं संभवति, स्थानिद्वारेण चेत्यत आह—निर्दिष्टग्रहणस्येति । 'तस्मिन्निति निर्दिष्टे' 'विरामोऽवसानम्'इतिसूत्रस्थभाष्यविरोधादुक्तम्—आचार्यदेशीय इति ॥

भाष्ये–तेनानन्तर्यमात्रे इति । ढ्रलोपेनानन्तर्यमात्रे । उत्तरपदपरत्वाभावेऽपीत्यर्थः । 'औदुम्बरी राजा'इत्याद्यसमस्तम् । अनेनोत्तरपदशब्दस्य समासचरमावयवे रूढिं दर्शयति । अत एव 'लीढः' 'अजर्घाः' इत्यादिसिद्धिः । ढसाहचर्याच्च रेफांशेऽप्यसिद्धपरिभाषाबाध इति 'अजर्घाः' इत्यादौ 'सिपि धातोः–'इति रुत्वस्यासिद्धत्वात्कथं दीर्घ इति न शङ्क्यम्[10] ॥

( १२५७ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ६० )

## २९७१ सहिवहोरोदवर्णस्य ॥ ६ । ३ । ११२ ॥

( वर्णग्रहणप्रयोजनभाष्यम् )

वर्णग्रहणं किमर्थम्, न 'सहिवहोरोदस्य'इत्येवोच्येत ?

वृद्धावपि कृतायामोत्त्वं यथा स्यात् । उदवोढाम्, उदवोढम्, उदवोढेति ॥

( प्रदीपः ) उदवोढामिति । वहेर्लुङि तामादिषु सिचि वृद्धौ सलोपे ढत्वधत्वष्टुत्वढलोपेष्वोत्त्वे च रूपम् । अत्रासति वर्णग्रहणे 'तादपि परस्तपरः' इत्यकारस्य तपरत्वाद्भिन्नकालस्य ग्रहणं न स्यात्, वर्णग्रहणात्तु अवर्णमात्रस्य भवति ॥

( उद्द्योतः ) सिचि वृद्धाविति । 'वदव्रज'इत्यनेन ॥ ननु वर्णग्रहणाभावेऽपि सवर्णग्रहणादेव दीर्घस्यौत्त्वं सिध्यतीत्यत आह—अत्रासतीति । वर्णग्रहणे तु तत्सामर्थ्यात्तपरसूत्राप्रवृत्तिरिति भावः ॥

( अवर्णप्रयोजनभाष्यम् )

अथावर्णग्रहणं किमर्थम् ?

इह मा भूत्—ऊढः, ऊढवानिति ।

नैतदस्ति प्रयोजनम् । भवत्येवात्रौत्त्वम् ।

श्रवणं कस्मान्न भवति ?

पूर्वत्वमस्य भविष्यति ।

इदमिह संप्रधार्यम्–ओत्त्वं क्रियतां पूर्वत्वमिति, किमत्र कर्तव्यम् ?

परत्वादोत्त्वम्, अन्तरङ्गं पूर्वत्वम् ॥

---

१ नैतद्वार्तिकं छ. पुस्तके ॥

२ युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः । ऋ. मं. १ सू. १५१ ऋ. १ )

३ 'पूर्वस्यैव' इति च. छ. झ. पाठः ॥

४ छ. पुस्तके 'अस्ति'शब्दो न ॥

५ 'इह कस्मात्' इति छ. पाठः ॥

६ छ. पुस्तके 'इति' शब्दो न ॥

७ 'सोऽयं-ढ्रलोपः, ढ्रलोप इति' छ. झ. च. पाठः ॥

८ 'भवति ढ्रलोपे' इति झ. पाठः ॥

९ 'राजा । पुना रूपाणि कल्पयेत्' इति छ. पाठः ॥

१० अत एव-सूत्रे पूर्वस्येति पदग्रहणेन समासाभावेऽपि पूर्वमात्रस्य ग्रहणादेव ॥

एवं तर्हीदमिह संप्रधार्यम्—ओत्त्वं क्रियतां संप्रसारणमिति, किमत्र कर्तव्यम् ?

परत्वादोत्त्वम् ।

नित्यं संप्रसारणम्, कृतेऽप्योत्त्वे प्राप्नोत्यकृतेऽपि ।

ओत्त्वमपि नित्यम् ।

कथम् ?

कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि ।

अनित्यमोत्त्वम् । न हि कृते संप्रसारणे प्राप्नोति ।

किं कारणम् ?

अन्तरङ्गं पूर्वत्वम् । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवौत्त्वस्य निमित्तं विहन्ति, अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादोत्त्वम् । ओत्त्वे कृते सम्प्रसारणे कृते संप्रसारणपरपूर्वत्वम् । तत्र कार्यकृतत्वात् पुनरोत्त्वं न भविष्यति ॥

(प्रदीपः) परत्वादोत्त्वमिति । ननु ढ्लोपनिमित्तमोत्त्वम्, तत्र 'पूर्वत्रासिद्धम्'इति ढत्वादीनामसिद्धत्वात् पूर्वं संप्रसारणेन भाव्यम्–इति युगपत्प्राप्त्यभावाद्विप्रतिषेधानुपपत्तिः ।

अत्राहुः–वर्णमात्रापेक्षत्वात् ढत्वादीनामन्तरङ्गत्वात्प्रकृतिप्रत्ययविशेषाश्रयत्वात् संप्रसारणस्य बहिरङ्गत्वादसिद्धत्वात् 'पूर्वत्रासिद्धम्'इत्यस्यानुपस्थानात् ढत्वादिषु कृतेषु युगपत्प्राप्तिसद्भावाद्युक्तो विप्रतिषेधः ।

केचित्तु वर्णयन्ति–ढ्लोपस्यौत्त्वदीर्घत्वविधौ निमित्तत्वेनाश्रयणादत्र विषये ढत्वादीनां सिद्धत्वमनुमीयत इति भाष्यकारस्याभिप्रायः ॥

ओत्वे कृते इति । ओत्त्वस्य पुनः प्रवृत्त्यभावे निमित्तसद्भावाद्दीर्घत्वं प्रवर्तिष्यते ॥

( उद्योतः ) भाष्ये—अथावर्णग्रहणं किमिति । आन्तरतम्यादवर्णस्यैव भविष्यतीति प्रश्नः ॥

(भाष्ये) भवत्येवात्रौत्त्वमिति । 'अवर्णग्रहणे कृतेऽपि'इति शेषः ॥

पूर्वं संप्रसारणेनेति । पूर्वत्वस्याप्युपलक्षणमेतत् ॥

पूर्वत्रासिद्धमित्यस्यानुपस्थानादिति । पूर्वत्र–इति निर्दिष्टकार्यस्याभावादित्यर्थः ॥

अत्र विषये इति । कार्यान्तरं प्रत्यपीत्यर्थः । 'केचित्'इत्यत्रारुचिबीजं तु अर्थापत्तेः साक्षादुपपादकविषयताया औत्सर्गिकत्वम् ।

अत्र वदन्ति—'ढ्लोपे' इति तत्पुरुषो विषयसप्तमी च, शब्दाधिकारात्–इति भाष्याशय इति वक्तुमुचितम् । तत्रै क्तप्रत्ययं विना तद्विषयज्ञानाभावात्तत्र कृते उभयोः प्राप्तौ परत्वादोत्त्वमिति भावः । उदवोढामित्यादौ तु सिज्लोपोत्तरमेव तद्विषयताज्ञानात्सिज्लोपात्पूर्वमेव वृद्धौ ततः सिज्लोपे ओत्त्वमिति न दोषः । एते-नोदवोढामित्यादौ सिज्लोपस्यासिद्धत्वाङ्कारपरत्वाभावेन कथमोत्त्वमित्यपास्तम्–इति ॥

ननु दीर्घस्य पूर्वमोत्त्वेन बाधात्कथं पुनरोत्त्वाभावेऽपि दीर्घप्रवृत्तिरत आह—ओत्वस्येति । अष्टावसरन्यायोऽत्र शास्त्रे नास्त्येवेति भावः ॥ दीर्घत्वमिति । पूर्वसूत्रेणेति भावः । तदेवमवर्णग्रहणं भगवता प्रत्याख्यातम् ॥



( १२५८ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ६१ )

## २९८० इको वहेऽपीलोः ॥ ६।३।१२१ ॥

( उपसंख्यानभाष्यम् )

अँपीलवादीनामिति वक्तव्यम् ।

इह मा भूत्—रुचिवहम्, चारुवहम् ॥



( १२५९ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ६२ )

## २९८१ उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ ६ । ३ । १२२ ॥

( उपसंख्यानभाष्यम् )

अमँनुष्यादिष्विति वक्तव्यम् ।

इह मा भूत्—प्रसेवः, प्रसारः, प्रहारः ॥

( ६४९६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सादकारयोः कृत्रिमे ॥ * ॥

( भाष्यम् ) सादकारयोः कृत्रिम इति वक्तव्यम् ।

इहैव यथा स्यात्—एषोऽस्य प्रासादः । एषोऽस्य प्रांकारः ।

कृत्रिम इति किमर्थम् ?

एषोऽस्य प्रकारः । एषोऽस्य प्रसाद इति ॥

( उद्योतः ) भाष्ये—कृत्रिम इति । पुरुषव्यापाराभिनिर्वृत्त इत्यर्थः ॥

( ६४९७ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ प्रतिवेशादीनां विभाषा ॥ * ॥

( भाष्यम् ) प्रतिवेशादीनां विभाषा दीर्घत्वं वक्तव्यम् । प्रतिवेशः, प्रतीवेशः । प्रतिकारः, प्रतीकारः ॥



१ 'कृते संप्रसारणं संप्रसारण'.इति छ. पाठः । 'कृते संप्रसारणं संप्रसारणे कृते संप्रसारण' इति ट. पाठः ॥

२ तत्र–ऊढ इत्यत्र ॥

३ 'अपीलवादीनां' इति वार्तिकपाठः झ. पुस्तके ॥

४ 'अमनुष्यादिषु' इति झ. पुस्तके वार्तिकपाठः ॥

५ 'प्राकारः । इह मा भूत–एषोऽस्य' इति च. छ. झ. पाठः ॥

( १२६० विधिसूत्रम् ॥ ६ । ३ । ३ आ. ६३ )

## २९८३ दस्ति ॥ ६ । ३ । १२४ ॥

( पक्षद्वयोपस्थापकं भाष्यम् )

**कथमिदं विज्ञायते-दा इत्येतस्य-तकारादाविति, आहोस्वित्तकारान्त इति ।**

**किञ्चातः ?**

**यदि विज्ञायते—तकारादाविति, नीत्ता-वीत्ता-अत्र न प्राप्नोति ।**

**अथ विज्ञायते—तकारान्त इति, सुदत्तं-प्रतिदत्तं-अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **कथमिदमिति** । उत्तरपदमिह सन्निहितम्, तत्र विशेषणविशेष्यभावे कामचारात् 'ति'इत्यनेन पूर्वं यदा-उत्तरपदं विशेष्यते तदा 'यस्मिन् विधिस्तदादावल्ग्रहणे'इति तकारादावुत्तरपद इति विज्ञायते, पश्चाद् इत्यनेन तकारो विशेष्यते-दः संबन्धी यस्तकारः, तदादावित्यर्थः संपद्यते । अथ तु द इत्यनेन पूर्वं तकारो विशेष्यते तदा यो दाशब्दसंबन्धित्वेन सिद्धस्तकारः सोऽनूद्यते । चर्त्वस्य चासिद्धत्वाद्दादिभूतो नास्तीति सामर्थ्यादन्तभूतस्य ग्रहणमिति तकारान्त इत्येष पक्षोऽवतिष्ठते । तत्र निर्णयाय प्रश्नप्रतिवचनोपन्यासः ॥

( उद्द्योतः ) **पूर्वं यदेति** । पूर्वं विशेष्येण संबन्धमनुभूय पश्चाद्विशेषणेन संबध्यत इत्यर्थः ॥ **दः सम्बन्धीति** । 'दा इत्येतस्य तकारादौ'इति भाष्यप्रामाण्यादेव सविशेषणत्वेऽपि गमकत्वात्समास इति भावः । अनुभूतविशेषणस्य विशेष्येण संबन्धेऽपि का हानिरिति **चिन्त्यम्** ॥ **तकारान्त इत्येष पक्ष इति** । अत्र पक्षे तकारान्तावयवकत्वादुत्तरपदं 'ति'इत्यनेन व्यपदेश्यमिति द्रष्टव्यम् । अत्र पक्षे 'ति'इति 'दा'इत्यस्य विशेषणं, सौत्री षष्ठ्यर्थे सप्तमी । तकारान्त'दा'संबन्ध्युत्तरपदे इत्यर्थः ॥

( सिद्धान्तभाष्यम् )

**यथेच्छसि तथाऽस्तु ।**
**अस्तु तावत्तकारादाविति ।**
**कथं नीत्ता वीत्ता ?**
**चर्त्वे कृते भविष्यति ।**
**असिद्धं चर्त्वं तस्यासिद्धत्वान्न प्राप्नोति ।**
**आश्रयात्सिद्धत्वं भविष्यति ॥**
**अथवा पुनरस्तु तकारान्त इति ।**
**कथं सुदत्तं प्रतिदत्तम् ?**
**नैतत्तकारान्तं**
**किं तर्हि ?**
**थकारान्तमेतत् ॥**

( प्रदीपः ) **नीत्तेति** । दाशब्दस्य निष्ठायां 'अच उपसर्गात्तः'इत्यन्तस्य तादेशे दकारस्य चर्त्वे टापि च कृते रूपम् ॥ **थकारान्तमिति** । तत्र चर्त्वस्यासिद्धत्वात्तकारान्तत्वाभावः । क्वचित् 'प्रदत्तम्' इति पाठः सोऽयुक्तः, इक इत्यधिकाराद्दीर्घाप्रसङ्गात् ॥

( उद्द्योतः ) **दकारस्य चर्त्वे इति** । एवञ्च चर्त्वस्यासिद्धत्वात्तादित्वाभावाद्दीर्घो न प्राप्नोतीति सूत्रोदाहरणासंभव इति चोद्यतात्पर्यम् ॥ ननु सुदत्तादौ 'अच उपसर्गात्'इति तत्वं कुतो नेति चेत्, न । 'अवदत्तं विदत्तञ्च–'इत्यादिभाष्यात्तत्वाभावस्योक्तत्वेनादोषात् ॥ **चर्त्वस्यासिद्धत्वादिति** । सूत्रं तु 'नीत्ता'इत्यादौ चरितार्थमिति भावः ॥

( १२६१ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ६४ )

## २९९७ चौ ॥ ६ । ३ । १३८ ॥

( ज्ञापकत्वसंपादकभाष्यम् )

**इहान्ये आचार्याः—चौ प्रत्यङ्गस्य प्रतिषेधमाहुः, तदिहापि साध्यम् ।**

**नैष दोषः ।**

**एतदेव ज्ञापयत्याचार्यः[2]—न चौ प्रत्यङ्गं भवतीति, यदयं चौ दीर्घत्वं शास्ति ॥**

( प्रदीपः ) प्राचा दधीचेत्यादावन्तरङ्गत्वादेकादेशयणादेशयोः कृतयोरनजन्तत्वाद्दीर्घो न प्राप्नोतीत्याह-**इहान्य इति** ॥

इत्युपाध्यायजैयटपुत्र**कैयट**कृते महाभाष्यप्रदीपे षष्ठस्याध्यायस्य **तृतीये** पादे **तृतीय**माह्निकम् ॥

इति पादश्च तृतीयः ॥

( उद्द्योतः ) **प्रत्यङ्गस्येति** । भाष्ये—प्रत्यङ्गशब्दोऽन्तरङ्गवाची । एवञ्च 'चौ'सूत्रं प्रति यदन्तरङ्गं तस्य प्रतिषेधो वक्तव्य इत्यर्थः ॥ **इत्याहेति** । इत्यत आहेत्यर्थः ॥

इति श्रीशिवभट्टसुतसतीगर्भज**नागोजीभट्ट**कृते भाष्यप्रदीपोद्द्योते षष्ठस्याध्यायस्य तृतीयपादे **तृतीयमाह्निकम्** ॥

इति पादश्च तृतीयः ॥

( १२६२ विधिसूत्रम् ॥ ६ । ३ । ३ आ. ६५ )

## २९९८ सम्प्रसारणस्य ॥ ६ । ३ । १३९ ॥

( ६४९८ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इको ह्रस्वात्सम्प्रसारणदीर्घत्वं विप्रतिषेधेन ॥ * ॥**

( भाष्यम् ) **इको ह्रस्वात्सम्प्रसारणदीर्घत्वं भवति विप्रतिषेधेन ।**

---

1 'इत्येतस्मिंस्तकारा' इति च. झ. पाठः । 'इत्येतस्मिंस्तकारादावाहोस्विद्दा इत्येतस्मिंस्तकारान्त इति' इति छ. पाठः ॥

2 'एतज्ज्ञापयति-न' इति छ. पाठः ॥

इको ह्रस्वस्यावकाशः—ग्रामणिकुलम्, सेनानिकुलम्।

सम्प्रसारणदीर्घत्वस्यावकाशः—विभाषा ह्रस्वत्वम्, यदा न ह्रस्वत्वं सोऽवकाशः।

ह्रस्वप्रसङ्ग उभयं प्राप्नोति—कारीषगन्धीपुत्रः, कौमुदगन्धीपुत्रः।

सम्प्रसारणदीर्घत्वं भवति विप्रतिषेधेन॥

अथेदानीं दीर्घत्वे कृते पुनः प्रसङ्गविज्ञानात् ह्रस्वत्वं कस्मान्न भवति?

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव—इति॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-
महाभाष्ये षष्ठाध्यायस्य तृतीये पादे
तृतीयमाह्निकम्॥
इति पादश्च तृतीयः॥



| | अस्मिन् पादे सूत्रवार्तिकसंख्या। | | | | | |
|---|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निके ३ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ११९७ | १८ | ७ | ४० | ६५ | १२६२ |
| अव्याख्यातसूत्राणि | १६६२ | १५ | ५ | ५४ | ७४ | १७३६ |
| समुदितसूत्राणि | २८५९ | ३३ | १२ | ९४ | १३९ | २९९८ |
| वार्तिकानि | ६३८२ | ३८ | २८ | ५० | ११६ | ६४९८ |

॥ अथ षष्ठस्य तुरीयः पादः ॥

अङ्गाधिकारः ।

( १२६३ अधिकारसूत्रम् ॥ ६ । ४ । १ आ. १ )

## २९९९ अङ्गस्य ॥ ६ । ४ । १ ॥

( अधिकारावधिनिर्णयाधिकरणम् )

( अधिकारमर्यादाभाष्यम् )

**आ कुतोऽयमधिकारः ?**

**आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः ॥**

( प्रदीपः ) **आ कुत इति** । अवधिविशेषनिश्चये प्रमाणमदृष्ट्वा पृच्छति ॥ इतरो वव्रश्चेत्या[1]दिसिद्धिं प्रयोजनमभिसन्धायाह—**आ सप्तमाध्यायपरिसमाप्तेरिति** ॥

( उद्द्योतः ) ननु 'प्रत्ययः' इत्याद्यधिकारेषु विचारमकृत्वा, इह विचारकरणे बीजमाह—**अवधीति** । अन्यत्र लक्ष्यसिद्ध्यादिनाऽवधिनिर्णयः, इह तु न तथा प्रमाणमुत्पश्याम इति प्रश्न इत्याशयः ॥

( मर्यादायां पक्षान्तरोपस्थापकभाष्यम् )

**य[2]दि तर्ह्यासप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, 'गुणो यङ्लुकोः' ( ७।४।८२ ) इति यङ्लुग्ग्रहणं कर्तव्यम् । प्रागभ्यासविकारेभ्यः पुनरङ्गाधिकारे सति प्रत्ययलक्षणेन सिद्धम् ।**

**अस्तु तर्हि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः ॥**

( प्रदीपः ) इतरोऽस्मिन् पक्षे गौरवमुद्भा[3]वितुमाह—**यदि तर्हीति** । 'न लुमताङ्गस्य' इत्यनेनाङ्गाधिकारविहिते कार्ये प्रतिषिध्यमाने—इति भावः । 'न लुमता तस्मिन्' इति पाठे तूभयथा दोषप्रसङ्गाल्लुग्ग्रहणं कर्तव्यमेव ॥

( उद्द्योतः ) **गौरवमिति** । लक्ष्यसिद्धिरूपप्रयोजनसत्त्वेऽपीत्यर्थः ॥ 'क्रियते न्यास एव' इति वक्ष्यमाणपरिहारस्याशयमत्रैव दर्शयति—**न लुमता तस्मिन्निति** ॥ उभयथा—प[4]क्षद्वयेऽपीत्यर्थः ॥

( पक्षान्तरे दूषणपूर्वकं सिद्धान्तभाष्यम् )

**यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः, 'वव्रश्च' वकारस्य सम्प्रसारणं प्राप्नोति । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सति उरदत्वस्य स्थानिवद्भावात् 'न सम्प्रसारणे सम्प्रसारणम्' (६।१।३७) इति प्रतिषेधः सिद्धो भवति । स चेदानीमपरिहारो भवति यत्तदु[5]क्तम्—*अङ्गान्यत्वाच्च सिद्धम्*इति ।**

**अस्तु तर्ह्या सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः ।**

**ननु चोक्तमिदानीं 'गुणो यङ्लुको–' इति यङ्लुग्ग्रहणं कर्तव्यमिति ।**

**क्रियते न्यास एव ॥**

( प्रदीपः ) **उरदत्वस्येति** । व्रश्चेर्लिटि द्विर्वचने कृते रेफस्य सम्प्रसारणं च प्राप्नोति, हलादिशेषेण निवृत्तिश्च । तत्र 'हलादिशेषात् सम्प्रसारणं विप्रतिषेधेन' इति पूर्वविप्रतिषेधादुभयेषां ग्रहणाद्वा सम्प्रसारणम्, उरदत्वम् । तस्याङ्गाधिकारे विधीयमानस्याङ्गेन प्रत्ययस्याक्षेपात्प[6]रनिमित्तत्वात् स्थानिवद्भावात् 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणनि[7]षेधः ॥ प्रागभ्यासविकारेभ्यस्त्वङ्गाधिकारे उरदत्वस्यापरनिमि[8]त्तत्वात् स्थानिवद्भावाप्रसङ्गः ॥

तत्र यदा प्रतिषेधवचनात्परस्य तावद्यणः सम्प्रसारणं क्रियते पूर्वस्य तु प्राप्तं सम्प्रसारणं सम्प्रसारणे परतः प्रतिषिध्यते तदैतदुदाहरणम् ॥

यदा तु सम्प्रसारणभाविनि यणि परतः पूर्वस्य सम्प्रसारणप्रतिषेध इति **पक्षः** समाश्रीयते तदा 'वव्रश्च' इति सिद्धमेवेत्यप्रयोजनमुर[9]दत्वेऽङ्गाधिकारस्य ॥

**अङ्गान्यत्वाच्च सिद्धमिति** । 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यत्र 'अमीमयत्' इत्यादौ सन्वद्भावादभ्यासलोपः प्राप्नोतीति चोदिते परिहारः—अङ्गान्यत्वाच्च सिद्धमिति । सन्यङ्गानां मीमादीनामभ्यासलोप[10] इत्युच्यते । ए[11]तान्यङ्गान्तराणीत्यभ्यासलोपाभावः । सति चाभ्यासविका[12]रेऽङ्गाधिकारेऽयं परिहार उपपद्यते, नान्यथा । एष तु परिहारस्तत्रैव दूषयिष्यते । इह तु सिद्धवदुपन्यस्तः ॥

( उद्द्योतः ) **उभयेषाङ्ग्रहणाद्वेति** । अनुवृत्त्यैव सिद्धे उभयेषाङ्ग्रहणं पुनर्विधानद्वारा हलादिशेषबाधकमित्यर्थः ॥ **अङ्गेन प्रत्ययस्याक्षेपादिति** । अङ्गसंज्ञानिमित्तकस्यास्य तद्द्वारा परनिमित्तकत्वात्स्थानिवत्त्वमिति भावः ॥

**प्रतिषेधवचनादिति** । यदि पूर्वस्य प्रथमं सम्प्रसारणं स्यात्तदा निर्वृत्तप्रतिषेधायोगात् प्रतिषेधवचनमनर्थकं स्यादित्यर्थः ॥

**यदा त्विति** । तत्र कृतेऽपि सम्प्रसारणादौ निषेधसामर्थ्यात्पुनः सम्प्रसारणं नेति भावः ॥

भाष्ये दूषणान्तरमाह—**स चेदानीमिति** । प्रागभ्यासविकारेभ्योऽङ्गाधिकारे सति स वक्ष्यमाणोऽपरिहारश्च भवतीत्यर्थः ॥

**अङ्गान्तराणीति** । ण्यन्तत्वादिति भावः ॥

**सिद्धवदिति** । तस्योक्तिसम्भवोऽपि न स्यादिति अत्रोच्यत इति भावः ॥

१ 'त्यादिसिद्धिप्रयोजन' इति ङ. पाठः ॥

२ 'यदि आसप्तमा–' इति च. छ. झ. पाठः ॥

३ 'मुद्भावयितुमाह' इति च. झ. ङ. पाठः ॥

४ पक्षद्वयेऽपि—आ सप्तमाध्यायपरिसमाप्तेः—प्रागभ्यासविकारेभ्य इति पक्षद्वयेऽपीत्यर्थः ॥

५ उभयेषामिति । लिट्यभ्यासस्योभयेषामिति सूत्र इत्यर्थः । तत्र हि 'वचि स्वपि–' 'ग्रहिज्या–' इति सूत्रद्वयादनुवृत्त्यैव सिद्धे तद्ग्रहणं व्यर्थमिति तात्पर्यम् ॥

६ 'निमित्तकत्वात्' इति ङ. पाठः ॥

७ 'निषेधः सिध्यति' इति च. झ. ङ. पाठः ॥

८ 'स्यापरनिमित्तत्वात्तस्य स्थानि–' इति च. पाठः ॥

९ 'उरदत्त्वमङ्गाधिकारस्य' इति ङ. पाठः ॥

१० 'लोप उच्यते' इति ङ. पाठः ॥

११ एतानि—अमीमयदित्यादीनि णिजन्तानि । सन्वद्भावेऽप्यत्र णिजन्तमेवाङ्गमिति न प्राप्तिः ॥

१२ 'विकारेष्वङ्गाधिकारे' इति ङ. पाठः ॥

( वार्तिकावतरणभाष्यम् )

**किं पुनरियं स्थानषष्ठी-अङ्गस्य स्थान इति ? एवं भवितुमर्हति ॥**

( प्रदीपः ) **किं पुनरिति ।** यदा 'अङ्गस्य' इति शब्दस्वरूपमनपेक्षितार्थविशेषमधिक्रियते तदा 'षष्ठी स्थानेयोगा' इत्यस्याः परिभाषाया उपस्थानं नास्ति[1], अनेकसम्बन्धसम्भवे सम्बन्धविशेषप्रतिपादनफलत्वात्तस्याः[2] । यदा त्वर्थाधिकारपक्षस्तदा परिभाषोपस्थानमिति द्वैतसम्भवात्प्रश्नः ॥

आचार्यदेशीयः परिभाषाऽऽश्रयेणाह—**एवं भवितुमर्हतीति ॥**

( उद्योतः ) नन्वत्र शास्त्रे परिभाषोपस्थितेर्नियतत्वात् 'किं पुनर्' इति प्रश्नानुपपत्तिरत आह—**यदाऽङ्गस्येति ।** तत्र शब्दाधिकारे तत्र तत्रोपस्थितस्य यत्र यादृशार्थयोग्यता[3] तत्र तादृशार्थकत्वं भविष्यति । अर्थाधिकारे तु परिभाषोपस्थित्या तदर्थकस्य यत्रान्वययोग्यत्वाभावस्तत्र तदनुपस्थितिरेव स्यात्, तत्र कस्य पक्षस्येह[4] ग्रहणमिति प्रश्नोपपत्तिरित्यर्थः ॥

( ६४९९ स्थानषष्ठ्यां दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः ॥ * ॥**

( भाष्यम् ) **अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः कर्तव्यः । 'अङ्गात्' इत्यपि वक्तव्यम् ।**

**अनुच्यमाने[5] हि-अतो भिस ऐस्भवतीति अत इति पञ्चमी, अङ्गस्येति स्थानषष्ठी, तत्राशक्यं विविभक्तिकत्वादत इति पञ्चम्याऽङ्गं विशेषयितुम् ।**

**तत्र को दोषः ?**

**'अतो भिस ऐस्' इति अकारान्तात्परस्य[6] भिस्मात्रस्यैस्भावो भवति-इति-इहापि प्रसज्येत ब्राह्मणभिस्सा, ओदनभिस्सटा-इति ॥**

( प्रदीपः ) चोदक आह—**अङ्गस्येति स्थानषष्ठी-चेदिति ।** 'च'शब्दात् षष्ठ्यन्तस्य चेति विज्ञेयम् ॥

**तत्राशक्यं विविभक्तिकत्वादिति ।** ननु च 'अतः' इति सम्बन्धादङ्गस्येत्यस्य विभक्तिविपरिणामो भविष्यति, यथा—उच्चानि देवदत्तस्य गृहाण्यामन्त्रयस्वैनमिति । **उच्यते**—सर्वनामपरामर्शादत्र विपरिणामः । इह तु नान्तरीयकमुत्तरार्थत्वादङ्गस्येत्यस्योपस्थानं स्यादिति कुतो विभक्तिविपरिणामः । यदि एवं विशेष्यासंनिधानात् 'अकारान्तात्' इति कथं तदन्तविधिः ? 'नेदमदसोरकोः' इति प्रतिषेधात् 'सप्तमी शौण्डैः' इत्यादेर्वा ज्ञापकात्तदन्तविधिर्भविष्यति । क्वचित् 'अकारात् परस्य' इति पाठः ॥ **भिस्साभिस्सटा**शब्दावोदनतद्विकारयोर्वाचकौ ॥

( उद्योतः ) चशब्दादिति ॥ 'पञ्चम्यन्तस्य च' इति चशब्दादित्यर्थः ॥

**विपरिणाम इति ।** 'एनं' इत्यस्य विशेषापेक्षायां 'देवदत्तं' इति प्रतीतेरिति भावः ॥ सम्बन्धानुपपत्तिर्विभक्तिविपरिणामे प्रमाणं स्यादत आह—**इह त्विति ।** तथा चात्र सम्बन्ध एव नेति न तदनुपपत्तिः[7] प्रमाणमिति भावः ॥ भाष्येऽकारान्तात्परस्येति पाठमाश्रित्य शङ्कते—**यद्येवमिति ।** 'अङ्गस्य' इत्यस्य सम्बन्धाभावे इत्यर्थः ॥ **नेदमदसोरिति ।** भिसाक्षिप्तप्रकृतिविशेषणत्वे[8] न तदन्तविधाविदं ज्ञापकम् । यद्यपीद्रूपलोपे[9] 'अ-भिस्' इत्यत्र तदन्तविध्यभावेऽपि प्राप्तेः प्रतिषेध उपपद्यते तथाऽप्यदसः स ज्ञापकः, अकोरिति प्रतिषेधश्चेति भावः । ऐस्विधायकं[10] च विष्णुवाचक-अशब्दादर्थवतो भिस ऐस्विधानेन चरितार्थमित्यभिमानः[11] । तदन्तविध्यभावेऽपि अकारात्परत्वेनेदं सर्वमुपपन्नम् ॥ वर्णग्रहणे च नार्थवत्परिभाषा, प्रकृत्याक्षेपे च न मानमित्याशयेनाह—**क्वचिदकारात्परस्येति ॥ ओदनतद्विकारयोरिति ।** दध्यौदनो हि भिस्सटा । 'भिस्सा स्त्री भक्तमन्धोऽन्नं', 'भिस्सटा दग्धिका' इति कोशादिति भावः ॥

( ६५०० स्थानषष्ठ्यां दोषवार्तिकम् ॥ २ ॥ )

**॥*॥अवयवषष्ठ्यादीनां चाप्रतिपत्तिः[12]॥*॥**

( भाष्यम् ) **अवयवषष्ठ्यादयश्च न सिध्यन्ति ।**

**तत्र को दोषः ?**

**'शास इदङ्हलोः' ( ६।४।३४ ) इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । 'ऊदुपधाया गोहः' ( ६।४।८९ ) इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ॥**

( प्रदीपः ) **अवयवषष्ठ्यादीनामिति ।** आदिशब्दो निमित्तषष्ठीपरिग्रहार्थः । 'ठस्येकः[13]' इत्यत्राङ्गस्य निमित्तं यष्ठस्तस्येक इत्याश्रीयते ॥ ननु च 'षष्ठी स्थानेयोगा' इत्यत्रैव विचारितं तत्किमर्थं पुनर्विचार्यते ? **उच्यते**—'ऊदुपधाया गोहः' इत्यत्र 'गोहः' इत्येषा स्थानषष्ठी स्यादित्येवं तत्र विचारितम्, इह त्वङ्गस्येत्यस्यां

१ नास्तीति । शब्दाधिकारेऽङ्गस्येत्यधिकार उपस्थितावपि विधिसूत्रेऽनुपस्थितिरित्यर्थः ॥

२ 'तस्याः परिभाषायाः' इति च. झ. पाठः ॥

३ 'यादृशार्थकत्वयोग्यता' इति झ. ड. पाठः ॥

४ 'पक्षस्य ग्रहणं' इति झ. पाठः ॥

५ अनुच्यमाने हीति । इदं च भाष्यं निमित्तनिमित्तिषष्ठ्यभावे दूषणमिति न 'अवयवषष्ठ्यादीनाश्चाप्रतिपत्तिः' इत्यग्रे वक्ष्यमाणस्य दूषणस्य पौनरुक्त्यम् ॥

६ 'अकारात्परस्य' इति क. च. छ. झ. ट. ड. पाठः ॥

७ तदनुपपत्तिः । अङ्गस्येति षष्ठ्यन्तस्यानुवृत्तस्य अत इति पञ्चम्यन्तेनान्वयानुपपत्तिरित्यर्थः ॥

८ 'विशेषणत्वेन तदन्तविधा' इति झ. पाठः ॥

९ इद्रूपलोपे । इदंशब्दे इद्रूपस्य-इद्भागस्य लोपेनापहारे-इत्यर्थः ॥

१० 'विधायकं तु विष्णु' इति झ. पाठः ॥

११ अभिमान इति । न ह्येकमुदाहरणं योगारम्भं प्रयोजयतीत्यभियुक्तोक्तिविरोधादभिमान इत्याशयः ॥

१२ 'चाप्रसिद्धिः' इति च. छ. झ. पाठः ॥

१३ निमित्तषष्ठ्युदाहरणमाह—ठस्येक इत्यत्रेति ॥

स्थानषष्ठ्यां विज्ञायमानायां तत्सामानाधिकरण्यात् 'गोहः' इत्यत्रापि स्थाने[2]षष्ठी स्यादिति विचार्यते। ततश्च स्थानषष्ठ्या अन्त्येऽल्युपसंहारादुपधाग्रहणाच्च [3]गोहोऽन्त्यस्योत्वमुच्येत, उपधामात्रस्य च ॥

( उद्द्योतः ) **अङ्गस्य निमित्तमिति** । अन्यथा कर्मठेऽतिप्रसङ्गः स्यादिति भावः । 'अतो भिस–' इत्यतोऽस्य को विशेष इति चिन्त्यम् । तस्मा[4]दादिशब्दस्याश्रयवाचितया तदाश्रयाणां कार्याणामप्रतिपत्तिरित्यर्थ उचितः ॥ **स्थानषष्ठी स्यादिति** । 'षष्ठी स्थानेयोगा' इति नियमादिति भावः ॥

( ६५०१ दोषापोहवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धं तु परस्परं प्रत्यङ्गप्रत्यय-संज्ञाभावात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम्[5] ?**

**परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः । अङ्गसंज्ञां प्रति प्रत्ययसंज्ञा, प्रत्ययसंज्ञां प्रत्यङ्गसंज्ञा ॥**

( प्रदीपः ) [6]आद्यन्तावचोद्यं परिहर्तुमाह–**सिद्धं त्विति** । प्रत्ययोत्पत्तौ प्रकृतेर्निमित्तत्वेनाश्रयणात् प्रकृतिमन्तरेण प्रत्ययो नास्ति। प्रत्यये परतोऽङ्गसंज्ञाविधानात् प्रत्ययानपेक्षमङ्गं नास्ति। तत्रान्यतरस्मिन्नुपादीयमानेऽव्यभिचारादितरस्याक्षेप इत्यर्थः ॥

( उद्द्योतः ) [7]अङ्गप्रत्ययसंज्ञयोः परस्परापेक्षत्वं कथमत आह—**प्रत्ययोत्पत्ताविति** । प्रत्ययसंज्ञाविशिष्टस्योत्पत्तावित्यर्थः । संज्ञिनोर्निमित्तत्वेन च संज्ञयोर्निमित्तत्वं भगवतोक्तम् ॥ ननु परस्परापेक्षत्वोपपादनस्य क उपयोगस्तत्राह—**तत्रान्यतरस्मिन्निति** । यथाऽत्रैवाङ्गनिमित्तस्य भिस इत्युक्त्वा तस्य प्रत्ययत्वे लब्धे तेन प्रातिपदिकरूपप्रकृत्याक्षेपः । आक्षेपश्च प्रातिपदिकात्परस्य भिस इति वाक्यैकदेशत्वानुमानम् । 'भिसः' इत्यस्य, यस्माद्विहितस्तदादेरित्यस्य, योग्यतया पञ्चम्यन्तस्य वा । [8]एतदर्थमेवात्र स्थाने भाष्ये 'परस्परं प्रति' इत्युक्तम् । अन्यथा प्रत्ययसंज्ञां प्र[9]त्यङ्गसंज्ञा–इत्येवाङ्गस्येत्यस्य संबन्धषष्ठीत्वोपपत्तौ त[10]दनुपयोगः स्पष्ट एव । तत्रा[11]ङ्ग**निमित्तस्ये**त्यस्याभावे ब्राह्मणभिस्सेत्यत्रातिप्रसङ्गः । **प्रातिपदिकात्परस्ये**त्यस्याभावे तदन्तविध्यलाभः । विभक्तिविपरिणामेनाङ्गात्**परस्ये**त्यर्थेऽपि ब्राह्मणभिस्सेत्यत्रातिप्रसङ्गः, प्रत्ययलक्षणेन ब्राह्मणेत्यस्याङ्गत्वात् । प्रत्यासत्तिस्तु दुर्ज्ञेयेत्युभयोपादानम् । **किंच** भिसः प्रत्ययस्यैव ग्रहणमित्यत्र न मानमिति प्रत्यासत्तिरतिदुर्ज्ञेयेति भावः । वस्तुतोऽदन्तादित्यस्य न फलमित्याक्षेपोऽत्र व्यर्थः । 'परस्परं प्रति' इति स्वरूपकथनमेव दृष्टान्तार्थमित्याहुः ॥

( वार्तिकावतरणभाष्यम् )

**किमतो यत्परस्परं प्रत्यङ्गप्रत्ययसंज्ञे भवतः ?**

इतरस्तु सत्यपि परस्पराक्षेपे स्थानषष्ठ्यां सत्यां सम्बन्धान्तरस्य विनाशं मत्वाऽऽह—**किमत इति** ॥

**परस्पराक्षेपे** । तत्प्रयोजके निमित्तनिमित्तिभावे इत्यर्थः । **विनाशं**—अप्रतीतिम् ॥

( ६५०२ स्थानषष्ठ्यां सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सम्बन्धषष्ठीनिर्देशश्च ॥ * ॥

**( भाष्यम् ) सम्बन्धषष्ठीनिर्देशश्चायं कृतो भवति–अङ्गस्य यो भिस्शब्द इति ।**

**किञ्चाङ्गस्य भिस्शब्दः ?**

**निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति ।**

**कस्मिंश्चैतद्भवति ?**

**प्रत्यये ॥**

( प्रदीपः ) **सम्बन्धषष्ठीनिर्देशश्चेति । अयं भावः**– प्रतिसूत्रमङ्गस्येत्यस्य शब्दरूपस्योपस्थाने यत्र विशिष्टसम्बन्धो निमित्तनिमित्तिभावादिकः सम्भवति तत्र परिभाषाया उपस्थानाभावः। यत्र त्वनेकसम्बन्धसम्भवस्तत्र सम्बन्धान्तरव्यवच्छेदफलायाः परिभाषाया उपस्थानम् । तत्र सम्बन्धसामान्येऽनाश्रितविशेषेऽङ्गस्येति षष्ठी, न तु स्थान्यादेशसम्बन्ध एवेत्ययमर्थः–सम्ब[12]न्धषष्ठीनिर्देशश्चेत्यस्य । अधिकारस्य पारार्थ्याद्वक्ष्यमाणानेकसम्बन्ध्यनुग्रहाय सम्बन्धसामान्यमुपादाय प्रवृत्ता षष्ठी प्रतियोगमुपतिष्ठमाना यथासम्भवं सम्बन्धविशेषफलोपतिष्ठते । इह तु [13]प्रतियोग्यनुपादानादपर्याप्ता विशेषमवगमयितुम् । ततो यथा देवदत्तस्य–इति सम्बन्धमात्राश्रयेणोपात्ता षष्ठी पुत्रः पाणिः कम्ब[14]ल इत्यादिभिर्विजातीयैः सम्बन्धिभिः सम्बध्यमाना विशेषावगतिनिमित्ततां याति, एवमङ्गस्येत्यपि । तत्र शब्दस्वरूपं वाऽधिक्रियताम्, अर्थो वा सम्बन्धमात्रलक्षणः । उभयथा दोषाभावात् । तत्राङ्गस्य भिसा सम्बन्धान्तरं न सम्भवतीति भिसा निमित्तनिमित्तिभावः समाश्रीयत इति ब्राह्मणभिस्सा[15]दावतिप्रसङ्गाभावः ॥

---

१ 'इत्यपि' इति च. झ. पाठः ॥

२ 'स्थाने षष्ठी स्या' इति ङ. पाठः ॥

३ गोहोऽन्त्यस्येति। अस्जोरोपधयोरित्यत्रेवोभयस्य स्थाने स्यादिति भावः॥

४ आदिशब्दस्य । 'अवयवषष्ठ्यादीनाञ्चाप्रतिपत्तिः' इति वार्तिकोक्तादिशब्दस्य। एवं च वार्तिकोक्त आदिशब्दो न प्राथम्यवाचीति तेन निमित्तषष्ठीपरिग्रहो न न्याय्य इति भावः ॥

५ 'कथम्? यत्परस्परं' इति ङ. पाठः ॥

६ आद्यम्–'अङ्गस्येति स्थानषष्ठी चेत्' इत्यादि ॥

७ 'ननु अङ्गप्रत्यय' इति ङ. पाठः ॥

८ एतदर्थमेव । वाक्यैकदेशत्वानुमानार्थमेव ॥

९ प्रत्यङ्गसंज्ञेत्येवेति । यदि अङ्गस्येत्यस्य संबन्धषष्ठीत्वबोधनमेव भाष्यकाराणामभिप्रायः स्यात्तदा प्रत्ययसंज्ञां प्रत्यङ्गसंज्ञेत्येवमेवोक्तं स्यात्, न तु परस्परमित्यादि ॥

१० तदनुपयोगः । परस्परमित्यादिभाष्यानुपयोगः ॥

११ अतो भिस ऐसित्यत्राङ्गस्येत्यधिकाराज्ज्ञातस्य 'अङ्गनिमित्तस्य भिसः' इत्यर्थस्य, आक्षेपात्प्रतिपन्नस्य 'प्रातिपदिकात्परस्य भिसः' इत्यर्थस्य च क्रमेणोपयोगमाह—तत्राङ्गनिमित्तेति, प्रातिपदिकादिति च ॥

१२ 'संबन्धषष्ठीनिर्देशश्चेति । अस्याधिकार' इति ङ. पाठः ॥

१३ प्रतियोग्यनुपादानात्–प्रयोज्यस्यानुपादानात् 'अङ्गस्य' इत्यत्र 'षष्ठी स्थाने–' इति परिभाषाऽनुपस्थितिरित्यर्थः ॥

१४ 'कम्बल इत्येवमादिभिर्वि' इति च. झ. पाठः ॥

१५ 'भिस्सादिष्वति प्रसं' इति ङ. पाठः ॥

(उद्योतः) 'किमतः' इत्यादेरुत्तरं भाष्ये—**संबन्धषष्ठीनिर्देशश्चेति** । च एवार्थे ॥ सम्बन्धसामान्ये या षष्ठी तदन्तस्य शब्दस्यायं निर्देश इति वार्तिकार्थ इत्यभिप्रेत्याह—**अयं भाव इति** । यथाश्रुते तु सर्वस्याः षष्ठ्याः सम्बन्धषष्ठीत्वादनुपपत्तिः स्पष्टैव ॥ **यत्र विशिष्टेति** । 'अतो भिस ऐस्' 'युवोरनाकौ'इत्यादौ निमित्तनिमित्तिभावः । 'ऊदुपधाया–' इत्यादाववयवावयविभाव एवेति तत्रानियमाभावान्नियमार्थपरिभाषाया अनुपस्थितिरित्यर्थः ॥ **अयमर्थः सम्बन्धषष्ठीनिर्देशश्चेति** । सम्बन्धषष्ठीनिर्देशश्चेत्यस्यायमर्थ इत्यन्वयः । क्वचित्तु तथैव पाठः ॥ नन्वर्थाधिकारपक्षे 'षष्ठी स्थाने–'इति परिभाषणात्स्थानसम्बन्ध एव षष्ठी युक्तेत्यत आह—**अधिकारस्येति** । एवञ्चाधिकारपरिभाषयोः पारार्थ्याद्गुणत्वेन परस्परमसम्बन्धात्परिभाषा नोपतिष्ठत इत्यर्थः ॥ नन्वेवमपि सम्बन्धसामान्यार्था षष्ठी कथमुत्तरत्र विशेषमुपस्थापयेदत आह—**वक्ष्यमाणेति** । सामान्यशब्दस्यापि योग्यतावशाल्लक्षणया वा तत्र तत्र विशेषोपस्थापकत्वमिति भावः ॥ नतु यथोत्तरत्र विशेषे पर्यवसानं तथेहापि स्यादत आह—**इह त्विति** ॥

( दोषाक्षेपपरिहारभाष्यम् )

**एवमप्यवयवषष्ठ्यादयोऽविशेषिता भवन्ति ।**
**अवयवषष्ठ्यादयोऽपि सम्बन्ध एव ॥**
**एवमपि स्थानमविशेषितं भवति ।**
**स्थानमपि सम्बन्ध एव ॥**
**एवमपि न ज्ञायते-क स्थानषष्ठी, क विशेषणषष्ठीति ?**
**यत्र षष्ठी अन्यं योगं नापेक्षते सा स्थानषष्ठी ।**
**यत्र ह्यन्ययोगमपेक्षते सा विशेषणषष्ठी ॥**

( प्रदीपः ) इतरो यथोक्तमर्थमप्रतिपद्य 'निमित्तनिमित्तिभाव एव सम्बन्धेऽङ्गस्येति षष्ठी'इत्यनेनोक्तमिति मत्वा पृच्छति-**एवमपीति** ॥

इतरः पूर्वोक्तेनाभिप्रायेणाह—**अवयवषष्ठ्यादय इति** ॥

स्थानसम्बन्धः सर्वथा परित्यक्त इति मत्वाऽऽह—**एवमपीति** ॥

**स्थानमपि सम्बन्ध एवेति** । सम्बन्धनिमित्तत्वात्सम्बन्ध इत्यर्थः ॥

**यत्र षष्ठीति** । सामर्थ्याद्विषयविभागोऽवतिष्ठत इत्यर्थः । 'ऊदुपधाया गोहः' इत्यवयवस्योपादानादङ्गस्य गोह इत्युपधापेक्षाऽवयवषष्ठी संपद्यते । 'अतो भिस ऐस्'इत्यादौ तु निमित्तषष्ठी । सम्बन्धविशेषावधारणहेत्वभावे तु स्थानषष्ठीत्यर्थः ॥

( उद्योतः ) ननूक्तेन न्यायेनावयवषष्ठ्यादीनामपि सिद्धत्वादेवमपीत्यादिप्रश्नासङ्गतिरत आह—**इतर इति** ॥

भाष्ये—**अविशेषिता इति** । असंगृहीता इत्यर्थः ॥

भाष्ये—**अवयवषष्ठ्यादयोऽपि सम्बन्धे एव**–जायन्त इत्यर्थः । यद्वा तद्वाच्या अवयवत्वादयोऽपि सम्बन्धेऽन्तर्भूता इत्यर्थः ॥

**स्थानसंबन्धः सर्वथेति** । सम्बन्धद्वयमेवानेन गृहीतमिति भावः ॥

ननु प्रसङ्गोऽर्थो वा स्थानं, तन्निरूपितो हि सम्बन्धो न तु तदेव सम्बन्धोऽत आह—**सम्बन्धनिमित्तत्वादिति** । सम्बन्धिनौ हि सम्बन्धस्य निमित्तम् । निमित्तनिमित्तिनोरभेदोपचारादेवमुक्तिरित्यर्थः ॥ **सम्बन्धविशेषेति** । यथा 'हन्तेर्जः' इत्यादौ । **'अन्यं योगं नापेक्षते' इति** भाष्यस्य—स्थानातिरिक्तसम्बन्धिनं नापेक्षत इत्यर्थः । **अन्ययोगसम्बन्धमिति** पाठे–अन्यसम्बन्धिनिरूपितं सम्बन्धमपेक्षत इत्यर्थः । यद्यपि स्थानषष्ठ्यपि विशेषणषष्ठ्येव, तथापि ब्राह्मणवसिष्ठन्यायेन निर्देशः ॥

( वार्तिकावतरणभाष्यम् )

**कानि पुनरङ्गाधिकारस्य प्रयोजनानि ?**
**अङ्गाधिकारस्य प्रयोजनम्—**

( प्रदीपः ) **कानि पुनरिति** । अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सर्वस्येष्टस्य सिद्धिं मत्वा **प्रश्नः** ॥

( ६५०३ अधिकारप्रयोजनवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ सम्प्रसारणदीर्घत्वे ॥ * ॥**

( भाष्यम् ) **हल उत्तरस्य सम्प्रसारणस्य दीर्घत्वं भवति–हूतः, जीनः, संवीतः, शूनः ।**
**अङ्गस्येति किम् ?**
**निरुतम्, दुरुतम् ॥**

( प्रदीपः ) **सम्प्रसारणदीर्घत्व इति** । 'हलः' इत्यत्राङ्गस्येत्यस्यानुवृत्तस्यावृत्त्याऽङ्गस्येत्यनेन हल् विशेष्यते, सम्प्रसारणेन चाङ्गं विशेष्यत इति तदन्तविधिर्भवतीत्ययमर्थो भवति–अङ्गावयवाद्धलो यदुत्तरं सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घो भवति–इति ॥

**हूत इति** । ह्वेञ्, क्तः ॥ **जीन इति** । ज्या वयोहानौ, 'ग्रहिज्या–' इति सूत्रेण सम्प्रसारणम्, 'ल्वादिभ्यः' इति निष्ठातकारस्य नत्वम् ॥ **संवीत इति** । व्येञ् संवरणे, क्तः । यजादित्वात्सम्प्रसारणम्, सम्प्रसारणान्ताङ्गग्रहणात् 'विद्धः' इत्यादौ दीर्घाभावः ॥

**निरुतमिति** । वेञो निरुपसृष्टस्य निष्ठायां सम्प्रसारणम् ॥

( उद्योतः ) 'हलः' इत्यत्राङ्गस्येत्यस्य द्वेधोपकारं दर्शयति—**हल इत्यत्रेति** ॥

आवृत्तिफलं दर्शयति—**विद्ध इत्यादाविति** ॥

---

१ 'निर्देशश्चेति ॥ सम्बन्धसामान्ये' इत्येव झ. पाठः ॥
२ 'तद्वाच्यावयवत्वाद्' इति ङ. पाठः ॥
३ प्रसङ्गोऽर्थो वेति । षष्ठीस्थानेति सूत्रे कैयटे;स्थानशब्दस्य प्रसङ्ग इत्यर्थः, अर्थ इत्यर्थो वा–इति पक्षद्वयमप्युपस्थापितम् । 'स्थानं–अर्थ इति केचिदाहुः । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । अर्थे च शब्दास्तिष्ठन्ति, तेनास्तेरर्थे भूरित्यर्थः' इत्युक्तम् । तं पक्षमुपलक्ष्य 'अर्थो वा' इत्युक्तिः ॥
४ 'किमर्थम्' इति च. छ. झ. पाठः ॥
५ 'ह्वेञः क्तः । ग्रहि' इति झ. पाठः ॥
६ 'वयोहानौ, क्तः' इति च. पाठः ॥

( ६५०४ प्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ नाम्सनोर्दीर्घत्वे ॥ * ॥

( भाष्यम् ) प्रयोजनम् । नामि दीर्घो भवति—अग्नीनाम्, इन्दूनाम् ।

अङ्गस्येति किम्[1] ?

क्रिमिणां पश्य, पामनां पश्य ॥

सनि दीर्घो भवति—चिचीषति, तुष्टूषति ।

अङ्गस्येति किमर्थम् ?

दधि सनोति, मधु सनोति ॥

( प्रदीपः ) क्रिमिणामिति । क्रिमयोऽस्यां सन्तीति पामादित्वान्नप्रत्ययः, टाप्प्रत्ययः, द्वितीयैकवचनम् । लाक्षणिकत्वादस्य न[3] भवतीति चेत्, तन्न । प्रतिपदोक्तस्य नामोऽभावात् । षष्ठीबहुवचनस्यापि नुटि कृते लाक्षणिकमेव 'नाम्'इति रूपम् ॥

दधि सनोतीति । सानुबन्धोऽयं धातुरिति चेत् प्रत्ययोऽपि नकारेत्संज्ञकत्वात्सानुबन्धकः । धातोश्चाव्यभिचारी नकार इति तस्यैव ग्रहणप्रसङ्गः ॥

( उद्द्योतः ) क्रिमयोऽस्यामिति । क्रिमिशब्दस्य नप्रत्ययापेक्षयाऽङ्गत्वेऽपि नाम्निरूपिताङ्गत्वाभावाद्दीर्घाभाव इत्यर्थः ॥ सानुबन्धक इति । 'षणु दाने' इत्युकारानुबन्धत्वात् ॥ ननु येनानुबन्धेन सानुबन्धत्वं तदनुच्चारण एव निरनुबन्धकपरिभाषाप्रवृत्तिरित्यत आह—धातोश्चेति । अङ्गाधिकाराभावे 'दधि सनोति' इत्यादावेव स्यान्नतु चिचीषतीत्यादाविति भाष्याशय इति भावः । अङ्गाधिकारे तु सनि परेऽङ्गस्य दीर्घ इत्यर्थे प्रत्यासत्त्या सन्प्रत्ययस्यैव तन्निरूपिताङ्गस्यैव च ग्रहणान्न दोष इति बोध्यम् ॥

( ६५०५ प्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ लिङ्येत्वे ॥ * ॥

( भाष्यम् ) प्रयोजनम्[4] । ग्लेयात्, म्लेयात् ।

अङ्गस्येति किमर्थम् ?

निर्यायात्, निर्वायात् ॥

( ६५०६ प्रयोजनवार्तिकम् ॥ ८ ॥ )

॥ * ॥ अतो भिस ऐस्त्वे ॥ * ॥

( भाष्यम् ) प्रयोजनम्[5] । वृक्षैः । प्लक्षैः ।

अङ्गस्येति किम्[6] ?

ब्राह्मणभिस्सा, ओदनभिस्सटा ॥

( ६५०७ प्रयोजनवार्तिकम् ॥ ९ ॥ )

॥ * ॥ लुङादिष्वडाटौ ॥ * ॥

( भाष्यम् ) प्रयोजनम्[7] । अकार्षीत्, ऐहिष्ट ।

अङ्गस्येति किमर्थम् ?

प्राकरोत्, उपैहिष्ट[8] ॥

( ६५०८ प्रयोजनवार्तिकम् ॥ १० ॥ )

॥ * ॥ इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्केह्रस्वयिदीर्घभितत्वानि ॥ * ॥

( भाष्यम् ) इयङुवङौ[9] प्रयोजनम् । श्रियौ, श्रियः । भ्रुवौ, भ्रुवः ।

अङ्गस्येति किमर्थम् ?

श्र्यर्थम्, भ्र्वर्थम् ॥

युष्मदस्मदोः प्रयोजनम् । 'साम आकम्' (७।१।३३) युष्माकम्, अस्माकम् ।

अङ्गस्येति किम्[10] ?

युष्मत्साम, अस्मत्साम ॥

तातङ् प्रयोजनम् । जीवतु जीवताद् भवान् ।

अङ्गस्येति किमर्थम् ?

पच हि तावत्त्वं, पच तु तावत्त्वम् । जल्प हि तावत्त्वम्, जल्प तु तावत्त्वम् ॥

आमि नुट् प्रयोजनम् । किशोरीणाम्, कुमारीणाम् ।

अङ्गस्येति किमर्थम् ?

कुमारी आमित्याह, किशोरी आमित्याह ॥

'आने मुक्' (७।२।८२) प्रयोजनम् । यजमानः, पचमानः ।

अङ्गस्येति किमर्थम् ?

प्राणः ॥

के ह्रस्वः प्रयोजनम् । कुमारिका, किशोरिका ।

अङ्गस्येति किमर्थम् ?

कुमारीं कायति–कुमारीकः ॥

यि दीर्घः प्रयोजनम् । चीयते, स्तूयते ।

अङ्गस्येति किम् ?

दधियानम्, मधुयानम् ॥

भि तत्वं प्रयोजनम् । अद्भिः, अद्भ्यः ।

अङ्गस्येति किमर्थम् ?

अब्भारः, अब्भक्षः ॥

( प्रदीपः ) पच हीति । हितू निपातौ । तत्राशिषि लोटो हेरन्यतरस्यां तातङ्विधानात्पक्षे तदभावात् 'अतो हेः'

---

१ 'नाम्सनोश्च । नाम्सनोर्दीर्घत्वे' इति च. छ. झ. पाठः । एतानि न वार्तिकानि, किन्तु भाष्यमेवेति केचित् ॥

२ 'किमर्थम्' इति च. छ. झ. पाठः ॥

३ 'न भविष्यतीति चेन्न' इति झ. पाठः । 'न भवतीति चेन्न' इति च. पाठः ॥

४ 'लिङ्येत्वे प्रयोजनम्' इति च. छ. झ. पाठः ॥

५ 'अतो भिस ऐस्त्वे प्रयोजनम्' इति च. छ. झ. पाठः ॥

६ 'किमर्थम्' इति च. छ. झ. पाठः ॥

७ 'लुङादिष्वडाटौ प्रयोजनम्' इति च. छ. झ. पाठः ॥

८ 'उपैहिष्ट' इति च. छ. झ. पाठः ॥

९ 'इयङुवङौ च प्रयोज' इति ङ. पाठः ॥

१० 'किमर्थम्' इति च. छ. झ. पाठः ॥

इति हेर्लुकि कृते निपातयोरपि तुह्योः प्रतिव्यक्तिलक्षणप्रवृत्तावभावोपक्रमेऽपि तातङ्प्रसङ्गः । तथा **चोच्यते—विभाषिताः प्रयोजयन्ति, द्रोग्धा द्रोग्धा, द्रोढा द्रोढा–इति ॥**

**प्राण इति ।** प्रपूर्वस्यानितेर्घञि वृद्धौ च कृतायां 'प्र आन' इति स्थिते मुक्प्रसङ्गः सार्वधातुकाधिकारेऽनपेक्ष्यमाणे ॥ ननु धातूपसर्गयोरेकादेशेनान्तरङ्गत्वाद्भाव्यं न तु वृद्ध्या । नैतदस्ति । वार्णादाङ्गस्य बलीयस्त्वात् । तथा च 'प्रत्ययः' इत्यादौ सवर्णदीर्घत्वाभावः[1] । अत्र तु लाक्षणिकत्वेनापि मुको[2] निरासो वक्तुं शक्यते ॥

**कुमारिकेति ।** अल्पादावर्थे 'प्रागिवात्कः' ॥

**कुमारीक इति ।** अत्रापि लाक्षणिकत्वात्कस्य ह्रस्वाभावः सिध्यति ॥

**( उद्योतः )** ननु 'एकस्या आकृतेः–' इति न्यायादभावोपक्रमे कथं तद्भावो[3]ऽत आह—**अभावोपक्रमेऽपीति ।** तिङ्व्यक्तिविषयेऽभावोपक्रमेऽपि निपातविषये तदभावात्तत्प्रसङ्ग[4] इति भावः ॥ **किञ्च** सार्थकानेकविषये एवैष[5] न्यायः, न चाभावोऽर्थवान्–इत्यर्थं दृष्टान्तव्याजेनाह—**तथा चेति ।** 'सर्वस्य द्वे' इत्यत्र 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य प्रयोजनत्वेनैतद्[6]भगवता वक्ष्यते । तत्र हि तदभावे[7] घत्वादिभ्यः पूर्वं द्वित्वे 'द्रोग्धा द्रोढा' इत्येवं स्यादित्यापादितम् । तच्चैतन्न्यायस्य[8] सार्वत्रिकत्वाङ्गीकारे विरुध्येत । मम तु घढयोरनर्थकत्वान्न तद्विषये एतन्न्यायप्रवृत्तिरिति[9] न दोष इति भावः ॥

**सार्वधातुकाधिकार इति ।** 'रुदादिभ्यः सार्वधातुके' इत्यतः ॥ **वार्णादाङ्गस्येति ।** असमानकालप्राप्तिकेऽपि तन्न्यायप्रवृत्तिः । यत्र तु नेष्टा तत्रानित्यत्वमाश्रयणीयमिति भावः । अत एव 'प्रत्ययः' इत्यत्र सवर्णदीर्घं बाधित्वा गुणः । 'सुड्कात्पूर्वः' इतिसूत्रभाष्योक्तरीत्या तु शङ्कैवेयं निर्दला ॥ **लाक्षणिकत्वेनापीति ।** निरनुबन्धकपरिभाषालक्षणपरिभाषाभ्यामुभयोर्ग्रहणस्य सम्भवाच्चिन्त्यमिदम् ॥

( वार्तिकावतरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि ।**

**कथम् ?**

**( ६५०९ प्रयोजनान्यथासिद्धिसाधकं वार्तिकम् ॥ ११ ॥ )**

**॥ * ॥ अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् ॥ * ॥**

**( भाष्यम् ) अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि सिद्धानि । क्वचित् 'अर्थवद्ग्रहणेनानर्थकस्य' इत्येवं न भविष्यति, क्वचित् 'प्रत्ययाप्रत्यययोर्ग्रहणे[11] प्रत्ययस्यैव ग्रहणं भवति' इति ॥**

**अथवा प्रत्यय इति प्रकृत्याङ्गकार्यमध्येष्ये ।**

**यदि प्रत्यय इति प्रकृत्याङ्गकार्यमधीषे–प्राकरोत्, उपैहिष्ट-उपसर्गात्पूर्वमडाटौ प्राप्नुतः ।**

***सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात्* ।**

**सिद्धमेतत् ।**

**कथम् ?**

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीति, एवमुपसर्गात्पूर्वमडाटौ न भविष्यतः ॥**

**( प्रदीपः ) क्वचिदर्थवद्ग्रहण इति ।** अयं परिहारो 'निरुतं' 'विद्धः' इत्यादौ सम्प्रसारणदीर्घत्वे न सम्भवति । तत्र क्रिमिणामित्यत्र नाम् न प्रत्ययः । नाप्यर्थवान्, प्रत्ययत्रयार्थस्य परस्परानन्वयादिति दीर्घाप्रसङ्गः । **दधि सनोतीति** सनोऽप्रत्ययत्वाद्दीर्घाभावः । **निर्यायादित्यादौ** संयोगादेरानर्थक्यादेत्वाभावः । अडाटोस्तु नायं परिहारः । **ब्राह्मणभिस्सेत्यादौ** भिसोऽप्रत्ययत्वादानर्थक्याच्च ऐसोऽप्रसङ्गः । इयङुवङोऽस्तु नायं परिहारः, वर्णग्रहणेषु परिभाषाद्वयस्यानुपस्थानात् । यथा 'इको यणचि' इति दध्याशयतीत्यादावप्रत्यये[12]ऽप्यनर्थके[13]ऽप्यचि यणादेशो भवति, एवं श्र्यर्थमित्यादावियङुवङ्प्रसङ्गः । **युष्मत्सामेति** साम्नो[14]ऽप्रत्ययत्वादानर्थक्याच्चाकमोऽप्रसङ्गः । **तुह्योर्निपातयो**रप्रत्ययत्वात्तातङोऽप्रसङ्गः । एवमामोऽप्रत्ययस्यानुकरणस्य नुडभावः । **प्राण** इत्यत्रानस्याप्रत्ययत्वात् मुगभावः । **भितस्त्वेयं** परिहारो नोपपद्यते, वर्णग्रहणात् ॥

अत एवाव्यापकत्वमस्य परिहारस्य मत्वाऽऽह—**अथवेति ॥**

**सिद्धं त्विति ।** यत्र प्रत्ययो निमित्तत्वेनोपादीयते तत्र पूर्वः कार्यित्वेन गृह्यमाणो यस्मात्स विहितस्तदादिर्गृह्यते[15] । एतच्चाङ्गसंज्ञासूत्रे योगविभागेन साधितम् । यत्र तु प्रत्यय एव कार्यित्वेनाश्रीयते तत्र तदन्तग्रहणमिति[16] द्वे एते परिभाषे । अङ्गाधिकारप्रत्याख्यानाय प्रत्ययाधिकारे क्रियमाणे न किंचित्प्रयोजनं दृश्यते । 'अतो भिस ऐस्' इत्यादिषु विविभक्तिकत्वात्

१ 'सवर्णदीर्घाभावः' इति ङ. पाठः ॥

२ 'मुङ्निरासो' इति ङ. पाठः ॥

३ तद्भावः–तातङ्भावः ॥

४ तदभावात्तत्प्रसङ्गः–अभावोपक्रमस्याभावात्तातङ्प्रसङ्गः ॥

५ एष न्यायः–'एकस्या आकृतेश्चरितप्रयोगो न द्वितीयस्याः' इत्येष न्यायः ॥

६ एतत्–द्रोग्धा–द्रोग्धा, द्रोढा–द्रोढा–इत्येतत् ॥

७ तदभावे–'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्याभावे ॥

८ एतन्न्यायस्य–'एकस्या आकृतेश्चरितः प्रयोगो न–' इति न्यायस्यार्थवत्सु अनर्थकेषु च प्रवृत्तिरित्येवं सार्वत्रिकत्वाङ्गीकारे ॥

९ तन्न्यायप्रवृत्तिरिति । 'प्रत्ययः' इत्यादिनिर्देशाद्वार्णादाङ्गं बलीय इति न्यायस्यासमानकालत्वेऽपि प्राप्तिः स्वीक्रियत इति भावः ॥

१० 'क्वचिदर्थवद्ग्रहणे नानर्थकस्येत्येवं भविष्यति, क्वचित्प्रत्ययाप्रत्यययोर्ग्रहणे प्रत्ययस्यैव ग्रहणं भवतीति' इति च. छ. झ. पाठः ॥

११ 'प्रत्ययग्रहणेऽप्रत्ययस्य न–इति' इति अ. क. ट. पाठः ॥

१२ 'दध्याशयतीत्यादौ' इति च. झ. पाठः । स लेखकप्रमादात् ॥

१३ 'वप्रत्ययेऽप्यानर्थक्येऽप्यचि' इति ङ. पाठः ॥

१४ 'सामोऽप्रत्यय' इति ङ. पाठः ॥

१५ 'कार्यित्वेनोपादीयते' इति च. झ. पाठः ॥

१६ तदन्तग्रहणमितीति । यत्रैव पञ्चम्यन्तात्परः प्रत्ययः कार्यित्वेनोपादीयते तत्र तदन्तग्रहणं नेति भावः ॥

भिसादीनां प्रत्ययेन सम्बन्धो दुरुपपादः । 'हलः' इति संप्रसारणदीर्घत्वं च निरुतं दुरुतमित्यादौ न परिहृतं भवति ॥

( उद्द्योतः ) [1][अयं परिहार इति । यद्यपि अर्थवद्ग्रहणपरिभाषासंचारे निरुतमित्यादाववारणेऽपि 'विद्धः' इत्यादौ वारणमेव । तथापि लक्ष्यासिद्धेर्वर्णग्रहणाच्च प्रत्ययग्रहणपरिभाषावत् अर्थवद्ग्रहणपरिभाषाया अपि असम्भव एवेत्यर्थः । अत एव 'विद्ध इति ··· न सम्भवति' इत्येव चोक्तम्, न तु नास्तीति ।] भाष्ये—'क्वचित्प्रत्ययग्रहणेऽप्रत्ययस्य नेति' इति पाठः ॥ **न प्रत्यय इति** । [2]प्रत्ययत्रयसमुदायस्याप्रत्ययत्वादिति भावः ॥ **अडाटोस्त्विति** । सोपसर्गस्यार्थवत्त्वात्, प्रत्ययग्रहणपरिभाषाया असंभवाच्च । लुङा [3]धात्वाक्षेपेण शक्य[4]वारणमिदम् ॥ **अयं**—परिभाषाद्वयरूपः, तदाह—**वर्णग्रहणेष्विति** । इयङादिविधावङ्गाधिकाराभावे प्रत्ययस्यासंनिधानादत्र्यवर्णाश्रय एव स इति भावः । अङ्गाधिकारे तु इवर्णाद्यन्ताङ्गस्य निमित्तेऽजादौ प्रत्यये परतः प्रत्यासत्त्या तस्यैवाङ्गस्येयङादीत्यर्थो वोध्यः । आमोऽप्रत्ययत्वे हेतुः—**अनुकरणस्येति** ॥

**तत्र पूर्व इति** । [5]प्रत्ययविधौ च 'अपञ्चम्या' इति निषेधात्तदन्तविधेरभाव **इति भावः । न च** 'प्रत्यय' इत्यधिकारेऽपि उक्तरीत्या परस्पराव्यभिचारादङ्गाक्षेपेण सिद्धे परिभा[6]षापर्यन्तधावनमफलमिति **वाच्यम्** । प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभाव **इत्याशयात् ॥ योगविभागेनेति** । 'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इत्यन्तेनेत्यर्थः ॥ **द्वे एते इति । आद्या** योगवि[7]भागसिद्धा । **अन्त्या** तद[8]न्तपरिभाषासिद्धेति **बोध्यम्** ॥ अयं परिहारः प्रौढ्येत्याह—**अङ्गाधिकारेति** ॥ **न किंचित्प्रयोजनमिति** । अक्षरसाम्येन लाघवाभावात्, मात्राधिक्येन गौरवाच्चेति भावः ॥ विभक्तिविपरिणामेन कथंन्चित्संवन्धस्योपपादयितुं शक्यत्वेऽप्याह—**हल इतीति** । तस्मादङ्गाधिकारः कर्तव्य इति **भगवतो गूढोऽभिसन्धिरिति** भावः । **नैतानीत्यादि**ग्रन्थ एकदेश्युक्तिरिति तात्पर्यम् ॥

( १२६४ विधिसूत्रम् ॥ ६ । ४ । १ आ. २ )

## २००० हलः ॥ ६ । ४ । २ ॥

( दीर्घाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**इह कस्मान्न भवति-तृतीयः ?**

(प्रदीपः) अण्ग्रहणमिग्ग्रहणेन वि[9]च्छिन्नमिति मत्वाऽऽह-**इह कस्मादिति** ॥

(उद्द्योतः) ननु 'ढ्रूलोपे–' इत्यतोऽण्ग्रहणानुवृत्तेः पूर्वेण चाण्ग्रहणात्तृतीये दीर्घाप्राप्तिरत आह—**अण्ग्रहणमिति** । 'इकः काशे' इतीग्ग्रहणेनेत्यर्थः ॥

( ६५१० अतिव्याप्तिनिवारकवार्तिकम् ॥ १ ॥ )

**॥*॥ अण्प्रकरणादृकारस्याप्राप्तिः ॥*॥**

( भाष्यम् ) **अण्प्रकरणादृकारस्य दीर्घत्वं न भविष्यति । [10]अण इति वर्तते ।**

**क्व प्रकृतम् ?**

**'ढ्रूलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) इति ॥**

( उद्द्योतः ) [11][भाष्ये—**अण्प्रकरणादिति** । यतः स्वरितत्वप्रतिज्ञाया दीर्घग्रहणस्य 'ऋमश्च त्तिव' इत्यन्तं प्रतिसूत्रं प्रतिसम्बन्धस्तत्रैवाण्दीर्घयोर्नियतसम्बन्धबोधनाय अग्रे तावत्पर्यन्तमननुवृत्तावपि अग्रिमसूत्रलक्ष्याणां तथैव सत्वेन स्थानित्वेन प्रक्रमादित्यर्थः । ]

( वार्तिकावतरणभाष्यम् )

**तद्धै 'इकः काशे' ( ६।३।१२३ ) इत्यनेनेग्ग्रहणेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ॥**

( ६५११ अण्ग्रहणानुवृत्तिसाधकवार्तिकम् ॥ २ ॥ )

**॥*॥ इग्ग्रहणस्य चाण्विशेषणत्वात् ॥*॥**

( भाष्यम् ) **अण्विशेषणमिग्ग्रहणम्-अण इक इति ॥**

(प्रदीपः) **अण्विशेषणमिति** । 'प्रकाशः' इत्यादावकारस्य दीर्घनिवृत्त्यर्थमिकाऽण् विशेष्यते-इत्यर्थः ॥

( उद्द्योतः ) [11][ **इकाऽणिति** । तथाच भाष्ये षष्ठीतत्पुरुषो बोध्यः । अत एव तदाकारप्रदर्शनं 'अण इकः' इति कृतम् । ]

( अण्ग्रहणानुवृत्तौ दोषनिवारकभाष्यम् )

**यदि तर्ह्यण्विशेषणमिग्ग्रहणं, चौ दीर्घो भवति-इतीह न प्राप्नोति-अवाचा, अवाचे ।**

**नैष दोषः । अण्ग्रहणमनुवर्तते, इग्ग्रहणं निवृत्तम् ॥**

**[12]एवमपि कर्तृचः, कर्तृचा, कर्तृचे-अत्र न प्राप्नोति ।**

---

१ [ ] एतच्चिह्नगतो भागो ङ. पुस्तके एव दृश्यते ॥

२ प्रत्ययत्रयेति । क्रिमिशब्दात् पामादित्वान्नप्रत्यये तस्माट्टापि द्वितीयैकवचनेऽमि च 'णाम्' इत्येतत्प्रत्ययत्रयसमुदायरूपम्, न च प्रत्ययसमुदायस्य प्रत्ययत्वमिति भावः ॥

३ धात्वाक्षेपेणेति । उपलक्षणमिदम् । लुङः प्रत्ययत्वेन यस्मात्प्रत्ययविधिस्तदादेरुपस्थित्या सुशकवारणमित्याशयः ॥

४ 'वारणमिदम् ॥ वर्णग्रहणेष्विति ।' इत्येव क. झ. ट. अ. पाठः ॥

५ 'प्रत्ययग्रहणे चापञ्चम्या' इति ङ. पाठः ॥

६ 'पर्यन्तं धावन' इति ङ. पाठः ॥

७ योगविभागसिद्धेति । 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यत्र 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इति योगविभागेन साधिता-प्रत्ययग्रहणे यस्मात्सविहितस्तदादेर्ग्रहणमित्येवं रूपा ॥

८ तदन्तेति । अन्त्या-'तदन्तस्य ग्रहणम्' इत्यंशश्च 'येन विधिस्तदन्तस्य' इति तदन्तपरिभाषासिद्धा ॥

९ विच्छिन्नमिति । 'ढ्रूलोपे पूर्वस्य दीर्घोऽणः' इत्यतोऽनुवृत्तमण्ग्रहणं 'इकः काशे' इत्यतोऽनुवर्तमानेनेग्ग्रहणेन विच्छिन्नमिति अत्राण्ग्रहणानुवृत्तिरेव न स्यादिति तृतीये दीर्घप्राप्तिरिति भावः ॥

१० 'अण् इति' इति ङ. पाठः ॥

११ [ ] एतच्चिह्नान्तर्गतोंऽशः ङ. पुस्तके एव दृश्यते ॥

१२ एवमपीति । अपिनोभयोरनुवृत्तावपि 'अवाचा' इतिवत् अयमपि दोष इति सूचितम्, अत्राण्ग्रहणस्य पूर्वेण णकारेण प्रत्याहारात् ॥

यथालक्षणमप्रयुक्ते ॥

( प्रदीपः ) **अवाचेति** । 'चौ'इत्यत्रेग्ग्रहणानुवर्तनादकारस्य दीर्घाप्रसङ्गः । यथा 'इकः काशे' इत्यत्र विरोधाभावादणिकोः सम्बन्धः, एवं योगान्तरेऽपीति भावः ॥

लक्ष्यनिबन्धनापेक्षावशादधिकाराणां निवृत्त्यनुवृत्ती इति मत्वाऽऽह—**नैष दोष इति** ॥

**एवमपीति** । केवलाण्ग्रहणानुवृत्तावपि दोष इत्यर्थः । तन्निवृत्तौ तु अच्परिभाषोपस्थानादकारस्यापि दीर्घः सिद्ध्यति ॥

**यथालक्षणमिति** । मा भूदत्र दीर्घत्वमित्यर्थः ॥

( उद्योतः ) **मा भूदत्रेति** । अप्रयुक्ते लक्षणाप्रवृत्तेरीदृशं लक्ष्यमेव नास्तीत्यर्थः ॥

( वार्तिकान्यथासिद्धिसाधकभाष्यम् )

**अथवा-उभयं निवृत्तम् । कस्मान्न भवति-तृतीय इति ?**

**निपातनात् ।**

**किं निपातनम् ?**

**'द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्' (२।२।३) इति ॥**

( प्रदीपः ) अथानन्त्यात् प्रयोगविषयस्य 'कर्तृचा'इत्यादिप्रयोगः स्यादित्युच्यते, तत्रापि ब्रूमः—**अथवेति** । 'चौ'इत्यत्रोभयाननुवर्तनात्कर्तृच इत्यादिसिद्धिः ॥

( उद्योतः ) **सिद्धिरिति** । वस्तुतो लाघवमाश्रित्यैवोभयनिवृत्तिरुच्यते इति बोध्यम् ॥

( १२६५ विधिसूत्रम् ॥ ६ । ४ । १ आ. ३ )

## ३००१ नामि ॥ ६ । ४ । ३ ॥

( सनकारग्रहणाक्षेपभाष्यम् )

**किमर्थमामः सनकारस्य ग्रहणं क्रियते, न 'आमि दीर्घः' इत्येवोच्यते ?**

**केनेदानीं सनकारस्य भविष्यति ?**

**नुडयमामूभक्त आमूग्रहणेन ग्राहिष्यते ॥**

**अत उत्तरं पठति—**

( प्रदीपः ) नुट्दीर्घयोरेकविषयत्वादुभयानुग्रहाय पूर्वं नुटि कृतेऽव्यवधायकत्वादागमानां दीर्घो भविष्यत्यन्तरेण सनकारकनिर्देशमिति मत्वाऽऽह—**किमर्थमिति** ॥

इतरश्चोदकबुद्धिपरीक्षार्थमाह—**केनेदानीमिति** ॥

चोदकः स्वाभिप्रायमाह-**आमिति** ॥

(उद्योतः) ननु असति सनकारग्रहणे[1] नित्यत्वात्पूर्वं दीर्घे कृते ह्रस्वान्त[2]स्य विधीयमानो नुट्न स्यादत आह—**नुट्दीर्घयोरिति** ॥

**अव्यवधायकत्वादिति** । नुट आम्भक्तत्वेन तद्ग्रहणेन ग्रहणादित्यर्थः ॥

( नुट्प्रयोजनश्लोकवार्तिकम् )

## नामि दीर्घ आमि चेत्स्या-
## त्कृते दीर्घे न नुड् भवेत् ।

( भाष्यम् ) **नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे[3] न नुट् स्यात् । अग्नीनाम्, इन्दूनाम् ।**

**इदमिह संप्रधार्यम्—दीर्घत्वं क्रियतां नुडिति, किमत्र कर्तव्यम् ?**

**परत्वान्नुट् ।**

**नित्यं दीर्घत्वम् । कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि । नित्यत्वाद्दीर्घे कृते ह्रस्वाश्रयो नुट् न प्राप्नोति ॥**

(प्रदीपः) **नामि दीर्घ इति** । योऽयं नामि दीर्घ उच्यते स यदि 'आमि'इति सूत्रन्यासेनामि स्यात्तदा नित्यत्वान्नुटं बाधित्वा दीर्घे प्रवृत्ते ह्रस्वान्तत्वाभावादग्नीनामित्यादौ नुण्न स्यादित्यर्थः ॥

इतरस्त्वनवकाशत्वादशक्यो नुट् बाधितुमिति मत्वाऽऽह—**इदमिहेति** । नन्वनवकाशत्वाद्विप्रतिषेधानुपपत्तौ कथमुच्यते परत्वान्नुडिति ? **एवं मन्यते**—द्वावपि नुट्दीर्घावनवकाशौ । तत्राङ्गप्रत्यययोर्युगपन्निमित्तनिमित्तिभावाभावादवश्याश्रयितव्ये क्रमे विप्रतिषेधोपपत्तिः । वाक्यकारेण तु सम्भवमात्रमाश्रित्योक्तम्-द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत्प्राप्नुतः स विप्रतिषेध इति । तत्रानवकाशत्वात् पुनः प्रसङ्गविज्ञानाद्दीर्घत्वम् ॥

**नित्यं दीर्घत्वमिति** । 'तिसृणां-चतसृणां-नृणाम्'इत्यत्र सावकाशो नुट् 'अग्नीनाम्'इत्यादौ नित्यत्वात् दीर्घेण बाध्यते ॥

( उद्योतः ) 'तिसृणां नृणाम्'इति भि[4]न्नविषयसत्त्वात्-इति-मत्वा-इत्युक्तम्-[[5]भाष्ये नेति शंकायाम् ] ॥ **द्वावपीति** । नुड्विषयपरिहारेण दीर्घस्यावकाशाभाव इव दीर्घविषयपरिहारेण नुटोऽप्यवकाशाभाव [6]इत्यभिमानः ॥ **तत्राङ्गेति** । नुँ[7]ट्यङ्गस्य निमित्तत्वं, प्रत्ययस्य निमित्तित्वं, दीर्घे तु वि[8]पर्रीतम् । विरोधमात्रस्य विप्रतिषेधशब्दवाच्यत्वादत्र परत्वेन व्यवस्थोक्तेति भावः । सावकाशयोरिवानवकाशयोरपि विरोधे शास्त्रप्रवृत्तिरुचितेति तात्पर्यम् ॥ नन्वेवं विप्रतिषेधलक्षणमसङ्गतं स्यादत आह—**वाक्यकारेण त्विति** । सावकाशयोर्विप्रतिषेधः प्रायेण संभवतीति तथोक्तमिति भावः ।

---

१ 'नकारग्रहणेऽपि नित्य' इति ङ. पाठः ॥

२ 'ह्रस्वान्ताद्विधीयमान' इति ङ. पाठः ॥

३ 'दीर्घत्वे' इति च. झ. छ. पाठः । 'दीर्घे नुट् न स्यात्' इति ङ. पाठः ॥

४ भिन्नविषयसत्वादिति । प्रदीपेऽग्रे प्रदर्श्यमानस्य 'तिसृणां चतसृणां नृणाम्'इत्यत्रावकाशस्य नुटः सत्वेऽपि तमविगणय्य नुटोऽनवकाशत्वमभ्युपगम्येत्यर्थः । भाष्ये नेति शङ्कायाम्-कृते दीर्घे न नुट् स्यादिति शङ्कायामित्यर्थः ॥

५ [ ] एतच्चिह्नितो भागो ङ. पुस्तके एव दृश्यते ॥

६ इत्यभिमान इति । 'इदमिह संप्रधार्यम्' इत्याशङ्काकर्तुरितरस्येति भावः ॥

७ युगपन्निमित्तनिमित्तिभावाभावमुपपादयति—नुट्यङ्गस्येति ॥

८ विपरीतमिति । प्रत्ययस्य निमित्तत्वम्, अङ्गस्य निमित्तित्वम् ॥

वस्तुतोऽत्र विप्रतिषेधसूत्राप्रवृत्तावप्युभयोश्चारितार्थ्यायान्यत्र पूर्व-[1]प्रवृत्तौ परत्वस्य नियामकताया दृष्टत्वेन तेन नुटि दीर्घ इति भाष्य[2]तात्पर्यम् ॥ नित्यस्याप्यनवकाशो बाधक इत्याशङ्क्य नुटः सावकाशत्वमाह—तिसृणामिति । द्वयोर्निरवकाशयोः परत्वमिव नित्यत्वमपि वक्तुं शक्यमिति व्यर्थैषोक्तिरिति तत्त्वम् ॥

( श्लोकवार्तिकावतरणभाष्यम् )

**एवं तर्ह्याहायं—ह्रस्वान्तान्नुडिति, न च ह्रस्वान्तोऽस्ति । तत्र वचनाद्भविष्यति ॥**

(प्रदीपः) तत्र वचनादिति । भूतपूर्वगत्येति भावः ॥

( सामर्थ्याभावोपपादकश्लोकवार्तिकम् )

**वचनाद्यत्र तन्नास्ति ।**

**( भाष्यम् ) नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ।**

**किम् ?**

**यत्र दीर्घत्वं प्रतिषिध्यते—तिसृणाम्, चतसृणामिति ।**

**नैतदस्ति प्रयोजनम् । इह तावच्चतसृणामिति, 'षट्चतुर्भ्यश्च' ( ७।१।५५ ) ई[3]त्येवं भविष्यति ।**

**तिसृणामिति, त्रिग्रहणमपि प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'त्रेस्त्रयः' ( ७।१।५३ ) इति ।**

**इदं तर्हि—त्वं नृणां नृपते जायसे शुचिः ।**

**नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति । तत्र वचनात् भूतपूर्वगतिर्विज्ञास्यते-ह्र[4]स्वान्तं यद्भूतपूर्वमिति ॥**

( प्रदीपः ) **वचनादिति ।** वचनात्स्यादिति चेत् यत्र दीर्घत्वं नास्ति तत्र वचनस्य चरितार्थत्वात्सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादग्नीनामित्यादौ कृते दीर्घे नुण् न स्यादित्यर्थः ॥

तिसृणामित्यादौ नुटोऽन्यथासिद्धत्वात् ह्रस्वलक्षणो नुडनवकाश एवेति दर्शयन्नाह—**नैतदस्तीति ॥**

**नैकमुदाहरणमिति ।** अन्यथा 'नृनद्यापो नुट्' इति ब्रूयात् ॥

**(उद्द्योतः)** [[5]भाष्ये-**अनुवर्तत इति ।** 'षट्चतुर्'इत्यत्रेत्यर्थः । चकारबलाद्बहुवचनबलात् षट्त्रिचतुर्भ्य इति स्वरविधायके तथैव दृष्टत्वाच्च । एतेन द्वयोरन्यतरस्य वा निराकांक्षत्वे चकाराभावे चानुवृत्तिः सध्यवसाना नेति मिश्रोक्तमपास्तम् ।] **नृनद्याप इति ।**

न च भूतपूर्वगत्याश्रयणे 'पदां' 'दतां'इत्यादावतिप्रसङ्गः । शस्प्रभृतिष्वित्यत्र वि[6]वक्षितसप्तम्याश्रयणेन भूतपूर्वगत्याऽपि ह्रस्वान्तात्परत्वाभावादित्याशयः । किंच ह्रस्वत्वं नाम मात्राकालिकाच्त्वम् । तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांश एव भूतपूर्वगतिर्न तु विशेष्यभूताच्त्वांशेऽपि, मानाभावादित्याशयः । एत[7]द्भाष्यप्रामाण्यात् 'षड्चतुर्भ्यश्च'इत्यस्य गौणेऽपि प्रवृत्तिः । अप्रवृत्तौ मानाभावाच्च । ब[8]हुवचनं तु द्विवचनप्रयोगे गौरवाल्लाघ[9]वार्थं भविष्यति । अ[10]प्रवृत्तिसाधकभाष्यान्तरस्याभावाच्च-इति 'प्रियचतसृणामित्यादौ केन नुट्'इति न वाच्यम् ॥

( श्लोकवार्तिकावतरणभाष्यम् )

**उत्तरार्थं तर्हि सनकारग्रहणं कर्तव्यम् ॥**

(प्रदीपः) तदेवं वचनसामर्थ्यात् भूतपूर्वगत्या नुटः सिद्धत्वान्नार्थः सनकारकनिर्देशेनेति स्थिते प्रयोजनान्तरोपन्यासः—**उत्तरार्थमिति ॥**

( नुट्प्रयोजनश्लोकवार्तिकम् )

**नोपधायाश्च चर्मणाम् ।**

**( भाष्यम् ) 'नोपधायाः' नामि यथा स्यात् । इह मा भूत्—वर्मणाम्, चर्मणाम् ॥**

( प्रदीपः ) **नोपधायाश्चेति ।** चशब्दस्तर्ह्यर्थे ॥

( उद्द्योतः ) [भाष्यलब्धमेवाह—चशब्द इति ।]

( संग्रहः )

**नामि दीर्घ आमि चेत्स्या-**
**त्कृते दीर्घे न नुट् भवेत् ।**
**वचनाद्यत्र तन्नास्ति**
**नोपधायाश्च चर्मणाम् ॥ १ ॥**

( १२६६ विधिसूत्रम् ॥ ६ । ४ । १ आ. ४ )

## ३०१० इन्हन्पूषार्यम्णां शौ ॥ ६ । ४ । १२ ॥

( १२६७ विधिसूत्रम् ॥ ६ । ४ । १ आ. ५ )

## ३०११ सौ च ॥ ६ । ४ । १३ ॥

( ६५१२ दोषाक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ हनः क्वा[11]वुपधादीर्घत्वप्रसङ्गः ॥*॥**

**( भाष्यम् ) हनः क्वावुपधालक्षणं दीर्घत्वं प्राप्नो-**

१ 'पूर्वं प्रवृत्तौ' इति ङ. पाठः ॥

२ भाष्यतात्पर्यमिति । यथाऽऽकडारस्थसंज्ञाविषये परत्वेन व्यवस्थोच्यते तथाऽत्रापीति भावः ॥

३ 'इत्येवमत्र भवि' इति ङ. पाठः ॥

४ 'ह्रस्वान्तो यो भूतपूर्व इति' इति च. ट. पाठः ॥

५ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तके एव दृश्यते ॥

६ 'विवक्षितविषयसप्तम्या' इति झ. पाठः ॥

७ एतद्भाष्येति । तिसृणामिति लक्ष्ये नुट्साधनाय 'षट्चतुर्भ्यश्च' इति सूत्रे 'त्रेस्त्रयः' इत्यतस्त्रिशब्दानुवृत्तिप्रदर्शकभाष्यप्रामाण्यादेव । तिसृणामितिवत् प्रियतिसृणामित्यपि लक्ष्यं सर्वसंमतम् । तच्च 'षट् चतुर्भ्यश्च' इत्यस्य गौणेऽप्रवृत्तौ न संभवतीति गौणेऽप्यस्य प्रवृत्तिरिति भाष्यस्वरसः ॥

८ ननु षट्चतुर्भ्यश्चेत्यस्य गौणेऽपि प्रवृत्तौ बहुवचनमनुपपन्नं तदाह—बहुवचनं त्विति ॥

९ 'लाघवार्थं त्रिशब्दानुवृत्त्यर्थं वा भविष्यति' इति ङ. पाठः ॥

१० 'अत्राप्रवृत्ति' इति झ. पाठः । गौणेऽप्रवृत्तौ मानाभावेन प्रियच्चतुसृणामित्यत्र नुट् कथमित्याशङ्का न भवतीति भावः ॥

११ 'वुपधाया दीर्घत्व' इति ङ. पाठः ॥

ति—'अनुनासिकस्य क्विझलोः क्ङिति' (१५) इति, तस्य प्रतिषेधो वक्तव्यः ॥

(प्रदीपः) हनः क्वाविति । वृत्रं हतवान्, 'ब्रह्मभ्रूण–'इति क्विप्। तत्र 'अनुनासिकस्य क्विझलोः–'इति सर्वत्र दीर्घत्वं प्राप्नोति। सर्वनामस्थाने तु नोपधायाः 'सर्वनामस्थाने चासंबुद्धौ'इति प्राप्नोति । तत्र सर्वनामस्थाने वृत्रहणावित्यादौ नियमविधानसामर्थ्याद्यद्यप्युभयोर्निवृत्तिः सिध्यति तथापि सर्वनामस्थानप्रकरणात्सर्वनामस्थाने एव दीर्घस्य नियमेन निवृत्त्या भाव्यं नान्यत्र–इति वृत्रहणीति सप्तम्येकवचने 'विभाषा ङिश्योः'इत्यल्लोपाभावपक्षेऽनुनासिकलक्षणदीर्घप्रसङ्गः । सर्वत्र च हनः क्वौ दीर्घप्रसङ्गाच्च क्वचिदल्लोपः स्यात् ॥

( उद्योतः ) सर्वनामस्थानप्रकरणादिति । 'सर्वनामस्थाने चेद्दीर्घः शिस्त्वोरेव'इति नियमादिति भावः ॥ दोषान्तरमप्याह— सर्वत्र चेति । नित्याल्लोपविषयेऽपीत्यर्थः । अल्लोपापेक्षया दीर्घस्यान्तरङ्गत्वात्तत्र कृते तपरकरणाल्लोपो न स्यादिति भावः ॥

( आक्षेपनिरासभाष्यम् )

वृत्रहणौ, वृत्रहण इति–नियमवचनात्सिद्धम् । 'इन्हन्पूषार्यम्णां शौ' 'सौ च' इत्येतस्मान्नियमवचनाद्दीर्घत्वं न भविष्यति ॥

( प्रदीपः ) इतरस्तु यथोक्तमभिप्रायमप्रतिपद्य दूषणार्थं सर्वनामस्थानमुपन्यस्यति—वृत्रहणाविति । अत्र चेद्दीर्घत्वं मन्यसे, तन्न । यतः 'नियमवचनात्सिद्धम्'इति, नियमविधानसामर्थ्यात्सर्वस्य दीर्घस्य व्यावर्तनमित्यर्थः ॥

( उद्योतः ) नन्वेवं पूर्वपक्षिणोऽपि वृत्रहणावित्यादावुभयोर्दीर्घयोर्निवृत्तेरिष्टत्वेन वृत्रहणीत्येवोदाहर्तुमुचितमित्याशङ्क्य 'वृत्रहणौ वृत्रहण इति नियमवचनात्सिद्धम्'इत्येकवाक्यरूपं परिहारवादिनो वचनमित्याह—इतरस्त्विति ॥ दूषणार्थमिति । चोदकं दूषयितुमित्यर्थः ॥ तदेव वाक्यशेषाध्याहारेण योजयति—अत्र चेदिति ॥ दीर्घत्वं—दीर्घत्वप्राप्तिम् ॥

( ६५१३ नियमाक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः ॥ * ॥

( भाष्यम् ) नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्र नियमो न प्राप्नोति। क्वान्यत्र ?

ब्रह्महणि, भ्रूणहनि ।

( प्रदीपः ) इदानीं चोदकः स्वाभिप्रायं प्रकाशयन्नाह—नियमवचनात्सिद्धमिति चेदिति ॥

( भाष्यम् ) एवं तर्हि—

( नियमस्वरूपदर्शकं श्लोकवार्तिकम् )

दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।

( भाष्यम् ) दीर्घविधिर्य इहेन्प्रभृतीनां तं सर्वनामस्थाने विनियम्य । इन्हन्पूषार्यम्णां सर्वनामस्थाने दीर्घो भवति ।

किमर्थमिदम् ?

नियमार्थम् । इन्हन्पूषार्यम्णां सर्वनामस्थान एव, नान्यत्र ॥

( प्रदीपः ) एवं तर्हीति । अत्र तु योगविभागः क्रियते । तत्राद्येन नियमेनान्तरङ्गोऽप्यनुनासिकलक्षणो दीर्घो निवर्त्यते । द्वितीयेन वृत्रहणावित्यादौ सर्वनामस्थानलक्षणः । सुड्ग्रहणं सर्वनामस्थानोपलक्षणमिति शसादेशोऽपि शिर्गृह्यते ॥ इतिशब्दो हेतौ । स च भिन्नक्रमः । 'न दुष्येत्'इत्यनेन च सम्बध्यते ॥

( उद्योतः ) एकयोगे नियमद्वयस्याभावादाह—योगविभाग इति ॥ अन्तरङ्गोऽपीति । सामर्थ्यादित्यर्थः । भाष्ये 'सर्वनामस्थान एव'इत्यस्य तद्विषय एवेत्यर्थः । अयं च हन्विषय एव। अन्येषां ग्रहणमुत्तरार्थमिति भावः । तेन वृत्रहणेत्यादौ न दीर्घः । एवं वृत्रघ्नः स्त्री–वृत्रघ्नी–इत्यादावपि न दीर्घः । अन्यथा वृत्रहाणीति स्यात्। अत एव वार्तिकेन सफलता । एतेन 'अन्यत्र'इत्यस्य सुबन्तत्वे नेत्यर्थः, नियमस्य सजातीयापेक्षत्वात्–इत्यपास्तम् ॥ इति शब्द इति । 'सुटीति' इत्यत्रेतिशब्द इत्यर्थः ॥ न दुष्येदित्यनेनेति । एवं 'पुनरेवे'इत्येवकारोऽपि 'न' इत्यनन्तरं योज्यः । तदयमर्थः,—तथा—योगद्वये सति, इति—हेतोः–नियमद्वयपरतया व्याख्यानाद्धेतोः, अस्य–आचार्यस्य भ्रूणहनीति नैव दुष्येदिति । एतेनेतिशब्दस्य हेत्वर्थत्वे 'तथा'इति व्यर्थं स्यादित्यपास्तम् । [ सुविद्वानिति तु कर्तृत्वेन विनियम्येत्यनेनान्वेति । विदध्यादित्यनेन समानकर्तृकत्वात् क्त्वेति बोध्यम् ] ॥

( नियमस्वरूपदर्शकं श्लोकवार्तिकम् )

शौ नियमं पुनरेव विदध्यात्

( भाष्यम् ) ततः-शौ । शावेव सर्वनामस्थाने नान्यत्र । ततः-सौ । सावेव सर्वनामस्थाने नान्यत्र ॥

(प्रदीपः) शावेवेति । अस्मिन् नियमे स्थिते 'सौ च'इति सूत्रं विध्यर्थं सम्पद्यते । यदा तु शौ सौ चेति योगपद्येनापेक्ष्यते तदा प्रत्ययद्वयाश्रयो नियमः क्रियते ॥

१ नोपधायाः–नान्तस्योपधायाः ॥
२ 'प्युभयोर्दीर्घयोर्निवृत्तिः' इति ङ. पाठः ॥
३ 'करणादल्लोपो' इति ङ. पाठः ॥
४ 'भ्रूणहनि' इत्युदाहरणं अ. क. पुस्तकयोर्न ॥
५ इति शब्द इति । श्लोकवार्तिके 'सुटीति सुविद्वान्' इत्यत्र य इति शब्दः सोऽग्रे 'भ्रूणहनीति तथाऽस्य न दुष्येत्' इति वार्तिकस्थ न दुष्येत् पदेन सम्बध्यत इत्यर्थः ॥
६ अन्येषां–इन्हन्पूषेति सूत्रघटकहन्भिन्नातिरिक्तानाम् ॥
७ 'सफलता' इति ज. पाठः ॥
८ पुनरेव–शौ नियमं पुनरेव विदध्यादिति वार्तिकस्थः पुनरेवशब्दो भ्रूणहनीति तथाऽस्य न दुष्येत्–इति कारिकास्थ–नेत्यनेन सम्बध्यत इत्यर्थः ॥
९ तदयमर्थ इति । तथाऽस्य न दुष्येत्–इत्यन्तकारिकासमुदायार्थ इत्यर्थः ॥
१० [ ] एतद्वतोंऽशो ङ. पुस्तक एव ॥
११ 'यदा तु सौ शौ चेति' इति अ. पाठः ॥

भाष्यकारस्तु यौगपद्याश्रयनियमं क्रममाश्रित्य व्याचष्टे—ततः साविति ॥

( उद्द्योतः ) कथं तर्हि भाष्ये 'सौ च'इत्यस्यापि नियमार्थत्वमुक्तमत आह—यदा त्विति ॥

एवमपि वाक्यद्वयेन नियमद्वयकथनमयुक्तमत आह—भाष्यकारस्त्विति । एकवाक्यतया यौगपद्याश्रयो यो नियमस्तं स्पष्टप्रतिपत्तये वाक्यभेदेन क्रममाश्रित्य विवृणोतीत्यर्थः ॥

( नियमसाधकं श्लोकवार्तिकम् )

**भ्रूणहनीति तथाऽस्य न दुष्येत् ॥ १ ॥**

(भाष्यम्) तथाऽस्य भ्रूणहनीति न दोषो भवति॥

( नियमे प्रकारान्तरदर्शकं श्लोकवार्तिकम् )

**शास्मि निवर्त्य सुटीत्यविशेषे**
**शौ नियमं कुरु वाऽप्यसमीक्ष्य ।**

(भाष्यम्) अथवा निवृत्ते सर्वनामस्थानप्रकरणे अविशेषेण शौ नियमं वक्ष्यामि-इन्हन्पूषार्यम्णां शावेव । ततः-सौ, सावेव ॥

( प्रदीपः ) एवं योगविभागेन चोद्यं परिहृत्यैकस्मिन्नपि योगे परिहर्तुमाह—शास्मीति ॥ शास्मि-उपदिशामि तं प्रकारं येनैकयोगेऽपि दोषाभावः । पूर्ववत् सुटीत्येकदेशेन सर्वनामस्थानं लक्ष्यते । सर्वनामस्थानग्रहणं निवर्त्याश्रितसर्वनामस्थानत्वविशेषे प्रत्ययत्वमात्राश्रयेण शौ नियमं कुरु ॥ असत्यपि शास्त्रीयेऽधिकारेऽपेक्षाकृतः सम्बन्धः स्यादिति तन्निवृत्त्यर्थमाह—असमीक्ष्येति । सर्वनामस्थानं विशेषमनपेक्ष्य शौ नियमः क्रियमाणः प्रत्ययत्वेन तुल्यजातीये सर्वत्र प्रत्ययान्तरे दीर्घनिवृत्तिं करोतीत्यर्थः ॥

( उद्द्योतः ) एकस्मिन्नपीति । लाघवाश्रयेणेति भावः ॥ [2][सुटीत्येकदेशेन-सुट्ग्रहणेन] ॥ प्रत्ययत्वमात्राश्रयेणेति । अत एव वृत्रघ्नीति सिध्यति ॥ अपेक्षाकृत इति । नियमस्य सजातीयव्यावर्त्यापेक्षाकृत इत्यर्थः । वार्तिके सुटीति निवर्त्यासमीक्ष्य-अनपेक्ष्य वा-इत्यन्वयः । अपिः पादपूरणे ॥

( नियमाक्षेपभाष्यम् )

इहापि तर्हि नियमान्न प्राप्नोति—इन्द्रो वृत्रहायते ॥

( प्रदीपः ) इहापीति । विशेषानाश्रयणात् । वृत्रहेवाचरतीति क्यङ् । अकृत्सार्वधातुकयोर्दीर्घः ॥

( उद्द्योतः ) विशेषानाश्रयणादिति । सर्वनामस्थानत्वरूपसुट्त्वरूपविशेषानाश्रयणादित्यर्थः ॥

( आक्षेपनिरासे श्लोकवार्तिकम् )

**दीर्घविधेरुपधानियमान्मे**
**हन्तियि दीर्घविधौ च न दोषः ॥ २ ॥**

(भाष्यम्) उपधालक्षणदीर्घत्वस्य नियमः, न चैतदुपधालक्षणं दीर्घत्वम् ॥

( प्रदीपः ) दीर्घविधेरिति । इह यदि 'येन नाप्राप्ते' इत्याश्रीयते तदाऽनुनासिकलक्षणस्यैव दीर्घस्य नियमेन व्यावृत्तिः स्यात् । अथ 'मध्येऽपवादा' इत्याश्रीयते तथापि 'सर्वनामस्थाने चासंबुद्धौ'इत्यस्यैव व्यावृत्तिप्रसङ्ग इत्यनपेक्षितविशेषं दीर्घत्वमात्रं निवर्त्यते । तत्रोपधाग्रहणानुवृत्त्याऽजन्तलक्षणदीर्घत्वस्य 'अकृत्सार्वधातुकयोः-'इति प्राप्तस्य नियमेनाव्यावर्तनाद्दोषाभावः । हन्तेर्यः-हन्तियः, तस्मिन् यो दीर्घविधिस्तत्र न दोषः । क्वचित्तु 'हन्त' इति निपातोऽभिमुखीकरणार्थः पठ्यते । यिग्रहणस्य चोपलक्षणार्थत्वात् दण्डीभूत इत्यत्र च्वावपि न दोषः ॥

( उद्द्योतः ) दीर्घविधेरिति—सामान्योक्तौ बीजमाह—इह यदीति । इदं हन्विषयवाक्याभिप्रायेण, इन्नादिविषये तेन येन नाप्राप्त्यभावादिति बोध्यम् ॥ अनपेक्षितविशेषं दीर्घत्वमात्रमिति । बाध्यसामान्यचिन्तयेति भावः । विशेषचिन्तायां दोषादिति तात्पर्यम् ॥ 'हन्तियि'इति पाठं व्याचष्टे—हन्तेरिति । 'य' इत्यत्राकार उच्चारणार्थः । हन्तेः संबन्धश्च ततः परं श्रूयमाणत्वमेव ॥ (भाष्ये) [5]दीर्घविधावित्ति-निर्धारणसप्तमी । दीर्घविधीनां मध्ये य उपधालक्षणदीर्घस्तस्य नियमाधकारे योऽजन्तलक्षणो दीर्घस्तत्र न दोष इत्यर्थः । वृत्रहायतेः कर्तरि क्विपि 'वृत्रहाः-वृत्रहाम्'इत्यादावपि दीर्घो भवत्येव ॥ दण्डीभूत इति । दण्डिन्शब्दाच्विः । न चैवं पथीनतीत्यादौ माधवाद्युदाहृतो दीर्घो विरुध्येत, इष्टापत्तेः । 'हन्तेः क्वावुपधादीर्घत्वप्रतिषेधः' इति वार्तिके हन्ग्रहणादिन्नादिभ्य आचारक्विबेव नेत्येके ॥

( प्रकारान्तरेणाक्षेपनिरासे श्लोकवार्तिकम् )

**सुट्यपि वा प्रकृतेऽनवकाशः**
**शौ नियमोऽप्रकृतप्रतिषेधे ।**

(भाष्यम्) अथवाऽनुवर्तमाने सर्वनामस्थानप्रकरणेऽनवकाशः शौ नियमोऽप्रकृतस्यापि दीर्घत्वस्य नियामको भविष्यति ।

कथम् ?

( प्रदीपः ) [6]एकस्मिन्नपि योगे सर्वनामस्थानानुवृत्तावपि दोषं परिहर्तुमाह—सुट्यपि वेति । अपिशब्दो भिन्नक्रमः, 'अप्रकृतप्रतिषेधे'इत्यनेन सम्बध्यते । इह हि द्विविधं सर्वनामस्थानं-शिः, सुट् च । शिर्नपुंसकस्य सम्बन्धी । सुट् स्त्रीपुंसयोः, 'सुडनपुंसकस्य'इति वचनात् । तत्र तुल्यजातीयापेक्षे नियमे आश्रीयमाणे व्यवच्छेद्याभावादनर्थक एव नियमः स्यादिति नियमविधानसामर्थ्यात्सर्वस्य दीर्घस्य नियमेन व्यावृत्तिरित्यर्थः ॥

---

१ 'यौगपद्याश्रयं नियमक्रम' इति झ. पाठः । 'यौगपद्याश्रयनियमक्रममाश्रित्य' इति ङ. पाठः ॥
२ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तके एव ॥
३ 'अकृत्सार्वधातुकयोरिति दीर्घः' इति ङ. पाठः ॥

४ 'हन्त यि' इति च. छ. झ. पाठः ॥
५ ङ. पुस्तके 'भाष्ये-दीर्घविधेरिति-निर्धारणषष्ठी, आर्षमेकत्वम्, उपधेति लुप्तषष्ठ्यन्तं तल्लक्षणेत्यर्थकञ्च । दीर्घविधीनां' इति पाठो दृश्यते॥
६ 'एकस्मिन्नेव योगे' इति ङ. पाठः ॥

(उद्द्योतः) अनुवृत्तावपीति । प्रकरणानुरोधादिति भावः ॥ [1]अपिशब्द इति । अप्रकृतप्रतिषेधेऽपि व्याप्रियत इत्यर्थ इति भावः । वार्तिके 'सुटि'इति सर्वनामस्थानोपलक्षणम् । 'अनवकाशः' इति हेतुगर्भं विशेषणम् ॥ तत्र तुल्यजातीयेति । शेर्नपुंसकसंबन्धित्वादिन्नादीनां नपुंसकानां [2]इयन्यसर्वनामस्थानाभावान्नियमबाध्यस्यासंभव इति भावः ॥

[[3]भाष्ये-कथमिति । अनवकाशत्वं कथमित्यर्थः] ॥

( नियमसंपादकं श्लोकवार्तिकम् )

**यस्य हि शौ नियमः सुटि नैत-**
**त्तेन न तत्र भवेद्विनियम्यम् ॥३॥**

(भाष्यम्) [4]यस्य हि शिसर्वनामस्थानं, न तस्य सुट् । यस्य च सुट्सर्वनामस्थानं, न च तस्य शिः । तत्र सर्वनामस्थानप्रकरणे नियम्यं नास्तीति कृत्वाऽविशेषेण शौ नियमो विज्ञास्यते ॥

(प्रदीपः) यस्य हीति । यस्य नपुंसकस्य सम्बन्धिनि शौ नियमः क्रियते, सुटि सर्वनामस्थानसंज्ञके [5]एतन्नपुंसकं नास्त्यनपुं[6]सकस्येति वचनात्; तेन कारणेन तत्र सर्वनामस्थाने सुटि नियन्तव्यं दीर्घत्वं न सम्भवतीति सामर्थ्यादविशेषेण नियम आश्रीयते । एतदुक्तं भवति-यदि तुल्यजातीयापेक्षो नियम आश्रीयते तदा शेर्नपुंसकलिङ्गसम्बन्धित्वं सर्वनामस्थानत्वं चास्तीति [7]तदाश्रयेण नियमे विज्ञायमानेऽयमर्थः स्यात्-इन्हन्पूषार्यम्णां नपुंसकानां शावेव सर्वनामस्थाने दीर्घो भवति, न सर्वनामस्थानान्तरे इति । [8]न च तेषां नपुंसकानामन्यत्सर्वनामस्थानमस्तीति नियमविधानसामर्थ्यात् प्रकरणापन्नं सर्वनामस्थानत्वं-सामर्थ्यप्रापितसंनिधानं च नपुंसकत्वं-उभयमप्यविशेषादनपेक्ष्य प्रत्ययमात्रे स्त्रीपुंनपुंसकसम्बन्धिनि दीर्घत्वव्यावृत्तिः क्रियते इति सर्वमिष्टं सिद्धम् ॥

(उद्द्योतः) एवं तात्पर्यमुक्त्वा श्लोकोत्तरार्धं योजयति—यस्य नपुंसकस्येति । तत्र—नपुंसके, सर्वनामस्थाने सुटि—तत्संज्ञके सुटि ॥ नियन्तव्यमिति । वार्तिके-विनियमे साधुविनियम्यमिति तद्धितान्तं, न तु कृदन्तम् । [9]अनुपसर्गे यमो यद्विधानेन सोपसर्गाण्ण्यतः प्राप्तेः ॥ उभयमप्यविशेषादिति । श्रुतिप्रापितोऽत्र नियम इति तद्विरोधिनोर्लिङ्गप्रकरणयोरविशेषाद्बाध इत्यर्थः । अत्र 'उभयमपि'इत्युपलक्षणम् । [10]सर्वनामस्थानत्वव्यापकतयोपस्थितं सुत्वमित्यपि बोध्यम् । अत्रापि पक्ष उपधाग्रहणम[11]नुवर्त्याजन्तलक्ष[12]णदीर्घानियम इति बोध्यम् ॥

( संग्रहः )

**दीर्घविधिर्य इहेन्प्रभृतीनां**
**तं विनियम्य सुटीति सुविद्वान् ।**
**शौ नियमं पुनरेव विदध्यात्**
**भ्रूणहनीति तथाऽस्य न दुष्येत् ॥१॥**
**शास्मि निवर्त्य सुटीत्यविशेषे**
**शौ नियमं कुरु वाऽप्यसमीक्ष्य ।**
**दीर्घविधेरुपधानियमान्मे**
**हन्तिपि दीर्घविधौ च न दोषः ॥२॥**
**सुट्यपि वा प्रकृतेऽनवकाशः**
**शौ नियमोऽप्रकृतप्रतिषेधे ।**
**यस्य हि शौ नियमः सुटि नैत-**
**त्तेन न तत्र भवेद्विनियम्यम् ॥३॥**

( १२६८ विधिसूत्रम् ॥ ६ । ४ । १ आ. ६ )

## ३०१२ अत्वसन्तस्य चाधातोः ॥ ६ । ४ । १४ ॥

( ६५१४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् ॥ * ॥**

(भाष्यम्) अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानं कर्तव्यम् । गोमान्, यवमान् ।

किं पुनः कारणं न सिध्य[13]ति ?

*[14]अननुबंधकग्रहणे न सानुबन्धकस्य ग्रहणम्*

अननुबन्धकग्रहणे सानुबन्धकस्य ग्रहणं नेत्येवं पितो न प्राप्नोति ॥

अननुबन्धकग्रहण इत्युच्यते, सानुबन्धकस्येदं ग्रहणम् ।

---

१ 'अपिशब्द इति । भाष्यलब्धमेवेदम् । अप्रकृत' इति ङ. पाठः ॥

२ इयन्यसर्वनामेति । शिप्रत्ययापेक्षयाऽन्यस्य सर्वनामस्थानस्याभावादित्यर्थः ॥

३ [ ] एतच्चिह्नगतो भागो ङ. पुस्तक एव दृश्यते ॥

४ 'यस्य हि शिः सर्वं' इति च. छ. झ. ट. ङ. पाठः ॥

५ एतन्नपुंसकं-नपुंसकसंबन्धिशिरूपम् ॥

६ अनपुंसकस्येतीति । सुडनपुंसकस्येति सूत्रेण नपुंसकसंबन्धिभिन्नस्य सुटः सर्वनामस्थानसंज्ञा क्रियत इत्यर्थात् ॥

७ 'तदाश्रये नियमे' इति ङ. पाठः ॥

८ 'न तेषां' इति चशब्दरहितः पाठः ङ. पुस्तके ॥

९ अनुपसर्गे इति । 'गदमदचरयमश्चानुपसर्गे' इत्यनेनानुपसर्गे यमेर्यद्विधीयत इति 'ऋहलोर्ण्यत्'इति सोपसर्गाण्ण्यत्स्यादित्यर्थः ॥

१० उपलक्षणेन सुत्वस्य संग्रहमाह—सर्वनामेति ॥

११ 'मनुवर्त्य तथानियमादजन्त' इति ङ. पाठः ॥

१२ ख. घ. झ. पुस्तकेषु 'अजन्तलक्षणदीर्घनियम' इति पाठः स लेखकप्रमादात् ॥

१३ 'सिध्यति ? अननुबन्धकग्रहणे हि सानुबन्धकस्य ग्रहणं नेत्येवं' इति छ. पाठः ॥

१४ अननुबन्धकेति । व्यावृत्तिप्रयोजकानुबन्धानुच्चारणे परिभाषाप्रवृत्तिरित्यभिप्रायेण शङ्कते । अनेकान्ता अनुबन्धा इति पक्ष इदम् ॥

**एवं तर्हि 'तदनुबन्धकस्य ग्रहणे अतदनुबन्धकस्य ग्रहणं न' इत्येवं पितो न प्राप्नोति ॥**

(प्रदीपः) **अत्वसन्तस्येति** । सूत्रन्यासप्रदर्शनपरमिदम् । अत्वन्तविषयं तु वचनम् ॥

**अननुबन्धकग्रहण इति** ।[1] उकारस्यानुबन्धस्य सूत्रोपात्तत्वात्तद्व्यतिरिक्तानुबन्धाभावेनाननुबन्धकत्वमवसेयम् ॥

**भाष्यकारस्तु**—अनुबन्धमात्राभावेऽननुबन्धकव्यपदेशो युक्तः, इह चानुबन्ध उकारोऽस्तीति मत्वाऽऽह—**अननुबन्धकग्रहण इत्युच्यत इति** ॥

परिभाषान्तरमाश्रित्याह—**एवं तर्हीति** । स एवानुबन्धो यस्यासौ तदनुबन्धकः । स चान्यश्चानुबन्धो यस्य सः—अतदनुबन्धकः । यद्येवं[2] क्तवतोरपि ककारानुबन्धसद्भावात् ग्रहणं न प्राप्नोति । **उच्यते**—[3]आनन्तर्यलक्षणेऽनुबन्धानुबन्धवतोः सम्बन्धे तवतुशब्दस्य ककारोऽनुबन्धः, न त्वतुशब्दस्य । मतुपि तु पकारोऽतुशब्दस्यानन्तर इति तेनासावनुबन्धवानिति तत्रैव[4] दोषः ॥

(उद्योतः) **सूत्रन्यासेति** । न त्वसन्ते दोषप्रदर्शनपरम्, तदाह—**अत्वन्तेति** ॥

ननु सानुबन्धकग्रहणात्कथमत्राननुबन्धकपरिभाषाप्रवृत्तिरत आह—**उकारस्येति** ॥

सामर्थ्यादवधारणगर्भो बहुव्रीहिरित्याह—**स एवेति** ॥ **स चान्यश्चेति**—नञ् भिन्नार्थक इत्यर्थः । अन्यत्वं चोपस्थितत्वात्तच्छब्दार्थापेक्षया बोध्यम् । तद्भिन्नानुबन्धस्येत्यर्थ उचितः । मूलोक्तार्थे[5] सामानाधिकरण्याभावाद्बहुव्रीहिर्न स्यात् । निपातार्थेन केवलेन सहविवक्षाऽसंभवान्न द्वन्द्वगर्भः स इति कश्चित् ॥ **क्तवतोरपीति** । भवतु—इत्यादेरेव ग्रहणं स्यादिति भावः ॥ **आनन्तर्यलक्षण इति** । तन्मूलकावयवत्वलक्षणे इत्यर्थः ॥

(उपसंख्यानाक्षेपभाष्यम्)

**तत्तर्हि[6] उपसंख्यानं कर्तव्यम्?**

**न कर्तव्यम् ।**

**पकारलोपे[7] कृते नातुबन्तं भवति, अत्वन्तमेव ।**

**यथैव तर्हि पकारलोपे कृते नातुबन्तमेवमुकारलोपे कृते नात्वन्तम् ।**

**ननु च भूतपूर्वगत्या भविष्यति अत्वन्तम् ।**

**यथैव तर्हि भूतपूर्वगत्याऽत्वन्तम्, एवमतुबन्तमपि ।**

**एवं तर्हि—आश्रीयमाणे भूतपूर्वगतिः, अत्वन्तं चाश्रीयते नातुबन्तम् ॥**

(प्रदीपः) **पकारलोप इति** । अयमत्रार्थः—पकारोऽनुबन्धः प्रत्ययस्य, न तु तदेकदेशस्य । ततश्च प्रत्ययैकदेशग्रहणाद्व्यापार एव पूर्वोक्तयोः परिभाषयोः । श्रूयमाणश्च वर्णो रूपं भिन्द्यात् । न च पकारः श्रूयते ॥

इतरस्तु श्रूयमाणस्यैव भेदकत्वे उकारोऽपि लोपान्न भेदकः स्यादिति मत्वाऽऽह—**यथैवेति** ॥

इतरस्तु भेदकत्वेनाश्रितस्य[8] लुप्तस्यापि भूतपूर्वगत्या स्मृत्युपारूढस्य भेदकत्वं युक्तं मत्वाऽऽह—**भूतपूर्वगत्येति** ॥

इतरस्तूभयोस्तुल्यं भूतपूर्वत्वं मत्वाऽऽह—**यथैवेति** ॥

इतरो भेदकत्वेनाश्रीयमाणे भूतपूर्वगतिर्युक्ता नान्यत्र—इति मत्वाऽऽह—**एवं तर्हीति** ॥

(उद्योतः) ननु सर्वत्रानुबन्धानामुपदेश एव लुप्तत्वात्कार्यप्राप्तिवेलायामसंनिधानेन स्मृत्योपस्थितानामेव विशेषकत्वाल्लोपोऽप्रयोजक इत्यत आह—**अयमत्रेति** ॥ **प्रत्ययस्येति** । समुदायस्यैवापूर्वबोधने तात्पर्येण तन्निरूपितानुबन्धत्वमेव, नावयवनिरूपितमिति भावः ॥ **अव्यापार एवेति** । अननुबन्धकादिशब्दैः समुदायस्यैवान्यपदार्थत्वेनाश्रयणादिति भावः ॥ नन्वस्तु समुदायानुबन्धत्वम्, तावताऽपि श्रुतिकृतो रूपभेदो दुर्वारोऽत आह—**श्रूयमाणश्चेति** । अत्रायं **गूढोऽभिसन्धिर्भगवतः**—सूत्रोपात्तान्तग्रहणं तदन्तविधिलब्धार्थानुवाद एव । एवञ्चात्वन्ताङ्गस्योपधाया दीर्घ इत्यर्थः । एवञ्च प्रयोगे पकारलोपे कृतेऽत्वन्तमेवाङ्गमिति ॥

**इतरस्तु श्रूयमाणस्येति** । एवञ्चात्वन्तत्वमपि नेत्यर्थः ॥

ननु भूतपूर्वगत्याश्रयणेऽतुबन्तमेतन्नात्वन्तमेवेत्यत आह—**इतरस्तु भेदकत्वेनेति** । पकारस्तु तत्त्वेन नाश्रितोऽत्र सूत्र इति भावः ॥

**इतरस्त्विति** । पूर्वोक्ताशयमजानन्नित्यर्थः ॥

**इतरो भेदकत्वेनेति** । भूतपूर्वगत्या योऽनुनासिकोकारविशिष्टोऽत् तदन्ताङ्गस्य दीर्घ इत्यर्थ इति न दोषः ॥

(उपसंख्यानसाधकभाष्यम्)

**न सिध्यति । इह हि व्याकरणे[9] सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते[10]—अत्रास्यैतद्रूपमिति । रूपनिर्ग्रहणं[11] शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ।**

---

[1] अतुविषये 'अननुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषाप्रवृत्तिमुपपादयति—उकारस्यानुबन्धस्येति ॥

[2] नन्वेवं पिद्विषये एव शङ्काकरणमयुक्तमत आह—यद्येवमिति ॥

[3] आनन्तर्यलक्षण इति । अनुबन्धानामनेकान्तत्वपक्षेऽनुबन्धानुबन्धवतोः संबन्ध आनन्तर्यादेव ज्ञायते । तत्र हि ककारस्यातुशब्दासन्निहितत्वेन न तदवयवत्वं, किन्तु तवतुशब्दस्यावयवत्वमिति न दोषः ॥

[4] ननु अत्शब्दस्यापि उकारेण व्यवधानान्न पकारस्यापि अनन्तरत्वमिति कथं परिभाषाप्रवृत्तिरिति चेत्, न । व्यवधानश्चोपस्थितत्वादित्संज्ञकेतरवर्णकृतमित्यदोषात् ॥

[5] मूलोक्तार्थे—स चान्यश्चेत्यादि कैयटोक्तार्थे ॥

[6] 'तत्तर्हि वक्तव्यं । न वक्तव्यम्' इति ट. पाठः । 'तत्तर्हि उपसंख्यानं वक्तव्यं । न वक्तव्यम्' इति क. पाठः ॥

[7] अनुबन्धानामेकान्तत्वपक्षे—पकारेति ॥

[8] भेदकत्वेन—व्यावर्तकत्वेन ॥

[9] 'इह व्याकरणे' इति ट. पाठः ॥

[10] 'श्रीयते यत्र' इति च. छ. झ. पाठः ॥

[11] 'रूपनिर्ग्रहश्च' इति ट. ड. च. छ. झ. पाठः ॥

**कोऽसौ ?**

**उपदेशः । उपदेशे चैतदतुवन्तं नात्वन्तम् ॥**

(प्रदीपः) इतरस्तु यथोपलब्धिस्मरणं न्याय्यम्, न च मतुपः क्वचिदप्यत्वन्तत्वमुपलब्धमिति मत्वाऽऽह—**न सिध्यतीति** । सानुबन्धकप्रस्तावात् सानुबन्धकेष्वित्युक्तम् ॥ **रूपनिर्ग्रहणमिति** । रूपनिश्चय इत्यर्थः ॥ **नान्तरेण लौकिकमिति** । अव्यभिचाराल्लौकिकस्य प्रयोगस्य प्राधान्येनोपादानम् ॥ तदसम्भवे तु शास्त्रीयप्रयोगाश्रय इत्याह—**तस्मिंश्चेति** ॥ **उपदेशे चैतदिति** । पकारे सति अत्वन्तत्वाभावात् । ण्यतस्त्वेकदेशं यतमाश्रित्य 'ययतोश्चातदर्थे' इत्यत्र ग्रहणे प्राप्ते तदनुबन्धकपरिभाषया निवृत्तिः क्रियते ॥

(उद्योतः) इतरः सूत्रेऽन्तग्रहणस्यानुवादकत्वमजानानोऽत्वन्तान्ताङ्गस्य दीर्घ इत्यर्थं मत्वाऽऽह भाष्ये—**न सिध्यतीति** ॥ नन्वननुबन्धकग्रहणेऽपीह शास्त्रे 'अभ्रेढक्'इत्यादौ रूपस्यैव ग्रहणमिति 'सानुबन्धकेषु'इति विशेषणमयुक्तमत आह—**सानुबन्धकेति** ॥

(भाष्ये) **नान्तरेणे**त्यादिना लौकिकप्रयोगस्य न्यायप्राप्तं ग्रहणमित्युक्तम्, तत्र हेतुमाह—**अव्यभिचारादिति** । शास्त्रीयं तु रूपं लोपादेशादिभिरपहाराद्व्यभिचारीत्यर्थः ॥ **ण्यतस्त्विति** । 'वामदेवाड्ड्यड्ड्यौ'इति विहितस्य । ण्यतस्त्वित्यपपाठः, 'ययतोश्चातदर्थे' इत्यत्र तद्धितग्रहणानुवृत्तेः । 'षण्मासाण्ण्यच्च'इति ण्यतो वा ग्रहणम् । तेन हि नञ उत्तरस्योपदेशे यो यत् श्रूयते तदन्तस्यान्तोदात्तत्वं विधीयते । प्रकृते तु उपदेशे यदत्वन्तं श्रूयते, तदन्ताङ्गस्य दीर्घ इत्यर्थ इति दोषोपन्यास इति भावः ॥

( उपसंख्यानसाधकभाष्यम् )

**यदि पुनरच्छब्दं गृहीत्वा दीर्घत्वमुच्येत ।**

**नैवं शक्यम् ।**

**इहापि प्रसज्येत-जगत्, जनगत् ।**

**अर्थवद्ग्रहणे नानर्थकस्य इत्येवमेतस्य न भविष्यति ।**

**इहापि तर्हि न प्राप्नोति-कृतवान्, भुक्तवान् ।**

**क्व तर्हि स्यात् ?**

**पचन्, यजन् । न वै अत्रेष्यते ॥**

**अनिष्टं च प्राप्नोति, इष्टं च न सिध्यति ।**

**तस्मादुपसंख्यानं कर्तव्यम् ॥**

(प्रदीपः) **यदि पुनरिति** । सूत्रे उकारमनुच्चार्येत्यर्थः । तत्राच्छब्दस्य केवलस्य शास्त्रेऽभावात्प्रत्ययैकदेशस्य ग्रहणं भविष्यतीति नार्थः पित उपसंख्यानेन ॥

**जगदिति** । 'द्युतिगमिजुहोतीनां द्वे च'इति क्विप् । 'गमः क्वौ'इति मलोपः । जनं गच्छतीति 'क्विप् च'इति क्विप् ॥ **पचन्निति** । अच्छब्दोऽत्रार्थवानित्यत्रैव दीर्घप्रसङ्गः । तस्मादव्याप्त्यतिव्याप्तिलक्षणदोषद्वयप्रसङ्गादच्छब्दं गृहीत्वा दीर्घो विधातुमशक्य इति उपसंख्यानं कर्तव्यमेव । **अन्ये तु**-असैवान्तशब्दस्य सम्बन्धो न त्वतुनेति व्याचक्षाणा मतुपो ग्रहणं साधयन्ति । **अपरे तु**-अन्तग्रहणात्सामर्थ्यलब्धे तदन्तविधावधिकात् यथाकथंचित्तदन्तता गृह्यत इति मन्यमाना मतुपो ग्रहणं व्याचक्षते ॥

(उद्योतः) **अच्छब्दं गृहीत्वेति** । अतुग्रहणे त्वर्थवतोऽसंभवादेव तत्परिभाषाया अप्रवृत्तिरिति भावः ॥ **अन्ये त्वसैवेति** । एवञ्च भूतपूर्वगत्याऽनुनासिकोकारविशिष्टो योऽत् तदन्तं प्रयोगे श्रूयत इति न दोषः । 'न सिध्यति'इत्यादिः 'तस्मादुपसङ्ख्यानं कर्तव्यम्'इत्यन्ता एकदेश्युक्तिरिति तदाशयः ॥

( १२६९ विधिसूत्रम् ॥ ६ । ४ । १ आ. ७ )

## ३०१४ अज्झनगमां सनि

## ॥ ६ । ४ । १६ ॥

( ६५१५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ गमेर्दीर्घत्वे इङ्ग्रहणम् ॥ * ॥**

(भाष्यम्) **गमेर्दीर्घत्वे इङ्ग्रहणं कर्तव्यम् । इङो गमेरिति वक्तव्यम् । इह मा भूत्—सञ्जिगंसते वत्सो मात्रेति ॥**

(प्रदीपः) इह बहवो गमयः—गम्लृ गताविति धातुः, 'णौ गमिरबोधने' 'सनि च'इतीणादेशो गमिः, 'इण्वदिक इति वक्तव्यम्'इति इक आदेशः, 'इङश्च'इति इङादेशश्च । तत्राविशेषात्सर्वप्रसङ्गे सत्याह—**गमेर्दीर्घत्व इति** । इण इक इङश्च गमिरेक एवादेश इङोपलक्ष्यते । तथा च भाष्यकृत्परतो वक्ष्यति—अचः स्थाने यौ हनिगमी-इति । एवञ्च—इणिगादेशस्यापि गमेरात्मनेपद इडभावे दीर्घत्वेन भाव्यमित्याहुः ॥

(उद्योतः) इङ्ग्रहणादिणिगादेशस्यापि दीर्घत्वं नेति प्रतीयते, तच्चायुक्तम् । 'अनादेशस्यापि दीर्घत्वं प्रसज्येत' इति वाक्यशेषविरोधात्, 'अचः स्थाने यौ हनिगमी'इत्यग्रिमभाष्यविरोधाच्च-इत्यत आह—**इण इक इत्यादि** ॥ **आत्मनेपद इति** । भावकर्मणोरात्मनेपदे 'गमेरिट् परस्मैपदेषु'इतीडभावाज्झलादौ सनि [11] दीर्घो भवतीत्यर्थः ॥

---

१ 'उपदेशो नाम' इति च. छ. झ. पाठः ॥
२ 'रूपनिर्ग्रह इति' इति प्रतीकोपादानं ङ. पुस्तके ॥
३ प्रयोगाश्रय इति । रूपनिर्ग्रहे इति शेषः ॥
४ 'ण्यतः' इति अ. पाठः ॥
५ 'भुक्तवानिति' इति क. ट. च. छ. झ. पाठः ॥
६ 'कदेशस्य सर्वत्र ग्रह' इति ङ. पाठः ॥
७ 'इति पित उपसं' इति ङ. पाठः ॥
८ 'वधिकत्वात् यथाकथं' इति ट. ङ. पाठः ॥
९ यथाकथञ्चिदिति । पूर्वत्वनिरूपकत्वे सति परत्वानिरूपकेऽन्तशब्दस्य शक्तावपि प्रकृतेऽन्तग्रहणसामर्थ्यात्पूर्वत्वनिरूपकत्वमात्रार्थकत्वाश्रयेणादोषादिति भावः ॥
१० 'इङ् गमेरिति' इति च. छ. पाठः ॥
११ दीर्घो भवतीति । 'सञ्जिगांसते'इत्यत्रेति भावः ॥

( ६५१६ उपसंख्यानसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ अग्रहणे ह्यनादेशस्यापि दीर्घप्रसङ्गः ॥ * ॥

( भाष्यम् ) अक्रियमाणे हीङ्ग्रहणेऽनादेशस्यापि दीर्घत्वं प्रसज्येत । सञ्जिगंसते वत्सो मात्रेति ॥

( ६५१७ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ न वा छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात् ॥ * ॥

( भाष्यम् ) न वा इङ्ग्रहणं कर्तव्यम् ।

किं कारणम् ?

छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात् । छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं दृश्यते—स्वर्गं लोकं सञ्जिगांसत् । छन्दस्यनादेशस्यापि गमेर्दीर्घत्वदर्शनादिङ्ग्रहणमनर्थकम् ॥

( प्रदीपः ) संजिगांसदिति । संपूर्वात् गमेः सन्, छान्दसत्वादिडभावः, लट्, सकर्मकत्वात्परस्मैपदम्, 'बहुलं छन्दस्यमाङ्योगेऽपि'इत्यडभावः ॥

(उद्द्योतः) सकर्मकत्वादिति । 'समो गम्यृच्छि–'इत्यत्राकर्मकादित्यनुवृत्तेस्तादृशादेव 'पूर्ववत्सनः' इत्यात्मनेपदमित्यर्थः ॥

( उपसंख्यानसाधकभाष्यम् )

यथैव तर्हि छन्दस्यनादेशस्यापि गमेर्दीर्घत्वं भवति, एवं भाषायामपि प्राप्नोति । तस्मादिङ्ग्रहणं कर्तव्यम् ॥

( प्रदीपः ) तस्मादिङ्ग्रहणमिति । भाषायामनादेशस्य गमेर्दीर्घनिवृत्त्यर्थमित्यर्थः । छन्दसि तु वर्णव्यत्ययेन ह्रस्वस्य दीर्घः । ये तु इङ्ग्रहणमुपलक्षणार्थमिच्छन्ति तन्मतेन इणादेशस्यायं छन्दसि प्रयोगः ॥

( उद्द्योतः ) इणादेशस्येति । अत्र पक्षे वर्णव्यत्ययो नाश्रयितव्यः, अनेनैव दीर्घसिद्धेः । केचित्तु–उक्तच्छान्दसप्रयोगे बोधनार्थत्वान्नेणोऽयं गमिः, किन्तु गमेरेव । धातूनामनेकार्थत्वाद्बोधने वृत्तिः । तत्र 'अबोधने' इति तु प्रतीषिषतीत्यादेः साधुत्वायेति भाष्यं सम्यगेवेत्याहुः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

न कर्तव्यम् । योगविभागः करिष्यते—

अचः सनि ।

अजन्तानां सनि दीर्घो भवति ।

ततः—

हनिगम्योः ।

हनिगम्योश्च सनि दीर्घो भवति । अच इत्येव । अचः स्थाने यौ हनिगमी ॥

( प्रदीपः ) योगविभाग इति । 'अचः सनि'इत्येको योगः । तत्र दीर्घश्रुत्याऽच्परिभाषोपस्थानादजन्तस्य दीर्घे सिद्धे अज्ग्रहणमुत्तरार्थं विज्ञायते ॥

अचः स्थाने इति । सम्भवाद्गमिरेवात्र विशेष्यते न तु हनिः । सहनिर्देशात्तूभयोपादानम् ॥

( उद्द्योतः ) ननु हन्तेरजादेशत्वाभावात् 'हनिगमी' इत्यनुपपन्नमत आह—गमिरेवेति ॥

( वार्तिकावतरणभाष्यम् )

अथोपधाग्रहणमनुवर्तते, उताहो न ?

किञ्चातः ?

( ६५१८ उपधापदानुवर्तने दोषवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सनि दीर्घ उपधाधिकारश्चेत् व्यञ्जनप्रतिषेधः ॥ * ॥

( भाष्यम् ) सनि दीर्घ उपधाधिकारश्चेत् व्यञ्जनस्य प्रतिषेधो वक्तव्यः । चिचीषति–तुष्टूषतीत्येवमर्थम् ।

एवं तर्हि निवृत्तम् ॥

( प्रदीपः ) चिचीषतीति । अत्र चकारस्य दीर्घः प्राप्नोति । उपधाधिकारादजन्तस्य या उपधा तस्या दीर्घ इति सूत्रार्थव्यवस्थापनात् ॥

( उद्द्योतः ) नन्वच्परिभाषायां सत्यां कथं व्यञ्जनस्य दीर्घोऽत आह—उपधाधिकारादिति ॥

( ६५१९ उपधापदाननुवर्तने दोषवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अनधिकारे उक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

*हनिगमिदीर्घेष्वज्ग्रहणम्*इति ।

(प्रदीपः) हनिगमिदीर्घेष्विति । 'अचश्च'इत्यत्र तच्छेषपक्षे आश्रीयमाणे इहाज्ग्रहणं हनिगम्यर्थं कर्तव्यमित्यर्थः ॥

( उद्द्योतः ) तच्छेषपक्ष इति । अत्र पक्षे समावेशासंभवात्परिभाषाद्वयस्यापि निवृत्तौ सर्वादेशवारणायात्राज्ग्रहणं कर्तव्यमिति 'अचश्च'इत्यत्रोक्तमित्यर्थः ॥

( सिद्धान्तभाष्यम् )

नैष दोषः ।

---

१ 'दर्शनादिङ्ग्रहणानर्थक्यम्' इति ट. ड. च. छ. झ. पाठः ॥

२ 'न वा कर्तव्यम्' इति क. पाठः । 'न वा इङ्ग्रहणं कर्तव्यम् । किं कारणं? छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात्' इत्यस्य अ. पुस्तके न पाठः ॥

३ 'सञ्जिगांसन्निति' इति प्रतीकपाठः अ. ट. पुस्तकयोर्दृश्यते ॥

४ ननु 'इङ्'ग्रहणे कृतेऽनादेशस्य गमेर्वैदिकोदाहरणे 'स्वर्गं लोकं सञ्जिगांसत्' इत्यादौ दीर्घो न स्यादत आह—छन्दसि त्विति ॥

५ उपलक्षणेति । इङ्ग्रहणमादेशस्योपलक्षणम्, तथाचादेशमात्रस्य गमेर्दीर्घ इत्यर्थः संपद्यते एवं च वैदिकोदाहरणेऽप्यनेन दीर्घः सिद्ध्येत् ॥

६ 'इणादेशस्य छन्दसि' इति अ. ट. क. पाठः । 'इणादेशस्य गमेश्छन्दसि' इति झ. पाठः ॥

७ 'हनिगम्योर्दीर्घत्वेष्वज्ग्रहे' इति ड. पाठः ॥

८ 'हनिगम्योर्दीर्घत्वेष्विति' इति ड. पुस्तके प्रतीकपाठः ॥

उक्तमेतत्-ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयात् 'अचः' इत्येतत्तत्रोपस्थितं द्रष्टव्यम्[1] ॥

( प्रदीपः ) उक्तमेतदिति । न तच्छेषो नापि तदपवादः । किं तर्हि ? द्वितीया[2] षष्ठी प्रदेशेषु प्रादुर्भाव्यते । तत्र विशेषणविशेष्यभावस्य यथेष्टत्वाद्धनिगमिभ्यामज्विशेष्यते-इति सिद्धम् ॥

—○—

( १२७० विधिसूत्रम् ॥ ६ । ४ । १ आ. ८ )

## ३०१७ च्छ्वोः शूडनुनासिके च ॥ ६ । ४ । १९ ॥

( ऊठोऽधिकरणम् )

( ऊठ्छित्वसाधकभाष्यम् )

अथ ऊडादिः कस्मान्न भवति, आदिष्टित् भवतीति[3] प्राप्नोति ।

कस्य पुनरादिः ?

वकारस्य । अस्तु ।

वकारस्य का प्रतिपत्तिः ?

'लोपो व्योर्वलि' ( ६।१।६६ ) इति लोपो भविष्यति ।

नैवं शक्यम् । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' ( ६।४।२० ) इति द्वावूटौ स्याताम् ।

एवं तर्हि नैष टित् ।

कस्तर्हि ?

ठित्[4] ।

(प्रदीपः) अथेति । 'च्छ्वोः'इति एकाऽपि षष्ठीह ग्रहणकवाक्ये[5] श्रुता प्रक्रियावाक्ये सम्बन्धिभेदाद्भिद्यते-क्वचित् स्थानषष्ठी, क्वचिदवयवषष्ठी । यथा-'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च'[6]इति भावः ॥

अस्त्विति । रूपभेदाभावात् । अङ्गस्य यो वकारस्तस्यानुनासिकादौ प्रत्यये परे क्वौ झलादौ च परत ऊडिति सूत्रार्थाश्रयणाद्वकारस्यादिरूठ् भवति ॥

लोपो भविष्यतीति । ननु नाप्राप्ते लोप आरभ्यमाण ऊठ् लोपस्य बाधकः प्राप्नोति । अत्र केचिदाहुः—भिन्नजातीयत्वादागमेनादेशो न बाध्यते, यथा दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेति दध्नः कम्बलो न बाधकः । अन्ये त्वाहुः—व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणप्रवर्तनादूठि कृते यद्वलोपलक्षणं तदकृतार्थम् । न च तस्मिन् प्राप्ते ऊडारभ्यते इति तत् प्रवर्तत एव । अकृते ऊठि यद्वलोपशास्त्रं तदेव बाध्यते । संसर्गिभेदाद्धि वकारो भिद्यते[7] ॥

द्वावूटाविति । आगमिभेदादेको[8] वकारात् पूर्व ऊठ् स्यात्, अपर उपधाया इति दोषः ॥

( उद्द्योतः ) ननु टित्वेऽपि च्छ्वोरित्यस्य शापेक्षया स्थानषष्ठीत्वस्याश्रयणावश्यकत्वादूडप्यादेश एव भविष्यति, कथं दोषोद्भावनमत[9] आह—छ्वोरित्येकाऽपीति । यथा 'फलि-'इत्यत्र गुक् आगमः, अन्ये आदेशाः ।

ननु वकारान्तस्याङ्गस्योडित्यर्थेऽङ्गस्यादिरूडिति कथं रूपे भेदाभावः, वकारस्यादिरित्यसङ्गतं च-अत आह—अङ्गस्येति । लक्ष्यानुरोधाद्वैयधिकरण्येनान्वय इति भावः । वस्तुतोऽङ्गत्वनिमित्तेऽनुनासिकादौ वस्योडित्यर्थ इति भाष्याभिप्रायः ॥

भाष्ये-वकारस्य का प्रतिपत्तिरिति । तस्य कथमश्रवणमित्यर्थः ॥

भिन्नजातीयत्वादिति । भिन्नफलकत्वादित्यर्थः । लोपो हि स्थानिनिवृत्तिफलकः, ऊट् तु न तन्निवृत्तिफलक इति भावः । अत्राऽरुचिबीजं तु-अपवादो नुग्दीर्घत्वस्य-इति 'दीर्घोऽकितः' इति सूत्रस्थभाष्यविरोधः ॥ ननु कृते चाकृत चोठि वस्यैव लोपप्राप्तेर्व्यक्तिभेदोऽसिद्धोऽत आह—संसर्गिभेदादिति । भिन्नसमुदायस्थत्वाद्वकारो भिद्यत इत्यर्थः । अन्ये तु वलोपे ऊडनवकाश इत्यनवकाशत्वात्पूर्वमूठि ततो वलोपप्राप्तेः स[10] भवत्येव । यत्र ह्युत्सर्गे कृतेऽपवादश्चरितार्थस्तत्र सामान्यविशेषन्यायेन बाधे पुनरुत्सर्गाप्रवृत्तिरित्याहुः[11] । स्पष्टा चेयं रीतिः 'गुणो यङ्लुकोः'इति सूत्रे भाष्ये ॥

( ठित्वे आक्षेपपरिहारभाष्यम् )

यदि तर्हि ठित्, धौतः पट इति 'एत्येधत्यूठ्सु' ( ६।१।८९ ) इति वृद्धिर्न प्राप्नोति ।

चत्वें कृते भविष्यति ।

असिद्धं चत्वं तस्यासिद्धत्वान्न प्राप्नोति ।

आश्रयात्सिद्धत्वं भविष्यति ।

असत्यन्यस्मिन्नाश्रयात्सिद्धत्वं स्यात्, अस्ति चान्यः 'वाह ऊट्' इति ।

एषोऽपि ठित्करिष्यते । तत्रोभयोश्चत्वे कृते आश्रयात्सिद्धत्वं भविष्यति ॥

---

१ 'द्रष्टव्यमिति' इति क. च. छ. झ. ट. ड. पाठः ॥

२ द्वितीया षष्ठीति । अञ्झनगमामित्येका, अचश्चेति परिभाषया 'अचां' इति द्वितीया षष्ठी प्रदेशेषु-अचश्चेति परिभाषाविषयेषूपतिष्ठते । तेन हनिगम्योरचः, अजन्तानामचश्च दीर्घो भवतीति सूत्रार्थः सम्पद्यते ॥

३ 'भवतीत्यादिः प्राप्नोति' इति ट. ड. च. पाठः ॥

४ ठिदिति । एवञ्च नायमागमः किन्त्वादेश एव । तेनोपधावकारयोर्द्वावादेशौ स्याताम्, तयोश्च सवर्णदीर्घेण रूपसिद्धिरित्यर्थः ॥

५ ग्रहणकवाक्ये-शास्त्रे ॥

६ फलिपाटीति । यथा फलिपाटीत्यत्रैकाऽपि षष्ठी विषयभेदाद्भिद्यते तथाऽत्रापि सम्बन्धिभेदाद्भिद्यत इत्यर्थः । फलिपाटीत्यत्र च जुगागमेऽवयवषष्ठी, पत्याद्यादेशविधौ तु स्थानषष्ठी, साऽपि धतयोर्विधावन्ता-इति भेदः ॥

७ भिद्यत इति । अन्यदिदं शीतमन्यदिदमुष्णमितिवत् ॥

८ आगमिभेदात्-अन्त्योपधारूपागमिभेदात् ॥

९ कथं दोष इति । भाष्योक्तमादिष्टिद्भवतीति दोषोद्भावनं कथमित्यर्थः ॥

१० सः-वलोपः ॥

११ उत्सर्गाप्रवृत्तिरिति । अत्र हि उत्सर्गे वलोपे कृते ऊठोऽनवकाशत्वेन तस्य चारितार्थ्याभावात्पुनरुत्सर्गस्य प्रवृत्तिरित्याशयः ॥

(प्रदीपः) वृद्धिर्न प्राप्नोतीति। टितस्तत्र निर्देशात्, अस्य च ठित्वात् ॥

चर्त्वे कृत इति। धौत इत्यत्र वकारस्योठि कृते ठकारस्य 'खरि च' इति चर्त्वं क्रियते, कृते चर्त्वे 'एत्येधत्यूठ्सु'इत्यत्रानुकृत इति भावः ॥

असिद्धं चर्त्वमिति। 'पूर्वत्रासिद्धम्'इति टकारान्तानुकरणे चर्त्वमसिद्धमिति 'एत्येधत्यूठ्सु'इत्यत्र 'वाह ऊठ्'इत्यस्योठो ग्रहणम् ॥

आश्रयादिति। 'एत्येधत्यूठ्सु'इत्यत्रोठ एव कृतचर्त्वस्यानुकरणनिर्देशः, तत्र चर्त्वस्याश्रयात्सिद्धत्वमित्यर्थः ॥

अस्ति चान्य इति। ततस्तस्यैव सूत्रे निर्देशो युक्तः ॥

तत्रोभयोरिति। धौत इत्यादावूठि कृते चर्त्वे च यट्ठकारान्तं रूपं यच्च 'वाह ऊठ्'इत्यत्र ठकारस्य जश्त्वे 'वाऽवसाने' इति चर्त्वे, तयोः सामान्येन 'एत्येधत्यूठ्सु'इत्यत्र निर्देश इति मन्यते। उभयोस्तु ठित्वे ठकारस्यैव जश्त्वे चर्त्वे च कृते 'एत्येधत्यूठ्सु'इति निर्देशोपपादनाच्च किंचिच्चर्त्वस्याश्रयात्सिद्धत्वे प्रयोजनं दृश्यते इति चिन्त्यमेतत् ॥

(उद्योतः) कृते चर्त्वे इति। ठित्करणात्, वृद्धिविधौ टान्तानुकरणसामर्थ्याच्चान्तरङ्गावपीत्संज्ञालोपौ पूर्वं न प्रवर्तेत इत्यभिमानः ॥

टकारान्तानुकरण इति। वृद्धिविधिस्थे इत्यर्थः ॥ [ जश्त्वे इति। तदपवादे इत्यर्थः ॥] जश्त्वे चर्त्वे चेति। सप्तमीबहुवचने पदत्वसत्त्वात् ॥ चिन्त्यमेतदिति। एवञ्च 'नैष टित् कस्तर्हि ठित्'इत्येव सिद्धान्त्युक्तिः। 'यदि तर्हि'इत्यादिभाष्यमेकदेश्युक्तिरिति तत्त्वमिति भावः ॥

(क्ङिदनुवर्तनविचारभाष्यम्)

**अथ क्ङिद्ग्रहणमनुवर्तते, उताहो न? किञ्चातः?**

(प्रदीपः) अथेति। स्वरितत्वप्रतिज्ञानस्य व्याख्यानाधीनत्वादनुवृत्तौ छशां ष इति छग्रहणस्य लिङ्गस्य दर्शनात्, निवृत्तौ 'दिव उत्' इति तपरत्वलिङ्गदर्शनाच्च प्रश्नः ॥

(उद्योतः) ननु स्वरितत्वकरणाकरणाभ्यामनुवृत्तिभावाभावयोः सुज्ञानत्वात्प्रश्नोऽयमयुक्तोऽत आह—स्वरितत्वेति ॥

(क्ङिदनुवर्तनाक्षेपे श्लोकवार्तिकम्)

## शूट्त्वे क्ङिदधिकारश्चेच्छः षत्वम्

(भाष्यम्) **शूट्त्वे क्ङिदधिकारश्चेत् छः षत्वं वक्तव्यम्। प्रष्टा, प्रष्टुं, प्रष्टव्यम्।**

(प्रदीपः) शूट्त्व इति। इह क्ङिदधिकारेऽक्ङिति तृजादौ शकाराभावात् षत्वे छग्रहणं कर्तव्यम्। क्ङितस्त्वननुवृत्तौ क्ङिति चाक्ङिति चानेन शकारो विधीयत इति षत्वविधौ छग्रहणं पृथक् न कर्तव्यं भवति ॥

(उद्योतः) पृथक् न कर्तव्यमिति। शग्रहणेनैव सिद्धत्वादिति भावः ॥

(क्ङिदनुवर्तनाक्षेपे श्लोकवार्तिकम्)

## तुक्प्रसङ्गश्च।

(भाष्यम्) **तुक् च प्रसज्येत ॥**

**निवृत्तेऽपि वै क्ङिद्ग्रहणेऽवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः। अन्तरङ्गत्वाद्धि तुक् प्राप्नोति।**

**'च्छ्वोः' इति तुका सह सन्निपातग्रहणं विज्ञायते।**

**ननु चैवमपि अन्त्यस्य प्राप्नोति।**

**सन्निपातग्रहणसामर्थ्यात्सर्वस्य भविष्यति।**

**एवमप्यङ्गस्य प्राप्नोति।**

**निर्दिश्यमानस्यादेशा भवन्तीति-एवमङ्गस्य न भविष्यति ॥**

**यद्येवमुत्पुच्छयतेरप्रत्ययः 'उत्पुड्' इति प्राप्नोति, उत्पुदिति चेष्यते।**

**तथा वाञ्छतेरप्रत्ययः-वान्, वांशौ, वांश इति न सिध्यति।**

**यथालक्षणमप्रयुक्ते ॥**

**तत्र त्वेतावान् विशेषः-अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यम्, तत्र चापि सन्निपातग्रहणं विज्ञेयम् ॥**

(प्रदीपः) तुक्प्रसङ्गश्चेति। क्रियमाणेऽपि षत्वविधौ छग्रहणे 'पूर्वत्रासिद्धम्' इति षत्वस्यासिद्धत्वात्तुकि सति प्रत्ष्टेति प्राप्नोतीत्यर्थः। अस्य तु शकारस्य सिद्धत्वात्तुक् न भवति ॥

निवृत्तेऽपीति। परमपि शत्वं बाधित्वा वर्णाश्रयत्वादन्तरङ्गत्वात्तुक् प्राप्नोति। वार्णादाङ्गं बलीय इत्येतच्चाङ्गवार्णयोर्युगपत् प्राप्तावुपतिष्ठत इति तुकोऽश्रवणाय सतुक्छनिर्देशः कर्तव्य इत्यर्थः ॥

ननु चैवमपीति। नानर्थकेऽलोऽन्त्यविधिरिति परिभाषा प्रयोजनाभावान्नादृता। सतुकेन च छकारेणाङ्गविशेषणात्तदन्तविधौ सत्यङ्गस्यार्थवत्त्वादलोऽन्त्यस्य प्रसङ्गः ॥

संनिपातग्रहणसामर्थ्यादिति। अलोऽन्त्यविधौ सति सतुग्निर्देशोऽनर्थकः स्यात्। वाञ्छतिनिवृत्त्यर्थत्वान्नार्थक इति चेत्, वक्ष्यत एतत्-यथालक्षणमप्रयुक्त इति ॥

उत्पुच्छयतेरिति। पुतं छादयतीति-पुच्छम्, कर्मण्यण्।

---

१ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तक एव ॥

२ छशां ष इति। व्रश्चभ्रस्जेति सूत्रे षत्वविधायक इत्यर्थः ॥

३ लिङ्गस्येति। षत्वविधायके सूत्रे क्ङिदनुवर्तनाभावात्सामान्ये झलि छस्य षत्वविधानादत्र क्ङिदनुवृत्तिरिति भावः ॥

४ निवृत्ताविति। दिव उदिति सूत्रं झलादौ भ्यामि प्रवर्तते। तत्र वकारस्थाने ह्रस्व एवोकारः स्यादिति तपरकरणाच्छ्वोरिति सूत्रे क्ङिदनुवृत्तिर्नेति ज्ञायते। तथा च द्युभ्यामित्यादावप्यूठः प्राप्तेः सत्त्वेन दीर्घस्योठः स्थाने ह्रस्वोकारो भवतु इति तपरकरणं क्ङितोऽननुवृत्तिं दर्शयतीति भावः ॥

५ 'तपरत्वस्य लिंगं' इति ङ. पाठः ॥

पृषोदरादित्वाद्धातूपपदयोष्टिलोपः । पुच्छमुदस्यतीति णिङ् । ततः क्विप् । सतकारस्य च्छस्य शकारे कृते षत्वे जश्त्वे च—उत्पुडिति भवति । यदा तु केवलः छः स्थानी तदा छस्य शकारे कृते तस्य च संयोगान्तत्वाल्लोपे तकारस्य श्रवणं सिध्यति ॥

**तथेति** । तकारसहितस्य च्छस्य स्थानिनो निर्देशात् केवलस्य शकारो न प्राप्नोति ॥ **यथालक्षणमिति** । उत्पुडिति वाञ्छाविति चास्त्वित्यर्थः । **अथवाऽप्रयुक्ते** न किञ्चिल्लक्षणं प्रवर्तते, प्रयुक्तानामन्वाख्यानारम्भात् ॥

( उद्योतः ) अस्य तु शकारस्येति । तृज्युत्पत्त्यनन्तरं तुकं मन्यते ॥

**अन्तरङ्गत्वादिति** । प्रत्ययोत्पत्तेः प्रागेव तुक् । छः शस्तु प्रत्ययापेक्षत्वाद्बहिरङ्ग[1] इति भावः ॥

परिभाषायां सत्यामपि 'अलोऽन्त्यस्य' इत्यस्य प्रसङ्गमाह—**सतुक्केन चेति** ॥

पुतशब्दोऽकारान्तो गुह्यस्थानवाची, तदाह—**धातूपपदयोरिति** । णिङि 'णाविष्ठवत्' इति टिलोपः ॥

**वाञ्छाविति चास्त्विति** । यस्य प्रचुरप्रयोगो न दृश्यते तस्यानन्तविषयत्वात्प्रयोगाणां क्वचित्प्रयोगसंभावनया लक्षणानुसारेण साधुत्वं द्रष्टव्यमिति भाष्यार्थ इति भावः ॥ वास्तवमर्थमाह—**अथवेति** । प्रयुक्तविषयप्रवृत्तिरेव लक्षणस्वभाव इति भावः ॥

भाष्ये—**तत्र चापि संनिपातग्रहणमिति** । प्रष्टा प्रष्टुमित्यादिसिद्ध्यर्थं 'व्रश्च-'इति सूत्रेऽपि सतुग्ग्रहणं कर्तव्यमनुवृत्तिपक्षे इत्यर्थः । अत्रापि कार्यं 'पृष्टम्' इत्यादिसिद्धये । निवृत्तिपक्षे त्वत्रैव कार्यम्, न तु तत्रेति तात्पर्यम् ॥

( क्ङिद्ग्रहणाननुवर्तनाक्षेपे श्लोकवार्तिकम् )

## निवृत्ते दिव ऊठ्भावः

**( भाष्यम् ) अथ निवृत्ते[2] दिव ऊठ्भावः प्राप्नोति । द्युभ्यां, द्युभिः ।**

**अस्तु ।**

**कथं 'द्युभ्यां-द्युभिः'इति ?**

**ऊठि कृते 'दिव उत्' (६।१।१३१) इत्युत्वं भविष्यति ।**

**न सिध्यति । आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति ॥**

( प्रदीपः ) **दिवऊठ्भावः प्राप्नोतीति** । ऊठोऽवकाशः—स्यूतः, स्यूतवानिति । उत्वस्यावकाशः—विमलद्यु अहः[3], रिति । द्युभ्यामित्यादौ तु परत्वादूठ्प्रसङ्गः ॥

**उत्वं भविष्यतीति** । पुनः प्रसङ्गविज्ञानात्, एकदेश[4]विकृतस्यानन्यत्वात् ॥

**दीर्घः प्राप्नोतीति** । भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति 'ऋत उत्'इति तपरत्वेन ज्ञापनात् ॥

( उद्योतः ) ननु द्युभ्यामित्यादावुत्वस्य बाधकस्य सत्त्वात्कथमूठ् ? अत आह—ऊठ इति ॥

( क्ङिद्ग्रहणाननुवर्तने दोषनिवारकं श्लोकवार्तिकम् )

## तदर्थं[5] तपरः कृतः ॥

( भाष्यम् ) तदर्थं[6] तपरः क्रियते ॥

( प्रदीपः ) **तदर्थमिति** । दीर्घस्यापि मात्रिको यथा स्यादिति तपरत्वं कृतम् । किमुच्यते—'एतावान् विशेषः' इति ? यावता दिवादीनां यङ्लुगन्तानां तिबादिषु[7] भेदो भवति । ऊठि सति 'देद्योति'इति भवति । असति तु 'देदेति'इति । नैष दोषः । छान्दसो यङ्लुक् । न चैते छन्दसि प्रयोगा दृश्यन्ते । भाषायां तु—'हुश्नुवोः सार्वधातुके' इत्यत्र हुश्नुग्रहणाज्ज्ञापकात्[8] क्वचिदेव यङ्लुग्भवति, न सर्वत्र । अन्यथा 'यङोऽचि च'इत्यत्र छन्दोग्रहणानुवृत्तिरनर्थिकैव स्यादिति भाष्यकारस्य दर्शनम् ॥

(उद्योतः) **देदेतीति** । 'लोपो व्योः—'इति सूत्रे भाष्ये वलोपस्य[9] प्रत्याख्यानादत्र वलोपश्चिन्त्यः ॥ **न चैत इति** । एतच्चास्मा[10]देव भाष्यादवसीयते । न चैवमपि वृक्षव्भ्यामित्यादावूठ्भावाभावाभ्यां[11] फले विशेषः । न च णिलोपटिलोपयोः स्थानिवत्त्वम् 'न पदान्त-' इति निषेधादिति चेत्—न, एषामप्यनभिधानात् । न च प्राडित्यादौ सोर्लोपे लुकि वा षत्वार्थं छग्रहणमावश्यकम् । 'च्छ्वोः शूड्—'इत्यनेन त्वत्र न निर्वाहः, वर्णाश्रयत्वेन लुका लुप्तत्वेन वा प्रत्ययलक्षणाभावादिति **वाच्यम्** । क्विन्निमित्तकशादेशस्य दुर्वारत्वात् । विचोऽसार्वत्रिकत्वाच्च । वस्तुतस्तु एतद्भाष्यं[12] पदकर्तव्यत्वाकर्तव्यत्वरूपविशेषमात्रपरम् । तदपि क्ङिद्ग्रहणानुवृत्तिज्ञापकबोधनाय । 'दिव उत्'

१ बहिरङ्ग इति । पश्चात्कालिक इत्यर्थः ॥

२ 'निवृत्ते दिव' इति अथशब्दरहितः पाठः च. छ. पुस्तकयोः ॥

३ नपुंसकत्वं द्योतयितुं—अहरिति । नपुंसके सोर्लुकि प्रत्ययलक्षणाभावात् 'दिव औत्' इत्यौत्वं न प्रवर्तते, ऊठस्तु झलादिप्रत्ययपरत्वाभावान्न प्राप्तिः ॥

४ ननु दिव् भ्यामित्यवस्थायामुत्वं प्राप्नोति ऊठ् च, पूर्वमूठि कृते 'दिऊ' इत्यस्योत्वं प्राप्तमिति कथमेकस्यैव पुनः प्रसङ्गविज्ञानमत आह—एकदेशविकृतेति ॥

५ 'तदर्थं तपरः कृतः' इत्यस्य पाठः क. अ. पुस्तकयोर्न ॥

६ 'एवमर्थं तपरः' इति च. छ. पाठः ॥

७ अ. क. ठ. ड. पुस्तकेषु 'तिपादिषु' इति पाठो दृश्यते । तत्र 'तिबादिषु' इति प्रतिभाति ॥

८ ज्ञापकादिति । हुश्नुवोरिति सूत्रे 'अनेकाजसंयोगपूर्वसुवर्णान्तं' इत्यर्थस्य अनुवृत्त्याद्याश्रयणेन स्वीकारात्तादृशस्य हुश्नुभ्यामन्यस्यासंभवाच्च हुश्नुग्रहणं यङ्लुगन्ते योयुवतीत्यादौ दोषो मा भूदित्येतदर्थं क्रियते । तथाच यङ्लुक् भाषायामपि क्वचिद्भवतीति ज्ञाप्यत इत्यर्थः । ज्ञाप्ये 'क्वचिदेव' इत्यस्य फलं प्रदर्शयति—अन्यथेति ॥

९ वलोपस्येति । तत्सूत्रस्थवग्रहणस्येत्यर्थः ॥

१० अस्मादेवेति । एतावान् विशेष इत्यादिभाष्यादित्यर्थः ॥

११ वृक्षव्भ्यामिति । वृक्षं वेतीति वृक्षवीः, तमाचष्टे-वृक्षव्, तस्माद्भ्यामि च्छ्वोः शूडनुनासिके इति सूत्रे क्ङिद्ग्रहणाननुवृत्तावूठि तदनुवृत्तौ च तदभावे रूपे विशेष इत्यर्थः ॥

१२ एतद्भाष्यम्—शूठ्त्वे क्ङिदधिकारश्चेदित्यादिभाष्यं व्रश्चेति सूत्रे छग्रहणकर्तव्याकर्तव्यत्वरूपविशेषपरम् । तत्कर्तव्याकर्तव्यविचारश्च क्ङिदनुवृत्तिज्ञापकबोधनायेत्यर्थः ॥

इति तपरत्वं तु स्पष्टार्थमेव । भाव्यमानोकारसवर्णग्राहकत्वज्ञापकं तु 'ऋत उत्'इत्येव । किञ्च तपरत्वं सुखमुखोच्चारणार्थं बहुशो दृष्टम् । अ[1]नन्यथासिद्धछग्रहणं त्वनुवृत्तिज्ञापकमेवेति गूढोऽभिसन्धिः। एवञ्च प्रागुक्तलक्ष्याणामभावकल्पने न मानम् । 'लोपो व्योः–'इति सूत्रस्थवलोपप्रत्याख्यानपरभाष्यप्रामाण्यात्तेभ्यो यङ्लुङ्नास्तीत्यन्यदेतत् ॥

(संग्र[2]हः)

शुठ्त्वे क्ङिदधिकारश्चे-
च्छः षत्वं तुक्प्रसज्यते ।
निवृत्ते दिव ऊठ्भाव-
स्तदर्थं तपरः कृतः ॥

(क्ङिद्ग्रहणानुवर्तने दोषनिवारकं भाष्यम्)

क्व पुनः क्ङिद्ग्रहणं प्रकृतम्?

'अनुनासिकस्य क्विझलोः क्ङिति' (१५) इति ।

यदि तदनुवर्तते, 'अज्झनगमां सनि' (१६) किझलोश्चेति किझलोरपि दीर्घत्वं प्राप्नोति ।

झलि तावन्न दोषः । सनमत्र झल्ग्रहणेन विशेषयिष्यामः–सनि झलादाविति ।

क्वावप्याचार्यप्रवृत्तिर्ज्ञापयति—नानेन क्वौ[3] दीर्घत्वं भवतीति, यदयं 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च'इति दीर्घत्वं शास्ति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

(प्रदीपः) **क्व पुनरिति** । क्ङिद्ग्रहणानुवृत्तावन्यस्यापि तद्योगनिर्दिष्टस्यानुवृत्तिप्रसङ्गं मत्वा पृच्छति ॥

**सनि झलादाविति** । तेनेणिगादेशस्य गमेरजादौ सनि दीर्घो न भवति–जिगमिषति, अधिजिगमिषतीति ॥

**यदयमिति** । वाक्यकारो वच्यादिष्वजन्तानां दीर्घत्वं शास्ति, तेन ज्ञापयति–मण्डूकप्लुत्यादिभिर्न्यायैरिहैव क्ङिद्ग्रहणं सम्बध्यते, न पूर्वत्रेत्यर्थः ॥

इत्युपाध्यायजैयटपुत्र**कैयटकृते भाष्यप्रदीपे** षष्ठाध्यायस्य चतुर्थे पादे **प्रथममाह्निकम्** ॥

(**उद्द्योतः**) [4]इदमेव ध्वनयितुं क्ङिद्ग्रहणानुवृत्तिपक्षे संभावितान्दोषान्परिहर्तुमाह भाष्ये—**क्व पुनरित्यादि** । अन्यथा लाघवसहकृतेन तपरकरणेन ज्ञापकेनाननुवृत्तेरेव युक्ततया 'यदि तदनुवर्तते' इत्यादिग्रन्थासङ्गतिरेव स्यात् ॥

क्ङिद्ग्रहणस्यानन्तरं प्रकृतत्वात्किं प्रश्नेनेत्यत आत—**क्ङिद्ग्रहणेति** ॥ **अन्यस्यापि**–क्विप्झल्रूपस्यापि ॥ **अनुवृत्तिप्रसङ्गम्** । मध्यस्थाज्झनगमां सनीत्यत्रानुवृत्तिप्रसङ्गमित्यर्थः ॥

**क्ङिद्ग्रहणं**—तद्घटितनिमित्तसमुदायः । क्वचित्तु किग्रहणमित्येव पाठः ॥

इति श्रीशिवभट्टसुतसतीगर्भज**नागोजीभट्टकृते भाष्यप्रदीपो-द्द्योते** षष्ठस्य चतुर्थे पादे प्रथम**माह्निकम्** ॥

अथ षष्ठस्य तुरीये द्वितीयमाह्निकम् ।

(१२७१ अधिकारसूत्रम् ॥ ६ । ४ । २ आ. १)

## ३०२० असिद्धवदत्राभात्
## ॥ ६ । ४ । २२ ॥

(अधिकारमर्यादाधिकरणम्)

(**प्रदीपः**) इ[5]ह क्वचिदुपमानोपमेययोरभेदं विवक्षित्वा सामानाधिकरण्येन निर्देशः क्रियते—अयं ब्रह्मदत्तः इति । शास्त्रेऽपि–'षत्वतुकोरसिद्धः' लिट् कित्, 'गोतो णित्'इति च । तत्र सा[6]मर्थ्यादतिदेशप्रतिपत्तिः ॥

क्वचित्तु प्रतिपत्तिलाघवाय भेदोपक्रमे वतिना निर्देशः क्रियते—ब्रह्मदत्तवदयमिति ।

इ[7]हापि–'असिद्धवदत्राभात्'इति ॥

**अन्ये त्वाहुः**—स्वाश्रयमपि यथा स्यादित्येवमर्थं वत्करणम् । तेन देभतुरित्यत्र स्वाश्रयैकहल्मध्यगतत्वाश्रयावेत्वाभ्यासलोपौ भवत इति ॥

**एतदपरे** न मृष्यन्ति—सत्यसति वा वतौ अतिदेशेष्वातिदेशिका[9]विरुद्धस्वाश्रयकार्यानिवृत्तिः । सिद्धत्वा[10]सिद्धत्व[11]योर्विरोधात् कथं वतिना सिद्धत्वस्य प्रापणम्? कथं वा सिद्धत्वासिद्धयोर्विषयविभागो लभ्यते? 'स्थानिवत्–'इत्यादौ तु वतिमन्तरेण संज्ञा[12] स्यादिति वत्करणमतिदेशं गमयत् स्वाश्रयप्राप्त्यर्थं विज्ञायते । 'श्नसोरल्लोपः' इति तपरकरणाच्च लिङ्गात् क्वचित्सिद्धत्वं शक्यमनुमातुम् । अन्यथा–आस्ताम्-आसन्-इत्यादावाटोऽसिद्धत्वाल्लोपाप्रसङ्गात् किं तपरत्वेन?

---

१ अनन्यथेति । सुखमुखोच्चारणादिप्रयोजनाभाववत् ॥

२ अत्र श्लोकवार्तिकसंग्रहपाठो न दृश्यते प्राचीनपुस्तकेषु ॥

३ 'दीर्घो भव' इति ट. च. पाठः ॥

४ इदमेवेति । क्ङिद्ग्रहणानुवृत्तौ छग्रहणं ज्ञापकमेव, न तु दिव उदिति तपरकरणं तदननुवृत्ता'वत्यादिगूढाशयमेवेत्यर्थः ॥

५ इह–लोके ॥

६ सामर्थ्यादिति । यथा मुखं चन्द्र इत्यादौ नामार्थनामार्थयोरभेदातिरिक्तसंबन्धस्याव्युत्पन्नत्वेन भेदेनान्वयो न, अभेदस्तु न संभवतीति सामर्थ्यात् चन्द्रपदं चन्द्रसदृशार्थबोधकं तथाच तयोरभेदान्वयस्तद्वदत्रापीति भावः ॥

७ इहापि–शास्त्रेऽपि ॥

८ 'मध्यगताश्रयावे' इति क. ठ. ड. झ. पाठः ॥

९ आतिदेशिकाविरुद्धेति । आतिदेशिकेनाविरुद्धं यत्स्वाश्रयं कार्यं तस्यानिवृत्तिरित्यर्थः ॥

१० स्वाश्रयमपि यथा स्यादित्येवमर्थं वत्करणमित्येतत्खण्डयति—सिद्धत्वेति ॥

११ 'सिद्धत्वयोश्च विरो' इति ड. झ. पाठः ॥

१२ संज्ञेति । स्थानिवत्सूत्रे हि वत्करणाभावे संज्ञाप्रकरणादादेशः स्थानिसंज्ञा स्यादित्यर्थो जायेत, तथाच स्वाश्रयकार्यातिरिक्तं सर्वमुपपद्येतेति सामर्थ्याद्वत्करणं स्वाश्रयप्राप्त्यर्थं विज्ञायत इति भावः ॥

**( उद्योतः )** नतु वतिनिर्देशं विनाऽपि 'लिट् कित्'इत्यादाविव वत्यर्थावगतौ किं वतिनेत्याशङ्क्य स्पष्टार्थं तदित्याह—**इहेत्यादिना** ॥ **अभेदमिति** । सादृश्यमूलकमित्यर्थः ॥

**तेन देभतुरिति** । 'अन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्'इति लिटः कित्वात् 'अनिदिताम्—'इति नलोपे तत्प्रत्युक्तैत्वाभ्यासलोपौ भवत इत्यर्थः ॥ **स्वाश्रयैकेति** । स्वाश्रयं यदेकहल्मध्यं तद्वत्तत्वाश्रयेत्यर्थः ॥

**सत्यसति वेति** । अतिदेशस्वभाव एवायं यत्—अतिदिश्यमानधर्माविरुद्धस्वाश्रयकार्यानिवृत्तिः—इति वतावपि दोषस्तदवस्थ एवेति भावः ॥ दोषान्तरमाह—**कथं वेति** । स्वाश्रये कार्ये सिद्धत्वं स्थानिकार्येऽसिद्धत्वमिति विषयविभागो दुर्लभः, विपरीतस्यापि वक्तुं शक्यत्वादिति भावः ॥ नन्वेवं स्थानिवत्सूत्रे वत्करणं स्वाश्रयप्राप्त्यर्थमित्युक्तं विरुध्येतेत्यत आह—**स्थानिवदित्यादौ त्विति** । तत्राप्यतिदेशप्रापणद्वारा तत्स्वभावादेवाविरुद्धस्वाश्रयप्राप्त्यर्थतोक्ता, न तु सामर्थ्यात् । यथा 'ब्राह्मणवदयं क्षत्रियः' इत्युक्ते ब्राह्मण्यविरुद्धमद्यपानादेरेव निवृत्तिर्न तु युद्धादेः, तद्वदिति भावः ॥ देभतुरित्यादौ तर्हि का गतिरत आह—**श्नसोरिति** । 'अस्—ताम्'इति स्थिते विप्रतिषेधे आभीयासिद्धत्वाभावस्य वक्ष्यमाणतया[1]ऽऽडपेक्षया परत्वादल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गविज्ञानेनाटि विकारान्यानु[2]पूर्व्या ऐक्याभावाल्लक्ष्ये लक्षणस्येति न्या[3]याप्राप्त्या प्रा[4]प्ताटो लोपस्य वारणाय कृतं तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्त[5]दनित्यतां ज्ञापयति । आटि तु नित्यत्वमेव-इति ज्ञापितेऽपि वैयर्थ्यम्, असिद्धत्वानित्यत्वेनाटोऽप्राप्तेरिति न शङ्क्यम् ॥

( असिद्धवचनाक्षेपभाष्यम् )

**असिद्धवचनं किमर्थम् ?**

**( प्रदीपः ) असिद्धवचनं किमर्थमिति** । इह शास्त्रस्य कार्यार्थत्वात् कार्यस्य प्राधान्यादसिद्धत्वेन भाव्यम् । तदसिद्धावपि स्थानिनो निवृत्तत्वात्तल्लक्षणं कार्यं न प्राप्नोतीत्यव्याप्तिं मत्वा प्रश्नः ॥

**( उद्योतः )** 'आगहि'इत्यादेः प्रयोजनस्य स्पष्टत्वात्प्रश्नानुपपत्तेराह—**इह शास्त्रस्येति** । 'देवदत्तहन्तृहत'न्याये[6]न 'शाधि'इत्याद्यसिद्धिरिति भावः ॥ [[7]आस्तामित्यादेस्तु सिद्धिरेव, लोपस्याभावरूपत्वेन भावप्रतियोगिकाभावस्यैव न्याय[8]विषयत्वेन तत्र तदप्राप्तेः, तदाह—अव्याप्तिमिति ] ॥

( ६५२० असिद्धवचनप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ असिद्धवचने उक्त[9]म् ॥ * ॥**

**( भाष्यम् ) किमुक्तम् । तत्र तावदुक्तम्—**षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च**इति ।**

**इहापि—असिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ।**

**तत्र—आदेशलक्षणप्रतिषेधार्थं तावत्—आगहि, जहि । गतं, गतवानिति । अनुनासिकलोपे जभावे च कृते 'अतो लोपः' (६।४।४८) 'अतो हेः' (१०५) इति च प्राप्नोति । असिद्धत्वान्न भवति ।**

**उत्सर्गलक्षणभावार्थं च—एधि, शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति ॥**

**( प्रदीपः )** इतरो व्यापकत्वाच्छास्त्रासिद्धत्वं प्रदेशान्तरे एव स्थापितं मन्यमान आह—**असिद्धवचने उक्तमिति** । **उत्सर्गशब्देन** सामान्यविषयत्वसाधर्म्यात् स्थान्यभिधीयते ॥

**आगहीति** । शपः 'बहुलं छन्दसि'इति लुक् ॥ **जहीति** । हन्तेर्जः ॥ **गतमिति** । अवयवलोपिनामतो लोपो नास्तीति तत्परिभाषार्थमुपदेशग्रहणानुवृत्त्या भाष्यकारः सम्पादयिष्यति ॥

**एधीति** । परत्वान्नित्यत्वाच्च पूर्वमेत्वम् । **शाधीत्यत्रापि** नित्यत्वात् पूर्वं शाभावः, अल्विधित्वाच्च धित्वे नास्ति स्थानिवद्भावः ॥

**( उद्योतः ) उत्सर्गशब्देनेति** । यद्यप्युत्सर्गशब्दः सामान्यविधौ रूढस्तथाऽप्यत्र तत्साधर्म्यात्स्थानी लक्ष्यत इत्याशयः ॥

'गतं'इत्यसिद्धव[10]द्भावं विनाऽपि सिद्ध्यतीत्याह—**अवयवेति** ॥ [प्र[11]त्यासत्त्या व्युत्क्रमेणाह—**अतो लोप इति**] ॥

**परत्वादिति** । शास्त्रासिद्धत्व एत्वशाभावशास्त्राभ्यां तत्कार्ययोरप्रमितेर्धिशास्त्रं प्रति स्थानिबुद्धिरेवेति तन्निबन्धनकार्यसिद्धिरिति भावः ॥

( अत्रग्रहणाक्षेपभाष्यम् )

**अथ 'अत्र'ग्रहणं किमर्थम् ?**

---

१ **वक्ष्यमाणतयेति** । जनसनखनां सञ्झलोः ( ६।४।४२ ) इति सूत्रे भाष्ये । तत्र हि **'एकस्य हि नामाभावे विप्रतिषेधो न स्यात् किं पुनर्यत्रोभयं नास्ति । नैष दोषः, भवतीह विप्रतिषेधः । आचार्यप्रवृत्तिर्ज्ञापयति—भवतीह विप्रतिषेध इति, यदयं घुमास्थेति सूत्रे हल्ग्रहणं करोति'** इत्युक्तम् । एवञ्चाभीयसूत्रद्वयप्राप्तौ विप्रतिषेधो भवतीत्यर्थः ॥

२ **'नुपूर्व्या ऐक्येऽप्यागमान्यानुपूर्व्या ऐक्या'** इति ङ. पाठः ॥

३ **न्यायाप्राप्त्येति** । लक्ष्यभेदादिति भावः । पूर्वमस्तेरकारस्य जातः, संप्रति त्वाकारस्यागमस्य प्राप्तिरिति लक्ष्यभेदः । तल्लक्ष्यत्वं च—स्वीयप्राथमिकप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटको यस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वम् । प्रकृते आडागमे लक्ष्यभेदान्न तन्न्यायप्रवृत्तिरिति तात्पर्यम् ॥

४ **'प्राप्तस्याटो'** इति झ. पाठः ॥

५ **तदनित्यतां**—असिद्धवत्वस्यानित्यताम् ॥

६ **न्यायेनेति** । शादेशस्यासिद्धत्वेऽपि स्थानिनः शासो निवृत्तत्वेन झलन्तत्वाभावाद्धित्वं नेत्याशयः ॥

७ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तक एव ॥

८ **न्यायविषयत्वेनेति** । देवदत्तहन्तृहतन्यायविषयत्वेनेत्यर्थः ॥

९ **उक्तमिति** । षत्वतुकोरसिद्ध इति सूत्रे भाष्ये उक्तमित्यर्थः । तत्र हि **'स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात्'** इति कार्यासिद्धत्वं विहाय शास्त्रासिद्धत्वं स्थापितम् ॥

१० **असिद्धवद्भावं विनाऽपीति** । अतो लोप इत्यत्रोपदेशपदानुवर्तनाद् गतमित्यादावकारलोपो नेति भावः ॥

११ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तक एव ॥

( प्रदीपः ) **अथात्र ग्रहणमिति** । यथा 'अङ्गस्य'इत्यादयोऽधिकारा अवध्युपादानमन्तरेणापि व्याख्यानात् विशिष्टावधयो विज्ञायन्ते तथा-असिद्धवदधिकारोऽप्याभाद्विज्ञायते । तत्राभाद्ग्रहणस्य विषयावधारणार्थत्वात् 'अत्र'ग्रहणं न कर्तव्यमिति भावः ॥

( उद्योतः ) ननु 'आभात्'इत्यधिकारपरिमाणार्थम्-इति अत्रग्रहणं विषयावधारणार्थमावश्यकम्—आभीये कर्तव्ये आभीयमसिद्धवत्-इति, तत्किं प्रश्नेनेत्यत आह—**यथाऽङ्गस्येति** ॥

( ६५२१ अत्रग्रहणप्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अत्रग्रहणं विषयार्थम् ॥ * ॥**

(भाष्यम्) **विषयः प्रतिनिर्दिश्यते । अत्र-एतस्मिन्नाभाच्छास्त्रे आभाच्छास्त्रमसिद्धं यथा स्यात् । इह मा भूत्—अभाजि, रागः, उपबर्हणमिति ॥**

( प्रदीपः ) **अत्रग्रहणं विषयार्थमिति** । विशिष्टो यो विषयः समानलक्षणस्तन्निर्देशार्थम् । तेन समानाश्रयमसिद्धम्, व्याश्रयं तु सिद्धमित्येषोऽर्थो **वार्तिककारस्याभिमतः** । **भाष्यकारो**ऽमुमेवा[1]र्थमत्रग्रहणस्य परस्तात् स्थापयिष्यति[2] । सम्प्रति तु 'आभात्'ग्रहणमधिकारस्य प्रतिपत्तिलाघवायावध्युपादानार्थं मत्वा[3]ऽसिद्धवद्भावस्याभाच्छास्त्रमेव विषयोऽत्रग्रहणेन निर्दिश्यत इति व्याचष्टे—**अभाजि, राग इति** । 'भञ्जेश्च चिणि' 'रञ्जेश्च' 'घञि च भावकरणयोः' इति नलोपः 'अत उपधायाः' इति वृद्धौ कर्तव्यायां नासिद्धो भवति ॥ **उपबर्हणमिति** । 'बृहि वृद्धौ'इत्यस्य 'बृंहेर[4]च्यनिटि'इति नलोपो गुणे[5] नासिद्धो भवति ॥

(उद्योतः) **समानलक्षण इति** । **समानम्**-एकं लक्षणं-निमित्तमस्य, तत्प्रतिपत्त्यर्थमित्यर्थः। 'अनुदात्तोपदेश-'इत्यादावस्योपस्थितौ 'अनुदात्तोपदेशादीनां क्ङिति लोपो भवति स चासिद्धवत्,अत्रैव क्ङिति निमित्ते यदाभीयं प्राप्नोति तत्र कर्तव्ये' इत्यर्थादिति भावः ॥ भाष्यकारेण तर्हि एवंरीत्या वार्तिकं कुतो न प्रत्याख्यातमत आह—**भाष्यकार इति** । 'अधिकारस्य प्रतिपत्ति'[6]इति पाठः । प्रतिपत्तिलाघवायाधिकारस्यावध्युपादनार्थमाभाद्ग्रहणमित्यन्वयः ॥ भाष्ये—**अत्रैतस्मिन्निति** । 'अत्र'इत्यस्य व्याख्या—**एतस्मिन्निति** । तद्व्याख्यानम्—**आभाच्छास्त्रे इति** ॥ **नासिद्ध इति** । वृद्धेराभीयत्वाभावादित्यर्थः ॥

( सूत्रप्रयोजनाक्षेपभाष्यम् )

**कानि पुनरस्य योगस्य प्रयोजनानि ?**

( प्रदीपः ) **कानि पुनरिति** । अन्यथा सिद्धिं मत्वा पृच्छति ॥

( ६५२२ सूत्रप्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रयोजनं शात्वं धित्वे ॥ * ॥**

( भाष्यम् ) **शाँभाव[7] एत्वं[8] च धित्वे[9] प्रयोजनम् । एधि, शाधीति । अस्तिशास्त्योरेत्वशाभावयोः कृत[10]योर्झलक्षणं धित्वं न प्राप्नोति । असिद्धत्वाद्भवति ॥**

( प्रयोजनाक्षेपभाष्यम् )

**शाभावस्तावन्न प्रयोजयति ।**

**एवं वक्ष्यामि-शास् हौ-शा हाविति । यत्वभूतः[11] सकारः, तत्र सात् धित्वम्, 'धि च' (८।२।२५) इति सकारस्य[12] लोपः ।**

**अथवा-'आ हौ'इति वक्ष्यामि[13] ।**

**एवमपि सकारस्य प्राप्नोति ।**

**उपधाया इति वर्तते । तत्रोपधाया आत्वे कृते सात् धित्वम्, 'धि च' इति सकारलोपः ।**

**अथवा 'न हौ' इति वक्ष्यामि । तत्रेत्वे प्रतिषिद्धे[14] सात् धित्वम्, 'धि च' इति सकारलोपः ॥**

**एत्वमपि लोपा[15]पवादो विज्ञास्यते, न च सकारस्य लोपः प्राप्नोति ॥**

( प्रदीपः ) **शास् हाविति** । इत्वबाधनार्थं[16] शासिरेवादेशः शासो विधीयते । ततो झलन्तत्वात्सिद्धं धित्वमित्यर्थः ॥ **धि चेति सकारस्य लोप इति**[17] । 'धि सकारे सिचो लोपः' इति नाश्रीयते । 'चकाधि'इत्येव भवतीति निर्णेष्यते ॥

**एत्वमपीति** । 'श्नसोरल्लोपः' इत्यस्य लोपस्यापवादोऽकारस्य स्थाने एत्वं विधीयते । 'श्नसोरल्लोपः' इत्यस्य विषयार्थ[18]स्यानुवर्तनात्तेन लोपविषय एत्वं भवतीत्यर्थः सम्पद्यते । तदाह—**न च सकारस्येति** ॥

---

1 'कारोऽप्यमुमेवा' इति च. झ. ड. पाठः ॥

2 'वार्थं परस्तात्स्थापयिष्यति' इति अ. क. ठ. झ. पाठः ॥

3 'स्मृत्वा' इति ड. पाठः ॥

4 बृंहेरिति । अनिदितां हल उपधायाः क्ङिति-इति सूत्रे भाष्ये वार्तिकमेतत् ॥

5 'गुणे सिद्धो' इति च. झ. क. ठ. ड. पाठः ॥

6 इति पाठ इति । न तु 'अधिकारप्रतिपत्ति' इत्येवं समस्तः पाठ इत्याशयः ॥

7 शाभावः-शा हौ ( ६।४।३५ ) इत्यनेन ॥

8 एत्वमिति । ध्वसोरेद्धावभ्यासलोपश्च ( ६।४।११९ ) इत्यनेन ॥

9 धित्वम्-हुझल्भ्यो हेर्धिः ( ६।४।१०१ ) इत्यनेन ॥

10 'कृतयोः' इत्येतत्पदं अ. पुस्तके न ॥

11 यत्वभूत इति । रुत्वे कृते यत्वभूत इत्यर्थः ॥

12 'सकारलोपः' इति ड. पाठः ॥

13 'वक्ष्यामि' इति पदं अ. क. पुस्तकयोर्न ॥

14 प्रतिषिद्ध इति । मध्येऽपवादन्यायेनेत्वस्यैव बाधकं न ध्यादेशस्येति भावः ॥

15 लोपः-श्नसोरल्लोपः ( ६।४।१११ ) इत्यनेन ॥

16 'इत्वबाधनाय' इति अ. पाठः ॥

17 'धि चेति सस्य लोप' इति प्रतीकं अ. पुस्तके ॥

18 विषयार्थस्येति । अनुवर्तनसामर्थ्यादत्र सप्तम्यन्तं विपरिणस्यत इति भावः ॥

(उद्द्योतः) शासेः शास्[1]विधानं किमर्थमत आह—इत्त्वबाधनार्थमिति । 'मो राजि-'इतिवदिति भावः । न च 'आ हौ'इति, 'न हौ'इति वा न्यासे शासेर्यङ्लुकि शाधीत्यसिद्धिरिति वाच्यम् । यङ्लुकश्छान्दसत्वादिति भावः ।

कथं पुनरेत्वं लोपापवादोऽत आह—श्नसोरिति ॥ अनुवर्तनादिति । 'उत्सर्गसमानदेशा अपवादाः' इति न्या[2]येनाप्येतत्सिध्यति । भाष्[3]यस्वरसोऽपि अत्रैव ॥

(सूत्रप्रयोजनभाष्यम् ॥)

**क[4]रोतेर्हिलोप उत्त्वे प्रयोजनम् ।**

**कुर्वित्यत्र हिलोपे कृते सार्वधातुके परे उका[5]र इति उत्वं न प्राप्नोति ।**

**असिद्धत्वाद्भवति ॥**

(प्रदीपः) कुर्विति । कृ उ हि-इति स्थिते हिलुकः परत्वात् प्रागगुणः, उत्वाच्च प्राङ्नित्यत्वाद्धिलुक्, तत उत्वं न [6]प्राप्नोति-इति । असिद्धत्वात्तु हिलुको भवति ॥

(उद्द्योतः) ननूत्वमेव हिलुकः परत्वाद्भविष्यतीत्यत आह—उत्वाच्चेति । लुका लुप्तत्वाच्च प्रत्ययलक्षणमपि नेति भावः ॥

(प्रयोजनाक्षेपभाष्यम्)

**एतदपि नास्ति प्रयोजनम् । वक्ष्यति तत्र सार्वधातुकग्रहणस्य प्रयोजनम्-सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यादुत्वम् ॥**

(उद्द्योतः) भाष्ये—तत्र सार्वधातुकेति । उप्रत्ययान्तकरोतेः सार्वधातुकपरत्वाव्यभिचारादिति भावः । न चात्रैवोत्वाभावार्थं तत्, तस्यानिष्टत्वात् । लुप्तप्रत्ययनिरूपिताङ्गस्य कार्ये एव 'न लुमता-'इति निषेधाच्च ॥

(६५२३ सूत्रप्रयोजनवार्तिकम् ॥ ४ ॥)

**॥ * ॥ त[7]ास्तिलोपेण्यणादेशा अडाड्विधौ ॥ * ॥**

**(भाष्यम्) तलोप-अस्तिलोप-इणश्च यणादेशः-अडाड्विधौ प्रयोजनम् ।**

**अकारि, ऐहि-इति । तलोपे कृते लुङीति अडाटौ न प्रा[8]प्नुतः ।**

**अस्तिलोप-इणश्च यणादेशः प्रयोजनम् । आसन्, आयन्-इति । इणस्त्योर्यणलो[9]पयोरनजादित्वादाट् न प्राप्नोति ।**

**असिद्धत्वाद्भवति ॥**

(प्रदीपः) तलोपे कृते इति । नित्यत्वात् ॥

(प्रयोजनाक्षेपभाष्यम्)

**अस्तिलोपस्तावन्न प्रयोजयति । आचार्यप्रवृत्तिर्ज्ञापयति-लोपादाड् बलीयानिति, यदयं 'श्नसोरल्लोपः' (६।४।१११) इति तपरकरणं करोति ॥**

**इण्यणादेशश्चापि न प्रयोजयति । यणादेशे योगविभागः करिष्यते—'इणो यण्' भवति । ततः-'एरनेकाचः', एरनेकाच इणो यण् भवति । ततः-'असंयोगपूर्वस्य' असंयोगपूर्वस्य यण्भवति, एरनेकाच इत्येव ॥**

(प्रदीपः) यदयमिति । तपरकरणस्य प्रयोजनं 'आस्ताम्-आसन्'इत्यादावाटि कृते वार्णादाङ्गं बलीय इत्येकादेशं बाधित्वा मा भूदाकारस्य लोप इति । यदि प्राग्लोपः स्यात्ततोऽनजादित्वादा[11]डभावात्तल्लोपनिवृत्तये तपरत्वं न कर्तव्यं स्यादित्यर्थः ॥

**एरनेका[12]च इति ।** आ[13]टमन्तरेणानेकाजिण् न भवतीति पूर्वमाट् भवतीत्यनुमीयते । ईयतुरित्या[14]दौ हि योगविभागमन्तरेण यणः सिद्धत्वादाड्विध्यर्थमेव योगविभागो विज्ञायते, तेन नित्योऽपि यणादेशोऽकृत आटि न भवति ॥

(उद्द्योतः) वार्णादाङ्गं बलीय इत्येकादेशं बाधित्वेति-वस्तुस्थितिकथनम् ॥

आटमन्तरेणेति । अनेकाजिण् एर्यण्-इत्यर्थादिति भावः ॥ नन्वीयतुरित्यादौ द्वित्वे यणर्थं योगविभागश्चरितार्थ इति कथं ज्ञापकोऽत आह—ईयतुरित्यादौ हीति ॥ यण इति । 'इणो यण्'इतीति भावः ॥ नित्योऽपीति । योगविभागाभावे इति भावः ॥

(प्रकारान्तरेण प्रयोजनाक्षेपभाष्यम्) ·

**सर्वेषामेष परिहारः-उपदेश इति वर्तते । तत्रोपदेशावस्थायामेवाडाटौ भवतः ।**

---

१ 'विधानं व्यर्थमत आह' इति ङ. पाठः ॥

२ न्यायेनेति । अनुवृत्तिं विनाऽपवादत्वाच्चिन्त्यमिदम् । तस्मादल्लोप इत्यत्र लुप्तषष्ठ्यन्तमत्पदम् । अत एव श्नसोरन्वयः । 'विषयार्थस्य' स्थानिविशेषसमर्पकस्य 'अतः' इत्यस्येत्याशयः कैयटस्य । अन्यथाऽल्लोऽन्त्यस्येत्यस्य प्रवृत्त्याऽपवादत्वासंभवात्-इति केचित् ॥

३ भाष्यस्वरसेति । अत एव 'न च सकारस्य लोपः प्राप्नोति' इत्युच्यते भाष्ये ॥

४ 'हि लोप उत्वे' इति वार्तिकं च. छ. झ. पुस्तकेषु । तदग्रे च 'करोतेर्हिलोप उत्वे प्रयोजनम्' इति भाष्यपाठस्तेषु पुस्तकेषु ॥

५ उकार इति । अत उत्सार्वधातुक इत्यनेन ॥

६ 'प्राप्नोति । असि' इति ङ. पाठः ॥

७ तलोपः-'चिणो लुक्' (६।४।१०४) इत्यनेन । अस्ति लोपः-'श्नसोरल्लोपः' (६।४।१११) इत्यनेन । इण्यणादेशः-'इणो यण्' (६।४।८१) इत्यनेन ॥

८ अडाटौ-'लुङ्लङ्लृङ्क्ष्वडुदात्तः' 'आडजादीनाम्' (६।४।७१, ७२) इति सूत्राभ्याम् ॥

९ 'प्राप्नुतः । असिद्धत्वाद्भवतः । अस्ति' इति क. ट. ङ. पुस्तकेषु पाठः ॥

१० 'लोपयोः कृतयोरनजा' इति छ. च. ट. पाठः ॥

११ 'दाटोऽभावा' इति ङ. झ. पाठः ॥

१२ एरनेकाच इति । ननु एरिति किम् ? लावस्थायामडिति पक्षे 'आडजादीनाम्' इत्यस्य प्रत्याख्याने आयन्निति सिध्यर्थमिकाररूपो य इणिति व्याख्यानमित्यर्थः ॥

१३ 'आटमन्तरेणेति । इणो यण्विधायकेऽनेकाजित्यस्य वैयर्थ्येन यत्रानेकाच्त्वसंभावना तत्र पूर्वं न यणिति भावः ॥

१४ 'त्यादौ योगवि' इति क. ठ. ङ. झ. पाठः ॥

**अथवा—**

आर्धधातुक इति वर्तते ।

**अथवा—**

लुङ्लङ्लृङ्क्ष्वडिति ङ्लिकारको निर्देशः । लुङादिषु लकारादिष्विति ॥

सर्वथा 'ऐज्यत-औप्यत' इति न सिध्यति ।

वक्ष्यत्येतत्-*अजादीनामटा सिद्धम्*इति ॥

( प्रदीपः ) तत्रोपदेशावस्थायामिति । अन्तरङ्गानपि विधीन् बाधित्वा लुङाद्युपदेश एवाडाटौ भवत इत्यर्थः ॥

अथवेति । आर्धधातुकग्रहणानुवृत्तिसामर्थ्यादकृतेषु लादेशेषु लावस्थायां लब्धार्धधातुकसंज्ञायामडाटौ भवत इत्यर्थः ॥

सर्वथेति । त्रिष्वपि परिहारेषु यज्यादीनां लावस्थायां सम्प्रसारणाभावादनजादित्वादाटोऽभावादद् प्राप्नोतीत्यर्थः ॥

अटासिद्धमिति । 'आटश्च'इति यत् सूत्रं तत् 'अटश्च' इति क्रियते । अचीत्यधिकाराच्च हलि वृद्ध्यभावः । कथम्-आयन्, आसन् इति, यावतेणस्त्योर्यण्लोपयोः कृतयोर्वृद्धिर्नास्ति । अन्तरङ्गत्वाद्वृद्धिर्भविष्यतीत्यदोषः । नानाश्रयत्वाच्च वार्णादाङ्गं बलीय इति नास्ति । कृतायां वृद्धौ 'आसन्'इति तपरकरणादाकारलोपाभावः । इणोऽपि वृद्धेरैकारस्य यण् न भविष्यति । 'इणो यण्' 'एः'इति योगविभागात् इकारान्तस्येणो यण्विधानात्तदभावाच्चायादेशे कृते 'आयन्'इति भविष्यति ॥

( उद्द्योतः ) अन्तरङ्गानपीति । तिबाद्यपेक्षया अडाटौ लविशेषाङ्गादिबह्वपेक्षत्वाद्बहिरङ्गौ । अपिना परनित्यावपि ॥

अकृतेष्विति । कृतेषु तेषु 'तिङ्शित्-'इति सार्वधातुकत्वादिति भावः ॥

यण्लोपयोरिति । वृद्धेः पूर्वम्परत्वादिति भावः ॥

अन्तरङ्गत्वादिति । वार्णत्वाल्लादेशेभ्यः प्रागेवेति भावः ॥

नानाश्रयत्वादिति । भिन्नकालत्वादित्यर्थः ॥ योगविभागादिति । 'इणो यण्' इत्यत्र 'एः' इत्यपकृष्य संबध्यत इति तत्त्वम् ॥

( ६५२४ सूत्रप्रयोजनवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च ॥ * ॥

( भाष्यम् ) अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च प्रयोजनम् । आगहि, जहि । गतः, गतवानिति । अनुनासिकलोपे कृते जभावे च 'अतो हेः' 'अतो लोपः' इति च लोपः प्राप्नोति । असिद्धत्वान्न भवति ॥

( प्रयोजनाक्षेपभाष्यम् )

अनुनासिकलोपस्तावन्न प्रयोजयति । अल्लोपे 'उपदेशे' इति वर्तते ।

यद्युपदेश इति वर्तते, धिनुतः-कृणुतः-अत्र न प्राप्नोति ।

नैष दोषः । नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते ।

किं तर्हि ?

आर्धधातुकमभिसंबध्यते । आर्धधातुकोपदेशे यदकारान्तमिति ॥

( प्रदीपः ) आर्धधातुकोपदेश इति । आर्धधातुकोपदेशकाले यदकारान्तमङ्गं तस्यार्धधातुके परतो लोप इति सूत्रार्थः । तत्र 'धिन्विकृण्व्योर च' इति उप्रत्ययसन्नियोगेनाकारस्य विधानादकारान्तत्वं धिन्विकृण्व्योरार्धधातुकोपदेशे भवतीति सिद्धस्यल्लोपः । तस्य परनिमित्तकत्वात् स्थानिवद्भावात् 'धिनुतः' इत्यादौ गुणाभावः ॥

( उद्द्योतः ) आर्धधातुकोपदेशेति । तत्फलं तु-पत्, पयतेः क्विप् ॥

( प्रयोजनाक्षेपभाष्यम् )

जभावश्चापि न प्रयोजयति । हिलोपे योगविभागः करिष्यते-'अतो हेः' । ततः-'उतश्च', हेर्लुग्भवतीति । ततः-'प्रत्ययात्' । प्रत्ययादित्युभयोः शेषः ॥

( प्रदीपः ) प्रत्ययादित्युभयोः शेष इति । समुदायस्यापेक्षणात् । असंयोगपूर्वादित्यत्र तु भेदेनापेक्षणादानन्तर्यात् 'उतः' इति सम्बध्यते, न त्वत इति ॥

( उद्द्योतः ) नन्वनन्तरस्येति न्यायात् 'उतः' इत्यस्यैव शेषः स्यादत आह—समुदायस्येति । न चैवं कादिभ्य आचारक्विबन्तेभ्यः, हयधातोश्च यङ्लुकि यलोपे हिलोपानापत्तिः । अनभिधानेन तेभ्यो यङ्लुक एवाभावादित्याहुः ॥

( वार्तिकरचनाक्षेपसमाधानभाष्यम् )

अथ किमर्थम् 'अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च' इत्युच्यते, न 'अनुनासिकलोपजभावावल्लोपहिलोपयोः' इत्येवोच्येत ?

संख्यातानुदेशो मा भूदिति । अनुनासिकलोपो हिलोपे प्रयोजयति-मण्डूकि ताभिरागहि, रोहिदश्व इहागहि, मरुद्भिरग्न आगहि ॥

( प्रदीपः ) संख्यातानुदेशो मा भूदिति । यद्यपि

---

१ वक्ष्यत्येतत्-'न माङ्योगे' ( ६।४।७४ ) इति सूत्रे ॥

२ 'यजादीनां' इति ङ. झ. पाठः ॥

३ 'दाकारस्यालोपाभावः' इति ङ. पाठः ॥

४ 'हि लोपाल्लोपयोर्जभाव' इति ट. छ. पाठः ॥

५ प्रकृतिरभिसंबध्यत इति । उपदेशे यदकारान्तमित्यन्वयः ॥

६ आर्धधातुकोपदेशेति । अत्रोपदेशशब्द उच्चारणपरः । लक्ष्यगतसाधुत्वबोधनोपयोगिप्रक्रियानिर्वाहार्थं यदुच्चारणन्तत्रेत्यर्थः ॥

७ 'तस्य च पर' इति ङ. पाठः ॥

८ 'समुदायापेक्ष' इति क. अ. पाठः । अत्र योगविभागसामर्थ्यादेवानन्तरस्येति न्यायो न प्रवर्तत एवेति भावः ॥

९ ननु कशब्दाचारक्विबन्ताल्लोटि शपि च प्रलये जाते लुक् साधयितुं शक्यतेऽत आह—हयधातोरिति ॥

प्रयोजनाख्यानपरत्वाद्वाक्यस्य यथासंख्याभावस्तथापि क्रमस्यान्यत्र व्यवस्थाहेतुत्वदर्शनादिहापि तदाशङ्का स्यादिति तन्निवारणायैवं निर्देशः कृतः ॥ **आगहीति** । अत्रापि 'प्रत्ययात्' इत्यस्योभयोः शेषत्वाद्वैलिङ्गभावः सिद्ध्यति ॥

( उद्द्योतः ) यद्यपीति । शास्त्रीयकार्ये एव परिभाषाप्रवृत्तेरिति भावः ॥ क्रमस्यान्यत्रेति । 'आद्यन्तौ–' इत्यादौ व्याकरणशास्त्रे समासवाक्ये यथासङ्ख्यप्रवृत्त्या क्रमिकसंबन्धदर्शनादस्यापि तच्छास्त्रीयवाक्यत्वेन तदाशङ्का स्यादित्यर्थः ॥ **सिध्यतीति** । तथा च नेदं प्रयोजनमिति भावः ॥

( ६५२५ सूत्रप्रयोजनवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ संप्रसारणमवर्णलोपे[1] प्रयोजनम् ॥ * ॥**

( भाष्यम् ) **मघोनः पश्य, मघोना, मघोने । संप्रसारणे कृते 'यस्य–' इति लोपः प्राप्नोति । असिद्धत्वान्न भवति ॥**

( प्रदीपः ) **मघोन इति** । मघमस्यास्तीति 'छन्दसीवनिपौ च' इति वनिप् । असिद्धं बहिरङ्गमन्तरङ्ग इति परिभाषया सम्प्रसारणस्यासिद्धत्वं नास्ति । एषा हि परिभाषा 'वाह ऊठ्' इत्यत्र ज्ञापितत्वादाभाच्छास्त्रीया । तस्यां प्रवर्तमानायामकारलोपसम्प्रसारणयोरसिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपदनुपस्थानात्, नाजानन्तर्य इति प्रतिषेधाद्वा ॥

(उद्द्योतः) नन्वन्तरङ्गे 'यस्य–' इति लोपे कर्तव्ये विभक्त्यपेक्षबहिरङ्गसंप्रसारणस्यासिद्धत्वादल्लोपाभावः सिद्धोऽत आह—**असिद्धमिति** ॥ **नाजानन्तर्येति** । 'भस्य' इत्यधिकारात् 'यस्य–' इति लोपोऽजानन्तर्याश्रयः । अत्राद्यमेव समाधानं युक्तम् । 'नाजानन्तर्ये' इत्यस्याः सिद्धान्त्यसंमतत्वादिति बोध्यम् ॥

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्–मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति ॥**

( प्रदीपः ) **अव्युत्पन्नमिति** । ततश्च तद्धिते विधीयमानोऽकारलोपो न भवति, व्याश्रयत्वादसिद्धत्वमपि न स्यात्–इत्यव्युत्पत्तिपक्ष एवाश्रयणीयः ॥

( उद्द्योतः ) अव्युत्पत्तिपक्षस्यावश्याश्रयणीयतां दर्शयति—**व्याश्रयत्वादिति** । वन्नन्तस्य तु संप्रसारणविषये प्रयोग एव नास्तीति भावः ॥

( ६५२६ सूत्रप्रयोजनवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ रेभाव आल्लोपे[2] प्रयोजनम् ॥ * ॥**

( भाष्यम् ) **किंस्विद् गर्भं प्रथमं दध्र आपः । रेभावे कृते 'आतो लोप इटि च' (६।४।६४) इत्याकारलोपो न प्राप्नोति । असिद्धत्वाद्भवति ॥**

( प्रदीपः ) **रेभावे कृत इति** । नित्यत्वात् ॥

( प्रयोजनाक्षेपभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । छान्दसो रेभावः, लिट् च छन्दसि सार्वधातुकमपि भवति । तत्र 'सार्वधातुकमपित्' (१।२।४) ङिद्वति इति ङित्त्वम्, 'श्नाभ्यस्तयोरातः' (६।४।११२) इत्याकारलोपो भवति ॥**

( प्रदीपः ) **लिट् चेति** । सार्वधातुके शपः श्लौ द्विर्वचनेऽघोरितीत्वनिषेधादाकारलोपः ॥

( उद्द्योतः ) अघोरितीति । 'ई हल्यघोः' इत्यस्याभावे 'श्नाभ्यस्तयोः–' इत्यालोप इति भावः । द्वित्वं तु 'श्लौ' इत्यनेन ॥

( अधिकारप्रयोजनाधिकरणम् )

( सूत्राभावे दोषोपक्रमभाष्यम् )

**यदि तर्हि अयं योगो नास्ति—**

( सूत्रासत्त्वे दोषप्रतिपादकं श्लोकवार्तिकम् )

**उत्तु कृञः कथमोर्विनिवृत्तौ**

( भाष्यम् ) **इह–कुर्वः, कुर्मः, कुर्यात्–इति, उकारलोपे कृते सार्वधातुकपर उकार इति उत्वं न प्राप्नोति ॥**

(प्रदीपः) वार्तिककारोक्तेषु प्रयोजनेषु प्रत्याख्यातेषु श्लोकवार्तिककारोक्तप्रयोजनोपक्षेपः—**उत्तु कृञ इति** ॥ **सार्वधातुकपर इति** । अथ सार्वधातुके एव परतः कस्मादुत्वं न क्रियते ? नैवं शक्यम् । उकारलोप एव सति उत्वं स्यात् । कुरुत इत्यादौ तु विकरणेन व्यवधानाच्च स्यात् । कुर्व इत्यादावपि स्थानिवद्भावात् व्यवधानमिति चेत्, न । वचनादीदृशं व्यवधानमाश्रीयते । ननु च सार्वधातुकपर उकार इत्याश्रीयमाणे नित्यत्वात् कृतेऽप्युकारलोपे तल्लोपस्य स्थानिवद्भावादुत्वं भविष्यति । अत्र हि परत्वात् गुणे कृते उकारलोपः । ततश्चानादिष्टादचः पूर्वस्य विधावस्त्येव स्थानिवद्भावः । प्रत्ययलक्षणं तु वर्णाश्रयत्वान्मा भूत् । एवं तर्हि परिहारान्तरस्य वक्ष्यमाणत्वात् स्थानिवत्त्वं भाष्यकृता नाश्रितम् । **अथवा** नित्यत्वात् पूर्वमुकारलोपः, पश्चात् गुणः । कृते ह्युकारलोपे प्रत्ययलक्षणमिति गुणेन भाव्यम् । ततो लक्षणान्तरेण च प्राप्नुवन् विधिरनित्य इति गुणस्यानित्यत्वम् । ततश्चादिष्टादचः पूर्वोकार इति तद्विधौ नास्ति स्थानिवद्भावः । **ननु** व्याश्रयत्वादुकारलोपस्यासिद्धत्वं न प्राप्नोति, म्वोरुकारलोपविधानात्, सार्वधातुके परत उत्वविधानात् । नैतदस्ति । मकारवकारादौ प्रत्यये उकारलोपविधानादस्त्येव समानाश्रयत्वम् ॥

( उद्द्योतः ) **वार्तिककारः**—कात्यायनः । श्लोकवार्तिककारस्त्वन्य एवेति भावः ॥ एवं प्रयोजनाभावादस्य योगस्यानारम्भ्यत्वे स्थिते श्लोकवार्तिककृता प्रयोजनान्युक्तानीति सङ्गतिं दर्शयति—**प्रत्याख्यातेष्वित्यनेन** ॥

---

[1] 'वर्णलोपे ॥ संप्रसारणमवर्णलोपे प्रयोजनम्' इति च. छ. झ. पाठः ॥
[2] 'आल्लोपे ॥ रेभाव आल्लोपे प्रयोजनम्' इति च. छ. झ. पाठः ॥

१ अत्र हीति । कृताकृतप्रसङ्गित्वेनोभयोरपि नित्यत्वादिति भावः ॥

भाष्ये—**सार्वधातुकपर उकार इति** । 'अत उत्–' इति सूत्रे 'उतश्च प्रत्ययात्–' इत्यत उत इत्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः । उकारान्तस्य करोतेरित्यर्थस्तु न । करोतिशब्दबोधितधातोस्तदन्तत्वासंभवात् ॥ तत्रानुवृत्तिमकृत्वा सार्वधातुक एवोत्त्वं विधीयतामिति शङ्कते—**अथेति** ॥ **स्थानिवद्भावादिति** । तथा च वचनादुकारव्यवधानं सहिष्यत इत्यर्थः ॥ **ईदृशमिति** । स्थानिवद्भावकृतम्, न तु श्रौतमित्यर्थः ॥ **स्थानिवद्भावादिति** । 'अचः परस्मिन्–' इत्यनेन ॥ ननु पूर्वमुकारलोपे पश्चाद्गुणेऽकारस्यादिष्टादचः पूर्वस्योत्त्वविधानात्कथं स्थानिवत्त्वमत आह—**अत्र हीति** ॥ ननु कृताकृतप्रसङ्गित्वाद्गुणोऽपि नित्योऽत आह—**कृते हीति** ॥ **प्रत्ययलक्षणमितीति** । कार्यातिदेशादिति भावः ॥ **म्वोरुकारेति** । तदीयनिमित्तसमुदायापेक्षयाऽस्याधिकनिमित्तकत्वादिति भावः ॥ **मकारवकारादाविति** । अङ्गस्येति षष्ठया निमित्त इत्यध्याहारेणाङ्गनिमित्ते मकारवकारादावित्यर्थ इति भावः ॥

( सूत्रासत्वे दोषप्रतिपादकं श्लोकवार्तिकम् )

**णेरपि चेटि [1]कथं विनिवृत्तिः ।**

**( भाष्यम् ) इह च–कारयतेः कारिष्यते 'णेरनिटि' ( ६।४।५१ ) इति णिलोपो न प्राप्नोति ॥**

**( प्रदीपः ) कारिष्यत इति** । प्रकृति[2]प्रत्ययाश्रयत्वादिण्णिलोपयोः समानाश्रयत्वम् ॥

**( उद्द्योतः )** ( भाष्ये ) **कारिष्यत इति** । चिण्वदिट् ॥

( सूत्रासत्वे दोषप्रतिपादकं श्लोकवार्तिकम् )

**अब्रुवतस्तव योगमिमं स्यात्**
**लुक् च चिणो नु कथं न तरस्य ॥ १ ॥**

**( भाष्यम् ) इह च–अकारितराम्–अहारितराम्–इति चिण उत्तरस्य तरस्य लुक् कथं न स्यात् ॥**

( दोषवारकं श्लोकवार्तिकम् )

**चं भगवान्कृतवांस्तु तदर्थं**
**तेन भवेदिटि णेर्विनिवृत्तिः ।**

**( भाष्यम् ) इह–'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' ( ६।४।६२ ) ।**

**किञ्च ?**

**णिलोपश्च ॥**

**( प्रदीपः ) चं भगवानित्यादिना प्रयोजननिराकरणम् ॥ इट् चेति**—चकारेण णिलोपो विधीयत इत्यर्थः ॥

( दोषवारकं श्लोकवार्तिकम् )

**म्वोरपि ये च तथाऽप्यनुवृत्तौ**

**( भाष्यम् ) इहापि—कुर्वः, कुर्मः, कुर्यात्–इति म्वोर्ये चेति, तदप्यनुवर्तिष्यते ॥**

**( प्रदीपः ) म्वोरिति** । अत उत्सार्वधातुके इत्यत्र म्वोर्ये चेत्यनुवर्तनात् कृते उकारलोपेऽत उत्वं भविष्यतीत्यर्थः । मकारादिभिश्च वाक्यभेदेन सार्वधातुकस्य विशे[3]षणात् कर्म इत्यादावुत्वाभावः ॥

**(उद्द्योतः)** ननु 'मकारवकारादौ प्रत्यये' इत्यर्थे कृञो मनिनि गुण उत्त्वं स्यादेव, एतदेकवाक्यतयाऽन्वये कुरुत इत्यादौ न स्यादत आह—**मकारादिभिश्चेति** । माद्यादौ सार्वधातुके [4]गुण इत्यर्थ इति भावः ॥

( दोषवारकं श्लोकवार्तिकम् )

**चिण्लुकि च क्ङित एव हि लुक् स्यात् ॥ २ ॥**

**( भाष्यम् ) चिण्लुक्यपि प्रकृतं क्ङिद्ग्रहणमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'गमहनजनखनघसां लोपः क्ङित्यनङि' ( ६।४।९८ ) इति ।**

**तद्वै सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः । चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' ( १।१।६७ ) इति ॥**

**( उद्द्योतः )** [ [5]भाष्ये—**चिण इत्येषेति** । एकदेश्युक्तिरियम्, तत्पक्षस्य दूषितत्वात् ॥ ]

( संग्रहः )

**उत्तु कृञः कथमोर्विनिवृत्तौ**
**णेरपि चेटि कथं विनिवृत्तिः ।**
**अब्रुवतस्तव योगमिमं स्यात्**
**लुक् च चिणो नु कथं न तरस्य ॥ १ ॥**
**चं भगवान् कृतवांस्तु तदर्थं**
**तेन भवेदिटि णेर्विनिवृत्तिः ।**
**म्वोरपि ये च तथाऽप्यनुवृत्तौ**
**चिण्लुकि च क्ङित एव हि लुक् स्यात् ॥ २ ॥**

---

१ 'कथं हि निवृत्तिः' इति क. अ. पाठः ॥

२ प्रकृतिप्रत्ययाश्रयत्वादिति । णेरनिटीति णिलोपस्याङ्गाधिकारस्थत्वेन ण्यन्ताङ्गस्यार्धधातुके परे लोप इत्यर्थः । चिण्वदिटश्च धात्वधिकारत्वेन तस्यापि प्रकृतिप्रत्ययाश्रयत्वमिति समानाश्रयत्वमिति भावः ॥

३ 'विशेषणात् कुरुत इत्यादावुत्वं भवत्येवेति भावः' इति ङ. निर्दिष्टः पाठः ॥

४ गुण इति । उत्वमिति भावः । कचित्तु 'उत्वं' इत्येव पाठः ॥

५ [ ] अयमंशो ङ. पुस्तक एव ॥

( ६५२७ सूत्रारम्भे उपसंख्यानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ आरभ्यमाणेऽप्येतस्मिन्योगे[1] सिद्धं वसुसंप्रसारणमज्विधौ ॥*॥**

( भाष्यम् ) आरभ्यमाणेऽप्येतस्मिन् योगे वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यम् ।

किं प्रयोजनम् ?

पपुषः पश्य, तस्थुषः पश्य, निन्युषः पश्य, चिच्युषः पश्य, लुलुवुषः पश्य, पुपुवुषः पश्य-इति । वसोः संप्रसारणे कृते 'अचि'[2] इत्याकारलोपादीनि यथा स्युरिति ॥

किं पुनः कारणं न सिध्यन्ति ?

( प्रदीपः ) आरभ्यमाणेऽपीति । अनेकपरिहाराश्रयणे प्रतिपत्तिगौरवं मा भूदित्येवमर्थमारभ्यमाणे-इत्यर्थः ॥

**पपुष इति** । ननु चान्तरङ्गत्वादिटा भाव्यम् । न च सम्प्रसारणे कृतेऽपीटो निवृत्तिः, निमित्ताभावे[3] नैमित्तिकस्याप्यभाव इत्यस्याः परिभाषाया भाष्यकारेणानाश्रयणात् । तथा[4] च 'चौ' इत्यत्रोक्तम्-'इहान्ये चौ प्रत्यङ्गस्य प्रतिषेधमारभन्ते तदिहापि साध्यम्' इत्यकारस्य निवृत्तावपि यणाद्यादेशानिवर्तनाच्चैतदुक्तम् । तथा च 'छ्वोः-' इत्यत्रोक्तम्-'अवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक्प्राप्तिः' इति कृतेऽपि शकारे कृतस्य तुकोऽनिवृत्तिं मत्वा चैतदुक्तम् । एवं तर्हि नित्यशब्ददर्शने प्रविभज्यावयवेषु कल्प्यमानेष्वन्तरङ्गबहिरङ्गभावो नास्तीति 'प पा वस् अस्' इति स्थिते नित्यत्वादिटं बाधित्वा सम्प्रसारणं भवति, अल्विधित्वाच्च स्थानिवत्वाभावादिटोऽप्रसङ्गः । **अथवा** सम्प्रसारणं तदाश्रयं च बलीयो भवतीति-अत्र विषये पूर्वमिट् न प्रवर्तते ॥

( उद्योतः ) ननु प्रयोजनाभावादनारम्भे साधिते आरम्भोक्तिर्न युक्तेत्यत आह—**अनेकेति** ॥ **प्रतिषेधमारभन्त इति** । उक्तपरिभाषासत्त्वे हि तदारम्भो व्यर्थ एव स्यात् ॥ ननु प्रविभज्यान्वाख्यानेऽप्यन्तर्भूतनिमित्तत्वादिनाऽन्तरङ्गत्वं वक्तुं शक्यमेवेत्यरुचेराह—**अथवेत्यादि** । 'लिट्यभ्यासस्य-' इति सूत्रस्थभाष्यविरुद्ध[5]मिदम् । तस्माद्विभज्यान्वाख्याने इटः पूर्वं प्रतिपदविधित्वेन शीघ्रोपस्थिततया संप्रसारणे ततोऽन्तरङ्गपरिभाषाया अनित्यत्वात्प्रतिपदविधिविषये तदप्रवृत्तेश्चेडभावे[6] वस्निमित्तक एवा[7]लोप इत्याशयः ॥

( ६५२८ उपसंख्यानकारणवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ बहिरङ्गलक्षणत्वादसिद्धत्वाच्च ॥*॥**

(भाष्यम्) बहिरङ्गलक्षणं चैव हि वसुसंप्रसारणमसिद्धं च ॥

( ६५२९ उपसंख्यानवार्तिकम् ॥ १० ॥ )

**॥ * ॥ आत्वं यलोपाल्लोपयोः पशुषो न वाजान् चाखायिता चाखायितुम् ॥ * ॥**

( भाष्यम् ) आत्वं यलोपाल्लोपयोः सिद्धं वक्तव्यम् ।

किं प्रयोजनम् ?

पशुषो न वाजान् । पशुष इत्यात्वस्यासिद्धत्वात् 'आतो धातोः' ( ६।४।१४० ) इत्याकारलोपो न प्राप्नोति ।

चाखायिता-चाखायितुमिति आत्वस्यासिद्धत्वात् 'यस्य हलः' ( ६।४।४९ ) इति यलोपः प्राप्नोति ॥

( प्रदीपः ) **पशुष इति** । पशुं सनोतीति 'जनसन-' इति विट् । 'विड्वनोः-' इत्यात्वम्, तस्यासिद्धत्वात् 'आतो धातोः' इत्याकारलोपाप्रसङ्गः । लक्षणप्रतिपदोक्तपरिभाषा त्वाल्लोपे नाश्रीयते, अ[8]व्याप्तिप्रसङ्गात् ॥

( उद्योतः ) **लक्षणेति** । एवञ्च लक्ष्यानुसारेण साऽत्र [9]नाश्रीयत इत्यर्थः । अत एव क्षीरं धयन्ति तान्पश्येत्यर्थे 'क्षीर[10]धः पश्य' इत्यादिसिद्धिः ॥ [[11]अव्याप्तीति । पशुष इत्यादाविति भावः ॥]

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**[12]समानाश्रयवचनात्सिद्धम् ।**

**समानाश्रयमसिद्धं भवति, व्याश्रयं चैतत् ।**

**इह तावत्-पपुषः पश्य, तस्थुषः पश्य, निन्युषः पश्य, चिच्युषः पश्य, युयुवुषः पश्य, लुलुवुषः पश्य-इति-वसावाकारलोपादीनि, वस्वन्तस्य विभक्तौ संप्रसारणम् ।**

**पशुष इति-विटि आत्वं, विडन्तस्य विभक्तावाकारलोपः ।**

१ 'आरभ्यमाणेऽप्येतस्मिन्योगे' इत्यंशो न वार्तिकघटकः किन्तु भाष्यमेवेति ट. छ. पाठः ॥

२ अचीति । पपुषस्तस्थुष इत्यत्र 'आतो लोप इटि च' इत्यनेनालोपोऽजाद्यार्धधातुके परे भवति । निन्युषश्चिच्युष इत्यत्र 'एरनेकाचोऽसंयोगपूर्वस्य' इत्यनेनाचि परतो यण् । लुलुवुषः पुपुवुष इत्यत्र 'अचि श्नु धातुभ्रुवां-' इत्युवङिति भावः ॥

३ 'निमित्तापाये नैमित्तिकस्याप्यपाय इ' इति च. पाठः ॥

४ भाष्यकारेणानाश्रितेयं परिभाषेति प्रतिपादयति—तथा चेत्यादिना ॥

५ सूत्रस्थभाष्येति । तत्र हि सूत्रे 'तदेतदनन्यार्थं संप्रसारणं संप्रसारणाश्रयश्च बलीयो भवतीति वक्तव्यं पूर्वविप्रतिषेधो वा वक्तव्यः । उभयं न वक्तव्यम् । उक्तमत्रोभयेषां ग्रहणस्य प्रयोजनम्-उभयेषामभ्यासस्य संप्रसारणमेव यथा स्यात्' इत्युक्तं तद्भाष्यविरुद्धमित्यर्थः ॥

६ 'इभावे उस्निमित्तक' इति झ. ख. पाठः ॥

७ 'एवाल्लोप' इति ड. झ. पाठः ॥

८ अव्याप्तिप्रसङ्गादिति । वर्णग्रहणेऽप्रवृत्तेश्चेत्यपि बोध्यम् । वस्तुतस्तु वर्णग्रहणेऽपीयं परिभाषा प्रवर्तते, ओत्सूत्रे भाष्येऽस्यास्तद्विषये सञ्चारितत्वात् ॥

९ नाश्रीयत इति । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वादत्र सा नाश्रीयत इत्यर्थः ॥

१० क्षीरधः पश्येति । क्षीरोपपदात् पानार्थकधेट् धातोः 'आतोऽनुपसर्गे कः' इति कं बाधित्वा 'अन्येभ्योऽपि दृश्यते' इति विचि आत्वे च क्षीरधाशब्दाज्जसि 'आतो धातोः' इत्याकारलोपेन क्षीरधः सिद्धिः । अत्र लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तौ तु आकारलोपो न स्यादिति भावः ॥

११ [ ] अयं पाठो ड. पुस्तके एव दृश्यते ॥

१२ झ. पुस्तके वार्तिकमेतत् ॥

**चाखायिता–चाखायितुमिति–यङ्यात्वम् ,यङन्तस्य चार्धधातुके लोप इति ॥**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

**'अत्र'ग्रहणसामर्थ्यात् ।**

**ननु चान्यदत्रग्रहणस्य प्रयोजनमुक्तम् ।**

**किमुक्तम् ?**

**'अत्र'ग्रहणं विषयार्थमिति ।**

**अधिकारादप्येतत्सिद्धम्–इति ॥**

( प्रदीपः ) **चाखायितेति** । खनो[1] यङि द्विर्वचनात्परत्वात् 'ये विभाषा' इत्यात्वे द्विर्वचने च तृचि रूपम् ॥

**अधिकारादपीति** । ततश्च 'आभात्' ग्रहणं विषयार्थं 'अत्र'ग्रहणं तु समानाश्रयत्वप्रसिद्ध्यर्थं[2] सम्पद्यते ॥

( उद्द्योतः ) **ततश्चेति** । अधिकारादाभीयस्यासिद्धत्वे सिद्धे आभाद्ग्रहणं 'आभीये कर्तव्ये' इत्यर्थरूपविषयलाभार्थमिति 'अत्र'ग्रहणं समानाश्रयत्वार्थमिति भावः ॥ **समानाश्रयत्वेति** । समानाश्रयत्वं च तत्प्रयोगप्राप्तासिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायापेक्षयाऽन्यूनानतिरिक्ताश्रयकत्वम्[3] । आश्रयणं स्थानित्वेनैव–निमित्तत्वेनैव–इति नाग्रहः, किंतु यथाकथंचित् । विकारकृतमतिरिक्तत्वं[4] तु न, जहीत्यादेरनुदाहरणत्वापत्तेः । तत्र[5] 'पपुषः' इत्यत्र न्यूनः, चाखायितेत्यादावधिकः । अतिरिक्तमपि[6] पूर्वविध्युपात्ततावच्छेदकरूपेणाश्रितं चेत्तदपि समानाश्रयमेव, समानशब्दस्वारस्यात् । अत एव च्चिणो लुकि च्चिणो लुगसिद्ध इति सङ्गच्छते । एवञ्च 'स्त्री–इयति' इत्यत्रेदम्संबन्धीश्स्थानिक'यस्य–'इतिलोपीयनिमित्तसमुदायापेक्षया 'स्त्रियाः' इति इँयङि[7] अधिकस्य स्त्रीशब्दस्यापेक्षणादङ्गसंज्ञासूत्रस्यविधिग्रहणस्य तत्प्रयोजनमाकरोक्तं सङ्गच्छत इत्याहुः ॥

( उपसंख्यानानर्थक्यसाधकभाष्यम् )

**इह–पपुषः, चिच्युषः, लुलुवुषः, द्वौ हेतू[8] उपदिष्टौ–बहिरङ्गलक्षणश्चासिद्धत्वं चेति ।**

**तत्र भवेदसिद्धत्वं प्रत्युक्तम्, बहिरङ्गलक्षणं तु नैव प्रत्युक्तम् ।**

**नैष दोषः । बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्विभाविनावेतावर्थौ ।**

**कथम् ?**

**सत्यन्तरङ्गे बहिरङ्गम्, सति च बहिरङ्गेऽन्तरङ्गम् । न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति[9] । नानभिनिर्वृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति । तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य ॥**

( प्रदीपः ) **असिद्धत्वं प्रत्युक्तमिति** । समानाश्रयत्वपरिग्रहात् ॥ **बहिरङ्गलक्षणं त्विति** । यद्यपि नाजानन्तर्य इत्ययमत्र निषेधोऽवतरति तथापि परिभाषायाः कारणाभावात्[10] प्रसङ्ग एव नास्तीति प्रतिपादयितुमुपन्यासः ॥

**प्रतिद्वन्द्विभाविनाविति** । न हि वस्त्वन्तरानपेक्षमन्तरङ्गं[11] बहिरङ्गं वा स्वभावसिद्धं किञ्चिदस्ति, परस्परापेक्षया युगपत्प्राप्तौ तयोरवस्थानात् । यथा–स्योन इत्यत्र यण्गुणयोः । पपुष इत्यादौ तु युगपत्प्राप्तिर्नास्ति, सम्प्रसारणप्राप्तिकाले आल्लोपादीनां निमित्ताभावादप्रसङ्गः, आल्लोपप्राप्तिकाले च निर्वृत्तं सम्प्रसारणं ततश्च निमित्तमेवाल्लोपादीनां सम्प्रसारणमिति नास्ति परिभाषोपस्थानमित्यर्थः । यद्येवं, पचावेदमित्यादावपि नाकृते आद्गुणे 'एत ऐ' इत्यैत्वं प्राप्नोतीति निमित्तनिमित्तिभावात्परिभाषाया अनुपस्थानप्रसङ्गः । एवं तर्ह्य**न्यथा व्याख्यायते**–'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येषा परिभाषा 'वाह ऊठ्' इत्यत्र ज्ञापितेत्याभाच्छास्त्रीया ।

**अथवा** 'विप्रतिषेधे परं कार्यम्' इत्यत्रोपसंख्याताऽपि संज्ञापरिभाषाणां कार्यकालत्वाद्वसुसम्प्रसारणदेशत्वादाभाच्छास्त्रीया, आभाच्छास्त्रीयेष्वाल्लोपादिषु कर्तव्येषु असिद्धेति न प्रवर्तते । तदप्रवृत्तौ चाल्लोपादीनि भवन्तीति वाक्यार्थः, पदान्यस्मिन्नर्थे योज्यन्ते ॥

---

१ 'खनेर्यङि' इति ङ. पाठः । 'खनतेर्यङि' इति च. पाठः ॥

२ 'प्रतिपत्तिसिद्ध्यर्थं' इति ङ. च. पाठः ॥

३ तत्प्रयोगेति । बभूव-इति प्रयोगे प्राप्तं यदसिद्धत्वं तदाश्रयं शास्त्रं भुवो वुगिति तच्छास्त्रीयः यो निमित्तसमुदायः–'भू अ' इति तदपेक्षयाऽन्यूनानतिरिक्तो यो निमित्तसमुदाय उवङ्शास्त्रस्य–अजादिप्रत्ययपरक उवर्णान्तधातुरूपस्तदाश्रयकत्वं 'अचि श्नु धातु–' इत्यस्येति तयोर्द्वयोः शास्त्रयोः समानाश्रयकत्वमित्यर्थः । भाष्ये–आगहि जहि–इत्युदाहरणप्रदर्शनादाश्रयणं चात्र स्थानित्वेनैवेत्याद्याग्रहो न । आगहीत्यत्रानुनासिकलोपे हेर्निमित्तत्वं हिलोपे चाङ्गस्य निमित्तत्वमिति समानाश्रयत्वमेव न स्यात् ॥

४ ननु जहीति भाष्योदाहरणे हिलोपे जस्य निमित्तत्वम्, जादेशे च हन्तेरिति कथं समानाश्रयत्वमत आह—विकारकृतमिति । एवञ्च जभावस्य विकारत्वेनानतिरिक्तत्वात्तयोः समानाश्रयत्वमेवेति भावः ॥

५ समानाश्रयत्वाभावं भाष्यकृदुक्तोदाहरणप्रदर्शनेन संपादयति—तत्र पपुष इति । तत्र हि प्रयोगे प्राप्तं यदसिद्धत्वं संप्रसारणस्य, तदाश्रयशास्त्रीयनिमित्तसमुदायः–पपावस् शस्–इत्येवंरूपस्तदपेक्षया न्यूनसमुदायनिमित्तकत्वमातो लोप इटि चेत्यस्येति न समानाश्रयत्वमिति भावः ॥

६ ननु 'अपाचितराम्' इत्यत्र पुनस्तलोपो दुर्वारः । तत्रासिद्धत्वाश्रयं शास्त्रं च्चिणो लुगिति, तन्निमित्तसमुदायश्च 'अपाचित' इति तदपेक्षयाऽतिरिक्तः 'अपाचितराम्' इति तन्निमित्तकत्वं पुनः प्राप्तस्य च्चिणो लुक इति समानाश्रयत्वभावाच्चिणो लुकि च्चिणो लुगसिद्ध इति वति तलोपप्राप्तिः स्यादत आह—अतिरिक्तमपि पूर्वेति । अत्र हि पूर्वलुक्शास्त्रीयनिमित्तत्वावच्छिन्नमेव द्वितीयमिति न दोषः ॥

७ इयङीति । स्त्री इयतीत्यत्र यस्येति लोपविध्युपात्ततावच्छेदकरूपेण 'स्त्रियाः' इति शास्त्रीयोद्देश्यतावच्छेदकत्वाभावान्न समानाश्रयत्वमिति न तेन सिद्धिरिति विधिग्रहणप्रयोजनत्वेन तदुपात्तं भगवतेति भावः ॥

८ 'हेतू व्यपदिष्टौ' इति ट. छ. पाठः ॥

९ युगपत्समवस्थानं–एकबुद्धिविषयत्वम् ॥

१० कारणाभावात्–फलाभावात् । एवञ्च नास्या उपयोग इति नेयमिति प्रसङ्ग एव नास्तीति भावः ॥

११ वस्त्वन्तरेति । यथा त्रैपादिकेषु विप्रतिषेधे परमिति न, अभावादुत्तरस्येति पूर्वत्वं परत्वञ्च वस्त्वन्तरसापेक्षं तथैवेदमन्तरङ्गत्वं बहिरङ्गत्वमपीति भावः॥

**सत्यतरङ्ग इति** । बुद्ध्यापेक्षित इत्यर्थः ॥ **तत्र निमित्तमेवेति** । परिभाषाया असिद्धत्वादप्रवृत्ताविति भावः । वसुसम्प्रसारणं चैकं परिभाषाया आल्लोपादीनां चाश्रय इति समानाश्रयत्वाद्भवत्यसिद्धत्वं परिभाषायाः ॥

( **उद्योतः** ) **यद्यपि नाजानन्तर्येति** । वस्तुत इयं सिद्धान्तसंमतेत्यसकृदावेदितम् ॥

**परस्परापेक्षया इति**—अस्य 'तयोः' इत्यनेनान्वयः । **तयोः**—अन्तरङ्गत्वबहिरङ्गत्वयोर्युगपत्प्राप्तौ । 'लक्ष्ये' इति शेषः । **तयोरित्यस्या**वृत्त्या तयोरन्तरङ्गबहिरङ्गयोर्युगपल्लक्ष्ये प्राप्तौ परस्परापेक्षया तयोरन्तरङ्गत्वबहिरङ्गत्वावस्थानादित्यर्थः ॥ **स्योन इति** । अत्र सिवेर्बाहुलकान्नप्रत्यये 'च्छ्वोः–' इत्यूठि,इकारस्य लघूपधगुणो यण् च प्राप्नोति ॥ **वाह ऊठित्यत्रेति** । एतदेव युक्तम् । 'अथवा–'इति तु प्रौढ्या ॥ **कर्तव्येषु असिद्धेति** । तद्दृष्ट्या तयोरप्यसिद्धत्वमित्यपि बोध्यम् । एतदपि 'मघोनः' इति प्रतीके कैयटेन स्पष्टमुक्तम् ॥ **इति वाक्यार्थ इति** । तात्पर्यार्थ इत्यर्थः ॥ **बुद्ध्याऽपेक्षित इति** । परिभाषाप्रवृत्त्येऽन्तरङ्गबहिरङ्गयोः परिभाषायाश्च विद्यमानत्वेन बुद्धिसंनिधिरपेक्षितः । अत्र त्वसिद्धत्वात्परिभाषायाः, परिभाषादृष्ट्या तयोरप्यसिद्धत्वान्न तथा बुद्धौ संनिधानमिति भावः । ( भाष्ये ) **न युगपत्समवधानमस्तीत्यनेना**सिद्धत्वात् विद्यमानत्वेन बुद्धौ संनिधानं नास्तीत्येव विवक्षितम् ॥

( भाष्ये ) **नानभिनिर्वृत्त** इत्यस्य—तथा बुद्धिविषयत्वमप्राप्तेइत्यर्थः । **अन्तरङ्गं प्राप्नोतीत्यस्य**—अन्तरङ्गत्वेन बुद्धिविषयत्वं प्राप्नोतीत्यर्थः ।

**अप्रवृत्ताविति** । परिभाषाया अप्रवृत्तौ सत्यां बहिरङ्गं संप्रसारणमन्तरङ्गल्लोपस्य निमित्तमित्यर्थ इति भावः ॥

**परे तु—तत्र निमित्तमेवे**ति भाष्यस्य परिभाषाया अनित्यत्वादित्यर्थः । एवञ्चाऽसिद्धवत्सूत्रप्रत्याख्यानेऽपि न दोष इत्याहुः ॥

( ६५३० उपसंख्यानवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ ह्स्वयलोपाल्लोपाश्चायादेशो ल्यपि सिद्धा वक्तव्याः ॥ * ॥

( **भाष्यम्** ) **प्रशमय्य गतः, प्रतमय्य गतः, प्रबेभिदय्य गतः, प्रचेच्छिदय्य गतः, प्रस्तनय्य गतः, प्रगदय्य गतः । ह्स्वयलोपाल्लोपानामसिद्धत्वात् 'ल्यपि लघुपूर्वात्' ( ६।४।५६ ) इत्ययादेशो न प्राप्नोति ॥**

( प्रदीपः ) **प्रशमय्येति** । ह्रस्वस्यासिद्धत्वाल्लघुपूर्वो मकारो न भवतीत्ययादेशो न प्राप्नोति ॥ **प्रबेभिदय्येति** । भिदेर्यङन्तात् णिच् । तत्र यलोपस्यासिद्धत्वाल्लघुपूर्वादुत्तरो णिच् न भवति, यकारेण व्यवधानात्–इत्ययादेशाप्रसङ्गः ॥ **प्रस्तनय्येति** । अदन्ताधिकारे 'स्तनगदी देवशब्दे' इति पठ्यते । तत्राल्लोपस्यासिद्धत्वादकारेण व्यवधानादयादेशाप्राप्तिः ॥

( **उद्योतः** ) **प्रशमय्येति** । शमेर्णिचि उपधावृद्धिः, 'मितां ह्रस्वः', क्त्वो ल्यप् ॥ **भिदेरिति** । 'बेभिद-इ-य' इति स्थितेऽल्लोपयलोपयोरयादेश इष्यते । [यद्यपि अत्रोभयलोपस्तथापि वार्तिकेऽल्लोपमात्रोक्त्या नैतत्सिद्धिः, यलोपासिद्धत्वस्य सत्वात् । अतो यलोपोऽपि तत्रोपात्तः । एवञ्चोभयोरिदमुदाहरणं बोध्यम् । अत एव समुदितमेव व्याख्यातं भाष्ये ॥ ] **अदन्तेति** । चुरादावित्यर्थः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**अत्राप्येष परिहारः–समानाश्रयवचनात्सिद्धमिति ।**

**कथम् ?**

**णावेते विधयः, णेर्ल्यप्ययादेशः ॥**

( ६५३१ उपसंख्यानवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ * ॥

( **भाष्यम्** ) **बभूवतुः, बभूवुः । वुकोऽसिद्धत्वादुवङादेशः प्राप्नोति ।**

**उपदिदीये, उपदिदीयाते । युटोऽसिद्धत्वाद्यणादेशः प्राप्नोति ॥**

( **प्रदीपः** ) **बभूवतुरिति** । भू-अतुस्, वुक्, तस्यासिद्धत्वादुवङ् प्राप्नोति । ननु च नाप्राप्ते उवङि वुगारभ्यमाणस्तस्यापवादो भवति । सत्यपि सम्भवे बाधनं भवतीत्येष न्यायः । **नैतदस्ति** । बाधकप्रवृत्त्यवस्थायां यद्विद्यते तद्बाधकेन निवर्तितं न प्रवर्तते । उवङ् तु निरवकाशत्वात् प्रवर्तमाने वुकि असिद्धत्वादात्मानमदर्शयन्न शक्यो बाधितुमिति वुकि कृते तस्यासिद्धत्वात् प्रवर्तते ॥

( **उद्योतः** ) ननु कृतेऽपि उवङि वुकः प्रवृत्तिसंभवाद्विरोधाभावेन कथं बाधकत्वमत आह—**सत्यपीति** । न चात्रोवङ्यपि 'उपधायां च' इति दीर्घे वलि लोपे बभूवतुरित्यादिसिद्धिः । बहिरङ्गत्वेनोऽसिद्धत्वेन वलोपाप्राप्तेरिति भावः ॥ **तद्बाधकेनेति** । यथा केनाण् ॥

१ अप्रवृत्ताविवितीति । असिद्धवत्सूत्रं निमित्तमेवेति भावः ॥

२ 'यद्यपि नाजानन्तर्ये इति' इति प्रतीकं ङ. झ. पुस्तकयोः ॥

३ प्रौढ्येति । अन्यथा सर्वासामपि परिभाषाणामाभाच्छास्त्रीयत्वं स्यादिति भावः ॥

४ तात्पर्यार्थ इति । अत एव 'पदान्यन्यस्मिन्नर्थे योज्यन्ते' इति कैयटेनोक्तं सङ्गच्छते ॥

५ ननु असिद्धं बहिरङ्गेति परिभाषायाः 'अन्तरङ्गे कर्तव्ये जातस्य समकालप्राप्तस्य च बहिरङ्गस्यासिद्धत्वम्' इत्यर्थः सिद्धान्तसम्मत इति 'यद्येवं पचावेदमित्यादावपि' इत्यादि कैयटव्याख्यानं न सङ्गच्छेतेत्यत आह– परिभाषाप्रवृत्तय इत्यादि ॥

६ वार्तिकोत्तरं 'ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि सिद्धा वक्तव्याः' इति भाष्यपाठोऽधिकः च. छ. झ. पुस्तकेषु ॥

७ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तके एव दृश्यते ॥

८ वार्तिकोत्तरं 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इत्येवं भाष्यपाठः च. छ. झ. पुस्तकेषु ॥

९ 'भुवो वुक् तस्या' इति ङ. पाठः ॥

१० ननु वुकप्रवृत्त्यनन्तरं प्रवृत्तेऽप्युवङि को दोषोऽत आह—न चात्रेति । निर्दिश्यमानस्यादेशा भवन्तीति परिभाषणाद्धकारस्य स्थाने एवोवङिति भावः ॥

११ यथा केनाणिति । आतोऽनुपसर्गे क इति कप्रत्ययेन बाधितः कर्मण्यण् गोद इत्यादौ पुनर्न प्रवर्तते तद्वदिति भावः ॥

( वुकः सिद्धत्वोपसंख्यानाक्षेपभाष्यम् )

वुकस्तावन्न वक्तव्यम् । वुकं न वक्ष्यामि । एवं वक्ष्यामि—'भुवो लुङ्लिटोरूदुपधायाः' इति । अत्रोवङादेशे कृते या उपधा तस्याः[1] स्यात् ॥

( उद्द्योतः ) [[2]भाष्ये—एवं वक्ष्यामिति । भुवो लुङ्लिटो-रूदुपधायाः । ततः—'गोहः' इति योगविभागं करिष्यामीत्यर्थः । तदपकृष्य तत्र व्याख्यास्यामीत्यर्थो वा ॥ ]

( प्रत्याक्षेप-समाधानभाष्यम् )

एवमपि कुतो नु खल्वेतत्-उवङादेशे कृते या उपधा तस्या ऊत्वं भविष्यति, न पुनः सांप्रतिकी योप[3]धा तस्याः स्यात्-भकारस्येति ।

नैष दोषः । ओरिति वर्तते, तेनोवर्णस्य भवि-ष्यति ॥

( प्रदीपः ) तेनोवर्णस्येति । उवर्णस्योपधाया ऊद्भवती-त्येवमा[4]श्रयणात्, उवङि च कृते उवर्ण उपधा भवति नान्यथा ॥

( पुनः प्रत्याक्षेप-समाधानभाष्यम् )

भवेत्सिद्धं-बभूवतुः, बभूवुः ।

इदं तु न सिद्ध्यति-बभूव, बभूविथेति ।

किं कारणम् ?

गुणवृद्ध्योः कृतयोरुवर्णाभावात् ।

नात्र गुणवृद्धी प्राप्नुतः ।

किं कारणम् ?

'क्ङिति च' ( १।१।५ ) इति प्रतिषेधात् ।

कथं कित्त्वम् ?

'इन्धिभवतिभ्यां च' (१।२।६) इति ।

त[5]द्धै कित्त्वं वयं प्रत्याचक्ष्महे वुका । इह तु कित्त्वेन वुक् प्रत्याख्यायते ।

किं पुनरत्र न्याय्यम् ?

वुग्वचनमेव न्याय्यम् । सति हि कित्त्वे स्याता-मेवात्र गुणवृद्धी ।

किं कारणम् ?

इग्लक्षणयोर्गुणवृद्ध्योः स प्रतिषेधः, न चैषा इग्लक्षणा वृद्धिः ।

एवं तर्हि नार्थो वुका नापि कित्त्वेन । स्तामत्र गुणवृद्धी । गुणवृद्ध्योः कृतयोरवावोश्च कृतयोर्या उपधा तस्या ऊत्वं भविष्यति ।

कथम् ?

ओरित्यत्रावर्णमपि प्रतिनिर्दिश्यते ।

इहापि तर्हि प्राप्नोति—कीलालपः पश्य, शुभंयः पश्येति ।

लोपोऽत्र बाधको भविष्यति ।

इह तर्हि प्राप्नोति—कीलालपौ, कीलालपा इति ।

एवं तर्हि व्योरिति वर्तते, तेनोवर्णं विशेषयि-ष्यामः-[6]व्योः-ओः-इरिति । इहेदानीमोरित्यनुवर्तते, व्योरिति निवृत्तम् ॥

( प्रदीपः ) 'इन्धिभवतिभ्यां च' इति कित्वं प्रत्याख्यात-मिति मत्वाऽऽह—भवेत्सिद्धमिति ।

तद्धै कित्वं वयमिति । भुँ[7]वो वुको नित्यत्वादिति न्यायात् ॥ इह तु कित्वेनेति । 'क्ङिति च' इति गुणवृद्धि-निषेधादुवङि च कृते उवर्णस्योत्वविधानात् ॥

स्यातामेवेति । गुणग्रहणं प्रसङ्गोच्चारितम् । गुणस्येग्लक्षण-त्वात्सिध्यति हि प्रतिषेधः ॥

न चैषेति । 'अचो ञ्णिति' इत्यत्रेक इत्यनुपस्थानादि-ग्लक्षणत्वाभावः ॥

ओरित्यत्रावर्णमिति । अकारोकारयोराद्गुणे कृते 'ङसि-ङसोश्च' इति पूर्वै[8]कादेशेन निर्देशात् ॥

इहापीति । 'ओः सुपि' इत्यत्रावर्णस्यापि निर्देशात् यण्प्रसङ्गः ॥

लोपोऽत्रेति । परत्वादिति भावः । 'आतो धातोः' इति लोपस्यावकाशः संयोग[9]पूर्वाकारान्तो धातुः । अकारप्रश्लेषस्यो-त्तरत्रावकाशः—बभूव-बभूविथेति । कीलालप इत्यत्रोभयप्रसङ्गे परत्वादाकारलोपः । विप्रतिषेधे चासिद्धत्वं न भवतीति ज्ञा[10]पयिष्यति ॥

कीलालपाविति । असर्वनामस्थान इत्यनुवर्तनाद्भसंज्ञाया अभावादाकारलोपाप्रसङ्गात् ॥

एवं तर्हि व्योरिति । यदेव 'य्वोः' इति प्रकृतं तदेव वर्ण-क्रमव्यत्ययेन व्योरित्[11]युक्तम् । तत्राकारोकारसमुदायनिर्देशे यि व्योरित्यनेन विशेषणादुकारस्यैव यण् भवति, न त्ववर्णस्येति ॥ इहेति । 'भुवो वुग्लुङ्लिटोः' 'ऊदुपधाया–' इत्यत्र ॥

( उद्द्योतः ) ननु 'इन्धिभवतिभ्याम्–' इति कित्त्वाल्लिटो गुणवृद्ध्यभावे उवङि सिद्धमिष्टमत आह—इन्धीति ॥

नित्यत्वादिति । नित्यत्वाद्वुकि गुणवृद्ध्योः प्राप्त्यभाव इति भावः ॥ प्रसङ्गेति । प्रतिषेधे गुणवृद्ध्योः सह निर्देशादिति भावः ।

---

१ 'तस्या ऊत्वं भविष्यति' इति च. छ. पाठः । 'तस्या ऊत्स्यात्' इति ङ. पाठः ॥

२ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तके एव दृश्यते ॥

३ उपधेति । ऊकारे कर्तव्ये उवङोऽसिद्धत्वादिति भावः ॥

४ आश्रयणादिति । तेन ऊकारे कर्तव्ये नोवङोऽसिद्धत्वमिति भावः ॥

५ 'तद्धै वयं कित्त्वं' इति छ. ङ. पाठः ॥

६ 'ओर्व्योरिति' इति छ. च. पाठः ॥

७ न्यायादिति । 'इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम्' इति हि न्यायः 'इन्धिभवतिभ्याञ्च' इति सूत्रे भाष्ये उक्तः ॥

८ 'पूर्वैकादेशे च निर्देशात्' इति ङ. पाठः ॥

९ संयोगपूर्वेति । 'शंस्थाः' इत्यत्र ॥

१० ज्ञापयिष्यतीति । 'जनसन–' इति सूत्रे ज्ञापयिष्यतीत्यर्थः ॥

११ अचिश्नुधात्विति सूत्रे य्वोरित्यस्य प्रकृतत्वेनाह—प्रकृतत्वाभावादिति ॥

अत एव भाष्ये वृद्धेरेवानिग्लक्षणत्वमुक्तम् । न च किंत्त्वविधानसामर्थ्यादनिग्लक्षणत्वेऽपि निषेधः । थलि, उत्तमे णलि चारितार्थ्यात् । वुँका भवतिग्रहणप्रत्याख्यानं न्याय्यम्, लाघवात्-इति भाष्याशयः । न च 'द्विर्वचनेऽचि' इत्यस्यापि प्रवृत्त्या द्वित्वात्पूर्वं गुणवृद्ध्योरभावे भुवो वुको निर्विघ्नत्वात् 'नित्यत्वात्'इति हेतुरयुक्त इति वाच्यम् । तत्र द्वित्वे कर्तव्य इति वाक्यशेषेण वुकि तत्प्रवृत्तौ मानाभावेन परत्वात्तयोः प्राप्तौ तस्य सार्थक्यादित्याहुः ॥

पूर्वैकादेशेनेति । समाहारद्वन्द्वे॰नुमभावः, इतरेतरयोगद्वन्द्वे वा एकवचनं सौत्रत्वादिति भावः । मध्यमपदलोपी वा समासः । अत एव न पूर्वनिपातदोषः ॥

संयोगपूर्वेति । 'प्रा' 'ग्ला' इत्यादयः ॥ ननूभयोरप्याभाच्छास्त्रीयत्वेनान्यतरस्यासिद्धत्वात्कथं विप्रतिषेधः स्यादत आह—विप्रतिषेधे चेति । उभयोरप्यसिद्धत्वेन समत्वाद्विप्रतिषेध इति तत्त्वम् ॥

'य्वोः-' इत्यस्य प्रकृतत्वाभावादाह—यदेवेति ॥

( युटः सिद्धत्वोपसंख्यानाक्षेपभाष्यम् )

**युटश्चापि न वक्तव्यम् । युड्वचनसामर्थ्यान्न भविष्यति ।**

**अस्त्यन्यत् युड्वचने प्रयोजनम् ।**

**किम् ?**

**द्वयोर्यकारयोः श्रवणं यथा स्यात् ।**

**न व्यञ्जनपरस्यानेकस्यैकस्य वा यकारस्य श्रवणं प्रति विशेषोऽस्ति ॥**

( प्रदीपः ) **न व्यञ्जनपरस्येति** । व्यञ्जनात्परस्येति सुप्सुपेति समासः । श्रुतिभेदपक्षेऽपि 'यणो मयः' इति द्विर्वचनविधानात् 'हलो यमां यमि लोपः' इति पक्षे लोपविधानात्पक्षे यकारद्वयं भवत्येवेति नार्थो युटा-इति तद्विधानसामर्थ्याद्यण् न भवति ॥

( उद्योतः ) **तद्विधानसामर्थ्यादिति** । चिन्त्यमिदम् । यैकारत्रयश्रवणार्थमेतत्स्यात्-इति ॥

( असिद्धत्वमर्यादाजिज्ञासाभाष्यम् )

**किं पुनः प्राग्भादसिद्धम्, आहोस्वित्सह तेन ? कुतः पुनरयं सन्देहः ?**

**आङाऽयं निर्देशः क्रियते, आङ् च पुनः सन्देहं जनयति । तद्यथा—आ पाटलिपुत्राद् वृष्टो देव इति सन्देहः-किं प्राक् पाटलिपुत्रात्-सह तेनेति ।**

**एवमिहापि सन्देहः-प्राग्भात्-सह तेनेति ।**

**कश्चात्र विशेषः ?**

( ६५३२ आङो मर्यादार्थकत्वे दोषवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानं कर्तव्यम् ।**

**शुनः पश्य, शुना, शुने । संप्रसारणे कृते 'अल्लोपोऽनः' ( ६।४।१३४ ) इति प्राप्नोति । यस्य पुनः सह तेनासिद्धत्वम्, असिद्धत्वात्तस्य 'न संयोगाद्वमन्तात्' ( १३७ ) इति प्रतिषेधो भविष्यति ॥**

( प्रदीपः ) **शुन इति** । श्वन् अस्-इति स्थिते सम्प्रसारणम् । वार्णादाङ्गस्य बलीयस्त्वात् पूर्वैकादेशं बाधित्वाऽल्लोपः प्राप्नोति ॥

( उद्योतः ) अन्तरङ्गत्वात्पूर्वरूपे कृतेऽल्लोपाप्राप्तेराह—वार्णादिति ॥

( दोषभाष्यम् )

**यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः ।**

**कथम् ?**

**नास्त्यत्र विशेषः-अल्लोपेन निवृत्तौ सत्याम्, पूर्वत्वेन वा निवृत्तौ ॥**

( प्रत्याक्षेपभाष्यम् )

**अयमस्ति विशेषः-अल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः प्रसज्येत ॥**

( प्रदीपः ) उपसंख्यानवादी विशेषं प्रतिपादयितुमाह—**अयमस्तीति** । अनुदात्तानिमित्तत्वादुदात्तलोपस्य । एकादेशे तु सति 'एकादेश उदात्तेनोदात्तः' इत्याद्युदात्तं पदं भवति, श्वशब्दाकारस्य प्रत्ययस्वरेणान्तोदात्तत्वात् ॥

( उद्योतः ) **प्रत्ययस्वरेणेति** । 'श्वन्नुक्षन्-' इत्यादिना कनिप्रत्ययान्तत्वादिति भावः । वकारस्थानिकसंप्रसारणस्यानुदात्तत्वादित्यपि बोध्यम् ॥

( प्रत्याक्षेपनिरासभाष्यम् )

**नात्रोदात्तनिवृत्तिस्वरः प्राप्नोति ।**

**किं कारणम् ?**

**'न गोश्वन्त्साववर्ण-' ( ६।१।१८२ ) इति प्रतिषेधात् ॥**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**नात्रेति** ॥

---

१ 'णलि च चारि' इति ङ. झ. पाठः ॥

२ वुकेति । इण्भिमवतिभ्यांचेति सूत्रस्थ-भवति-ग्रहणस्य प्रत्याख्यानं वुका न्याय्यमित्यर्थः ॥

३ भवतीति । इण्भिभवतीतिसूत्रस्थभवतिग्रहणस्य प्रत्याख्यानं न्याय्यमित्यर्थः ॥

४ विप्रतिषेधे चासिद्धत्वं न भवतीत्यस्य बीजमाह—उभयोरप्यसिद्धत्वेनेति ॥

५ इति तत्त्वम् ॥ इत्यस्याग्रे 'भाष्ये—वर्तत इति । अच्चि श्नु इत्यतो मण्डूकप्लुत्या । ननु य्वोः-' इत्यधिकः पाठो ङ. पुस्तके दृश्यते ॥

६ इत्युक्तमिति । अन्यथा लोपो व्योरित्यनेन लोपः स्यादिति भावः ॥

७ चिन्त्यत्वे हेतुमाह—यकारत्रयेति ॥

८ अयमितिशब्दो हेतौ ॥

९ 'रणम् । ततो वार्णा' इति ङ. पाठः ॥

१० 'श्वशब्दोकारस्य प्रत्ययस्वरेणानुदात्तत्वात्' इति ङ. पाठः ॥

११ वकारस्थानिकेति । संसनधर्मिणो हलः स्थानिकत्वेनानुदात्तत्वमिति भावः ॥

( निरासनिरसनभाष्यम् )

**नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः ।**
**कस्य तर्हि ?**
**तृतीयादिस्वरस्य ॥**

( प्रदीपः ) उपसंख्यानवाद्याह—**नैष इति** ॥ **तृतीयादिस्वरस्येति** । 'सावेकाचः–' इति प्राप्तस्य । तत्र प्रतिषिद्धेऽपि तृतीयादिस्वरे लोपे सत्युदात्तनिवृत्तिस्वरप्रसङ्ग इति विशेषोऽस्ति । 'न गोश्वन्–' इत्यस्य तु निषेधस्य फलं 'श्वभ्याम्–श्वभिः' इति हलादौ विभक्तावस्ति ॥

( उद्योतः ) यदि प्रतिषिद्धे तृतीयादिस्वरे उदात्तनिवृत्तिस्वरः स्यात्प्रतिषेधोऽनर्थकः स्यादत आह—**न गोश्वन्निति** ॥

( प्रत्याक्षेपभाष्यम् )

**यत्र तर्हि तृतीयादिस्वरो नास्ति-शुनः पश्येति ॥**

( प्रदीपः ) स एवाह—**यत्र तर्हीति** । चार्थे तर्हिशब्दः । न केवलं 'शुना-शुने' इत्यत्र तृतीयादिस्वरे प्रतिषिद्धे[1] उदात्तनिवृत्तिप्रसङ्गः, अपि तु यत्र तृतीयाद्यभावः–शुनः पश्येति, तत्राप्युदात्तनिवृत्तिस्वरप्रसङ्ग इत्यर्थः । न हि अत्रैतदपि शक्यते वक्तुं–येन केनचिल्लक्षणेन प्राप्तस्य तृतीयादिस्वरस्य निषेध इति ॥

( उद्योतः ) 'यत्र तर्हि'इत्यादि वचनं ग्रन्थच्छायया प्रत्याख्यानवादिन इति प्रतीयते, तन्निराकरणायाह—**स एवेति** । अन्यथा ग्रन्थासङ्गतिः स्यात् ॥ **चार्थ इति** । अनेकार्थत्वान्निपातानामित्यर्थः ॥

( प्रत्याक्षेपनिरासभाष्यम् )

**एवं तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः ।**
**किं तर्हि ?**
**येन केनचिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्यायं प्रतिषेधः ॥**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**एवं तर्हीति** । न 'सावेकाचः–' इत्यस्यैव लक्षणस्यायं प्रतिषेधः । किं तर्हि ? विभक्तेः प्राप्तस्योदात्तमात्रस्येत्यर्थः ॥

**विभक्तिस्वरस्येति** । वचनाद्विभक्तिग्रहणानुवृत्तिरनेनाभ्युपगतेति ॥

( उद्योतः ) किं तर्हि ? **विभक्तेरिति** । ततश्चोदात्तनिवृत्तिस्वरस्यापि प्रतिषेधाद्विशेषाभाव इति भावः ॥

( आक्षेपनिरासभाष्यम् )

**यत्र तर्हि विभक्तिस्वरो नास्ति-बहुशुनीति ॥**

( प्रदीपः ) अत्रोपसंख्यानवाद्याह[2]–**यत्र तर्हीति** । बहवः श्वानोऽस्यामिति बहुव्रीहिः । तत्राल्लोपवादिमतेन[3] 'अन उपधालोपिनः–' इति[4] ङीप् । 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यन्तोदात्तत्वादुदात्तनिवृत्तिस्वरप्रसङ्गः ॥

( प्रत्याक्षेपभाष्यम् )

**यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत ।**

( प्रदीपः ) प्रत्याख्यानवाद्याह[6]—**यदि पुनरिति** । विभक्तिग्रहणं[7] नानुवर्तेत इति भावः ॥

( उद्योतः ) भाष्ये—यदि पुनरयमुदात्तनिवृत्तीति । अविभक्तिस्थानिकस्यापीत्यर्थः ॥

( प्रत्याक्षेपापोहभाष्यम् )

**नैवं शक्यम् । इहापि प्रसज्येत—कुमारीति ॥**

( प्रदीपः ) उपसंख्यानवाद्याह—**नैवं शक्यमिति** ॥

( आक्षेपभाष्यम् )

**एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति—नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति, यदयं श्वन्शब्दं गौरादिषु पठति । अन्तोदात्तार्थं यत्नं करोति । सिद्धं हि स्यात् ङीपैव ॥**

( प्रदीपः ) प्रत्याख्यानवाद्याह—**एवं तर्हीति** । 'न गोश्वन्–' इत्यनेनानिषिध्यमानोऽप्युदात्तनिवृत्तिस्वरः शुनि ज्ञापकान्नावतरतीत्यर्थः । एवं प्रत्याख्यानवादिना विशेषाभावः प्रतिपादितः । **विद्यते तु विशेषः**–अल्लोपे सत्युपधालोपित्वान्ङीपा भाव्यं–बहुशुनीति, तदभावे तु–बहुश्वेति भवति । गौरादिङीषोऽप्यनुपसर्जनाधिकारादत्राप्रसङ्गः । '**सह तेनासिद्धम्**' इत्येतच्चान्ते स्थापयिष्यते । तत्र सुपर्वादिवत् बहुश्वेत्येव भाव्यम् । स्वरविशेषनिराकरणपरत्वात्तु ग्रन्थस्य नैतदत्र **भाष्ये** सुष्ठु निरूपितम् । 'डाबुभाभ्याम्–' इत्यत्र तु बहुश्वेत्येव भवितव्यमिति व्यवस्थापितम् । क्वचित्तु पाठः—**'नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः । कस्य तर्हि ? तृतीयादिस्वरस्य । एवं तर्हि येनकेनचित्प्राप्तस्य तृतीयादिस्वरस्य । यत्र तर्हि तृतीयादिर्नास्ति, शुनः पश्येति ।'** अत्र पाठे तर्हिशब्दश्चार्थे न व्याख्यातव्यः, भिन्नकर्तृकत्वात् ॥

( उद्योतः ) भाष्ये—**नोदात्तनिवृत्तिस्वर इति** । अविभक्तिविषयेऽपीत्यर्थः ॥

नन्वल्लोपाभावेऽपि गौरादित्वान्ङीषि बहुशुनीति भाव्यमेवेत्यत आह—**गौरादीति** ॥ **स्वरविशेषनिराकरणेति** । नन्वल्लोपे वकारस्थानिकोकारस्य हल्स्थानिकत्वेनानुदात्तत्वात्सर्वानुदात्तं पदम्, एकादेशे तु तस्योदात्तत्वाच्छुनेत्याद्युदात्तमिति स्वरविशेषोऽस्त्येवेति कथं तस्यापि निराकरणमिति चेत्, न । उदात्तनिवृत्तिस्वरकृतविशेषनिराकरणपरत्वात्–इत्यर्थेनादोषात् ॥ **व्यवस्थापितमिति** ।

---

1 'प्रतिषिद्धेऽप्युदात्त' इति ङ. पाठः ॥

2 उपसंख्यानेति । प्राग्भादिति चेच्छुनेत्याद्युपसंख्यानवादीत्यर्थः ॥

3 अल्लोपवादिमतेनेति । प्राग्भादसिद्धत्वमिति मते संप्रसारणोत्तरं पूर्वरूपात्प्रागल्लोपो भवतीति तन्मतेनेत्यर्थः ॥

4 'इति ङीपि बहोर्न' इति झ. पाठः ॥

5 ननु बहुशुनीत्यत्र बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरे शेषनिघातेन अन्तानुदात्तत्वे नास्ति विशेषोऽत आह—बहोर्नञ्वदिति ॥

6 प्रत्याख्यानेति । प्राग्भादिति चेच्छुनेत्यादेः प्रत्याख्यानवादीत्यर्थः ॥

7 विभक्तिग्रहणमिति । न गोश्वन्निति सूत्रे सावेकाचस्तृतीयादिर्विभक्तिरिति सूत्राद्विभक्तिग्रहणं नानुवर्तेत इति भावः ॥

वस्तुतस्तु तत् ङावन्तस्य कीदृशं रूपमिति प्रस्तावप्रवृत्तमिति न तदत्र साधकत्वेनोपन्यसितुं युक्तमिति चिन्त्यम् ॥

( दोषाक्षेपभाष्यम् )

मघोनः पश्य, मघोना, मघोने, संप्रसारणे कृते 'यस्य-' इति लोपः प्राप्नोति । यस्य पुनः सह तेनासिद्धत्वं, असिद्धत्वात्तस्य न भविष्यति ॥

यस्यापि हि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः ।

कथम् ?

वक्ष्यत्येतत्-मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति ॥

( उद्द्योतः ) भाष्ये—अव्युत्पन्नमिति । वनिवन्ते त्वनभिधानात्संप्रसारणाभाव इति भावः ॥

( दोषाक्षेपभाष्यम् )

भूगुणः-भूयान् । भूभावे कृते ओर्गुणः प्राप्नोति । यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात्तस्य न भविष्यति ॥

यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः ।

कथम् ?

दीर्घोच्चारणसामर्थ्यान्न भविष्यति ।

अस्त्यन्यद्दीर्घोच्चारणस्य प्रयोजनम् ।

किम् ?

भूमेति ।

निपातनादेतत्सिद्धम् ।

किं निपातनम् ? 'बहोर्नञ्वदुत्तरपदभूम्नि' (६।२।१७५) इति ॥

( प्रदीपः ) यस्य पुनरिति । ननु च भूभावस्यासिद्धत्वाद्बहुशब्द एवायमिति स्यादेव गुणः । नैष दोषः । गुणे कर्तव्ये भूभावशास्त्रस्यासिद्धत्वात् पूर्वं गुणे कृते भूभावः । न च गुणभूभावयोश्चक्रकापत्तिर्दोषः, चक्रके इष्टतो व्यवस्थाश्रयणात् ॥

भूमेति । भत्वाभावादत्र गुणाभावः ॥

निपातनादिति । ह्रस्वान्तेऽप्यादेशे क्रियमाणे भूमेत्यत्र निपातनाद्दीर्घो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) गुणे कर्तव्य इति । विप्रतिषेधेऽसिद्धत्वाभावस्य वक्ष्यमाणत्वात्परत्वाद्भूभावेनैव भाव्यमिति चिन्त्यमिदम् । तस्मात्सकृद्गतिन्यायेन समाधानमुचितम् ॥

( वार्तिकावतरणभाष्यम् )

अथ वा पुनरस्तु सह तेन-इति ।

( ६५३३ आङोऽभिविध्यर्थत्वे दोषवार्तिकम् ॥ १३ ॥ )

॥ * ॥ आ भादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधः ॥ * ॥

( भाष्यम् ) आ भादिति चेद्वसुसम्प्रसारणयलोपप्रस्थादीनां प्रतिषेधो वक्तव्यः ।

पपुषः पश्य, तस्थुषः, निन्युषः, चिच्युषः, लुलुवुषः, युयुवुष इति । वसुसम्प्रसारणे कृते तस्यासिद्धत्वादचीत्याकारलोपादीनि न सिद्ध्यन्ति ।

नैष दोषः ।

उक्तमेतत्—समानाश्रयवचनात्सिद्धमिति ।

कथम् ?

वसावाकारलोपादीनि, वस्वन्तस्य विभक्तौ सम्प्रसारणम्-इति ॥

( प्रदीपः ) आभादिति चेदिति । प्राग्भादित्यस्य पक्षस्य प्रतिपक्षभावेनोपादीयमानादभिविधावाकारो बोद्धव्यः । पपुष इत्यादीनां परिहृतानामपि पुनरुपादानमस्मिन् पक्षे दोषः प्रागुद्भावित इति प्रदर्शनार्थम् ॥

( दोषाक्षेपभाष्यम् )

यलोपः । सौरी बलाका । योऽसावण्यकारो लुप्यते तस्यासिद्धत्वात्-ईतीति यलोपो न प्राप्नोति ।

अत्राप्येष परिहारः-समानाश्रयवचनात्सिद्धमिति ।

कथम् ?

अणि अकारलोपः, अणन्तस्य-ईति यलोपः ॥

प्रस्थादिषु । प्रेयान्, स्थेयान् । प्रस्थादीनामसिद्धत्वात् 'प्रकृत्यैकाच्' (६।४।१६३) इति प्रकृतिभावो न प्राप्नोति ॥

नैष दोषः । यथैव प्रस्थादीनामसिद्धत्वात्प्रकृतिभावो न भवति, एवं टिलोपोऽपि न भविष्यति ॥

(प्रदीपः) सौरीति । सूर्येणैकदिक्-इत्यण् । 'यस्य-' इति लोपस्ततो ङीप् पुनः 'यस्य-' इति लोपः । तत्र द्वयोरल्लोपयोरसिद्धत्वाद्यकार उपधा न भवतीति यलोपाप्रसङ्गः । ननु च प्राग्भादसिद्धत्वे लोपद्वयस्य सिद्धत्वादुपधायकारो न भवतीति लोपस्याप्रसङ्ग एव । स्थानिवद्भावोऽपि यलोपविधौ प्रतिषिद्धः । भूतपूर्वगत्योपधाश्रयणाददोषः । वचनसामर्थ्याद्वा पूर्वं यलोपः पश्चादकारलोप इति क्रम आश्रयिष्यते नित्यत्वेऽप्यकारलोपस्य ॥

टिलोपोऽपीति । नन्वादेशलक्षणः प्रकृतिभावोऽसिद्धत्वान्न भवतीति वक्तुं युक्तम्, टिलोपः पुनरुत्सर्गलक्षणः प्राप्नोति । नैष दोषः । आदेशेन निरवकाशत्वात्प्रवृत्तेन स्थानिनो

१ 'भावश्छान्दसत्वाद्वेति भावः' इति ङ. पाठः ॥
२ 'यलोपविधिम्प्रति प्रतिषिद्धः' इति ङ. पाठः ॥
३ 'पधात्वाश्रय' इति ङ. पाठः ॥

४ पश्चादिति । पूर्वमल्लोपे उपधात्वाभावेन यलोपाप्राप्त्या नास्ति सत्यपि संभवे बाधनमित्यस्य विषय इति भावः ॥

निवर्तितत्वादसतः कुतष्टिलोपः । तत्र यद्यपि प्रादीनामसिद्धत्वात् प्राक् टिलोपः क्रियते तथाऽप्यादेशेषु कृतेषु तेषामसिद्धत्वान्न तल्लक्षणष्टिलोपो नाप्युत्सर्गलक्षणः, उत्सर्गेषु प्रागेव प्रवृत्तत्वात् । अनवकाशत्वाच्च प्रादीनां चक्रकदोषोऽपि नास्ति ॥

( उद्द्योतः ) पुनर्यस्येति लोप इति । उपधाभूतयलोपापेक्षया नित्यत्वादिति भावः ॥ वचनसामर्थ्याद्वेति । वस्तुत उपधाग्रहणमेव 'भाधिकारमभिव्याप्यायमधिकारः' इत्यर्थे मानमिति बोध्यम् । सूत्रप्रत्याख्याने तु वचनसामर्थ्यमेव गतिरिति बोध्यम् ॥

ननु कृते टिलोपे तेषां चारितार्थ्यमित्यभिमानेन शङ्कते—तत्र यद्यपीति । उत्सर्गेषु प्रागेवेति । एतेन शास्त्रासिद्धत्वाश्रयणात 'असतः–' इत्याद्ययुक्तमित्यपास्तम् ॥ ननूभयोरपि परस्परमसिद्धत्वाच्चक्रकापत्तिरत आह—अनवकाशत्वाच्चेति । टिलोपस्यावश्यंप्राप्तावस्यारम्भात्तदपवादत्वेन प्रादीनामेव प्रवृत्त्या न चक्रकमिति भावः । परे तु–प्रादीनामसिद्धत्वात्प्राक् टिलोप इत्युक्तम्, टिलोपस्याप्यसिद्धत्वात् । किंचापवादत्वादसिद्धा अपि प्रादय एवोचिताः । चक्रकापत्तिरपि चिन्त्या, टिलोपे प्रादिषु च कृतेषु कैयटोक्तरीत्या पुनष्टिलोपाप्राप्तेः । तस्माट्टिलोपापवादतया तं बाधित्वा प्रादिषु जातेषु तेषामसिद्धत्वाच्च तदाश्रयष्टिलोपः, नापि स्थानिलक्षणः, तस्य बाधितत्वादिति भाष्यार्थं इत्याहुः ॥

( १२७२ विधिसूत्रम् ॥ ६ । ४ । २ आ. २ )

## ३०२१ श्नान्नलोपः ॥ ६ । ४ । २३ ॥

( लोपाधिकरणम् )

( शकारप्रयोजनभाष्यम् )

अथ किमर्थं श्नमः शकारस्य ग्रहणं क्रियते, न नान्नलोप इत्येवोच्येत ?

नान्नलोप इतीयत्युच्यमाने–नन्दिता, नन्दकः–इत्यत्रापि प्रसज्येत ।

एवं तर्हि एवं वक्ष्यामि–'नान्नलोपोऽनिदिताम्'। ततः–'हल उपधायाः क्ङिति' इति, अनिदितामिति ।

नैवं शक्यम् । इह हि न स्यात्–हिनस्ति ॥

तस्मान्नैवं शक्यम् ।

न चेदेवम्–नन्दिता-नन्दकः–इत्यत्रापि प्रसज्येत॥

एवं तर्हि क्ङितीति वर्तते ।

एवमपि हिनस्ति–इत्यत्र न प्राप्नोति ।

नैषा परसप्तमी ।

का तर्हि ?

सत्सप्तमी–क्ङिति सति ।

एवमपि–नन्दमानः–इत्यत्रापि प्राप्नोति ।

एवं तर्हि नशब्द एवात्र क्ङित्त्वेन विशेष्यते–क्ङिच्चेन्नशब्दो भवतीति ।

एवमपि–यज्ञानां-यत्नानाम्–इत्यत्र प्राप्नोति ।

दीर्घत्वमत्र बाधकं भविष्यति ।

इदमिह सम्प्रधार्यं–दीर्घत्वं क्रियतां-नलोप इति, किमत्र कर्तव्यम् ?

परत्वान्नलोपः ।

तस्मात् शकारस्य ग्रहणं कर्तव्यम् ॥

( प्रदीपः ) किमर्थमिति । यथाऽन्तरेण मकारनिर्देशं 'श्नात्' इति श्नमेव गृह्यते, अन्यस्यासम्भवात्; तथा विनाऽपि शकारनिर्देशेन श्नमेव ग्राहिष्यते इति भावः ॥

नन्दितेति । इदित्त्वमस्य किमर्थं स्यादिति चेत्, उपदेशावस्थायां नुमि सति 'अप्रत्ययात्' इत्यकारार्थम् । तथा ननन्दतुरित्यादौ कृतेऽपि नलोपे तस्यासिद्धत्वादेत्वाभ्यासलोपाप्रवृत्त्यर्थं स्यात् ॥

क्ङिति सतीति । श्नमेव ङिदस्ति–इति हिनस्तीत्यादौ नलोपः सिद्धः । कथं पुनः सम्भवत्यां परसप्तम्यां सत्सप्तमी शक्या विज्ञातुम् ? यथेष्टं वाक्यशेषाध्याहाराददोषः । क्ङिति सतीत्येव हि विज्ञायमाने पौर्वापर्यानाश्रयणान्नास्ति 'तस्मिन्निति–' इत्यस्याः परिभाषाया उपस्थानम् । यदा त्वौपश्लेषिकेऽधिकरणे सप्तमी तदा किं पूर्वस्य कार्यमथ परस्येति अनियमप्रसङ्गे नियमाय परिभाषोपस्थानम् ॥

नन्दमान इति । ताच्छील्यादिषु चानशि कृते शपि च चानशो व्यवहितस्यापि ङितो भावान्नलोपप्रसङ्गः । क्वचिन्नन्यमान इति पाठः । तत्र यगाश्रयो नलोपप्रसङ्गः । अर्थवद्ग्रहणपरिभाषा तु विकरणानामानर्थक्यान्नोपन्यस्ता ॥

नशब्द एवेति । अर्थवशाद्विभक्तिविपरिणामो भवतीति सप्तमीपरित्यागेन पञ्चम्याश्रयणात् । 'प्रत्ययाप्रत्यययोः प्रत्यये सम्प्रत्ययः' इति–अत्र परिहारः सम्भवति ॥

यज्ञानामिति । 'पूर्वत्रासिद्धम्' इति श्चुत्वस्यासिद्धत्वान्नशब्दादुत्तरो नकारः ॥

परत्वान्नलोप इति । अग्नीनामित्यादौ 'नामि' इति दीर्घत्वं सावकाशम् । नलोपो हिनस्तीत्यादौ सावकाशः । यज्ञानामित्यादावुभयप्रसङ्गे परत्वान्नलोपप्रसङ्गः । यत्तु 'सुपि च' इति दीर्घत्वं तत् सन्निपातलक्षणपरिभाषावशान्न भवति ॥

(उद्द्योतः) नन्दितरव्यावृत्त्यर्थं शकारः स्यादत आह—यथाऽन्तरेणेति ॥

अप्रत्ययादिति । तत्रानुवर्तमाने 'गुरोश्च हलः' इत्यनेन ॥

[2][ असिद्धत्वादिति । अनित्यत्वं लक्ष्यानुसारीति भावः ॥

भाष्ये—एवं वक्ष्यामीति । अन्यथा सूत्रमिदं करिष्यामीत्यर्थः ॥

( भाष्ये ) वर्तत इति । अनुकृष्यत इत्यर्थः ॥ ]

---

[1] स्यादिति । 'नंद' इति तु वक्तुमशक्यम्, दकारस्येत्संज्ञापत्तेः । अकारान्तकरणे तु विपरीतं गौरवमेव, सामर्थ्याश्रयणं तु क्लिष्टतरम्–इत्याशयः ॥

[2] [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तक एव दृश्यते ॥

ननु सत्सप्तम्यां कथमिष्टसिद्धिरत आह—**श्नमेवेति** ॥ **कथं पुनरिति** । निर्दिष्टपरिभाषाया दुर्वारत्वादित्यर्थः ॥ **यथेष्टमिति** । 'तस्मिन्निति-' परिभाषायां 'निर्दिष्ट' इत्यस्य कारकविभक्त्यधिकरण-सप्तम्यन्तत्वेनाधिकरणसप्तम्यन्त एव तत्प्रवृत्तेरिति भावः । उपपद-विभक्तेरिति न्यायेनाधिकरणसप्तम्येव तत्रोचिता च । स्पष्टं चेदं पञ्चमे कैयटे । अत एव 'कर्तृकर्मणोः कृति' इति सूत्रे नैतत्परिभाषाप्रवृत्तिः, 'कृति' इत्यस्य सत्सप्तमीत्वात् । 'कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थ-कर्तृकर्मणोः षष्ठी'इति तदर्थः । 'इको यणचि' इत्यादौ तूपश्लिष्टस्येत्य-ध्याहृत्याऽचि उपश्लिष्टस्येक इत्यन्वयेन न दोष इति 'संहितायाम्' इति सूत्रे भाष्ये स्पष्टम् । एतेन 'सत्सप्तम्यामपि किं पूर्वा सत्ता उत परेति सन्देहोऽस्त्येव । परिभाषाया अप्रवृत्तावनियमप्राप्तेश्च' इति परास्तम् ॥ **किं पूर्वस्येति** । [1]किं पूर्वस्योपश्लिष्टस्येत्याद्यर्थः ॥

ननु नन्दतेः परस्मैपदित्वाच्छानचोऽप्राप्तेराह—**चानशीति** ॥ **अर्थवद्ग्रहणेति** । अन्यथा हिनस्तीत्यत्रापि विकरणं ङितमाश्रित्य नलोपो न स्यात् ॥

**प्रत्ययेति** । एवं च क्ङिद्ग्रहणानुवृत्तिरनावश्यकीति भावः । वस्तुतः 'अङ्गस्य' इति सूत्रे तत्प्रत्याख्यानायैकदेशिनोपन्यस्ताऽप्येषा क्वापि भाष्यकृता लक्ष्यसिद्धये नोपन्यस्तेत्येषा नास्त्येवेत्यत्रत्यभाष्याशयः । अत एव 'तिरस्वरितम्' इति सूत्रे कैयटेनोक्तम्—'प्रत्ययाप्रत्ययोरि-त्येषा न क्वापि भाष्य [2]आश्रिता' इति । तस्य 'लक्ष्यसिद्धये' इति शेषः ॥

'[3]यज्ञानाम्' इत्यत्र नशब्दो न श्रूयतेऽत आह—**श्रुत्वस्येति** ॥

[4][ भाष्ये—**दीर्घत्वमिति** । [5]परशब्दस्येष्टवाचित्वमिति भावः ॥ ]

**परत्वान्नलोपेति** । दीर्घे कृतेऽप्येकदेशविकृतन्यायेन नशब्द-त्वान्नलोपप्राप्तिरस्त्येव । ( भाष्ये )—'दीर्घत्वमत्र' इति पूर्वपक्षयुक्तिः । **इदमिहेत्यादि परत्वान्नलोप** इत्यन्ता तु सिद्धान्त्येकदेशयुक्तिरि-**त्यन्ये** ॥ ननु ततोऽपि परत्वात् 'सुपि च' इति दीर्घः स्यादत आह—**यरिति** । 'नामि' इत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । कतीनामित्यर्थं तु 'कतेर्नामि' इत्येव वदेत् । एवं च 'न तिसृ–' इति न कर्तव्यं भवतीति लाघवमिति भावः । वस्तुतः 'सुपि च' इत्येतद्बाधित्वा नित्यत्वात् 'नामि' इत्येव दीर्घः, दीर्घे कृतेऽप्युक्तरीत्या नलोपप्राप्तिश्चात्रेति बोध्यम् ॥

( **शकारग्रहणे दोषनिवारकभाष्यम्** )

**अथ क्रियमाणेऽपि शकारग्रहणे इह कस्मान्न भवति-विश्नानां-प्रश्नानाम्-इति ?**

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न[6] भविष्यति ॥**

( प्रदीपः ) **लक्षणप्रतिपदोक्तयोरिति** । लाक्षणिक-स्यानुमेयरूपत्वात्, इतरस्य तु प्रत्यक्षत्वात् । यदा तु विकरणा-नामपि स्वार्थेनार्थवत्ताऽऽश्रीयते तदाऽर्थवद्ग्रहणपरिभाषया विश्नानां प्रश्नानामिति नलोपप्रव्यावृत्तिसिद्धिः ॥

---

( १२७३ विधिसूत्रम् ॥ ६ । ४ । २ आ. ३ )

## ३०२२ अनिदितां हल उपधायाः क्ङिति ॥ ६ । ४ । २४ ॥

( ६५३४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् ॥ * ॥

**( भाष्यम् ) अनिदितां नलोपे लङ्गिकम्प्योरुप-तापशरीरविकारयोरुपसंख्यानं कर्तव्यम् । विल-गितः, विकपितः ।**

**उपतापशरीरविकारयोरिति किमर्थम् ?**

**विलङ्गितः । विकम्पितः ॥**

( प्रदीपः ) **विलगित इति** । गत्यर्थत्वात्कर्तरि क्तः । कृच्छ्रप्राप्तिरत्रोपतापो गृह्यते, न तु रोगः; यथा–'द्वन्द्वोपताप-गर्ह्यात्-' इति । अन्यथा शरीरविकारग्रहणं केवलं कुर्यात् ॥

**विकपित इति** । 'गत्यर्थाकर्मक–' इति गत्यर्थत्वात्कर्तरि क्तः । शरीरविकारोऽत्र व्याधिरुच्यते न तु स्थौल्यादि, कम्पेर-तद्विषयत्वात् ॥

( उद्योतः ) **यथा द्वन्द्वेति** । [7]व्यतिरेके दृष्टान्तः । विगलित-विकपितयोर्यथाक्रमं कृच्छ्रप्राप्तव्याधितावर्थः । कृच्छ्रप्राप्तिः–मानसं दुःखम् ॥ गत्यर्थत्वादिति । वस्तुतोऽकर्मकत्वात्कर्तरि क्तः ॥

( ६५३५ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ बृंहेरच्यनिटि ॥ * ॥

**( भाष्यम् ) बृंहेरच्यनिटि उपसंख्यानं कर्तव्यम् । निबर्हकः ।**

**अचीति किमर्थम् ?**

**निबृंह्यते ।**

**अनिटीति किमर्थम् ?**

**निबृंहिता, निबृंहितुम् ॥**

( प्रदीपः ) **बृंहेरिति** । 'बृहि वृद्धौ' इत्यस्य ॥

---

१ 'कं पूर्वस्य' इति ड. पाठः ॥
२ आश्रितेति । एवञ्च पूर्वापरविरोधोऽपि कैयटस्येति सूचितम् ॥
३ 'ननु यज्ञानां' इति ड. पाठः ॥
४ [ ] एतच्चिह्नगतोंऽशो ड. पुस्तक एव दृश्यते ॥
५ ननु नामीति दीर्घापेक्षया परत्वान्नलोप एव दीर्घबाधकः स्यादत आह—**परशब्देति** ॥
६ न्यायेन–शाब्दीयेनेत्यर्थः । स्थानिवत्त्वेनेति भावः ॥
७ **न भविष्यतीति** । निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषा यास्तु नात्र विषयः । येनानुबन्धेन सानुबन्धकत्वं निरनुबन्धकत्वं वा तद्व्यतिरिक्त एव तस्य प्रवृत्तेः । तेन 'जश्शसोः शिः' इत्यत्र न तद्धितशसो ग्रहणम् ॥
८ ननु '**द्वन्द्वोपतापगर्ह्यात्**' इति सूत्रे उपतापपदेन रोग एव गृह्यत इति कथं दृष्टान्तोऽत आह—**व्यतिरेक इति** ॥

( उपसंख्यानाक्षेपभाष्यम् )

तर्त्तार्हि उपसंख्यानं कर्तव्यम् ?

न कर्तव्यम् । वृहिः प्रकृत्यन्तरम् ।

[१]कथं विज्ञायते ?

अचीति लोप उच्यते, अनजादावपि दृश्यते-निवृह्यते ।

अनिटीत्युच्यते । इडादावपि दृश्यते-निवर्हिता, निवर्हितुम् ।

[२]अजादावपि न दृश्यते—निवृंहयति, निवृंहकः ॥

(प्रदीपः) वृहिः प्रकृत्यन्तरमिति । 'वृह वृहि वृद्धौ' इति पाठात् ॥

अजादावपि न दृश्यत इति । ततश्च दोषायैवोपसंख्यानं स्यात्, 'न धातुलोप-' इति गुणनिषेधनिवारणाय यत्नश्च कर्तव्यः स्यात्-इत्यनारम्भणीयमेवोपसंख्यानम् ॥

( उद्द्योतः ) उपसङ्ख्यानस्याकर्तव्यत्वे हेत्वन्तरमाह—न धात्विति । यत्नः—परिगणनरूपः ॥

( ६५३६ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ रञ्जेर्णौ[५] मृग[३]रमणे ॥ * ॥

( भाष्यम् ) रञ्जेर्णौ मृगरमणे उपसंख्यानं कर्तव्यम् । रजयति मृगान् ।

मृगरमण इति किमर्थम् ?

रञ्जयति वस्त्राणि ॥

( प्रदीपः ) रजयतीति । नलोपे वृद्धौ च 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वाद्ध्रस्वः ॥

(उद्द्योतः) मित्त्वाद्ध्रस्व इति । अत्र मृगरमणं—आखेट इत्येके । परे तु 'रजयांचकार विरजाः स मृगान्' इति भारविप्रयोगान्मृगरमणं यथाश्रुतमेव । अत एव भगवता 'रञ्जयति वस्त्राणि' इति प्रत्युदाहृतमित्याहुः ॥

( ६५३७ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ घिनुणि च[४] ॥ * ॥

( भाष्यम् ) घिनुणि चोपसंख्यानं कर्तव्यम् । रागी ॥

( उपसंख्यानाक्षेपभाष्यम् )

घिनुणि निपातनात्सिद्धम् ॥

किं निपातनम् ?

[६]त्यजरजेति ॥

( प्रत्याक्षेपभाष्यम् )

अशक्यं धातुनिर्देशे निपातनं तन्त्रमाश्रयितुम् ।

इह हि दोषः स्यात्—[७]दंशनहः करणे । दंष्ट्रा ।

( समाधानभाष्यम् )

नैतद्धातुनिपातनम् ।

किं तर्हि ?

प्रत्ययान्तस्यैतद्रूपम् । तस्मिंश्च प्रत्यये लोपो भवति 'दंशसञ्जस्वञ्जां शपि' ( ६।४।२५ ) इति ॥

( प्रदीपः ) प्रत्ययान्तस्येति । शबन्तस्येत्यर्थः । यङ्लुङ्निवृत्त्यर्थश्च तत्र शब्निर्देशः । घिनुण् तु ताच्छील्ये विधीयते रूढिशब्दप्रकाराश्च ताच्छीलिका इति यङ्लुगन्ताद्रञ्जेर्न भवति ॥

( उद्द्योतः ) ननु घि[८]नुण्विधावपि 'रञ्जेश्च' इति नलोपेन 'रज' इति शपा निर्देश एव यङ्लुङ्निवृत्त्यर्थोऽस्त्वत आह—घिनुण्विति । वस्तुतः 'श्तिपा शपा-' इति परिभाषा न भाष्यसंमतेतीदं चिन्त्यम् । तत्र[९] शपा निर्देशो न[१०]कारश्रवणार्थ एवेति बोध्यम् ॥

( ६५३८ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥*॥ रजकरजनरजःसूपसंख्यानम् ॥*॥

( भाष्यम् ) रजकरजनरजःसूपसंख्यानं कर्तव्यम् । रजकः, रजनम्, रज इति ॥

( उपसंख्यानाक्षेपभाष्यम् )

रजकरजनरजःसु कित्वात्सिद्धम् ॥

कित एवैते औणादिकाः । तद्यथा-रुचकः, भुवनम्, शिर इति ॥

( प्रदीपः ) औणादिका इति । रजक इत्यत्र 'क्वुन् शिल्पिसंज्ञयोः' इति क्वुन्प्रत्ययः । रजकीति 'पुंयोगादाख्यायाम्' इति ङीष् । अपुंयोगे तु ङीषा न भाव्यमिति भाष्यकाराभिप्रायः । रजनमित्यत्र 'रञ्जेः क्युन्' इति क्युन्प्रत्ययः । स च बाहुलकात् टित् द्रष्टव्यः । तेन रजनीति ङीष् भवति । रज इत्यत्र 'भूरञ्जिभ्यां कित्' इत्यसुन्प्रत्ययः किद्भवति ॥

( उद्द्योतः ) ननु शिल्पिनि ष्वुनभावे रजकीति ङीष् न स्यादत आह—रजकीतीति । क्रियासंबन्धमात्रविवक्षयां रजिकेत्येव । तदाह—अपुंयोगे त्विति ॥ कथं तर्हि 'रजनी' इति ङीबत आह—स चेति ॥

---

१ च. छ. ट. पुस्तकेषु 'कथं ज्ञायते' इति पाठः ॥

२ ननु निवृंहयतीत्यादिरूपाभावार्थं तदस्त्विति शङ्कावारणायाह—अजादावपीति ॥

३ 'मृगरमण उपसंख्यानम्' इति ट. झ. पाठः ॥

४ 'घिनुणि चोपसंख्यानम्' इति ङ. पाठः ॥

५ एतदपि वार्तिकमिति इति च. छ. झ. पाठः ॥

६ संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामृषाभ्याहनश्च ( ३।२।१४२ ) इति सूत्रे त्यजरजेति निर्देशः ॥

७ दशनह इति । धातुनिर्देशे निपातनं तन्त्रं यदि स्वीक्रियेत तर्हि दंष्ट्रेत्यादौ निपातनान्नलोपापत्तिः स्यादित्यर्थः ॥

८ घिनुण्विधावपि-संपृचानुरुधेति घिनुण्विधायके सूत्रेऽपि ॥

९ तत्र-दाम्नीशसयुयुजेति सूत्रे ॥

१० 'नकाराश्रवणार्थं' इति घ. पाठः । 'नकाराश्रवणार्थं एव । तथा च निपातनाभावेन घिनुणि चेति वार्तिकमावश्यकम् । इदं च तुल्ययुक्त्या भगवता सूचितम्, अत्र फणी लालायितो वेति बोध्यम्' इति ङ. पाठः ॥

( १२७४ विधिसूत्रम् ॥ ६ । ४ । २ आ. ४ )

## ३०३२ शास इदङ्हलोः ॥ ६ । ४ । ३४ ॥

( ६५३९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ शास इत्त्वे आशासः क्वावुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) शास इत्त्वे आशासः क्वावुपसंख्यानं कर्तव्यम् । आशीरिति ॥

( नियमार्थत्वोपपादकभाष्यम् )

किं पुनरिदं नियमार्थम्, आहोस्विद्विध्यर्थम् ?

कथं नियमार्थं स्यात्, कथं वा विध्यर्थम् ?

यदि तावच्छासिमात्रस्य ग्रहणम्, ततो नियमार्थम् ।

अथ हि यस्माच्छासेरङ्विहितस्तस्य ग्रहणम्, ततो विध्यर्थम् ॥

( प्रदीपः ) **शासिमात्रस्येति** । 'शासु अनुशिष्टौ' इत्यस्य 'आङः शासु इच्छायाम्'इत्यस्य चेत्यर्थः ॥ **नियमार्थमिति** । क्वावेव शास इत्त्वं यथा स्यात्, आशास्त इत्यादौ मा भूदित्यर्थः ॥

**यस्माच्छासेरिति** । 'शासु अनुशिष्टौ' इत्यस्मादङ्विहितः, 'सर्तिशास्त्यर्तिभ्यश्च'इत्यत्र परस्मैपदाधिकारात् । तत्राङः संसर्गाद्विशिष्टस्य शासो ग्रहणम्, संसर्गस्य विशिष्टस्मृतिहेतुत्वात् । यथा सकिशोरा धेनुरानीयतां सवत्सा सकरभेति विशिष्टा धेनुः प्रतीयते । यद्येवं शासिमात्रग्रहणं कथमाशङ्कितम् । अथ हलोऽप्युपादानात्तस्य च शासिमात्रेण संबन्धसंभवादित्युच्यते । तन्न । साधारणासाधारणसन्निपातेऽपि असाधारणसंबन्धिग्रहणं दृश्यते । यथा वृद्धानां किशोरीणां च मध्ये धेनवो बध्यन्तामित्युक्ते वडवा एव बध्यन्ते न तु गवादयः । एवं तर्ह्येकशेषाद्याश्रयणाच्छासिमात्रग्रहणपक्षसंभवः ॥

( उद्योतः ) **इत्यस्य चेति** । मात्रशब्दः कार्त्स्न्ये इति भावः । आद्यः परस्मैपदी । अन्त आत्मनेपदी । तस्यैवात्र ग्रहणमिति नियमः कुतोऽत आह—**संसर्गादिति** । धेनुशब्दो दोग्ध्रीपर्यायः । किशोरादयोऽश्वादिबालेषु रूढाः । तत्संबन्धाच्च धेनुशब्दो वडवादिरूपं विशेषं प्रत्याययति ॥

( नियमासम्भवदर्शकं भाष्यम् )

यद्यपि शासिमात्रग्रहणम्, एवमपि विध्यर्थमेव ।

कथम् ? ।

अङि हलादावुच्यते, न चात्र हलादिं पश्यामः ।

ननु च क्विबेव हलादिः ।

क्विपो लोपे कृते हलाद्यभावान्न प्राप्नोति ।

इदमिह सम्प्रधार्यम्-क्विलोपः क्रियताम्, अङ्हलोरित्त्वमिति ।

किमत्र कर्तव्यम् ?

परत्वादङ्हलोरित्त्वम् ।

नित्यः क्विलोपः, कृतेऽप्यङ्हलोरित्त्वे प्राप्नोत्यकृतेऽपि । नित्यत्वात् क्विपो लोपे कृते हलाद्यभावान्न प्राप्नोति ।

एवं तर्हि प्रत्ययलक्षणेन भविष्यति ।

वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

( प्रदीपः ) **यद्यपीति** । आचार्यदेशीयस्येदं वचनम् । विध्यर्थे चाशास्ते इत्यादावित्त्वमनिवारितं स्यात् । आर्यशीरित्यत्र च न प्राप्नोति ॥

( उद्योतः ) आचार्यदेशीयवचनत्वे हेतुमाह—**विध्यर्थे चेति** ॥

( नियामकत्वोपपादकभाष्यम् )

यदि वा कानि चिद्वर्णाश्रयाण्यपि लक्षणेन भवन्ति, तथा चेदमपि भविष्यति ।

अथवैवं वक्ष्यामि—

**शास इदङ्हलोः ।**

ततः—

**क्वौ ।**

क्वौ च शास इद्भवति । आर्यशीः, मित्रशीः ।

ततः—

**आङः ।**

आङ्पूर्वाच्च क्वौ शास इद्भवति । आशीरिति ।

इदमिदानीं किमर्थम् ?

नियमार्थम् । आङ्पूर्वाच्छासेः क्वावेव ।

क्व मा भूत् ?

आशास्ते, आशास्यते, आशास्यमाने-इति ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् । अविशेषेण शास इद्भवतीत्युक्त्वा ततोऽङीति वक्ष्यामि । तन्नियमार्थं भविष्यति-अङ्येवाजादौ, नान्यस्मिन्नजादौ ॥

( प्रदीपः ) **यदि वेति** । यथैवेत्यर्थः ॥ **तथा चेति** । तथैवेत्यर्थः । यत्र कार्ये वर्णरूपमेव निमित्तत्वेनोपादीयते तत्प्रत्ययलक्षणेन न भवति । यथा-रायः कुलं-रैकुलमित्यायादेशः । यत्तु वर्णविशिष्टप्रत्ययनिमित्तं तद्भवत्येव । यथा-अतृणेडिति हलादौ पिति सार्वधातुके विधानात् प्रत्ययनिमित्तत्वादिमागमः । इत्वमपि हलादौ प्रत्यये क्ङिति विधीयमानं प्रत्ययनिमित्तत्वात् प्रत्ययलोपेऽपि भवति ॥

१ तत्र-आशासः क्वावुपसंख्यानमिति वार्तिके ॥

१ 'अङ्हलोरित्युच्यते' इति क. छ. च. ट. पाठः ॥

अथवेति । वर्णाश्रयत्वात्प्रत्ययलक्षणेनाप्राप्तमित्वं 'क्वौ' इत्यनेन विधीयते ॥

अविशेषेणेति । प्रत्ययमात्रे क्ङितीत्यर्थः ॥ अज्व्येवा-जादाविति । तेन शासति शशासुरित्यादावित्वाभावः । हलादौ क्ङिति क्वौ च नियमाभावादित्वं भवत्येव । तुल्यजातीयापेक्षत्वान्नियमस्याजादिरेव व्यावर्त्तते ॥

( उद्द्योतः ) यदि चेत्यादि सिद्धान्तिवचः, तत्र यद्यन्तर्भावोऽयुक्तोऽत आह—यथैवेत्यर्थ इति । प्रत्ययलक्षणसूत्रमप्राधान्येनालाश्रयणे विध्यर्थमिति भावः ॥

प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेनाप्राधान्येनालाश्रयणेऽपि प्रत्ययलक्षणाभाव इत्यतः परिहारान्तरमाह भाष्ये—अथवेति । तदाह—वर्णाश्रयत्वादिति ।

नन्वविशेषेण विधाने शास्तीत्यादावित्वं स्यादत आह—प्रत्ययमात्रे क्ङितीति ॥

( अनिष्टाक्षेपभाष्यम् )

इहापि तर्हि नियमादित्वं प्राप्नोति—आशास्ते, आशास्यते, आशास्यमान इति ॥

( प्रदीपः ) इहापीति । शासिमात्रस्य ग्रहणं मत्वा चोदयति ॥

( समाधानभाष्यम् )

यस्माच्छासेरङ्विहितस्तस्य ग्रहणम्, न चैतस्माच्छासेरङ्विहितः ।

कथमाशीरिति ?

निपातनात्सिद्धम् ।

किं निपातनम् ?

'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' (८।२।१०४) इति ॥

( प्रदीपः ) यस्माच्छासेरिति । वाक्यान्तरेऽपि श्रुतः संसर्गो विशेषावगतिहेतुर्भवति । यथा धेनवो मुच्यन्तां किशोरा बध्यन्तामिति वडवा एव प्रतीयन्ते ॥

निपातनादिति । यथान्यासे तु पूर्वोक्तेन न्यायेन प्रत्ययलक्षणसद्भावादार्यशीरित्यत्रेत्वं भवति । आशीरित्यत्र तु निपातनादेव ॥

( उद्द्योतः ) ननु योगविभागेन परिहारे वाक्यान्तरे संसर्गिणः श्रुतत्वादन्यत्र विशेषस्मृतिहेतुत्वं न स्यादत आह—वाक्यान्तरेऽपीति ॥

पूर्वोक्तेनेति । प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वमाश्रित्योक्तेनेत्यर्थः ॥ निपातनादेवेति । आङ्पूर्वस्य शासेः सूत्रे ग्रहणाभावादिति भावः ॥

( १२७५ विधिसूत्रम् ॥ ६ । ४ । २ आ. ५ )

## ३०३५ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ ६ । ४ । ३७ ॥

( ६५४० उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च ॥ * ॥

( भाष्यम् ) अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि चेति वक्तव्यम् । प्रमत्य । प्रतत्य ॥

ततः—

( प्रदीपः ) 'वा ल्यपि' इति सूत्रन्यासेऽविशेषेण विकल्पः प्राप्नोतीति वार्तिकारम्भः । तेनामन्तानां गमियमिरमिनमीनां ल्यपि विकल्पः, अन्येषां तु अनुदात्तोपदेशवनतितनोत्यादीनां नित्यं लोपः ॥

( उद्द्योतः ) वार्तिके स्थिते फलितं विषयविभागं दर्शयति—तेनामन्तानामिति ॥

( ६५४१ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ वाऽमः ॥ * ॥

( भाष्यम् ) वाऽम इति वक्तव्यम् । प्रयत्य, प्रयम्य । प्ररत्य, प्ररम्य । प्रणत्य, प्रणम्य ॥

( १२७६ विधिसूत्रम् ॥ ६ । ४ । २ आ. ६ )

## ३०३८ गमः क्वौ ॥ ६ । ४ । ४० ॥

( उपसंख्यानभाष्यम् )

गमादीनामिति वक्तव्यम् । इहापि यथा स्यात्—परीतत्सह कण्डिका । संयत्, सुनदिति ॥

( प्रदीपः ) परीतदिति । तनोतेः क्विपि नलोपे कृते तुकि 'नहिवृति—' इति पूर्वपदस्य दीर्घः ॥ संयदिति । यमेः क्विप् ॥

( ६५४२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ऊङ् च ॥ * ॥

( भाष्यम् ) ऊङ् च गमादीनामिति वक्तव्यम् । अग्रेगूः, अग्रेभ्रूः ॥

१ यद्यन्तर्भावः-यदिशब्दान्तर्भावः ॥
२ वाक्यान्तर इति । एवं च प्रकृते वाक्यभेदेऽपि दोषाभाव इति भावः ॥
३ 'नेत्यर्थः' इत्यस्याग्रे ङ. पुस्तके 'तथा च-अथवा-इत्येव सिद्धान्त्युक्तिः । खण्डनमेकदेश्युक्तिः' इत्यधिकः पाठः ॥
४ 'वक्तव्यम् । प्रगत्य, प्रगम्य । प्रयत्य,' इत्येवमुदाहरणपाठो ङ. पुस्तके ॥
५ 'परीतत्सहकुण्डिकायाम्' इति क. पाठः । 'परीतत्सहकुण्डिकया' इति ट. ङ. च. पाठः । 'परीतत्सहकण्ठिका' इति छ. पाठः । 'परीतन्महाकण्ठिका' इति झ. पाठः ॥
६ छ. पुस्तके नैतद्वार्तिकम् ॥
७ ऊङ् चेति । न च परीतदित्यत्र ऊङ् स्यादिति वाच्यम् । वा ल्यपीत्यतो वाग्रहणानुवृत्त्या व्यवस्थितविभाषाश्रयणात् ॥

( प्रदीपः ) **ऊङ् चेति** । अनुनासिकलोपोऽकारस्योङ् च । विनाऽपि ङित्वेनान्त्यस्य सिध्यत्यूकार इति नार्थो ङिद्ग्रहणेन ॥ **अग्रेगूरिति** । 'ओः सुपि' इति यणादेशो धातुत्वाद्भवति—अग्रेग्वाविति ॥ **भ्रूरिति** । 'अचिश्नुधातुभ्रुवाम्' इत्यत्र भ्रूग्रहणं न कर्तव्यं, धातुत्वादुवङः सिद्धत्वात् ॥

( उद्योतः ) 'ऊङ् च' इति चशब्दार्थमाह—अनुनासिकलोप इति ॥ नार्थो ङिद्ग्रहणेनेति । 'नेर्विशः' इत्यादिसाहचर्याद्' आचारक्विबन्ते 'अनुदात्तङितः—' इत्यस्याप्रवृत्तेरिति भावः ॥ धातुत्वादिति । भ्रमेः क्विपि भ्रूरिति सिद्धेरिति भावः । परे तु—एतन्निष्पाद्यः शुद्धयौगिकः, शरीरावयवविशेषवाची त्वव्युत्पन्नं प्रातिपदिकं, तस्योवङर्थं च सूत्रे तद्ग्रहणमावश्यकम् । अग्रेभ्ररित्यस्य 'अग्रे भ्रमतीत्यर्थः' इत्याहुः ॥

( १२७७ विधिसूत्रम् ॥ ६ । ४ । २ आ. ७ )

## ३०४० जनसनखनां सञ्झलोः ॥ ६ । ४ । ४२ ॥

( सञ्झलोरन्वयाक्षेपभाष्यम् )

**अथ किमयं समुच्चयः-सनि च झलादौ चेति, आहोस्वित् सन्विशेषणं झल्ग्रहणं-सनि झलादाविति ?**

**किं चातः ?**

( प्रदीपः ) **अथ किमयमिति** । यदि द्वन्द्वनिर्देशस्ततः समुच्चयः । अथ सौत्रो निर्देशस्ततो विशेषणविशेष्यभाव इति पक्षद्वयसम्भवः ॥

( उद्योतः ) अथ सौत्र इति । एकवचनस्य स्थाने सौत्रं द्विवचनम् । विशेषणस्य च परनिपात इति भावः ॥

( समुच्चये दोषभाष्यम् )

**यदि समुच्चयः, सन्यझलादावपि प्राप्नोति । सिसनिषति, जिजनिषते, चिखनिषति ।**

( प्रदीपः ) **सिसनिषतीति** । 'सनीवन्तर्द्ध'–इति पक्षे इडागमः ॥

( विशेषणपक्षे दोषभाष्यम् )

**अथ सन्विशेषणं झल्ग्रहणम्, जातः-जातवानित्यत्र न प्राप्नोति ।**

**यथेच्छसि तथाऽस्तु ॥**

( समुच्चये दोषनिवारकभाष्यम् )

**अस्तु तावत्समुच्चयः ।**

**ननु चोक्तं-सन्यझलादावपि प्राप्नोति ।**

**नैष दोषः । प्रकृतं झल्ग्रहणमनुवर्तते, तेन सनं विशेषयिष्यामः-सनि झलादाविति ।**

( विशेषणपक्षे दोषनिवारकभाष्यम् )

**अथ वा पुनरस्तु सन्विशेषणम् ।**

**कथं जातः-जातवानिति ?**

**प्रकृतं झलि क्ङितीत्यनुवर्तते ॥**

( झल्ग्रहणप्रत्याख्यानभाष्यम् )

**यद्येवं नार्थो झल्ग्रहणेन । योगविभागः करिष्यते-**

**जनसनखनाम् ।**

**अनुनासिकस्याकारो भवति झलि क्ङिति । ततः—**

**सनि च ।**[३]

**सनि च जनसनखनामनुनासिकस्याकारो भवति, झलीत्येव ।**

**तस्मान्नार्थो झल्ग्रहणेन ॥**

( प्रदीपः ) **ततः सनि चेति** । अक्ङिदर्थमेतत् । जन्तुरित्यादावात्वाप्रसङ्गार्थो हि पूर्वत्र क्ङिद्ग्रहणानुवृत्तिः ॥

( उद्योतः ) ननु 'जनसन–' इत्यत्र क्ङिद्ग्रहणानुवृत्तिः किमर्था, यतोऽक्ङिदर्थमेतत्स्यादत आह—जन्तुरित्यादाविति । जनेस्तुनौणादिकः ॥

( ६५४३ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेन ॥ * ॥[४]

( भाष्यम् ) **सनोतेरनुनासिकलोपादात्वं भवति विप्रतिषेधेन ।**

**सनोतेरनुनासिकलोपस्यावकाशः—अन्ये तनोत्यादयः ।**

**आत्वस्यावकाशः—अन्ये जनादयः ।**

**सनोतेरनुनासिकस्योभयं प्राप्नोति-सातः, सातवान्-इति ।**

**आत्वं भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **सनोतेरनुनासिकलोपस्येति** । सनोतेर्योऽनुनासिकलोपः प्राप्नोति तनोत्यादित्वात्तस्यान्ये तनोत्यादयोऽवकाश इत्यर्थः । सनोतेस्तु तनोत्यादिषु पाठः 'तनादिकृञ्भ्य उः' 'तनादिभ्यस्तथासोः' इत्येवमर्थः ॥

**अन्ये जनादय इति** । समुदायस्य कार्यं विधीयमानमवयवानां प्रवर्तते । तत्र कस्यचिदप्यवयवस्य कृतं समुदायस्य कृतं भवतीति भावः । जनादय इति बहुवचननिर्देशः प्रयोगभेदादारोपितबहुत्वजनखनापेक्षः ॥

---

१ 'नार्थो ङकारेण' इति ङ. पाठः । नार्थ इति । 'नोङ् धात्वोः' इत्यत्र विशेषणार्थं तु न, धातुत्वेनैवोदात्तनिवृत्तिसिद्धेः ॥
२ सूत्र इति । अचिश्नुधाताविति सूत्रे भ्रूग्रहणमावश्यकमित्यर्थः ॥

३ 'सनि' इति अ. छ. पाठः ॥
४ अ. पुस्तके नैतद्वार्तिकम् ॥

आत्वं भवतीति । सातः सातवानित्यादौ । सन्ग्रहणं[1] तु सनोत्यर्थमेव—सिषासतीति । जनखनाभ्यां तु सनः सेट्त्वाज्झलादित्वाभावः ॥

(उद्द्योतः) ननु सनोतेरनुनासिकलोपस्यान्ये तनोत्यादयोऽवकाशा इति विरुद्धमित्याशङ्क्याह—**सनोतेर्य इति** ॥ सनोतेस्तर्हि तनोत्यादिषु पाठोऽनर्थकोऽत आह—**सनोतेस्त्विति** ॥

नन्वत्र सनोतेर्ग्रहणमनवकाशमत आह—**समुदायस्येति** ॥

ननु जनखनौ द्वावेवेति बहुवचनमयुक्तमत आह—**बहुवचनेति** । केचित्तु भ्वादिपठितसनमादाय बहुवचनस्योपपत्तिमाहुः ॥

**सिषासतीति** । 'सनीवन्तर्द्ध—' इति विकल्पितेट्त्वात्तदभावे उदाहरणम् ॥

(विप्रतिषेधाक्षेपभाष्यम्)

**नैष युक्तो विप्रतिषेधः । न हि सनोतेरनुनासिकलोपस्यान्ये तनोत्यादयोऽवकाशः । सनोतेर्यस्तनोत्यादिषु पाठः सोऽनवकाशः ।**

**न खल्वप्यात्वस्यान्ये जनादयोऽवकाशः । सनोतेर्यदात्वे ग्रहणं तदनवकाशम्, तस्मानवकाशत्वादयुक्तो विप्रतिषेधः ॥**

(सकाराकारयोर्विप्रतिषेधोपपादनभाष्यम्)

**एवं तर्हि तनोत्यादिषु पाठस्तावत्सावकाशः ।**

**कोऽवकाशः ?**

**अन्यानि तनोत्यादिकार्याणि—'तनादिभ्यस्तथासोः' (२।४।७९) इति ।**

**आत्वेऽपि ग्रहणं सावकाशम् ।**

**कोऽवकाशः ?**

**'सनि च' । 'ये विभाषा' (६।४।४३) च । उभयोः सावकाशयोर्युक्तो विप्रतिषेधः ॥**

(उद्द्योतः) भाष्ये—**सनि च ये विभाषा चेति** । आद्यचकारेण भ्वादिसनोऽपि ग्रहणमिति केचित् ॥

(विप्रतिषेधाक्षेपभाष्यम्)

**एवमप्ययुक्तो विप्रतिषेधः । पठिष्यति ह्याचार्यः—*पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य* इति । एकस्य हि नामाभावे विप्रतिषेधो न स्यात्, किं पुनर्यत्रोभयं नास्ति ॥**

(उद्द्योतः) भाष्ये—**एकस्य हि नामेति** । न चैकस्यासिद्धत्वे सिद्धेन सह तुल्यबलत्वाभाव इति युक्तो विप्रतिषेधाभावः, द्वयोरपि परस्परमसिद्धत्वे तु तुल्यबलत्वाक्षतेः कुतो न विप्रतिषेधः, परस्परदृष्ट्या परस्परमसिद्धत्वेन पर्यायप्रसङ्गे नियमार्थशास्त्रप्रवृत्तेर्दुर्वारत्वाच्चेति[2] वाच्यम् । कैमुतिकन्यायेनात्रापि विप्रतिषेधाभावं मन्यते । यद्वा कार्यकालपक्षे 'विप्रतिषेधे—' इति परिभाषाया आभीयत्वेन तद्दृष्ट्योभयोरप्यसिद्धत्वाद्विप्रतिषेधानुपपत्तिः । द्वयोः शास्त्रयोः समानाश्रयत्वे तदाश्रयाश्रयकस्यापि समानाश्रयत्वमिति भावः ॥

(ज्ञापकेन विप्रतिषेधस्थापनभाष्यम्)

**नैष दोषः । भवतीह विप्रतिषेधः ।**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

**आचार्यप्रवृत्तिर्ज्ञापयति—भवतीह विप्रतिषेध इति, यदयं 'घुमास्थागापाजहातिसां हलि' (६।४।६६) इति हल्ग्रहणं करोति ।**

**कथं कृत्वा ज्ञापकम् ?**

**हल्ग्रहणस्यैतत्प्रयोजनं—हलादावीत्वं यथा स्यात्, इह मा भूत्—गोदः—कम्बलद इति । यदि चात्र विप्रतिषेधो न स्यादिह[3] हल्ग्रहणमनर्थकं स्यात् ।**

**अस्त्वत्र ईत्वम् । ईत्वस्यासिद्धत्वाल्लोपो भविष्यति । पश्यति त्वाचार्यः—भवतीह विप्रतिषेधः, ततो हल्ग्रहणं[4] करोति ॥**

(प्रदीपः) **भवतीह विप्रतिषेध इति** । विप्रतिषेधेन व्यवस्थायां क्रियमाणायामसिद्धत्वं न भवतीत्यर्थः । गोद इत्यादावसति हल्ग्रहणे परत्वादीत्वं स्यादिति हल्ग्रहणं क्रियते । असति चेह विप्रतिषेधे द्वयोः परस्परस्मिन्नसिद्धत्वात् कृतेऽपीत्वे आल्लोपेन गोदादेः सिद्धत्वादनर्थकं हल्ग्रहणं स्यात् ॥

(उद्द्योतः) नन्वसिद्धवच्छास्त्रे जाग्रति कथं हल्ग्रहणस्य विप्रतिषेधलिङ्गत्वं स्यादित्याशङ्क्य हल्ग्रहणानुपपत्तेरसिद्धत्वं बाधित्वा विप्रतिषेधो ज्ञाप्यत इत्याह—**विप्रतिषेधेनेति** ॥ **कृतेऽपीत्वे आल्लोपेनेति** । ननु विप्रतिषेधशास्त्राप्रवृत्तौ शास्त्रक्रमेण प्रथमोपस्थितत्वादाल्लोपे[5] तस्यासिद्धत्वादीत्त्वे[6] लक्ष्ये लक्षणस्येति न्यायेन पुनराल्लोपाप्रवृत्तौ कथं हल्ग्रहणं विना सिद्धिरिति चेन्न । 'घुमास्था—' इत्येव प्रतिपदोक्तत्वात्प्रथमोपस्थितमित्याशयात्[7] ॥

(ईत्वस्य व्यवस्थार्थत्वबोधनेन ज्ञापकनिराकरणभाष्यम्)

**नैतदस्ति ज्ञापकम्, व्यवस्थार्थमेतत्स्यात्—हलादावीत्वं यथा स्यादजादौ मा भूदिति ।**

**किञ्च स्यात् ?**

**यद्यजादावपीत्वं स्यात्, इयङादेशः प्रसज्येत ॥**

(प्रदीपः) **नैतदस्तीति** । हल्ग्रहणस्य ज्ञापकत्वं विघटयति । असत्यपि विप्रतिषेधे गोद इत्यादि न सिध्यति, कृते ईत्वे इयङादेशप्रसङ्गादिति तन्निवारणार्थं हल्ग्रहणं न ज्ञापकमित्यर्थः ॥

(उद्द्योतः) **इयङादेशप्रसङ्गादिति** । ईकारस्य श्रूयमाणत्वेनाकारस्यातिदेशिकत्वेनेयङेव प्रथमोपस्थित इति भावः ॥

---

[1] सन्ग्रहणमिति । आत्वविधिसूत्रे निमित्तकोटौ सन्ग्रहणमिति भावः ॥

[2] 'नियमार्थं शास्त्र' इति ङ. झ. पाठः । शास्त्रप्रवृत्तेरिति । विप्रतिषेधशास्त्रप्रवृत्तेरिति भावः ॥

[3] 'स्याद्धल्ग्रह' इति अ. पाठः ॥

[4] हल्ग्रहणमिति । सकृद्गतिन्यायज्ञापनद्वारा स्वस्मिन् चारितार्थ्यमिति भावः । अन्यथा परत्वादीत्वेऽपि तस्यासिद्धत्वाल्लोपे व्यर्थत्वं स्पष्टमेव ॥

[5] आल्लोपे इति । प्राप्ते इति शेषः ॥

[6] ईत्त्व इति । कृते इति शेषः ॥

[7] प्रथमोपस्थितमिति । एवञ्चाल्लोपस्य तत्र प्राप्त्यभावेन लक्ष्ये लक्षणस्येति न्यायस्य न तत्र प्राप्तिरिति भावः ॥

( व्यवस्थार्थत्वाक्षेपभाष्यम् )

**ननु चासिद्धत्वादेवेयङादेशो न भविष्यति ॥**

( प्रदीपः ) ज्ञापकवाद्याह—**ननु चासिद्धत्वादिति ॥**

( व्यवस्थार्थत्वसाधकभाष्यम् )

**न शक्यमीत्वमियङादेशेऽसिद्धं विज्ञातुम् । इह हि दोषः स्यात्-धियौ, धियः । पियौ, पिय इति ॥**

( प्रदीपः ) ज्ञापकभङ्गवाद्याह—**न शक्यमिति ॥ धियाविति** । दधातेः पिबतेश्च क्विपि लुप्तेऽपि प्रत्ययलक्षणेनेत्वं भवति । तस्यासिद्धत्वे आश्रीयमाणे इयङ् न प्राप्नोतीतीयङि अवश्याश्रयितव्यमीत्वस्य सिद्धत्वमित्यर्थः ॥

( व्यवस्थार्थत्वाक्षेपभाष्यम् )

**नैतदीत्त्वम् ।**

**किं तर्हि ?**

**ध्याप्योः सम्प्रसारणमेतत् ॥**

**समानाश्रयं खल्वसिद्धं भवति, व्याश्रयं चैतत् ।**

**कथम् ?**

**क्वावीत्वम्, क्विबन्तस्य विभक्तावियङादेशः ॥**

( प्रदीपः ) ज्ञापकवाद्याह—**नैतदीत्त्वमिति ॥**

अभ्युपगम्यापीत्त्वमाह—**समानाश्रयमिति** । धियाविस्यादावीत्वं व्याश्रयम्, गोदे[२] इत्यादौ तु समानाश्रयत्वादियङ्यसिद्धमेवेति ज्ञापकमेव हल्ग्रहणं स्थितम् ॥

( व्यवस्थावादित्वस्थापनभाष्यम् )

**व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्तव्यम् । कुतो ह्येतत्—ईत्वस्यासिद्धत्वाल्लोपः[३] स्यात्, न पुनर्लोपस्यासिद्धत्वादीत्वमिति । तत्र चक्रकमव्यवस्था प्रसज्येत ॥**

( प्रदीपः ) पुनर्ज्ञापकभङ्गवाद्याह—**व्यवस्थार्थमिति ॥**

( उद्द्योतः ) भाष्ये—**चक्रकमव्यवस्थेति** । चक्रकरूपाऽव्यवस्थेत्यर्थः ॥

( ज्ञापकत्वपक्षोपपादकभाष्यम् )

**नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रतो नाम व्यवस्था । तत्र ईत्वस्यासिद्धत्वाल्लोपः, लोपेनावस्थानं[४] भविष्यति । न खल्वपि तस्मिंस्तदेवासिद्धं भवति ॥**

(प्रदीपः) ज्ञापकवाद्याह—**नास्ति चक्रकप्रसङ्ग इति ।** द्वयोरपि शास्त्रयोः प्रवृत्तौ सत्यां पुनः प्रवृत्तिकारणाभावादित्यर्थः ॥ **लोपेनावस्थानमिति** । अथ विपरीतक्रमः कस्मान्न भवति—पूर्वमाल्लोपस्तस्यासिद्धत्वादीत्वमिति । **उच्यते**—अस्मिन्नपि क्रमे ईत्वस्यासिद्धत्वात् पुनरालोपो भविष्यति, लक्ष्यसंस्कारार्थत्वाच्छास्त्रप्रवृत्तेः ॥ **न खल्वपीति** । आल्लोपे कर्तव्ये ईत्वस्यासिद्धत्वम्, न त्वीत्त्वे कर्तव्ये । अस्मिन्निदमसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य । ततश्चाल्लोपो भविष्यति, न तु पुनः पुनरीत्वमिति ज्ञापकमेव हल्ग्रहणमित्यर्थः ॥

( उद्द्योतः ) ननु पुनः प्रवृत्तौ लोपस्याश्रीयमाणायां तस्यासिद्धत्वात्पुनरपीत्त्वं स्यादत आह—**लक्ष्यसंस्कारार्थत्वादिति** । लोके प्रयुक्तस्य प्रयोगस्य तावताऽन्वाख्यानसिद्धेरिति भावः । किंच पुनरालोपस्यासिद्धत्वेऽप्यनेन शास्त्रेण स्वकृतेकारस्यैव दर्शनान्न पुनरीत्त्वप्रवृत्तिः, स्वस्मिंश्च स्वयं नासिद्धमित्यपि बोध्यम् । तदेवाह भाष्ये—**न खल्वपीत्यादि** । किंच 'घुमास्था—' इत्यस्य प्रतिपदोक्तत्वेन प्रथमोपस्थितत्वात्पूर्वमालोपो दुर्लभ इत्यपि बोध्यम् ॥ **आल्लोप इति** । पुनः पुनरीत्वप्रवृत्त्या यच्चक्रकं प्राप्नोति तदनेन परिहियत इत्यर्थः ॥

( ज्ञापकत्वाक्षेपभाष्यम् )

**व्यवस्थार्थमेव तर्हि हल्ग्रहणं कर्तव्यम् । हलादावीत्वं यथा स्यात्, अजादौ मा भूदिति ।**

**कुतो ह्येतत्—ईत्वस्यासिद्धत्वाल्लोपः, लोपेनावस्थानं भविष्यति । न पुनर्लोपस्यासिद्धत्वादीत्वमीत्वेन[६] व्यवस्थानं स्यात् ?**

**तदेव खल्वपि तस्मिन्नसिद्धं भवति ।**

**कथम् ?**

**पठिष्यति ह्याचार्यः—*चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात्, तलोपस्य चासिद्धत्वात्*इति । चिणो लुक् चिणो लुक्येवासिद्धो भवति ॥**

( प्रदीपः ) पुनर्ज्ञापकभङ्गवाद्याह—**व्यवस्थार्थमिति ।** न हि शास्त्रचक्षुरन्तरेण वचनमिदमिष्टमिदमनिष्टमिति मन्यते॥ **तदेवेति ।** व्यक्तिपदार्थपक्षे[७] लक्ष्यलक्षणभेदाद्विषयविषयिविभागोपपत्तावीत्त्वशास्त्रमीत्त्वशास्त्रे एवासिद्धमिति पुनः पुनरीत्वप्रवर्तनादपि चक्रकप्रसङ्ग इत्यर्थः ॥

(उद्द्योतः ) ननु चक्रकेऽपीष्टतो व्यवस्थाया उक्तत्वात् 'व्यवस्थार्थमेव तर्हि' इत्याद्यनुपपन्नमत आह—**न हि शास्त्रेति ।** मन्दबुद्ध्यनुग्रहार्थं हल्ग्रहणस्य कर्तव्यत्वेन न ज्ञापकत्वमित्यर्थः ॥ भाष्ये 'न खल्वपि'इत्यादिनोक्तस्य परिहारमाह—**तदेव खल्वपीति ।** एवं च ईत्वेन व्यवस्थाने इष्टरूपासिद्धिः, इष्टासिद्धौ चक्रकमपि दुर्निवारमिति भावः । 'लक्ष्ये लक्षणस्य' इति न्यायं तु न पश्यति ॥

( ज्ञापकत्वसाधकभाष्यम् )

**एवं तर्हि—यदि व्यवस्थार्थमेतत्स्यात् नैवायं**

---

१ 'खल्वप्यसिद्धं' इति च. छ. झ. ड. पाठः ॥

२ गोद इत्यादाविति । धियावित्यत्रेयङीत्वयोर्व्याश्रयत्वेऽपि गोद इत्यत्र घुमास्थेतिसूत्रे हल्ग्रहणाभावे भातस्येत्त्वस्येयङश्च समानाश्रयत्वादसिद्धत्वमिति ज्ञापकं हल्ग्रहणं विप्रतिषेधस्येति भावः ॥

३ 'त्वाल्लोपः, न पुनः' इति च. छ. पाठः ॥

४ 'लोपेन चावस्थानं' इति अ. पाठः ॥

५ 'पुनराल्लोपस्य' इति झ. पाठः ॥

६ 'ईत्वेनावस्थानं' इति ड. पाठः ॥

७ 'पदार्थपक्षे प्रतिलक्ष्यं लक्षण' इति च. झ. ड. पाठः ॥

हल्ग्रहणं कुर्वीत । अविशेषेणायस्मीत्वमुक्त्वा तस्याजादौवाल्लोपमपवादं विदधीत।

तदेतत्कथम्?

इदमस्ति—'आतो लोप इटि च' इति।

ततः—'घुमास्थागापाजहातिसां'। लोपो भवति इटि च अजादौ क्ङितीति।

किमर्थं पुनरिदम्?

ईत्वं वक्ष्यति तद्बाधनार्थम्।

ततः—'ईत्'। ईच्च भवति घ्वादीनाम्। ततः—'एर्लिङि'। 'वान्यस्य संयोगादेः'। 'न ल्यपि'। 'मयतेरिदन्यतरस्याम्'। ततः—'यति'। यति च ईद्भवति। सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्धल्ग्रहणं करोति-गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः—भवतीह विप्रतिषेध इति॥

( प्रदीपः ) ज्ञापकत्वाद्याह—एवं तर्हीति॥ ईच्च भवतीति। अत्र 'क्ङिति' इत्यपेक्ष्यते॥

( उद्योतः ) [2][ भाष्ये—अविशेषेणेति। अयं-पाणिनिः, लोपमपवादमुक्त्वा तस्य लोपस्येत्वमविशेषेणोत्सर्गं कुर्यादित्यर्थः। यद्वा-उक्त्वा-वक्ष्यमाणत्वेन बुद्धिस्थीकृत्य, तथा च नासङ्गतिः—तदेतदिति॥ ] क्ङितीत्यपेक्ष्यत इति। तेनाजादौ हलादौ च सामान्येन विहितस्येत्त्वस्याजादौ क्ङिति[3] लोपोऽपवाद इति अन्तरेणापि हल्ग्रहणं सिद्धमिति तज्ज्ञापकमेवेत्यर्थः। परे तु ज्ञापितेऽपि पूर्वोक्तन्यासेनैव सिद्धे हल्ग्रहणस्य चारितार्थ्याभावात्कथं ज्ञापकत्वमिति चिन्त्यमेतत्। तस्मादत्र ज्ञापकोपन्यासपरो ग्रन्थ आचार्यदेशीयस्य। 'भवतीह विप्रतिषेधः' इत्येव सिद्धान्तयुक्तिः, द्वयोरसिद्धत्वेऽपि तुल्यबलत्वाहानिरित्याशयेन। उभयोः परस्परमसिद्धत्वारोपमात्रं, नैतावता सर्वथा शास्त्रयोरभावः। विप्रतिषेधसूत्रे च यथोद्देशपक्ष एव, कार्यकालपक्षेऽपि तदुपस्थितिसामर्थ्यादसिद्धत्वबाधो वेति तत्त्वमित्याहुः॥

( १२७८ विकल्पविधिसूत्रम्॥ ६।४।२ आ. ८ )

## ३०४३ सनः क्तिचि लोपश्चास्यान्यतरस्याम्॥ ६।४।४५॥

( अन्यतरस्यांग्रहणप्रत्याख्यानभाष्यम् )

इहान्यतरस्यांग्रहणं शक्यमकर्तुम्।

कथम्?

'सनः क्तिचि लोपश्च' आत्वं च विभाषेति॥

( प्रदीपः ) इह रूपत्रयं साध्यं-सातिः, सतिः, सन्तिरिति। तच्च 'सनः क्तिचि लोपश्च'इत्येतावति सूत्रे 'ये विभाषा' इत्यतो विभाषाग्रहणानुवृत्तौ सिद्ध्यतीति मत्वाऽऽह—इहेति॥

( उद्योतः ) अन्यतरस्याङ्ग्रहणप्रत्याख्यान इष्टसिद्धिं दर्शयति—इहेति॥

( लोपपदस्यापि प्रत्याख्यानभाष्यम् )

अपर आह—सर्व एवायं योगः शक्योऽवक्तुम्।

कथम्?

इह लोपोऽपि प्रकृतः, आत्वमपि प्रकृतम्, विभाषाग्रहणमपि प्रकृतम्। तत्र केवलमभिसम्बन्धमात्रं कर्तव्यम्—सनः क्तिचि लोपश्च आत्वं च विभाषा[4]॥

( प्रदीपः ) सर्व एवायमिति। 'सनः क्तिचि' इत्येव। लोपस्य प्रकरणात्सिद्धत्वात् लोपश्चेत्यपि न वक्तव्यमित्यर्थः। बहूनां पदानां प्रत्याख्यानाच्च 'सर्व एवायं योगः' इत्युच्यते॥

( उद्योतः ) ननु सर्वस्य योगस्य प्रत्याख्याने लोपादिविधिः कुतो लभ्यतेऽत आह—सनः क्तिचीत्येवेति॥ एवं तर्हि सर्वशब्दोऽनुपपन्न इत्यत आह—बहूनामिति। [5][तथा च सर्वशब्दोऽवयवबहुत्वपरः, सर्वः पटो दग्ध इतिवत्। एवञ्च बह्वयववोऽयं योगो न कार्यः, किन्तु स्वल्पावयव इत्यर्थो बोध्यः। अत्र 'अपर-'इत्यनेनारुचिः सूचिता। तद्बीजं तु लोपस्य प्रकृतत्वेऽपि विच्छेदान्मण्डूकगतिः स्यादिति शब्दगौरवतो ज्ञानगौरवमप्रबलमिति तत्कृत्वाऽनन्तरक्तिचो लोपाभावाय 'अस्य'इति प्रधानपरामर्शकमुक्तमिति बोध्यम्॥]

( १२७९ अधिकारसूत्रम्॥ ६।४।२ आ. ९ )

## ३०४४ आर्धधातुके॥ ६।४।४६॥

( अधिकारप्रयोजनाधिकरणम् )

( प्रदीपः ) अथ द्वितीयाध्यायविहिता आर्धधातुकनिमित्ता आदेशा इहैव कस्मान्नोक्ताः? एवं हि द्विरार्धधातुकग्रहणं न कर्तव्यं भवति। नैवं शक्यम्। आभाच्छास्त्रीये कार्ये तेषामसिद्धत्वप्रसङ्गात्। ततश्चास्त्यादेशस्य भुवो वुक् न स्यादनादेशस्यैव तु स्यात्। तथा चख्यतुरित्यादौ ख्याञोऽसिद्धत्वा[7]ल्लोपाप्रसङ्गः॥

( उद्योतः ) असिद्धत्वप्रसङ्गादिति। एतेनैते[8] द्वितीयाध्याये कर्तुं शक्या इत्यपास्तम्, असिद्धत्वानापत्तेः[9]; आङ्गत्वानापत्तेश्च[10]॥

१ 'तस्याजादौ लोप' इति च. छ. पाठः॥
२ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तके एव॥
३ 'क्ङिति लोपापवाद' इति ङ. घ. पाठः॥
४ 'विभाषेति' इति च. छ. ङ. झ. पाठः॥
५ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तके एव॥
६ 'भवतीति' इति ङ. पाठः॥

७ 'असिद्धत्वादाल्लोपा' इति छ. ङ. पाठः॥
८ एतेनेति। एते-षष्ठाध्यायविहिता इत्यर्थः॥
९ असिद्धत्वानापत्तेरिति। 'करिष्यते' इत्यत्र णिलोपे कर्तव्ये चिण्वदिटोऽसिद्धत्वं न स्यात्। चकारेणेद साधित इत्यन्यदेतत्॥
१० आङ्गत्वानापत्तेश्चेति। एवं च गणयतीत्यत्रापरनिमित्तत्वेन स्थानिवत्त्वाप्राप्त्या वृद्धिः स्यादिति भावः॥

( अधिकाराक्षेपभाष्यम् )

**कानि पुनरार्धधातुकाधिकारस्य प्रयोजनानि ?**

( प्रदीपः ) **कानि पुनरिति** । कानिचिदन्यथाऽपि सिध्यन्तीति प्रश्नः ॥

( उद्द्योतः ) **कानिचिदिति** । एतच्चोत्तरत्र स्फुटीभविष्यति ॥

( अधिकारप्रयोजने श्लोकवार्तिकम् )

**अतो लोपो यलोपश्च**
**णिलोपश्च प्रयोजनम् ।**
**आल्लोप ईत्वमेत्वं च**
**चिण्वद्भावश्च सीयुटि ॥ १ ॥**

(भाष्यम्) **अतो लोपः—चिकीर्षिता, चिकीर्षितुम् ।**

**आर्द्धधातुक इति किमर्थम् ?**

**चिकीर्षति ॥**

( प्रदीपः ) **चिकीर्षतीति** । अकारोच्चारणं तु सनः 'प्रतीषिषति' इत्यादौ द्विर्वचनार्थं स्यात् ॥[१]

( उद्द्योतः ) ननु सनोऽकारोच्चारणसामर्थ्याल्लोपो न भविष्यतीत्यत आह—**अकारोच्चारणं त्विति** ॥

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । अस्त्वत्र सनोऽकारलोपः, शपोऽकारस्य श्रवणं भविष्यति ॥**

( समाधानभाष्यम् )

**शपं[२] एव तर्हि मा भूदिति ॥**

( प्रदीपः ) **शप एव तर्हीति** । शप्[३]विधानं तु प्रत्ययलक्षणेन गुणाद्यर्थं स्यात् । 'अतो दीर्घो यञि'इत्यस्य सर्वत्राकारलोपे कोऽवकाश इति चेत्; वचनादतो[४] लोपं बाधित्वा 'पचावः' इत्यादौ प्रवर्तेत । तत्र च कृतार्थमदुपदेशाल्लसार्वधातुकानुदात्तत्वमज्ञापकं सार्वधातुकेऽतो लोपाभावस्य ॥

(उद्द्योतः) [भाष्ये—एवोऽप्यर्थे।][५] **गुणाद्यर्थमिति** । 'भवतः' इत्यादौ गुणार्थं, कायतीत्यादावशितीत्यात्त्वप्रतिषेधार्थं, ष्ठीवतीत्यादौ दीर्घार्थं चेति बोध्यम् ॥ **वचनादिति** । स्वप्रत्ययेऽकारोच्चारण-[६]सामर्थ्याल्लोपाभावे तत्र चरितार्थत्वाच्चिन्त्यमिदम् । लसार्वधातुकानुदात्तत्वमपि तत्रैव चरितार्थं बोध्यम् ॥

( आक्षेपभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—नानेन[७] शपोऽकारस्य लोपो भवतीति, यदयमदिप्रभृतिभ्यः शपो लुकं शास्ति ॥**

( ज्ञापकाक्षेपभाष्यम् )

**नैतदस्ति ज्ञापकम् । कार्यार्थमेतत्स्यात् । वित्तः, मृष्ट इति ॥**

( प्रदीपः ) **कार्यार्थमेतत्स्यादिति** । प्रत्ययलक्षणप्रतिषेधार्थमित्यर्थः ॥

( प्रकारान्तरेण समाधानभाष्यम् )

**यत्तर्हि आकारान्तेभ्यो लुकं शास्ति—याति, वाति ।**

**अस्तेश्च । अस्तेश्च शपो लुकं शास्ति । अस्ति ॥**

( प्रदीपः ) **यत्तर्हीति** । यदि शपोऽतो लोपः स्यात् या-वा-प्रभृतय आकारान्ता भ्वादिष्वेव पठ्येरन् न त्वदादिषु, लुग्लोपयोस्तत्र विशेषाभावात् ॥

ननु शिंशपा चोद्यमिदम्, पाठस्यावश्यकर्तव्यत्वात् । नैष दोषः । विशेषकार्यार्थत्वाद्विशिष्टगणपाठस्य ॥

ननु याती ब्राह्मणी यान्ती ब्राह्मणीत्यादौ 'शप्श्यनोर्नित्यम्'इति प्रत्ययलक्षणेन नित्यो नुम् मा भूदित्येवमर्थं लुग्विधानं स्यात् । नैतदस्ति । लुमता लुप्ते यदङ्गं तस्य कार्ये प्रत्ययलक्षणप्रतिषेधो न च नुमागमस्तस्याङ्गस्य कार्यमिति लुक्यपि क्रियमाणे प्रत्ययलक्षणप्रसङ्गः । सर्वत्र च शपोऽतो लोपे विज्ञायमाने 'शप्श्यनोर्नित्यम्'इत्यत्र प्रत्ययलक्षणं भूतपूर्वविज्ञानं वाऽऽश्रयणीयमिति नास्त्येव लुग्लोपयोर्विशेष इति ज्ञापक एवाकारान्तानामन्येषां चागुणवृद्धिभाजामदहनासादीनामदादिषु पाठः सार्वधातुकेऽतो लोपाभावस्य । कथं तर्हि 'याती कुले' इत्यादौ प्रत्ययलक्षणेन नुम्न भवति ? शपाऽकारस्य विशेषणात्, शपो योऽकारस्तदन्तादङ्गादुत्तरस्य शतुर्नुम् भवतीति । न च शपि लुप्ते शपोऽकारः सम्भवति ॥

( उद्द्योतः ) **शिंशपाचोद्यमिति** । लङ्कायां नीता सीता शिंशपामूले स्थापितेतीति केनचिदुक्ते कश्चित्पृच्छति—'वृक्षान्तरेषु सत्सु किं शिंशपाऽनुरोधेन' इति, तद्वदिदं चोद्यमित्यर्थः ॥ **विशेषकार्यार्थत्वादिति** । तदभावे हि भ्वादिपाठ एवोचित इति भावः ॥

**नित्यो नुम्मा भूदिति** । किं तु 'आच्छीनद्योः—' इति विकल्प एव यथा स्यादित्यर्थं पाठः स्यादिति न ज्ञापक इति भावः ॥ **तस्याङ्गस्येति** । तदङ्गं धातुः । इदं च शत्रन्तस्याङ्गस्य कार्यमिति भावः ॥ ननु सर्वत्रातो लोपे 'शप्श्यनोर्नित्यम्' इत्यस्य का गतिरत मिति ॥

१ प्रतीषिषतीति । अनैमित्तिकत्वेन लादेशात्पूर्वमेवेति भावः । सामर्थ्याश्रयेण चिकीर्षतीत्यादाविव चिकीर्षितेत्यत्रापि लोपो न स्यादित्यपि बोध्यम् ॥
२ शप एवेति । भिद्यस्तीत्यादौ सन्शबकारयोर्लोपे 'झलो झलि' इति लोपाभावस्याप्युपलक्षणम् । स्थानिवत्त्वं तु न, पूर्वत्रासिद्धीयेति निषेधात् । संयोगादिलोपस्तु न, तस्य दोष इति निषेधात् ॥
३ ननु शब्विधानसामर्थ्याल्लोपो न भविष्यतीत्यत आह—शब्विधान-इति च. पाठः ॥
४ वचनात्—अतो दीर्घो यञीति दीर्घविधानसामर्थ्यात् ॥
५ [ ] एतच्चिह्नगतोंऽशो ङ. पुस्तक एव ॥
६ स्वप्रत्यये—लटो विकरणे । तत्र हि अकारोच्चारणं व्यर्थम् ॥
७ 'नानेन शबकारस्य' इति छ. झ. पाठः । 'नानेन शबकारलोपो' इति च. पाठः ॥

आह—**सर्वत्र चेति** ॥ शप्श्यनोरादिति व्याख्याने प्रत्ययलक्षणासम्भवादाह—**भूतपूर्वेति** ॥ [1]भाष्ये आकारग्रहणमुपलक्षणमित्याह—**अन्येषां चेति** ॥ **अदहनिति** । हन्ग्रहणस्य ज्ञापकत्वं **चिन्त्यम्** । तत्र ह्यनेन शपो लोपे तस्यासिद्धत्वादनुनासिकोपधालोपयोरप्राप्तेर्लुक आवश्यकत्वात् । असिद्धत्वमनित्यमिति वाऽऽशयः ॥ **कथं तर्हीति** । लुकि लोपे च शङ्क्यम् ॥ **शपो योऽकार इति** । तथा च वर्णाश्रयत्वान्न प्रत्ययलक्षणमिति भावः ॥

( अधिकारप्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—[2]वृक्षस्य । अतो लोपः प्राप्नोति ॥**

( प्रदीपः ) **वृक्षस्येति** । प्रागेव स्यादतो लोपः, भूतपूर्वगत्या तु स्यादेशः । ननु परत्वात् स्यादेशो भविष्यति, तत्र कृते सन्निपातपरिभाषयाऽतो लोपो न भविष्यति । **उच्यते**—कष्टायेति निर्देशेनानित्यत्वज्ञापनादनुपस्थानादस्याः परिभाषायाः स्यादेवातो लोपः ॥

( उद्योतः ) **प्रागेवेति** । इदं चिन्त्यं, स्यादेशस्य परत्वात् । [3][उभयोर्युगपत्प्रवृत्तौ स्यादेशेन लोपनिमित्तानन्तर्याविघातेऽपि] अतो लोपेन स्यादेशनिमित्तानन्तर्यविघातादस्ति विप्रतिषेधः । [4]व्युत्पत्तिपक्षे सप्रत्यय उपदेशेऽकारान्त इति बोध्यम् ॥ **भूतपूर्वेति** । सामर्थ्यादिति भावः ॥ '[5]पार्कः' इति च प्रत्युदाहरणं बोध्यम् ॥

( अधिकारप्रयोजनभाष्यम् )

**यलोपोऽपि प्रयोजनम्-बेभिदिता, चेछिदिता ।**
**आर्धधातुक इति किमर्थम् ?**
**बेभिद्यते । चेछिद्यते ॥**

( अधिकारप्रयोजनभाष्यम् )

**[6]णिलोपः प्रयोजनम्-याज्यते, पाच्यते ।**
**आर्धधातुक इति [7]किमर्थम् ?**
**पाचयति, याजयति ॥**

( प्रदीपः ) **पाचयतीति** । णिज्विधानं तु प्रत्ययलक्षणार्थं स्यादिडाद्यर्थं च-पाचयितेति ॥

( उद्योतः ) **प्रत्ययलक्षणार्थमिति** । तेनोपधावृद्धिसिद्धिः ॥ **इडाद्यर्थमिति** । अन्यथा 'एकाच–' इति प्रतिषेधः स्यात् । सति चेटि 'अनिटि' इति प्रतिषेधाण्णिलोपो नेति बोध्यम् ॥

( अधिकारप्रयोजनभाष्यम् )

**[8]आल्लोपः-ययतुः, ययुः ववतुः, ववुः ।**
**आर्धधातुक इति किमर्थम् ?**
**यान्ति, वान्ति ॥**

( प्रदीपः ) **यान्तीति** । ननु श्नाऽभ्यस्तयोरेवातः सार्वधातुके, नान्यस्य-इत्येवं नियमादत्र न भविष्यति । विपरीतोऽपि नियमः स्यात्-सार्वधातुके एव श्नाऽभ्यस्तयोः-इति ययतुरित्यादौ न स्यात् । श्नाग्रहणमुत्तरार्थं स्यात् ॥

( उद्योतः ) **ननु श्नाऽभ्यस्तयोरिति** । अजादौ क्ङिति सार्वधातुकेऽप्यनेनैव सिद्धेरिदं नियमार्थमिति भावः ॥ नन्वत्र [9]पक्षे श्नाग्रहणं व्यर्थं स्यादत आह—**उत्तरार्थमिति** । 'लुनीते' इत्यादावीत्वार्थमिति भावः ॥

( अधिकारप्रयोजनभाष्यम् )

**ईत्वम्-धीयते, दीयते ।**
**आर्धधातुक इति किमर्थम् ?**
**अदाताम् । अधाताम् ॥**

( प्रदीपः ) **अदातामिति** । लङ्, ताम्, 'गातिस्थाघु–' इति सिचो लुक् ॥

( अधिकारप्रयोजनभाष्यम् )

**एत्वम्-ग्लेयात्, म्लेयात् ।**
**आर्धधातुक इति किमर्थम् ?**
**ग्लायात् । ग्लायाताम् ॥**

( अधिकारप्रयोजनभाष्यम् )

**चिण्वद्भावश्च सीयुटि ।**
**चिण्वद्भावे सीयुटि किमुदाहरणम् ?**
**कारिषीष्ट, हारिषीष्ट ।**
**आर्धधातुक इति किमर्थम् ?**
**क्रियेत, ह्रियेत ।**
**नैतदुदाहरणम् । यका व्यवहितत्वान्न भविष्यति ।**
**इदं तर्ह्युदाहरणम्—[10]प्रस्तुवीत ।**
**इदं चाप्युदाहरणम्—क्रियेत, ह्रियेत ।**
**ननु चोक्तं—यका व्यवहितत्वान्न भविष्यतीति ।**
**यक एव तर्हि मा भूदिति ।**
**किञ्च स्यात् ?**
**वृद्धिः, वृद्धौ कृतायां युक् प्रसज्येत ॥**

---

१ भाष्य आकारग्रहणं–'यर्त्तहि आकारान्तेभ्यो लुकं शास्ति' इत्यत्र ॥

२ 'वृक्षस्य, प्लक्षस्य' इति ङ. झ. पाठः ॥

३ [ ] अत्रत्यो ग्रन्थो ङ. पुस्तक एव ॥

४ ननु वृक्षशब्दस्याव्युत्पत्तिपक्षे उपदेशेऽकारान्तत्वं भवेत्, व्युत्पत्तिपक्षे तस्य कथमुपदेशेऽकारान्तत्वमित्यत आह—व्युत्पत्तिपक्ष इति । सप्रत्ययः—व्रश्चूधातोर्विहितः प्रत्ययः, अत्र सति 'आर्धधातुके' इत्यधिकारे 'आर्धधातुकोपदेशे' इत्यर्थलाभः । तदधिकाराभावे च 'उपदेशेऽकारान्तं' इत्यर्थः ॥

५ पाक इति चेति । ननु वृक्षस्येत्यत्र स्यादेशस्य परत्वेन पूर्वं प्रवृत्तौ सन्निपातपरिषया नातो लोप इति आर्धधातुकाधिकारस्य प्रत्युदाहरणं पाक इति बोध्यमिति भावः । पाक इत्यत्र सुप्रत्यये परतोऽकारस्य लोपः स्यात् ॥

६ 'णिलोपः-पाच्यते, याज्यते ।' इत्येव छ. पाठः । 'णिलोपः प्रयोजनम्-कारणा, हारणा ।' इति क. पाठः । 'णिलोपःप्रयोजनम्-पाच्यते, याच्यते, कारणा, हारणा ।' इति झ. पाठः ॥

७ 'किमर्थम् ? कारयति, हारयति ।' इति क. पाठः । 'पाचयति, याजयति, कारयति, हारयति ।' इति झ. पाठः ॥

८ 'तथा च ययतु' इति ङ. झ. पाठः ॥

९ 'पक्षे श्नाग्रहणे व्यर्थं' इति ग. घ. पाठः । 'श्नाग्रहणं कर्तव्यं स्यात्' इति ङ. पाठः ॥

१० 'प्रस्तुवीत' इति झ. पाठः ॥

( प्रदीपः ) **प्रस्तुवीतेति** । कर्मकर्तरीदमुदाहरणम्, तत्र यकः प्रतिषेधात् । कर्मणि तु प्रस्तूयेतेति भाव्यम् । ननु चिणोऽपि प्रतिषेधात्कथं चिण्वद्भावः । एवं तर्हि भावकर्मणोश्चिण्दर्शनादत्र चिण्वद्भावप्रसङ्ग इत्याशयः ॥

असमाश्वस्योदाहरणान्तरमाह—**इदं चापीति** । येभ्यो धातुभ्यः कर्मकर्तरि चिण् प्रतिषिध्यते तेषां चिण्वद्भावस्यापि निषेधः ॥

**वृद्धिरिति** । एतच्च 'ण्यल्लोपौ–' इत्यायनपेक्ष्योक्तम् । अत्र हि चिण्वद्भावादतो लोपोऽपि प्राप्तो वृद्धिश्च । यावादिभ्यो हि शपो लुग्विधानेन सार्वधातुकेऽतो लोपाभावो ज्ञापित इति स्वाश्रयोऽतो लोपो मा भूत्, चिण्वद्भावाच्चिणि तस्य दर्शनात् स्यादेव । भाष्यकारेण तु प्राप्तिमात्रं वृद्धेराश्रित्योक्तम् । **अथवा** दोषोपलक्षणं वृद्धिः, अतो लोपेऽपि रूपासिद्धिप्रसङ्गात् । वृद्धौ कृतायां 'आद्गुणः' च प्राप्नोति युक्च, तत्र वार्णादाङ्गं बलीय इति युक्प्रसङ्गः । इट्प्रसङ्गस्तु विशेषाभावान्नोक्तः ॥

( उद्योतः ) [1][ विधिलिङि व्यवधानान्नेत्याशयेनाह—भाष्ये–किमिति ॥ नैतदुदेति । प्रत्युदाहरणमित्यर्थः । एवमग्रेऽपि ॥ ] ननु स्तौतेः परस्मैपदित्वान्नेदं कर्तरि रूपं, नापि कर्मणि, यक्प्रसङ्गादिति कथमिदमत आह—**कर्मकर्तरीति** । तत्र 'न दुहस्नुनमां' इति यक्प्रतिषेधः ॥

असमाश्वासे बीजमाह—**येभ्य इति** । वस्तुत इदं **चिन्त्यम्** । चिण्प्रतिषेधेऽपि चिण्वद्भावप्रतिषेधे मानाभावादित्याहुः ॥

**अनपेक्ष्येति** । तदपेक्षायां तु वृद्धिं बाधित्वाऽकारलोपेन भाव्यम् ॥ ननु यावादिभ्यो लुग्विधानेनातो लोपाभावः सार्वधातुके ज्ञापित इति कथमेतत्प्राप्तिरत आह—**यावादिभ्य इति** ॥ **स्वाश्रयः**– सार्वधातुकाश्रयः ॥ ननु चिणि अतो लोपाविधानात्कथं चिण्वद्भावात्प्राप्तिरत आह—**चिणि तस्येति** । अदन्ताच्चिण्प्रयोगस्यानभिधानाच्चिणि तस्यादर्शनमित्यन्ये ॥ ननु वृद्धावाद्गुणप्राप्तेः कुतो युक्प्रसङ्गोऽत आह—**वृद्धाविति** ॥ चिण्वद्भावादिट्प्रसङ्ग इति कुतो नोक्तमत आह—**इट्प्रसङ्गस्त्विति** । सीयुडादेरिटि सलोपे सवर्णदीर्घे विशेषाभाव इति भावः ॥

—•—

( १२८० विधिसूत्रम् ॥ ६ । ४ । २ आ. १० )

## ३०४५ भ्रस्जो रोपधयोरमन्यतरस्याम् ॥ ६ । ४ । ४७ ॥

( रमागमाधिकरणम् )

( रमागमस्थाननिर्धारणभाष्यम् )

**अयं रम् रेफस्य स्थाने कस्मान्न भवति ?**

**'मिदचोन्त्यात्परः' (१।१।४७) इत्यनेनाचामन्त्यात्परः क्रियते ।**

**रेफस्य तर्हि श्रवणं कस्मान्न भवति ?**

**षष्ठ्युच्चारणसामर्थ्यात् ।**

**भारद्वाजीयाः पठन्ति—**

**"भ्रस्जो रोपधयोर्लोप आगमो रम् विधीयते ।" इति ॥**

( प्रदीपः ) आदेशान्तराणां स्थानितुल्यदेशानां दर्शनात् पृच्छति—**अयं रमिति** । रेफग्रहणस्योपलक्षणार्थत्वादुपधाया अपीति बोद्धव्यम् ॥

**रेफस्य तर्हीति** । [2]स्थानान्तरे प्रवृत्तेन रमाऽनिवर्तितत्वात् ॥ **षष्ठ्युच्चारणसामर्थ्यादिति** । 'रोपधयोः' इति स्थानषष्ठ्या तयोरत्र विषयेऽप्रयोगः प्रतिपाद्यते । रोपधयोः प्रसङ्गे रम् प्रयुज्यते रोपधे न [3]प्रयुज्येतेत्यर्थे रम् प्रयुज्यमानो मित्त्वादचोऽन्त्यात्परो भवतीति वाक्यार्थः सम्पद्यते । यस्य तु देशान्तरे नास्ति विधानं स स्थानिदेश एव भवति, [4]तत्प्रसङ्गे तस्य विधानात् विशिष्ट[5]देशश्च स्थानिनः प्रसङ्ग इति तद्देशेनैवादेशेन भाव्यम् ॥ **भारद्वाजीया इति** । ते हि 'सनः क्तिचि लोप–' इत्यतो लोपग्रहणमनुवर्त्य रोपधयोर्लोपं रमागमं चान्यतरस्यां विदधति ॥

( उद्योतः ) **उपधाया अपीति** । एवं च पर्यायेण तत्तत्स्थाने प्रसङ्ग इति भावः ॥

**'प्रयुज्येत–इति'** इत्यन्तेनैतत्सूत्रमात्रीयमवान्तरवाक्यार्थं दर्शयित्वा 'मिदचः–' इति परिभाषैकवाक्यतया महावाक्यार्थं दर्शयति—**रमित्यादिना** ॥ **मित्त्वादिति** । मित्त्वेन स्थानिदेशत्वं बाध्यत इति भावः ॥ आदेशस्य स्थानिदेशत्वे हेतुमाह—**विशिष्टदेशश्चेति** । यद्देशे स्थानिनः प्रसङ्गस्तद्देश एवादेशौचित्यादिति भावः ॥

स्थानेषष्ठीनिर्देशादन्यदेशत्वेऽपि तन्निवृत्तिमृष्यन्तरसंवादेन दर्शयति—**भारद्वाजीया इति** ॥

( ६५४४ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ [11]भ्रस्जादेशात्सम्प्रसारणं विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) **भ्रस्जादेशात्सम्प्रसारणं विप्रतिषेधेन भवति ।**

**भ्रस्जादेशस्यावकाशः—[12]भर्ष्टा, भर्ष्टुम् ।**

**सम्प्रसारणस्यावकाशः—भृज्जति ।**

**इहोभयं प्राप्नोति—भृष्टः, भृष्टवानिति ।**

**सम्प्रसारणं भवति विप्रतिषेधेन ॥**

---

१ [ ] अत्रत्यो ग्रन्थो ङ. पुस्तक एव ॥
२ 'सार्वधातुकमात्रे ज्ञापि' इति झ. पाठः ॥
३ 'ननु चिण्वद्भा' इति ञ. पाठः ॥
४ रेफस्य श्रवणे हेतुमाह—स्थानान्तर इति ॥
५ 'प्रयुज्येते–इत्यर्थः । रम्प्र' इति क. च. झ. ङ. पाठः ॥
६ 'तस्य तु प्रसङ्गे तस्य' इति क. पाठः ॥
७ विशिष्टदेशश्च–निर्णीतविषयश्चेत्यर्थः ॥
८ भारद्वाजीयाः–श्लोकवार्तिककाराः ॥

९ 'प्रयुज्यत इत्यन्तेन' इति ङ. पाठः । सर्वेषूपलब्धपुस्तकेषु 'प्रयुज्येत इतीत्यन्तेन' इत्येवं पाठो दृश्यते । प्रदीपे च तादृशपाठस्यानुपलम्भात् 'प्रयुज्येत इतीत्यन्तेन' इत्येवं पाठ आदृतः ॥
१० स्थानषष्ठीति । रमोऽन्यदेशत्वेऽपि स्थानषष्ठीनिर्देशसामर्थ्यात् रेफस्य निवृत्तिमित्यन्वयः ॥
११ भ्रस्जादेशादिति । निवर्तकत्वेनागमस्यापि आदेशत्वव्यवहारः ॥
१२ 'भर्ष्टा, भ्रष्टा' इति छ. पाठः ॥

( प्रदीपः ) **भृज्जतीति** । आर्धधातुकाधिकारादत्र रमोऽप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये—**भर्ष्टा भर्ष्टुमिति** । क्ङित्वाभावादत्र संप्रसारणाप्रसङ्ग इति भावः ॥

( विप्रतिषेधाक्षेपे वार्तिकावतरणभाष्यम् )

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।**

**न वक्तव्यः ।**

( ६५४५ विप्रतिषेधाभावोपपादकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ रसोर्वचनात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **रसोर्वा ऋ भवतीति वक्ष्यामि ॥**

( प्रदीपः ) **रसोरिति** । साच्कस्य रेफस्य सकारस्य च ऋशब्दो वाऽऽदेशः । तत्र कृतेऽक्ङिति गुणः प्रवर्तते–भर्ष्टेति । ऋकाराभावपक्षे तु–भ्रष्टेति । क्ङिति तु ऋशब्दे–भृष्टमिति भवति । तदभावपक्षेऽपि सम्प्रसारणे सति–भृष्टमिति नार्थः पूर्वविप्रतिषेधेन ॥

(उद्द्योतः) (भाष्ये) **रसोरिति** । रस इति निर्देशे 'अलोऽन्त्यस्य' प्रसङ्गाद्रसोरिति द्विवचननिर्देशः ॥ **साच्कस्येति** । रेफमात्रस्य ऋकारे, अकारे यणि भ्रष्टेत्येव स्यादिति तद्विधानानर्थक्यं स्यादिति भावः ॥

**( न्यासान्तरेऽपि विप्रतिषेधावश्यकत्वप्रतिपादकभाष्यम् )**

**रसोर्वचने सिचि वृद्धेर्भ्रस्जादेशो वक्तव्यः । वृद्धौ कृतायामिदमेव रूपं स्यात्—अभ्राक्षीत् । इदं न स्यात्—अभार्क्षीत्–इति ।**

**सर्वथा वयं पूर्वविप्रतिषेधान्न मुच्यामहे । सूत्रं च भिद्यते ॥**

( प्रदीपः ) इतरोऽत्रापि पूर्वविप्रतिषेधो वक्तव्य इति तुल्यतां प्रतिपादयन्नाह—**रसोरिति** । भ्रस्जेः सिचि ऋभावं विकल्पितं बाधित्वा परत्वान्नित्यं हलन्तलक्षणा वृद्धिः प्राप्नोतीति ऋभावार्थः पूर्वविप्रतिषेधो वक्तव्य एव । तेन रूपद्वयं सिद्ध्यति—अभ्राक्षीत्, अभार्क्षीदिति ॥

ननु ऋभावो नित्यः, कृतायामपि वृद्धावेकदेशविकृतस्यानन्यत्वात् प्रसङ्गात् । वृद्धिस्तु शब्दान्तरस्य प्राप्तिप्रसङ्गादनित्या । अजाकृतेरेकत्वान्नास्ति वृद्धेः शब्दान्तरस्य प्राप्त्याऽनित्यत्वमिति द्वयोर्नित्ययोः परत्वाद्वृद्धिप्रसङ्गः । अन्तरङ्ग ऋभाव इति चेत्; न सिच्यन्तरङ्गमस्तीति ज्ञापयिष्यते । रम्भावे तु क्रियमाणे परत्वाद् वृद्धौ कृतायां पुनः प्रसङ्गविज्ञानात् रमि सति सिद्धम्—अभार्क्षीदिति ॥

( उद्द्योतः ) **एकदेशविकृतस्येति** । 'राजकीयम्' इत्यादाविव स्थानिवद्भावाप्राप्तावपि लोकसिद्धश्वपुच्छादिदृष्टान्तमूलकैकदेशविकृतन्यायेन रस्त्वमिति भावः ॥ **शब्दान्तरस्येति** । कृते ऋकारस्य, अकृतेऽकारस्येति भावः ॥ जातिपदार्थाश्रयेण परिहरति—**अजाकृतेरिति** । वस्तुत ऋभावस्यापि शब्दान्तरप्राप्त्याऽनित्यत्वम् । कृताऽकृतप्रसङ्गित्वमात्राश्रयणे तु द्वयोरपि नित्यत्वं बोध्यम् । तस्माद्वृद्धौ कृतायां पुनः प्रसङ्गविज्ञानादृभावेऽपि लक्ष्ये लक्षणस्येति न्यायेन पुनर्वृद्धिप्राप्तौ 'अभार्क्षीत्' इति न सिध्येत् । इष्टरूपयोः 'अभ्राक्षीत्' इति सिध्येत् 'अभार्क्षीत्' इति न सिध्येदिति भाष्यार्थ इति बोध्यम् ॥ **अन्तरङ्ग इति** । आर्धधातुकमात्राश्रयत्वात् । वृद्धिस्तु परस्मैपदमप्यपेक्षत इति बहिरङ्गेति भावः ॥ **न सिचीति** । 'अयं निषेध उभयोरुच्स्थानिकत्व एव, णिश्रिग्रहणस्य सजातीयापेक्षज्ञापकत्वात्' इति तु नाश्रितम् । 'इको गुणवृद्धी' इति सूत्रे भाष्य उक्तत्वात् 'ज्ञापितम्' इति वक्तुं युक्तम् । अग्रे तु भाष्ये क्वापीदं न दृश्यते इति ध्येयम् । बहुस्थानिकत्वेनास्यापि बहिरङ्गत्वम् । अत एव 'न सिच्यन्तरङ्गम्' इत्यस्याभावेऽपि न क्षतिरित्यन्ये ॥ ननु रम्भावमतेऽप्ययं पूर्वविप्रतिषेध आवश्यकः । अन्यथा परत्वाद्वृद्धौ सकृद्गतिन्यायेन स न स्यादत आह—**रम्भावे इति** । तत्र रम्वाकारादुत्तर इति सिद्धमिति भावः । इदमुपलक्षणम्, बरीभृज्यत इत्यत्र नित्यतया जद्वयश्रवणार्थं 'ऋभावात्संप्रसारणं पूर्वविप्रतिषेधेन' इत्यस्याप्यावश्यकत्वात् । **किञ्च–अपि**छिटि ऋभावेऽसंयोगात्परत्वेन कित्त्वे गुणाभावे बभृज्जतुरिति स्यात्, इष्यते तु बभर्जतुरिति; तत्सिध्यर्थं रमेव कार्यः । न च संनिपातपरिभाषयाऽत्र न दोषः । शब्दतोऽर्थतो वाऽस्याकित्संनिपातलक्षणत्वाभावात् । सर्वं चेदं **'सूत्रं च'** इति चेन संगृहीतं भाष्ये ॥

**( विप्रतिषेधप्रत्याख्यानभाष्यम् )**

**यथान्यासमेवास्तु ।**

**ननु चोक्तं—*भ्रस्जादेशात्सम्प्रसारणं पूर्वविप्रतिषेधेन*इति ।**

---

१ भाष्यमेवैतदिति च. छ. ट. पाठः । वस्तुतस्तु कुण्डलनारूपस्य भाष्यस्य सर्वत्र दृश्यमानत्वेन क. ङ. ज. पुस्तकेषु वार्तिकपाठेन चात्र तत्त्वेनोल्लेखः ॥

२ अलोऽन्त्यस्य प्रसङ्गादिति । 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' इति परिभाषा तु नास्त्येवेति भावः ॥

३ 'ऋकारे अकारे परे यणि' इति ड. पाठः ॥

४ नर्थक्यं स्यादिति । तेन वार्तिकेऽकारो विवक्षित इति सूचितम् ॥

५ 'रसोर्वचने सिचि वृद्धेर्भ्रस्जादेशः' इत्येवं वार्तिकमत्र च. छ. ङ. पुस्तकेषु पठ्यते । क. अ. ट. पुस्तकेषु कुण्डलनारूपस्य भाष्यस्यानुपलब्ध्या च नैतद्वार्तिकमत्र गृहीतम् ॥

६ 'न्तरस्य प्रसङ्गा–' इति क. ङ. पाठः ॥

७ राजकीयमिति । अत्र हि स्थानिवद्भावेन नान्तत्वमाश्रित्य यथा टिलोपो न भवति तथा कृतायामपि वृद्धौ स्थानिवद्भावेन रसत्वं न संभवतीति एकदेशविकृतन्यायाश्रयणम् ॥

८ बरीभृज्यत इत्यत्र नित्यतयेति । रसोर्वा ऋवचनमित्यस्य नित्यतया बरीभृज्यते–भ्रज्जेर्यङि कृते इत्येवमन्वयः । ऋभावात्संप्रसारणं विप्रतिषेधेनेत्यस्याभावे जकारस्यैकस्य श्रवणं प्राप्नोति तत्र जद्वयश्रवणार्थं तत्कर्तव्यमिति भावः । 'बरीभृज्यते' इति झ. ढ. पाठः ॥

९ ऋभावात्संप्रसारणं पूर्वविप्रतिषेधेनेत्यस्याश्रयणे दोषमाह—**अपि छिटीति** । तदाश्रयणे हि अपिछिटि परतः 'बभ्रस्ज्–अतुस्' इत्यत्र ऋभावं बाधित्वा संप्रसारणं स्यादिति बभृज्जतुरित्यस्यापत्तिः । तत्र ऋभावेऽसंयोगात्परत्वेन किस्वात् गुणाभावे प्राप्ते बभृज्जतुरिति स्यादित्यन्वयः ॥

१० सर्वं चेदमिति । 'सूत्रं च भिद्यते' इति भाष्यस्थचकारेण सर्वमेतत्संपादितमिति भावः ॥

इदमिह सम्प्रधार्यम्—भ्रस्जादेशः क्रियतां सम्प्रसारणमिति, किमत्र कर्तव्यम् ?

परत्वात् भ्रस्जादेशः । नित्यत्वात्सम्प्रसारणम्, कृतेऽपि भ्रस्जादेशे प्राप्नोत्यकृतेऽपि ।

भ्रस्जादेशोऽपि नित्यः । कृते[1] सम्प्रसारणे प्राप्नोति, अकृतेऽपि प्राप्नोति ।

कथम् ?

यो सावृकारे रेफस्तस्य चोपधायाश्च कृतेऽपि प्राप्नोति ॥

अनित्यो भ्रस्जादेशः । न हि कृते सम्प्रसारणे प्राप्नोति ।

किं कारणम् ?

न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।

अथापि कथंचिद्गृह्यन्ते, एवमप्यनित्यः ।

कथम् ?

उपदेश इति वर्तते । तच्चावश्यमुपदेशग्रहणमनुवर्त्यम्–वरीभृ[2]ज्यत इत्येवमर्थम् ॥

( प्रदीपः ) योऽसावृकारे रेफ इति । ननु च ऋकारावयवस्य रेफस्य रम् क्रियमाणः कथमन्त्यादचः परः स्यात् ? मा भूदन्त्यादचः परः । तत्र विषये आदेशो भविष्यति । मित्त्वन्तु भर्ष्टेत्यादौ सावकाशम् ॥

उपदेश इति वर्तते इति । भ्रस्जेरुपदेशे यो रेफस्तत्स्थाने रम् भवति । न च ऋकारावयव उपदेशे भ्रस्जे रेफो भवति ॥ वरीभृज्यत इति । तन्मध्यपतितस्तद्ग्रहणेन गृह्यत [3]इति रीको रेफो भ्रस्जेर्भवतीति रम्प्रसङ्गः । भ्रस्जेरुपदेशे तु नासौ रेफ इति रमभावः । 'अनन्त्यविकारे–' इत्येतत्तु प्रयोजनाभावान्[4]नाश्रितम् ॥

( उद्द्योतः ) ननु चेति । [5]तदवयवरेफस्य पृथङ्निष्कर्षायोगादृकारस्यैव रमा निवृत्तिर्वाच्येत्यजभावादन्त्यादचः परो न स्यादिति प्रश्नः ॥ तत्र विषये–संप्रसारणविषये ॥ आदेशो भविष्यतीति । स्थानिसमानदेश आदेशो भविष्यतीत्यर्थः ॥ तन्मध्यपतित इति । ननु द्विःप्रयोगे द्विर्वचने द्वयोः प्रत्येकं तत्त्वेऽपि न समुदायस्य तत्त्वमिति नैतन्न्यायावसरः । अत एव 'दयतेः–' इति सूत्रे 'अस्तेर्द्वित्वे कृत उत्तरखण्डस्य भूभावे कृते'इत्यादि वक्ष्यति भाष्यकृत् । अभ्यासस्य नैरर्थक्येन तदवयवत्वेऽपि न तत्र रम्शास्त्रप्रवृत्तिः, उत्तरखण्डेन व्यवधानाच्च–इति चेन्न; अथापि कथंचिदित्यादिभाष्यस्यैकदेश्युक्तित्वेनाऽदोषात् ॥

—⊶○⊷—

( १२८१ विधिसूत्रम् ॥ ६ । ४ । २ आ. ११ )

## ३०४६ अतो लोपः ॥ ६ । ४ । ४८ ॥

( लोपाधिकरणम् )

( ६५४६ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

॥*॥ ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) ण्यल्लोपावियङ्य[6]ण्वृद्धिगुणदीर्घत्वेभ्यो भव[7]तो विप्रतिषेधेन ॥

( णिलोपेयङादेशयोर्विप्रतिषेधप्रयोजनभाष्यम् )

णिलोपस्यावकाशः–कार्यते, हार्यते ।

इयङादेशस्यावकाशः—श्रियौ, श्रियः ।

इहोभयं प्राप्नोति–आटिटत्, आशिशत् ॥

ननु चात्र यणादेशेन भवितव्यम् ।

इदं तर्हि—अततक्षत्, अररक्षत् ॥

( प्रदीपः ) यणादेशेनेति । 'एरनेकाच–' इत्यनेन । ततश्च यणा बाधनादियङः संप्रधारणगोचरत्वाभावः ॥

( णिलोपयणोर्विप्रतिषेधप्रयोजनभाष्यम् )

यणादेशस्यावकाशः—निन्यतुः, निन्युः ।

णिलोपस्य स एव ।

इहोभयं प्राप्नोति—आटिटत्, आशिशत् ॥

( णिलोपवृद्ध्योर्विप्रतिषेधप्रयोजनभाष्यम् )

वृद्धेरवकाशः—सखायौ, सखायः ।

णिलोपस्यावकाशः स एव ।

इहोभयं प्राप्नोति–कारयतेः–कारकः, हारयतेः–हारकः ॥

( प्रदीपः ) सखायाविति । 'संख्युरसंबुद्धौ' इति शास्त्रातिदेशपक्षे वृद्धेरयमवकाशः, न तु कार्यातिदेशपक्षे–इत्यवसेयम् ॥

( उद्द्योतः ) शास्त्रातिदेशेति । तत्पक्षे हि सखायावित्यादौ 'अचो ञ्णिति' इत्येव वृद्धिः प्रवर्तते । तस्या एव च कारक इत्यादौ प्राप्तिः । कार्यातिदेशे तु कारक इत्यादौ प्राप्तायाः 'अचो ञ्णिति' इति वृद्धेर्नायमवकाशः स्यादिति भावः । कार्यातिदेशेऽपि वृद्धिशासनकर्तृत्वं तस्यैवेति भाष्याल्लभ्यत इत्यन्ये ॥

( णिलोपगुणयोर्विप्रतिषेधप्रयोजनभाष्यम् )

गुणस्यावकाशः—चेता, स्तोता ।

णिलोपस्यावकाशः—आटिटत्, आशिशत् ।

इहोभयं प्राप्नोति–कारणा, हारणा ॥

---

१ 'कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि' इति च. ङ. पाठः । 'कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति' इति छ. झ. पाठः ॥

२ सर्वेषु लिखितपुस्तकेषु एकजकारघटितः पाठः । मुद्रितेषु द्विजकारात्मकपाठः । प्रदीपे प्रतीकपाठस्तु सर्वत्रैकजकारात्मक एवेति सुधियोऽत्र विदांकुर्वन्तु ॥

३ 'इति रीकारे रेफो' इति अ. पाठः ॥

४ नाश्रितमिति । इतराव्यवधाने एव प्रवृत्तिरित्यनाश्रित्येदम् ॥

५ रमोऽन्त्यादचः परत्वाभावमुपपादयति—तदवयवरेफस्येति । ऋकारावयवरेफस्य स्थाने जायमानो नान्तरीयकतया ऋकारस्थाने भवतीति भावः ॥

६ वार्तिके 'यण्गुणवृद्धि' इत्येवं पाठः सर्वत्र, भाष्ये तु 'यण्वृद्धिगुण' इति अ. क. ङ. पुस्तकेषु पाठः । च. छ. झ. ट. पुस्तकेषु 'यण्गुणवृद्धि' इति पाठः । अस्मदुपलब्ध ङ. पुस्तके वार्तिकस्थ 'यण्गुणवृद्धि' इति प्रतीकं निर्दिश्य 'वार्तिके वृद्धिगुणेति पाठः, अग्रिमभाष्यस्वरसात्' इति लेखककर्तृकनिर्देशः ॥

७ 'भवतः पूर्वविप्रति' इति च. छ. झ. पाठः ॥

(प्रदीपः) णिलोपस्यावकाश आटिटदिति। यणो णिलोपेन बाधितत्वादिति भावः॥

कारणेति। ननु चात्रापि इयङोऽपवादः 'एरनेकाचः-' इति यण् प्राप्नोति। परत्वात्तस्य गुणेन बाधनात्, गुणस्यापि पूर्वविप्रतिषेधाण्णिलोपेन-इत्यदोषः। एकैकेन सह णिलोपस्य विचारादियङादीनामन्यतमविषयोऽपि णिलोपस्यावकाश उपन्यस्यते॥

(उद्योतः) नन्वाटिटदित्यादौ यणः प्राप्तेः कथमयं णिलोपावकाशोऽत आह—यण इति। एवञ्च गुणणिलोपयोः स्पर्धायामवकाश एवेति भावः॥ तद्वक्ष्यति—एकैकेन सहेति॥

ननु चात्रापीति। एवं च गुणस्यैव कथमिदं स्पर्धास्थानमिति भावः॥ समाधत्ते—परत्वादिति॥

(णिलोपदीर्घयोर्विप्रतिषेधप्रयोजनभाष्यम्)

दीर्घत्वस्यावकाशः—चीयते, स्तूयते।

णिलोपस्य स एव।

इहोभयं प्राप्नोति-कार्यते, हार्यते।

णिलोपो भवति विप्रतिषेधेन॥

(णिलोपे पूर्वविप्रतिषेधाक्षेपभाष्यम्)

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।

न वक्तव्यः। सन्त्वत्रैते[2] विधयः। एतेषु विधिषु कृतेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो[1] भविष्यति॥

(प्रदीपः) सन्त्वत्रैत इति। ननु कारणा कारक इत्यत्रादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायोः कृतयोरन्त्यस्य णिलोपः प्राप्नोति। वार्णादाङ्गं बलीय इत्ययायौ बाधित्वा णिलोपो भविष्यतीत्यदोषः॥

(उद्योतः) अन्तरङ्गत्वादिति। वर्णमात्राश्रयत्वादिति भावः। अत्रे सन्त्वेत इत्यादि अन्त्यलोपः प्रसज्येतेत्यन्तं भाष्यमेकदेश्युक्तिः। वृद्ध्यादिस्थानीकारवृत्तिणित्त्वस्य 'भोभगो-' इतिसूत्रवक्ष्यमाणभाष्यरीत्याऽल्विधित्वेन स्थानिवद्भावेन णित्त्वाऽलाभात्। किं च 'णेरनिटि'इत्यस्य ण्यन्ताङ्गस्य निर्दिश्यमानो योऽन्त्यस्तस्य लोप इत्यर्थ इति 'एकाच-' इति सूत्रभाष्याल्लभ्यते। एवं चेयङि अन्त्यस्य निर्दिश्यमानधर्मावच्छिन्नत्वाभावात् समुदायस्य चान्त्याल्रूपत्वाभावेन लोपाप्राप्त्याऽस्यैकदेश्युक्तित्वमेवोचितमिति दिक्। णिलोपपूर्वविप्रतिषेधे चानिटीति ज्ञापकम्। परत्वाद्गुणादीनां बाधकत्व इडादावपि गुणेन बाधे सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम्॥

(समाधानभाष्यम्)

नैवं शक्यम्। इयङादेशे हि दोषः स्यात्।

किम्?

अन्त्यलोपः प्रसज्येत॥

(पूर्वविप्रतिषेधेऽल्लोपेयङ्यणुदाहरणाभावभाष्यम्)

अल्लोपस्येयङ्यणोश्च नास्ति सम्प्रधारणा॥

(अल्लोपवृद्ध्योर्विप्रतिषेधप्रयोजनभाष्यम्)

वृद्धेरवकाशः—प्रियमाचष्टे प्रापयति।

अल्लोपस्यावकाशः—चिकीर्षिता, चिकीर्षितुम्।

इहोभयं प्राप्नोति—चिकीर्षकः, जिहीर्षकः॥

गुणस्याल्लोपस्य च नास्ति सम्प्रधारणा॥

(प्रदीपः) प्रापयतीति। प्रियस्य प्रादेशे वृद्धौ च युगागमः। अनार्धधातुकत्वाण्णेर्धातोरविधानादतो लोपस्यात्राप्रसङ्गः॥

(उद्योतः) नन्वत्राप्यतो लोपप्राप्तेः कथमयं वृद्धेरवकाशोऽत आह—अनार्धधातुकत्वादिति। तत्र हेतुः-धातोरविधानम्॥

(अल्लोपदीर्घत्वयोर्विप्रतिषेधप्रयोजनभाष्यम्)

दीर्घत्वस्यावकाशः—अपि काकः श्येनायते।

अल्लोपस्य स एव।

इहोभयं प्राप्नोति—चिकीर्ष्यते, जिहीर्ष्यते।

अल्लोपो भवति विप्रतिषेधेन॥

(विप्रतिषेधान्यथासिद्धिसाधकभाष्यम्)

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।

न वक्तव्यः। इष्टवाची परशब्दः। विप्रतिषेधे परं-यदिष्टं तद्भवति-इति॥

---

(१२८२ विधिसूत्रम्॥ ६। ४। २ आ. १२)

## ३०४७ यस्य हलः॥ ६। ४। ४९॥

(वार्तिकावतरणे पक्षद्वयोपस्थापकं भाष्यम्)

किमिदं यलोपे वर्णग्रहणमाहो स्वित्सङ्घातग्रहणम्?

कश्चात्र विशेषः?

(प्रदीपः) किमिदमिति। यद्यागन्तुनाऽकारेण निर्देशस्ततो वर्णमात्रग्रहणम्, अन्यथा तु संघातग्रहणमिति पक्षद्वयसम्भवः॥

(६५४७ वर्णग्रहणे दोषवार्तिकम्॥ १॥)

॥ * ॥ यलोपे[3] वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः॥ * ॥

(भाष्यम्) यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः। शुच्यिता[4]। मव्यिता॥

---

१ 'ग्रहणाण्णिलोपो' इति छ. पाठः॥

२ अत्र सन्त्वेत इति। भाष्ये 'सन्त्वत्रैते विधयः' इत्येव पाठः सर्वत्र। उद्द्योते प्रतीकमपि सर्वत्रैवमेवेति दृश्यते॥

३ 'यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः' इति वार्तिकमत्र अ. क. पुस्तकयोर्न दृश्यते॥

४ 'शुच्यिता, शुच्यितुम्' इति च. छ. झ. पाठः॥

( संघातग्रहणोपस्थापकभाष्यम् )

**अस्तु तर्हि सङ्घातग्रहणम् । यदि सङ्घातग्रहणम्, अन्त्यस्य लोपः प्राप्नोति ।**

**सिद्धोऽन्त्यस्य पूर्वेणैव । तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति ॥**

(प्रदीपः) **अन्त्यस्येति** । 'अलोऽन्त्यस्य'इति वचनात् ॥

( उद्द्योतः ) **अलोऽन्त्यस्येति** । हलन्ताङ्गस्य निमित्तं यो यशब्दस्तस्य लोप इत्यर्थं इति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि तेनातिप्रसक्तमिति कृत्वा नियमो विज्ञास्यते—यस्य हल एव, नान्यतः ।**

**क्व मा भूत् ?**

**लोलूयिता, योयूयिता ।**

**कैमर्थक्यान्नियमो भवति ?**

**विधेयं नास्तीति कृत्वा ॥**

**इह चास्ति विधेयम् ।**

**किम् ?**

**अन्त्यस्य लोपः प्राप्तः, सर्वस्य विधेयः ॥**

( प्रदीपः ) **कैमर्थक्यादिति** । कोऽर्थो यस्य तत्किमर्थकम्, तस्य भावः–कैमर्थक्यम् । प्रश्नविषययोः सम्बन्धोऽत्र भावप्रत्ययवाच्यः ॥

(उद्द्योतः) नन्वारम्भसामर्थ्यादित्ययुक्तम्, आरम्भस्य नियमार्थत्वेन चारितार्थ्यात्–इत्याशङ्कते–भाष्ये—**एवमपीति** ॥

**सम्बन्धोऽत्रेति** । 'किमर्थक'शब्देन जिज्ञासाविषयप्रयोजनकमुच्यते । तदुत्तरभावप्रत्ययेन जिज्ञासाप्रयोजनयोः संबन्धो विषयविषयिभावरूप उच्यते । प्रयोजनज्ञाने हि न तज्जिज्ञासा । तदज्ञानं च तदभावात्, सत्त्वे हि तज्ज्ञायेतैवेति स निष्प्रयोजनत्वरूपतया फलति ॥

( समाधानभाष्यम् )

**तत्रापूर्वो विधिरस्तु नियमो[1] वा–इति**

**अपूर्व एव विधिर्भविष्यति ।**

**एवमप्यन्त्यस्य[2] लोपः प्राप्नोति ।**

**किं कारणम् ?**

**न हि लोपः सर्वापहारी ।**

**ननु च सङ्घातग्रहणसामर्थ्यात्सर्वस्य भविष्यति ॥**

( प्रदीपः ) **अपूर्व एव विधिरिति** । नियमे हि श्रुतार्थत्यागेनाश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्च प्राप्नोति ॥

**एवमप्यन्त्यस्येति** । 'अलोऽन्त्य'परिभाषोपस्थानादपूर्वस्य[3] विधेरसम्भवात् 'विधिनियमसम्भवे च विधिरेव ज्यायान्' इत्यस्य न्यायस्यायमविषय इत्यर्थः ॥

**संघातग्रहणसामर्थ्यादिति** । [4]किं 'यस्य हलः' इत्यस्य विधिरूपत्वं बाध्यताम्, उत 'अलोऽन्त्यस्य'इति परिभाषा इति ? पारार्थ्यादप्रधानस्य परिभाषायास्त्यागो युक्तो न तु प्रधानस्य विधिरूपत्वस्य बाधनम् ॥

( उद्द्योतः ) नियमाद्विधेर्लिवत्त्वे युक्तिमाह—**नियमे हीति** । **'सामर्थ्यात्परिकल्पनम्'**इत्यनेन तस्या अशाब्दत्वं सूचयति ॥

**अलोऽन्त्यपरिभाषेति** । एवं च परिभाषाबाधस्य विधिवादिनोऽप्यावश्यकत्वेनास्य विधेर्न नियमाल्लघुत्वमिति भावः ॥

**विधिरूपत्वस्येति** । 'विधिरूपबाधनम्' इति पाठे विधेर्यद्रूपंविधित्वं तस्य बाधनमित्यर्थः । इदं[5]मुपलक्षणम् । नियमवादिना प्रधानस्य 'अतो लोपः' इत्यस्य [6]हलोऽनुत्तरयविषये बाधः कल्प्य इत्यपि बोध्यम् ॥

( ६५४८ संघातग्रहणे दोषवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषः ॥ * ॥

( भाष्यम् ) **सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषो भवति । समिधिता । समिध्यिता । यदा लोपस्तदा सर्वस्य लोपः । यदाऽलोपस्तदा सर्वस्यालोपः प्राप्नोति ॥**

( प्रदीपः ) **समिधितेति** । समिधमिच्छत्यात्मन इति क्यच् । ततस्तृच्, इट् । इह वर्णग्रहणे 'क्यस्य विभाषा' इत्यत्र क्येन यकारो विशेष्यते–क्यस्य यो यकारो हलः परस्तस्य विभाषा लोपो भवति, अकारस्य तु 'अतो लोपः' इति नित्यो लोप इति यथेष्टं रूपद्वयं सिध्यति । सङ्घातग्रहणे तु 'यस्य हलः' इत्यनेन येन नाप्राप्तिन्यायेनातो लोपो बाध्यः, यलोपोऽपि 'क्यस्य विभाषा' इति विकल्पेन बाध्यः । ततश्च पक्षे सङ्घातस्यैव श्रवणं प्राप्नोति,

1 'नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः' इति च. छ. झ. पाठः ॥

2 'अन्त्यस्य प्राप्नोति' इति च. छ. झ. पाठः ॥

3 अपूर्वस्य–सर्वलोपरूपस्य । विधेरसंभवे परिभाषोपस्थानं हेतुः । विधिनियमेति न्यायाविषयत्वे च विधेरसंभवो हेतुः ॥

4 संघातग्रहणसामर्थ्यमुपपादयति—किं यस्य हल इति ॥

5 ननु विधिनियमपक्षयोर्नियमपक्ष एव ज्यायान्, यतस्तस्मिन् विधिपक्षे परिभाषाबाधस्य नाप्राप्तत्वेन नियमपक्षे च परिभाषाबाधाभावेन नियमपक्षो निर्दुष्ट इत्येतन्निराकरोति—इदमुपलक्षणमित्यादिना । एवञ्च विधिपक्षे परिभाषाबाधः, नियमपक्षे हि प्रधानस्य लोपशास्त्रस्य बाध इति विधिपक्ष एव सिद्धान्तिसंमतः ॥

6 'हलोऽनन्तरयविषये' इति झ. पाठः स च प्रामादिकः । नियमस्य विधिमुखेन प्रवृत्तौ हि नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे संकोचः क्रियते । एवं चात्र आर्धधातुकपरकयविषयातिरिक्तत्वेन 'अतो लोपः' इति शास्त्रीयोद्देश्यतावच्छेदकसंकोचः क्रियते । तेन हलोऽनन्तरयविषये 'यस्य हलः' इत्येतत्प्रवर्तते । हलोऽनुत्तरयविषये तु नैतत्, नापि 'अतो लोपः' इति । अतो हलोऽनुत्तरयविषये इत्येव पाठः सम्यक् । नियमस्य निषेधमुखेन प्रवृत्तौ तु हलोऽनुत्तरयविषये नेत्येवार्थः स्यात् । एवं च 'हलोऽनन्तर' इति पाठः पक्षद्वयेऽप्यनुपपन्न एव ॥

नित्ययलोपवदल्लोपस्यापि विकल्पेन बाधनात्[1]। एतच्च 'न धातुलोप–' इत्यस्य प्रत्याख्यानाय 'यस्य' इति योगविभागो व्याख्यातस्तमनाश्रित्योक्तम् । तदाश्रयेऽल्लोपस्य सिद्धत्वात् । 'क्यस्य'[2] इति कण्ड्वादियकोऽपि ग्रहणं केचिदिच्छन्ति, कितो यशब्दस्य ग्रहणे तात्पर्यात् ककारस्यानुबन्धस्यादित्वमविवक्षितमिति वदन्तः । एतदपरे नेच्छन्ति, आदिभूतककारानुबन्धनिर्देशे सति आदित्वाविवक्षायां प्रमाणाभावात्, लक्ष्यस्य च तथा शिष्टैरप्रदर्शनात् ॥

( उद्द्योतः ) अकारस्य त्विति । अत्र[3] पक्षे विषयभेदादल्लोपयलोपयोर्बाध्यबाधकत्वाभाव इति भावः ॥ अतो लोपो बाध्य इति । एकविषयत्वादिति भावः ॥ अल्लोपस्यापि विकल्पेनेति । एवं च तदभावेऽप्यल्लोपाभाव इति भावः । इदं च 'द्वितीयतृतीयचतुर्थ–' इत्यादिसूत्रस्थभाष्यविरोधाच्चिन्त्यम् । तत्र हि वैकल्पिकापवादाभावे उत्सर्गस्य प्रवृत्तिरङ्गीकृता । भाष्यकृता तु वास्तवपरिहारान्तरसद्भावादिदं[4] नोक्तमिति तत्त्वम् ॥ तदाश्रये इति । विशेषविहितयलोपेनाल्लोपस्य बाधा मा भूदित्यर्थत्वायोगविभागस्येति भावः ॥

( संघातग्रहणे दोषनिवारकं भाष्यवार्तिकम् )

**आदेः[5] परवचनात्सिद्धम् ॥**

**( भाष्यम् ) हल इति पञ्चमी 'तस्मादित्युत्तरस्य' 'आदेः परस्य' ( १।१।६७,५४ ) इति यकारस्यैव भविष्यति ॥**

**( प्रदीपः ) आदेरिति** । ततश्च[6] 'क्यस्य विभाषा' इति यकारस्यैव लोपो विकल्पेन, अकारस्य तु नित्यमिति सिद्धमिष्टम् ॥

**( उद्द्योतः ) हल इति पञ्चमीति**–भाष्ये । अङ्गनिमित्तस्य हल उत्तरस्य यस्य लोप इत्यर्थे इत्यल्लोपापवादत्वमेव नास्येति भावः ॥

( वर्णग्रहणेऽपि दोषनिवारकभाष्यम् )

**अथ वा पुनरस्तु वर्णग्रहणम् ।**

**ननु चोक्तं *यलोपे वर्णग्रहणं चेत् धात्वन्तस्य प्रतिषेधः* इति ।**

**नैष दोषः । अङ्गादिति हि वर्तते ।**

**न वै अङ्गादिति पञ्चम्यस्ति ।**

**एवं तर्ह्यङ्गस्येति सम्बन्धषष्ठी विज्ञास्यते । अङ्गस्य यो यकारः ।**

**किञ्चाङ्गस्य यकारः ?**

**यस्मिन्नङ्गमित्येतद्भवति ।**

**कस्मिंश्चैतद्भवति ?**

**प्रत्यये ॥**

**( प्रदीपः ) अङ्गादिति वर्तत इति** । अङ्गस्येति निमित्तनिमित्तिभावसम्बन्धाश्रयणे पञ्चम्यर्थलाभात् फलाभेदात्पञ्चमीनिर्देशः कृतः ॥

इतरो यथोक्तमभिप्रायमप्रतिपद्याह—**न वै अङ्गादिति ॥**

**सम्बन्धषष्ठीति** । अनेकसम्बन्धसम्भवेऽप्यन्तरङ्गत्वान्निमित्तनिमित्तिभावलक्षण एव सम्बन्धः परिगृह्यते ॥

**प्रत्यय इति** । प्रत्ययहेतुकत्वादङ्गव्यपदेशस्य । ननु च समुदायः प्रत्ययोऽङ्गस्य निमित्तम्, न तु यकारमात्रम् । अकारे लुप्ते यकारमात्रस्य प्रत्ययत्वाददोषः ॥

**( उद्द्योतः )** नन्वङ्गादित्यस्याभावेन 'अङ्गादिति वर्तते' इत्यनुपपन्नमत आह—**अङ्गस्येतीति** ॥

**अनेकसम्बन्धेति** । अवयवावयविभावादिरूपेत्यर्थः ॥ **अन्तरङ्गत्वादिति** । अङ्गसंज्ञासूत्रे[7] प्रतीतत्वेन शास्त्रीयत्वेन प्रथमप्रतीतत्वादित्यर्थः ॥

ननु प्रत्ययोऽङ्गं नोत्पादयतीति कथं तस्य हेतुत्वमत आह—**प्रत्ययहेतुकत्वादिति** ॥ **प्रत्ययत्वाददोष इति** । यद्यपि परत्वाद्यलोपेऽकारलोप इति कथं तस्य प्रत्ययत्वं, तथाऽपि यदि पूर्वमलोपः स्यात्तस्यापि प्रत्ययत्वं स्यादिति तार्किकप्रत्ययत्वाददोष इत्यर्थः ॥

( १२८३ विधिसूत्रम् ॥ ६ । ४ । २ आ. १३ )

## ३०४९ णेरनिटि ॥ ६ । ४ । ५१ ॥

( अनिड्ग्रहणप्रत्याख्यानभाष्यम् )

**अनिटीति किमर्थम् ?**

**कारयिता । कारयितुम् ।**

**अनिटीति शक्यमवक्तुम् ।**

**कस्मान्न भवति–कारयिता, कारयितुम् ?**

**'निष्ठायां सेटि' (६।४।५२) इत्येतन्नियमार्थं भविष्यति–निष्ठायामेव सेटि णेर्लोपो भवति नान्यत्रेति ।**

---

१ एतच्चेति । 'यस्य हलः–क्यस्य विभाषा' इति सूत्राभ्यामतोलोपस्य बाधनं तु 'न धातुलोप आर्धधातुके' इति सूत्रस्य प्रत्याख्यानाय भाष्यकृता तत्सूत्रे समाश्रितस्य 'यस्य' इति योगविभागस्यानाश्रयणपक्ष एवोपपद्यते । योगविभागपक्षे च यस्येत्यनेनात एव लोपो विधीयत इति न तत्पक्षे तयोर्बाध्यबाधकभावः ॥

२ 'यस्य' इति अ. ठ. पाठः ॥

३ अत्र पक्षे–यस्य हल इत्यत्र वर्णग्रहणपक्षे । तत्पक्षे हि यलोपाल्लोपयोर्न समानविषयत्वमिति बाध्यबाधकभावाभावः ॥

४ वास्तवपरिहारान्तरेति । क्यस्य विभाषायां दोष इत्यस्य वास्तवपरिहारान्तरं तु 'आदेः परवचनात्सिद्धम्' इत्येवेति भाष्यकृता वैकल्पिकापवादाभावे उत्सर्गस्य प्रवृत्तिरिति नोक्तमिति भावः ॥

५ वार्तिकमेतत् च. छ. झ. पुस्तकेषु । कुण्डलनारूपस्य भाष्यस्यादर्शनान्नैतद्वार्तिकमित्यनेकेषामभिप्रायः । वार्तिककृता तु अस्मिन् सूत्रे पक्षद्वयेऽपि दोष उपपादितः । भाष्यकृता च द्वितीये पक्षे प्राप्तस्य दोषस्य वारणमादेः परवचनादित्यादिना कृतमिति भाष्यकृद्वचनमेतदित्युपपद्यते ॥

६ ततश्चेति । क्यस्य विभाषेत्यत्रादेः परस्येत्यस्य प्रवृत्तौ यकारलोप एवानेन विधेय इति विषयभेदान्नानेनातो लोप इत्यस्य बाध इति भावः ॥

७ अङ्गसंज्ञासूत्र इति । अङ्गप्रत्यययोर्निमित्तनिमित्तिभावलक्षणसंबन्धस्य तत्संज्ञाविधायकसूत्रे प्रतीतत्वेन तस्य संबन्धस्य शास्त्रीयत्वात्प्रथमतः प्रतीतिरिति तस्यान्तरङ्गत्वमित्याशयः । वस्तुतस्तु 'यस्य लोपः' इति सूत्रे समुदायस्य लोप एव मुख्यः पक्षः, तस्यैव पक्षस्य निर्दुष्टत्वात् । वर्णग्रहणपक्षस्तु स्वरूपव्याक्रियैव पराक्रियते भाष्यकृता ॥

**क मा भूत्?**

**कारयिता, कारयितुम्।**

**अथवा–उपरिष्टाद्योगविभागः करिष्यते–इदमस्ति 'निष्ठायां सेटि' 'जनिता मन्त्रे' 'शमिता यज्ञे'। ततः[1]– 'अय्'। अयादेशो भवति णेः सेटि। ततः–'आमन्ताल्वाय्येत्न्विष्णुषु'। अय् भवतीत्येव ॥**

(प्रदीपः) **निष्ठायामेव सेटीति।** सेट्येव निष्ठायामिति नियमो न भवति, अनिटो निष्ठाया अभावात् ॥

**अयादेशो भवतीति।** लोपापवाद इत्यर्थः ॥

(उद्द्योतः) **अनिटो निष्ठाया अभावादिति।** 'ण्यन्तात्परायाः' इति शेषः। एतच्चोत्तरसूत्रे[2] स्फुटीभविष्यति ॥

(१२८४ विधिसूत्रम् ॥ ६।४।२ आ. १४)

## ३०५० निष्ठायां सेटि ॥ ६।४।५२॥

(पदकृत्यभाष्यम्)

**अथ सेड्ग्रहणं किमर्थम्?**

**निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम्। निष्ठायां सेड्ग्रहणं क्रियते अनिटि[3] प्रतिषेधो यथा स्यादिति। संज्ञपितः पशुरिति ॥**

(प्रदीपः) **संज्ञपित इति।** 'सनीवन्तर्द्ध–' इति सनि विकल्पविधानात् 'यस्य विभाषा' इतीट्प्रतिषेधः। सेड्ग्रहणसामर्थ्यात् च पूर्वेणापि[4] न भवति। 'वा दान्तशान्त–' इत्यत्र ज्ञापेर्[5]निपातनमाश्रीयते–'ज्ञप्तः–ज्ञापितः' इति ॥

(उद्द्योतः) संज्ञपिते 'मारणतोषणनिशामनेषु ज्ञा' इति मारणे[6]ऽर्थे मित्त्वाण्णिचि पुकि मितां ह्रस्वत्वम्। अत्रार्थे[7] संपूर्वकस्यैव प्रयोग इति **पुरुषकारे** उक्तम् ॥ नन्वनेन णिलोपाभावेऽपि पूर्वेण स्यादत आह—**सेड्ग्रहणेति** ॥ नन्वेवं 'वा दान्तशान्त–' इतीड्प्रतिषेधप्रकरणे 'ज्ञप्ताः[8]' इति निपातनं किमर्थमत आह—**वा दान्तेति** ॥ **ज्ञापेरिति।** मित्संनिधौ पाठे कर्तव्येऽग्रे पाठेन तत्रामित एव ग्रहणम्। छन्न[9] इत्यपि निपातनममित एव। ज्ञापने मित्त्वाभावेन तत्रेड्प्रतिषेधणिलुको-र्विकल्पेन निपातनात् ज्ञप्तो ज्ञापित इति रूपद्वयसिद्धिः। अत एव 'तज्ज्ञापयत्याचार्यः' इत्यादि संगच्छत इति **नारायणः**। **अन्ये तु** 'वा दान्त–' इति सूत्रे तु 'ज्ञप मिच्च' इत्यस्य निपातनं, प्रतिपदोक्तत्वात्। अत एव कैयटे 'ज्ञपेर्[10]निपातनमाश्रीयते ज्ञप्तो ज्ञपितः' इति क्वचित्पाठो दृश्यत इत्याहुः, **तच्चिन्त्यम्**। तेनैव सिद्धावत्रत्योदाहरणपरभाष्य[11]विरोधापत्तिः ॥

(६५४९ सेड्ग्रहणानर्थक्यबोधकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धम्[12] ॥ * ॥

(भाष्यम्) **निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेदन्तरेणापि सेड्ग्रहणं तत्सिद्धम्।**

**कथम्?**

**अनिडभावात् ॥**

(अनिडभावाक्षेपे वार्तिकावतरणभाष्यम्)

**ननु च 'यस्य विभाषा' (७।२।१५) इति ज्ञपेरिट्प्रतिषेधः ॥**

(६५५० अनिडभावसाधकवार्तिकम् ॥ २ ॥)

### ॥ * ॥ एकाचो हि प्रतिषेधः ॥ * ॥

(भाष्यम्) **एकाचो हि स प्रतिषेधः। ज्ञपिश्चानेकाच् ॥**

(प्रदीपः) **एकाचो हीति।** 'यस्य विभाषा' इत्यत्र 'एकाचः' इत्यधिकारात् ॥

(६५५१ सेड्ग्रहणप्रयोजनवार्तिकम् ॥ ३ ॥)

### ॥ * ॥ इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य ॥ * ॥

(भाष्यम्) **इड्भावार्थं तर्हि सेड्ग्रहणं क्रियते।**

**कथं पुनः सेटीत्यनेनेट् शक्यो भावयितुम्?**

**तन्निमित्तत्वाल्लोपस्य। नात्राकृते इटि णिलोपेन भवितव्यम्।**

**किं कारणम्?**

**सेटीत्युच्यते ॥**

(प्रदीपः) **इड्भावार्थं त्विति।** इटि कृते णिलोपो यथा स्यादकृते मा भूदिति कालावधारणार्थं सेड्ग्रहणमित्यर्थः।

१ ततः–अय्–इति। 'अय्' इति सूत्रं 'णेः' इति णिलोपविधायकस्य बाधकम्, णिलोपस्य हि सेटि अनिटि च सामान्येन विधानात्। 'अय्' इत्यय्-विधायकस्य च निष्ठायां सेटीत्यतो सेटीत्यस्यानुवर्तनादिडाद्यार्धधातुक एव विधानेन विशेषविधित्वमिति भावः ॥

२ उत्तरसूत्र इति। तत्र हि सूत्रे 'निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेदन्तरेणापि सेड्ग्रहणं तत्सिद्धम्। कथम्। अनिडभावात्' इत्युक्त्यैतत्स्फुटमिति भावः ॥

३ अनिटि प्रतिषेध इति। अत्र सूत्रे सेड्ग्रहणात् सेण्णिष्ठायामेव णिलोपो भवति। अनिण्णिष्ठायां तु पूर्वसूत्रमपि न प्रवर्तते, सेटिपदोपादानसामर्थ्यात्। एवं चानिटि प्रतिषेधः सिद्धो भवति ॥

४ पूर्वेणापि–णेरनिटीत्यनेनापि ॥

५ 'ज्ञपेर्निपातनमाश्रीयते–ज्ञप्तः, ज्ञपित इति' इति क. ङ. पाठः। यद्यपि ढ. संज्ञकपुस्तके टिप्पण्यां ज्ञापेर्निपातनमिति पाठो नोपलभ्यत इत्युक्तं तथापि असदुपलब्ध अ. क. ट. पुस्तकेषु प्रामाणिकेषु ज्ञापेरित्याद्येव पाठ इति न प्रदीपविषये शङ्कावतारः ॥

६ 'मारणार्थे' इति झ. ढ. पाठः ॥

७ अत्रार्थे–मारणेऽर्थे ॥

८ 'ज्ञप्तः' इति झ. ढ. पाठः ॥

९ ननु तत्रापि छन्नेति मित्साहचर्यमस्तीति भ्रमवारणायाह—छन्न इति ॥

१० 'ज्ञापेर्निपातन' इति ङ. पाठः ॥

११ 'भाष्यविरोधापत्तेः' इति ख. घ. ङ. झ. पाठः ॥

१२ 'सिद्धमनिडभावात्' इति वार्तिकपाठः च. छ. झ. पुस्तकेषु ॥

अक्रियमाणे सेड्ग्रहणे 'कारि-त' इति स्थिते णिलोपश्च प्राप्नोति, इट् च । नित्यत्वाण्णिलोपः प्राप्नोति । तत्र कृते 'एकाचः' इतीट्प्रतिषेधः प्राप्नोति, एकदेशविकृतस्यानन्यत्वात्स एव करोतिर्भवतीति । 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्' इत्येतच्च कार्यगतभावाभावापेक्षायां नाश्रीयत इत्यनित्य एवेडागमः । इटि तु णिलोपे क्रियमाणे न प्रवर्तेत इट्प्रतिषेधः, निर्वृत्तस्य प्रतिषेद्धुमशक्यत्वात् । एतच्च प्रयोजनं पूर्वस्मादपि विधौ स्थानिवद्भाव इत्यनाश्रित्योक्तम् ॥

( उद्द्योतः ) नन्वनेन णिलोपो विधीयत इति कथमिटो भावः स्यादत आह—इटि कृत इति ॥ ननु परत्वादेवेटि कृते णिलोपः सिद्ध इति किं सेड्ग्रहणेनेत्यत आह—अक्रियमाणे हीति ॥ ननु य एकाच्धातुः 'कृ' इति सोऽयं न भवतीति कथमिट्प्रतिषेधोऽत आह—एकदेशेति ॥ कार्यगतेति । कृताकृतप्रसङ्गमात्रेण नित्यत्वम्, तद्वैपरीत्येनैवानित्यत्वं चाश्रीयत इति भावः । अत्रापि सेड्ग्रहणमेव मानम् ॥ ननु पूर्वमिट्यपि णिलोपे कृते प्रतिषेधेन निवृत्तिस्तस्य कथं नेत्यत आह—इटि त्विति । इटि परतो णिलोपे क्रियमाणे–इत्यर्थः ॥ अनाश्रित्योक्तमिति । तदाश्रयणे हि णिलोपस्य स्थानिवत्त्वेनैकाचः परत्वाभावादिण्निषेधाप्राप्तेः पूर्वं णिलोपेऽपि दोषाभावात् कालावधारणार्थं सेड्ग्रहणं व्यर्थं सत्[1]तदनित्यत्वं ज्ञापयतीति भावः ॥ 'एकाचः' इति विहितविशेषणं चा[2]नाश्रित्येदमित्यपि बोध्यम् । वस्तुतः 'एवं तर्हि नार्थः सेड्ग्रहणेन' इति भाष्यस्य 'तत्र सूत्रे विहितविशेषणात्' इति शेषः । तदुत्तरं भाष्यं त्वेकदेश्युक्तिरिति बोध्यम् ॥

( ६५५२ सेड्ग्रहणाभावे दोषवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अवचने हि णिलोप इट्प्रतिषेधप्रसङ्गः ॥ * ॥**

**( भाष्यम् ) अक्रियमाणे हि सेड्ग्रहणे णिलोपे कृते 'एकाचः' इतीट्प्रतिषेधः प्रसज्येत । कारितम्, हारितम् ॥**

**( योगविभागेन सूत्रप्रत्याख्यानभाष्यम् )**

**एवं तर्हि नार्थः सेड्ग्रहणेन, नापि सूत्रेण ।**

**कथम् ?**

**सप्तमे योगविभागः करिष्यते । इदमस्ति–'–निष्ठायाम्' ( ७।२।१४ ), नेट् भवति ।**

**ततः–'णेः' । ण्यन्तस्य निष्ठायां नेट् भवति । कारितम् । हारितम् ।**

**ततः–'वृत्तम्' । वृत्तमिति च निपात्यते ।**

**[[3]किं निपात्यते ?**

**णेर्निष्ठायां लोपो निपात्यते [4]। ]**

**किं प्रयोजनम् ?**

**नियमार्थम् । अत्रैव निष्ठायां णेर्लोपो भवति नान्यत्र ।**

**क्व मा भूत् ?**

**कारितम् । हारितम् ।**

**इहापि तर्हि प्राप्नोति—वर्तितमन्नम्, वर्तिता भिक्षा[5] ।**

**ततः—'अध्ययने' । अध्ययने चेत् वृतिर्वर्तते–इति ॥**

(प्रदीपः) **सप्तमे योगविभाग इति** । 'णेरध्ययने वृत्तम्' इति योगं विभज्य योगत्रयं क्रियते क्रमविपर्ययश्चाश्रीयते । 'णेः' इत्येको योगः । [6]तत्र 'निष्ठायां' 'नेट्' इति वर्तते । ततः 'वृत्तम्' इति द्वितीयो योगो णिलोपनियमार्थो गुणप्रतिषेधार्थश्च, अनेकप्रयोजनत्वान्निपातनानाम् । **अथवा** 'वृत्तम्'इत्येकशेषाश्रयणादेकस्य नियमार्थत्वमपरस्यगुणनिषेधार्थत्वं भविष्यति । ततः 'अध्ययने' इति तृतीयो योगो वृत्तशब्दस्यार्थविशेषनियमार्थः ॥

( उद्द्योतः ) **क्रमविपर्ययश्चेति** । 'वृत्तम्' इत्येतदन्ते श्रुतमपि मध्ये संबन्धनीयमित्यर्थः ॥ ननु णिलोपनियमेन कृतार्थो योगः कथं गुणप्रतिषेधं कुर्यादत आह—**अनेकेति** ॥ ननु गुणा[7]भावे विधेये संभवति कथं नियमार्थता–इत्यस्वरसादाह—**अथवेति** ॥ **अर्थविशेषेति** । 'वृते[8]र्ण्यध्ययन एव नान्यत्र' इति ॥ [ [9]भाष्ये—**निष्ठायां नेट् भवतीति** 'श्वीदित' इति सूत्रस्योपयुक्तोल्लेखः । अत एव मध्यवर्त्त्येकादशसूत्रत्यागः । ]

( ६५५३ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ वृधिरमिश्रृधीनामु[10]पसंख्यानं सार्वधातुकत्वात् ॥ * ॥**

**( भाष्यम् ) वृधिरमिश्रृधीनामुपसंख्यानं कर्तव्यम् ।**

**किं कारणम् ?**

१ तदनित्यत्वं–पूर्वस्मादपि विधौ स्थानिवद्भाव इत्यस्यानित्यत्वम् ॥

२ 'चाश्रित्येद्' इति ढ. पाठः । झ. पुस्तके पाठान्तरे प्रदर्शितोऽयं पाठः । अस्मदुपलब्धप्राचीनपुस्तकेषु नायं पाठ उपलभ्यते, किन्तु 'चानाश्रित्येदमित्यपि' अयमेव पाठ उपलभ्यते । अयमेव च युक्तः पाठ इति अपिशब्दस्वारस्यात्प्रतीयते, 'चाश्रित्य' इति पाठस्यासङ्गतिरपि । प्रदीपे–एतच्च प्रयोजनं…स्थानिवद्भाव इत्यनाश्रित्योक्तम्–इत्युक्तस्यैवेयं व्याख्या–एकाच इति विहितविशेषणं चानाश्रित्येदमित्यपि बोध्यम्–इति उद्द्योतकृतः । अत एव 'एकाच इति' इत्येतत् 'एकाच इतीट् प्रतिषेधः' इति भाष्यस्थप्रतीकत्वेन ढ. झ. पुस्तकयोः निर्दिश्यते स भ्रम एव । अन्यथा 'अपि'शब्दस्वारस्यानुपपत्तिः । तथैवोद्द्योतपुस्तकेषु निर्दिष्टमपि ॥

३ एतच्चिह्नगतोंऽशः अ. पुस्तके न ॥

४ 'निष्ठायां लोपो निपात्यते' इत्येव क. पुस्तके ॥

५ 'भिक्षेति' इति च. छ. झ. क. पाठः ॥

६ तत्रेति । 'णेः' इति सूत्रे 'श्वीदितो निष्ठायाम्' (७।२।१४) इत्यतो निष्ठायामिति 'नेड्वशि कृति' (७।२।८) इत्यतो नेडित्यनुवर्तत इत्यर्थः ॥

७ विधिनियमसंभवे विधिरेव ज्यायानिति न्यायानुपातित्वमस्योपपादयितुमाह—गुणाभावे विधेय इति ॥

८ वृतेर्ण्येति । वृतधातोर्ण्यक्तान्तप्रत्ययः । तत्राध्ययन एवेडभावो गुणप्रतिषेधो णिलोपश्च निपात्यत इत्यर्थः । अन्यत्र वर्तितमित्यादौ न भवतीति भावः ॥

९ [ ] एतद्गतो ग्रन्थो ङ. पुस्तक एव दृश्यते ॥

१० उपसंख्यानमिति । एतेषां णेर्लोपस्योपसंख्यानमित्यर्थः ॥

सार्वधातुकत्वात् । वर्धन्तु त्वा सुष्टुतयो गिरो मे, वर्धयन्त्वित्येवं प्राप्ते । बृहस्पतिष्ट्वा सुम्ने रम्णातु, रमयत्वित्येवं प्राप्ते । अग्ने शर्द्ध महते सौभगाय, शर्द्धयेति प्राप्ते ॥

(प्रदीपः) रम्णात्विति । व्यत्ययेन श्नाप्रत्ययः ॥

(उपसंख्यानानर्थक्यबोधकभाष्यम्)

तर्त्तर्हि वक्तव्यम् । न वक्तव्यम् । वृधिरमिश्रृधी-[1]नामार्धधातुकत्वात्सिद्धम् ।

कथमार्धधातुकत्वम् ?

अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ॥

(उद्योतः) [ [2]प्रत्याख्याने वृधीत्यस्य सिद्धमित्यत्रान्वयः ॥ ]

(१२८५ विधिसूत्रम् ॥ ६ । ४ । २ आ. १५)

## ३०५३ अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ६ । ४ । ५५ ॥

(णेरयादेशाधिकरणम्)

(पक्षद्वयोपस्थापकभाष्यम्)

किं पुनरयं क्त्नुः, आहो स्विदित्नुः ?

कश्चात्र विशेषः ?

(प्रदीपः) किं पुनरिति । यद्यपि क्त्नौ 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति निर्देशानुपपत्तिः, तथापि युक्तायुक्तत्वापेक्षो विचारः-कः प्रत्यय आश्रयितुं युक्तः को न युक्त इति ।

अथवा किं कृतेडागमः क्त्नुरिह निर्दिष्टोऽथ प्रत्यय एवेत्नुरिति विचारः ॥

(उद्योतः) नन्विह निर्देशेनैवासंदेहात्प्रश्नानुपपत्तिरित्याह—यद्यपीति ॥ कः प्रत्यय इति । उणादिषु व्याकरणान्तरे किं क्त्नुः प्रत्ययः, अथेत्नुरिति विचार्यत इत्यर्थः ॥ नन्वेतत्सूत्रमुपादाय विचारे क्रियमाणेऽत्रैव सन्देहो युक्त इत्यत आह—अथवेति ॥

(६५५४ प्रथमपक्षे दोषवार्तिकम् ॥ १ ॥)

॥ * ॥ क्त्नाविटि णेर्गुणवचनम् ॥ * ॥

(भाष्यम्) क्त्नौ सति इटि णेर्गुणो वक्तव्यः । गदयित्नुः । स्तनयित्नुः ॥

अस्तु तर्हि इत्नुः ॥

(प्रदीपः) क्त्नाविटीति । '[3]स्तनिहृषि-' इत्यत्र यदि क्त्नुर्विधीयते तदा तस्येटि कृते 'अनिटि' इति वचनाण्णिलोपो नास्ति । [4]कित्त्वात्तु गुणप्रतिषेधे प्राप्ते गुणो विधेयः ॥

(उद्योतः) कित्त्वात्त्विति । [5]तच्च कृत्नुरित्यादौ गुणप्रतिषेधायावश्यकमिति भावः ॥ गुणो विधेय इति । अत्र सूत्रे '[6]इत्नु' इति न पठनीयमिति भावः ॥

(६५५५ द्वितीयपक्षे दोषवार्तिकम् ॥ २ ॥)

॥ * ॥ इत्नौ प्रत्ययान्तरकरणम् ॥ * ॥

(भाष्यम्) [7]यदि हि इत्नुः, प्रत्ययान्तरं कर्तव्यम् ॥ [8]अयादेशे चोपसंख्यानं [9]कर्तव्यम् ॥

(प्रदीपः) इत्नाविति । 'स्तनिहृषि-' इत्यत्र इत्नुर्विधेयः । कृहनिभ्यां क्त्नुर्विधेयः । यदा तु [10]स्तनादिभ्यः क्त्नुर्विधीयते स एवोत्तरत्रानुवर्तते तदा प्रत्ययान्तरं न विधेयम् । स्वरेऽपि भेदो नास्ति, उभयथाऽन्तोदात्तत्वात् ॥

अयादेशे चेति । णिलोपस्य प्रसङ्गादुपसंख्यानशब्देनात्र सूत्रे पाठ उच्यते, न त्वपूर्वं वचनम् ॥

(उद्योतः) उभयथाऽन्तोदात्तत्वादिति । क्त्नौ प्रत्ययस्वरेण, इत्नुचि चित्स्वरेणेतिभावः । [11]परे तु-इदं सूत्रमयादेशानुवादकं [12]लाघवात् । तदनुवादाच्च णिलोपबाधनम्, अन्यथाऽनुवादत्वा-

---

१ झ. पुस्तके वार्तिकमेतदिति प्रकल्प्य 'वृधिरमिश्रृधीनामार्धधातुकत्वात्सिद्धम्' इत्येवं व्याख्यारूपो भाष्यपाठोऽपि प्रकल्पितः । टिप्पण्यां च 'इदं वार्तिकमिति मते इयं व्याख्या बोध्या । इदं क्वचिदपि नास्ति' इत्युक्तम् । इदं वार्तिकमित्येवं परिज्ञाने भाष्यव्याख्यैव लिङ्गम् । यत्र तादृशं भाष्यव्याख्यानं नास्ति तत्र तत्प्रकल्प्य भाष्यैकदेशस्य वार्तिकत्वेनोल्लेखः प्रामादिक एवेति सुस्पष्टं तद्विदाम् ॥

२ [ ] एतद्गतो ग्रन्थो ङ. पुस्तक एव दृश्यते ॥

३ 'स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्' (३०९) इत्युणादिसूत्रम् ॥

४ 'किन्तर्हि कित्वात्तु' इति च. पाठः ॥

५ ननु स्तनिहृषीत्यनेन क्त्नुप्रत्यये विधीयमाने कित्वाद्गुणप्रतिषेधः प्राप्त इति गुणोऽपि विधेय इति गौरवं तदपेक्षया कित्वमेव न कार्यमित्याशङ्कायामाह—तच्च कृत्नुरित्यादाविति । कृहनीति सूत्रे तस्यैवानुवर्तनेन कित्वाभावे कृत्नुरित्यादौ गुणः स्यादित्यर्थः ॥

६ 'इत्नुः' इति ङ. पाठः । स्तनिहृषीत्यनेन क्त्नुप्रत्यये विधीयमाने प्रकृतसूत्रे 'इत्नुः' ग्रहणं न कार्यम्, किन्तु क्त्नुप्रत्यये परतो गुणप्रकरणे कित्वादप्राप्तो गुणो विधेय इति भावः ॥

७ 'यदि तर्हीत्नु' इति छ. ङ. पाठः ॥

८ 'अयादेशे चोपसंख्यानम्' इति वार्तिकमत्र च. छ. झ. ङ. पुस्तकेषु पठ्यते ॥

९ 'कर्तव्यम्' इत्यस्य क. पुस्तके न पाठः ॥

१० 'स्तन्यादिभ्य क्त्नुर्विधीयते स एव चोत्तरत्र' इति ङ. पाठः ॥

११ परे त्विति । अस्मिन् सूत्रभाष्ये प्रदीपोद्द्योतयोः स्फुटं मतभेदः । प्रदीपेऽस्य सूत्रस्यायादेशविधायकत्वमाश्रित्य 'किं पुनरयं क्त्नुः' इत्यादिर्भाष्यकृत्प्रश्नः स्तनिहृषीत्यत्र क्त्नुर्विधेय उतेत्नुरित्यर्थकः । अत एवाग्रे 'यद्यत्र क्त्नुग्रहणमयादेशार्थं क्रियते' इत्याद्युक्तं कैयटेन । उद्द्योते चास्य सूत्रस्यायादेशानुवादकत्वमाश्रीयते । शास्त्रान्तरात्समाहृता उणादयः प्रत्ययाश्च पाणिनिनये न नियताः किन्तु ढकि लोप इत्यत्र ढकल्पनवत् शब्दसिद्ध्यनुकूला प्रकृतिप्रत्यययोः कल्पना । एवं च 'किं पुनरयं क्त्नुः' इत्यादि भाष्यं तु निमित्तत्वेनोपात्तं प्रत्ययरूपं कीदृशमाश्रयणीयमित्यर्थकमेव । तदेव परे त्वित्यादिनाऽऽह ॥

१२ लाघवादिति । यद्यस्य सूत्रस्यायादेशानुवादकत्वं नाश्रीयते तदाऽनेनायादेशस्यापि विधानं, इत्नु प्रत्ययस्यापि विधानमिति विधेयद्वयमापद्येत, अतोऽनुवादकत्वमाश्रयणीयम् । अनुवादकत्वे च अस्यानुवादकत्वम्, इत्नुप्रत्ययोऽपि न विधेयः किन्तूणादिषु प्रकृतिप्रत्ययकल्पनया स निर्वाह्य इति लाघवम् । अत एव भाष्यकृता क्त्नुप्रत्ययाश्रयणे णेर्गुणो वक्तव्य इत्युक्तम् ॥ क्त्नाविटीत्यस्य हि अयमर्थः—प्रयोगनिर्वाहाय क्त्नुप्रत्ययाश्रयणे कित्वाद्गुणाभावेनायादेशस्य सुतरामप्राप्तिरिति अस्य सूत्रस्यानुवादकत्वासंभवेन अनेन सूत्रेणायादेशो न विधेयः किन्तु गुणप्रकरणे गुण एव विधेयः । गुणे विधीयमाने चायादेशः 'एचोऽय' इत्यनेन स्यादेव । अनेनायादेशविधाने च सामर्थ्यात् कित्वेऽपि गुणो भवतीति ज्ञापनीयमिति गौरवमिति ॥

संभवात् । अत्र सूत्रे निमित्तत्वेनाश्रयणाण्ण्यन्तेभ्यो यथाप्रयोगमन्तादि-प्रत्ययकल्पनम्, 'ढकि लोपः' इत्यत्र ढक्कल्पनवत् । तदाह भाष्ये—**क्त्वाविटीति** । [2]सूत्रस्यानुवादत्वनिर्वाहाय सूत्रकृतोऽपि तस्यावश्यकत्वमिति तदेवास्तु । [3]अत्र सूत्रे च ग्रहणं न कार्यमिति भावः । [4]व्याकरणान्तरे च तथैव कृतम् । णेरेवे[5] स्थानेऽयादेशे तु तदंशेऽनुवादत्वभङ्ग इत्याशयः ॥ **प्रत्ययान्तरम्**—व्याकरणान्तरपठितात्प्रत्ययादन्यत् ॥

**अयादेशे चेति** । [6]तदनुवादके शास्त्र इत्यर्थः । [7]णिलोपाभावायेति भावः । [8]निमित्तत्वेनाश्रयणेनापूर्वस्य तस्य कल्पनादस्योपसङ्ख्यानत्वव्यवहारो भाष्ये । अन्यथा सूत्रे पाठस्य निर्विवादत्वेन 'सूत्रे कः प्रत्ययो निर्दिष्टः' इति सन्देहे प्रत्ययान्तरकरणमेव दोषो न तु सूत्रे करणमपि दोष इति कैयटोक्तव्याख्यायां न भाष्यसामञ्जस्यम्[9] । क्त्वोस्तु व्याकरणान्तरपठितस्यानुमतिमात्रं नापूर्वमुपसङ्ख्यानमिति भावः ॥

( दोषद्वयनिराकरणभाष्यम् )

**उभयं क्रियते न्यासे एव ॥**

**( प्रदीपः )** भाष्यकारो गुरुलाघवमनादृत्य यथान्यासं समर्थयितुमाह—**उभयमिति** । यद्यत्र क्त्वुग्रहणमयादेशार्थं क्रियते स्तन्यादिभ्यश्च क्त्वुर्विधीयते तदा स्यादेव लाघवम् ॥

**( उद्द्योतः ) उभयं क्रियत इति** । [10]अत्र पाठः, तेन प्रत्ययान्तरं च बोध्यत इत्यर्थः । कृञः सर्वधात्वर्थानुवादकत्वात् । [11]एतेन यद्यत्रेत्यादि कैयटोक्तमपास्तम्[12] । तेनैषां पङ्कजादिवद्योगरूढत्वं सूचितम् । अन्तोदात्तादयश्चैते सूत्रे पठ्यन्त इति न स्वरभेद इत्याहुः ॥

———

( १२८६ निषेधसूत्रम् ॥ ६ । ४ । २ आ. १६ )

## ३०५४ ल्यपि[13] लघुपूर्वात् ॥ ६।४।५६ ॥

( ६५५६ षष्ठ्यन्तन्यासे दोषवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ल्यपि लघुपूर्वस्येति चेत् व्यञ्जनान्तेषूपसंख्यानम् ॥ * ॥

**( भाष्यम् ) ल्यपि लघुपूर्वस्येति चेत् व्यञ्जनान्तेषूपसंख्यानं कर्तव्यम् । प्रशमय्य गतः । प्रतमय्य गतः ॥**

**( प्रदीपः )** केचिदाचार्येण 'ल्यपि लघुपूर्वस्य' इति षष्ठ्यन्तमध्यापिताः, अन्येतु 'लघुपूर्वात्' इति पञ्चम्यन्तम् । तत्र षष्ठीमाश्रित्याह—**ल्यपीति** ॥ **प्रशमय्येति** । शमेर्णिचि वृद्धौ 'मितां ह्रस्वः' इति ह्रस्वः, तत्र णेः पूर्वं व्यञ्जनं न लध्विति अयादेशो न प्राप्नोति । न चात्र व्यवहितेऽपि पूर्वशब्दो वर्तते इति शक्यमाश्रयितुम्, चकास्तृदरिद्रादीनामपि ण्यन्तानामयादेशप्रसङ्गात्—प्रचकास्य गत इति । न चाव्यवहिते सम्भवति व्यवहितपूर्वमाश्रयितुं युक्तम् । [14]ततश्च प्रगणय्य-प्रस्तनय्येत्यादावेव स्यात्, अत्र ह्यल्लोपस्यासिद्धत्वाल्लघुपूर्वो णिर्भवति । अथापि व्याश्रयत्वादल्लोपस्यासिद्धत्वं न स्यात् । एवमपि भूतपूर्वगत्या लघुपूर्वताश्रयोऽयादेशः स्यात् ॥

**( उद्द्योतः )** अग्रिमवार्तिकानुसारात्सूत्रे पञ्चम्यन्तपाठनिर्णयेनाद्यवार्तिके षष्ठ्यन्तानुवादो न युक्तोऽत आह—**केचिदिति** । [15]लघुः

---

१ अन्तादीति । अयामन्तेति सूत्रे 'आम्' प्रत्ययश्च पाणिनितन्त्रप्रसिद्धः । अन्त-आलु-इत्यादयश्च प्रत्ययाः प्रयोगदर्शनेन तदनुकूलाः कल्पनीया इत्यर्थः ॥

२ सूत्रस्येति । यदि क्त्नुप्रत्यय एवाश्रीयेत तर्हि तद्विषयेऽयादेशस्य विधित्वम्, आमाद्यंशे चायादेशस्य प्राप्तत्वेनानुवादत्वमिति वैरूप्यवारणायात्र सूत्रे 'इत्नु'ग्रहणमकृत्वा गुणप्रकरणे गुण एव विधेय इत्यर्थः । तदेवाह—तदेवास्त्विति ॥

३ 'अत्र सूत्रे च क्त्नुग्रहणं' इति ढ. झ. पाठः ॥

४ व्याकरणान्तर इति । स्तनिहृषीत्येतत्सूत्रं हि व्याकरणान्तरीयम् । क्वचिद्व्याकरणे क्त्नुप्रत्ययं विधाय गुणो विहितः क्वचिच्चेत्नुरेव स्वीकृतः । उणादावपि स्तनिहृषीतिसूत्रं व्याकरणान्तरादेव पाठभेदप्रमादादायातम् । अत एवाग्रे प्रत्ययान्तरमित्यस्य व्याकरणान्तरपठितादन्यदिति व्याख्यानमुपपद्यते । एतच्चोणादिव्याख्यानावसरे शेखरकृतोक्तम् ॥

५ णेरेवेति । अनेन सूत्रेण णेरेव स्थानेऽयादेशविधाने हि इत्न्वंशेऽस्य सूत्रस्यानुवादत्वभङ्ग इत्यर्थः ॥

६ तदनुवादक इति । अयादेशानुवादकेऽस्मिन् सूत्रे निमित्तकोटावित्नुग्रहणं कार्यम्, क्त्नुप्रत्ययकल्पने च अस्मिन् सूत्रे तन्न कार्यमिति भावः ॥

७ 'णिलोपाभावायेति भावः' इत्यस्य घ. ज. पुस्तकयोर्न पाठः ॥

८ 'अत्र सूत्रे निमित्तत्वेना' इति झ. पाठः ॥

९ 'मिति भावः' इत्युत्तरं 'णिलोपाभावायेति भावः' इति ग्रन्थो घ. ज. पुस्तकयोः पठ्यते ॥

१० अत्र पाठस्तेनेति । उभयं क्रियत इति भाष्यस्यास्मिन् सूत्रे पाठः क्रियते तेन-पाठेन च इत्नुप्रत्ययोऽनुमीयते इत्यर्थः । क्रियत इति कृधातोः सामान्यक्रियावाचित्वेनैतदुभयमपि 'क्रियते' इति पदेन बोधयितुं शक्यमिति भावः ॥

११ एतेन—अस्य सूत्रस्यानुवादकत्वेन ॥

१२ अपास्तमिति । अनुवादपक्षे हि व्याकरणान्तरे विहितस्य प्रत्ययस्य स्वानुमतत्वानुमानमात्रं कल्प्यते न तु प्रत्ययकल्पनमिति न लाघवगौरवविचारो युक्तः । एवं चास्य सूत्रस्यैकरूपतयाऽयादेशानुवादकत्वसिद्धिरिति लाघवं वाच्यमिति भावः । सर्वं चैतदुणादिव्याख्यानावसरे शेखरकृतोक्तमिति तत एवावधार्यताम् ॥

१३ झ. ढ. पुस्तकयोः 'ल्यपि लघुपूर्वस्य' इति सूत्रपाठः प्रदर्शितः । प्राचीनलिखितपुस्तकेषु प्रामाणिकेषु 'ल्यपि लघुपूर्वात्' इत्येव । ननु कैय्यटे चाचार्येण क्वचित्षष्ठ्यन्तः पाठोऽध्यापितः केषाञ्चन पञ्चम्यन्तः पाठोऽध्यापित इत्युक्तत्वादुभयविधोऽपि सूत्रपाठ आसीदिति ग्रहीतुं शक्यमिति उभयविधोऽपि पाठो निर्देष्टुं योग्य इति चेन्न; वार्तिककृता पञ्चम्यन्तपाठस्य सिद्धान्तितत्वात् वैदिकप्रसिद्धावपि तस्यैव पाठस्य प्रसिद्धेश्च स एव पाठो निर्देष्टुमुचित इति प्रतीयते । झ. ढ. पुस्तकयोस्तादृशपाठसमाश्रयणे बीजन्तु नवनवोद्भासितकल्पनासु मनुष्यबुद्धीनां पक्षपात इत्येव ॥

१४ ननु प्रशमय्य प्रस्तमय्येत्यादौ सूत्रस्याप्राप्तौ तस्य निर्विषयत्वमापद्येतेति तत्सामर्थ्यादत्र प्रवृत्तिः स्यादित्याशङ्कावारणाय सूत्रविषयमाह—ततश्च प्रगणय्येति ॥

१५ ननु 'लघुपूर्वस्य' इति न्यासे पञ्चमीनिर्देशाभावेन न व्यवहिताव्यवहितविषयकः प्रश्नः संभवति । एवं च प्रशामय्येत्यादावपि दोषाभावेन भाष्यकृदुक्तदोषापादनाय सूत्रार्थमाह—लघुः पूर्वो यस्मादिति । एवं च पञ्चमीनिर्देशसत्त्वेन 'तस्मात्—' इति परिभाषोपस्थितिर्निर्विवादैवेति भावः । प्रदीपाशयोऽपि तथैवेत्युद्भावयति—यद्वक्ष्यतीति ॥

पूर्वो यस्मात्तस्य णेर्ल्यप्ययादेश इति–अत्र पक्षेऽर्थः ॥ मितां ह्रस्व इति । अमन्तत्वान्मित्त्वम् ॥ न चात्र व्यवहित इति । उत्तरांगविकलायाः 'तस्मात्' इति परिभाषाया दुर्वारत्वादिति भावः । यद्वक्ष्यति–'न चाव्यवहित' इति ॥ दूषणान्तरमाह—चकारित्विति ॥

( षष्ठयन्तन्यासे द्वितीयदोषदर्शकभाष्यम् )

**अल्लोपे च गुरुपूर्वात्प्रतिषेधो वक्तव्यः । प्रतिचिकीर्ष्य गतः ॥**

( प्रदीपः ) **अल्लोपे चेति** । अल्लोपे कृते यो गुरुपूर्वस्तस्मात्परस्य णेर्भूतपूर्वा लघुपूर्वतामाश्रित्यायादेशः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये दोषान्तरमाह—अल्लोपे चेति ॥

( ६५५७ पञ्चम्यन्तन्यासस्थापकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ल्यपि लघुपूर्वादिति वचनात् सिद्धम् ॥ * ॥**

( भाष्यम् ) **ल्यपि लघुपूर्वादिति वक्तव्यम्** ॥

( प्रदीपः ) **लघुपूर्वादिति वचनादिति** । लघुपूर्वादिति पञ्चम्यन्तं पठितव्यमित्यर्थः । लघुः पूर्वो यस्मादिति–लघुपूर्वः, तस्मात्परस्य णेरयादेशः ॥

( उद्द्योतः ) पञ्चम्यन्तपाठे यथा व्यञ्जनान्तेषु न दोषस्तथा स्पष्टार्थप्रदर्शनव्याजेनाह—लघुः पूर्वो यस्मादिति । अत्रोभयत्राप्यव्यवहित एव गृह्यत इति 'प्रतिचिकीर्ष्य गतः' इत्यादावपि न दोषः । न च वर्णग्रहणे जातिग्रहणाद्दोष एवात्रेति वाच्यम् । जातिग्रहणेनानेकग्रहणेऽपि वर्णद्वयस्यैव ग्रहणेनादोषात् । अत एव 'सनि मीमा–' इत्युत्तरं 'दम्भ ईच' 'आप्ज्ञप्यृधाम्' इति दम्भेरपि–इस्–ईत्वाभ्यां संयोगादिलोपाभ्यां सिद्धे 'दम्भ इच'इति–इत्त्वविधानं चरितार्थम् । इस्भावे हि सन्भेति वर्णत्रयसत्त्वेन कित्त्वानापत्तेरित्याहुः । न चैवं 'निपात एक' इति सूत्रस्य 'अ इ उ अपेहि' इति भाष्यविरोधः, तत्र 'अ इ उ' इति त्रयाणां सत्त्वादिति वाच्यम् । तत्रापि तद्घटकद्वयोरेवापाद्यत्वात् ॥

( दोषोपस्थापकभाष्यम् )

**एवमपि ह्रस्वयलोपाल्लोपानामसिद्धत्वात् 'ल्यपि लघुपूर्वात्' इत्ययादेशो न प्राप्नोति । प्रशमय्य गतः । प्रतमय्य गतः । प्रचेछिदय्य गतः । प्रबेभिदय्य गतः । प्रगदय्य गतः । प्रस्तनय्य गतः ॥**

( प्रदीपः ) **एवमपीति** । क्व तर्हि स्यात् ? मृदमाचष्ट इति णिच्, 'प्रकृत्यैकाच्'इति प्रकृतिभावाट्टिलोपप्रतिषेधः प्रमृदय्य गत इत्यादौ स्यात् ॥

( उद्द्योतः ) क्व तर्हि स्यादिति । विषयान्तराभावाद्वचनसामर्थ्येन ह्रस्वादीनामसिद्धत्वं बाध्यत इति प्रश्नः ॥

( ६५५८ दोषवारकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ ह्रस्वादिषु चोक्तम् ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ? *समानाश्रयवचनात्सिद्धम्* इति ।**

**कथम् ?**

**णावेते विधयः, णेर्ल्यप्ययादेशः ॥**

---

( १२८७ विकल्पविधिसूत्रम् ॥ ६ । ४ । २ आ. १७ )

## ३०५५ विभाषाऽऽपः ॥ ६ । ४ । ५७ ॥

( अतिव्याप्तिवारकभाष्यम् )

**इङादेशस्य प्रतिषेधो वक्तव्यः । अध्याप्य गतः ॥**

( प्रदीपः ) **अध्याप्येति** । 'क्रीङ्जीनां णौ' इत्यात्वम्, 'अर्तिह्री–' इत्यादिना पुगागमः ॥

( ६५५९ अतिव्याप्तिवारणसाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आपः सानुबन्धकस्य निर्देशादिङि सिद्धम् ॥ * ॥**

( भाष्यम् ) **आपः सानुबन्धकनिर्देशः करिष्यते–आप्ऌ इति । तेन इङादेशस्य न भविष्यति ॥**

( प्रदीपः ) **सानुबन्धकनिर्देशादिति** । 'आपुल्' इति पठितव्यमित्यर्थः । आप्ऌशब्दात्पञ्चम्येकवचने ऋकारऌकारयोः सवर्णविधिरिति 'ऋत उत्' इत्युत्त्वम् । 'उरण्रपरः' इत्यत्र प्रत्याहारग्रहणाल्लपरत्वम् ॥ भाष्यकारस्त्वसन्देहार्थमविभक्तिकत्वमाश्रित्याह—**आप्ऌ इति** ॥

( उद्द्योतः ) **असंदेहार्थमिति** । आपुलिति किमाङ्पूर्वस्य पुल महत्त्वे इत्यस्याविभक्तिको निर्देशः, उताप्ऌधातोः–इति सन्देहनिवृत्त्यर्थमित्यर्थः ॥

---

१ 'अल्लोपे गुरुपूर्वात्प्रतिषेधः' इत्येतदपि वार्तिकमिति च. छ. झ. ढ. पुस्तकेषु निर्दिष्टम् । अ. संज्ञकादिषु प्राचीनेषु लिखितपुस्तकेषु नैतद्वार्तिकत्वेन निर्दिष्टमित्यस्मिन्नपि पुस्तके न तथा निदर्शनम् । अन्यच्च 'भाष्ये दोषान्तरमाह—अल्लोपे चेति' इत्युद्द्योतदर्शनादप्यध्यवसीयते नैतद्वार्तिकमिति । यद्यपि भाष्यस्थप्रतीकग्रहणवेलायां 'भाष्ये' इत्यादि निर्देश उद्द्योतकाराणां शैलीसिद्धः । अत एव तत्र तत्र 'भाष्ये' इत्याद्युल्लेखो दृश्यते, तथापि भाष्ये कृतभूरिपरिश्रमाणामुद्द्योतकाराणां व्याख्यानादिना भाष्येऽसन्देहापादने बद्धपरिकराणां सन्दिग्धोऽयं निर्देशो न शोभामावहेदिति 'आह' इत्यस्य कर्तृत्वं भाष्यकृतामेवोद्द्योतकृद्भिः समाश्रीयत इति निश्चप्रचमूह्यते ॥

२ वर्णग्रहणे जातिग्रहणाद्वर्णद्वयस्यैव ग्रहणं न त्वधिकस्येत्यत्र प्रमाणमाह—अत एवेति ॥

३ 'दम्भेरपीस्-ईत्वाभ्यां नलोपसंयोगादिलोपाभ्यां' इति ड. पाठः । 'दम्भेरपीस्-ईत्वाभ्यां संयोगादिलोपनलोपाभ्यां' इति ढ. झ. पाठः । वस्तुतस्तु संयोगादिलोपाभ्यामिति द्विवचनेनोभयोः संग्रहे नलोपग्रहणपाठो लेखकचापल्यादापतित इति प्रतिभाति ॥ संयोगादिलोपाभ्यामित्यनेन सकारनकारयोर्लोपस्य ग्रहणम् ॥

४ 'सानुबन्धकनिर्देशात्' इति च. छ. झ. पाठः ॥

५ 'सानुबन्धकस्य निर्देशः' इति च. छ. झ. पाठः ॥

( लक्षणप्रतिपदोक्तपरिभाषया दोषनिवारकभाष्यम् )

[1][ स तर्हि सानुबन्धकस्य निर्देशः कर्तव्यः । न कर्तव्यः । कथमध्याप्य गतः ? ] अथवा-लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भविष्यति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ॥

( प्रदीपः ) लक्षणप्रतिपदोक्तयोरिति । लाक्षणिकस्यानुमेयरूपत्वाद्विलम्बितप्रतीतिगोचरत्वात्, प्रतिपदोक्तस्य तु प्रत्यक्षत्वादविलम्बितप्रतीतिविषयत्वात् । आकृतौ च पदार्थे इयं परिभाषा, न व्यक्तौ । तत्र हि सर्वस्यां व्यक्तौ लक्षणेन प्रवर्तितव्यम् ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठाध्यायस्य चतुर्थे पादे द्वितीयमाह्निकम् ॥

( उद्द्योतः ) आकृतौ चेति । इदमसकृदावेदितम्[3] ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठस्य चतुर्थे पादे द्वितीयमाह्निकम् ॥

अथ षष्ठस्य चतुर्थे तृतीयमाह्निकम् ।

( १२८८ विधिसूत्रम् ॥ ६ । ४ । २ आ. १ )

## ३०६० स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६ । ४ । ६२ ॥

( भावकर्मणोर्विषये पक्षद्वयोपस्थापकं भाष्यम् )

( चिण्वद्भावाधिकरणम् )

कथमिदं विज्ञायते भावकर्मणोर्ये स्यादय इति, आहोस्विद्भावकर्मवाचिनि परतो ये स्यादय इति ? किञ्चातः ?

यदि विज्ञायते—भावकर्मणोर्ये स्यादय इति, सीयुट् विशेषितः, स्यसिच्तासयोऽविशेषिताः । अथ विज्ञायते-भावकर्मवाचिनि परतो ये स्यादय इति, स्यसिच्तासयो विशेषिताः, सीयुडविशेषितः । उभयथा[4] चिण्वद्भावोऽविशेषितः ॥

यथेच्छसि तथास्तु ।

( प्रदीपः ) कथमिति । किं भावकर्मणोरित्यभिधेयनिर्देशः–भावकर्मणोर्ये वर्तन्ते स्यादय इति । अथ भावकर्माभिधायी प्रत्ययो भावकर्मभ्यामभिधीयते–भावकर्मवाचिनि प्रत्यये परतो ये स्यादय इति । तत्राद्ये पक्षे भावकर्मशब्दस्य मुख्यार्थवृत्तित्वं, द्वितीये गौणार्थता[5] । युगपत्तु गौणमुख्यार्थवृत्तित्वासम्भव इति प्रश्नः ॥

यदि विज्ञायते इति । यदि प्रसिद्ध्यनुरोधेन मुख्यार्थपरिग्रहः ॥

सीयुट् विशेषित इति । 'आर्धधातुके' इति वर्तते, न च सीयुट आगममात्रस्यार्धधातुकसंज्ञाऽस्ति–इति सामर्थ्यात्सीयुडाद्यार्धधातुकं गृह्यते । तस्य च सम्भवति भावकर्माभिधायित्वमित्यर्थः ॥

स्यसिच्तासय इति । भावकर्तृकर्मणां लादेशार्थत्वेन शास्त्रे व्यवस्थापितत्वात्, विकरणानामतदर्थत्वात् ॥

अथेति । भूयसामनुग्रहाय[6] यदि गौणार्थसंश्रयणमिति भावः ॥ सीयुडविशेषित इति । तत्र सीयुटः प्रत्ययैकदेशत्वात्समुदायावयवयोः[7] पौर्वापर्याभावादागमे ह्युपजाते सागमकस्य प्रत्ययादयः संज्ञाः[8], अर्थाभिसम्बन्धश्च, न तदवयवस्य–इति सीयुटो भावकर्मवाचिप्रत्ययपरत्वासम्भवः सत्यप्यवयवयोः पौर्वापर्ये । अतोऽनन्तरं क्वचित्पाठः–'उभयथाऽपि चिण्वद्भावोऽविशेषितः' इति, तत्र न दोषान्तरोपन्यासः[9] । किं तर्हि ? पक्षद्वये दोषोपसंहारः । अन्यतरपक्षपरिग्रहे सर्वविषयाव्यापनादविशेषितश्चिण्वद्भाव इत्यर्थः ॥

( उद्द्योतः ) नन्वर्थद्वयपरिग्रहमाश्रित्य[10] तृतीयपक्षोऽपि किं नोद्भावितोऽत आह—युगपत्त्विति ॥

---

१ [ ] एतच्चिह्नगतोंऽशः 'अ.' पुस्तके न ॥

२ 'अथवा'शब्द पाठः. अ. पुस्तके एव ॥

३ असकृदावेदितमिति । लक्षणप्रतिपदोक्तपरिभाषा व्यक्तिपक्ष एव प्रवर्तत इत्यत्र वीजन्तु प्रतिलक्ष्यं लक्षणोपप्लुवात्सर्वस्यां व्यक्तौ लक्षणप्रवर्तनमेव । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थत्वान्नेयम्परिभाषा प्रवर्तते–इति प्रदीपाशयः । 'न ब्राह्मणं हन्यात्' इत्यादौ व्यक्तिपक्षे कस्याश्चैकव्यक्तेरहिंसनेन शास्त्रचारितार्थ्ये तदितरव्यक्तेर्हननेऽपि शास्त्रहानिर्न स्यादित्याशङ्क्य जातिपक्षाश्रयणेन भाष्यकृता समाहितम् । तथा 'गौरनुबन्ध्यः' इत्यत्र जातिपक्षाश्रयणे सकलगवानुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम् । एवञ्च जातिपक्ष एव सकललक्ष्यव्यापनस्य भाष्यकृतोक्तत्वात्तद्विरुद्धोऽयम्प्रदीप इत्यसकृत्तत्र तत्रोक्तमित्याशयः ॥

४ 'उभयथाऽपि चिण्व' इति क. ङ. पाठः । 'उभयथा च चि–' इति च. पाठः ॥

५ द्वितीये गौणार्थतेति । भावकर्मवाचिनि प्रत्यये परतो ये स्यादय इति पक्षे भावकर्मशब्दस्य प्रत्ययपरकत्वेनाप्रसिद्धत्वरूपगौणार्थत्वमिति भावः ॥

६ भूयसामनुग्रहायेति । भावकर्मशब्दस्य मुख्यार्थपरत्वे सीयुडेव विशेषितो भवति । गौणार्थत्वे तु स्यादयो बहवो विशेषिता इति द्वितीये पक्षे भूयसामनुग्रहः ॥

७ समुदायावयवयोरिति । समुदायस्य स्वावयवात् परत्वं स्वावयवात्तस्य पूर्वत्वं वा न सम्भवतीति भावः ॥

८ सीयुटः प्रत्ययैकदेशत्वमुपपादयति—सागमकस्य प्रत्ययादयः संज्ञा इति ॥

९ दोषान्तर इति । भाष्यकृता नायं तृतीयपक्ष उपस्थापितः किन्तु पक्षद्वय एवायं दोष इत्यर्थः ॥

१० ननु प्रदीपे पक्षद्वयस्यैवोपन्यासोऽयुक्तः, भाष्यकृत्प्रदर्शिततृतीयपक्षस्यापि सत्त्वादित्यत आह—नन्वर्थद्वयेति ॥

ननु सीयुट आगमत्वाद्भावकर्मवृत्तित्वासंभव इति कथं सीयुटो विशेषितत्वमत आह—आर्द्धधातुकेति ॥

शास्त्रे-'सार्वधातुके यगू' इतिसूत्रस्थभाष्ये । स्यादीनां साधारणत्वेन तद्द्योतकत्वमपि नेति भावः ॥

ननु मुख्ये संभवति गौणग्रहणमन्याय्यमत आह—भूयसामिति ॥ अविशेषित इति । भावकर्मणोरित्यनेन विशेषणेनेति भावः ॥

भाष्ये—चिण्वद्भावोऽविशेषित इति । चिण्वद्भावविषयः सर्वोऽविशेषित इत्यर्थः ॥

( प्रथमपक्षे दोषवारकभाष्यम् )

**अस्तु—भावकर्मणोर्ये स्यादय इति ।**

**ननु चोक्तं—सीयुट् विशेषितः, स्यसिच्तासयोऽविशेषिता इति ।**

**स्यसिच्तासयश्च विशेषिताः ।**

**कथम् ?**

**भावकर्मणोर्यग्भवतीत्यत्र स्यादयोऽप्यनुवर्तिष्यन्ते ॥**

( प्रदीपः ) **स्यादयोऽपीति** । स्याद्यनुवृत्तेरिदमेव प्रयोजनं-भावकर्मणी स्यादीनामप्यभिधेये यथा स्यातामिति । यथा च द्वन्द्वपदानि प्रत्येकं समुदायार्थवाचीनि तथा स्यादयो लादेशाश्च भावकर्मणी अभिदधतीति न कश्चिद्दोषः ॥

( उद्योतः ) ननु भावकर्मणोर्यगित्यत्र स्यादीनामनुवृत्तावपि कथमत्रेष्टसिद्धिरत आह—स्याद्यनुवृत्तेरिति । 'ये स्यादयो विहितास्ते भावकर्मणोर्भवन्ति'इति वाक्यभेदेन सम्बन्ध इति भावः ॥ ननु लादेशैरेव तयोरर्थयोरुक्तत्वात्पुनस्तेषां तदभिधायकत्वं व्यर्थमित्यत आह—यथा चेति । अन्यथा स्यादीनामानर्थक्यात्प्रयोग एव न स्यादिति भावः ॥ समुदायार्थेति । परस्परसमभिव्याहारात्साहित्यरूपार्थवाचीनीति भावः ॥ अभिदधतीति । द्योतयन्तीत्यर्थः ॥

( द्वितीयपक्षे दोषवारकभाष्यम् )

**अथवा पुनरस्तु—भावकर्मवाचिनि परतो ये स्यादय इति ।**

**ननु चोक्तं—स्यसिच्तासयो विशेषिताः, सीयुडविशेषित इति ।**

**सीयुट् च विशेषितः ।**

**कथम् ?**

**भावकर्मवाचिनि परतः सीयुट् नास्तीति कृत्वा भावकर्मवाचिनि सीयुटि कार्यं विज्ञास्यते ॥**

( प्रदीपः ) **भावकर्मवाचिनि सीयुटीति** । तत्रन्यायाश्रयणादेकं भावकर्मग्रहणं भिन्नेन रूपेण यथासम्भवं स्यादिभिः सम्बध्यते । **अथवा** विषयसप्तम्येषाऽऽश्रीयते, भावकर्मविषयेषु स्यादिषु चिण्वत्कार्यं भवतीति नास्ति दोषस्यावकाशः ॥

( उद्योतः ) नन्वेकस्य शब्दस्य सामानाधिकरण्यं वैयधिकरण्यं च युगपन्न संभवतीत्यत आह—तत्रन्यायेति ॥ अत्र पक्षे 'स्यसिच्सीयुट्तासिषु'इति द्वन्द्वानुपपत्तेराह—अथवेति ॥ भावकर्मविषयेष्विति । भावकर्मविषयकज्ञानजनकज्ञानविषयेष्वित्यर्थः ॥

( इट्संबन्धिनिर्णयोपक्रमभाष्यम् )

**अथ 'इट् च' इत्युच्यते, कस्यायमिट् भवति ?**

**अङ्गस्येति वर्तते ।**

**यद्येवमङ्गस्यादित इट् प्राप्नोति, अडाड्वत् । तद्यथा-अडाटौ टित्वादादितो भवतः ॥**

( प्रदीपः ) **कस्यायमिति** । स्यादीनामागमसम्बन्धे षष्ठ्यनिर्देशात् **प्रश्नः** ।

स एवाह—**अङ्गस्येति वर्तत इति** । प्रकरणस्य नियोजकत्वं चेदाश्रीयते तदाऽनिष्टप्रसङ्ग इत्यर्थः । **अथवा**—'अङ्गस्येति वर्तते' इति सिद्धान्तवादिवचनम् । अङ्गस्य निमित्तं यत्तस्येडागम इत्यर्थः ॥

इतरस्त्वङ्गमेवानेनागमित्वेनोक्तमिति मत्वाऽऽह—**यद्येवमिति** ॥

( उद्योतः ) ननु स्यादीनां श्रुतत्वादिष्टत्वाच्च तेषामेवेट् सिध्यति, किं प्रश्नेनेत्यत आह—**स्यादीनामिति** ॥ स एवेति । न तु सिद्धान्ती । श्रुतानां षष्ठ्यन्तत्वाभावेनागमित्वे प्रमाणाभावात् । श्रुतेर्विनियोजकत्वाभावे प्रकरणस्य विनियोजकत्वमाश्रीयत इत्यर्थः ॥ एवं व्याख्याने ग्रन्थच्छायाभङ्गं मत्वा प्रकारान्तरेण व्याचष्टे—अथवेति ॥

---

१ ड. पुस्तके 'आर्धधातुक इति' इति प्रतीकं दृश्यते ॥

२ साधारणत्वेनेति । स्यादीनां कर्तृकर्मसाधारणत्वेन भावकर्मद्योतकत्वं तेषां न सम्भवतीति भावः ॥

३ ननु स्यादीनां लादेशानाश्च भावकर्मवाचकत्वे बोधस्यावृत्तिप्रसङ्गोऽत आह—यथा च द्वन्द्वपदानीति । द्वन्द्वघटकपदानि साहित्यवाचीन्यपि न बोधावृत्तिस्तथात्रेऽति भावः ॥

४ ये स्यादय इति । 'सार्वधातुके यक्' इति यग्विधायके सूत्रे स्यादीनामनुवर्तनात्तेऽपि तदर्थे विधीयन्त इति स्यादीनामपि भावकर्मवाचित्वात्प्रथमः पक्ष उपपन्न इति भावः ॥

५ एकस्य शब्दस्य-भावकर्मणोरित्यस्य, सामानाधिकरण्यं-सीयुटा, वैयधिकरण्यं-स्यादिभिः ॥

६ द्वन्द्वानुपपत्तेरिति । एवं भावकर्मणोरित्यस्य सामानाधिकरण्यवैयधिकरण्यान्वये सहविवक्षाऽभावाद्द्वन्द्वानुपपत्तेरित्यर्थः ॥

७ भावकर्मविषयकेति । भावकर्मविषयकं ज्ञानं लादेशैर्भवति, भावकर्मणोस्तेषां विहितत्वात् । तज्जनकज्ञानविषयत्वं च स्यादीनां सीयुटश्च भवतीति न दोषः ॥

८ 'भवतस्तद्वत्' इति छ. झ. ड. ट. पाठः ॥

( इदसंबन्ध्याक्षेपभाष्यम् )

**एवं तर्हि स्यादीनां भविष्यति ।**

**एवमपि षष्ठ्यभावान्न प्राप्नोति ।**

**ननु च 'भावकर्मणोः' इत्येषा षष्ठी ।**

**नैषा षष्ठी ।**

**किं तर्हि ?**

**अर्थनिर्देश[1] एवासौ सप्तमी-भावे चार्थे कर्मणि चेति ॥**

( प्रदीपः ) **षष्ठ्यभावादिति** । इच्छामात्रेण स्यादीनामागमित्वमलभ्यमित्यर्थः ॥

**ननु च भावकर्मणोरित्येषा षष्ठीति** । षष्ठीनिमित्तत्वात् षष्ठीत्युच्यते । यथा नड्वलोदकं पादरोगः । इह भावकर्मवाचिनि परतो ये स्यादय इति शब्देन शब्दस्य पौर्वापर्यसम्भवात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपतिष्ठत इत्यस्ति भावकर्मणोरित्यस्य षष्ठीप्रक्लृप्तौ निमित्तभावः ॥

इतरस्तु भावकर्मणोरित्यभिधेयसप्तमीं मत्वाऽऽह—**नैषा षष्ठीति** ॥

( उद्द्योतः ) **इच्छामात्रेणेति** । श्रुत्यादिभिः प्रमाणैरेव शेषत्वलाभः, न तु केवलेच्छयेत्यर्थः ॥

कथं पुनर्भावकर्मणोरित्यस्य षष्ठीनिमित्तत्वमत आह—**इहेति** ॥

( इदसंबन्धिसाधकभाष्यम् )

**एवं तर्हि 'भावकर्मणोः'इत्येषा सप्तमी स्यादिष्विति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' ( १।१।६६ ) इति ।**

**एवमपि न सिध्यति ।**

**किं कारणम् ?**

**न ह्यर्थेन पौर्वापर्यमस्ति ।**

**अर्थेऽसम्भ[3]वाद्भावकर्मवाचिनि शब्दे कार्यं विज्ञास्यते ॥**

( प्रदीपः ) इतरस्तु स्वाभिप्रायं प्रकाशयितुमाह—**एवं तर्हीति** । भावकर्मवाची प्रत्यय उपचारात् भावकर्मशब्दवाच्यः परत्वेन सप्तम्या प्रतिपादित इति स[4]प्तमी 'स्यसिच्सीयुट्तासिषु'इति सप्तम्याः कार्यातिदेशे चरितार्थायाः षष्ठीं प्रकल्पयति ॥

चोदको यथोक्तमभिप्रायमप्रतिपद्याह—**न सिध्यतीति** । त[5]त्र हि 'निः'शब्दस्य प्रयोजनं शब्दे सप्तमीनिर्दिष्टे परिभाषोपस्थानं यथा स्यात्, अ[6]र्थे मा भूत् । शब्दश्च शब्दात् बहिर्भूतः, अर्थस्त्वन्तर्भूतः, निश्शब्दो बहिर्भाववाची ॥

पूर्वोक्तेनाभिप्रायेणाह—**अर्थेऽसम्भवादिति** ॥

( उद्द्योतः ) ननु सप्तमीनिर्देशसामर्थ्यात्षष्ठीप्रक्लृप्तिर्न स्यादत आह—कार्यातिदेश इति । 'स्यादिषु परतोऽज्झनादीनां चिण्वत्कार्यं भवति'इति पूर्ववाक्ये चरितार्था सप्तमीति भावः ॥ **अर्थे मा भूदिति** । 'जनपदे लुप्'इत्यादौ यथा ॥

( आक्षेपभाष्यम् )

**एवमपि सीयुटो न प्राप्नोति ॥**

( प्रदीपः ) **एवमपीति** । न हि सीयुटो भावकर्मवाचिना प्रत्ययेन पौर्वापर्यमस्ति, सीयुटस्तदवयवत्वात् ॥

( योगविभागेनाक्षेपनिवारकभाष्यम् )

**एवं तर्हि सप्तमे योगविभागः करिष्यते—'आर्धधातुकस्येट्' यावानिण् नाम स सर्व आर्धधातुकस्य भवतीति विज्ञेयम् । ततः–'वलादेः', वलादेरार्धधातुकस्येट् भवतीति ॥**

(प्रदीपः) **आर्धधातुकस्येडिति** । परिभाषेयं क्रियते, य[7]त्रेद् विधीयते तत्र 'आर्धधातुकस्य'इत्युपतिष्ठते । तेन स्यादीनामेवासत्यामपि षष्ठीप्रक्लृप्ताविड्भविष्यति । 'रुदादिभ्यः सार्वधातुके' इत्यत्र विरोधा[8]दार्धधातुकस्येति नोपतिष्ठते ॥

( उद्द्योतः ) **असत्यामपीति** । आ[9]र्द्धधातुकस्येत्युपस्थाने प्रत्यासत्त्याऽऽर्द्धधातुकपदेन स्यादीनामेव ग्रहणात्स्यादय इटा संबध्यन्ते । सीयुड्विषये च सीयुडादि गृह्यत इति भावः ॥

( योगविभागाक्षेपभाष्यम् )

**यद्येवम्, स्यसिच्सीयुट्तासिष्विट् भवति, चिण्वद्भावश्चाविशेषितो भवति ।**

**तत्र को दोषः ?**

**स्यसिच्सीयुट्तासिष्विट् भवति, अज्झनग्रहदृशां वा चिण्वदिति क्वचिदेव चिण्वद्भावः स्यात् ॥**

( प्रदीपः ) **यद्येवमिति** । स्यादीनामागमविधावुपयोगात् पुनः श्रुत्यभावादविशेषितश्चिण्वद्भावः । आर्धधातुकग्रहणे ह्युपतिष्ठमाने तेन स्यादीनां विशेषणादागमसम्बन्धयोग्यषष्ठ्युपादानादयमर्थः स्यात्–'अज्झनग्रहदृशां वा चिण्वद्भवति यत्र क्वचित्, यत्र तु स्यादयः सन्ति तेषामिट्'इति । यथा 'कर्तुः क्य[10]ङ् सलोपश्च'इत्यत्रेति भावः ॥

---

१ 'स्यादीनामेव' इति च. छ. झ. पाठः ॥

२ 'निर्देश एषा सप्त' इति च. छ. झ. ड. पाठः ॥

३ 'असम्भवात्तद्भावचिनि' इति छ. झ. पाठः ॥

४ सप्तमी—भावकर्मणोरिति सप्तमी ॥

५ तत्र हि—तस्मिन्निति निर्दिष्टे पूर्वस्येत्यत्र हि ॥

६ अर्थे माभूदिति । अर्थे–सप्तमीनिर्दिष्टे 'जनपदे लुप्' इत्यादौ यथा तस्मिन्निपरिभाषोपस्थितिर्न भवति तथाऽत्रापि भावकर्मणोरित्यर्थनिर्देशेन तत्परिभाषोपस्थानं न स्यादिति न सिध्यतीति भावः ॥

७ 'आर्धधातुकस्येद्' इत्यस्य परिभाषात्वे तदर्थमाह—यत्रेडिति ॥

८ विरोधात्—सार्वधातुकार्धधातुकयोर्विरोधादित्यर्थः ॥

९ 'आर्धधातुकस्येट्' इति परिभाषास्वीकारे कथमेकेन यत्नेन स्यादीनां सीयुटश्चागमित्वं लभ्यं तदाह—आर्धधातुकस्येत्युपस्थान इति ॥

१० कर्तुः क्यङिति । तत्र हि सूत्रे चकारस्यान्वाचयशिष्टार्थत्वेन यत्र वान्तत्वं तत्र सलोपो भवति क्यङ् तु सर्वत्र, तथाऽत्रापि इट् सर्वत्र, चिण्वद्भावस्तु अन्वाचयशिष्ट इति भावः ॥

( उद्द्योतः ) अविशेषितश्चिण्वद्भाव इति । तद्विषयो हनादिरित्यर्थः ॥ नन्विट्संनियोगेन विधीयमानश्चिण्वद्भावस्तत्रैव भवेत्, न यत्र कच्चिदित्यत्राह—यथा कर्त्तुरिति । अन्वाचयशिष्टश्चिण्वद्भाव इत्यर्थः ॥

( अनुवृत्त्याऽऽक्षेपनिरासभाष्यम् )

**एवं तर्हि स्यादीनेवात्रापेक्षिष्यामहे । स्यसिच्सीयुट्तासिष्विट् भवति, अज्झनग्रहदृशां वा चिण्वत्स्यादिष्विति ॥**

( प्रदीपः ) स्यादीनेवेति । तेषामेव श्रुतत्वात्तत्परित्यागेनाश्रुतकल्पनाया अयुक्तत्वात् प्रत्ययापेक्षत्वादङ्गस्येति भावः। सप्तमीनिर्देशसामर्थ्याद्वा चिण्वद्भावे पूर्वमुपयुक्तानां स्यादीनामार्धधातुकोपस्थानसामर्थ्यात्पश्चादिटा सम्बन्धः ॥

( उद्द्योतः ) प्रत्ययापेक्षत्वादङ्गस्येति। अङ्गसंज्ञाया इत्यर्थः। अजादीनामङ्गानां चिण्वद्भावविधानात्प्रत्ययाकाङ्क्षायां प्रत्ययानां संनिहितानामेव योग्यत्वात्संबन्ध इति भावः। एवमागमविधावुपयुक्तानां स्यादीनां पश्चाच्चिण्वद्भावेनान्वय इत्युक्तम् ॥ वस्तुतः पूर्वं चिण्वद्भाव उपयुक्तानां पश्चादिटा संबन्धो युक्ततर इति स एव भाष्यार्थ इत्याह—सप्तमीनिर्देशसामर्थ्याद्वेति । अयमत्र भाष्यार्थः—पूर्वं चिण्वद्भावे उपयुक्तानेव स्यादीन् अत्रेड्विधिवाक्ये आर्द्धधातुकपदेनापेक्षिष्याम इति ॥

( इडुद्देश्यतावच्छेदकाक्षेपभाष्यम् )

**के पुनरिममिटं प्रयोजयन्ति ?**

**येऽनुदात्ताः ।**

**अथ ये उदात्तास्तेषां कथम् ?**

**सिद्धं तेनैव परत्वात् ॥**

( प्रदीपः ) के पुनरिति । सर्वेभ्य इष्यते न च प्राप्नोतीति मत्वा प्रश्नः ॥

स एव पराभिप्रायमाशङ्कते—**येऽनुदात्ताः । अथ ये उदात्तास्तेषां कथम् ? सिद्धं तेनैव परत्वादिति ।** किमेवं भवान् मन्यते इत्यर्थः ॥

( उद्द्योतः ) स एवेति । न तु सिद्धान्तवादी, हेयत्वादस्य पक्षस्येति भावः ॥

( समाधानभाष्यम् )

**उदात्तेभ्योऽपि अनेनैवेडेषितव्यः ।**

**किं प्रयोजनम् ?**

**कारयतेः कारिष्यते । हारिष्यते । इटोऽसिद्धत्वात् 'णेरनिटि' (६।४।५१) इति णिलोपो यथा स्यात् ॥**

( प्रदीपः ) ततः सिद्धान्तवाद्याह—**उदात्तेभ्योऽपीति** ॥ अथवा शिष्याचार्यदेशीययोः **के पुनरि**त्यादिके प्रश्नप्रतिवचने **परत्वादि**त्यन्ते । आचार्य आह—**उदात्तेभ्योऽपीति** । उदात्तग्रहणं चोपलक्षणम् । 'ऋद्धनोः स्ये'इत्यनुदात्तेभ्योऽपि इड्विधानात् । तुल्यत्वान्न्यायस्य तेभ्योऽप्यनेनैवेड्विधिः ॥

**इटोऽसिद्धत्वादिति** । ततश्चानिटीति प्रतिषेधाभावात् सिध्यति णिलोपः । अपि चेट्संनियोगेन विधीयमानश्चिण्वद्भावोऽपि भवति। अन्यथैतदभावे चिण्वद्भावो न स्यात्, संनियोगशिष्टानामन्यतराभावे द्वितीयाभावात् । अन्वाचये तु विज्ञायमाने स्याच्चिण्वद्भावः । यथा कर्तुः क्यङ् सलोपाभावेऽपि ॥

( उद्द्योतः ) तुल्यत्वान्न्यायस्येति । यथोदात्तेभ्यो नित्यत्वादयमेवेड्भवति तथा 'ऋद्धनोः स्ये' इत्यादिविषयेऽप्यनेनेट्, तस्यापि वलादिलक्षणत्वादिति भावः ॥

फलान्तरं दर्शयति—**अपि चेडिति** ॥ **अन्वाचये त्विति** । असति तात्पर्यग्राहक एकचकारप्रयोगे समुच्चयस्यैव प्रतीतेः स युक्त इति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**कथं पुनरिच्छता भवता उदात्तेभ्योऽनेनैवेट् लभ्यः, न पुनरनेनास्तु तेनेति—तेनैव स्याद्विप्रतिषेधेन ।**

( समाधानभाष्यम् )

**नित्योऽयम् । कृतेऽपि तस्मिन् प्राप्नोत्यकृतेऽपि ।**

**न त्वस्मिन् कृते स प्राप्नोति ।**

**किं कारणम् ?**

**अवलादित्वात् ।**

**तस्मादनेनैवेडेषितव्यः ॥**

( प्रदीपः ) नित्योऽयमिति । वलादित्वानपेक्षणात् । आकृतिपक्षे च शब्दान्तरत्वाभावात् शब्दान्तरप्राप्त्याऽपि नास्त्यनित्यत्वम् । भावकर्मार्थापेक्षणादस्य बहिरङ्गत्वमिति चेत्, तस्यापि वलादित्वापेक्षत्वान्नास्त्यन्तरङ्गत्वमित्यदोषः ॥

(उद्द्योतः) ननु वलादिलक्षणे इटि सतीडादेः प्राप्नोति, असति तद्रहितस्येति शब्दान्तरप्राप्त्याऽयमनित्योऽत आह—**आकृतिपक्षे चेति** । व्यक्तिपक्षे हि स न्याय इति भावः । वस्तुतोऽत्र लक्ष्यानुसारात्कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाङ्गीकार इति बोध्यम् ॥ **तस्यापि वलादित्वेति** । अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेत्यपि बोध्यम् ॥

( सूत्रप्रयोजनोपन्यासभाष्यम् )

**कानि पुनरस्य योगस्य प्रयोजनानि ?**

१ तत्रैव—इडाश्रय एव ॥
२ 'भावः' इति अ. पुस्तक एव दृश्यते ॥
३ 'विधावप्युपयुक्तानां' इति झ. पाठः ॥
४ 'हारयतेर्हारिष्यते' इति छ. झ. क. पाठः ॥
५ 'पुनरिच्छताऽपि' इति च. छ. झ. ड. पाठः ॥
६ 'तेनैवेति' इति ड. पाठः । 'तेन वेति' इति च. छ. झ. पाठः ॥
७ 'ननु च नित्योऽयम्' इति च. छ. झ. पाठः ॥

(प्रदीपः) कानि पुनरिति । [1]प्रकरणाद्व्यवस्थाश्रयणादाङ्गान्येव कार्याणि प्रयोजनानि, अथाविशेषेण–इति प्रश्नः ॥

(प्रयोजने श्लोकवार्तिकम्)

**वृद्धिश्चिण्वद्युक हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ॥**

(भाष्यम्) वृद्धिः प्रयोजनम् । चेष्यते, चायिष्यते ॥

[2]युक् प्रयोजनम् । ग्लास्यते, ग्लायिष्यते ॥

हन्तेश्च घत्वं प्रयोजनम् । हनिष्यते । घानिष्यते ॥

दीर्घश्चोक्तो यो मितां वा चिणीति, स च प्रयोजनम् । शमिष्यते । शामिष्यते । तमिष्यते । तामिष्यते ॥

(प्रदीपः) इतर आङ्गान्येवोदाहरति—वृद्धिरिति ॥

(उद्योतः) इतर इति । प्रकरणाद्व्यवस्थामाश्रित्येत्यर्थः । चिण्वदित्यस्य–चिण्वद्भावप्रयोजनमित्यर्थः ॥

(प्रयोजने श्लोकवार्तिकम्)

**इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥**

(भाष्यम्) इटोऽसिद्धत्वात् 'णेरनिटि' (६।४।५१) इति णिलोपो यथा स्यात् ।

[3]कथमयं नित्यः ?

कृताकृतप्रसङ्गित्वात् । [4]कृताकृतप्रसङ्गी ह्ययम् । कृतेऽपि तस्मिन्निटि सार्वधातुके 'आर्धधातुकस्येड्वलादेः' (७।२।३५) इति, [5]पुनरनेनायं भवति । अस्मिंस्तु विहिते वलादित्वस्य निमित्तस्य विहतत्वात्सार्वधातुको न भवति । [6]निमित्तं विहितं भवति । अयं तस्य निमित्तं विहन्ति तस्मादयं नित्यः । [7]स तु अस्य निमित्तं न विहन्ति ॥

(प्रदीपः) विघातीति । अस्मिन्निटि सति वलादिलक्षणस्येटो वलादित्वाभावादप्रवृत्तिलक्षणो विघातः, ततस्तस्यानित्यत्वमित्यर्थः । अथवा—वल्निमित्त इडविघाती, अस्येटोऽप्रतिबन्धक इत्यर्थः ॥

(उद्योतः) विघातीत्यस्य–अनित्य इत्यर्थं दर्शयति—अस्मिन्निटीति ॥ अथवेति । अकारप्रश्लेषः कार्य इति भावः । एवं चाद्ये 'वल्निमित्तः' इत्यस्यानित्य इति शेषः । तस्य हेतुः—विघातीति ॥ अस्य–'अयं' इति शेषः । [8]कर्तरि णिनिः, [9]तद्वक्ष्यति क्वचिद्भाष्ये—'अयं तस्य निमित्तं विहन्ति' इति । अन्ये तु यतो वल्निमित्तोऽस्याविघाती–एवं न विहन्तीत्यतोऽयं नित्य इत्यर्थः । तद्वक्ष्यति—'स त्वस्य निमित्तं न विहन्ति' इति । अन्यतरपक्षेऽ[10]न्यदर्थबोधम् । अन्ये तु–अत्रायं वार्तिकार्थः—"वृद्धिः–अन्त्यवृद्धिरुपधावृद्धिश्च । इडिति । इट् प्रयोजनं दृश्यादौ । चासिद्ध इत्यत्रोपस्थितत्वादिडेव गृह्यते" इत्याहुः ॥

(पदकृत्यभाष्यम्)

अथोपदेशग्रहणं किमर्थम् ?

(६५६० उपदेशपदप्रयोजनवार्तिकम् ॥ १ ॥)

**॥ * ॥ चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात् ॥ * ॥**

(भाष्यम्) **चिण्वद्भावे उपदेशवचनं क्रियते, ऋकारगुणस्य बलीयस्त्वात् । कारिष्यते । परत्वात् गुणे रपरत्वे चानजन्तत्वात् चिण्वद्भावो न प्राप्नोति, उपदेशग्रहणाद्भवति ॥**

(प्रदीपः) ऋकारगुणस्येति । अन्येषां तु गुणोऽजन्तत्वं न विहन्तीति नित्यत्वाच्चिण्वद्भावः सिध्यति । चायिष्यते–लाविष्यत इति भावः ॥ परत्वादिति । द्वयोरप्यनित्यत्वात् ॥

(उद्योतः) 'ऋकार' इति विशेषणकृत्यमाह—अन्येषामिति । ऋकारान्तगुणस्तु प्रसङ्गावस्थायामेव रपरत्वादज[11]न्तत्वविघातक इति भावः । न चोपदेशग्रहणे कृतेऽप्युपदेशे योऽच् तदन्तस्येत्यर्थे '[12]चायिष्यते' इत्यादावप्यनुपपत्तिः, उपदेशे योऽच् तदन्तत्वाभावात् । एवं 'कारिष्यते' इत्यादावपि दोषः । उपदेशे यदजन्तमित्यर्थस्तु ण्यन्तेऽनापत्त्या [13]कर्तुमशक्यः । न च ण्यन्ते लोपप्रवृत्तावल्विधौ स्थानिवत्त्वाभावादुपदेशे योऽच् तदन्तत्वमपि दुरुपपादम् । णिलोपात्परत्वेन 'आर्द्धधातुकस्य–' इतीड्भाव्या तं नित्यत्वेन बाधित्वा चिण्वदिट एव प्रवृत्तेरदोषात् । विप्रतिषेधे आभीयासिद्धत्वाभावेन णिलोपात्परत्वा-

---

[1] ननु स्यसिजिति सूत्रस्य 'कारिष्यते' इत्यादीनि बहूनि प्रयोजनानि पूर्वमुक्तानीति प्रश्नोऽनुपपन्नोऽत आह—प्रकरणादिति ॥

[2] 'युक्च' इति च. छ. झ. ट. ड. पाठः ॥

[3] 'कथं पुनरयं' इति च. छ. झ. पाठः ॥

[4] अस्य छ. पुस्तके न पाठः ॥

[5] 'पुनरयं' इति छ. पाठः ॥

[6] 'निमित्तस्याविहितत्वात् । अस्मिंस्तु कृते न स भवति, विहितनिमित्तत्वात् । स वलादेरित्युच्यते । अनेन कृते इटि तस्य वलादित्वं निमित्तं विहतम्भवति' इति ड. पाठः ॥

[7] अस्य ग्रन्थस्य च. छ. पुस्तके न पाठः ॥

[8] कर्त्तरीति । विघातीत्यत्रेति भावः ॥

[9] तद्वक्ष्यति—कर्तरि व्युत्पत्तिं दर्शयतीत्यर्थः ॥

[10] 'अन्यदर्थं बोधम्' इति ङ. झ. पाठः । प्रथमपक्षे–अयं तस्य निमित्तं विहन्ति अतोऽयं वल्निमित्त इट् अनित्य इत्यर्थं बोध्यम् । द्वितीये च—स त्वस्य निमित्तं न विहन्तीति ॥

[11] 'अजन्तत्वस्य विघातक' इति झ. पाठः ॥

[12] चायिष्यत इति । अत्र हि पूर्वं गुणे उपदेशे योऽच्–इकारस्तदन्तत्वाभावाच्चिण्वद्भावाप्राप्तिरित्यर्थः ॥

[13] कर्तुमशक्य इति । सर्वेभ्योऽपि धातुभ्यो णौ कृतेऽजन्तत्वाच्चिण्वद्भाव इष्टः स उपदेशे यदजन्तमित्याद्यर्थकरणे न सिद्ध्येदित्यर्थः । 'उपदेशे योऽच्' इत्यर्थाश्रयणेऽपि दोषमाह—न च ण्यन्त इति ॥

दस्यैव प्रवृत्तेश्चेति वाच्यम् । 'अतो लोपः' इत्यत्रेवार्धधातुकोपदेशे यदजन्तमित्यर्थेनादोषात् । तत्रैवात्राप्यावृत्त्या सीयुटादिविशेषणत्वं चेत्यदोषात् ॥ द्वयोरपीति । च्चिण्वत्त्वे कृते वृध्या बाधाद्गुणोऽनित्यः ॥

( ६५६१ विप्रतिषेधवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन ॥ * ॥

**(भाष्यम्) वधिभावात्सीयुटि चिण्वद्भावो भवति विप्रतिषेधेन ।**

**वधिभावस्यावकाशः-वध्यात्, वध्यास्ताम्, वध्यासुः ।**

**चिण्वद्भावस्यावकाशः-घानिष्यते, अघानिष्यत । इहोभयं प्राप्नोति-घानिषीष्ट, घानिषीयास्ताम् । चिण्वद्भावो भवति विप्रतिषेधेन ॥**

**अथेदानीं चिण्वद्भावे कृते पुनः प्रसङ्गविज्ञानाद्वधिभावः कस्मान्न भवति ?**

**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति कृत्वा ॥**

**(प्रदीपः) वधिभावादिति** । ननु च 'आर्धधातुके' इति विषयसप्तम्याश्रयणादन्तरङ्गो वधिभावः । नैतदस्ति । 'लिङि' इति विशेषनिर्देशात्परसप्तमी, तद्विशेषणत्वात् 'आर्धधातुके' इत्यपि परसप्तमी । यत्र तु विशेषनिर्देशाभावः 'अस्तेर्भूः' इत्यादौ, तत्रैव विषयसप्तमीविज्ञानं भव्यादिसिद्ध्यर्थम् । 'एकाच उपदेशेऽनुदात्तात्' इत्यत्र तु वक्ष्यति भाष्यकारः-'वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते' आर्धधातुकीयाः सामान्येन भवन्तीत्येवं ब्रुवता 'लिङि' इति विषयसप्तम्येवाभ्युपगता, ततश्चान्तरङ्गत्वाद्वधिभावः प्राप्नोति । प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवति ॥

**( उद्द्योतः ) भव्यादिसिद्ध्यर्थमिति** । 'भव्यं-प्रवेयम्-आख्येयम्'इत्यादौ । अन्यथाऽस्त्यादीनामनजन्तत्वाद्यतो यदनापत्तिरिति भावः ॥ **प्रतिपदविधेरिति** । **चिन्त्यमिदम्** । निरवकाशत्वे सत्येव तस्य बलवत्त्वात् । अत्र हन्तेरित्यंशः स्यादिविषये चरितार्थः । सीयुडंशोऽप्यज्ग्रहादिविषये चरितार्थः । किंच वधादेशोऽपि प्रतिपदविहित इति । तस्मात्स्यसिच्तासिष्वित्यपि विषयसप्तमीति भाष्याशयः । तद्विषये हनादीनां च्चिण्वत्कार्यं, कृतेषु तेषु तेषामिडिति सूत्रार्थः । **वधिभावा**दित्युक्तेरन्यादेशविषयधातूनां च्चिण्वत्त्वविषयेऽनभिधानमिति दिक् ॥

भाष्ये—**सकृद्गताविति** । न चैवं च्चिण्वद्भावाभावेऽपि वधादेशानापत्तिरिति 'एकाचः—' इति सूत्रस्थवधिषीष्टेति भाष्यप्रयोगानुपपत्तिः । प्रवर्तमानेनैव बाधकेन बाध्यबाधो न तु स्वयमप्रवर्तमानेनापीति न दोष इति दिक् ॥

( ६५६२ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ हनिणिङादेशप्रतिषेधश्च ॥ * ॥

**( भाष्यम् ) हनिणिङादेशानां प्रतिषेधो वक्तव्यः । हनिष्यते, घानिष्यते । एष्यते, आयिष्यते । अध्येष्यते, अध्यायिष्यते । लुङीति हनिणिङादेशाः प्राप्नुवन्ति ॥**

**( प्रदीपः ) हनिणिङादेशप्रतिषेधश्चेति** । लुङ्परे आर्धधातुके विधीयमाना हनिणिङादेशाश्चिण्निमित्ता भवन्तीति चिण्वद्भावात् प्राप्नुवन्ति । इह यस्य चिण् साक्षान्निमित्तं निर्दिष्टं तदप्यतिदिश्यते । यथा–युगागमः । यस्यापि प्रकारान्तरेण चिण् निमित्तं तदपि । यथा-वृद्धिः–इति हनि णिङादेशप्रसङ्गः ॥

**( उद्द्योतः )** ननु यच्चिण्याहत्य विहितं युगादि तदेव च्चिण्वद्भावाद्भवति, न च हनिणिङादेशास्तथा विहिता इति कथं तेषां प्रसङ्गोऽत आह—**इहेति** ॥ **यस्यापीति** । च्चिणि दृष्टस्य सर्वस्यातिदेशादिति भावः ॥

( ६५६३ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् ॥ * ॥

**( भाष्यम् ) अङ्गस्य यत्कार्यं तत्प्रतिनिर्दिश्यते । न च हनिणिङादेशा आङ्गा भवन्ति ते ॥**

**(प्रदीपः) अङ्गस्येति तु प्रकरणादिति** । 'अङ्गस्य'इति तु प्रकृत्य यत्कार्यं विहितं तदतिदिश्यते, तस्यैव प्राकरणिकत्वात् । न च हनिणिङादेशाः 'अङ्गस्य'इति प्रकृत्य विहिता इति तेषामप्रसङ्गः ॥

**( उद्द्योतः ) अङ्गस्येति प्रकृत्येति** । न तु वस्तुतोऽङ्गस्य विहितानामतिदेश इति भावः ॥

---

१ भव्यम्–अस्तेर्भूरादेशः, तत्रार्धधातुके परे इत्यर्थकरणे यदनापत्तिः । प्रवेयम्–अजेर्वी । आख्येयम्–चक्षिङः ख्याञ्, 'ईद्यति' इतीकारः ॥

२ वस्तुतस्तु द्वन्द्वनिर्देशात्स्यादिभिर्हनादीनां सम्बन्धात्सीयुटा हनः सम्बन्धस्यानवकाशत्वमेव । वधादेशस्य प्रतिपदविधित्वेऽपि अन्तरङ्गत्वेऽपि च हन्तेः सीयुटीति विशेषोपादानाद्विशेषविधानात् शीघ्रोपस्थितत्वात् । च्चिण्वद्भावत्र एव युक्तः । यद्वा स्यादिषु आर्धधातुकत्वाव्यभिचारात्तत्साहचर्यात्सीयुटोऽप्यार्धधातुकस्यैव ग्रहणे सिद्धे तदधिकारे पाठसामर्थ्यात्पुनर्विधानं कल्प्यत इत्यप्याहुः ॥

३ निरवकाशत्वाभावमुपपादयति—अत्र हन्तेरिति ॥

४ 'चरितार्थः । तथैव भाष्ये प्रदर्शितम् । तच्चोपलक्षणम् । सीयुडंशो' इति ड. पाठः ॥

५ च्चिण्वद्भावाभावेऽपीति । च्चिण्वद्भावस्य विकल्पेन विधानात्तदभावेऽपि सकृद्गतिन्यायेन वधादेशबाधे वधिषीष्टेति न स्यादित्यर्थः ॥

६ हनिणिङादेशाः—हनो वधादेशः, इणो गादेशः, इङो गाङादेशश्च ॥

७ 'देशानां च' इति च. छ. झ. ड. पाठः ॥

८ 'प्रकारान्तरेणापि' इति अ.भिन्नपुस्तकेषु पाठः ॥

९ 'भवन्तीति' इति छ. ट. क. पाठः ॥

१० वस्तुतोऽङ्गस्येति । अङ्गाधिकारस्थकार्याणामतिदेशः, न तु अङ्गोद्देश्यकानामेवेति तात्पर्यम् ॥

( १२८९ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २ )

## ३०६२ आतो लोप इटि च ॥६।४।६४॥

( लोपाधिकरणम् )

( इड्ग्रहणाक्षेपभाष्यम् )

**इड्ग्रहणं किमर्थम् ?**

( प्रदीपः ) **इड्ग्रहणं किमर्थमिति** । इह 'अचि-क्ङिति-आर्धधातुके' इति त्रयाणां प्रकृतत्वाद्विशेषणविशेष्यभावे च कामचारात् तेषामन्यतमेनानुभूतविशेषणेनाननुभूतविशेषणेन वा इटः समुच्चयसंभवादनेकपक्षसम्भवः ॥

**तत्र** यदि तावद्विशेषणसम्बन्धात् प्रागेवाचेट् समुच्चीयते, अङ्गाधिकाराक्षिप्तप्रत्ययविशेषणाच्चाजादौ प्रत्यय इति विज्ञायते। तत्रेड्ग्रहणमनजाद्यर्थं विज्ञायते, अजादेरिटोऽजादिना प्रत्ययेन समुच्चयाभावात् । तदा 'क्ङिदार्धधातुके' अजादेरेव विशेषणे व्यवतिष्ठेते, नेटः, क्ङित्वासम्भवादार्धधातुकत्वव्यभिचाराभावाच्च । ततश्च दासीयेत्यादावाल्लोपप्रसङ्गः ॥

**अथाजादेः** प्रत्ययस्य क्ङिदार्धधातुकाभ्यां विशेषणाभ्यां प्राक् सम्बन्धः, पश्चादिटा समुच्चयः, तदाऽयमर्थः-अजादौ क्ङित्यार्धधातुके इटि चाकारलोप इति, तदेड्ग्रहणमनजाद्यर्थमक्ङिदर्थमनार्धधातुकार्थं च भवतीति 'दासीय-पपिथ-व्यत्सरे'इति सर्वत्रेटि आल्लोपः प्राप्नोति ॥

**अथ** क्ङिताऽननुभूतविशेषणेनेट् समुच्चीयते, तदा 'अच्यार्धधातुके' इति विशेषणद्वयमविशेषात् द्वावपि क्ङिदिटावुपनिपततीति अक्ङिदर्थमेवेड्ग्रहणं विज्ञायते । तेन पपिथेत्यादावाल्लोपो भवति, दासीय व्यत्सर इत्यनजादौ सार्वधातुके च न भवति । अनुभूतविशेषणद्वयसम्बन्धेन तु क्ङितेटः समुच्चये पूर्ववत्सर्वत्रेत्याल्लोपप्रसङ्गः ॥

**अथ** त्वार्धधातुकेनाननुभूतविशेषणेनेटः समुच्चयः-आर्धधातुके चेटि च'इति, तदा सार्वधातुकार्थमिड्ग्रहणं विज्ञायत इति व्यत्पर इत्यादावाल्लोपप्रसङ्गः । तदाऽचि क्ङितीति विशेषणद्वयमार्धधातुकस्यैव स्यात् न त्विटः, सार्वधातुकस्येटो ङित्वाजादित्वाव्यभिचारात् । अनुभूतविशेषणेनार्धधातुकेनेटः समुच्चये सर्वत्रेत्याल्लोपप्रसङ्गः । तदेवमनेकपक्षसम्भवात् **प्रश्नः** ॥

( उद्योतः ) इह बहूनां पक्षाणां संभवात्तेषामेकैकस्य परिग्रहे प्रयोजनभेद इड्ग्रहणस्य भवतीति प्रयोजनप्रश्नद्वारेण कतमः पक्षोऽत्र गृह्यत इति प्रश्नपर्यवसानं दर्शयितुमाह—**इहाचीति** ॥ **अन्यतमेन**-अचा, ङिता, आर्धधातुकेन वा ॥

तत्राननुभूतविशेषणेन केनचिदिटः समुच्चये इतरद्वयं यथासंभवं विशेषणत्वेन योज्यमित्याह—**तत्र यदीति** ॥ **अजादेरिट इति** । भेदाधिष्ठानत्वात्समुच्चयस्येति भावः । अजादेरिटोऽजादिप्रत्ययान्तर्भावादिति तात्पर्यम् । इट्शब्देन चागमस्य प्रत्ययस्य सामान्येन ग्रहणमिति बोध्यम् ॥ **दासीयेति** । दाधातोराशीर्लिङि आत्मनेपदोत्तमपुरुषे सीयुटि च इलादिरिट् संभवति । तस्य क्ङित्त्वं नास्त्येव, आर्द्धधातुकत्वं चाव्यभिचारीति भावः ॥

अथानुभूतविशेषणेनाजादिप्रत्ययेनेट्समुच्चय इतीमं पक्षं दर्शयति—**अथाजादेरिति** ॥ **व्यत्सरे इति** । रा दाने, लङि 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदोत्तमपुरुषैकवचनमिट् । अदादित्वाच्छपो लुक् । तत्र मध्यमे इष्टो लोपः, आद्यन्तयोस्त्वनिष्टः प्राप्नोतीति दोषः ।

तदा सार्वधातुकार्थमित्येतदुपपादयति—**तदाऽचीति** ॥

( ६५६४ इड्ग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इड्ग्रहणमक्ङिदर्थम् ॥ * ॥

( भाष्यम् ) **इड्ग्रहणं क्रियते, अक्ङिति लोपो यथा स्यात् । पपिथ, तस्थिथेति** ॥

( प्रदीपः ) इतरः क्ङिताऽननुभूतविशेषणेनेटः समुच्चयं, पश्चात् द्वयोरपि विशेषणद्वयसम्बन्धमाश्रित्याह—**इड्ग्रहणमक्ङिदर्थमिति** ॥

( उद्योतः ) एवं तृतीयः पक्षो लक्ष्यानुरोधात्सिद्धान्तितो भाष्ये । तदाह—**इतरः क्ङितेति** ॥

( उपसंख्यानभाष्यम् )

**सार्वधातुके चादीत्यार्धधातुकाधिकारादुपसंख्यानं कर्तव्यम् । इषमूर्जमहमित आदीति** ॥

( प्रदीपः ) **आदीति** । दाञः केवलादाङ्पूर्वाद्वा 'छन्दसि लुङ्लङ्लिटः' इति लुङ्लङोरन्यतरः । केचिदत्र पदकाराः 'आ-अदि-'इत्यवगृह्णन्ति । केचिच्चैकपद्यं मन्यन्ते तेषामाडागम इति पक्षः । तत्र लुङि लेः 'मन्त्रे घस-'इति लुक् । लङि तु छान्दसत्वाच्छपो लुक् । श्लौ वा सति द्विर्वचनप्रकरणे 'छन्दसि च'इति वक्तव्यमिति द्विर्वचनाभावः । सिद्धान्ते त्वार्धधातुकत्वाच्छबभावः ॥

( उद्योतः ) 'केवलादाङ्पूर्वाद्वा'इत्युपपादयति—**आ अदीति** । आदीत्युत्तमपुरुषैकवचन इति रूपम् । तत्रावग्रहवादिनामादानमत्रार्थः । अन्येषां दानमर्थः । 'लुङ्लङोरन्यतरः' इत्येतद्विशदयति—**तत्र लुङीति** ॥

---

१ 'अथेट्प्र' इति च. छ. झ. पाठः ॥
२ 'प्रागेव चेट्' इति कं. पाठः ॥
३ 'विशेषणाच्चाजादौ' इति क. पाठः ॥
४ 'तदेड्ग्रहण' इति ड. पाठः ॥
५ समुच्चयाभावादिति । दासीयेत्यत्रेटः सीयुटि प्रत्ययस्येटोऽजादित्वाभावादजादिना प्रत्ययेन समुच्चयाभावादित्यर्थः ॥
६ 'नेटः हलादेरिटः क्ङित्वास' इति क. ड. झ. पाठः ॥
७ 'आतो लोपः' इति झ. पाठः ॥
८ अजादेरिट इति । इडागमस्याजादिप्रत्ययान्तर्भावः, इट्प्रत्ययस्य च सीयुडाद्यागमेऽजादिप्रत्ययान्तर्भाव इत्यर्थः ॥
९ मध्यमे—पपिथेत्यत्र । आद्यन्तयोः—दासीय—व्यत्सर इत्यत्र ॥
१० एवं तृतीयः पक्ष इति । 'अथ क्ङिताऽननुभूतविशेषणेनेट् समुच्चीयते' इति पक्षः ॥
११ वार्तिकमेतत् च. छ. झ. ट. ड. पुस्तकेषु दृश्यते ॥
१२ 'लुङि च्लेर्मन्त्रे' इति क. ड. झ. पाठः ॥
१३ 'छन्दसि वा इति' इति ड. झ. पाठः ॥

( उपसंख्यानसमर्थकभाष्यम् )

**ननु च यथैव 'क्ङिति'इति वर्तमाने इड्ग्रहणमक्ङिदर्थम्, एवं 'आर्धधातुके' इत्यपि वर्तमाने इड्ग्रहणं सार्वधातुकार्थं भविष्यति ।**

**न सिध्यति ।**

**किं कारणम् ?**

**न हि क्ङिता अज् विशेष्यते-अचि भवति, कतरस्मिन् ? क्ङितीति ।**

**किं तर्हि ?**

**अचा क्ङिद्विशेष्यते-क्ङिति भवति, कतरस्मिन् ? अचीति ।**

**किं पुनः कारणमचा क्ङिद्विशेष्यते ?**

**यथा इडप्यज्ग्रहणेन विशेष्येत ।**

**अस्ति चेदानीं क्वचिदिडनजादिः, यदर्थो विधिः स्यात् ।**

**अस्तीत्याह । दासीय, धासीय-इति ॥**

( प्रदीपः ) दासीयेति । इटः सीयुटि तस्य तद्भक्तत्वादजादित्वाभावः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**तत्तर्हि उपसंख्यानं कर्तव्यम् ?**

**न कर्तव्यम् । आर्धधातुकत्वात् सिद्धम् ।**

**कथमार्धधातुकत्वम् ?**

**उभयथा छन्दसीति वचनात् । अन्येऽपि हि धातुप्रत्यया उभयथा छन्दसि दृश्यन्ते ॥**

—o—

( १२९० विधिसूत्रम् ॥ ६ । ४ । ३ आ. ३ )

## ३०६४ घुमास्थागापाजहातिसां हलि ॥ ६ । ४ । ६६ ॥

( ६५६५ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ईत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् ॥ * ॥**

**( भाष्यम् ) ईत्वे वकारप्रतिषेधो वक्तव्यः ।**

**किं प्रयोजनम् ?**

**घृतं घृतपावान इति दर्शनात् ।**

**इह मा भूत्—घृतं घृतपावानः पिबत वसां वसपावानः पिबत-इति ॥**

( प्रदीपः ) ईत्व इति । वकारस्य निमित्तभावेन प्रतिषेधः-वकारप्रतिषेधः । वकारादावीत्वं न भवतीत्यर्थः ॥ घृतपावान इति । 'आतो मनिन्-'इति क्वनिप् ॥ वसपावान इति । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति वसाशब्दस्य ह्रस्वः ॥

( उद्द्योतः ) वकारस्य साक्षात्प्रतिषेधेन संबन्धायोगादाह—वकारस्येति ॥

ह्रस्व इति । यद्यपि पदमञ्जर्यां क्वचित्पुस्तकेषु सांप्रतं[1] पठ्यमानं, माध्यन्दिनशाखायां च दीर्घः पठ्यते; तथापि क्वचिच्छाखायां ह्रस्वपाठोऽन्वेषणीयः ॥

( उपसंख्यानाक्षेपभाष्यम् )

**यदि तर्हि वकारे प्रतिषेध उच्यते कथं धीवरी पीवरी[2] ?**

( ६५६६ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ धीवरी पीवरीति चोक्तम् ॥ * ॥**

**( भाष्यम् ) किमुक्तम् ?**

**नैतदीत्वम् ।**

**किं तर्हि ?**

**ध्याप्योरेतत्सम्प्रसारणमिति ॥**

( प्रदीपः ) धीवरीति चोक्तमिति । 'जनसनखनां सञ्झलोः'इत्यत्रोक्तम् ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**स तर्हि प्रतिषेधो वक्तव्यः ?**

**न वक्तव्यः । वनिबेष भविष्यति, न क्वनिबिति ॥**

( प्रदीपः ) वनिबेष इति । क्वनिप्तु छन्दसि दृष्टानुविधानान्न भविष्यति । भाषायामपि 'अन्येभ्योऽपि दृश्यते'[3] इति दृशिग्रहणात् प्रयोगानुसरणार्थात् प्रयोगाभावात्पादिभ्यो नास्ति क्वनिबिति भाष्यकारस्याभिप्रायः । तत्र वार्तिकारम्भो ज्यायानित्याहुः । 'स्थः[4] क च'इति क्विपि संस्था इत्यत्रेत्वस्यादर्शनात् । भाष्यकारमतेन त्वीत्वं प्राप्नोति प्रत्ययलक्षणेन, यथा—अतृणेडित्यत्रेमागमः ॥

( उद्द्योतः ) ननु क्वनिप्यनिष्टरूपनिवृत्तये प्रतिषेध आवश्यकोऽत आह—क्वनिह्निवति[5] ॥ भाष्यकारमतेन त्विति । प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वे 'हलादौ क्ङिति'इति वर्णस्याप्राधान्येनाश्रयणादिति भावः ॥ अत्रेदं चिन्त्यम्-प्रत्ययलक्षणसूत्रं नियमार्थमिति भाष्यमतेऽप्राप्तेः । वस्तुतस्तु क्विप्यपीत्वं भवत्येव, सूत्रे हलीत्यस्याऽनजादिपरत्वात् । अत एव 'ध्यायतेः संप्रसारणम्'इति वार्तिके 'धीध्यायतेर्दधातेर्वा'इति भाष्यं सङ्गच्छते । 'शंस्थाः'इत्यत्र 'अम्बाम्ब-'इतिसूत्रस्थसव्येष्ठा इत्यत्र च विजेव । 'चेन क्विप्'इति तत्सूत्रस्थभाष्ये क्विप्पदेन सादृश्याद्विजेवोच्यत इति चिन्त्योऽयं कैयट इति । एवं च 'ध्याप्योः संप्रसारणम्'इत्येकदेश्युक्तिरिति बोध्यम्[6] । [ वस्तुतस्तु

१ 'साम्प्रतं पठ्यमानमाध्यन्दिन' इति झ. पाठः ॥

२ 'पीवरीति' इति च. छ. पाठः ॥

३ 'दृश्यन्ते' इति ड. ट. झ पाठः ॥

४ 'स्थः क चेति चात्क्विपि' इति च. पाठः ॥

५ घ. ज. पुस्तकयोः 'क्वचित्त्विति' इति प्रतीकं दृश्यते, तेन मदीपपाठः 'क्वचित्तु छन्दसि' इत्यप्यनुमीयते ॥

६ 'बोध्यमिति केचित्' इति ड. पाठः । झ. ड. पुस्तकयोः [ ] एतचिह्नगतः पाठः ॥

वार्त्तिकप्रत्याख्यानयोः फलैक्यायेट्शेभ्यः क्विपोऽनभिधानमिति 'दधातेर्वा'इति भाष्यमेकदेश्युक्तिः-इतीदमाद्यन्तांशरूपमयुक्तमेव । न च विनिगमनाविरहाद्वैपरीत्यमेव स्यादिति वाच्यम्, अस्य सूत्रद्वयस्योपपत्तिसहितत्वात्तस्य च विपरीतत्वादिति बोध्यम् ।] धियावित्यादावीत्त्वस्येयङ्यसिद्धत्वं तु न, व्याश्रयत्वात्–इति 'जनसन–' इति सूत्रे भाष्य उक्तम् ॥

(१२९१ निषेधसूत्रम् ॥ ६ । ४ । ३ आ. ४)

## ३०७२ न माङ्योगे ॥ ६ । ४ । ७४ ॥

( अडाट्प्रतिषेधाधिकरणम् )

( प्रतिषेधप्रतियोगिजिज्ञासाभाष्यम् )

**कस्यायं प्रतिषेधः ?**

**आटः प्राप्नोति ॥**

**अटोऽपि त्विष्यते । तत्तर्ह्यटो ग्रहणं कर्तव्यम् ॥**

(प्रदीपः) **कस्यायमिति ।** यदि द्वयोरप्यडाटोरिहानुवृत्त्या प्रतिषेधस्ततोऽजादीनामडपि प्राप्नोति । **अथा**नन्तर्यादाटः प्रतिषेधस्तथा सति माङ्योगेऽनिष्यमाणोऽपि अट् प्राप्नोतीति मत्वा **प्रश्नः** ॥

स एवानन्तर्यमाश्रित्याह—**आटः प्राप्नोतीति** ॥

(उद्द्योतः) यदि द्वयोरपीति । समुदायापेक्षायां 'अनन्तरस्य–'इति परिभाषाऽनुपस्थानादिति भावः ॥ **अडपीति** । मध्येऽपि संबन्धादिति भावः ॥

**स एवेति** । न तु सिद्धान्तवादी । **तत्तर्ह्यटो ग्रहणं कर्तव्य**मित्यन्तं चोदकवचनमिति भावः । व्यवहितत्वादनुवृत्त्ययोगेनाड्ग्रहणं कर्तव्यमेवेति तात्पर्यम् ॥

( अट्साधकभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ।**

**क प्रकृतम् ?**

**'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६।४।७१) इति ॥**

( प्रदीपः ) इतरः समुदायापेक्षायां दोषाभावेऽपि स्वरितत्वादधिकारेऽपि दोषप्रतिविधानसम्भवादाह—**न कर्तव्यमिति** ॥

( उद्द्योतः ) प्रकृतानुवृत्त्या सिद्धमिति वदतः सिद्धान्तिन आशयमाह—**इतर इति** ॥ द्विविधा ह्यनुवृत्तिः–लौकिकी, शास्त्रीया च । तत्राद्ये परिहारः—**समुदायेति** ॥ अन्त्य आह—**स्वरितत्वादिति** ॥

( अडनुवर्तनाक्षेपभाष्यम् )

**यदि तदनुवर्तते, 'आडजादीनाम्' ( ७२ ) अट् चेत्यडपि प्राप्नोति ॥**

( प्रदीपः ) **अडपि प्राप्नोतीति** । अडाटोर्युगपदेकागम्यपेक्षयाऽऽदित्वं न सम्भवतीति पर्यायप्रसङ्गः, यथा–लेटोऽडाटोः । ततः पक्षेऽटि सति 'ऐक्षिष्ट'इत्यादि न सिध्यति, एक्षिष्टेत्याद्यनिष्टं प्राप्नोति ॥

( उद्द्योतः ) 'एकागम्यपेक्षयाऽऽदित्वं'इति पाठः । 'एकागम्यपेक्षायामादित्वं'इति पाठे एकागमिनोऽपेक्षायां–संबन्धे तदपेक्षमादित्वं न संभवतीति कथंचिद्व्याख्येयम् ॥

( समाधानभाष्यम् )

**अस्तु, अटि कृते पुनराट् भविष्यति ॥**

( प्रदीपः ) इतरस्तु विकल्पेनाप्यडाटोः प्रवृत्तौ द्रव्ये पदार्थे कृतेऽप्यटि शब्दान्तरत्वान्निमित्तसद्भावाच्चाटा भवितव्यमिति मत्वाऽऽह—**अस्त्विति** ॥

( उद्द्योतः ) **द्रव्ये पदार्थ इति** । तत्र हि प्रतिलक्ष्यं लक्षणभेदाच्छब्दान्तरत्वे सत्याटा भवितव्यमित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**इहापि[3] अटि कृते पुनराट् प्राप्नोति—अकार्षीत्, अहार्षीत् ॥**

( प्रदीपः ) इतरो यद्येकस्मिन्नागमे कृते परस्य प्रवृत्तिस्ततो हलादीनामप्यटि कृते आट्प्रसङ्ग इति मत्वाऽऽह–**इहापीति** । ननु चाटि कर्तव्येऽटोऽसिद्धत्वादजादित्वाभावः । यद्यपि शास्त्रापेक्षयाऽसिद्धत्वं तथापि प्रयोगरूपमाश्रित्य चोद्यते, यथोक्तं–'मार्थादीदाद्यर्थानाम्'इति । परिहारान्तरसद्भावाद्वाऽसिद्धत्वं नोक्तम् ॥

( उद्द्योतः ) **यथोक्तमिति** । 'अदसो मात्'इत्यत्र । तत्र हीत्वादीनामसिद्धत्वात्प्रगृह्यत्वाभावेनायादिप्रसङ्गे नोदितेऽयं परिहारः । मार्थः–स्थानी 'म'शब्देनोक्तः । ईदूदर्थश्च–ईदूच्छब्देन । न चास्यां कल्पनायामसिद्धत्वं भवति, शास्त्रीये ह्यसिद्धत्वमिति तद्भावः । प्रकृतेऽपि 'अजादीनाम्'इत्यस्य 'अजादिप्रयोगरूपाणाम्' इत्यर्थे प्रयोगरूपं न शास्त्रीयमिति तात्पर्यम् ॥ ननु मा भूत्तत्रासिद्धत्वम्, इह तु 'अजादेरङ्गस्य'इति शास्त्रीयमेव रूपं गृह्यत इत्यसिद्धत्वं भवत्येवेत्यत आह—**परिहारान्तरेति** ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**अड्वचनान्न भविष्यति ॥**

( प्रदीपः ) **अड्वचनादिति** । यदि हलादीनामप्यटि कृते आट् स्यात्तदा लुङ्लङ्लृङ्क्ष्वाडागममेव विदध्यात् ॥

( पुनः प्रत्याक्षेपभाष्यम् )

**इहापि तर्हि अड्वचनान्न स्यात्–ऐहिष्ट, ऐक्षिष्ट ॥**

( प्रदीपः ) **इहापि तर्हीति** । यद्यटि कृते आट् न भवति, ततोऽत्रापि न स्यात् ॥

( समाधानभाष्यम् )

**आड्वचनाद्भविष्यति ॥**

( प्रदीपः ) **आड्वचनादिति** । यद्याण् स्यात्तद्विधानमनर्थकं स्यादित्यर्थः ॥ ननु विकल्पितत्वादडाटोरडभावे आट्

१ 'द्वयोरडाटो' इति अ. पाठः ॥
२ 'गम्यपेक्षायामादित्वं' इति ड. ठ. झ. पाठः ॥
३ 'इहापि तर्ह्यटि' इति च. छ. पाठः ॥

कर्तव्य इति अटि सति न प्राप्नोति । नैष दोषः । उत्तरार्थेन नान्तरीयकोपस्थानेन प्रवृत्तेनाप्यटा बाधितुमाटोऽशक्यत्वात् । **अथवा** सन्दिग्धप्रवृत्तिरडागमोऽसन्दिग्धप्रवृत्तिनाऽऽटा बाध्यते इत्येष वाक्यार्थः । यथाऽन्यत्रोक्तम्-अन्यवचनाच्चकाराकरणात् प्रकृतस्याप्यपवादो यथोत्सर्गेण प्रसक्तस्य-इति ॥

( उद्योतः ) सामर्थ्यं विघटयति—**ननु विकल्पितेति** ॥ सामर्थ्यात्पर्याये विकल्पः फलतीत्याशयेनोक्तम्—**उत्तरार्थेनेति** । एवं चाटो दुर्बलत्वेन बाधकत्वायोग इति भावः ॥ ननु यद्यद् दुर्बलस्तदा बलवताऽऽटा तस्य बाधापत्तावद्भवृत्तिर्दुर्लभेत्यत आह—**अथवेति** । उत्तरार्थत्वादेव संदिग्धप्रवृत्तिकत्वं तस्य । एवं चाटोऽप्रवृत्तिरेवेति भाष्याशय इति भावः ॥ **अन्यत्र–'इको गुणवृद्धी'** इत्यादौ ॥

( आक्षेपभाष्यम् )

**इहापि तर्हि आड्वचनात् प्राप्नोति—अकार्षीत्, अहार्षीत् ॥**

( प्रदीपः ) इतरस्त्वगृहीताभिप्रायो विशेषाभावं मत्वाऽऽह—**इहापि तर्हीति** ॥

( समाधानभाष्यम् )

**अकृतेऽटि योऽजादिरित्येवमेतद्विज्ञास्यते ।**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

**अड्वचनसामर्थ्यात् । यदि हि कृतेऽटि योऽजादिस्तत्र स्यात्, अड्वचनमनर्थकं स्यात् ॥**

( प्रदीपः ) **अकृतेऽटीति** । अजादिग्रहणसामर्थ्यात् कृते ह्यटि सर्वस्याजादित्वादडाटोश्च भेदेन विधानसामर्थ्याद्विषयविभागावसायः–हलादीनामडेव, अजादीनां कृतेऽकृते वाऽटि आट्–इति ॥

( उद्योतः ) ननु 'अकृतेऽटि' इति विशेषलाभः कथमत आह—**अजादिग्रहणेति** ॥ **भेदेनेति** । अन्यथाऽऽटमेव विदध्यादिति भावः ॥

( प्रकारान्तरेण समाधानभाष्यम् )

**अथवा–उपदेश इति वर्तते ।**

**अथवा–आर्धधातुक इति वर्तते ।**

**अथवा–लुङ्लङ्ङिति द्विलकारको निर्देशः। लुङादिषु लकारादिषु योऽजादिरिति ॥**

( प्रदीपः ) **अथवेति** । उपदेशे यान्यजादीनि तेषामाट् भवति । न च करोतिरुपदेशेऽजादिरिति आडभावः ॥

**अथवाऽऽर्धधातुक इति वर्तत इति** । तेनार्धधातुकसंज्ञकलकारोत्पत्तिकाले योऽजादिस्तस्याड् भवति ॥

( उद्योतः ) **न च करोतिरिति** । उपलक्षणमेतत् ॥

( समाधानाक्षेपभाष्यम् )

**सर्वथा–ऐज्यत–औप्यत इति न सिध्यति ।**

**एवं तर्हि—**

( प्रदीपः ) **सर्वथेति** । करोत्यादिवद्यजादीनामटि सत्याऽभावादित्यर्थः । 'असिद्धवदत्राभात्' इत्यत्रासिद्धत्वप्रत्याख्यानाय सर्वे एवामी प्रकारा उक्ताः, इह तु स्थित एवासिद्धत्व एषामुपन्यासः ॥

( उद्योतः ) **करोत्यादिवदिति** । हलादीनामडेवेति व्यवस्थापनात् ॥ **स्थित एवेति** । प्रतिपत्तिलाघवार्थमारब्धेऽपि सूत्र इत्यर्थः । 'आटीत्'इत्युपलक्षणं 'आटत्'इत्यादिलङोऽपि ॥

( समाधाने श्लोकवार्तिकम् )

**अजादीनामटा सिद्धम्**

( भाष्यम् ) **अजादीनामटैव सिद्धं नार्थ आटा ॥**

( वार्तिकाक्षेपभाष्यम् )

**एवं तर्हि वृद्ध्यर्थमाड् वक्तव्यः ॥**

( समाधाने श्लोकवार्तिकम् )

**वृद्ध्यर्थमिति चेदटः ।**

( भाष्यम् ) **अटो वृद्धिं वक्ष्यामि ॥**

( वार्तिकावतरणभाष्यम् )

**यदि तर्ह्यटो वृद्धिरित्युच्यते—**

( समाधानाक्षेपे श्लोकवार्तिकम् )

**अस्वपो हसतीत्यत्र**

( भाष्यम् ) **अस्वपो हसतीत्यत्रापि रोरुत्वे कृते वृद्धिः प्राप्नोति ॥**

( प्रदीपः ) **अस्वप इति** । स्वपेर्लङ्, सिप् । 'अड्गार्ग्यगालवयोः' इत्यट् । शब्लुक् । सकारस्य रुत्वं 'हशि च'इत्युत्वम् । तत्राद्गुणं बाधित्वा वृद्धिः प्राप्नोति ॥

( समाधाने श्लोकवार्तिकम् )

**धातौ वृद्धिमटः स्मरेत् ॥**

( भाष्यम् ) **धातावटो वृद्धिं वक्ष्यामि ॥**

**तत्तर्हि धातुग्रहणं कर्तव्यम् ।**

**न कर्तव्यम् । योगविभागः करिष्यते–'अटः', अचि वृद्धिर्भवति । ततः–'उपसर्गादृति–' वृद्धिर्भवति । ततः–'धातौ' इत्युभयोः शेषः ॥**

---

१ 'यद्यद् इह दुर्बलः' इति झ. पाठः ॥

२ 'लुङ्लङ्लृङ्क्ष्वडिति' इति ढ. पाठः । 'लुङ्लङ्लृङ्क्ष्वडिति' इति झ. पाठः ।

३ उपदेशे–लुङाद्युपदेशे । तेन नामधातौ 'औङ्कारीयत्' इत्यादौ न दोषः ॥

४ उत्पत्तीति । तेन लात्रस्थायामडागमेऽपि न आट्, उत्पत्तिकालेऽजादित्वाभावात् । एवं द्विलकारनिर्देशपक्षेऽपि बोध्यम् ॥

५ 'धातौ धातादि' इति ञ. छ. पाठः ॥

एत्त्वस्य–पेचतुः । पापच्यत इत्यत्रोभयप्राप्तौ दीर्घत्वेनायं विधिर्बाध्यते ॥

( वार्तिकावतरणभाष्यम् )

**इह तर्हि–बभणतुः–बभणुरित्यभ्यासादेशस्यासिद्धत्वादेत्वं प्राप्नोति ॥**

( प्रदीपः ) **असिद्धत्वादिति** । 'पूर्वत्रासिद्धम्'इति लक्षणेन । चकणतुरित्यादावेव तु प्रतिषेधः स्यात् ॥

( उद्द्योतः ) नन्वनादेशादेरिति व्यर्थं स्यादत आह—**चकणतुरिति** । अत्र 'कुहोश्चुः'इति चुत्वम्, तच्च नासिद्धम् ॥

( ६५८९ सिद्धत्वज्ञापकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य ॥ * ॥**

**( भाष्यम् ) यदयं फलिभज्योर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः–अभ्यासादेशः सिद्ध एत्व इति ।**

**यद्येवं—**

( ६५९० आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रथमतृतीयादीनामादेशादित्वादेत्वाभावः ॥ * ॥**

**( भाष्यम् ) प्रथमतृतीयादीनामपि तर्ह्यादेशादित्वादेत्वं न प्राप्नोति । पेचतुः । पेचुः । देभतुः । देभुः ॥**

( प्रदीपः ) **पेचतुरिति** । प्रकृतिचरां प्रकृतिचराः प्रकृतिजशां प्रकृतिजश इत्यादेशादित्वम् । वचनं तु 'रेणतुर्येमतुः' इत्यादौ सावकाशम् । 'अभ्यासे चर्च'इति जश्चरोः प्राप्तयोः 'स्थानेऽन्तरतमः' इति परिभाषाया व्यापारप्रदर्शनमिदं–प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश इति ॥

( उद्द्योतः ) **रेणतुरिति** । अत्र जश्त्वचर्त्वे न, झलोऽभावात् ॥ ननु प्रकृतिचरामित्यादि न सूत्रवार्तिकयोः पठ्यते तत्किमिदमत आह—**अभ्यास इति** ॥

( ६५९१ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्त्वविज्ञानस्य ॥ * ॥**

**( भाष्यम् ) न वा एष दोषः ।**

**किं कारणम् ?**

**शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्त्वविज्ञानस्य । यदयं शसिदद्योः प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः–रूपाभेदेन ये आदेशादयो न तेभ्यः प्रतिषेधो भवतीति ॥**

( ६५९२ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ दम्भ एत्वम् ॥ * ॥**

**( भाष्यम् ) दम्भ एत्वं वक्तव्यम् । देभतुः । देभुः ।**

**किं पुनः कारणं न सिध्यति ?**

( ६५९३ उपसंख्यानसमर्थकवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ नलोपस्यासिद्धत्वात् ॥ * ॥**

**( भाष्यम् ) असिद्धो नलोपस्तस्यासिद्धत्वादेत्वं न प्राप्नोति ॥**

( उपसंख्याने श्लोकवार्तिकम् )

**नशिमन्योरलिट्येत्वम् ।**

**( भाष्यम् ) नशिमन्योरलिटि एत्वं वक्तव्यम् ॥**

( उपसंख्याने श्लोकवार्तिकम् )

**छन्दस्यमिपचोरपि ॥**

**( भाष्यम् ) छन्दसि अमिपचोरपीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

( प्रयोजने श्लोकवार्तिकम् )

**अनेशं मेनकेत्येतद्**
**व्येमानं लिङि पेचिरन् ॥**
**यजायेजे वपावेपे**

**( भाष्यम् ) यजः–आयेजे, वपः–आवेपे ॥**

( श्लोकवार्तिकम् )

**दम्भ एत्वमलक्षणम् ॥**

**( भाष्यम् ) असिद्धत्वान्नलोपस्य दम्भ एत्वं न सिध्यति ॥**

(प्रदीपः) **अनेशमिति** । लुङ्, सिपोऽम्भावः । पुषादित्वादङादेशः,छन्दसीति पूर्वेणापि सम्बन्धाद्भाषायामेत्त्वाभावः । एवं तु मेनकेत्यपि भाषायां न प्राप्नोति । यदि त्विष्यते पृषोदरादित्वाद्भविष्यति । 'मनेराशिषि च'इति वुन्प्रत्ययः । 'न यासयोः'इत्यत्राशिषि चोपसंख्यानमितीत्वाभावः ॥ **व्येमानमिति** । विपूर्वादमतेस्ताच्छील्यादिषु चानश्, छान्दसः शपो लुक् ॥ **पेचिरन्निति** । पचेरन्निति प्राप्ते छान्दसे एत्वहस्वत्वे क्रियेते ॥ **आयेज इति** । लङ्, इट् । 'छन्दस्यपि दृश्यते' इति आट् ॥ **दम्भ एत्वमलक्षणमिति** । लक्षणेन न प्राप्नोति, नलोपस्यासिद्धत्वादित्यर्थः ॥

( उद्द्योतः ) **एवं त्विति** । छन्दसीत्यस्य संबन्ध इत्यर्थः । 'चेष्टा व्यनेशन्निखिलास्तदाऽस्याः' इति श्रीहर्षस्य तु [1]प्रमादः ॥ **चानशिति** । न तु शानच्, धातोः परस्मैपदित्वात् । **लुक्**–'बहुलं छन्दसि'इत्यनेन । अत एव सुगभावः ॥ **लङिति** । केचित्तु

[1] प्रमाद इति । 'नशिमन्योरलिट्येत्वं' इत्यत्रापि छन्दसीत्यस्य संबन्धात् भाषायां नशेरेत्वाभावात् 'व्यनेशन्' इति प्रामादिकमिति भावः ॥

यजेराङ्पूर्वस्येदम् । अत एव 'मनुरायेजे' इत्यत्राऽवग्रहं कुर्वन्तीत्याहुः ॥

( ज्ञापकेनोपसंख्यानसाधकं श्लोकवार्तिकम् )

**श्नसोरत्त्वे तकारेण**

**ज्ञायते त्वेत्त्वशासनम् ॥**

( भाष्यम् ) **अनित्योऽयं विधिरिति ॥**

( प्रदीपः ) **श्नसोरत्त्व इति** । असिद्धत्वस्यानित्यत्वज्ञापनाय तकारः कृतः । नित्ये ह्यसिद्धत्वे 'आसन्'इत्यादावाटोऽसिद्धत्वाल्लोपो न भविष्यतीति किं तन्निवृत्त्यर्थेन तकारेण । तेनासिद्धत्वाभावादम्भ एत्त्वं सिध्यतीत्यर्थः ॥

( १३०८ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २१ )

## ३११९ थलि च सेटि ॥ ६ । ४ । १२१ ॥

( वार्तिकावतरणभाष्यम् )

**थल्ग्रहणं किमर्थम् ?**

( प्रदीपः ) **थल्ग्रहणमिति** । क्ङिति सेटि एत्त्वस्य सिद्धत्वात्सेट्ग्रहणमेवाक्ङिदर्थं भविष्यति थलेव च सेडक्ङित्-इति प्रश्नः ॥

( ६५९४ थल्ग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ थल्ग्रहणमक्ङिदर्थम् ॥ * ॥**

( भाष्यम् ) **थल्ग्रहणं क्रियतेऽक्ङिदर्थम् । अक्ङिति एत्वं यथा स्यात् । पेचिथ । शेकिथ ॥**

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवात्राक्ङिदर्थं भविष्यति ॥**

( प्रयोजनान्तरदर्शकभाष्यम् )

**इदं तर्हि प्रयोजनम्-समुच्चयो यथा स्यात् थलि च सेटि क्ङिति च सेटि-इति ।**

**किं प्रयोजनम् ?**

**पेचिव । पेचिम । तत्र 'पचादिभ्य इड्वचनम्' इति वक्ष्यति तन्न वक्तव्यं भवति ॥**

( प्रदीपः ) **क्ङिति च सेटीति** । इदं च न नियमार्थम् । सेट्येव क्ङितीति नियमे हि पेचतुरित्यादौ न स्यात् । किं तर्हि ? एत्त्वस्य कालावधारणं क्रियते, यथा 'निष्ठायां सेटि' इत्यत्र । तेन पेचिवेत्यादाविटि कृते एत्वाभ्यासलोपौ भवतः । अन्यथा 'एकाचः' इतीट्प्रतिषेधः प्रसज्येत । यदोपदेशग्रहणमनुदात्तविशेषणं नैकाज्विशेषणं तदा श्रूयमाणादेकाच इट्प्रतिषेधेन भाव्यमिति 'कृसभृ-' इति सूत्रं विध्यर्थं भवति, न तु नियमार्थम् । तत्र पचेरेत्वाभ्यासलोपयोः कृतयोरेकाच्त्वादिट्प्रतिषेधप्रसङ्गे पचादिभ्य इड्वचनमिति वक्ष्यते । क्ङिति च सेटीति तु कालावधारणार्थे सति पूर्वमिट्, तत एत्वाभ्यासलोपावित्यानुपूर्व्या सिद्धं भवतीति नार्थो वचनेन ॥

( उद्योतः ) ननु क्रादिसूत्रस्य नियमार्थत्वेन पेचिवेत्यादाविटः सिद्धत्वात्किमनेन वचनेनेत्यत आह—**यदोपदेशग्रहणमिति** । नाप्येकाच इति विहितविशेषणमित्यपि बोध्यम् । अनेनास्य ग्रन्थस्यैकदेशयुक्तिता सूचिता । एवं च थल्ग्रहणं स्पष्टार्थमिति तत्त्वम् ॥ **विध्यर्थमिति** । निषेधविध्यर्थमित्यर्थः ॥ **आनुपूर्व्येति** । पूर्वं द्वित्वे इट्, तत एत्वादीति क्रमेणेत्यर्थः ॥ **नार्थो वचनेनेति** । 'पचादिभ्य इड्वचनम्'इत्यनेनेति भावः ॥

( अतिव्याप्त्यव्याप्तिदर्शनेनेष्टसाधकभाष्यम् )

**इह कस्मान्न भवति-लुलविथ ?**

**गुणस्य नेति प्रतिषेधात् ।**

**इहापि तर्हि न प्राप्नोति—पेचिथ, शेकिथ ।**

**गुणस्य योऽकार इत्येवमेतद्विज्ञायते ।**

**एवमपि शशरिथ-अत्र प्राप्नोति ।**

**गुणस्यैषोऽकारः ।**

**कथम् ?**

**वृद्धिर्भवति गुणो भवति-इति रेफशिरा गुणवृद्धिसंज्ञको निर्वर्तते ।**

**अथवा—**

**आचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामेत्वं भवतीति यदयं 'तृफलभजत्रपश्च' (६।४।१२२) इति तृग्रहणं करोति ॥**

( प्रदीपः ) **लुलविथेति** । अत्रादेशे कृते एकहल्मध्यगतोऽकार इत्येत्वप्रसङ्गः । समुदायग्रहणे च लक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते, न वर्णमात्रग्रहणे । न चायमकारो गुणशब्दाभिनिर्वृत्त इति 'न शसदद'इति प्रतिषेधोऽपि नास्तीति **प्रश्नः ॥**

**गुणस्य योकार इति** । वैयधिकरण्येन सम्बन्ध आश्रीयते । लुलविथेत्यादावाकारस्यावादेशविधानाद्गुणस्याकार इति प्रतिषेधः प्रवर्तते । पेचिथेत्यादौ तु गुण एवाकारो न तु गुणस्येति प्रतिषेधाभावः ॥

**एवमपीति** । गुण एवात्राप्यकारो न तु गुणस्येति प्रतिषेधाप्रसङ्गः ॥

**गुणस्येति** । अवयव इत्यर्थः । उः स्थानेऽण् प्रसज्यमान एव रपरो भवति पूर्वभक्तश्च रेफ इत्ययं गुणः ॥

( उद्योतः ) नन्वस्याकारस्य लाक्षणिकत्वात्रायं दोषोऽत आह—**समुदायेति** ॥ नन्वेवं सति 'ओत्' 'क्रुन्मेजन्तः' इत्यादिसूत्रभाष्यस्वग्रन्थविरोधोऽत आह—**न वर्णमात्रेति** । तत्रौदन्तो निपात एजन्तः कृदित्यर्थान्न वर्णमात्रग्रहणमिति भावः । तस्या अनित्यत्वादिति तत्त्वम् ॥ ननु 'न शसदद-'इत्यादिना प्रतिषेधो भविष्यतीत्यत आह—**न चायमिति** । तत्र गुणशब्दः स्वरूपपरः—'गुण इत्येवं योऽकारः' इति । अन्यथा विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यादिति भावः ॥ **वैयधिकरण्येनेति** । गुणशब्दभावितसंबन्ध्यकार इत्यर्थः ॥ अकारस्य गुणसंबन्धित्वं गुणस्य निकायवयवत्वेन बोध्यम् ।

व्याख्यानेन च साक्षात्परम्परया वा गुणशब्दभावितसंबन्धकार-ग्रहणमिति भावः ॥ अयं गुण इति । यदागमन्यायेन विशिष्ट एव गुणादिसंज्ञक इति भावः । एतच्च 'उरण्-'इत्यत्रोपपादितम् । एतेन पेचिथेत्यादौ व्यपदेशिवद्भावेन गुणावयवत्वसत्त्वान्निषेधापत्ति-रिति निरस्तम्, गुणशब्दभावितसंबन्धीत्यर्थकरणात् ॥

( १३०९ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २२ )

**१३२१ राधो हिंसायाम् ॥ ६।४।१२३ ॥**

( ६५९५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ राधादिषु स्थानिनिर्देशः ॥ * ॥**

( भाष्यम् ) राधादिषु स्थानिनिर्देशः कर्तव्यः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

न कर्तव्यः । 'एकहल्मध्ये' इति वर्तते ।

यद्येवं 'त्रेसतुः' 'त्रेसुः' इत्यत्रैत्वं प्राप्नोति ।

अस्तु ।

अलोऽन्त्यस्य विधयो भवन्तीति अकारस्य भविष्यति ।

अनर्थकेऽलोऽन्त्यविधिर्नेत्येवं न प्राप्नोति ।

नैतस्याः सन्ति परिभाषायाः प्रयोजनानि ॥

**अथवा—**

अत इति वर्तते ।

एवमपि राधेर्न प्राप्नोति ।

आकारग्रहणमपि प्रकृतमनुवर्तते ।

क्व प्रकृतम्?

'श्नाऽभ्यस्तयोरातः' ( ६।४।११२ ) इति ॥

**अथवा—**

'श्नसोरल्लोपः' ( १११ ) इत्यत्र तपरकरणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते ।

यदि तदनुवर्तते 'अत एकहल्मध्ये नादेशादेर्लिटि' (१२०) अस्य चेति अवर्णमात्रस्यैत्त्वं प्राप्नोति। बबाधे ।

अकारेण तपरेणाऽवर्णं विशेषयिष्यामः-अस्यात इति । इहेदानीमस्येत्यनुवर्तते, अत इति निवृत्तम् ॥

( प्रदीपः ) राधादिषुस्थानिनिर्देश इति । 'अलोऽन्त्यस्य'इति वचनादेत्वमन्त्यस्य प्राप्नोति–इति 'उपधायाः'इति वक्तव्यमित्यर्थः ॥ अथवा-अत इति । ततो भ्रमादीनामेवैत्वमकारस्य भवति ॥

अकारेणेति । समुच्चयेऽत इत्यनर्थकं स्यादिति विशेषण-विशेष्यभावाश्रयः ॥

( उद्योतः ) भ्रमादीनामेवैत्वमकारस्येति । एवो भिन्न-क्रमः । अकारस्यैवैत्त्वं नान्यस्येत्यर्थः ॥

( १३१० विधिसूत्रम् ॥ ६ । ४ । ३ आ. २३ )

**३१२५ अर्वणस्त्रसावनञः ॥६।४।१२७॥**

( १३११ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २४ )

**३१२६ मघवा बहुलम् ॥ ६।४।१२८ ॥**

( त्रादेशाधिकरणम् )

( सूत्रप्रत्याख्याने श्लोकवार्तिकम् )

**अर्वणस्तृ मघोनश्च**
**न शिष्यश्छान्दसं हि तत् ।**

( भाष्यम् ) अर्वणस्तृ मघोनश्च न शिष्यः ।

किं कारणम्?

छान्दसं हि तत् । दृष्टानुविधिश्छन्दसि भवतीति ॥

( प्रदीपः ) छान्दसमिति । 'छन्दसीवनिपौ'इति वनि-वश्चि, मतुप् चेति प्रत्ययद्वयेन रूपद्वयस्य सिद्धत्वान्नार्थः सूत्रद्व-येन ॥ तत्रैतस्यात्सर्वत्र रूपद्वयप्रसङ्गोऽत आह—दृष्टानुविधि-रिति । भाषाशब्दा अपि नियतविषयाः, किं पुनश्छान्दसाः । तत्र ऋ इत्यस्य विचि गुणे कृते 'अर्'इति रूपम् । तस्मान्मतु-प्यर्वन्ताविस्यादि भवति, वनिप्यर्वण इत्यादि भवति । मघशब्दा-दपि प्रत्ययद्वये यथाविषयं रूपद्वयं सिद्धम् । एवं चार्वच्छब्दस्य मघवच्छब्दस्य च भाषायां नास्ति प्रयोग इत्युक्तं भवति ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे षष्ठ-स्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

( उद्योतः ) ननु च्छान्दसत्वेन प्रत्याख्यानमयुक्तम्, छान्द-सेऽपि साधुत्वान्वाख्यानस्य कर्तव्यत्वादत आह—छन्दसीति । वार्तिके 'मतुब्वन्योर्विधानाच्च'इति चो हेताविति तात्पर्यम् ॥ सर्व-त्रेति । सावपीत्यर्थः ॥ यद्यपि भाषायामपि दृष्टमेवानुविधीयते तथाऽपि कैमुतिकन्यायप्रदर्शनायेदमुक्तमित्याह—भाषाशब्दा अपीति । यथा वचेरन्तिपरस्य प्रयोगाभाव इति भावः । 'मघोनः' इत्यादौ 'यस्य'इति लोपाभावस्तु च्छान्दसत्वाद्बोध्यः । श्वयुवमघोनामिति निर्दे-शाद्वा ॥ विचीति । 'अन्येभ्योऽपि दृश्यते' इति विच् ॥ मघ-शब्दादपीति । मघशब्दो धननाम ॥ अतिप्रसङ्गवारणायाह— यथाविषयमिति ॥ भाषायां नास्ति प्रयोग इति । असिद्धव-त्सूत्राद्युक्तस्याप्युत्पन्नप्रातिपदिकरूपस्यापि भाषायां नास्ति प्रयोगः, नियतविषयत्वाच्छब्दानामित्यपि बोध्यम् । भाषायां क्वचिद्दृश्य-मानप्रयोगास्तु असाधव एव ॥

( प्रत्याख्याने श्लोकवार्तिकम् )

**मतुब्वन्योर्विधानाच्च**

( भाष्यम् ) मतुब्वनी खल्वपि छन्दसि विधीयेते ॥

( प्रत्याख्याने श्लोकवार्तिकम् )

**छन्दस्युभयदर्शनात् ॥**

( भाष्यम् ) उभयं खल्वपि छन्दसि दृश्यते ॥

इमान्यर्वणः पदानि । अनर्वाणं वृषभं मन्द्रजिह्वम् ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

( उद्योतः ) सूत्रारम्भेऽप्यर्वन्शब्दे 'इमान्यर्वणः' इत्यादौ दृश्यमानत्रभावस्य च्छान्दसत्वेनैव साधनमावश्यकमिति वरं तदकरणमित्याह भाष्ये—उभयं खल्वपीति । 'अनर्वाणं वृषभं'इति तु दृष्टान्तार्थम्[1] । मघवन्शब्दे सूत्रकृतोऽपि विकल्पस्येष्टत्वेनार्वन्शब्दविषयकमेवोदाहरणदानमिति बोध्यम् ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

अथ षष्ठस्य तुरीये तुरीयमाह्निकम् ॥

( १३१२ विधिसूत्रम् ॥ ६ । ४ । ४ आ. २५ )

## ३१२८ पादः पत् ॥ ६ । ४ । १३० ॥

( पदादेशाधिकरणम् )

( ६५९६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ पाद उपधाह्रस्वत्वम् ॥ * ॥

( भाष्यम् ) पाद उपधाह्रस्वत्वं वक्तव्यम् । द्विपदः पश्य ॥

( ६५९७ आदेशे दोषवार्तिकम् ॥ २ ॥ )

॥ * ॥ आदेशे हि सर्वादेशप्रसङ्गः ॥ * ॥

( भाष्यम् ) आदेशे हि सति सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत "येन विधिस्तदन्तस्य" (१।१।७२) इति ॥

तर्हि वक्तव्यम् ।

( प्रदीपः ) आदेशे हीति । पादन्तस्याङ्गस्य पदादेशो विधीयमानोऽनेकाल्त्वात्सर्वादेशः प्राप्नोति ॥

( उद्योतः ) भाष्ये—येन विधिरिति । तया परिभाषया समुदायस्य स्थानित्वादिति भावः ॥

( ६५९८ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

॥*॥ न वा निर्दिश्यमानस्यादेशात् ॥*॥

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम् ?

निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या ॥

कः पुनरत्र विशेषः-एषा वा परिभाषा क्रियते, उपधाह्रस्वत्वं वोच्यते ।

अवश्यमेषा परिभाषा कर्तव्या, बहून्येतस्याः परिभाषायाः प्रयोजनानि ।

कानि पुनस्तानि[3] प्रयोजनानि ?

( प्रदीपः ) नवेति । यद्यपि पाच्छब्देन तदन्तः समुदायः प्रत्याय्यते तथापि यो निर्दिश्यते यतः षष्ठी श्रूयते तस्यैव 'षष्ठी स्थानेयोगा'इति वचनादादेशो न तु प्रतीयमानस्य । यद्यप्युच्चार्यमाणस्यादेशेन सम्बन्धाभावस्तथाप्यनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादेवमुक्तम् । तत्र यथा 'अलोऽन्त्यस्य'इति वचनात् 'रुहः पः' इत्युक्ते हकारस्य पकारो भवति, एवं पाच्छब्दप्रत्यायिततदन्तसमुदायावयवस्य पाच्छब्दस्य पदादेशः ॥

( उद्योतः ) षष्ठी स्थान इति । इदं हि सूत्रं निर्दिश्यमानस्यादेशा इत्यर्थकतया तत्रैव सूत्रे भाष्ये स्थापितम् ॥ यद्यप्युच्चार्यमाणस्येति । किंतु तत्प्रत्यायितस्यानुकार्यस्येत्यर्थः ॥ भेदस्याविवक्षितत्वादिति । सादृश्यमूलिका च तदविवक्षेति ॥ समुदायस्य पाच्छब्दस्येति । तदवयवस्य पाच्छब्दस्येत्यर्थः । क्वचित्तथैव पाठः ॥

( ६५९९ परिभाषाप्रयोजनवार्तिकम् ॥ ४ ॥ )

॥ * ॥ प्रयोजनं सुसिङादेशेषु ॥ * ॥

( भाष्यम् ) सुप्-कुमार्याम्, किशोर्याम्, खट्वायाम्, मालायाम्, तस्याम्, यस्याम् । आड्याट्स्याट्सु कृतेषु साड्याट्स्याट्कस्य 'आम्' प्राप्नोति । निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

इदमिह संप्रधार्यम्-आड्याट्स्याटः क्रियन्तामामिति, किमत्र कर्तव्यम् ?

परत्वादाम् ।

नित्या आड्याट्स्याटः । कृतेऽप्यामि प्राप्नुवन्त्यकृतेऽपि ।

अनित्या आड्याट्स्याटः ।

कथम् ?

अन्यस्य कृते आमि प्राप्नुवन्त्यन्यस्याकृते । शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । उभयोरनित्ययोः परत्वादाम् ॥

इदं तर्हि—यस्यै-तस्यै, स्याटि कृते सस्याट्कस्य सैभावः प्राप्नोति ।

निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?

स्याटा व्यवहितत्वात्[2] । सुप् ॥

तिङ्-अरुदिताम्, अरुदितम्, अरुदित-इति ।

---

[1] दृष्टान्तार्थमिति । सूत्रे 'अनञः' इत्युपादानादनर्वाणमित्यत्र नञः परत्वात् नादेशाभाव इष्ट एवेति दृष्टान्तार्थमित्युक्तमिति भावः ॥

[2] 'स्यादेशत्वात्' इति च. छ. झ. पाठः ॥

[3] 'पुनस्तानि प्रयोजनानि' इत्यस्य च. छ. पुस्तकयोर्न पाठः ॥

**इटि कृते सेट्कस्य तांतंतामादेशाः प्राप्नुवन्ति ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।**

**इदमिह संप्रधार्यम्-इट् क्रियताम्, तांतंताम इति, किमत्र कर्तव्यम् ?**

**परत्वादिडागमः, अन्तरङ्गास्तांतन्तामः ॥**

**इदं तर्हि—क्रियास्ताम्, क्रियास्तम्, क्रियास्त, क्रियासम् । यासुटि कृते सयासुट्कस्य तांतन्तामः प्राप्नुवन्ति ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवतीति ॥**

(प्रदीपः) **न दोषो भवतीति** । तत्रैवं वक्तव्यम्—यो निर्दिश्यते तस्यागमैर्व्यवधानादाम्न प्राप्नोति-इति ॥ अत एव परत्वाश्रयेणाव्यवधानं कर्तुमाह—**इदमिहेति** । आडादीनामवकाशः-खट्वायाः, कुमार्याः, सर्वस्या इति । आमोऽवकाशः कृतेष्वाडादिषु वचनाद्व्यवधानेऽपि प्रवर्तनात् । यदि तु प्राप्तेष्वाडादिष्वादेश आरभ्यते इत्युच्यते ततोऽपवादत्वादामा तेषां बाधः प्राप्नोति—इत्यागमानामादेशस्य चात्र समावेश एष्टव्यः ॥ **सेट्कस्येति** । प्राग्लादेशेभ्यो धात्वधिकार इत्यस्मिन् पक्षेऽवैध्यनुपादानात् व्यवधानात्तामादीनामप्रसङ्ग इति नोच्यते ॥ **अन्तरङ्गा इति** । प्राग्लादेशेभ्यो धात्वधिकारात्तामादयोऽन्तरङ्गाः ॥ **क्रियास्तामिति** । परत्वादन्तरङ्गत्वाद्वा यासुटि कृते तामादयः ॥

(उद्योतः) **तत्रैवमिति** । निर्दिश्यमानपरिभाषया दोषाभावे कथितेऽयमपरो दोषः प्राप्नोतीत्यर्थः । 'अत्रैवं'इति क्वचित्पाठः ॥ यतो वाद्यन्तरैणैवं वक्तव्यमतः परिभाषया दोषनिरासोऽसिद्धोऽतः प्रकारान्तरेण परिहारः कथ्यत इत्याह—**अत एवेति** ॥ 'कृतेषु'इति युक्तेर्न्यायविरुद्धत्वमाह—**यदि त्विति** ॥ **एष्टव्य इति** । इष्टिरूपेण पठितव्य इत्यर्थः । अत एव 'क्रियायां'इत्यादिन्निर्देशाः सङ्गच्छन्ते । निर्दिश्यमानत्वाभावाद्विशिष्टस्य न, व्यवधानात्केवलस्य नेत्येवमामो निरवकाशत्वाद्वचनसामर्थ्येन पूर्वं प्रवृत्तिस्ततः स्याडादय इति **न दोषो भवतीत्यन्त**भाष्याशयः । **इदमिहे**त्यादि-नैकदेशिना परत्वादामित्युक्ते, परेण तस्यै इत्यादौ परिभाषाप्रयोजने प्रदर्शिते, उभयसाधारण्येनाह—**यस्तर्हीति**–परे ॥ ननु निर्दिश्यमानपरिभाषाङ्गीकारेऽपि निर्दिश्यमानतसादीनामिटा व्यवधानान्न प्राप्नुवन्तीत्यत आह—**प्राग्लादेशेभ्य इति** । तमभिव्याप्य धातोरित्यधिकारेऽपि विहितपञ्चम्याश्रयणान्न दोषः, निर्दिष्टपरिभाषाऽनपेक्षणाच्च तामादीनामन्तरङ्गत्वमित्यपि बोध्यम् ॥ **अन्तरङ्गत्वाद्वेति** । 'आद्युदात्तश्च'इति भाष्यरीत्या 'लावस्थायां यासुट्'इति तत्त्वमिति भावः । धातोर्विहिततसादीनामित्यर्थात् 'तेन व्यवधानादप्रसङ्गः' इति न शङ्क्यम् ॥

( ६६०० परिभाषाप्रयोजनवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ ल्यब्भावे च ॥ * ॥**

**( भाष्यम् ) ल्यब्भावे च प्रयोजनम् । प्रकृत्य । प्रहृत्य । क्त्वान्तस्य ल्यप्प्राप्नोति ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥**

(प्रदीपः) **क्त्वान्तस्येति** । प्रत्ययग्रहणपरिभाषया धातुप्रत्ययसमुदायस्य ल्यपः प्रसङ्गः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्'इत्येषा तु परिभाषा 'अनञ्पूर्वे' इति वचनान्नोपतिष्ठते । सामान्यशब्दस्यापि ल्यपः प्रकरणाद्यपेक्षस्य विशेषावसायहेतुत्वं स्यात् ॥

(उद्योतः) क्त्वान्तस्य ल्यप्प्राप्तिमुपपादयति—**प्रत्ययग्रहणेति** ॥ ननु कृद्ग्रहणपरिभाषया सोपसर्गस्य समुदायस्य ल्यप्प्राप्तिर्वकुमुचितेत्यत आह—**कृद्ग्रहणे इति** । गत्याद्यसमभिव्याहारे केवलस्य ग्रहणं, तत्समभिव्याहारे तु तद्विशिष्टस्य ग्रहणमिति परिभाषार्थ इति भावः ॥ **वचनादिति** । तत्प्रवृत्तौ हि नञ्पूर्वे प्राप्त्यभावात्तदनर्थकमिति तस्या अत्राप्रवृत्तिं ज्ञापयतीत्यर्थः । अत एव तत्सूत्रे भाष्ये वक्ष्यति—प्रत्ययग्रहणे यावत्तावद्भवितुमर्हति—इति । अत्रेदं ज्ञापकं **चिन्त्यम्** । गतिकारकसमभिव्याहारे तद्विशिष्टस्य ग्रहणात्तदसमभिव्याहारे नञ्पूर्वे प्राप्त्या तच्चारितार्थ्यादित्यन्ये ॥ नन्वेवं सर्वत्र यशब्दमात्रश्रवणेऽर्थविशेषावसायो न स्यादत आह—**सामान्यशब्दस्यापीति** ॥

( प्रयोजनभाष्यम् )

**त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च प्रयोजनम् ।**

**अतितिस्रः, अतिचतस्रः । त्रिचतुरन्तस्य तिसृचतसृभावः प्राप्नोति ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥**

**युष्मद्-अस्मद्-अतियूयम्, अतिवयम् । युष्मदस्मदन्तस्य यूयवयौ प्राप्नुतः ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥**

**त्यदादिविकाराः-अतिस्यः, उत्तमस्यः, अत्यसौ, उत्तमासौ । त्यदाद्यन्तस्य त्यदादिविकाराः प्राप्नुवन्ति ।**

**किमन्तस्य कादेशः प्राप्नोति । अतिकः, परमकः ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ॥**

(प्रदीपः) **अतिस्य इति** । शोभनः स्यः—इत्युत्तरपदार्थप्रधानस्तत्पुरुषो द्रष्टव्यः । उपसर्जने तु त्यदाद्यत्वाभावः । अत्र

---

१ आमोऽवकाश इति । आगमरहितस्थानामावात् कथञ्चिदवकाशकल्पनमेतत् । ततश्चैकत्रोभयप्रसङ्गे परत्वादामित्यर्थः ॥

२ अवधीति । 'धातोः' इति पूर्वावध्यनुपादानादित्यर्थः ॥

३ अनञ्पूर्व इति । नञो गतिकारकत्वाभावादिति भावः ॥

४ सामान्येति । प्रकृतेरश्रवणेन प्रत्ययमात्रस्य यस्य सामान्यत्वमिति भावः ॥

५ सर्वत्र–सर्वेषु ल्यबन्तलक्ष्येषु ॥

६ अर्थविशेषेति । कृपच्यादिधातुभ्यो ल्यपि एकविधरूपसत्त्वेनार्थविशेषावसायो न स्यादिति शङ्कितुराशयः ॥

७ इदं वार्तिकमिति च. छ. झ. पाठः ॥

'पदाङ्गाधिकारे' इति वचनात्तदन्तस्य समुदायस्यातिशब्दतकारस्यापि 'तदोः सः सौ'इति सत्वप्रसङ्गः । अत्वं तु 'अलोऽन्त्यस्य' इति वचनादन्त्यस्यैव भवति—इति तत्र विशेषाभावः ॥

**परमक इति** । अनेकाल्त्वात्सर्वादेशः कः प्राप्नोति । ननु न सत्वविधौ 'त्यदादीनाम्' इति स्थानषष्ठी । का तर्हि ? 'तदोः' इत्येषेति कथं सत्वमतिशब्दतकारस्य परिह्रियते ? एवं तर्हि त्यदादीनां गणसन्निविष्टानां यौ निर्दिश्येते तकारदकारौ तयोः सत्वविधानादतिप्रसङ्गाभावः ॥

**( उद्योतः ) ननु न सत्वविधाविति** । तकारदकारावेव स्थानिनौ, तद्विशेषणं च 'त्यदादीनां'इति त्यदाद्यन्ते स्थितयोरपि तदोः सत्वप्रसङ्गः परिभाषया न निवारितः, स्थानषष्ठीनिर्दिष्टविषयैव हि सा परिभाषेति शङ्कार्थः ॥ **एवं तर्हीति** । परिभाषोपस्थानसामर्थ्यान्निर्दिश्यमानत्यदाद्यवयवतदोरेव सत्वमित्यर्थान्न दोष इति भावः । 'निर्दिश्यमानस्य'इत्यस्य निर्दिश्यमानं निर्दिश्यमानावयवं च षष्ठ्यन्तं स्थानेन युज्यत इत्यर्थ इति तात्पर्यम् ॥

**( प्रयोजनभाष्यम् )**

**उदः स्थास्तम्भोः पूर्वत्वे प्रयोजनम् । उदस्थात्, उदस्थाताम् । अटि कृते साट्कस्य पूर्वसवर्णः प्राप्नोति 'उदः स्थास्तम्भोः-' इति ।**

**निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति॥**

**यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?**

**अटा व्यवहितत्वात् ॥**

**सा तर्ह्येषा परिभाषा कर्तव्या ।**

**न कर्तव्या । उक्तं 'षष्ठी स्थानेयोगा' (१।१।४९) इत्येतस्य योगस्य वचने प्रयोजनम्—षष्ठ्यन्तं स्थानेन यथा युज्यते, यतः षष्ठी उच्चारितेति ॥**

---

**( १३१३ विधिसूत्रम् ॥ ६ । ४ । ४ आ. २६ )**

## ३१३० वाह ऊठ् ॥ ६ । ४ । १३२ ॥

**( संप्रसारणाधिकरणम् )**

**( ऊडः स्थाननिर्णयभाष्यम् )**

**ऊडादिः कस्मान्न भवति, आदिष्टिद्भवतीत्यादिः प्राप्नोति ?**

**संप्रसारणमित्यनेन यणः[3] स्थाने क्रियते ।**

**यद्येवम्—**

**( प्रदीपः ) ऊडादिरिति** । यद्यपि 'च्छ्वोः शूड्'इत्यत्रास्य ठित्वं प्रतिपादितं तथापि यथाश्रुतं गृहीत्वा प्रश्नः ॥

**संप्रसारणमित्यनेनेति** । वाक्यस्य भाविवर्णस्य वा संप्रसारणसंज्ञायां विज्ञायमानानां यणः स्थान ऊठ् भवति । अथ यण आदिरूट् कस्मान्न भवति ? संप्रसारणप्रदेशान्तरेषु 'यणः' इति स्थानषष्ठ्याश्रयणादिहापि स्थानषष्ठ्येव युक्ता । यथोक्तम्—सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्ति—इति । ठित्करणं तु वृद्ध्यर्थम् ॥

**यद्येवमिति** । 'प्रष्ठवाह्–अस्' इति स्थिते वकारस्य संप्रसारणे पूर्वैकादेशे च कृते गुण ओकारो ण्विप्रत्ययाश्रयः । तथा 'वृद्धिरेचि' इति वृद्धौ कृतायां प्रष्ठौह इत्यादि सिध्यति । अनकारान्ते चोपपदे छन्दसि ण्विर्न दृश्यत इति शाल्यूह इत्यादिसिध्यर्थमप्यूड्विधानं नोपपद्यते । सत्यपि वा प्रयोगे वह्यर्थे प्रवर्तमानस्योहतेः क्विपि शाल्यूह इत्यादि भविष्यति । उपसर्गेऽप्युपपदे वहेर्ण्विः छन्दसि नास्ति । यतो वृद्धेर्बाधकं पररूपं प्रसज्येतेत्यूड्विधानं सार्थकं स्यात् ॥

**( उद्योतः ) यथाश्रुतमिति** । यथाश्रुताष्टाध्यायीपाठेन टित्त्वेऽपि दोषो नावतरतीति प्रदर्शनायेति भावः । 'संप्रसारणमित्यनेन यणः स्थानं ह्रियते' इति भाष्ये पाठः । **ह्रियते**—प्राप्यते । 'यणः स्थाने क्रियते' इति पाठस्तु सुगम एव ॥ **अथ यण आदिरिति** । एवं च संप्रसारणग्रहणानुवृत्तिष्टित्त्वं चोभयमपि सप्रयोजनं भवतीति भावः ॥ **यथोक्तमिति** । 'तिप्तस्झि–' इत्यत्र । तिबादयः सप्तदश लस्येत्यस्य स्थानषष्ठीत्वं प्रतिपादयन्तीति एक इट् तस्यावयवषष्ठीत्वमापादयितुं नालम्, 'त्यजेदेकं कुलस्यार्थे' इति न्यायात् ; एवमिहापीत्यर्थः ॥ किमर्थं तर्हि ठित्वमत आह—**ठिद्ग्रहणं त्विति** । 'एत्येधत्यूठ्सु' इति विशेषणार्थमित्यर्थः ॥

**ण्विप्रत्ययेति** । 'वहश्च' इति ण्विः ॥ **छन्दसि ण्विरिति** । वस्तुतस्तु 'विभाषा पूर्वाह्ण' इति सूत्रस्थभाष्यप्रामाण्याच्छन्दसीति अत्र न संबध्यते । तस्मादनभिधानात्तद्विषये ण्विर्नेति वक्तुं युक्तम् ॥

**( ६६०१ ऊड्विधानानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ वाह ऊड्वचनार्थक्यं संप्रसारणेन कृतत्वात् ॥ * ॥

**( भाष्यम् ) वाह ऊड्वचनमनर्थकम्[4] ।**

**किं कारणम् ?**

**संप्रसारणेन कृतत्वात् । संप्रसारणेनैव सिद्धम् ।**

**का रूपसिद्धिः ? प्रष्ठौहः पश्य ॥**

**( ६६०२ संप्रसारणविधाने सिद्धिसाधकवार्तिकम् ॥ ३ ॥ )**

### ॥ * ॥ गुणः प्रत्ययलक्षणत्वात् ॥ * ॥

**( भाष्यम् ) प्रत्ययलक्षणेन गुणो भविष्यति ॥**

**( ६६०३ संप्रसारणे वृद्धिसाधकवार्तिकम् ॥ २ ॥ )**

### ॥ * ॥ एज्ग्रहणा[5] वृद्धिः ॥ * ॥

**( भाष्यम् ) एज्ग्रहणा वृद्धिर्भविष्यति ॥**

**( अन्तरङ्गपरिभाषाज्ञापकभाष्यम् )**

**एवं तर्हि सिद्धे सति यद्वाह ऊठं शास्ति तज्ज्ञाप-**

---

१ समुदायस्येति । तदन्तसमुदायावयवस्य तकारस्येत्यर्थः ॥

२ इदं वार्तिकमिति च. छ. झ. पाठः ॥

३ 'यणः स्थानं ह्रियते' इति च. छ. झ. पाठः ॥

४ 'मनर्थकं संप्रसारणेन' इति अ. पाठः ॥

५ 'ग्रहणाद्वृद्धिः' इति च. छ. पाठः ॥

**यत्याचार्यो भवत्येषा परिभाषा-असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**[2]

**पचावेदम् । पचामेदम् । असिद्धत्वात् बहिरङ्गलक्षणस्याड्गुणस्यान्तरङ्गलक्षणमैत्वं न भवति-इति ॥**

( प्रदीपः ) **एवं तर्हीति** । संप्रसारणं यजादिप्रत्ययनिमित्तभसंज्ञाश्रयत्वाद्बहिरङ्गमन्तरङ्गे ण्याश्रये गुणे कर्तव्येऽसिद्धमिति गुणो न स्यात्तदभावे रूपं न सिध्येदित्यूड्विधानमसिद्धपरिभाषां ज्ञापयति । ननु नैतज्ज्ञापकसाध्यम्, लोकतः सिद्धत्वात् । प्रत्यङ्गवर्ती हि लोकः । नैतदस्ति । यत्र युगपदन्तरङ्गबहिरङ्गयोः प्राप्तिस्तत्र लौकिकन्यायाश्रयणाद्भवत्वन्तरङ्गः । इह तु बहिरङ्गनिमित्तमन्तरङ्गमिति लौकिकन्यायानवतारः ॥

( उद्द्योतः ) **प्रत्यङ्गवर्तीति** । तथा च 'अचः परस्मिन्-' इत्यत्र भाष्य उक्तम्-'पुरुषोऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिनां' इति ॥ **इह त्विति** । यथा पचावेदमित्यत्र । उभयोरेकप्रत्ययनिमित्ताङ्गकार्यत्वाभावादङ्गवृत्तपरिभाषाया नात्र विषयः । तस्या अभावाच्च[1] ॥

( १३१४ विधिसूत्रम् ॥ ६ । ४ । ४ आ. २७ )

## ३१३१ श्वयुवमघोनामतद्धिते ॥ ६ । ४ । १३३ ॥

( ६६०४ पूर्वपक्षिण उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) **श्वादीनां संप्रसारणे नकारान्तग्रहणं कर्तव्यम् ।**

**किं कारणम् ?**[2]

**अनकारान्तस्य मा भूत् । मघवता, मघवते ॥**

**तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति-यूनः पश्येति, एवं युवतीः पश्येत्यत्रापि स्यादिति ॥**

(प्रदीपः) **श्वादीनामिति** । 'मघवा बहुलम्'इति त्रादेशे कृते एकदेशविकृतस्यानन्यत्वान्मघवतेत्यादौ संप्रसारणप्रसङ्गः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

**यत्तावदुच्यते—नकारान्तग्रहणं कर्तव्यमिति । न कर्तव्यम् ॥**[3]

( उद्द्योतः ) भाष्ये—**नकारान्तग्रहणं कर्तव्यम्, उक्तं वा**-इति वार्तिकम्, तत्र 'उक्तं वा' इत्यंशमवतारयति—**यत्तावदिति** । 'प्रातिपदिकग्रहणे' इत्यादि नग्रहणस्य फलान्तरमुक्तम्[4] ॥

( ६६०५ आनर्थक्यसाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) **किमुक्तम् ?**

**उक्तमेतत् "अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।" इति ।**

**यदप्युच्यते—'तथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति यथेह भवति यूनः पश्यति, एवं युवतीः पश्येत्यत्रापि स्यात्' इति ।**

**लिङ्गविशिष्टग्रहणे चोक्तम् ।**

***न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्* इति ॥**

**अथवा—**

**उपरिष्टाद्योगविभागः करिष्यते-"श्वयुवमघोनामतद्धिते" "अल्लोपः," अकारस्य च लोपो भवति । ततः-"अनः" इत्युभयोः शेषः ॥**[5]

( प्रदीपः ) **अर्वणस्त्विति** । मघवच्छब्दो मतुबन्त इत्यर्थः ॥

**न वा विभक्ताविति** । यद्यपि विभक्तिमाश्रित्य संप्रसारणं न विधीयते तथापि विभक्तौ विधीयत इति लिङ्गविशिष्टपरिभाषाऽनुपस्थानम् ॥ **अन इत्युभयोः शेष इति** । समुदायापेक्षणात् । न च त्रादेशे कृतेऽन्नन्तत्वमस्ति । एकदेशविकृतस्यानन्यत्वेनाप्यन्नन्तत्वं नास्ति, सामान्यातिदेशे विशेषानतिदेशात् । युवतिशब्दोऽप्यन्नन्तो न भवतीति तस्यापि संप्रसारणाभावः ॥

( उद्द्योतः ) (भाष्ये)—**छान्दसमिति** । अत एव वनिबन्ते संप्रसारणे यस्येति लोपाभावः[6] । तत एव तान्ते संप्रसारणाभावोऽपीत्यर्थः ॥ युक्त्यन्तरमप्याह—**मतुबन्त इति** । ततश्च शब्दान्तरत्वात्संप्रसारणाभाव इत्यर्थः ॥ **तथापि विभक्ताविति** । भस्य विधानात्, भत्वं च विभक्तौ परत इति यथाकथंचिद्विभक्तौ विधानेऽपि परिभाषानिषेधाङ्गीकारादित्यर्थः ॥ ननु 'अनन्तरस्य' इति न्यायादनन्तरस्यैव शेषो न्याय्योऽत आह—**समुदायेति** । लक्ष्यानुरोधादिति भावः ॥ **सामान्यातिदेश इति** । अन्नन्तत्वं हि मघवन्छब्दस्य विशेषधर्मः, मघवतेत्यादावभावादिति भावः । यस्य स आदेशस्तत्त्वेन तद्ग्रहणं न्याय्यम् । आदेशश्चायं नस्य, मघवन्शब्दस्य वा, न त्वनः । छिन्नपुच्छदृष्टान्तमूलको लौकिकन्यायोऽप्यत्र नास्ति, अर्धविकारेण प्रत्यभिज्ञानाभावादिति तात्पर्यम् । आसीयासिद्धत्वं त्वेतत्सूत्रविषये न, अनित्यत्वात् । अन्यथा 'मघवतः' इत्यसिद्धिरिति बोध्यम् ॥

---

१ 'तस्या अभावाच्च' इत्यस्य घ. ज. पुस्तकयोर्न पाठः ॥

२ 'किं प्रयोजनम्' इति च. छ. झ. पाठः ॥

३ 'भाष्ये-प्रातिपदिकग्रहण इत्यादिना नकारग्रहणस्य फलान्तरमुक्तम् । नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमुक्तं वेति वार्तिकं । तत्रोक्तं वेत्यंशं अवतारयति-यत्तावदिति' इति ङ. पाठः ॥

४ 'इत्यादिना नकारान्तग्रहणस्य' इति झ. पाठः ॥

५ 'ततोऽल्लोपः, अकारस्य च लोपो भवति । ततोऽनः, अन इत्यु-' इति च. छ. झ. पाठः ॥

६ लोपाभाव इति । मघोन इत्यादौ प्रत्ययावयवस्य सम्प्रसारणे छान्दसत्वात् 'यस्य-' इति लोपो नेत्यर्थः ॥

( १३१५ विधिसूत्रम् ॥ ६ । ४ । ४ आ. २८ )

## ३१३३ षपूर्वहन्धृतराज्ञामणि ॥ ६ । ४ । १३५ ॥

( लोपाधिकरणम् )

( षपूर्वादिग्रहणे पक्षद्वयोपस्थापकं भाष्यम् )

अथ किमिदं षपूर्वादीनां पुनर्वचनमल्लोपार्थमाहोस्विन्नियमार्थम् ।

कथं वा अल्लोपार्थम्, कथं वा नियमार्थम् ?

यद्यविशेषेणाल्लोपटिलोपयोः प्रकृतिभावस्ततो विध्यर्थम् ।

अथ हि अणि टिलोपस्यैव प्रकृतिभावस्ततो नियमार्थम् ।

अत उत्तरं पठति—

( प्रदीपः ) अथेति । किमिदं विध्यर्थमथ नियमार्थमिति प्रश्नः ॥

यद्यविशेषेणेति । 'प्रकृत्यैकाच्' इत्यादिः प्रकृतिभावः प्राकरणिकविध्यपेक्षो न तु वृद्धिगुणापेक्षः । तत्र प्राकरणिकानि कार्याणि भेदेनापेक्ष्येरन्, अभेदेन वेति पक्षद्वयोपपत्तिः ॥

( उद्योतः ) न तु वृद्धीत्यादि । तेन 'सांराविणं' 'साङ्कूटिनं'इत्यादौ गुणवृद्ध्योः[1] इनन्तस्य विधीयमान[2]प्रकृतिभावेन न निवृत्तिः, एतत्प्रकरणस्थत्वाभावादिति भावः ॥ भेदेनेत्यादि । भेदेनापेक्षायामनन्तरस्येति न्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः । तत्राद्ये नियमार्थं, द्वितीये विध्यर्थम् ॥

( ६६०६ अल्लोपपक्षस्थापकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ षपूर्वादीनां पुनर्वचनमल्लोपार्थम् ॥ * ॥

( भाष्यम् ) षपूर्वादीनां पुनर्वचनं क्रियते अल्लोपार्थम् । अविशेषेणाल्लोपटिलोपयोः प्रकृतिभावः ॥

( प्रदीपः ) अविशेषेणेति । अल्लोपटिलोपसमुदायमपेक्ष्य प्रकृतिभावो विधीयते ॥

( उद्योतः ) अल्लोपटिलोपेति । अत एव 'नैकाच्'इति नास्त्रीति भावः । ततश्चाल्लोपस्यापि प्रकृतिभावादप्राप्तावनेन विधिरिति तात्पर्यम् ॥

( ६६०७ नियमपक्षे दोषदर्शकं वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः ॥ * ॥

( भाष्यम् ) अवधारणे हि[3] अन्यत्र प्रकृतिभावे उपधालोपः प्रसज्येत ।

कथम् ?

यदि तावदेवं नियमः स्यात्-षपूर्वादीनामेवाणीति ।

एवमपि भवेदिह नियमान्न स्यात्-सामनः-वैमन इति । ताक्षण्य इत्यत्र[4] प्राप्नोति ।

अथाप्येवं नियमः स्यात्-षपूर्वादीनामण्येवेति ।

एवमपि भवेदिह नियमान्न स्यात्-ताक्षण्य इति । सामनो वैमन इत्यत्र तु प्राप्नोति ।

अथाप्युभयतो नियमः स्यात्-षपूर्वादीनामेवाणि, अण्येव षपूर्वादीनामिति ।

एवमपि सामन्यो वैमन्य[5] इति प्राप्नोति ।

तस्मात्सुष्ठूच्यते-'षपूर्वादीनां पुनर्वचनमल्लोपार्थम्' 'अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः' इति ॥

( प्रदीपः ) ताक्षण्य इति । तक्ष्णोऽपत्यमिति 'सेनान्तलक्षण'इति ण्यः, 'ये चाभावकर्मणोः'इति प्रकृतिभावाट्टिलोपाभावः । अस्मान्नियमाद[6]ल्लोपाभावः ॥

सामन इति । 'साऽस्य देवता'इत्यण् । अत्र 'अन्'इति प्रकृतिभावाट्टिलोपाभावेऽल्लोपप्रसङ्गः ॥

अथापीति । तत्रस्थावृत्तेर्वाऽऽश्रयणात् ॥

सामन्य इति । 'तत्र साधुः'इति यत् ॥

( उद्योतः ) भाष्ये—अन्यत्र प्रकृतिभाव इति । एतदतिरिक्ते प्रकृतिभावविषय इत्यर्थः ॥ सेनान्तेति । कारिलक्षणो ण्य इत्यर्थः ॥ कथं पुनरेकेन वाक्येन नियमद्वयलाभोऽत आह—तत्रेति । अत्र प्रयोक्तुस्तन्त्रेण प्रयोगः, बोद्धुरावृत्त्या बोधः । वाशब्दश्चार्थ इति बोध्यम् ॥

( १३१६ विधिसूत्रम् ॥ ६ । ४ । ४ आ. २९ )

## ३१३८ आतो धातोः ॥ ६ । ४ । १४० ॥

( ६६०८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आतोऽनापः ॥ * ॥

( भाष्यम् ) आतोऽनाप इति वक्तव्यम् ।

इहापि यथा स्यात्-"समासेऽनञ्पूर्वे क्त्वो ल्यप्" ( ७।१।३७ ) इति ॥

( प्रदीपः ) समास इति । ननु सौत्रोऽयं निर्देश इति किं तदर्थेन योगविभागेन ? एवं तर्हि यदा वैयाकरणा अनुकरणशब्दैर्व्यवहरन्ति तदर्थो योगविभागः । ते हि साधुभिर्व्यवहरमाणा अभ्युदयभाजो भवन्ति ॥

---

[1] गुणवृद्ध्योः-सांराविणमित्यादौ धातोरिनुणि प्रत्यये परतो विधीयमानयोः ॥

[2] विधीयमानेति । 'इनण्यनपत्ये' इत्यनेन ॥

[3] 'हि तस्मान्यत्र-' इति छ. ङ. पाठः ॥

[4] 'इति च प्राप्नोति' इति च. छ. ङ. पाठः ॥

[5] 'वैमन्यः' इति ङ. पाठः ॥

[6] 'मादल्लोपा' इति ङ. पाठः ॥

(उद्द्योतः) वैयाकरणा इति । सूत्रकारादिभ्योऽन्य इत्यर्थः ॥ साधुभिरिति । शास्त्रानुगमेनैव हि साधुत्वमिति भावः । अत्र 'अनापः'इति वार्तिककारोक्तेः, तस्य च 'क्त्वो ल्यप्'इति सौत्रप्रयोग एव च भगवतोदाहरणदानात्, तदनुकरण एव च कैयटेनोदाहरणदानादाकारान्तधातुप्रकृतिकातिरिक्ताकारान्तप्रातिपदिकाभाव इति लभ्यते । धातुग्रहणव्यावर्त्यं तु आबन्ता एवेति बोध्यम् ॥

(पदकृत्यभाष्यम्)

अनाप इति किम्[1]?

खट्वायाम्, मालायाम् ॥

(वार्तिकावतरणभाष्यम्)

यद्यनाप इत्युच्यते कथं क्त्वायाम्?

(६६०९ प्रयोगसाधकवार्तिकम् ॥ २[2] ॥)

॥ * ॥ निपातनादिति ॥ * ॥

(भाष्यम्) निपातनादेतत्सिद्धम् ।

किं निपातनम्?

'*क्त्वायां[3] वा प्रतिषेधः*' इति ॥

(प्रदीपः) क्त्वायामिति । निपातनाल्लोपाभावो याडागमश्च । सामान्यापेक्षं च निपातनं न सप्तम्यपेक्षमिति कृत्वा 'क्त्वायाः'इत्यपि भवति ॥

(उद्द्योतः) याडागमश्चेति । सोऽपि 'याडापः' इति वचनान्न प्राप्नोतीति भावः ॥

(वार्तिकप्रत्याख्यानभाष्यम्)

यद्येवं नार्थः 'अनापः' इत्यनेन ।

कथम्?

'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति निपातनादेतत्सिद्धम् ।

कथं "हलः श्नः शानज्झौ" (३।१।८३) इति?

एतदपि निपातनात्सिद्धम् ॥

अथवा—

योगविभागः करिष्यते—"आतः", आकारलोपो भवति । ततः—"धातोः", धातोश्चाकारस्य लोपो भवतीति ॥

(प्रदीपः) ततो धातोरिति । इदं नित्यार्थं सत्पूर्वेण विकल्पं ज्ञापयति । सा च व्यवस्थितविभाषा—इति आबन्तस्यालोपाभावः, अन्यस्य यथाप्रयोगं विकल्पः । केचित् स्त्रीलिङ्गपुंल्लिङ्गाश्रयं 'क्त्वायाः' 'क्त्वः' इत्यादि रूपद्वयं व्याचक्षते ॥

(उद्द्योतः) ननु 'आतः' इत्यनेनैव सिद्धे 'धातोः'इति व्यर्थमत आह—नित्यार्थं सदिति । इदं पूर्वस्य क्वाचित्कत्वं ज्ञापयतीति वक्तुं युक्तम् ॥ यथाप्रयोगमिति । आबन्तप्रकृतिकाचारक्विबन्तप्रकृतिककर्तृक्विबन्ता न सन्त्येव, अनभिधानादिति भावः ॥ विकल्प इति । क्त्वाशाविषयमेतत् ॥ स्त्रीलिङ्गेति । 'क्त्वायां श्रुतौ'इति स्त्रीलिङ्गस्य विशेष्यत्वेऽजादित्वाट्टापीति भावः ॥

(१३१७ विधिसूत्रम् ॥ ६ । ४ । ४ आ. ६)

## ३१३९ मन्त्रेष्वाङ्यादेरात्मनः ॥ ६ । ४ । १४१ ॥

(अतिव्याप्त्यापादकभाष्यम्)

मन्त्रेष्वात्मनः प्रत्ययमात्रे[6] लोपः प्रसङ्क्ष्यः ।

इहापि यथा स्यात्—त्मन्या समँञ्जन्[7] । त्मनोरन्तरस्थ इति ॥

(प्रदीपः) 'आङ्' इति पूर्वाचार्यप्रक्रियया तृतीयैकवचनग्रहणादव्याप्तिं मत्वाऽऽह—मन्त्रेष्विति ॥ त्मन्येति । सप्तम्येकवचनस्य स्थाने याशब्द आदेशः ॥

(अतिव्याप्तिनिरासभाष्यम्)

यदि प्रत्ययमात्रे लोप उच्यते कथं 'आत्मन एव निर्मिमीष्व' इति?

तस्मान्नार्थः प्रत्ययमात्रलोपेन ।

कथं—त्मन्या समँञ्जन्, त्मनोरन्तरस्थ इति?

छान्दसत्वात्सिद्धम् । दृष्टानुविधिश्छन्दसि भवति ॥

(प्रदीपः) छान्दसत्वादिति । यथा 'शिवा रुद्रस्य'इति प्राप्ते 'शिवा उद्रस्य' इति रेफलोपः, एवमिहाकारलोपः । एवं च ब्रुवता सूत्रमेव प्रत्याख्यातम् । सति त्वारम्भे नार्थ आदिग्रहणेन, 'आतो धातोः' इत्यत आत इत्यनुवर्तनात् ॥

(उद्द्योतः) ननु च्छान्दसत्वेऽपि लक्षणाभावे कथं साधुत्वमत आह—यथेति । उद्रस्येत्यादिवदस्यापि साधुत्वमिति भावः ॥

(६६१० सूत्रांशप्रत्याख्यानवार्तिकम् ॥ १ ॥)

॥ * ॥ आदिग्रहणानर्थक्यमाकारप्रकरणात् ॥ * ॥

(भाष्यम्) आदिग्रहणं चानर्थकम् ।

किं कारणम्?

आकारप्रकरणात् । 'आतः' इति वर्तते ॥

---

१ 'किमर्थं' इति च. छ. पाठः ॥

२ च. छ. झ. पुस्तकेषु नैतद्वार्तिकम् ॥

३ तत्पुरुषे तुल्यार्थ—(२।२।२) सूत्रे वार्तिकमेतत् ॥

४ 'टाविति भावः' इति झ. पाठः ॥

५ च. छ. झ. पुस्तकेषु वार्तिकमेतत् ॥

६ प्रत्ययमात्र इति । एवञ्च सूत्रे आङ्ग्रहणं व्यर्थमित्याशयः ॥

७ 'समञ्जत्' इति अ. पाठः ॥

( १३१८ विधिसूत्रम् ॥ ६ । ४ । ४ आ. ७ )

## ३१४० ति विंशतेर्डिति ॥ ६।४।१४२ ॥

( पदकृत्यभाष्यम् )

**तिग्रहणं किमर्थम्, न विंशतेर्डिति लोप इत्येवोच्येत ?**

**नैवं शक्यम् । 'विंशतेर्डिति लोपः' इतीयत्युच्यमानेऽन्त्यस्य प्रसज्येत ॥**

( तिग्रहणाभावेऽपि नियमार्थत्वबोधकभाष्यम् )

**सिद्धोऽन्त्यस्य 'यस्य-' इति लोपेनैव । तत्रारम्भसामर्थ्यात्तिशब्दस्य भविष्यति ॥**

( तिग्रहणप्रयोजनभाष्यम् )

**कुतो नु खल्वेतत्-अनन्त्यार्थे आरम्भे तिशब्दस्य भविष्यति न पुनरङ्गस्येति ?**

**तस्मात्तिग्रहणं कर्तव्यम् ॥**

**अथ क्रियमाणेऽपि तिग्रहणेऽन्त्यस्य कस्मान्न भवति ?**

**निर्दिश्यमानस्यादेशा भवन्तीति न भविष्यति ॥**

( प्रदीपः ) **कुतो नु खल्विति** । वचनसामर्थ्यादलोऽन्त्यपरिभाषाया अनुपस्थानात्समुदायस्यैव षष्ठीनिर्देशाल्लोपः प्रसज्येत, न त्वसंशब्दितस्य तिशब्दस्य । तिग्रहणे तु सति तेर्लोपो भवति ॥

**निर्दिश्यमानस्यादेशा भवन्तीति** । नानेन परिभाषाया व्यापारः कथ्यते । न हि निर्दिश्यमानपरिभाषा 'अलोऽन्त्यस्य' 'आदेः परस्य' इत्येतयोर्बाधिका, एतयोर्निर्विषयत्वप्रसङ्गात् । तस्मात्तिग्रहणसामर्थ्यात् 'अलोऽन्त्यस्य'इत्यस्यानुपस्थाने सर्वस्य तेर्लोपो भवतीत्ययमस्य भाष्यस्यार्थः ॥

( उद्योतः ) **न त्वसंशब्दितस्येति** । शब्देन साक्षादनिर्दिष्टस्येत्यर्थः ॥ भाष्ये—**निर्दिश्यमानस्येति** । 'द्वयोर्दशतोर्विन् आदेशः, शतिश्च प्रत्ययः' इति पक्षेऽनर्थकत्वात् 'अलोऽन्त्यस्य'इत्यस्या[1]प्राप्तावनया परिभाषया सर्वस्येत्यर्थः । अव्युत्पन्नप्रातिपदिकपक्षेऽप्यनर्थकत्वमेव । व्युत्पन्नत्वेऽपि शुद्धरूढत्वादनर्थकत्वमेवेत्यन्ये ॥

---

( १३१९ विधिसूत्रम् ॥ ६ । ४ । ४ आ. ८ )

## ३१४१ टेः ॥ ६ । ४ । १४३ ॥

( अभस्यापि टिलोपसाधकभाष्यम् )

**[2]अभस्योपसंख्यानं कर्तव्यम् । इहापि यथा स्यात्-उपसरजः, मन्दुरज इति[3] ।**

**डित्यभस्याप्यनुबन्धकरणसामर्थ्याद्भविष्यति ॥**

( प्रदीपः ) **डित्यभस्यापीति** । 'चुटू' इति वचनादित्संज्ञा तावड्डकारस्य प्रवर्तते, 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इति निर्देशात् । ततश्चानुबन्धकरणसामर्थ्यात् 'भस्य' इति प्रकरणमिह बाध्यते ॥

( उद्योतः ) ननु श्रवणार्थो डकारः स्यादत आह—**चुटू इतीति** । इत्संज्ञाशास्त्रबाधे मानाभावेनानुपजातविरोधन्यायेन पूर्वमित्त्वं प्रवर्त्तत इति भावः ॥ अत्रैवार्थे लिङ्गमप्याह—**दीर्घकाशेति** ॥ **बाध्यत इति** । लिङ्गेन प्रकरणबाधस्यौचित्यादिति भावः । अत्रापि पूर्वोक्तं लिङ्गं बोध्यम् ॥

---

( १३२० विधिसूत्रम् ॥ ६ । ४ । ४ आ. ९ )

## ३१४२ नस्तद्धिते ॥ ६ । ४ । १४४ ॥

( ६६११ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) **नकारान्तस्य टिलोपे सब्रह्मचारिन् पीठसर्पिन्कलापिन्कुथुमिन्तैतिलिन्जाजलिन्लाङ्गलिन्शिलालिन्शिखण्डिन्सूकरसद्मन्सुपर्वन्-इत्येतेषामुपसंख्यानं कर्तव्यम् ।**

**सब्रह्मचारिन्-सब्रह्मचारिण इमे-साब्रह्मचाराः । [4]सब्रह्मचारिन् ॥**

**पीठसर्पिन्-पैठसर्पाः । पीठसर्पिन् ॥**

**कलापिन्-कालापाः । कलापिन् ॥**

**कुथुमिन्-कौथुमाः । कुथुमिन् ॥**

**तैतिलिन्-तैतिलाः । तैतिलिन् ॥**

**जाजलिन्-जाजलाः । जाजलिन् ॥**

**लाङ्गलिन्-लाङ्गलाः । लाङ्गलिन् ॥**

**शिलालिन्-शैलालाः । शिलालिन् ॥**

**शिखण्डिन्-शैखण्डाः । शिखण्डिन् ॥**

**सूकरसद्मन्-सौकरसद्माः । सूकरसद्मन् ॥**

**सुपर्वन्-सौपर्वाः । सुपर्वन् ॥**

( प्रदीपः ) **नकारान्तस्येति** । 'इनण्यनपत्ये' 'अन्' इति च प्रकृतिभावे प्राप्ते वचनम् ॥ **सब्रह्मचारिण इम इति** । 'तस्येदम्' इत्यण् । पीठेन सर्पतीति पीठसर्पी, पूर्ववदण् । कलापिना प्रोक्तमधीयते कालापाः, 'कलापिनोऽण्' इत्यण्, ततोऽध्येतृवेदित्रोरणः 'प्रोक्ताल्लुक्'इति लुक् । कुथुमिना प्रोक्तमधीयते, 'तेन प्रोक्तम्' इत्यण् । पूर्ववत् द्वितीयस्याणो लुक् ।

---

1 इत्यस्याप्राप्ताविति । नानर्थकेऽलोन्त्यविधिरित्यनेनाप्राप्तावित्यर्थः ॥

2 एतदपि वार्तिकमिति झ. ड. पाठः ॥

3 इतिशब्दस्याग्रे 'तत्तर्हि वक्तव्यं, न वक्तव्यं, कथमुपसरजो मन्दुरज इति । *डित्यभस्यापि अनुबन्धकरणसामर्थ्यात्* इति च. छ. झ. ड. पाठः ॥

4 अस्य अ. पुस्तके न पाठः ॥

तैतिलिजाजलिलाङ्गलिप्रोक्तमध्ययनं साहचर्यात्तैतिल्यादिशब्दै-रुच्यते, तेभ्यः 'तदधीते तद्वेद'इत्यण् प्रत्ययः । 'तेन प्रोक्तम्' इत्यत्र तु शैषिकेऽर्थे 'वृद्धाच्छः' इति छः प्रसज्येत । केचित्तु तितिलशब्दमत्राधीयते ॥

( उद्द्योतः ) ततोऽध्येत्रिति । 'छन्दोब्राह्मणानि'इति तद्विषयता ॥ ननु प्रोक्ताणा सिद्धे किमुपचाराश्रयणेनेत्यत आह—तेन प्रोक्तमित्यत्र त्विति । इत्येतस्मिञ्छैषिकेऽर्थे त्वित्यर्थः । अत्र तैतिलित्वेनैवाध्ययनबोध इति बोध्यम् ॥

( उपसंख्यानभाष्यम् )

**चर्मणः कोश उपसंख्यानं कर्तव्यम् । चार्मः कोशः ॥**

( प्रदीपः ) **चार्म इति** । 'तस्य विकारः' इत्यण् ॥

( उद्द्योतः ) चार्म इति । कोशोऽत्र शस्त्रादिस्थापनार्थश्चर्ममयो भाषायां 'म्यान' इति प्रसिद्धः ॥

( उपसंख्यानभाष्यम् )

**अश्मनो विकार उपसंख्यानं कर्तव्यम् । अश्मनो विकार आश्मः ॥**

**शुनः संकोचे । शौवः सङ्कोचः ॥**

( प्रदीपः ) **शौव इति** । 'तस्येदम्' इत्यण् । 'स्वे ग्रामजनपदमनुष्येभ्यः' इत्येतत्प्रत्याख्यातम् । अत्र परत्वाद्वृद्धौ प्राप्तायां 'द्वारादीनाञ्च'इति तत्प्रतिषेधे ऐजागमे च कृते टिलोपः क्रियते । संकोचादन्यत्र शौवन इति । विकारावयवयोस्तु प्राण्यञि प्रकृतिभावाभावाच्छौव इत्येव भवति ॥

( उद्द्योतः ) ननु 'तस्येदम्'इत्यत्र 'स्वे ग्राम–'इत्यादिपरिगणनात् श्वन्शब्दात्संकोचेऽण् दुर्लभोऽत आह—**स्वे ग्रामेत्यादि** । स्वेऽर्थे एव, ग्रामादिवाचकेभ्य एव चेति द्विविधो नियमस्तदर्थं इति भावः ॥ नन्वत्र टिलोपे वृद्धिविषयाभावेन तन्निषेधसंनियोगशिष्ट ऐज्न स्यादत आह—**अत्र परत्वादिति** । सङ्कोचादन्यत्र सर्वत्र शौवन इत्येवेति न बोद्धव्यमित्याह—**विकारेत्यादि** । इदं तु वचनमणि प्रकृतिभावे प्राप्ते सङ्कोचे टिलोपविध्यर्थमिति भावः ॥

( ६६१२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अव्ययानां च सायम्प्रातिकाद्यर्थम् ॥ * ॥**[1]

( भाष्यम् ) **अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानं कर्तव्यम् ।**[2]

**किं प्रयोजनम् ?**

**सायम्प्रातिकाद्यर्थम् ।**

**सायम्प्रातिकः, पौनःपुनिकः ॥**

( प्रदीपः ) **सायम्प्रातिक इति** । सायम्प्रातःशब्दात् द्वन्द्वात् 'कालाट्ठञ्' इति ठञ्प्रत्ययः । यथाकथंचित्कालशब्दादपि ठञ् भवतीति कालसमुदायवाचिनोऽपि ठञ् भवति ॥ **पौनःपुनिक इति** । पूर्ववत् ठञ् । आदिशब्दः प्रकारे, टिलोपदर्शनेन च सादृश्यमाश्रीयत इति आरातीयः शाश्वतिक इत्यत्र च टिलोपाभावः ॥

( उद्द्योतः ) ननु कालसमुदायवाचकस्य कथं कालवाचकत्वमत आह—**यथाकथंचिदिति** ॥ सायंप्रातिकादिगणपाठाभावात्—आदिशब्दार्थमाह—**आदिशब्द इति** ॥

( अतिप्रसक्तिनिरासभाष्यम् )

**शाश्वतिके प्रतिषेधो वक्तव्यः ।**

**न वक्तव्यः । निपातनादेतत्सिद्धम् ।**

**किं निपातनम् ?**

**"येषां च विरोधः शाश्वतिकः" (२।४।९) इति ।**

**एवं तर्हि-शाश्वते प्रतिषेधो वक्तव्यः । शाश्वतम् ॥**

( प्रदीपः ) **निपातनादिति** । अत एव निपातनात् 'तान्तात्' इति कादेशाभावः ॥

**शाश्वतमिति** । भाष्यकारवचनप्रामाण्यादण्प्रत्ययः ॥

( उद्द्योतः ) ठञा बाधादण् दुर्लभोऽत आह—**भाष्यकारेति** । तत्प्रामाण्यात्सन्धिवेलादिगणे 'शश्वतो वा' इति पाठानुमानमिति भावः ॥

( १३२१ विधिसूत्रम् ॥ ६ । ४ । ४ आ. १० )

## ३१४६ यस्येति च ॥ ६ । ४ । १४८ ॥

( सूत्रप्रयोजनभाष्यम् )

**इवर्णस्य-ईति किमुदाहरणम् ?**

**हे दाक्षि, दाक्ष्या, दाक्षेयः ।**

**हे दाक्षि-ईति-यदि लोपो न स्यात्परस्य ह्रस्वत्वे कृते सवर्णदीर्घत्वं प्रसज्येत ।**

**दाक्ष्या इति-यदि लोपो न स्यात्परस्य यणादेशे कृते पूर्वस्य श्रवणं प्रसज्येत ।**

**दाक्षेय इति-यदि लोपो न स्यात्परस्य लोपे कृते पूर्वस्य श्रवणं प्रसज्येत ॥**

( प्रदीपः ) सवर्णदीर्घत्वे लोपे वा नास्ति विशेष इति मत्वा पृच्छति—**इवर्णस्येति** ॥ **हे दाक्षीति** । दाक्षिशब्दात् 'इतो मनुष्यजातेः' इति ङीषि कृते तस्य संबुद्धौ ह्रस्वे कृते सवर्णदीर्घत्वे सति सवर्णदीर्घस्य श्रवणप्रसङ्गः । ननु चान्तरङ्गत्वात्सवर्णदीर्घत्वे कृते ह्रस्वो भविष्यति । एवं तर्हि 'वार्णादाङ्गं बलीयः' इति ह्रस्वत्वं मन्यते । दाक्षि-ई-आ-इति स्थिते शब्दपरविप्रतिषेधात्परस्य यणादेशे कृते पूर्वस्य श्रवणप्रसङ्गः । सवर्णदीर्घस्यापूर्वविधित्वात्तत्र कर्तव्ये परयणादेशस्य नास्ति स्थानिवत्त्वम् । यणादेशेऽपि[3]

---

[1] एतद्वार्तिकमिति च. छ. झ. पाठः ॥

[2] च. छ. झ. ढ. पुस्तकेषु '*अव्ययानाञ्च* अव्ययानाञ्चोपसंख्यानं कर्तव्यम् । किम्प्रयोजनम् ? *सायम्प्रातिकाद्यर्थम्* सायं प्रातिकः' इति पाठः ॥

[3] यणादेशेऽपीति । 'दाक्षि ई आ' इत्यत्र परस्य यणि कृते सवर्णदीर्घे कर्तव्ये यणो न स्थानिवत्त्वम्, सवर्णदीर्घस्यासम्भवाद्यणि कर्तव्ये 'वरे' इत्यत्रेकारस्य प्रश्लेषान्न स्थानिवद्भाव इत्यादिरस्युपेत्यवादोऽयम् । वरे इत्यत्रेकारस्य प्रश्लेषे पाट्व्य इत्यत्र 'पटु-ई-एय' इत्यवस्थायां शब्दपरविप्रतिषेधात्परस्य यणि कृते पूर्वस्य यणि कर्तव्ये स्थानिवद्भावप्रतिषेधः स्यादिति नेदं सिद्धान्त्यभिमतमिति भावः ॥

कर्तव्ये 'वर-ई' इतीकारप्रश्लेषादीविधिं प्रति स्थानिवत्त्वनिषेधः । 'दाक्षि-ई' इति स्थिते 'स्त्रीभ्यो ढक्' इति ढकि कृते परस्य लोपे कृते पूर्वस्य श्रवणप्रसङ्गः । परलोपस्य स्थानिवद्भावात्तद्धितनिमित्तस्य लोपस्याप्रसङ्गात् ॥

**( उद्योतः ) ह्रस्वे कृत इति** । दाक्षि-ई सु-इति स्थिते शब्दपरविप्रतिषेधेन दीर्घात्पूर्वं ह्रस्वत्वं, ततो दीर्घं इत्याशय इति भावः ॥ **ननु चान्तरङ्गेति** । अग्रे भाष्य एवास्य वक्ष्यमाणत्वात्तदज्ञानेनैवास्य ग्रन्थस्य प्रवृत्तेः शङ्केयं निर्दला ॥ ननु यणादेशस्य स्थानिवत्त्वात्सवर्णदीर्घे कथं पूर्वस्य श्रवणप्रसङ्गो दोषोऽत आह—**अपूर्वविधित्वादिति** । किंतु पूर्वपराश्रय इति भावः ॥ ननु पूर्वस्य यणि कार्ये[1] स्थानिवत्त्वप्रवृत्त्या रूपं सिद्धमत आह—**यणादेशेऽपीति** ॥ **वर ई इति** । इदमप्यत्रत्यपूर्वपक्षभाष्याशयवर्णनमात्रं न त्वयं सिद्धान्तः, फलाभावात् । पद्व्या अपत्यं पाट्व्य इत्याद्यसिद्ध्यापत्तेश्च । पद्व्या मृद्ध्व्येत्यस्य मूर्धाभिषिक्तोदाहरणत्वपर 'अचः परस्मिन्-'इति सूत्रस्थभाष्यविरोधापत्तेश्चेति निरूपितमन्यत्र ॥

( प्रयोजननिराकरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । सवर्णदीर्घत्वेनाप्येतानि सिद्धानि ॥**

**( प्रदीपः ) नैतानीति** । यत्राङ्गवार्णयोर्युगपत्प्रसङ्गस्तत्र वार्णादाङ्गं बलीयो भवतीति भावः । यण्ढकौ त्वाङ्गावेव न भवतः ॥

**( उद्योतः ) यत्राङ्गेति** । 'अन्तरङ्गं बलीयः' इत्येतदपवादत्वादस्येति भावः । यद्यपि 'हे दाक्षि'इत्यत्र पदस्य विभज्यान्वाख्यानेऽस्ति युगपत्प्रसङ्गस्तथाऽपि क्रमेणान्वाख्यान इदं सिध्यतीति तात्पर्यम् ॥ **यण्ढकौ त्विति** । अत्र ढग्ग्रहणं प्रत्यय[2]मात्रोपलक्षणमित्याहुः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि-अतिसखेरागच्छति, अतिसखेः स्वम् । यदि लोपो न स्यादुपसर्जनह्रस्वत्वे कृते 'असखि' इति प्रतिषेधः प्रसज्येत ॥**

**( प्रदीपः ) इदं तर्हीति** । सखिशब्दात् 'सख्यशिश्वीति भाषायाम्'इति ङीषि कृते सखीमतिक्रान्त इति प्रादिसमासे कृते लिङ्गविशिष्टपरिभाषाया अनित्यत्वादसति टचि 'गोस्त्रियोः-' इति ह्रस्वः । तत्रासतीकारलोपे एकादेशस्य पूर्वं प्रति अन्तवद्भावात् घिसंज्ञाप्रतिषेधः स्यात् । प्रसज्यप्रतिषेधे चायं दोषो न तु पर्युदासे,तदन्तस्य सखिश[3]ब्दादन्यत्वात्संज्ञायाः सिद्धत्वात् । ङीषि तु लोपे कृते ह्रस्[4]त्वे च कृते लाक्षणिकत्वात्सखिरूपस्य घिसंज्ञायाः प्रतिषेधाभावः ॥

**( उद्योतः )** ननु लिङ्गविशिष्टपरिभाषया 'राजाहःसखिभ्यः-' इति टज्दुर्वारोऽत आह—**लिङ्गविशिष्टेति** । पूर्वान्तवद्भावेन प्राप्तस्य समासान्तविधेरनित्यत्वादभाव इति बोध्यम् ॥ **पूर्वं प्रतीति** । प्रतिषेधे पूर्वस्याश्रयणादन्तवद्भावप्राप्तेरिति भावः ॥ **प्रसज्येति** । वस्तुतः पर्युदासेऽपि दोषः । वर्णसंज्ञापक्षे लक्षणाया आवश्यकत्वेन सख्यंश एव लक्षणाङ्गीकारे सख्यवयवभिन्नेवर्णस्येत्यर्थात् । तदन्तसंज्ञापक्षेऽप्यनुभूतविशेषणेवर्णेनैव तदन्तविधिस्वीकारेण सख्यवयवभिन्नेवर्णान्तस्येत्यर्थात् । अतिदेशे चातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्य लोकव्युत्पत्तिसिद्धतया न स्वाश्रयसख्यवयवभिन्नत्वमादाय दोषः । पर्युदासे प्रतिषेधस्यापि गम्यमानतया पूर्वान्तवत्त्वेन सखिशब्दत्वे समुदाय आगत इवर्णे सख्यवयवत्वमार्थसमाजग्रस्तमेव । किंच तव प्रसज्यप्रतिषेधेऽपि न दोषः, अतिसखीति समुदायनिष्ठघिसंज्ञायास्तेन वारयितुमशक्यत्वात् संज्ञा[5]विधौ तदन्तग्रहणे मानाभावादिति दिक् । न च[6] लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः, तस्या अनित्यताया उक्तत्वात् । कार्यकालपक्षे विभक्तौ लिङ्गविशिष्टाग्रहणाच्च । ख्यत्[7]यात्सूत्रस्थभाष्यं तु तत्सूत्र एव योजितम् । एवं च सखायमतिक्रान्तोऽतिसखेत्यादौ घित्वं न भवत्येवेति भाष्यस्वरसः ॥

( ६६१३ प्रतिषेधोपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ यस्येत्यादौ श्यां प्रतिषेधः ॥ * ॥

**( भाष्यम् ) यस्येत्यादौ श्यां प्रतिषेधो वक्तव्यः । काण्डे, कुड्ये[8], 'सौर्यै नाम हिमवतः शृङ्गे ।'**

**स तर्हि प्रतिषेधो वक्तव्यः ।**

**( प्रदीपः ) काण्डे इति** । 'यचि भम्'इति भत्वाल्लोपः प्राप्नोति ॥ **सौर्यै इति** । सूर्येणै[9]कदिगिति 'तेनैकदिक्'इत्यण् । तत्र 'यस्येति च'इत्यकारलोपः प्राप्नोति सूर्यतिष्या-इति यलोपश्च । यथा तु वक्ष्यते 'सूर्यमत्स्ययोर्ङ्याम्'इति तथाऽत्र यलोपस्याप्रसङ्गः ॥

---

१ कार्ये—कर्तव्ये इत्यर्थः ॥

२ प्रत्ययमात्रोपलक्षणमिति । दाक्ष्येत्यत्र तृतीयैकवचनम्, हे दाक्षि इत्यत्र सम्बुद्धिप्रत्ययश्च नाङ्गावित्यप्यभिप्रेतमिति भावः ॥

३ 'सखिशब्दान्यत्वात् घिसंज्ञा-' इति ङ. पाठः । 'शब्दादन्यत्वात् घिसंज्ञा' इति च. झ. पाठः ॥

४ 'ह्रस्वत्वे लाक्षणिकत्वात्' इति अ. पाठः । 'ह्रस्वत्वे लाक्षणिकत्वात्सखिरूपस्य घिसंज्ञाप्रति' इति ङ. पाठः ॥

५ संज्ञाविधौ–घिसंज्ञाविधायके शेषो घ्यसखीति सूत्रे तदन्तग्रहणे–सख्यन्तभिन्नस्य घिसंज्ञेत्येवमाद्यर्थकरणे मानाभाव इति भावः ॥

६ भाष्यकृत्प्रदर्शिते अतिसखेरागच्छतीत्यादौ 'यस्येति च' इति लोपप्रवृत्तावपि दोषमाशङ्क्य निराकरोति—न च लोपेऽपीत्यादिना ॥

७ ख्यत्यात्सूत्रस्थभाष्यन्त्विति । तत्र हि सूत्रे भाष्ये 'ख्यत्यात्परस्य' इति सूत्रस्थाने 'सखिपतिभ्याम्' इति न्यासं विधाय तादृशन्यासे 'अतिसखेरागच्छामि' इत्यादौ दोष उक्तः । अतिसखेरित्येतच्च अतिक्रान्तः सखा येनेति बहुव्रीहिणा शोभनः सखेति तत्पुरुषेण वा कैयटेन प्रतिपादितम् । भट्टैश्च कैय्यटोक्तविग्रहौ प्रदूष्य सखीमतिक्रान्तोऽतिसखिः, तस्यातिसखेरित्युक्तम् । सख्यवयवभिन्नेवर्णस्य घिसंज्ञेति शेषो घ्यसखीत्यस्यार्थकरणे कैय्यटप्रतिपादितविग्रहाश्रितस्य 'अतिसखेः' इति भाष्योक्तं रूपमेव न स्यादतस्तत्र सखीमतिक्रान्तेति विग्रह आश्रितः । तस्मिंश्च विग्रहे सखिशब्दस्य लाक्षणिकत्वेन 'सखिपतिभ्यां' इति सूत्रेण तस्य ग्रहणं न स्यादिति भाष्योक्तातिसखेरिति रूपासङ्गतिः । सा चासङ्गतिः 'प्रकृतभाष्यं तु लक्षणप्रतिपदोक्तपरिभाषानाश्रयणेन प्रवृत्तमिति बोध्यम्' इत्यादिना भट्टैर्निराकृता ॥

८ अस्य झ. च. छ. पुस्तकेषु पाठः । ङ. पुस्तके 'कुंडे' इति पाठः ॥

९ 'सूर्येण एकदिगित्यण्' इति अ. पाठः ॥

(उद्द्योतः) भत्वादिति । 'अनपुंसकस्य'इति सर्वनामस्थानत्वप्रतिषेधादित्यर्थः ॥ अकारलोप इति । अणकारलोप इत्यर्थः ॥ यलोपश्चेति । एवं चोभयोरपि निषेधो वक्तव्य इत्यर्थः ॥ तत्र यलोपप्रतिषेधवचनं न कार्यमित्याह—यथा त्विति ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

न वक्तव्यः ।

इह श्यामित्यपि प्रकृतं नेत्यपि । तत्राभिसम्बन्धमात्रं कर्तव्यम्–यस्येत्यादौ लोपो भवति, श्यां न ॥

( प्रदीपः ) इह श्यामिति । 'विभाषा ङिश्योः'इत्यतः शीग्रहणं 'न संयोगाद्वमन्तात्'इत्यतो नेति चानुवर्तते, तेन वाक्यभेदेन श्यां कार्यं निषिध्यते ॥

( ६६१४ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ इयङुवङ्भ्यां लोपो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन । इयङुवङोरवकाशः-श्रियौ, श्रियः । भ्रुवौ, भ्रुवः ।

लोपस्यावकाशः–कामण्डलेयः, भाद्रवाहेयः ।

इहोभयं प्राप्नोति—वात्सप्रेयः, लैखाभ्रेयः ।

लोपो भवति विप्रतिषेधेन ॥

( प्रदीपः ) कामण्डलेय इति । 'चतुष्पाद्भ्यो ढञ्'इति ढञ् । एवं वात्सप्रेय इति ॥ लैखाभ्रेय इति । 'शुभ्रादिभ्यश्च'इति ढक् ॥

( उद्द्योतः ) भाष्ये—लोपावकाशः कामण्डलेय इति । अयं 'ढे लोप–' इत्यस्यावकाशः । 'यस्य-'इति लोपस्यावकाशस्त्वतिसखेरित्युक्त एवेति बोध्यम् ॥ वात्सप्रेय इति । वत्सं प्रीणातीति वत्सप्रीः । लैखाभ्रेये 'ढे लोपोऽकद्र्वाः' इत्युलोपः ॥

( ६६१५ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ गुणवृद्धी च ॥ * ॥

( भाष्यम् ) गुणवृद्धी चेयङुवङ्भ्यां भवतो विप्रतिषेधेन ।

गुणवृद्ध्योरवकाशः–चेता[2], गौः ।

इयङुवङोः स एव ।

इहोभयं प्राप्नोति–चयनम्, चायकः । लवनम्[3], लावकः ।

गुणवृद्धी भवतो विप्रतिषेधेन ॥

( ६६१६ विप्रतिषेधप्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ न वेयङुवङादेशस्यान्यविषयवचनात् ॥ * ॥

( भाष्यम् ) न वाऽर्थौ विप्रतिषेधेन ॥

किं कारणम् ?

इयङुवङादेशस्यान्यविषये वचनात् । इयङुवङादेशोऽन्यविषये आरभ्यते ।

किं विषये ?

यणादेशविषये । स यथैव[4] यणादेशं बाधते, एवं गुणवृद्धी अपि बाधेत ॥

(प्रदीपः) इयङुवङादेश इति । आदेशनमादेशः—विधानम्, इयङुवङोरादेश इति षष्ठीसमासः । यथेयङुवङौ सर्वत्रान्यपूर्वकौ नैवं गुणवृद्धी इति विप्रतिषेधानुपपत्तिरित्यर्थः ॥

(उद्द्योतः) ननु 'इयङुवङादेशौ'इति वाच्य एकवचननिर्देशोऽयुक्तोऽत आह—आदेशनमिति ॥ नैवं गुणेत्यादि । चेता गौरित्यादौ सावकाशत्वादिति भावः ॥

( ६६१७ प्रतिषेधोपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः ॥ * ॥

( भाष्यम् ) तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधो वक्तव्यः ।

( प्रतिषेधानर्थक्यबोधकभाष्यम् )

न वक्तव्यः ।

मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमियङुवङादेशो यणादेशं बाधिष्यते, गुणवृद्धी न बाधिष्यते ॥

( १३२२ विधिसूत्रम् ॥ ६ । ४ । ४ आ. ११ )

## ३१४७ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ ६ । ४ । १४९ ॥

( ६६१८ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् ॥ * ॥

( भाष्यम् ) सूर्यादीनामणन्तेऽप्रसिद्धिः । सौरी बलाका ।

किं कारणम् ?

अङ्गान्यत्वात् । अणन्तमेतदङ्गमन्यद्भवति ॥

लोपे कृते नाङ्गान्यत्वम् ।

स्थानिवद्भावादङ्गान्यत्वं भवति ॥

(प्रदीपः) सौरीति । 'तेनैकदिक्'इत्यण् । तदन्तान्ङीप् । इकारे परतोऽत्र सूर्यशब्दोऽङ्गं न भवति । किं तर्हि ? अणन्तमिति

१ ननु लोपस्यात्रकाशः कामण्डलेयः कान्द्रवाहेय इत्येतन्न्यूनम्, ढेलोप इत्यस्यावकाशप्रदर्शनेऽपि यस्येति चेत्यस्यावकाशाप्रदर्शनादित्यत आह—यस्येति लोपस्येति ॥

२ 'चेता गौरिति । चेतेत्यत्र सार्वधातुकेति गुणः, गौरित्यत्र 'अचो-ञ्णिति' इति वृद्धिः ॥

३ 'लवनं, लावकः' इत्यस्य च. छ. झ. पुस्तकेषु पाठः ॥

४ 'यथैव' इत्येव सशब्दरहितः अ. पाठः ॥

यकारलोपाप्रसङ्गः । पुंयोगविवक्षायां तु देवतायां चाब्विधानादन्यत्र ङीषि कृते सूर्यशब्दोऽङ्गमीकारे भवतीति तत्रैव लोपः स्यात्—सूरीति ॥

**अङ्गान्यत्वादिति** । राजदन्तादित्वात्परनिपातः ॥

( उद्द्योतः ) अङ्गं न भवतीति । सूर्यादीनामङ्गानां भसंज्ञकानामीति उपधालोप इति सूत्रार्थादिति भावः ॥ नन्वेवं सूर्यांशे निरवकाशो लोपोऽत आह—**पुंयोगेति** ॥ अन्यत्र—कुन्त्यादौ ॥ भाष्ये—**स्थानिवद्भावादङ्गान्यत्वमिति** । अल्लोपस्य 'अचः परस्मिन्-'इति स्थानिवत्त्वादङ्गभेद इत्यर्थः ॥

( ६६१९ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु स्थानिवत्प्रतिषेधात् ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**स्थानिवत्प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावः—यलोपविधिं प्रति न स्थानिवद्भवतीति ।**

**एवमपि न सिध्यति ।**

**किं कारणम् ?**

**अङ्गान्यत्वात् । अन्यो हि सूर्यशब्दः, अन्यः सौर्यशब्दः ।**

**नैष दोषः । एकदेशविकृतमनन्यवद्भवतीत्येवं भविष्यति ॥**

(प्रदीपः) **यलोपविधिमिति** । 'उपधाविधिं प्रति न'इति तु प्रतिषेधः प्रत्ययविधावेव । स्थानिवत्त्वनिषेधे चावशिष्टस्याङ्गसंज्ञायामेकदेशविकृतस्यानन्यत्वात् यलोपः सिध्यति ॥

( उद्द्योतः ) **प्रत्ययविधावेवेति** । अतोऽत्र स नोक्त इति भावः ॥

( ६६२० प्रत्याक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ उपधाग्रहणानर्थक्यं च ॥ * ॥**

( भाष्यम् ) **स्थानिवद्भावे चेदानीं प्रतिषिद्धे उपधाग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**अन्त्य एव हि सूर्यादीनां यकारः ।**

**किं यातमेतद्भवति ?**

**सुष्ठु[1] यातम्, साधु च यातम्, यदि प्राग्भादसिद्धत्वम् । अथ[2] सह तेनासिद्धत्वम्, असिद्धत्वाल्लोपे[3]स्यानन्त्यो यकारो भवति ॥**

( प्रदीपः ) **अन्त्य एवेति** । अकारद्वयलोपे सति यकारस्यान्त्यत्वात् तत्र यान्तानां सूर्यादीनां लोपो भवतीत्युच्यमाने 'अलोऽन्त्यस्य'इति यकारस्यैव भविष्यति । यग्रहणं तु न प्रत्याख्यायते, तदन्तरेण या[4]न्तत्वालाभात्, उत्तरार्थत्वाच्च यग्रहणस्य ॥

**यातमिति** । गतं ज्ञातं सिद्धमित्यर्थः ॥ **साधु च यातमिति** । अनेन सिद्धेर्दार्ढ्यं प्रतिपाद्यते ॥ **यदि प्रागिति** । अकारद्वयलोपस्य सिद्धत्वादन्त्यो यकारो भवति ॥ **अथेति** । ईति अकारलोपस्य समानाश्रयस्यासिद्धत्वाद्यान्तत्वाभावः । ततश्चोपधाग्रहणं कर्तव्यम् ॥

(उद्द्योतः) **तत्र यान्तानामिति** । 'यः' इत्यनेन सूर्यादयो विशेष्यन्ते । 'यः' इति च बहुवचनस्थाने सौत्रमेकवचनमिति भावः ॥ **तदन्तरेणेति** । विशेषणाभावे यान्तानां सूर्यादीनामित्यर्थासंभवादिति भावः ॥ ननु तदभावेऽपि सूर्यादीनां तद्धिते लोप इत्येव यान्ते प्राप्तिः पर्यवस्यतीत्यरुचेराह—**उत्तरार्थत्वाच्चेति** । 'हलस्तद्धितस्य, आपत्यस्य च-'इत्यादौ ॥ नन्वकारद्वयलोपे यान्तत्वमस्त्येवेत्यत आह—**ईत्यकारलोपस्येति** । अणि यो 'यस्य-'इति लोपस्तस्य व्याश्रयत्वादसिद्धत्वाभाव इत्यर्थः । एवं चेदनेवोपधाग्रहणं सह तेनासिद्धत्वे ज्ञापकमिति भावः ॥

( समाधानभाष्यम् )

**यद्यपि सह तेनासिद्धत्वम्, एवमपि न दोषः ।**

**नैवं विज्ञायते—सूर्यादीनामङ्गानां यकारलोप इति ।**

**कथं तर्हि ?**

**अङ्गस्य यलोपो भवति स चेत्सूर्यादीनां यकार इति ।**

**एवमपि सूर्यचरी अत्र प्राप्नोति ।**

**तस्मादुपधाग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) **यद्यपीति** । न चोपधाग्रहणं क्रियते, नापि सूर्यादीन्यङ्गत्वेन विशेष्यन्त इत्यर्थः । ईति तद्धिते च यदङ्गमनाश्रितरूपविशेषं तस्य यकारस्य लोपः स चेद्यकारः सूर्याद्यवयवो भवतीति सूत्रार्थः ॥

**सूर्यचरीति** । सूर्यस्य स्त्री सू[6]री भूतपूर्वेति चरट्प्रत्ययः । 'तसिलादिषु-'इति पुंवद्भावः ॥

( ६६२१ परिगणनोपसंख्यानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ विषयपरिगणनं च ॥ * ॥**

( भाष्यम् ) **विषयपरिगणनं च कर्तव्यम् ॥**

( ६६२२ परिगणनवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ सूर्यमत्स्ययोर्ङ्याम् ॥ * ॥**

( भाष्यम् ) **सूर्यमत्स्ययोर्ङ्यामिति वक्तव्यम् । सौरी, मत्[7]सी ॥**

(प्रदीपः) **सूर्यमत्स्ययोरिति** । 'मत्स्यस्य ङ्याम्' 'सूर्यागस्त्ययोश्छे च'इत्येव सिद्धेऽर्थप्रदर्शनपरत्वाल्लाघवेऽनादरः कृतः ॥

( उद्द्योतः ) **इत्येव सिद्ध इति** । सूर्यशब्दस्य द्विरपाठाल्लाघवं भवतीति भावः ॥

---

१ 'साधु च यातं' इति छ. पाठः ॥
२ 'अथ हि सह' इति च. छ. पाठः ॥
३ 'यस्य नान्त्यो' इति च. छ. पाठः ॥
४ 'यान्तत्वाभावादुत' इति ङ. झ. पाठः ॥
५ यातमित्यस्यार्थम्प्रतिपादयति—गतमित्यादिना ॥
६ 'सूरी सा भूत-' इति ङ. च. पाठः ॥
७ 'मात्सी' इति ङ. पाठः ॥

( ६६२३ परिगणनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ [1]सूर्यागस्त्ययोश्छे च ॥ * ॥

( भाष्यम् ) सूर्यागस्त्ययोश्छे च ङ्यां चेति वक्तव्यम् । सौरी, सौरीयः । आगस्ती, आगस्तीयः ॥

( प्रदीपः ) सौरीय इति । सौर्यस्यायमिति वृद्धाच्छः । अगस्त्यस्यापत्यमिति ऋष्यण्, तदन्तान्ङीप् छश्च ॥

( उद्योतः ) छश्चेति । आगस्त्या अयमित्यर्थे-इति भावः ॥

( ६६२४ परिगणनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ तिष्यपुष्ययोर्नक्षत्राणि ॥ * ॥

( भाष्यम् ) तिष्यपुष्ययोर्नक्षत्राणि यलोपो वक्तव्यः । तैषम्, [2]पौषं ॥

( प्रदीपः ) नक्षत्राणीति । नक्षत्रसम्बन्धिन्यणीत्यर्थः । 'तिष्यपुष्ययोः'इत्युभयोपादानात्तिष्यशब्दस्य यलोपाभावः ॥

( उद्योतः ) नक्षत्रसंबन्धिनीति । नक्षत्रवाचकाद्योऽण् स सर्वोऽपि गृह्यते । अत एव तिष्ये पुष्ये च भवस्तैषः पौष इत्यत्रापि लोपः । इदमेव ध्वनयता भगवता तैषं पौष इति लिङ्गभेदेनोदाहृतम् । आद्यस्य तिष्येण युक्तमहरित्यर्थः । अन्त्यस्य पुष्ये भव इत्यर्थः । व्यावर्त्यं तु तिष्यसंज्ञकपुरुषस्येदं तैष्यमित्याहुः । तत्र तिष्यस्य प्राप्ते नियमार्थं, पुष्यस्य त्वप्राप्ते विधिः ॥ सूत्रेऽर्थग्रहणमस्तु किमुभयोपादानेन ? तत्राह—उभयोपादानेति ॥

( ६६२५ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ॥ * ॥

( भाष्यम् ) अन्तिकस्य तसि कादिलोपो वक्तव्यः, आद्युदात्तत्वं च वक्तव्यम् । अन्तितो न दूरात् ॥

( प्रदीपः ) अन्तित इति । 'अपादाने चाहीयरुहोः'इति तसिः ॥

( उपसंख्यानभाष्यम् )

[3]तमे तादेश्च कादेश्च लोपो वक्तव्यः । अग्ने त्वं नो अन्तमः । [4]अन्तितमे अवरोहति ॥

( प्रदीपः ) तादेश्चेति । चकारात्कादेश्च । यदा तादेस्तदा-अन्तमः, कादिलोपे तु-अन्तितमः ॥

( उपसंख्याने श्लोकवार्तिकम् )

[5]तसीत्येष न वक्तव्यो
दृष्टो दाशतयेऽपि हि ।
[6]द्यौ लोपोऽन्तिषदित्यत्र

( भाष्यम् ) अन्तिषत् ॥

( प्रदीपः ) तसीत्येष इति । 'कादिलोपो बहुलम्'इत्येव विषयमनुपादाय पठितव्यमित्यर्थः ॥ दाशतय इति । दशावयवा यस्य दशतयः, तत्र भवो दाशतयः-चतुःषष्ट्याख्यो ग्रन्थः ॥ द्यौ लोप इति । द्युशब्देनोत्तरपदं पूर्वाचार्यप्रसिद्ध्योच्यते । अन्तिके सीदतीति 'सत्सूद्विष-'इति क्विप् । 'पूर्वपदात्-'इति षत्वम् ॥

( उद्योतः ) ननु तसील्यस्याभावे सर्वत्र कादिलोपः स्यादत आह—कादिलोपो बहुलमिति । एवं चेष्टविषये लोपसिद्धिरिति भावः ॥ [7]चतुःषष्ट्याख्य इति । चतुःषष्ट्यध्याययुक्तत्वाच्च बह्वृचानां संहिता तथोच्यते । सैव दशमण्डलाख्यावयवसत्त्वाद्दाशतयशब्दवाच्या ॥

( उपसंख्याने श्लोकवार्तिकम् )

[8]तथाऽद्यौ येऽन्त्यथर्वसु ॥ १ ॥

( भाष्यम् ) अन्ति ये च दूरके ॥

---

१ एतद्वार्तिकं नेति अ. पाठः ॥

२ 'पौषम्' इति च. छ. पुस्तकयोर्दृश्यते ॥

३ एतद्वार्तिकमिति च. छ. झ. पाठः ॥

४ 'अन्तितमोऽवरोहति' इति झ. पाठः । 'अन्तितमो अव-' इति छ. पाठः ॥

५ तसीत्येषेति । तसि परतो यः कादिलोपो वार्तिककृतोच्यते स न वक्तव्यः, यतो दाशतये-ऋक्संहितादिषु अन्यत्रापि स दृष्टः । अन्यत्र—अन्तिषदित्यत्र द्यौ लोपः—उत्तरपदे परे लोपो दृष्ट इति वार्तिकार्थः ॥

६ 'द्यौ' इति छ. पुस्तके निर्दिष्टः पाठः ॥

७ 'चतुषष्ट्या इति' इत्येवं प्रतीकं ज. घ. पुस्तकयोः ॥

८ तथाऽद्याविति । यथा ऋगादौ तस्प्रत्ययाभावेऽपि उत्तरपदे परतोऽन्तिकशब्दस्य कादिलोपो भवति तथा उत्तरपदाभावेऽपि ये शब्दे परतः कादिलोपोऽथर्वसु दृश्यतेऽतस्तसीत्येतन्न वक्तव्यमिति भावः । उत्तरपदशब्दो हि समासचरमावयवे रूढः, ऋगादौ 'अन्तिषत्' इत्यत्रोत्तरपदे परत एव लोपो दृश्यते, अथर्ववेदे चानुत्तरपदेऽपि ये परतो लोपदर्शनात्तथोच्यते श्लोकवार्तिककृता । भाष्यकारोऽपि 'अन्ति ये च दूरके' इत्येतदाथर्वणिकमुदाहरणमाह । तदेतत्—अथर्ववेदे कां. १. सू. ४ मं. ९ 'अ॒र॒सास॑ इ॒हाह॑यो॒ ये अन्ति॒ ये च॑ दूर॒के । घ॒नेन॑ हन्मि॒ वृश्चि॑क॒महिं॑ द॒ण्डेनाग॑तम् ।' इति दृश्यते । तत्र हि 'ये' इत्यस्य न प्रत्ययत्वम् । पदपाठेऽपि 'ये' इत्येतत्पृथक्पदं पठन्ति, अतो नायम्प्रत्ययः । ये अन्तिके ये च दूरे अहयस्तान्हन्मि इत्येवं सुस्पष्टदर्शनादपि येशब्दस्य प्रत्ययत्वं न सम्यक् । स्वरोऽपि 'अन्ति ये' इत्यस्यैकपदत्वेऽन्तःस्वरितत्वान्न तथेति न तस्यैकपदत्वम् । इदानीमुपलभ्यमानाथर्ववेदे भाष्यपरिगृहीतमेतदेकमेवोदाहरणं दृश्यते, तत्र च न यत्प्रत्ययः । किन्तु ये शब्द एवेति स्पष्टमेव । ऋग्वेदेऽपि—'यद॑न्ति॒ यच्च॑ दूर॒के भ॒यं वि॒न्दति॒ मामि॒ह । पव॑मान॒ वि तज्ज॑हि ।' इति मन्त्रे यच्चशब्दे परतः कादिलोपो दृश्यतेऽतो वार्तिके 'ये' इत्यस्य ये शब्द इत्येवार्थः । यत्र च न तथा तत्र ऋग्वेदे लोपो न दृश्यते । यथा—ज॒हि शत्रु॑म॒न्ति॒के दू॑र॒के च॒ य उ॒र्वी गव्यू॑ति॒मभ॑यं च न॒स्कृधि । मं. ९ सू. ७८ मं. ४ इत्यादौ । ऋग्वेदे उत्तरपदे परतो लोपो बहुषु स्थलेषु दृश्यते । एवञ्च 'तथाऽद्यौ-' इति वार्तिकस्य येशब्दे परत इत्येवार्थ इति निर्विवादम् । एतच्च सर्वमपि श्लोकवार्तिकं तसीत्येतन्न वक्तव्यं कादिलोपो बहुलमित्येव वक्तव्यमित्येतत्परमेव न त्वपूर्वविधायकम् । अत एव कैय्यटचरणैः 'तथाऽद्यौ-' इति व्याख्यानावसरे 'ये-यत्प्रत्यये परतः' इत्याद्युपेक्षावशाद्व्याख्यातं कथञ्चित् सङ्गच्छते । नागेशभट्टचरणैरपि उपेक्षावशादेव 'ननु कादिलोपे-' इत्यादिव्याख्यानेन तत्समुपबृंहितं सङ्गच्छत इति सुधीभिरेतद्विचारणीयम् ॥ 'तथाऽद्यौ' इति छ. पाठः । 'तथाऽद्यौ यत्यथर्वसु' इति छ. निर्दिष्टः पाठः ॥

**(प्रदीपः) अद्याविति ।** अनुत्तरपद इत्यर्थः । **ये**—यत्प्रत्यये परतः, **अन्ति**-इति कृतकादिलोपोऽन्तिकशब्दो गृह्यते-अथर्ववेदे । अन्तिके भव इति 'भवे छन्दसि'इति यति कृते 'अन्तियः' इति भवति । कादिलोपस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वात् 'यस्य-'इति लोपो न भवति ॥

**( उद्योतः )** ननु कादिलोपे 'यस्य-'इति लोपे 'अन्तियः' इत्यसङ्गतमत आह—**कादिलोपस्येति** ॥

---

( १३२३ विधिसूत्रम् ॥ ६ । ४ । ४ आ. १२ )

## ३१५१ बिल्वकादिभ्यश्छस्य लुक्

## ॥ ६ । ४ । १५३ ॥

( छग्रहणप्रत्याख्यानभाष्यम् )

**छग्रहणं शक्यमकर्तुम्[1] ।**

**इह कस्मान्न भवति-बिल्वकेभ्यः ?**

**भस्येति वर्तते ॥**

**एवमपि बिल्वकायेत्यत्र प्राप्नोति ।**

**तद्धितस्येति वर्तते ॥**

**एवमपि बिल्वकस्य विकारः-अवयवो वा-बैल्वकः, अत्र प्राप्नोति ।**

**'तद्धिते' 'तद्धितस्य'इति वर्तते ॥**

**एवमपि बिल्वकीयायां भवो बैल्वकः, बैल्वकस्य किञ्चित्-बैल्वकीयम्, अत्र प्राप्नोति ।**

**न स बिल्वकात् ।**

**बिल्वकादिभ्यो यो विहित इत्युच्यते, न चासौ बिल्वकशब्दाद्विहितः ।**

**किं तर्हि ?**

**बिल्वकीयशब्दात् ॥**

**(प्रदीपः) छग्रहणमिति ।** कृतकुगागमस्य निर्देशाच्छ एव ग्रहीष्यत इति भावः ॥

**बिल्वकेभ्य इति ।** बिल्वशब्दादल्पादावर्थे कप्रत्ययः, असति छग्रहणे कुगागमनिर्देश एव न निश्चीयेतेति कप्रत्ययान्तादपि परस्य भ्यसो लुक्प्रसङ्गः ॥

**भस्येति वर्तते इति ।** तत्रार्थाद्विभक्तिविपरिणामे सति भसंज्ञकेभ्यः परस्य लुग् भवति ॥

**बैल्वक इति ।** 'अनुदात्तादेश्च' इत्यञ् ॥ **तद्धित इति ।** 'नस्तद्धिते' इत्यतः 'तद्धिते' इति वर्तते । तेन बिल्वकादिभ्यो भसंज्ञकेभ्यः परस्य तद्धितस्य तद्धिते परतो लुग्भवतीति सूत्रार्थः सम्पद्यते ॥

**एवमपीति ।** बिल्वा विद्यन्तेऽस्यामिति 'उत्करादिभ्यश्छः', 'नडादीनां कुक् च' इति छः कुगागमश्च । ततः 'तत्र भवः' इत्यण् । तस्मिन् परतश्छस्य लुक् । ततो वृद्धाच्छः । असति छग्रहणे छे परतोऽणो लुक्प्रसङ्गः । ततश्च 'न लुमताङ्गस्य'इति प्रत्ययलक्षणप्रतिषेधाद्वृद्ध्यभावे रूपं न सिध्येत् ॥

**न स बिल्वकादिति ।** विहित इति शेषः ॥

**बिल्वकादिभ्यो यो विहित इति ।** 'बिल्वकादिभ्यः' इत्यागन्तुनाऽकारेण[2] कृतकुगागमनिर्देशः । तेनायमर्थः—भाविकुगागमेभ्यो बिल्वादिभ्यो यो विहितः प्रत्ययस्तस्य तद्धिते लुक् भवति । न च छादन्यो भाविकुगागमेभ्यो बिल्वादिभ्यः प्रत्ययो विधीयते इति नार्थश्छग्रहणेन ॥

**( उद्योतः ) कृतकुगिति ।** नडायन्तर्गणबिल्वादयः कृतकुकोऽत्र गृह्यन्त इति ततः परश्छ एव संभवतीति भावः ॥

ननु कृतकुगागमनिर्देशे कथं 'बिल्वकेभ्यः' इत्यत्र प्राप्तिरत आह—**असतीति** ॥

नन्वनुवर्तमानमपि 'भस्य'इति अन्वयायोग्यमत आह—**तत्रार्थादिति** ॥

**अनुदात्तादेश्चेति ।** अपवादत्वेन कोपधत्वादणिति[3] वक्तुमुचितम् ॥ **तद्धितस्येति ।** 'हलस्तद्धितस्य'इत्यतस्तदनुवृत्तेरिति भावः ॥

नन्वणो लुका लोपेन वा निवृत्तौ विशेषाभावोऽत आह—**ततश्चेति ।** ब्याश्रयत्वाच्च पूर्वलुको नासिद्धत्वम् ॥

ननु कप्रत्ययान्तबिल्वकप्रकृतिकविकाराद्यर्थकाणन्तबैल्वकशब्दादिदमर्थे छे बैल्वकीय इत्यादौ लुक् स्यात्, तस्माणो बिल्वकाद्विहितत्वादत आह—**कृतकुगागमेति ।** गणपाठस्य शीघ्रोपस्थितिकत्वेन तेषामेव ग्रहात् । न हि कान्तानां क्वचित्पाठोऽस्ति । गणपाठसत्त्वेनैव च प्रकारवाचिता नादिशब्दस्येति भावः ॥

**भाविकुगागमेभ्य इति ।** कुक्संनियोगेन प्रत्ययविधानादिति भावः ॥

( ज्ञापनेन छग्रहणप्रयोजनसाधकभाष्यम् )

**एवं तर्हि सिद्धे सति यच्छग्रहणं करोति तज्ज्ञापयत्याचार्यः-भवत्येषा परिभाषा सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभाव इति । तस्माच्छग्रहणं कर्तव्यम्, छस्यैव लुग्यथा स्यात् कुको मा भूदिति ॥**

**( प्रदीपः ) एवं तर्हीति[4] ।** छग्रहणं छमात्रस्य लुग्यथा स्यात् कुगागमो मा निवृतदित्येवमर्थं क्रियते । यदि चैषा

---

[1] शक्यमकर्तुमिति । नडाद्यन्तर्गता बिल्वादयः कृतकुगागमा उच्चारणार्थाकारसहिताः सूत्रे निर्दिष्टाः, व्याख्यानात् कान्तगणपाठाभावाच्च । तेभ्यः परस्य छस्यैव सम्भव इति प्रश्नः ॥

[2] आगन्तुनाऽकारेणेति । अकारोच्चारणाभावे तत्र जश्त्वं स्यादिति भावः ॥

[3] कोपधत्वादिति । कोपधाच्च ( ४।३।१३७ ) इत्यनेन ॥

[4] अ. पुस्तके 'एवं तर्हीति' इति प्रतीकं न, किन्तु 'एवं तर्हि छग्रहणं-' इति 'नार्थश्छग्रहणेन' इति पूर्वप्रदीपस्योत्तररूपो ग्रन्थो दृश्यते ॥

परिभाषा न स्यात्तदा कुको नैव निवृत्तिः प्राप्नोतीति किं तदभावार्थेन छग्रहणेन । क्वचित्त्वेषा परिभाषा नाश्रीयते । यथा श्यैनेय इत्यादौ 'यस्य-'इति लोपेन निवृत्तेऽपीकारे तत्सन्नियुक्तो नकारो न निवर्तते । तथा च 'स्त्रियाः पुंवत्-'इत्यत्रोक्तम्-एतभार्य इत्यत्र पुंवद्भावेन स्त्रीप्रत्ययमात्रस्य निवृत्तिः क्रियते, अर्थस्य त्वनिवृत्तत्वान्नकारस्य श्रवणं प्रसज्येत-इति । तथा च 'श्रोत्रियस्य घलोपश्च'इति घे विनिवृत्तेऽपि श्रोत्रभावो न निवर्तत इति तत्रानित्या परिभाषेति प्रतिविधेयम् ॥

( उद्द्योतः ) छग्रहणेनेति । न च ज्ञापितेऽपि कथं चारितार्थ्यं कुग्विशिष्टानुवादसामर्थ्येनैव तदनिवृत्तेः । अन्यथा 'बिल्वादिभ्यः' इत्येव वदेत् । बिल्वादय एव हि नडादौ पठिताः । न च बिल्वादिभ्यो भवाद्यर्थाणादीनामपि लुगापत्तिः, लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारविहितप्रत्ययस्यैव लुग्विधानात्-इति **वाच्यम्** । ततोऽपि प्रतिपदोक्तत्वेन 'बिल्वादिभ्योऽण्'इति विकारार्थस्य लुगापत्तिवारणार्थं तत्सार्थक्यादिति भाष्याशयात् ॥ **नकारो न निवर्तत इति** । 'अचः परस्मिन्-'इति स्थानिवत्त्वेनैव सिद्धेरिदं **चिन्त्यम्** । 'श्रोत्रियस्य-' इत्यादि त्वनित्यत्वफलमेव ॥

( १३२४ लोपविधिसूत्रम् ॥ ६ । ४ । ४ आ. १३ )

## ३१५२ तुरिष्ठेमेयःसु ॥ ६ । ४ । १५४ ॥

( वार्तिकावतरणभाष्यम् )

**तुः सर्वस्य लोपो वक्तव्यः, अन्त्यस्य मा भूदिति । स तर्हि वक्तव्यः ?**

**न वक्तव्यः ॥**

( प्रदीपः ) **तुः सर्वस्येति** । सर्वस्य तृशब्दस्य लोपो न तु 'अलोऽन्त्यस्य' इत्यर्थः ॥

( ६६२६ उपसंख्यानसाधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ [2]सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् ॥ * ॥

**( भाष्यम् ) तुः सर्वलोपो विज्ञायते ।**

**कुतः ?**

**अन्त्यस्य वचनानर्थक्यात् । अन्त्यस्य लोपवचने प्रयोजनं नास्तीति कृत्वा सर्वस्य भविष्यति ॥**

**अथवा—**

**लुक् प्रकृतः सोऽनुवर्तिष्यते ॥**

**अशक्यो लुगनुवर्तयितुम् ।**

**किं कारणम् ?**

**विजयिष्ठकरिष्ठयोर्गुणदर्शनात् । विजयिष्ठकरिष्ठयोर्गुणो दृश्यते । विजयिष्ठः । आसुतिङ्करिष्ठः ॥**

( प्रदीपः ) **अन्त्यस्य लोपवचन इति** । 'टेः'इत्येवान्तलोपस्य सिद्धत्वात् ॥

**विजयिष्ठेति** । विजेतृशब्दात् 'तुश्छन्दसि'इतीष्ठन् प्रत्ययः । तस्य लुकि सति 'न लुमताङ्गस्य'इति प्रत्ययलक्षणप्रतिषेधात् गुणो न स्यात् । पूर्वं तु गुणो न प्रवर्तते, अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति वचनात् ॥ **करिष्ठ इति** । तृन्नन्तादिष्ठन् प्रत्ययः ॥

( उद्द्योतः ) प्रयोजनाभावं दर्शयति—**टेरित्येवेति** ॥ '[3]आसुतिं'इति द्वितीयादर्शनादाह—**तृन्नन्तादिति** । एवं च 'न लोका-'इति निषेधात्षष्ठ्यभाव इति भावः ॥

( १३२५ विधिसूत्रम् ॥ ६ । ४ । ४ आ. १४ )

## ३१५३ टेः ॥ ६ । ४ । १५५ ॥

( ६६२७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ णाविष्ठवत्प्रातिपदिकस्य ॥ * ॥

**( भाष्यम् ) णौ प्रातिपदिकस्येष्ठवद्भावो वक्तव्यः ।**

**किं प्रयोजनम् ?**

( प्रदीपः ) **णाविति** । [4]प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो मा भूदित्येवमर्थम् । तेन बहून्याचष्टे भावयतीति णिचो यिण्न भ[5]वति । तदभावे भूभावेनापि न भवितव्यम्, सन्नियोगशिष्टत्वात्-इति बहयतीति भवितव्यमिति केचित् ॥

( उद्द्योतः ) **इत्येवमर्थमिति** । इदमुपलक्षणम् । तेन चकासादिभ्यो हेतुमण्णावेतदप्रवृत्तिरपि तत्फलम् । एतेन णावित्युपमेये सप्तमीदर्शनेनेष्ठवदित्यत्रापि सप्तम्यन्ताद्वतिसत्त्वेनेष्ठनि पूर्वकार्यस्यैवातिदेशेन सिद्धे प्रातिपदिकग्रहणं व्यर्थमित्यपास्तम् ॥ **भावयतीति** । न च संनियोगशिष्टन्यायाद्भूभावो दुर्लभः । '-भू च बहोः'इत्यत्र पुनर्बहुग्रहणसामर्थ्येन संनियोगशिष्टत्वाभावात् । प्रत्ययादेशत्वभ्रमस्तु व्याख्यानात्सुपरिहर इत्याशयः । इदमेव केचिदित्यत्रारुचिबीजम् ॥

( ६६२८ उपसंख्यानप्रयोजनवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पुंवद्भावरभावटिलोपयणादिपरार्थम् ॥ * ॥

**( भाष्यम् ) पुंवद्भावार्थम्-एनीमाचष्टे-एतयति, श्येतयति ।**

---

१ तदभावार्थेन-कुक्निवृत्त्यभावार्थेन ॥

२ ननु 'बिल्वकादिभ्यश्छस्य लुक्' इत्यतो लुक्पदानुवर्तनात्सर्वादेशत्वं सिध्यतीति वचनानर्थक्यकथनमयुक्तमिति चेन्न; तत्सूत्रस्थलुक्पदस्यास्वरितत्वात् ॥

३ तृन्नन्तादिष्ठन् प्रत्यय इत्यर्थे प्रमाणमाह—आसुतिमितीति । न तु तृजन्तादिष्ठन्, तृचि सति षष्ठी स्यात् ॥

४ प्रातिपदिकेति । णाविष्ठवदित्येवोक्ते णेरेवेष्ठवद्भावः स्यात्तथा च बहून्याचष्ट इत्यादौ णिचो यिटः प्राप्तिः ॥

५ 'भवतीति' इति ङ. पाठः ॥

**रभावार्थम्-पृथुमाचष्टे-प्रथयति, म्रदयति।**
**टिलोपः-पटुमाचष्टे-पटयति।**
**यणादिपरार्थम्-दूरमाचष्टे-दवयति।**
**किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम्?**
**उदाहरणमात्रमित्याह। प्रादयोऽपि हीष्यन्ते-प्रियमाचष्टे प्रापयति-इति॥**

(प्रदीपः) **एतयतीति**। तसिलादित्वादिष्ठे पुंवद्भावो विहित इति णावपि भवति। टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्वचनं सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम्। तेन श्यैनेय इत्यादि सिद्धं भवति॥

(उद्द्योतः) 'एतयति'इत्यत्र पुंवत्त्वे आभीयासिद्धत्वान्नित्यत्वाट्टिलोपो भवत्येव। अन्यथा वृद्धौ पुकि एतापयतीत्यापत्तिः॥ **तसिलादित्वादिति**। 'भस्याढे' इति तत्रोक्तेरिति भावः॥ **तेन श्यैनेय इति**। इदं चिन्त्यमिति 'बिल्वकादिभ्यः' इति सूत्रे निरूपितम्। किंच ज्ञापकमप्यसङ्गतम्, दरदमाचष्टे दारदयतीत्याद्यर्थं पुंवद्भावस्यावश्यकत्वात्॥

(मतान्तरप्रदर्शकभाष्यम्)

**भारद्वाजीयाः पठन्ति—'णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थम्' इति॥**

(प्रदीपः) **विन्मतोरिति**। स्रग्विणमाचष्टे स्रजयति। 'अङ्गवृत्ते' इति वृद्धिरत्र न भवति। यत्र त्वनिष्ठितमङ्गं तत्र वृद्धिर्भवत्येव-प्रापयति, स्थापयतीति। युवानमाचष्टेऽल्पमाचष्टे-कनयति॥

(उद्द्योतः) स्रक्शब्दात् 'अस्मायामेधा-'इति विनिः। णिच्। विन्मतोर्लुक्॥ ननु 'अत उपधायाः'इति वृद्धिः प्राप्नोतीत्यत आह—**अङ्गवृत्तेति**। अत एव 'वृक्षव्करोति'इत्याद्यष्टमिकभाष्यप्रयोगः सङ्गच्छते॥ **यत्र त्वनिष्ठितमिति**। तस्या अनित्यत्वात्क्वचिदप्रवृत्तिरिति भावः। **परे तु** लक्ष्यविशेषे लक्ष्यानुरोधाद्भाष्यानुरोधाच्चेष्ठवदित्यभाषातिदेशोऽपि। तेन 'दवयति'इत्यादौ वृद्धिर्न, प्रापयतौ च भवत्येव। एवं चाङ्गवृत्त इत्यस्य लक्ष्यासाधकत्वम्। अत एव भाष्ये सिद्धान्ते तत्परिभाषाज्ञापनोत्तरं 'पिवेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यः' इत्येव प्रयोजनमुक्तं, न तु दवयतीत्यादिसिद्धिरितीदं **चिन्त्यमित्याहुः**। प्रापयतौ वृद्धौ पुक्। 'युवाल्पयोः-'इति कन्। उदाहरणमात्रत्वादेव भसंज्ञाप्रकृतिभावादीनामप्यतिदेशः। उदाहरणत्व एव भारद्वाजीयवचउपष्टम्भकं, न तु तदपि परिगणनमिति बोध्यम्। तत्र प्रातिपदिकाण्णिच्यपि स्रग्विणं स्रजयतीत्याद्यर्थं भत्वमावश्यकमिति बोध्यम्॥

(१३२६ विधिसूत्रम्॥ ६।४।४ आ. १५)

## ३१५७ इष्ठस्य यिट् च॥ ६।४।१५९॥

(यिशब्दे प्रकारद्वयदर्शकं भाष्यम्)

**किमयं यिशब्द आहोस्विद्यकारः?**
**किञ्चातः?**
**यदि लोपोऽप्यनुवर्तते, ततो यिशब्दः। अथ निवृत्तं, ततो यकारः॥**

(प्रदीपः) **किमयमिति**। किमिकारान्तः समुदाय आगमोऽथ यकारमात्रमिकारस्तूच्चारणार्थ इति **प्रश्नः**॥ **किञ्चात इति**। उभयथा दोषाभाव इत्यर्थः॥ तत्प्रतिपादयति—**यदीति**॥

(उद्द्योतः) 'किंचातः' इत्यस्य सर्वत्र यादृगर्थस्तादृगत्र नेत्याह—**उभयथेति**। लोपानुवृत्तावयमर्थः-'बहोः परस्येष्ठस्य लोपो यिडागमश्च'इति। अत्रान्त्यः पक्षो युक्तः, प्रक्रियालाघवात्॥

(१३२७ विधिसूत्रम्॥ ६।४।४ आ. १६)

## ३१५८ ज्यादादीयसः॥ ६।४।१६०॥

(लोपानुवर्तनाभावेन परिभाषाज्ञापकभाष्यम्)

**किमर्थं ज्यात्परस्येयस आत्वमुच्यते, न लोपः प्रकृतः सोऽनुवर्तते?**
**का रूपसिद्धिः?**
**ज्यायान्। अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घत्वं भविष्यति।**
**एवं तर्हि सिद्धे सति यत् ज्यात्परस्येयस आत्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा-अङ्गवृत्ते पुनर्वृत्तावविधिरिति॥**

(प्रदीपः) ज्यात्परस्येयसः 'आदेः परस्य'इत्याकारः क्रियते, तत्रोच्यते—**किमर्थमिति**॥

**अकृद्यकार इति**। क्ङितीति तत्र नानुवर्तत इति भावः। उरुयेत्यादौ छान्दसत्वाद्दीर्घाभावः॥

**अङ्गवृत्त इति**। अङ्गे **वृत्तं**-निष्पन्नं यत्कार्यं तस्मिन् सति पुनरन्यस्याङ्गकार्यस्य प्रवृत्तावविधानं भवति। 'ज्ञाजनोर्जा'इत्यत्रापीयं परिभाषा ज्ञापिता। तत्रास्मिन् स्थिते ज्ञापके 'जा' इत्यादेशविधानं दीर्घश्रवणार्थम्। तस्मिंश्च ज्ञापके सति ज्यायानिति सिद्ध्यर्थमाद्वचनम्। अन्यथाऽऽदिलोपे कृते परिभाषावशाद्दीर्घो न स्यात्॥

(उद्द्योतः) ननु 'अकृत्-'इत्यत्र क्ङितीत्यननुवृत्तावुरुयेत्यादौ 'टा' इत्यस्य याटि दीर्घः स्यादत आह—**उरुयेत्यादाविति**॥ **अङ्ग इति**। अङ्गाधिकार इत्यर्थः॥

---

[१] दरदमाचष्ट इति। दरदोऽपत्यं स्त्रीत्यर्थविवक्षायां 'अतश्च' इति अण्प्रत्ययस्य लुकि तस्माण्णिचि पुंवद्भावे तद्धितान्तत्वाद्वृद्धिरिति दारदयतीति सिद्धम्॥

[२] प्रापयतीति। प्रियमाचष्टे, प्रियस्थिरेति सूत्रेण प्रादेशे पुकि वृद्धौ रूपम्। तथा स्थिरमाचष्टे स्थापयतीति॥

[३] 'प्राप्नोतीत्यतः-अङ्गवृत्तेति' इति ज. ध. पुस्तकयोर्ग्रन्थः॥

[४] उदाहरणमात्रत्वादेवेति। भाष्ये हि 'नैतत्परिगणनं किन्तूदाहरणमात्रमित्याह' इत्युक्तत्वात् भसंज्ञादीनामप्यतिदेशे भाष्यतात्पर्यमित्याशयः॥

( ज्ञापकफलभाष्यम् )

किमेतस्य ज्ञापने प्रयोजनम् ?

पिबेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति ॥

( प्रदीपः ) पिबेरिति । पाघ्रादिसूत्रेण यदा पिबादेशो हलन्तः क्रियते तदा गुणप्रसङ्गः । यदा त्वदन्तस्तदा गुणप्राप्त्यभावः ॥

( आत्वकरणेन परिभाषाज्ञापकभाष्यम् )

अथ किमर्थं ज्यात्परस्येयसो दीर्घ उच्यते, न अकार एवोच्येत ?

का रूपसिद्धिः ?

ज्यायान् । आन्तर्यतो दीर्घस्य दीर्घो भविष्यति ।

एवं तर्हि सिद्धे सति यद्दीर्घग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा-भाव्यमानेन सवर्णानां ग्रहणं नेति ॥

( उद्योतः ) भाष्ये—न अकार एवेति । 'ज्याद ईयसः' इति सूत्रं पाठ्यमिति भावः । इयं शङ्का न 'अणुदित्-' सूत्रमादाय, सूत्रशेषेण विरोधात् । किंच तथा सति उक्तमित्येव वदेन्न तु 'एतज्ज्ञापयति'इति । तस्माज्जातिपक्षाश्रयेणेयं शङ्का । उत्तरं तु स्पष्टमेव-जातिपक्षेऽपि भाव्यमानविषयो नेति ॥

( १३२८ विधिसूत्रम् ॥ ६ । ४ । ४ आ. १७ )

## ३१५९ र ऋतो हलादेर्लघोः

## ॥ ६ । ४ । १६१ ॥

( अन्वयजिज्ञासाभाष्यम् )

कथमिदं विज्ञायते—हलादेरङ्गस्येति, आहोस्विद्धलादेर्ऋकारस्येति ?

युक्तं पुनरिदं विचारयितुम् ॥

( प्रदीपः ) कथमिदमिति । इहाङ्गस्येति प्रकृतम्, ऋत इति च श्रुतम् । तत्र विशेषणविशेष्यभावे कामचारात्प्रश्नः ॥

युक्तं पुनरिति । 'धात्वादेः'इत्यादाववयववाचिन आदिशब्दस्य दर्शनादवयव्यपेक्षत्वाच्चावयवस्यावयवान्तरेण सम्बन्धाभावादिति भावः ॥

( उद्योतः ) तत्रेति । आदिशब्दस्य प्रसिद्धावयवार्थपरिग्रहे प्रकृतविशेषणत्वम्, अप्रसिद्धपूर्ववृत्तिसमीपार्थपरिग्रहे श्रुतविशेषणत्वमिति भावः ॥

अवयववाचिन इति । प्रथमावयववाचिन इत्यर्थः ॥

( अङ्गविशेषणपक्षोपस्थापकभाष्यम् )

नन्वनेनासन्दिग्धेनाङ्गविशेषणेन भवितव्यम् ।

कथं[1] ऋकारस्य नाम हल् आदिः स्यात्-अन्यस्यान्यः ?

( प्रदीपः ) अन्यस्यान्य इति । अत्यन्तभेदादसम्बन्धं[2] परस्परस्यावयवयोर्दर्शयति । यत्र भेदाभेदविवक्षा-'वृक्षाणां वनं' 'वृक्षा वनम्'इति तत्रावयवावयविभावः, नान्यत्रेत्यर्थः ॥

( उद्योतः ) नन्ववयवावयविनोरपि भेदात् 'अन्यस्यान्यः' इति हेतुरनैकान्तिकोऽत आह—अत्यन्तेति ॥ अवयवयोरिति । समुदायावयवयोर्हल्ऋकारयोः परस्परस्यासंबन्धमित्यन्वयः ॥ अवयवावयविनोस्तु नात्यन्तं भेद इत्याह—यत्रेति । न चैवं 'दिदीये' इत्यादौ युट एकारावयवत्वं न स्यात् । 'आद्यन्तौ'इति वचनेनावयवसदृशत्वबोधनेनावयवत्वप्रयुक्तकार्यबोधनाददोषः ॥

( पक्षद्वयसम्भावनासमर्थकभाष्यम् )

अयमादिशब्दोऽस्त्येवावयववाची । तद्यथा—ऋगादिः, अर्धर्चादिः, श्लोकादिरिति ।

अस्ति सामीप्ये वर्तते । तद्यथा—दधिभोजनमर्थसिद्धेरादिः, दधिभोजनसमीपे ।

घृतभोजनमारोग्यस्यादिः, घृतभोजनसमीपे । यावता सामीप्येऽपि वर्तते जायते विचारणा हलसमीपस्य ऋकारस्य-इति[3], अथवा हलादेरङ्गस्येति ॥

( प्रदीपः ) दधिभोजनमिति । यदृच्छोपनतं[4] दधिभोजनं कार्यसिद्धेः सूचकत्वात्समीपमित्यर्थः ॥

( उद्योतः ) ननु दधिभोजनानन्तरमर्थसिद्धिर्न दृश्यत इति कथमत आह—यदृच्छेति । 'कार्यारम्भे' इति शेषः ॥ भाष्ये—दधिभोजनसमीप इति । यतो दधिभोजनसमीपेऽर्थसिद्धिरतस्तदर्थसिद्धेरादिः, समीपमित्यर्थः । एवमन्यत्रापि[5] बोध्यम् ॥

( पक्षद्वयेऽपि दोषप्रदर्शकं भाष्यम् )

किञ्चातः ?

यदि विज्ञायते-हलादेरङ्गस्येति, अप्रथीयान्-अम्रदीयान्-अत्र न प्राप्नोति ।

अथ विज्ञायते-हलादेर्ऋकारस्येति, अनृचीयान्-अत्रापि प्राप्नोति ।

उभयथा स्रृचीयानित्यत्र प्राप्नोति ।

यथेच्छसि तथाऽस्तु ॥

(प्रदीपः) अप्रथीयानिति । अपृथुशब्दात् पृथुसदृशगुणवचनादीयसुन्प्रत्ययः ॥

अनृचीयानिति । न सन्त्यृचो येषां तेऽनृचा माणवकाः, ते सन्ति यस्मिन् देशे सः-अनृचवान्, तत ईयसुन्, 'विन्मतोः'इति मतुब्लुक् । अत्राङ्गं[6] हलादि न भवति । ऋकारस्तु हलादिरिति रादेशप्रसङ्गः ॥

स्रृचीयानिति । स्रग्वच्छब्दादीयसुन्, मतोर्लुक्[7] ॥

१ 'कथं ह्यकारस्य' इति छ. पाठः ॥

२ अत्यन्तेति । अवयवयोरत्यन्तभेदात्परस्परस्यासम्बन्धं दर्शयतीत्यन्वयः ॥

३ 'ऋकारस्य स्यात्, अथवा' इति च. छ. पाठः ॥

४ तत्-दधिभोजनम् ॥

५ अन्यत्रापि-घृतभोजनमित्यत्र । यतो घृतभोजनसमीप आरोग्यमतस्तत् आरोग्यस्यादिः समीपमिति ॥

६ 'तत्राङ्गं' इति ङ. पाठः ॥

७ 'मतुपो लुक्' इति अ. पाठः ॥

**यथेच्छसीति ।** वक्ष्यमाणपरिगणनादतिप्रसङ्गनिरासादिति भावः ॥

**( उद्योतः )** ननु नञ्समासस्य गुणवचनत्वाभावात्कथमीयसुन्? अत आह—**अपृथुशब्दादिति** ॥

**अनृचा इति ।** 'ऋक्पूर्-' इति समासान्तः । विन्मतोर्लुग्विधानादेवागुणवचनादपीयसुन् ॥

**स्रग्वच्छब्दादिति ।** 'न पूजनात्' इति समासान्तनिषेधः ॥

**( अङ्गविशेषणपक्षे दोषवारकभाष्यम् )**

**अस्तु तावत्-हलादेरङ्गस्येति ।**

**कथमप्रथीयान्-इति ?**

**तद्धितान्तेन समासो भविष्यति । न प्रथीयान् अप्रथीयानिति ।**

**भवेत्सिद्धं यदा तद्धितान्तेन समासः ।**

**यदा तु खलु समासात्तद्धितोत्पत्तिस्तदा न सिध्यति ।**

**न[1] वै समासात्तद्धितोत्पत्त्या भवितव्यम् ।**

**किं कारणम् ?**

**बहुव्रीहिणोक्तार्थत्वान्मत्वर्थस्य ॥**

**( प्रदीपः ) न वै समासादिति ।** प्रकृताभिप्रायेणैतदुच्यते[2] । ईदृशात्समासादीदृशस्तद्धितो नोत्पद्यते । तथाहि—अपृथुशब्दस्तत्पुरुषो बहुव्रीहिर्वा गुणवचनो न भवतीति तत ईयसुन्न भवत्येव । अथ मत्वन्तादीयसुन उत्पत्तिः । तन्न, बहुव्रीहिणोक्तत्वान्मतुपोऽभावात् । नापि तत्पुरुषान्मतुबुत्पत्तिः, लाघवाद्बहुव्रीहेर्न्याय्यत्वात् ॥

**( उद्योतः )** ननु समासात्तद्धितोत्पत्तेर्बहुश उपलम्भात् 'नैव' इत्ययुक्तमत[3] आह—**प्रकृतेति** ॥ तदभिप्रायेण भाष्यं योजयति—**तथा हीति** ॥

**( अङ्गविशेषणपक्षे दोषभाष्यम् )**

**भवेद्यदा बहुव्रीहिस्तदा न स्यात् ।**

**यदा तु खलु तत्पुरुषस्तदा प्राप्नोति-न पृथुः-अपृथुः । अयमपृथुः, अयमप्यपृथुः, अयमनयोरतिशयेनापृथुः-अप्रथीयानिति ।**

**( प्रदीपः ) भवेद्यदेति ।** स ह्यन्यपदार्थप्रधानत्वात् गुणवचनो न भवति ॥

**यदा त्विति ।** यथा 'अब्राह्मणः' इति ब्राह्मणसदृशः क्षत्रियादिरुच्यते तथा 'अपृथुः' इति पृथुत्वसदृशगुणान्तरयुक्तोऽभिधीयते ॥

**( दोषवारकभाष्यम् )**

**न समासादजादिभ्यां[4] भवितव्यम् ।**

**किं कारणम् ?**

**गुणवचनादित्युच्यते, न च समासो गुणवचन इति ॥**

**( प्रदीपः ) न च समास इति ।** गुणमुक्तवान्-गुणवचनः । यः शब्दो गुणमभिधाय गुणोपसर्जने द्रव्ये वर्तते तस्मादजादिभ्यां भाव्यम् । न च समासः केवले गुणे कदाचित्प्रयुज्यते, नित्यं द्रव्यवाचित्वात् । **अथवा**—अपृथुशब्दः पृथुत्वसदृशगुणवाचित्वेऽपि विशिष्टगुणवचनो न भवति पृथुशब्दवत् ॥

**( उद्योतः ) गुणमुक्तवानिति ।** बाहुलकात्कर्तरि भूते ल्युट् ॥ ननु पृथुशब्दोऽपि सदा गुणिवचनः, न कदाचिदपि शुक्लादिवद्गुणवचन इति ततोऽप्युत्पत्तिरेवं सति न स्यादत आह—**अथवेति ।** येषां विशेषरूपेण गुणः प्रवृत्तिनिमित्तं ते गुणवचना इत्यभिमानः । वस्तुतः–आकडारसूत्रोक्तरीत्या[5] समाससंज्ञया गुणवचनसंज्ञाया बाधाभिप्रायेणेदं भाष्यं व्याख्येयम् ॥

**( प्रकारान्तरप्राप्तदोषवारकभाष्यम् )**

**यदा तर्हि समासाद्विन्मतुपौ, विन्मतुबन्तादजादी तदा प्राप्नुतः । अविद्यमानाः पृथवोऽपृथवः, अपृथवोऽस्य सन्ति-अपृथुमान् । अयमपृथुमान्, अयमप्यपृथुमान् । अयमनयोरतिशयेनापृथुमान्-अप्रथीयानिति ।**

**नैष दोषः । अपृथव एव न सन्ति, कुतो यस्यापृथव इति ॥**

**( प्रदीपः ) अपृथव एव न सन्तीति ।** मतुपः प्रकृतय इति शेषः । समानेऽर्थे बहुव्रीहिणा भाव्यं न तु मत्वर्थीयार्थेन तत्पुरुषेण । भिन्नार्थत्वे तु भाव्यमेव-'गौरखरवदरण्यं' 'कृष्णसर्पवान् वल्मीकः' इति । अत्र हि जातिविशेषेण तद्वत्ता प्रतिपिपादयिषिता नान्तरेण तत्पुरुषं मत्वर्थीयार्थं बहुव्रीहिमात्रेण प्रतिपादयितुं शक्यते ।

**अन्ये त्वाहुः**—अविद्यमाना ये पृथवस्ते सन्तीति विरोधादस्त्युपाधिकत्वाभावान्मतुप् न भवतीति । एतदपरे न क्षमन्ते । पृथुत्वगुणरहिताः स्वरूपेण विद्यमानाः पृथव एवापृथव उच्यन्त इति कथं सत्वोपाधिकत्वं न स्यात्? ननु च यथाऽनृचीयानित्यत्र बहुव्रीह्यर्थेन तद्वत्ताविवक्षायां मत्वन्तादीयसुन् भवति तथाऽपृथुशब्दादपि मतुपा, तदन्ताच्च ईयसुना भाव्यम् । एवं तर्ह्यनभिधानात् बहुव्रीहेः कुतश्चिन्मतुपा

---

१ 'नैव समासात्' इति छ. पुस्तक एव पाठः । अन्येषूपलब्धपुस्तकेषु सर्वेषु 'न वै' इति पाठदर्शनात्स एवात्र स्थापितः ॥

२ 'प्रायेणेदमुच्यते' इति ङ. पाठः ॥

३ 'उपलम्भान्नैवेत्ययुक्तं' इति पाठः सर्वपुस्तकेषु दृश्यते, तादृशश्च भाष्यं छ. पुस्तक एवोपलभ्यते । सर्वपुस्तकेषु एकविधपाठदर्शनात्स एवात्र गृहीतः । तेन भाष्ये 'न वै' इति पाठः, उद्योते च 'नैव' इति विरुद्धमिव प्रतिभाति । तदेतत्–असत्सविधे संगृहीतेषु प्रामाणिकप्राचीनभाष्यपुस्तकेषु तथोपलम्भात् प्रामाणिकोद्द्योतपुस्तकेषु च तादृशपाठदर्शनात्क्षन्तव्यं सुधीभिरित्येव ॥

४ अजादिभ्यां- इष्ठन्नीयसुन्प्रत्ययाभ्याम् ॥

५ सूत्रोक्तरीत्येति । तत्र हि सूत्रे भाष्ये 'गुणवचनश्च' इति प्रातिपदिकस्य गुणवचनसञ्ज्ञां विधाय ततः समासकृत्तद्धिताव्ययसर्वनामादिसंज्ञा उक्ताः । गुणवचनसंज्ञायाश्चैताभिः संज्ञाभिर्बाध उक्तः । तथा च भाष्यकृन्मते समासकृत्तद्धिताव्ययसर्वनामाद्यतिरिक्तानामेव गुणवचनसञ्ज्ञा न त्वेषामिति अपृथुशब्दस्य समासत्वाद्गुणवचनसंज्ञा न भवतीति 'न च समासो गुणवचनः' इति भाष्यस्याशयः । एवश्च समासाद्यतिरिक्तशब्दत्वं गुणवचनत्वमत्र शास्त्र इति निष्कर्षः ॥

न भवितव्यमिति मन्यते । तदेवमप्रथीयानिति तद्धितान्तेन समास इति स्थितम् ॥

( उद्योतः ) 'अपृथव एव न सन्ति'इति भाष्यमपि प्रकृताभिप्रायेणेत्याह—**मतुप इति** ॥ तदुपपादयति—**समाने इति** ॥ गौरखरादिशब्दा जातिविशेषवचना न तु यौगिका इत्याह—**अत्र हीति** । मत्वर्थीयार्थ-मत्वर्थीयफलकम् । 'शक्यते' इत्यस्य 'जातिविशेषवत्त्वा'इति शेषः ॥

**पृथव एवेति** । आरोपितपृथुत्ववन्त एवेत्यर्थः ॥ **तथाऽपृथुशब्दादपीति** । माणवादिपरबहुव्रीहेरित्यर्थः ॥ **कुतश्चिन्मतुपेति** । क्वचिद्बहुव्रीहिणा न भाव्यमिति वक्तुमुचितम्, 'अपृथव एव न सन्ति'इति भाष्यात् ॥

( सिद्धान्तपक्षस्थापकभाष्यम् )

**इह कस्मान्न भवति-मातयति, भ्रातयति ।**

**लोपोऽत्र बाधको भविष्यति ।**

**इदमिह सम्प्रधार्यम्-लोपः क्रियतां रभाव इति, किमत्र कर्तव्यम् ?**

**परत्वाद्रभावः ॥**

**यदि पुनरवशिष्टस्य रभाव उच्यते ।**

**नैवं शक्यम्, इहापि प्रसज्येत-कृतमाचष्टे कृतयति ।**

**एवं तर्हि परिगणनं क्रियते-**

**पृथुमृदुभृशकृशदृढपरिवृढानामिति वक्तव्यम् ॥**

( प्रदीपः ) स्रचीयानित्येतस्यापि परिहाराय चोद्यमुपन्यस्यति—**इह कस्मादिति** ॥ **मातयतीति** । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति पक्षाश्रयणात् 'तुरिष्ठेमेयस्सु' इतीष्ठवद्भावात्तृशब्दस्य लोपाभावः ॥

**यदि पुनरिति** । टिलोपोऽप्यनुवर्तते, ततश्चान्त्यस्य[2] तृशब्दस्य टिलोपोऽनन्त्यस्य तु रभाव इति मातयतीत्यादौ रादेशाभावः ॥

**कृतयतीति** । अत्रानन्त्यऋकारोऽस्तीति रभावप्रसङ्गः । एवं स्रचीयानित्यत्रापि ॥

**एवं तर्हीति** । परिगणने च सति 'हलादेर्लघोः' इति न कर्तव्यम्[1] ॥

( उद्योतः ) ननु मातयतीत्यत्र 'तुरिष्ठेमेयःसु'इति प्राप्नोतीत्यत आह—**उणादय इति** ॥

ननु लोपं बाधित्वा रभावप्रवृत्तेरुक्तत्वात्कथमवशिष्टस्य रभाव आशङ्क्यतेऽत आह—**टिलोपोऽपीति** । ऋकाररूपायाष्टेर्लोपो भवतीत्युक्ते सामर्थ्यादनन्त्यस्य ऋभावः[3] फलतीति भावः । 'तृशब्दस्यान्त्यस्य टिलोपः' इत्यन्वयः, तस्यैव टित्वात्-इति भावः ॥ **मातयतीत्यादाविति** । अनन्त्यऋकारस्याभावादित्यर्थः ॥

**न कर्तव्यमिति** । ऋजिष्ठकृष्णिष्ठादौ[4] प्रसङ्गाभावादिति भावः ॥

( १३२९ विधिसूत्रम् ॥ ६ । ४ । ४ आ. १८ )

## ३१६१ प्रकृत्यैकाच् ॥ ६ । ४ । १६३ ॥

( प्रकृतिभावाधिकरणम् )

( विषयनिर्धारणोपक्रमभाष्यम् )

**प्रकृत्यैकाजिति किमिष्ठेमेयस्सु, आहोस्विदविशेषेण ?**

**किञ्चातः ?**

( प्रदीपः ) **किमिष्ठेमेयःस्विति** । किं प्रत्यासत्त्याश्रयेणेष्ठेमेयसोऽपेक्ष्यन्ते, अथ व्याप्त्याश्रयेण तद्धित इति **प्रश्नः** ॥

( उद्योतः ) **तद्धित इति** । 'नस्तद्धिते' इत्यतस्तदनुवृत्तेरिति भावः ॥

( 'अविशेषेण'इति पक्षे दोषवारकभाष्यम् )

**यद्यविशेषेण; स्वी, खी, शौवम्, अधुना-अत्रापि प्राप्नोति ।**

**स्विखिनावेव न स्तः ।**

**कथम् ?**

**उक्तमेतत्—**

**'एकाक्षरात्कृतो जातेः**
**सप्तम्यां च न तौ स्मृतौ ।'[5]**

**स्ववान्, खवानित्येव भवितव्यम् ।**

---

१ 'गणनं कर्तव्यम्-' इति छ. पाठः ॥

२ 'न्त्यस्य ऋशब्दस्य' इति ड. झ. पाठः, स च प्रामादिक इति 'तृशब्दस्यान्त्यस्य टिलोप इत्यन्वयः' इत्युद्योतदर्शनादवसीयते ॥

३ 'रभावः' इति झ. ढ. पाठः स प्रामादिकः । अत्र सूत्रेऽनन्त्यस्येत्याद्यसत्त्वेन अन्त्यऋकारघटितमातृशब्दस्यापि रभावः प्राप्नोतीत्याशङ्क्य तद्वारणार्थं 'यदि पुनरवशिष्टस्य रभावः' इति पक्षो भाष्यकृतोपस्थापितः । तत्पक्षे हि अन्त्यस्य टिसंज्ञकस्य लोपोऽनेन विधेयः, ऋकारस्य रभावश्च करणीय इति अनन्त्य एव ऋकारो रभावस्य स्थानी सम्भवतीति मातृशब्दे न रभावप्राप्तिः, अनन्त्यऋकाराभावात् । तदेतत्साधयति—अनन्त्यस्य ऋभाव इति । अन्त्यस्य टिसंज्ञकस्य लोप इत्युक्ते अनन्त्यस्य ऋत्वम्फलतीत्यर्थः । 'ऋभावः' इत्येव पाठोऽस्माभिरुपलब्धपुस्तकेषु ख. ग. घ. ज. ड. पुस्तकेषु दृश्यते । तत्र ग. ज. ड. पुस्तकानि नितराम्प्रामाणिकानि इत्यत्र संशयलेशोऽपि न । फलतीत्यंशस्तु 'अनन्त्यस्य ऋत्वं' इत्यत्रैव स्वारस्येन संगच्छते । तदेव सामर्थ्यात्फलति, न तु रभावः फलति, तस्य सूत्रप्राप्तत्वात् । 'रभावः' इति पाठस्तु—अनन्त्यस्य ऋकारस्य रभाव इत्येवमध्याहारादिभिः कथञ्चिद्योजनीयः । रभावे फलितत्वञ्चानुपपन्नमेवेति सुस्पष्टम् । रभाव इति पाठेऽनध्याहारे च-अनन्त्यस्य रभावो भवतीत्युक्तावपि मातृशब्दस्यान्त्यस्य लोपोऽनन्त्यस्य रभावः स्यादिति भाष्यकृत्प्रयत्नो विफलः स्यात् । एवञ्चानन्त्यस्य ऋभाव इति पाठे यत्रानन्त्यो ऋकारस्तत्र रभावप्रवृत्तिरिति न दोषः ॥

४ ऋजिष्ठकृष्णिष्ठादाविति । अत्र ढ. झ. पुस्तकयोः 'ऋजिष्ठकृशिष्ठादौ' इति पाठः, स प्रामादिकः । हलादेरित्यस्य प्रत्युदाहरणं-ऋजिष्ठ इति, लघोरित्यस्य च कृष्णिष्ठ इति । कृशिष्ठ इत्यत्र लघोरित्यस्य सत्त्वेऽपि रभावप्राप्तिसत्त्वेन लघोरित्यस्याभावे 'प्रसङ्गाभावात्' इत्येतदनुपपन्नं स्यादिति भावः । वस्तुतो झ. ढ. पुस्तकयोः प्रमादबाहुल्येन तत्पाठविषये नैतावान् प्रबन्ध आवश्यकः परंतु आपाततोऽवलोक्यमाने झ. ढ. पुस्तकपाठोऽत्र, 'ऋभावः' इत्यत्र च समीचीन इति भ्रमः स्यात्तद्वारणार्थमयमत्र प्रबन्धः ॥

५ 'अत इनि ठनौ' ( ५।२।११५ ) इति सूत्रे श्लोकवार्तिकमेतत् ॥

**शौवमिति, परत्वादैजागमे कृते टिलोपेन भवितव्यम् ।**

**अधुना-इति, सप्रकृतिकस्य सप्रत्ययकस्य स्थाने निपातनं क्रियते ॥**

(प्रदीपः) **स्त्रीति ।** स्वशब्दादिनि कृते प्रकृतिभावात् 'यस्य-' इति लोपो न प्राप्नोति ॥ **शौवमिति ।** शुनो विकारावयवयोः प्राण्यञि कृते 'नस्तद्धिते' इति टिलोपो न प्राप्नोति ॥ **अधुनेति ।** इदमोऽधुनाप्रत्यये परत इशादेशस्य 'यस्य-'इति लोपो न प्राप्नोति ॥

**शौवमिति ।** टिलोपं बाधित्वा परत्वात् वृद्धिः प्राप्ता 'द्वारादीनां च'इति प्रतिषिध्यते, ऐजागमश्च क्रियते । तत्रैकाच्त्वाभावाट्टिलोपभावः[1] ॥

**अधुनेति ।** इदमोऽश्भावो धुनाप्रत्ययश्च निपात्यते ॥

( उद्योतः ) **विकारावयवयोरिति ।** अर्थान्तरे तु 'तस्येदम्'इत्यणि 'अन्'इति प्रकृतिभावाच्छौवनमिति भाव्यम् । सङ्कोचे तु 'शुनः सङ्कोचे' इत्यनेन टिलोपेन भाव्यमिति भावः ॥

**तत्रेति ।** ऐजागमे कृते पुनःप्रसङ्गविज्ञानाट्टिलोप इति भावः ॥

( विषयविशेषनिगमकं भाष्यम् )

**इह तर्हि प्राप्नोति-द्रव्यम् ।**

**'यस्य-' इत्यादौ प्रकृतिभावः । 'यस्य-'इति यस्य लोपप्राप्तिस्तस्य प्रकृतिभावः, न चैतानि 'यस्य-' इत्यादौ ॥**

( प्रदीपः ) **द्रव्यमिति ।** द्रोर्विकारः, 'द्रोश्च' इति यत्प्रत्ययः । 'ओर्गुणः' इति गुणोऽत्र न प्राप्नोति ॥

**यस्येत्यादाविति ।** 'यस्य-'इत्यादीनि कार्याणि अपेक्ष्य प्रकृतिभावो विधीयते । ओर्गुणस्तु तेभ्यः पूर्व इति प्रकृतिभावाभावः ॥

( उद्योतः ) भाष्ये—**'प्रतिषेध'**शब्देन प्रकृतिभावोऽभिसंहित इत्याह—**प्रकृतिभाव इति ।** केचित्तु भाष्येऽपि तथैव पाठः[2] । तत्र 'यस्य-'इत्यादीत्यादिग्रहणं प्रकारार्थं, लोपत्वेन च सादृश्यम्, अत एवाग्रे 'न चैतानि यस्येत्यादौ'[3]इत्युक्तं भाष्ये । 'एतानि'इति बहुवचनं तु प्रयोगभेदेन 'ओर्गुणः' इत्यस्य भेदमाश्रित्य । 'यस्येति यस्य लोपप्राप्तिः' इत्येतत् 'यस्येतीत्येवमादिना यस्य लोपप्राप्तिः'इति व्याख्येयम् । अत एव कनयति कनिष्ठ इत्यादौ 'अल्लोपोऽनः' इति लोपो न । न च तत्रोच्चारणसामर्थ्यादल्लोपाभावः । एवमपि 'नस्तद्धिते' इत्यस्यापत्तेः । उच्चारणं तु सर्वादेशत्वसंपादनेन चरितार्थम् । 'इनण्यन-'इत्यादिसाहचर्याच्च लोपविषय एव प्रकृतिभावः । एतेनानन्तरत्वात् 'टेः'इत्यस्यैवायं बाधक इति निरस्तम् । 'पपूर्व-'इति सूत्रस्थभाष्यप्रामाण्येन 'अन्' इत्यस्याल्लोपबाधकताया आवश्यकत्वेन तत्साहचर्यादर्थाधिकारानुरोधाच्चैतद्विषयेऽपि न्यायाप्रवृत्तेरेवोचितत्वात्, नैकाजिति वक्तव्ये प्रकृतिग्रहणाच्च । अत एवोपक्रमे शौवमित्यत्राविशेषेणेति पक्षे 'नस्तद्धित इति न प्राप्नोति'इति कैयटोक्तिः सङ्गच्छते ॥

( इष्ठेमेयःसु प्रकृतिभावस्थापकभाष्यम् )

**एवमपि श्रियै[4] हितः-श्रीयः, ज्ञा देवताऽस्य स्थालीपाकस्य-ज्ञः स्थालीपाक इत्यत्र प्राप्नोति । तस्मादिष्ठेमेयस्सु प्रकृतिभावः ॥**

( प्रदीपः ) **श्रियै हित इति ।** 'प्राक्क्रीताच्छः' इति छः । तत्र 'यस्य'इति लोपो न प्राप्नोतीतीयङः प्रसङ्गः ॥

( वार्तिकावतरणे उदाहरणदर्शकभाष्यम् )

**अथेष्ठेमेयस्सु प्रकृतिभावे किमुदाहरणम् ?**

**प्रेयान्, प्रेष्ठः ।**

**नैतदस्ति । प्रादीनामसिद्धत्वान्न भविष्यति ।**

**इदं तर्हि-श्रेयान्, श्रेष्ठः ॥**

( प्रदीपः ) **प्रादीनामिति ।** असिद्धत्वादेवैकाच्त्वाभावात् प्रकृतिभावोऽप्यत्र नास्ति, नापि टिलोपः । स्थान्याश्रयष्टिलोपः प्राप्नोतीति चेत्, विप्रतिषेधे तावदसिद्धत्वाभावस्य ज्ञापितत्वात्परत्वात्प्रादिषु कृतेषु तेषामसिद्धत्वेनाविद्यमानत्वान्न स्वाश्रयो[5] नापि पराश्रयष्टिलोपः[6] प्राप्नोति ॥

**श्रेयानिति ।** असिद्धाधिकारात् बहिः प्रादिविधानादसिद्धत्वाभावः ॥

( उद्योतः ) **स्थान्याश्रय इति ।** शास्त्रासिद्धत्वाश्रयणादिति भावः ॥ **विप्रतिषेधे तावदिति ।** अत्र विषये स्थानिनो निवर्तनात्स्थानिकार्याप्राप्तिरिति भावः ॥ **न स्वाश्रय इति ।** असिद्धत्वादिति भावः ॥ **पराश्रय इति ।** तस्याभावादिति[7] भावः । अनयोर्यौगपद्यासंभवरूपो विरोधः[8] । आदेशे प्रियशब्दस्येष्ठाद्यानन्तर्यविघातात्, टिलोपे च प्रियशब्दस्यादेशनिमित्तानन्तर्यविघातात्[9] । स्थानिवद्भावस्तु आदेशप्रवृत्त्युत्तरं, न तु तत्प्रवृत्तिसमये । कृते च टिलोपे प्रादीनां चारितार्थ्यमिति वार्तिकमतेनेदं बोध्यम् । वस्तुतस्तु पूर्वप्राप्तटिलोपं बाधित्वा परत्वात्प्राद्यादेशे कृते पुनस्तन्निमित्तटिलोपः सकृद्गतिन्यायेन न भवति । आदेशनिमित्तस्तु असिद्धत्वादेव नेति भाष्याशयः ॥

( ६६२९ इष्ठेमेयःसु प्रकृतिभावाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रकृत्यैकाजिष्ठेमेयस्सु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः ॥ * ॥**

(भाष्यम्) **प्रकृत्यैकाजिष्ठेमेयःसु चेत्तन्न ।**

**किं कारणम् ?**

**एकाच उच्चारणसामर्थ्यादन्तरेणापि वचनं प्रकृतिभावो भविष्यति ॥**

( प्रदीपः ) **एकाच उच्चारणसामर्थ्यादिति ।** अकार उच्चारणार्थो न प्रतिज्ञातः, अपि तु श्रवणार्थः ॥

( उद्योतः ) **श्रवणार्थ इति ।** न च लोपेऽपि ण्यन्ताच्चङि 'अशश्रत्'इत्यादावकारश्रवणाय तदुच्चारणं चरितार्थम् । ईदृशे विषये 'द्विर्वचनेऽचि'इत्यादेः प्रवृत्त्यभावस्य तत्रैवोपपादितत्वात् ॥

---

[1] 'काच्त्वाभावाट्टिलोपः सिद्धः' इति ङ. पाठः, 'काच्त्वाभावात्प्रकृतिभावाभावः' इति झ. पाठः ॥

[2] इदानीं भाष्ये 'प्रकृतिभावः' इत्येव पाठ उपलभ्यते ॥

[3] 'यस्येत्यादावित्यादि' इति ङ. झ. पाठः ॥

[4] 'श्रियै' इति छ. पाठः ॥

[5] स्वाश्रयः-आदेशाश्रयः ॥

[6] पराश्रयः-स्थान्याश्रयः ॥

[7] तस्याभावादिति । आदेशेनापहारात्तस्य-स्थानिनो निवर्तनादित्यर्थः ॥

[8] अनयोः-प्राद्यादेशटिलोपयोः ॥

[9] 'निमित्तानन्तर्यविघातः' इति ग. ज. पाठः ॥

( प्रकृतिभावप्रयोजनभाष्यम् )

वि[1]न्मतोस्तु लुगर्थं प्रकृतिभावो वक्तव्यः । स्रग्वितरः-स्रजीयान् । स्रग्वितमः-स्रजिष्ठः । स्रग्वत्तरः-स्रुचीयान् । स्रग्वत्तमः-स्रुचिष्ठः ॥

( प्रदीपः ) विन्मतोस्तु लुगर्थमिति । लुक्यर्थो यस्य तल्लुगर्थम् । लुकि कृते टिलोपाभावार्थमित्यर्थः ॥

( उद्द्योतः ) ननु प्रकृतिभावस्य विन्मतोर्लुक् न प्रयोजनमत आह—लुक्यर्थे इति ॥

( प्रयोजनाक्षेपभाष्यम् )

ननु च विन्मतोर्लुक् टिलोपं बाधिष्यते ॥

( प्रत्याक्षेपभाष्यम् )

कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् ?

असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात् ।

यथैव खल्वपि विन्मतोर्लुक् टिलोपं बाधते, एवं 'नस्तद्धिते' ( १४४ ) इत्येतमपि बाधेत । यतरो नौ ब्रह्मीयान्-ब्रह्मवत्तर इति ॥

( प्रदीपः ) कथमन्यस्येति । विन्मतुबन्तस्य टिलोपं लुक् बाधताम्, तस्मिंस्तु कृते यष्टिलोपः प्राप्नोति तं कथं बाधते ? न हि तस्मिन् प्राप्ते लुगारभ्यत इत्यर्थः ॥

यथैवेति । लुको बाधकत्वाभ्युपगमेऽतिप्रसङ्ग इत्यर्थः ॥

ब्रह्मीयानिति । अतिशयेन ब्रह्मवानिति-ईयसुनि मतुब्लुकि च 'नस्तद्धिते' इति टिलोपः ॥

( उद्द्योतः ) ननु विन्मतुबन्तस्य लुक्टिलोपौ प्राप्नुत इति किमुच्यते-अन्यस्येतीत्यत आह—विन्मतुबन्तस्येति ॥

भाष्ये दोषान्तरमाह—यथैव खल्वपीति ॥ तदाशयमाह—लुक इति ॥ टिलोप इति । 'इष्यते' इति शेषः । तथा चारण्यके 'तस्माद्ब्राह्मणं ब्रह्मिष्ठं कुरु' इति प्रयोगः ॥

( आक्षेपप्रत्याक्षेपयोः समाधानभाष्यम् )

यत्तावदुच्यते-कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्-इति ।

इदं तावदयं प्रष्टव्यः-यदि तर्हि विन्मतोर्लुङ्नोच्येत किमिह स्यात्-इति ।

टिलोप इत्याह ।

टिलोपश्चेत्, नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते स बाधको भविष्यति ॥

यदप्युच्यते-असति खल्वपि सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात्-इति ।

सत्यपि सम्भवे बाधनं भवति । तद्यथा-ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय-इति सत्यपि सम्भवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि सम्भवे विन्मतोर्लुक् टिलोपं बाधिष्यते ।

यदप्युच्यते-यथैव खल्वपि विन्मतोर्लुक्टिलोपं बाधते, एवं 'नस्तद्धिते' इत्येतमपि बाधेत[2] ।

न बाधते ।

किं कारणम् ?

येन नाप्राप्ते तस्य बाधनम् । नाप्राप्ते टिलोपे विन्मतोर्लुगारभ्यते, 'नस्तद्धिते' इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च ॥

**अथवा—**

पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते[3]-इत्येवं विन्मतोर्लुक् टिलोपं बाधिष्यते, 'न स्तद्धिते' इत्येतन्न बाधिष्यते ॥

( प्रदीपः ) नाप्राप्त इति । यद्यपि विषयभेदेन टिलोपो भिन्नस्तथाप्यनपेक्षितविषयभेदं टिलोपशास्त्रं 'येन नाप्राप्ति'-न्यायेन लुका बाध्यते । तेन स्रजीयानित्येतस्मिन्नङ्गे सांप्रतिकी भाविनी च टिलोपप्राप्तिः पटिष्ठादौ सावकाशा लुका बाध्यते । तत्र विन्नन्तस्य नान्तत्वात् 'नस्तद्धिते' इत्ययमपि टिलोपो लुका बाध्यते । मतोस्तु लुका 'नस्तद्धिते' इति टिलोपो न बाध्यते ॥ ननु किमुच्यते-'नस्तद्धिते' इत्यस्मिन् पुनः प्राप्ते चाप्राप्ते च इति, यावता मतोर्नान्तत्वाभावादप्राप्त एव 'नस्तद्धिते' इति टिलोपः । नैष दोषः । मतुप्प्रत्ययो नकारान्तादनकारान्ताच्च विधीयते । तत्र यद्यप्यकृते मतुब्लुकि 'नस्तद्धिते' इति टिलोपो न प्राप्नोति तथापि कृते मतुब्लुकि प्राप्नोति । 'एकदेशविकृतं चानन्यवत्' इति यदेवाङ्गं ब्रह्मवदिति, तदेव ब्रह्मन्निति । तदेवमभेदाश्रयेणेदमुक्तं—'प्राप्ते चाप्राप्ते च' इति ॥

अथवेति । ननु 'विन्मतोर्लुक्' इत्येतस्य 'नस्तद्धिते' इत्ययमेव योगोऽनन्तरः । 'टेः' इत्ययं तु व्यवहितः ।

तत्र केचिदाहुः—पाठ[4]क्रमादर्थक्रमो बलीयानिति 'टेः' इत्येष योगः सर्वविषयस्य व्यापनादनन्तरो भवति । यद्येवं पूर्वमेवायमर्थ उक्तो 'येन नाप्राप्ते–' इति, किमर्थं पुनरुच्यते ? पूर्वमुत्सर्गापवादन्याय उक्तः, इदानीं त्वर्थक्रमप्रतिपत्त्याश्रयेणोच्यते । येन हि सर्वो विषयो व्याप्तः स एव बाधितुं युक्तः । यस्तु विषयविशेषे प्रवर्तते, तस्य बाधा न युक्ता । सामान्ये हि पूर्वं प्रतिपत्तिरुदेति पश्चाद्विशेषेषु ॥

अन्ये तु—न्यासभेदाश्रयेण व्याचक्षते-'टेः' इत्यस्य पश्चा[5]त् 'नस्तद्धिते' इति पठितव्यम् ॥

( उद्द्योतः ) अनपेक्षितविषयभेदमिति । तन्न्यायस्य तथैव स्वरूपादिति भावः । अनयाऽपि युक्त्या प्रेष्ठादौ टिलोपवारणं, श्रेष्ठ-

१ विन्मतोस्त्विवति । एतस्मात्प्राक् 'विन्मतोर्लुगर्थम्' इति वार्तिकमिति च. छ. झ. ड. पुस्तकेषु पाठः ॥

२ 'बाधेतेति' इति च. छ. झ. पाठः ॥

३ 'बाधन्ते नोत्तरान्' इति च. झ. पाठः ॥

४ 'क्रमादार्थक्रमो' इति ड. पाठः ॥

५ पश्चादिति । टेः (६।४।१५५) इत्यस्याग्रे पठनीयम् । टेः (६।४।१४२) इत्यस्याग्रे सूत्रकृता पठ्यते तस्य तत्रोत्कर्ष इति भावः ॥

ज्येष्ठादौ च। एवं भूयानित्यादौ 'भू'आदेशस्य गुणापवादत्वान्नादेशस्य गुणः। असिद्धत्वाद्युक्तिस्तु भाष्ये वार्तिकमतेनैकदेशिन इति बोध्यम् ॥ स्रजीयानित्येतस्मिन्नङ्ग इति । अनेनाभिन्नविषयत्वं लुग्लोपयोर्दर्शयति ॥ नस्तद्धित इत्ययमपीति । फलोदाहरणमस्य चिन्त्यम् ॥ क तर्हि नान्तस्य टिलोपे येन नाप्राप्तिन्यायाभाव उक्तोऽत आह—मतोस्त्विति । ननु कृते मतुब्लुकि शब्दान्तरस्य टिलोपः प्राप्नोति न तु मत्वन्तस्येति कथं लुकः 'नस्तद्धिते' इत्यस्मिन्प्राप्त आरम्भोऽत आह—एकदेशेति ॥ तदेवमभेदेति । नान्तमत्वन्तयोरभेदाश्रयेणेति भावः ॥

नन्विति । 'विन्मतोः–'इति लुक् पञ्चमाध्यायस्थः । आर्थः क्रमः–बुद्ध्यारोहविषयः क्रमः॥ सर्वविषयव्यापनादिति । यद्बाधकं तस्य 'बहुषु बाध्येषु किं बाध्यम्'इति विशेषचिन्तायां येन तस्य सर्वोऽपि विषयो व्याप्तस्तद्बाधेन विनाऽस्य प्रवृत्त्ययोगात्तत्रावश्यं बाधनीये तेन चारितार्थ्यादन्यबाधने मानाभाव इत्ययं न्यायः 'अथवा'इत्यनेन दर्शित इत्यर्थः॥ अत्रार्थे पौनरुक्त्यं शङ्कते—यद्येवमिति । सर्वविषयव्यापनेन बाधकोपस्थितिकाले झटिति बुद्धिसंनिधानादनन्तरत्वमिति अनेनापि न्यायेन तस्यैव बाध इति भाष्यार्थ इत्युत्तरम् । टेरित्यस्य पश्चादिति । इदं चिन्त्यम्, एवं न्यासे 'ओर्गुणः' इत्यादौ 'तद्धिते' इत्यस्य लाभे 'स्थूलदूर–'इत्यादौ चेष्ठेमेयःस्वित्यस्य लाभे क्लेशात्। अत्र केचित्–इदं भाष्यं न सूत्रप्रत्याख्यानपरं, किंतु वृत्त्याद्युक्तोदाहरणेष्वन्यथासिद्धिप्रतिपादनपरम्। अत एव 'कनिष्ठः' इत्यादौ 'नस्तद्धिते' इति टिलोपो नेति बोध्यम् । केचित्तु 'कन' इत्यदन्त आदेशः, सूत्रे शकन्ध्वादित्वात्पररूपमित्याहुः । तन्न, 'यस्य–' इत्यादिलोपेऽवश्यं प्राप्तेऽस्यारम्भाद्विन्मतोर्लुङ्न्यायेन पुनस्तदनापत्तौ 'कनिष्ठः'इत्याद्यसिद्ध्यापत्तेः। एवं नेदसाधावपि हलन्तावेव, अकारस्तूच्चारणार्थः।

परे तु किमुदाहरणमिति प्रश्ने परोक्तोदाहरणानामन्यथासिद्धिं प्रदर्श्योदाहरणान्तरानुक्तेरस्योदाहरणाभाव एव । विन्मतोर्लुगिव प्रादयः श्रादयः कनादयश्च टिलोपे नाप्राप्त आरभ्यमाणास्तद्बाधका एव। 'कनिष्ठः' इत्यादौ 'नस्तद्धिते' इति तु न, अन्–उच्चारणसामर्थ्यात्। सर्वादेशः 'क'इत्यादेशेनापि सिद्धः। 'टेः'इति लोपस्य तु 'येन नाप्राप्ति–' न्यायेन कनादेशेन बाधादप्रवृत्तिरित्याहुः ॥

( आक्षेपसमाधानभाष्यम् )

**यदि तर्हि विन्मतोर्लुक् टिलोपं बाधते, पयिष्ठ इति न सिध्यति; पयसिष्ट इति प्राप्नोति । यथालक्षणमप्रयुक्ते-ईति ॥**

( प्रदीपः ) पयिष्ठ इति । 'पयस्विन्-इष्ठ' इति स्थिते विनो लुकि कृते असो लोपो न प्राप्नोति ॥

यथालक्षणमिति । न भवति टिलोप इत्यर्थः । ततश्च रजस्विनमाचष्टे-रजसयति, आयुष्मन्तमाचष्टे-आयुषयतीति भवितव्यम् ॥

( उद्योतः ) न भवतीति । वस्तुतो नास्त्येवेदृशः प्रयोग इति बोध्यम् ॥ इति भवितव्यमिति । यद्यभिधानमस्तीति बोध्यम् ॥

( ६६३० उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥*॥प्रकृत्याऽके राजन्यमनुष्ययुवानः॥*॥**

**( भाष्यम् ) राजन्यमनुष्ययुवानोऽके प्रकृत्या भवन्तीति वक्तव्यम् । राजन्यकम्, मानुष्यकम्, यौवनिका ॥**

( प्रदीपः ) राजन्यकमिति । समूहेऽर्थे 'गोत्रोक्षोष्ट्र–' इति वुञ्। 'आपत्यस्य च तद्धिते नाति' इति यलोपाभावार्थं प्रकृतिभावविधानम्। 'यस्य–' इति लोपे सत्यसति वा विशेषाभावान्न तदर्थः प्रकृतिभावः ॥ यौवनिकेति । यूनो भाव इति मनोज्ञादित्वाद्वुञ्। तत्र 'नस्तद्धिते' इति टिलोपः प्राप्तः प्रकृतिभावान्न भवति ॥

( उद्योतः ) विशेषाभावादिति । असत्यपि 'यस्य–'इति लोपे पररूपेण रूपस्य सिद्धत्वादिति भावः ॥

( १३३० निषेधसूत्रम् ॥ ६ । ४ । ४ आ. १९ )

## ३१६८ न मपूर्वोऽपत्येऽवर्मणः ॥ ६ । ४ । १७० ॥

( विकल्पोपसंख्यानभाष्यम् )

**मपूर्वात्प्रतिषेधे 'वा हितनाम्न' इति वक्तव्यम् । हैतनामः, हैतनामनः । आरोहितो वै हैतनामः । आरोहितो वै हैतनामनः । समानो हैतनामः । समानो हैतनामन इति ॥**

( प्रदीपः ) हैतनामन इति । हितनाम्नोऽपत्यमित्यण् । 'अन्' इति प्रकृतिभावात्पक्षे टिलोपाभावः ॥

( उद्योतः ) पक्ष इति । प्रतिषेधाभावपक्ष इत्यर्थः ॥

( १३३१ निपातनसूत्रम् ॥ ६ । ४ । ४ आ. २० )

## ३१६९ ब्राह्मोऽजातौ ॥ ६ । ४ । ७१ ॥

( सूत्रे पक्षद्वयोपस्थापकं भाष्यम् )

**अथ किमिदं ब्राह्मस्याजातावनो लोपार्थं वचनमाहोस्विन्नियमार्थम्? कथं वाऽनो लोपार्थं स्यात्कथं च नियमार्थम्?**

१ 'आर्थक्रमः' इति ङ. झ. पाठः ॥
२ इत्यादाविति । नस्तद्धित इत्यस्योत्कर्षे 'ओर्गुणः, यस्येति च' इत्यादौ तद्धित इत्यस्य लाभे क्लेशः स्यादित्याशयः ॥
३ इत्यस्येति । तादृशपाठे तद्धित इत्यनेन व्यवहितं 'इष्ठेमेयःसु' इति नानुवर्तेतेति भावः ॥
४ छ. पुस्तके 'इति' शब्दस्य न पाठः ॥
५ च. छ. झ. ङ. पुस्तकेषु वार्तिकमेतत् ॥
६ छ. झ. पुस्तकयोरनयोर्न पाठः ॥
७ छ. झ. ङ. पुस्तकेषु 'इति' शब्दो न दृश्यते ॥
८ 'वानो' इति च. झ. ङ. पाठः । 'कथं च लोपा' इति छ. पाठः ॥

**यदि तावत् 'अपत्ये' इति वर्तते ततो नियमार्थम्। अथ निवृत्तं ततो लोपार्थम्।**

**(प्रदीपः)** ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते—ब्राह्मो नारदः, ब्राह्मो मुहूर्तः, ब्राह्मः स्थालीपाक-इति । जातौ त्वपत्ये-ब्राह्मण इतीष्यते । अनपत्ये तु जातौ—ब्राह्मी ओषधिरिति टिलोप इष्यते । एतच्च यथाभिधानं न सिध्यतीति मत्वा पृच्छति—**अथ किमिदमिति ॥**

**यदि तावदिति ।** ब्रह्मणोऽपत्यमित्यण् । 'अल्लोपोऽनः' इत्यकारलोपः प्राप्तः 'न संयोगाद्वमन्तात्' इति प्रतिषिद्धः । 'नस्तद्धिते' इति टिलोपे प्राप्ते 'अन्' इति प्रकृतिभावः प्राप्तो 'न मपूर्वोऽपत्येऽवर्मणः' इति प्रतिषिद्धः । ततष्टिलोपे प्राप्ते नियमार्थमिदम्—अजातावेवापत्ये टिलोपो भवति, ब्राह्मो नारद इति । जातौ त्वपत्ये न भवति, ब्राह्मण इति । एवमपत्ये सिध्यति व्यवस्था । अनपत्ये तु 'अन्' इति प्रकृतिभावात् ब्राह्मशब्दो न सिध्यति ॥

**अथ निवृत्तमिति ।** अपत्यग्रहणे निवृत्ते 'विधिनियमसम्भवे विधिरेव ज्यायान्'इति अनपत्ये 'अन्'इति प्रकृतिभावे प्राप्तेऽजातौ टिलोपार्थं निपातनं भवति । तत्र ब्राह्मो मुहूर्तो ब्राह्मः स्थालीपाक इति सिध्यति । ब्राह्मी ओषधिरिति न सिध्यति, अजाताविति प्रतिषेधात् । ब्राह्मणी ओषधिरिति तु प्राप्नोति । अपत्ये जातौ ब्राह्मण इति न सिध्यति, 'न मपूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावप्रतिषेधाट्टिलोपप्रसङ्गात् ॥

**( उद्द्योतः ) ब्राह्मो नारद इति ।** क्रमेण-'तस्यापत्यं' 'तस्येदं' 'सास्य देवता' इत्यण् ॥ **एतच्चेति ।** उक्तं रूपजातं विधिपक्षे नियमपक्षे च यथेष्टं न सिध्यतीति भावः ॥

'अपत्ये' इत्यस्यानुवृत्तौ नियमार्थत्वमुपपादयति—**ब्रह्मणोऽपत्यमिति ॥** नियमपक्षे दोषं स्फोरयति—**अनपत्ये त्विति ।** अनन्तरापत्ये जातित्वाभावादजाताविति विशेषणमपत्यस्य युज्यते ॥

तन्निवृत्तौ किमिदमपत्ये नियमार्थमुतानपत्ये विध्यर्थमिति विशये[1] विधिरेव युक्त इत्याह—**अनपत्येऽनिति ।** अत्र पक्षे प्राप्तस्य प्रतिषेधो वक्तव्य इति भाष्योक्तं दोषं स्फोरयितुं स्वयं दोषान्तरमप्याह—**ब्राह्मीति ॥**

**( वार्तिकावतरणभाष्यम् । )**

**अत उत्तरं पठति—**

**ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते । 'अपत्ये' इति निवृत्तम् ॥**

**( ६६३१ विधावुपसंख्यानवार्तिकम् ॥ १ ॥ )**

**॥*॥ तत्राप्राप्तविधाने प्राप्तप्रतिषेधः ॥*॥**

**( भाष्यम् ) तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य प्रतिषेधो वक्तव्यः । ब्राह्मणः ॥**

**( ६६३२ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ न वा पर्युदाससामर्थ्यात् ॥ * ॥**

**( भाष्यम् ) न वा वक्तव्यः ।**

**किं कारणम् ?**

**पर्युदाससामर्थ्यात्, पर्युदासोऽत्र भविष्यति ॥**

**( प्रदीपः ) नवेति ।** वक्ष्यमाणोऽभिप्रायः ॥

**( उद्द्योतः ) वक्ष्यमाण इति ।** 'नात्र अपत्ये' इत्यादिना वक्ष्यमाणं योगविभागं मनसिकृत्यैतदुक्तमित्यर्थः ॥

**( आक्षेपभाष्यम् )**

**अस्त्यन्यत्पर्युदासे प्रयोजनम् ।**

**किम्[3] ?**

**या जातिश्च[4] नापत्यम्-ब्राह्मी ओषधिरिति ॥**

**( प्रदीपः )** इतरस्त्वेतमभिप्रायमबुद्ध्वाऽऽह—**अस्त्यन्यदिति ।** ब्राह्मी ओषधिरित्यत्र कृतार्थः पर्युदासः 'ब्राह्मणः' इत्यत्र पूर्वसूत्रविहितप्रकृतिभावप्रतिषेधप्राप्तं टिलोपं न निवर्तयेत् ॥

**( प्रत्याक्षेपभाष्यम् )**

**न वै अत्रेष्यते ।**

**अनिष्टं च प्राप्नोति, इष्टं च न सिध्यति ॥**

**( प्रदीपः ) न वै अत्रेष्यत इति ।** 'अजातौ'इति पर्युदासः । न चानिष्टार्थे शास्त्रप्रवृत्तिरिति पर्युदाससामर्थ्याद्ब्राह्मण इत्यत्र टिलोपो न भविष्यतीत्यर्थः ॥

इतरस्तु लक्षणमुपालब्धुमाह[6]—**अनिष्टं च प्राप्नोतीति ।** ब्राह्मणी ओषधिरिति प्राप्नोति, अजाताविति पर्युदासात् । **इष्टञ्च न सिध्यति**—ब्राह्मण इति ॥

**(उद्द्योतः) अजाताविति पर्युदास इति ।** 'जातिं वर्जयित्वा ब्राह्म इति टिलोपः' इति सूत्रार्थः । तत्र मनुष्यजातिविशेषे ब्राह्मणशब्दप्रयोगस्येष्टत्वात्तत्रैव पर्युदासः फलतीति तात्पर्यम् । इष्टिमात्रमेतत्, न तु लक्षणेनायमर्थो लभ्यत इति ॥

उत्तरभाष्यार्थमाह—**इतरस्त्विति ॥ ब्राह्मण इतीति ।** पूर्वसूत्रेण प्रकृतिभावप्रतिषेधेन टिलोपप्राप्तिरिति भावः ॥

**( समाधानभाष्यम् )**

**एवं तर्ह्यनुवर्तते 'अपत्ये' इति । नात्र 'अपत्ये' इत्यनेन निपातनमभिसम्बध्यते-ब्राह्म इति निपात्यते अपत्येऽजाताविति ।**

**किं तर्हि ?**

**प्रतिषेधोऽभिसम्बध्यते-ब्राह्म इति निपात्यते, अपत्ये जातौ नेति ॥**

**( प्रदीपः ) एवं तर्हीति ।** योगविभागः क्रियत इति भावः । तत्र **'ब्राह्मः'** इत्यत्र सामर्थ्यात् 'अपत्ये' इति न

१ विशयः-संशयः ॥
२ एतद्वार्तिकमिति मुद्रितपुस्तकपाठः ॥
३ अ. पुस्तके 'किम् ?' शब्दपाठो नास्ति ॥
४ 'जातिरेव' इति च. छ. झ. पाठः ॥

५ 'स्त्वेनमभि' इति ड. झ. पाठः ॥
६ उपालब्धुं-तिरस्कर्तुम् ॥
७ 'ननु' इति छ. झ. पाठः ॥

सम्बध्यते, अपत्ये टिलोपस्य सिद्धत्वात् । तेनानपत्ये सर्वत्र जातावजातौ च ब्राह्म इति निपात्यते । अपत्येऽपि-ब्राह्मो नारद इत्यत्र परत्वात् 'ब्राह्मः' इत्यनेनैव टिलोपो भवति ॥ ततः-'अजातौ' इति, तत्रापत्य इत्यनुवर्तते तेनायमर्थो भवति-अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवति । अजाताविति प्रसज्यप्रतिषेधः, भवतिना नञः सम्बन्धात्-इति सर्वेष्टसिद्धिः ॥

(उद्योतः) अनेनैवेति । न तु 'नस्तद्धिते' इत्यनेनेति भावः । इदं वस्तुस्वरूपकथनमात्रम् ॥ प्रसज्यप्रतिषेध इति । अन्यथा 'अपत्ये' इत्यनुवृत्तस्यानन्वयः स्यात्, अजातावपत्य इत्यर्थे विधेयानिर्देशादिति भावः । तदुक्तं भाष्ये-'अपत्ये जातौ न' इति ॥

---

( १३३२ निपातनसूत्रम् ॥ ६ । ४ । ४ आ. २१ )

## ३१७० कार्मस्ताच्छील्ये ॥ ६।४।१७२ ॥

( सूत्राक्षेपभाष्यम् )

**किमर्थमिदमुच्यते, न 'नस्तद्धिते' (१४४) इत्येव सिद्धम्?**

**न सिध्यति । 'अन्' अणीति प्रकृतिभावः प्रसज्येत ॥**

(प्रदीपः) किमर्थमिति । कर्म शीलमस्य, 'छत्रादिभ्यो णः' इति णे कृते सिद्धष्टिलोप इति भावः ॥

( ज्ञापनेन समाधानभाष्यम् )

**अणीत्युच्यते, णश्चायम् ।**

**एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यः-ताच्छीलिकेऽणकृतानि भवन्ति-इति ।**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**चौरी, तापसी-इति अणन्तादितीकारः सिद्धो भवति ॥**

( प्रदीपः ) ताच्छीलिक इति । एवञ्च 'छत्रादिभ्योऽण्' इति लाघवाय कर्तव्यम्, णवचने प्रयोजनाभावात् । 'प्रज्ञाश्रद्धा-' इति 'ज्वलितिकसन्तेभ्यः-' इति 'तदस्यां प्रहरणं' इति णवचने ङीबभावः प्रयोजनम् ॥

(उद्योतः) भाष्ये—अणन्तादितीकार इति । 'अणो द्व्यचः' इति ष्फिन्नपि फलान्तरं बोध्यम् । अत एवोपक्रमभाष्ये 'अण्कृतानि भवन्ति' इति बहुवचनप्रयोग इत्याहुः ॥

एवञ्चेति । ज्ञापके हि ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात् 'छात्रा' इति सिध्यतीति चिन्त्यमिदमित्यन्ये ॥ अन्यत्र णवचने प्रयोजनमस्तीत्याह—प्रज्ञेत्यादि ॥

---

( १३३३ निपातनसूत्रम् ॥ ६ । ४ । ४ आ. २२ )

## ३१७२ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरणमयानि ॥ ६ । ४ । १७४ ॥

( वार्तिकावतरणभाष्यम् )

**अत्र भ्रौणहत्येति किं निपात्यते?**

**यकारादौ तद्धिते तत्वं निपात्यते ॥**

( प्रदीपः ) यकारादाविति । भ्रूणघ्नो भाव इति ब्राह्मणादित्वात् ष्यञ् ॥

( ६६३३ निपातनानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् ॥ * ॥**

**( भाष्यम् ) भ्रौणहत्ये तत्वनिपातनमनर्थकम् ।**

**किं कारणम्?**

**सामान्येन कृतत्वात् । सामान्येनैवात्र तत्वं भविष्यति-'हनस्तोऽचिण्णलोः' (७।३।३२) इति ॥**

( उद्योतः ) भाष्ये—सामान्येनेति । ष्यञि परतः 'नस्तद्धिते' इति टिलोपं बाधित्वा परत्वात् 'हनस्त-' इति तत्वं भविष्यतीति भावः ॥

( ६६३४ ज्ञापनेन निपातनसार्थक्यबोधकवार्तिकम् ॥२॥ )

**॥*॥ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य॥*॥**

**( भाष्यम् ) एवं तर्हि ज्ञापयत्याचार्यः-तद्धिते तत्वं न भवतीति ॥**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**भ्रौणघ्नो वार्त्रघ्न इत्यत्र तत्वं न भवति ॥**

(प्रदीपः) ज्ञापकं त्विति । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इत्यनपेक्ष्य ज्ञापकमुक्तम्, तदपेक्षायां तत्वस्याप्रसङ्गात् ॥ ननु टिलोपाभावार्थं निपातनं स्यादिति सति प्रयोजने ज्ञापकत्वमनुपपन्नम् । नैष दोषः । उभयोरनित्ययोः परत्वाट्टिलोपं बाधित्वा तत्वं भविष्यति । अनेकप्रयोजनत्वाद्वा निपातनानाम् । अत एव कुत्वप्रतिषेधार्थमपि निपातनम् ॥

( उद्योतः ) अनपेक्ष्येति । वस्तुतः स एवार्थोऽनेन ज्ञाप्यत इति शब्दान्तरेण भाष्य उक्तमिति बोध्यम् ॥ तत्वस्य-तकारस्य ॥ अत एवेति । अनेकप्रयोजनत्वादेवेत्यर्थः ॥

---

१ 'उच्यते नस्तद्धिते' इति नकाररहितः ढं. पाठः ॥

२ अणन्तादिति । 'टिड्ढाणञ्द्वयसज्-' इत्यनेन ङीबित्यर्थः ॥

( ६६३५ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन ॥ * ॥

( भाष्यम् ) ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन कर्तव्यम् । ऐक्ष्वाकः, ऐक्ष्वाकः ॥

(प्रदीपः) ऐक्ष्वाक इति । इक्ष्वाकोरपत्यमिति 'जनपदशब्दात्–'इत्यञ् । उकारलोपो निपात्यते । ञित्त्वादाद्युदात्तत्वम् । इक्ष्वाकुषु जात इत्यणि प्राप्ते 'ओर्देशे ठञ्'इति ठञि प्राप्ते तं परत्वाद्बाधित्वा 'जनपदतदवध्योश्च' 'अवृद्धादपि बहुवचनविषयात्'इति वुञि प्राप्ते 'कोपधात्–'इत्यण्, तत्रान्तोदात्तत्वम् । तत्र भिन्नस्वरयोरेकस्मिन्निपात्यमानेऽपरस्यासंग्रहादुभयमपि निपात्यम् ॥

( उपसंख्यानसाधकभाष्यम् )

एकश्रुतिनिर्देशात्सिद्धम् ।

एकश्रुतिः–स्वरसर्वनाम, यथा नपुंसकं लिङ्गसर्वनाम ॥

( प्रदीपः ) एकश्रुतिनिर्देशादिति । स्वरभेदप्रत्यस्तमयेन निपातनं सर्वस्वरलौकिकप्रयोगसंग्रहार्थमित्यर्थः ॥ यथा नपुंसकमिति । सामान्ये स्थितावाविर्भावतिरोभावस्थितिविशेषाणामन्तर्भावात् ॥

(उद्द्योतः) भाष्ये—एकश्रुतिनिर्देशादिति । ननु सूत्रे द्वन्द्वसत्त्वेन समासान्तोदात्तत्वे तन्निमित्तशेषनिघातेन निर्देशान्नाद्युदात्तस्य नाप्यन्तोदात्तस्य निर्देश इति शङ्कैवायुक्ता–इति चेत्, न; । तदीयविग्रहवाक्याभिप्रायेण शङ्कोत्तरयोः सत्त्वात्॥

एकश्रुतेः स्वरसर्वनामत्वं दर्शयति–स्वरभेदेति ॥ प्रत्यस्तमयः–त्यागः । यथा 'तस्यापत्यम्' इत्यादावुपगुप्रभृतीन् विशेषानभेदेन सर्वनाम प्रतिपादयति तथैकश्रुतिरप्युदात्तादीन् विशेषान्–इति सर्वस्वरसङ्ग्रहसिद्धिरित्यर्थः ॥ नपुंसकस्य लिङ्गसामान्यत्वमाह—सामान्ये स्थिताविति । परिणाम इत्यर्थः । आविर्भावतिरोभावप्रागवस्थाऽत्र स्थितिविशेषः ॥

( वार्तिकावतरणभाष्यम् )

अथ मैत्रेये किं निपात्यते ॥

( ६६३६ मैत्रेयनिपातनबोधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ मैत्रेये यादिलोपनिपातनम् ॥ * ॥

( भाष्यम् ) मैत्रेये ढञि यादिलोपो निपात्यते ॥

( प्रदीपः ) मैत्रेय इति । मित्रयोरपत्यमिति 'गृष्ट्यादिभ्यश्च' इति ढञ् । 'मित्रयु एय' इति स्थिते 'ओर्गुणः'इति गुणापवादे 'ढे लोपोऽकद्र्वाः' इति लोपे प्राप्ते 'केकयमित्रयु–' इति यादेरियादेशे प्राप्ते लोपो निपात्यते । तल्लोपस्यासिद्धत्वात् 'यस्य'इति लोपाभावात् 'अतो गुणे' इति पररूपमेकारः ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे षष्ठाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥

(उद्द्योतः) ननु 'यस्य–'इति लोपाभावे 'वृद्धिरेचि'इति स्यादत आह—अतो गुण इति ॥

( मित्रयुशब्दस्य चतुर्ग्रहणाक्षेपभाष्यम् )

इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते–गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रियते, द्वितीयेऽध्याये–यस्कादिषु लुगर्थं क्रियते, सप्तमेऽध्याये–ईयादेशार्थम्, इदं चतुर्थं–यादिलोपार्थम् ।

द्विर्ग्रहणं शक्यमकर्तुम् । बिदादिष्विञि प्रत्ययविध्यर्थं पाठः कर्तव्यः । तत्र नैवार्थो लुका नापि यादिलोपेन । इयादेशेनैव सिद्धम् ॥

( प्रदीपः ) द्वितीय इति । मित्रयव इति बहुषु लुगर्थः पाठः ॥ सप्तम इति । ढञोऽन्यत्रेयादेशः–मित्रयोरिदं मैत्रेयमिति ॥

( उद्द्योतः ) भाष्ये—नैवार्थो लुकेति । 'यञञोश्च'इत्येव सिद्धत्वादिति भावः ॥

( समाधानभाष्यम् )

नैवं शक्यम् । इह हि–मैत्रेयकः सङ्घ इति 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' ( ४।३।१२७ ) इत्यण् प्रसज्येत ॥

( प्रदीपः ) मैत्रेयक इति । मित्रयूनां सङ्घ इति 'गोत्रेऽलुगचि'इति लुकि प्रतिषिद्धे ढञन्तात् 'गोत्रचरणाद्वुञ्'इति वुञ् । यदि तु 'सङ्घाङ्क–'इत्यत्र 'न मैत्रेयात्'इत्युच्यते तदा त्रीणि ग्रहणानि स्युरितीह निपातनं न कर्तव्यं स्यात्, इष्टस्य सिद्धत्वात् ॥

( उद्द्योतः ) न मैत्रेयादिति । अणि निषिद्धे वुञ्सिद्ध एवेति भावः ॥ तदा त्रीणीति । बिदादिष्वेकम्, इयादेशार्थमपरम्, अणिनषेधार्थं तृतीयमित्यर्थः । नञा सहात्रापि न्यासे चत्वारि ग्रहणानीति पदलाघवाभावान्नोक्तमिदं भगवतेति सर्वेष्टसिद्धिः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते षष्ठाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥

१ 'मैत्रेये ढञि' इति ग, छ, ज. पाठः ॥

२ ( ४।१।१३६ ) ॥ ३ ( २।४।६३ ) ॥ ४ ( ७।३।२ ) ॥

( वार्तिकावतरणभाष्यम् )

हिरण्मये किं निपात्यते ?

( ६६३७ निपातनबोधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ हिरण्मये[1] यलोपवचनम् ॥ * ॥

( भाष्यम् ) हिरण्मये यलोपो निपात्यते । हिरण्मयं कलशं बिभर्षि[2] ॥

( वार्तिकावतरणभाष्यम् )

अथ हिरण्यये[3] किं निपात्यते ?

( ६६३८ निपातनबोधकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ हिरण्यये छन्दसि मलोपवचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) हिरण्यये छन्दसि मलोपो निपात्यते । हिरण्ययी नौरभवत् । हिरण्ययाः पन्थान आसन् । हिरण्ययमासनम् ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-
महाभाष्ये षष्ठाध्यायस्य चतुर्थे
पादे चतुर्थमाह्निकम् ॥

---

१ अ. पुस्तके नैतद्वार्तिकम् ॥ २ 'संबिभर्षि' इति ङ. पाठः ॥ ३ दाण्डिनायनेति सूत्रोत्तरं 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' ( ३७५ ) इति सूत्रं षष्ठाध्यायस्यान्तिम् । तत्र हिरण्ययशब्दस्य निपातनं क्रियते, तद्विषयकोऽयम्प्रश्नः ॥

पादश्चतुर्थोऽध्यायश्च षष्ठः समाप्तः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | | | |
|---|---|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निके ३ | आह्निके ४ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | १२६२ | ८ | १७ | २४ | २२ | ७१ | १३३१ |
| अव्याख्यातसूत्राणि | १७३६ | १३ | २३ | ४३ | २५ | १०४ | १८४० |
| समुदितसूत्राणि | २९९८ | २१ | ४० | ६७ | ४७ | १७५ | ३१७३ |
| वार्तिकानि | ६४९८ | २१ | ४४ | ३२ | ४३ | १४० | ६६३८ |

| | षष्ठाध्यायस्थसूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्रथमपादे | द्वितीयपादे | तृतीयपादे | चतुर्थपादे | समग्रेऽध्याये |
| आह्निकानि | ६ | २ | ३ | ४ | १५ |
| व्याख्यातसूत्राणि | १२५ | ३८ | ६५ | ७१ | २२९ |
| अव्याख्यातसूत्राणि | ९८ | १६१ | ७४ | १०४ | ४३७ |
| समुदितसूत्राणि | २२२ | १९९ | १३९ | १७५ | ३७५ |
| वार्तिकानि | ३७८ | ५८ | ११६ | १४० | ६९२ |

# षष्ठाध्यायस्थसूत्रवार्तिकपाठः ।

१ एकाचो द्वे प्रथमस्य ।

*एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः ॥ १ ॥
*एकवर्णेषु च व्यपदेशिवद्वचनात् ॥ २ ॥
*प्रथमत्वे च ॥ ३ ॥
*उक्तं वा ॥ ४ ॥
*योगविभागो वा ॥ ५ ॥
*एकाज्मात्रस्य द्विर्वचनार्थः ॥ ६ ॥
*एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनप्रसङ्गः ॥७॥
*तत्र जुस्भाववचनम् ॥ ८ ॥
*स्वरश्च ॥ ९ ॥
*अड्भावश्च ॥ १० ॥
*नुम्प्रतिषेधश्च ॥ ११ ॥
*शास्त्रहानिश्च ॥ १२ ॥
*सिद्धं तु तत्समुदायैकाच्त्वात् शास्त्रहाने ॥ १३ ॥
*तत्र बहुव्रीहिनिर्देशेऽनचकस्य द्विर्वचनमन्य-पदार्थत्वात् ॥ १४ ॥
*सिद्धं तु तद्गुणसंविज्ञानात्पाणिनेर्यथा लोके ॥ १५ ॥
*स्थाने द्विर्वचने णिलोपवचनं समुदाया-देशत्वात् ॥ १६ ॥
*यच सन्यङन्तस्य द्विर्वचने ॥ १७ ॥
*द्विःप्रयोग इति चेण्णकारषकारादेशादेरेत्व-वचनं लिटि ॥ १८ ॥
*इड्वचनं च यङ्लोपे ॥ १९ ॥
*इड्दीर्घप्रतिषेधश्च ॥ २० ॥
*पदादिविधिप्रतिषेधश्च ॥ २१ ॥

२ अजादेर्द्वितीयस्य ।

*द्वितीयस्येत्यवचनमजादेरिति कर्मधारयात्पञ्चमी॥१॥
*द्वितीयद्विर्वचने प्रथमनिवृत्तिः प्राप्तत्वात् ॥ २ ॥
*न वा प्रथमविज्ञाने हि द्वितीयाप्राप्तिरद्वितीयत्वात् ॥३
*यथा वाऽऽदिविकारेऽलोऽन्त्यविकाराभावः ॥ ४ ॥
*तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनस्यानिवृत्तिर-शासनात्पूर्वस्य ॥ ५ ॥
*न्द्रादिप्रतिषेधाच ॥ ६ ॥
*तत्र द्वितीयाभावे प्रथमाद्विर्वचनं प्रतिषिद्धत्वात् ॥७॥
*सति तस्मिन् प्रतिषेध इति चेद्धलादिशेषे दोषः ॥८॥
*लोकवद्धलादिशेषे ॥ ९ ॥
*क्वचिदन्यत्र लोप इति चेत् द्विर्वचनम् ॥ १० ॥

३ न न्द्राः संयोगादयः ।

*न्द्रादेर्द्विर्वचनप्रसङ्गस्तत्र न्द्राणां प्रतिषेधः ॥ १ ॥
*ईर्ष्यतेस्तृतीयस्य द्वे भवतः ॥ २ ॥
*कण्ड्वादीनां च ॥ ३ ॥
*वा नामधातूनाम् ॥ ४ ॥

४ पूर्वोऽभ्यासः ।

५ उभे अभ्यस्तम् ।

*अभ्यस्तसंज्ञायां सहग्रहणम् ॥ १ ॥
*आद्युदात्तत्वे पृथगप्रसङ्गार्थम् ॥ २ ॥

६ जक्षित्यादयः षट् ।

*जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम् ॥ १ ॥
*अपरिगणनं वा गणान्तत्वात् ॥ २ ॥

७ तुजादीनां दीर्घोऽभ्यासस्य ।

*तुजादिषु च्छन्दः प्रत्ययग्रहणम् ॥ १ ॥
*अनारम्भो वाऽपरिगणितत्वात् ॥ २ ॥
*अन्येषां च दर्शनात् ॥ ३ ॥
*अनेकान्तत्वाच्च ॥ ४ ॥

८ लिटि धातोरनभ्यासस्य ।

*लिटि द्विर्वचने जागर्तेर्वावचनम् ॥ १ ॥
*अभ्यासप्रतिषेधानर्थक्यं च छन्दसि वावचनात् ॥२॥
*प्रयोजनमादित्यान्याचिषामहे ॥ ३ ॥

९ सन्यङोः ।

*सन्यङोः परत इति चेदिटो द्विर्वचनं परादित्वात् ॥१॥
*हन्तेश्चेटः ॥ २ ॥
*एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनु-दात्तविशेषणं चेत्सन इट्प्रतिषेधः ॥ ३ ॥
*सन्यङन्तस्येति चेदशः सन्यनिटः ॥ ४ ॥
*दीर्घकुत्वप्रसारणषत्वमधिकस्य द्विर्वचनात् ॥ ५ ॥
*आवृद्ध्योश्चाभ्यस्तविधिप्रतिषेधः ॥ ६ ॥
*सङाश्रये च समुदायस्य समुदायादेशत्वात् झलाश्रये चाव्यपदेश आमिश्रत्वात् ॥ ७ ॥

१० श्लौ ।[१]
११ चङि ।❀
१२ दाश्वान् साह्वान्मीढ्वांश्च ।

*दाशेर्वसौ द्वित्वेट्प्रतिषेधौ ॥ १ ॥

१ यानि सूत्राणि भाष्ये न व्याख्यातानि ❀ तानीदृशचिन्हेन विभूष्यन्ते ।

*सहेर्दीर्घत्वं च ॥ २ ॥
*मिहेर्ढत्वं च ॥ ३ ॥
*मह्यर्थ इति चेन्मिहेस्तदर्थत्वात्सिद्धम् ॥ ४ ॥
*द्विर्वचनप्रकरणे कृञादीनां के ॥ ५ ॥
*चरिचलिपतिवदीनामच्याक् चाभ्यासस्य ॥ ६ ॥
*हन्तेर्घश्च ॥ ७ ॥
*पाटेर्णिलुक्च दीर्घश्चाभ्यासस्योक्च ॥ ८ ॥
*द्विर्वचनं यणयवायावादेशाल्लोपोपधालोप-णिलोपकिकिनोरुत्वेभ्यः ॥ ९ ॥
*द्विर्वचनात् प्रसारणात्वधात्वादिविकाररीत्वे-त्वेत्त्वोत्त्वगुणवृद्धिविधयः ॥ १० ॥

१३ ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ।
*ष्यङः संप्रसारणं पुत्रपत्योस्तदादावतिप्रसङ्गः ॥ १ ॥
*वर्णग्रहणात्सिद्धम् ॥ २ ॥
*वर्णग्रहण इति चेत्तदन्तप्रतिषेधः ॥ ३ ॥
*सिद्धं तूत्तरपदवचनात् ॥ ४ ॥
*यथागृहीतस्यादेशवचनादप्रत्ययस्थे सिद्धम् ॥ ५ ॥
*अनन्त्यविकारेऽन्त्यसदेशस्य वा ॥ ६ ॥
*प्रयोजनं न संप्रसारणे संप्रसारणम् ॥ ७ ॥
*सान्तमहतो दीर्घत्वे ॥ ८ ॥
*अन्कारान्तस्याल्लोपे ॥ ९ ॥
*मृजेर्वृद्धिविधौ ॥ १० ॥
*वसोः संप्रसारणे च ॥ ११ ॥
*युवादीनाञ्च ॥ १२ ॥
*वोरुपधाग्रहणं च ॥ १३ ॥
*आदित्यदादिविधिसंयोगादिलोपकुत्वढत्व-भष्भावषत्वणत्वेष्वतिप्रसङ्गः ॥ १४ ॥
*उदात्तनिदेशात् सिद्धम् ॥ १५ ॥

१४ वन्धुनि बहुव्रीहौ ।

१५ वचिस्वपियजादीनां किति ।❀

१६ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चति-पृच्छतिभृज्जतीनां ङिति च ।
*वयिग्रहणं वेञः प्रतिषेधात् ॥ १ ॥
*न वा यकारप्रतिषेधो ज्ञापकोऽप्रतिषेधस्य ॥ २ ॥
*पित्यभ्यासार्थमिति चेन्नाविशिष्टत्वात् ॥ ३ ॥

१७ लिट्यभ्यासस्योभयेषाम् ।
*ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः ॥ १ ॥
*अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेन ॥ २ ॥
*न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि ॥ ३ ॥
*प्रयोजनं रमाल्लोपेयङ्यणः ॥ ४ ॥
*व्यचेः कुटादित्वमनस्यञ्णिति संप्रसारणार्थम् ॥५॥

१८ स्वापेश्चङि ।

१९ स्वपिस्यमिव्येञां यङि ।❀

२० न वशः ।
*वशेर्यङि प्रतिषेधः ॥ १ ॥

२१ चायः की ।❀

२२ स्फायः स्फी निष्ठायाम् ।❀

२३ स्त्यः प्रपूर्वस्य ।❀

२४ द्रवमूर्तिस्पर्शयोः श्यः ।❀

२५ प्रतेश्च ।❀

२६ विभाषाभ्यवपूर्वस्य ।❀

२७ शृतं पाके ।
*श्राश्रप्योः शृभावः ॥ १ ॥
*श्रपेः शृतमन्यत्र हेतोः ॥ २ ॥

२८ प्यायः पी ।
*आङ्पूर्वादन्धूधसोः ॥ १ ॥

२९ लिड्यङोश्च ।❀

३० विभाषा श्वेः ।
*श्वेर्लिट्यभ्यासलक्षणप्रतिषेधः ॥ १ ॥

३१ णौ च संश्चङोः ।❀

३२–३३ ह्वः संप्रसारणम् । अभ्यस्तस्य च ।
*ह्वः संप्रसारणे योगविभागः ॥ १ ॥
*णौ च संश्चङ्विषयार्थः ॥ २ ॥
*अभ्यस्तनिमित्तेऽनभ्यस्तप्रसारणार्थम् ॥ ३ ॥
*अभ्यस्तप्रसारणे ह्यभ्यासप्रसारणाप्राप्तिः ॥ ४ ॥
*समानाङ्गे प्रसारणप्रतिषेधात् प्रतिषेधः ॥ ५ ॥
*कृदन्तप्रतिषेधार्थं च ॥ ६ ॥

३४ बहुलं छन्दसि ।❀

३५ चायः की ।❀

३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषे तित्याज श्राताः श्रितमाशीराशीर्तः ।

३७ न संप्रसारणे संप्रसारणम् ।
*प्रसारणप्रकरणे पुनः प्रसारणग्रहणमतोऽन्यत्र प्रसारणप्रतिषेधार्थम् ॥ १ ॥
*समानाङ्गग्रहणं च ॥ २ ॥
*तत्रोपोषुषि दोषः ॥ ३ ॥
*न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन् प्राप्ति-प्रतिषेधात् ॥ ४ ॥
*ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ॥ ५ ॥
*रयेर्मतौ बहुलम् ॥ ६ ॥
*कक्ष्यायाः संज्ञायाम् ॥ ७ ॥

३८ लिटि वयो यः ।❁

३९ वश्चास्यान्यतरस्यां किति ।

४० वेञः ।❁

४१ ल्यपि च ।❁

४२ ज्यश्च ।❁

४३ व्यश्च ।❁

४४ विभाषा परेः ।❁

४५ आदेच उपदेशेऽशिति ।

*आत्व एश्युपसंख्यानम् ॥ १ ॥

*अशित्येकादेशे प्रतिषेध आदिवत्त्वात् ॥ २ ॥

*प्रत्ययविधिः ॥ ३ ॥

*अभ्यासरूपं च ॥ ४ ॥

*अयवायावां प्रतिषेधश्च ॥ ५ ॥

*शिति प्रतिषेधे श्लुलुकोरुपसंख्यानम्—ररीध्वम्, त्राध्वम्, शिशीते ॥ ६ ॥

*प्रातिपदिकप्रतिषेधः ॥ ७ ॥

*धात्वधिकारात्प्रातिपदिकस्याप्राप्तिः ॥ ८ ॥

४६ न व्यो लिटि ।❁

४७ स्फुरतिस्फुलत्योर्घञि ।❁

४८ क्रीङ्जीनां णौ ।

*आत्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः ॥ १ ॥

४९ सिध्यतेरपारलौकिके ।

*सिध्यतेरज्ञानार्थस्य ॥ १ ॥

*इतरथा ह्यनिष्टप्रसङ्गः ॥ २ ॥

५० मीनातिमिनोतिदीङां ल्यपि च ।

*मीनात्यादीनामात्व उपदेशवचनं प्रत्ययविध्यर्थम् ॥ १ ॥

*निमिमीलियां खलचोः प्रतिषेधः ॥ २ ॥

५१ विभाषा लीयतेः ।

५२ खिदेश्छन्दसि ।❁

५३ अपगुरो णमुलि ।❁

५४ चिस्फुरोर्णौ ।❁

५५ प्रजने वीयतेः ।❁

५६ बिभेतेर्हेतुभये ।

५७ नित्यं स्मयतेः ।❁

५८ सृजिदृशोर्झल्यमकिति ।

*अमि सङ्ग्रहणम् ॥ १ ॥

*क्विप्प्रतिषेधार्थम् ॥ २ ॥

*उक्तं वा ॥ ३ ॥

५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।❁

६० शीर्षंश्छन्दसि ।

*शीर्षन् छन्दसि प्रकृत्यन्तरम् ॥ १ ॥

६१ ये च तद्धिते ।

*ये च तद्धिते शिरस आदेशार्थम् ॥ १ ॥

*वा केशेषु ॥ २ ॥

*अचि शीर्षः ॥ ३ ॥

*छन्दसि च ॥ ४ ॥

६२ अचि शीर्षः ।❁

६३ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।

*पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् ॥ १ ॥

*नस्नासिकाया यत्तस्क्षुद्रेषु ॥ २ ॥

६४ धात्वादेः षः सः ।

*सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः ॥ १ ॥

६५ णो नः ।

६६ लोपो व्योर्वलि ।

*व्योर्लोपे क्वावुपसंख्यानम् ॥ १ ॥

*वलोपाप्रसिद्धिरूङ्भाववचनात् ॥ २ ॥

*अतिप्रसङ्गो व्रश्चादिषु ॥ ३ ॥

*उपदेशसामर्थ्यात्सिद्धमिति चेत्संप्रसारणहलादिशेषेषु सामर्थ्यम् ॥ ४ ॥

*न वा बहिरङ्गलक्षणत्वात् ॥ ५ ॥

*अनारम्भो वा ॥ ६ ॥

*आस्रेमाणं जीरदानुरिति वर्णलोपात् ॥ ७ ॥

*यथा संस्फानो गयस्फानः ॥ ८ ॥

६७ वेरपृक्तस्य ।

*वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽनुनासिकपरत्वात् ॥ १ ॥

*धात्वन्तस्य चार्थवद्ग्रहणात् ॥ २ ॥

*वस्य वाऽनुनासिकत्वात्सिद्धम् ॥ ३ ॥

६८ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।

*हलन्तादपृक्तलोपः संयोगान्तलोपश्चेन्नलोपाभावो यथा पचन्निति ॥ १ ॥

*वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात् ॥ २ ॥

*यथा कूटतडिति ॥ ३ ॥

*रात्तलोपो नियमवचनात् ॥ ४ ॥

*रोरुत्वं च ॥ ५ ॥

*न वा संयोगान्तलोपस्योत्वे सिद्धत्वात् ॥ ६ ॥

*यथा हरिवो मेदिनमिति ॥ ७ ॥

६९ एङ्ह्रस्वात्संबुद्धेः ।
*संबुद्धिलोपे डतरादिभ्यः प्रतिषेधः ॥ १ ॥
*अपृक्ताधिकारस्य निवृत्तत्वात् ॥ २ ॥
*तच्चावश्यम् ॥ ३ ॥
*उक्तं वा ॥ ४ ॥
*अपृक्तसंबुद्धिलोपाभ्यां लुक् ॥ ५ ॥
*न वा लोपलुकोर्लुगवधारणाद्यथाऽनडुह्यत इति ॥ ६ ॥
७० शेश्छन्दसि बहुलम् ।
७१ ह्रस्वस्य पिति कृति तुक् ।
*तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥१॥
*न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥
*ग्रामणिपुत्रादिषु चाप्राप्तिः ॥ ३ ॥
*परादौ संयोगादेरित्यतिप्रसङ्गः ॥ ४ ॥
*विलोपवचनं च ॥ ५ ॥
*इट्प्रतिषेधश्च ॥ ६ ॥
*अभक्ते स्वरः ॥ ७ ॥
७२ संहितायाम् ।
७३ छे च ।❀
७४ आङ्माङोश्च ।
*आङ्माङोः सानुबन्धकयोर्निर्देशो गतिकर्मप्रवचनीयप्रतिषेधसंप्रत्ययार्थः ॥ १ ॥
७५ दीर्घात् ।
७६ पदान्ताद्वा ।
*दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि ॥ १ ॥
७७ इको यणचि ।
*यणादेशः प्लुतपूर्वस्य च ॥ १ ॥
*दीर्घशाकलप्रतिषेधार्थम् ॥ २ ॥
७८ एचोऽयवायावः ।❀
७९ वान्तो यि प्रत्यये ।
*वान्तादेशे स्थानिनिर्देशः ॥ १ ॥
*गोर्यूतौ छन्दसि ॥ २ ॥
*अध्वपरिमाणे च ॥ ३ ॥
८० धातोस्तन्निमित्तस्यैव ।
८१ क्षय्यजय्यौ शक्यार्थे ।❀
८२ क्रय्यस्तदर्थे ।
८३ भय्यप्रवय्ये च छन्दसि ।
*भय्यादिप्रकरणे हृदय्या उपसंख्यानम् ॥ १ ॥
*अव् शरस्य च ॥ २ ॥
*शरुवृत्ताद्वा सिद्धम् ॥ ३ ॥
*ऋञ्जसी शरुरित्यपि दृश्यते ॥ ४ ॥
*शरुहस्त इति च लोके ॥ ५ ॥

८४ एकः पूर्वपरयोः ।
*एकवचनं पृथगादेशप्रतिषेधार्थम् ॥ १ ॥
*न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तेः ॥ २ ॥
*तच्चैकवाक्यभावात् ॥ ३ ॥
*तत्रावयवे शास्त्रार्थसम्प्रत्ययो यथा लोके ॥ ४ ॥
*सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानात् यथा लौकिकवैदिकेषु ॥ ५ ॥
*पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् ॥ ६ ॥
*पञ्चमीनिर्दिष्टाद्धि परस्य ॥ ७ ॥
*षष्ठीनिर्दिष्टार्थं तु ॥ ८ ॥
*अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः ॥ ९ ॥
८५ अन्तादिवच्च ।
*अन्तादिवद्वचनमामिश्रस्यादेशवचनात् ॥ १ ॥
*तत्र यस्यान्तादिवत्तन्निर्देशः ॥ २ ॥
*सिद्धं तु पूर्वपराधिकारात् ॥ ३ ॥
*अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठज्विधाने ॥ ४ ॥
*प्रत्ययकादेशः पूर्वविधौ ॥ ५ ॥
*वैभक्तस्य णत्वे ॥ ६ ॥
*अदस ईत्वोत्वे ॥ ७ ॥
*स्वरितत्वं विप्रतिषेधात् ॥ ८ ॥
*लिङ्गविशिष्टग्रहणाद्वा ॥ ९ ॥
*पूर्वपदान्तोदात्तत्वं च ॥ १० ॥
*एकादेशे हि स्वरिताप्रसिद्धिः ॥ ११ ॥
*कृदन्तप्रकृतिस्वरत्वं च ॥ १२ ॥
*एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात् ॥ १३ ॥
*उत्तरपदवृद्धिश्चैकादेशात् ॥ १४ ॥
*एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात् ॥ १५ ॥
*तत्र वृद्धिविधानम् ॥ १६ ॥
*आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम् ॥ १७ ॥
*सुप्तिङ्विधिषु ॥ १८ ॥
*आङ्ग्रहणे पदविधौ ॥ १९ ॥
*आटश्च वृद्धिविधौ ॥ २० ॥
*कृदन्तप्रातिपदिकत्वे च ॥ २१ ॥
*नाभ्यासादीनां ह्रस्वत्वे ॥ २२ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ २३ ॥
*वर्णाश्रयविधौ च ॥ २४ ॥
*प्रयोजनं खट्वाभिर्जुहावास्या अश्व इति ॥ २५ ॥
*न वाऽताद्रूप्यातिदेशात् ॥ २६ ॥
८६ षत्वतुकोरसिद्धः ।
*षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च ॥ १ ॥
*तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् ॥ २ ॥

*असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्ध-
वचनादन्यस्य भावः ॥ ३ ॥
*तस्मात्स्थानिवद्वचनमसिद्धत्वं च ॥ ४ ॥
*स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात् ॥ ५ ॥
*संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेका-
देशस्यासिद्धवचनात् ॥ ६ ॥

८७ आद्गुणः ।

*गुणे ङिशीटामुपसंख्यानं दीर्घत्वबाधनार्थम् ॥ १ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

८८ वृद्धिरेचि ।❀

८९ एत्येधत्यूठ्सु ।

*इणीकारादौ प्रतिषेधः ॥ १ ॥
*योगविभागात्सिद्धम् ॥ २ ॥
*अक्षादूहिन्याम् ॥ ३ ॥
*प्रादूहोढोढ्येषैष्येषु ॥ ४ ॥
*स्वादीरेरिणोः ॥ ४ ॥
*ऋते च तृतीयासमासे ॥ ५ ॥
*प्रवत्सतरकम्बलवसनानां चर्णे ॥ ६ ॥
*ऋणदशाभ्यां च ॥ ७ ॥

९० आटश्च ।

९१ उपसर्गादृति धातौ ।

*उपसर्गाद्वृद्धिविधौ धातुग्रहणे उक्तम् ॥ १ ॥
*छे तुकः संबुद्धिगुणः ॥ २ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ ३ ॥
*सम्प्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणादयश्च ॥ ४ ॥
*यणादेशादाद्गुणः ॥ ५ ॥
*इरुर्गुणवृद्धिविधयश्च ॥ ६ ॥
*भलोपधातुप्रातिपदिकप्रत्ययसमासान्तो-
दात्तोदात्तनिवृत्तिस्वरा एकादेशाच्च ॥ ७ ॥
*अल्लोपाल्लोपौ चार्धधातुके ॥ ८ ॥
*इयङुवङ्गुणवृद्धिटिकिन्मित्पूर्वपदविकाराश्च ॥ ९ ॥
*उत्तरपदविकाराश्च ॥ १० ॥

९२ वा सुप्यापिशलेः ।❀

९३ औतोम्शसोः ।

*ओतस्तिङि प्रतिषेधः ॥ १ ॥
*गोग्रहणे द्योरुपसंख्यानम् ॥ २ ॥
*समासाच्च प्रतिषेधः ॥ ३ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ ४ ॥
*सुबधिकारात्सिद्धम् ॥ ५ ॥
*एकयोगे चैकदेशानुवृत्तिरन्यत्रापि ॥ ६ ॥
*अम्युपसंख्यानं वृद्धिबलीयस्त्वात् ॥ ७ ॥
*न वाऽनवकाशत्वात् ॥ ८ ॥

*द्योश्च सर्वनामस्थाने वृद्धिविधिः ॥ ९ ॥
*यद्याव इन्द्रेति दर्शनात् ॥ १० ॥

९४ एङि पररूपम् ।

*पररूपप्रकरणे तुन्वोर्विनिपात उपसंख्यानम् ॥ १ ॥
*न वा निपातैकत्वात् ॥ २ ॥
*एवे चानियोगे ॥ ३ ॥
*शकन्ध्वादिषु च ॥ ४ ॥
*ओत्वोष्ठयोः समासे वा ॥ ५ ॥
*एमनादिषु च्छन्दसि ॥ ६ ॥

९५ ओमाङोश्च ।

*उस्योमाङ्क्ष्वाटः प्रतिषेधः ॥ १ ॥

९६ उस्यपदान्तात् ।

९७ अतो गुणे ।❀

९८ अव्यक्तानुकरणस्यात इतौ ।

*इतावनेकाज्ग्रहणं श्रदर्थम् ॥ १ ॥

९९ नाम्रेडितस्यान्त्यस्य तु वा ।

*नित्यमाम्रेडिते डाचि ॥ १ ॥
*अकारान्तानुकरणाद्वा ॥ २ ॥

१०० नित्यमाम्रेडिते डाचि ।❀

१०१ अकः सवर्णे दीर्घः ।

*सवर्णदीर्घत्वे ऋति ऋ वावचनम् ॥ १ ॥
*ऌति ऌ वा ॥ २ ॥

१०२ प्रथमयोः पूर्वसवर्णः ।

*प्रथमयोरिति योगविभागः सवर्णदीर्घार्थः ॥ १ ॥
*एकयोगे हि जश्शसोः पररूपप्रसङ्गः ॥ २ ॥
*आद्गुणयणादेशयोरपवादा वृद्धिसवर्णदीर्घ-
पूर्वसवर्णादेशास्तेषां पररूपं स्वरसन्धिषु ॥ ३ ॥
*योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यति-
प्रसङ्गः ॥ ४ ॥
*नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् ॥ ५ ॥
*इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य ॥ ६ ॥

१०३ तस्माच्छसो नः पुंसि ।

१०४ नादिचि ।❀

१०५ दीर्घाज्जसि च ।❀

१०६ वा छन्दसि ।❀

१०७ अमि पूर्वः ।

१०८ संप्रसारणाच्च ।

*संप्रसारणात्परपूर्वत्वे समानाङ्गग्रहणमसमानाङ्ग-
प्रतिषेधार्थम् ॥ १ ॥
*सिद्धमसंप्रसारणात् ॥ २ ॥
*कार्यकृतत्वाद्वा ॥ ३ ॥

१ एतद्वार्तिकमेव, इदानीं सूत्रपाठे पठ्यत इति अत्रोपादान्तम् ।

*दीर्घत्वं वचनप्रामाण्यात् ॥ ४ ॥
*अन्तवत्त्वाद्वा ॥ ५॥
*आटो वृद्धेरियङ् ॥ ६ ॥
*आङ्गुणात्सवर्णदीर्घत्वमाङभ्यासयोः ॥ ७ ॥
*स्वरदोषस्तु ॥ ८ ॥
*आङि पररूपं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य ॥ ९ ॥
*प्रयोजनं पूर्वसवर्णपूर्वत्वतहिलोपटेनङेर्यङि-
स्मिनूङिणलौत्वमन्तरङ्गं बहिरङ्गलक्षणा-
द्वर्णविकारात् ॥ १० ॥

१०९ एङः पदान्तादति ।❀
११० ङसिङसोश्च ।❀
१११ ऋत उत् ।❀
११२ ख्यत्यात्परस्य ।
११३ अतो रोरप्लुतादप्लुते ।
*अप्लुतादप्लुतवचनेऽकारहशोः समानपदे
प्रतिषेधः ॥ १ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥
११४ हशि च ।❀
११५ नान्तःपादमव्यपरे[1] ।
*नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः ॥ १ ॥
*अकाराश्रयमिति चेदुत्ववचनम् ॥ २ ॥
*अयवोः प्रतिषेधश्च ॥ ३ ॥
*एङ्प्रकरणात्सिद्धमिति चेदुत्वप्रतिषेधः ॥ ४ ॥
*पुनरेङ्ग्रहणात्सिद्धम् ॥ ५ ॥
११६ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।❀
११७ यजुष्युरः ।❀
११८ आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे ।❀
११९ अङ्ग इत्यादौ च ।❀
१२० अनुदात्ते च कुधपरे ।❀
१२१ अवपथासि च ।❀
१२२ सर्वत्र विभाषा गोः ।❀
१२३ अवङ् स्फोटायनस्य ।
*गोरवचनं गवाग्रे स्वरसिद्ध्यर्थम् ॥ १ ॥
*अवङादेशे हि स्वरे दोषः ॥ २ ॥
१२४ इन्द्रे च ।
१२५ प्लुतप्रगृह्या अचि नित्यम् ।
*प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकमधिकारात्सिद्धम् ॥ १ ॥
*तत्तु तस्मिन् प्रकृतिभावार्थम् ॥ २ ॥

१ इदानीन्तनोपलब्धाष्टाध्यायीपाठे 'प्रकृत्यान्तःपादमव्यपरे' इति पाठो दृश्यते ।

*प्लुतप्रकृतिभाववचनं तु ज्ञापकमेकादेशात्
प्लुतो विप्रतिषेधेनेति ॥ ३ ॥
*एकादेशात् प्लुतो विप्रतिषेधेनेति चेच्छालेन्द्रे-
ऽतिप्रसङ्गः ॥ ४ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ ५ ॥
१२६ आङोऽनुनासिकश्छन्दसि ।
*आङोऽनर्थकस्य ॥ १ ॥
१२७ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।
*सिन्नित्यसमासयोः शाकलप्रतिषेधः ॥ १ ॥
*ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रम् ॥ २ ॥
१२८ ऋत्यकः ।
*ऋत्यकः सवर्णार्थः ॥ १ ॥
*अनिगन्तार्थं च ॥ २ ॥
*ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन ॥ ३ ॥
१२९ अप्लुतवदुपस्थिते ।
*वद्वचनं प्लुतकार्यप्रतिषेधार्थम् ॥ १ ॥
*प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गो-
ऽन्येन विहितत्वात् ॥ २ ॥
१३० ई३चाक्रवर्मणस्य ।
*ई३ चाक्रवर्मणस्येत्यनुपस्थितार्थम् ॥ १ ॥
१३१ दिव उत् ।
१३२ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।❀
१३३ स्यश्छन्दसि बहुलम् ।❀
१३४ सोऽचि लोपे चेत्पादपूरणम् ।❀
१३५ सुट् कात्पूर्वः ।
*सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति
चेदन्तरेणापि तत्सिद्धम् ॥ १ ॥
*द्विर्वचनात्सुड्विप्रतिषेधेनेति चेत् द्विर्भूते
शब्दान्तरभावात्पुनः प्रसङ्गः ॥ २ ॥
*द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्ग इति
चेत् द्विर्वचनम् ॥ ३ ॥
*तथा चानवस्था ॥ ४ ॥
*अड्व्यवाय उपसंख्यानम् ॥ ५ ॥
*अभ्यासव्यवाये च ॥ ६ ॥
*अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् सुटः ॥ ७ ॥
*उपदेशिवद्वचनं च ॥ ८ ॥
*लिटिगुणवद्दिर्घप्रतिषेधार्थम् ॥ ९ ॥
*कात्पूर्वान्त इति चेद्गुविधिप्रविषेधः ॥ १० ॥
*परादाविड्गुणप्रसङ्गः ॥ ११ ॥
*अभक्ते स्वरे दोषः ॥ १२ ॥

१३६ अडभ्यासव्यवायेऽपि ।❀

१३७ संपर्युपेभ्यः करोतौ भूषणे ।❀

१३८ समवाये च ।❀

१३९ उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ।❀

१४० किरतौ लवने ।❀

१४१ हिंसायां प्रतेश्च ।❀

१४२ अपाच्चतुष्पाच्छकुनिष्वालेखने ।

*किरतेर्हर्षजीविकाकुलायकरणेषु ॥ १ ॥

१४३ कुस्तुम्बुरूणि जातिः ।❀

१४४ अपरस्पराः क्रियासातत्ये ।

*समो हिततततयोर्वा लोपः ॥ १ ॥

*सन्तुमुनोः कामे ॥ २ ॥

*अवश्यमः कृत्ये ॥ ३ ॥

१४५ गोष्पदं सेवितासेवितप्रमाणेषु ।

१४६ आस्पदं प्रतिष्ठायाम् ।❀

१४७ आश्चर्यमनित्ये ।

*आश्चर्यमद्भुते ॥ १ ॥

१४८ वर्चस्केऽवस्करः ।❀

१४९ अपस्करो रथाङ्गम् ।❀

१५० [1]विष्किरः शकुनौ वा ।

*विष्किरः शकुनौ विकिरो वा ॥ १ ॥

१५१ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ।❀

१५२ प्रतिष्कशश्च कशेः ।❀

१५३ प्रस्कण्वहरिश्चन्द्रावृषी ।❀

१५४ मस्करमस्करिणौ वेणुपरिव्राजकयोः ।

१५५ कास्तीराजस्तुन्दे नगरे ।❀

१५६ कारस्करो वृक्षः ।❀

१५७ पारस्करप्रभृतीनि च संज्ञायाम् ।

१५८ अनुदात्तं पदमेकवर्जम् ।

*अनुदात्ते विप्रतिषेधानुपपत्तिरेकस्मिन् युगपत्संभवात् ॥ १ ॥

*सिद्धं त्वेकानुदात्तत्वात् ॥ २ ॥

*एकवर्जमिति चाप्रसिद्धिः सन्देहात् ॥ ३ ॥

*सिद्धं तु यस्मिन्ननुदात्त उदात्तवचनानर्थक्यं तद्वर्जम् ॥ ४ ॥

*प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः ॥५॥

*विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यायादिषु चित्करणम् ॥ ६ ॥

*सिद्धं तु प्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वरभावः ॥७॥

*सति शिष्टस्वरबलीयस्त्वं च ॥ ८ ॥

*तच्चानेकप्रत्ययसमासार्थम् ॥ ९ ॥

*स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात् ॥ १० ॥

*शास्त्रपरविप्रतिषेधानियमाद्वा शब्दपरविप्रतिषेधात्सिद्धम् ॥ ११ ॥

*विभक्तिस्वरान्नञ्स्वरो बलीयान् ॥ १२ ॥

*विभक्तिनिमित्तस्वराच्च ॥ १३ ॥

*यच्चोपपदं कृति नञ् ॥ १४ ॥

*सहनिर्दिष्टस्य च ॥ १५ ॥

१५९ कर्षात्वतो घञोऽन्त उदात्तः ।

१६० उञ्छादीनां च ।❀

१६१ अनुदात्तस्य च यत्रोदात्तलोपः ।

*उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् ॥ १ ॥

*अन्त इति चेत् श्नम्क्सयुष्मदस्मदिदंकिंलोपेषु स्वरः ॥ २ ॥

*आदिरिति चेदिन्धीत ह्यमित्यन्तः ॥ ३ ॥

*आदौ सिद्धम् ॥ ४ ॥

*विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम् ॥ ५ ॥

*अयचि चित्करणात् ॥ ६ ॥

१६२ धातोः ।

*धातोरन्त इति चेदनुदात्तेचश्चग्रहणम् ॥ १ ॥

*संश्च नित् ॥ २ ॥

*आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वम् ॥ ३ ॥

*अन्तोदात्तवचनात्सिद्धम् ॥ ४ ॥

*पिबौ निपातनम् ॥ ५ ॥

१६३ चितः ।

*चितः सप्रकृतेर्बह्वकजर्थम् ॥ १ ॥

१६४ तद्धितस्य ।❀

१६५ कितः ।❀

१६६ तिसृभ्यो जसः ।

*तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् ॥ १ ॥

१६७ चतुरः शसि ।

*चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् ॥ १ ॥

*विभक्तिस्वरभावश्च हलादिग्रहणात् ॥ २ ॥

*आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् ॥ ३ ॥

१६८ सावेकाचस्तृतीयादिर्विभक्तिः ।

*सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधः ॥ १ ॥

---

१ 'विष्किरः शकुनिर्विकिरो वा' इति सूत्रपाठ इदानीं दृश्यते ॥

*सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ ॥ २ ॥
*प्रकृतेस्त्वनेकाच्त्वात् ॥ ३ ॥

१६९ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।

१७० अञ्चेश्छन्दस्यसर्वनामस्थानम् ।❀

१७१ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ।
*ऊठ्युपधाग्रहणम् ॥ १ ॥

१७२ अष्टनो दीर्घात् ।
*अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम् ॥ १ ॥

१७३ शतुरनुमो नद्यजादी ।
*नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् ॥ १ ॥

१७४ उदात्तयणो हल्पूर्वात् ।
*उदात्तयणि हल्ग्रहणं नकारान्तार्थम् ॥ १ ॥
*हल्पूर्वग्रहणानर्थक्यं च समुदायादेशत्वात् ॥ २ ॥
*स्वरितत्वे वावचनात् ॥ ३ ॥

१७५ नोङ्धात्वोः ।❀

१७६ ह्रस्वनुड्भ्यां मतुप् ।
*मतुबुदात्तत्वे रेग्रहणम् ॥ १ ॥
*त्रिप्रतिषेधश्च ॥ २ ॥

१७७ नामन्यतरस्याम् ।
*नाम्स्वरे मतौ ह्रस्वग्रहणम् ॥ १ ॥

१७८ ङ्याश्छन्दसि बहुलम् ।❀
१७९ षट्त्रिचतुर्भ्यो हलादिः ।❀
१८० झल्युपोत्तमम् ।❀
१८१ विभाषा भाषायाम् ।❀

१८२ न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ।

१८३ दिवो झल् ।❀
१८४ नृ चान्यतरस्याम् ।❀

१८५ तित्स्वरितम् ।
*तिति प्रत्ययग्रहणम् ॥ १ ॥

१८६ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ।
*तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः ॥ १ ॥
*चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन ॥ २ ॥
*मुकश्चोपसंख्यानम् ॥ ३ ॥
*इतश्चोपसंख्यानम् ॥ ४ ॥
*इतश्चानेकान्तत्वात् ॥ ५ ॥
*तत्रादिप्रभृतिभ्यो जुहोत्यादिभ्योऽप्रपेतिधः स्थान्यादेशाभावात् ॥ ६ ॥
*अनुदात्तङिद्ग्रहणाद्वा ॥ ७ ॥
*ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् ॥ ८ ॥

१८७ आदिः सिचोऽन्यतरस्याम् ।
*सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् ॥ १ ॥

१८८ स्वपादिर्हिंसामच्यनिटि ।
*स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन ॥ १ ॥

१८९ अभ्यस्तानामादिः ।❀

१९० अनुदात्ते च ।
*अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ॥ १ ॥

१९१ सर्वस्य सुपि ।
*सर्वस्वरोऽनकच्कस्य ॥ १ ॥

१९२ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ।

१९३ लिति ।❀
१९४ आदिर्णमुल्यन्यतरस्याम् ।❀

१९५ अचः कर्तृयकि ।
*यकि रपर उपसंख्यानम् ॥ १ ॥
*उपदेशवचनात्सिद्धम् ॥ २ ॥
*उपदेशवचने जनादीनाम् ॥ ३ ॥
*योगविभागात्सिद्धम् ॥ ४ ॥

१९६ थलि च सेटीडन्तो वा ।

१९७ ञ्नित्यादिर्नित्यम् ।❀
१९८ आमन्त्रितस्य च ।❀
१९९ पथिमथोः सर्वनामस्थाने ।❀
२०० अन्तश्च तवै युगपत् ।❀
२०१ क्षयो निवासे ।❀
२०२ जयः करणम् ।❀
२०३ वृषादीनां च ।❀

२०४ संज्ञायामुपमानम् ।
*उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य ॥ १ ॥

२०५ निष्ठा च द्व्यजनात् ।
*निष्ठायां यञि दीर्घत्वे प्रतिषेधः ॥ १ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

२०६ शुष्कधृष्टौ ।❀

२०७ आशितः कर्ता ।
*आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च ॥ १ ॥

२०८ रिक्ते विभाषा ।
२०९ जुष्टार्पिते च च्छन्दसि ।❀
२१० नित्यं मन्त्रे ।❀
२११ युष्मदस्मदोर्ङसि ।❀
२१२ ङयि च ।❀
२१३ यतोऽनावः ।❀
२१४ ईडवन्दवृशंसदुहां ण्यतः ।❀
२१५ विभाषा वेण्विन्धानयोः ।
२१६ त्यागरागहासकुहश्वठक्रथानाम् ।❀
२१७ उपोत्तमं रिति ।
२१८ चङ्यन्यतरस्याम् ।❀
२१९ मतोः पूर्वमात्संज्ञायां स्त्रियाम् ।❀
२२० अन्तोऽवत्याः ।
२२१ ईवत्याः ।
२२२ चौ ।
*चौरतद्धिते ॥ १ ॥
२२३ समासस्य ।
*समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् ॥ १ ॥
*हलस्वरप्राप्तौ वा व्यञ्जनमविद्यमानवत् ॥ २ ॥
*प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः ॥ ३ ॥
एकाचश्चायोल्यपि च ये च क्षय्यजय्यावक्रः-सवर्णेऽवपथा हिंसायामनुदात्तस्य विभाषा क्षय ईवत्या स्त्रीणि ॥

---

अथ द्वितीयः पादः ।

१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ।
२ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।
*तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः ॥ १ ॥
*सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥ २ ॥
*अव्यये नञ्कुनिपातानाम् ॥ ३ ॥
*क्त्वायां वा प्रतिषेधः ॥ ४ ॥
*निपातनात्सिद्धम् ॥ ५ ॥
३ वर्णो वर्णेष्वनेते ।❀
४ गाधलवणयोः प्रमाणे ।❀
५ दायाद्यं दायादे❀
६ प्रतिबन्धि चिरकृच्छ्रयोः ।❀
७ पदेऽपदेशे ।❀
८ निवाते वातत्राणे ।❀
९ शारदेऽनार्तवे ।❀
१० अध्वर्युकषाययोर्जातौ ।❀
११ सदृशप्रतिरूपयोः सादृश्ये ।
*सदृशग्रहणमनर्थकं तृतीयासमासवचनात् ॥ १ ॥
*षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् ॥ २ ॥
१२ द्विगौ प्रमाणे ।❀
१३ गन्तव्यपण्यं वाणिजे ।❀
१४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ।❀
१५ सुखप्रिययोर्हिते ।❀
१६ प्रीतौ च ।❀
१७ स्वं स्वामिनि ।❀
१८ पत्यावैश्वर्ये ।❀
१९ न भूवाक्चिद्दिधिषु ।❀
२० वा भुवनम् ।❀
२१ आशङ्काबाधनेदीयःसु संभावने ।❀
२२ पूर्वे भूतपूर्वे ।
२३ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ।❀
२४ विस्पष्टादीनि गुणवचनेषु ।❀
२५ श्रज्यावमकन्पापवत्सु भावे कर्मधारये ।❀
२६ कुमारश्च ।❀
२७ आदिः प्रत्येनसि ।❀
२८ पूगेष्वन्यतरस्याम् ।❀
२९ इगन्तकालकपालभगालशरावेषु द्विगौ ।
*इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानम् ॥ १ ॥
*न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥
३० बह्वन्यतरस्याम् ।❀
३१ दिष्टिवितस्त्योश्च ।❀
३२ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ।❀
३३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ।
*परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन ॥ १ ॥
*न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ॥ २
३४ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ।❀
३५ संख्या ।❀
३६ आचार्योपसर्जनश्चान्तेवासी ।
*आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्संदेहः ॥ १ ॥
*लोकविज्ञानात्सिद्धम् ॥ २ ॥
३७ कार्तकौजपादयश्च ।❀
३८ महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ।
३९ क्षुल्लकश्च वैश्वदेवे ।❀
४० उष्ट्रः सादिवाम्योः ।❀
४१ गौः सादसादिसारथिषु ।❀

४२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ।

*कुरुवृज्योर्गार्हपते ॥ १ ॥

*पण्यकम्बलः संज्ञायाम् ॥ २ ॥

४३ चतुर्थी तदर्थे ।❀

४४ अर्थे ।❀

४५ के च ।❀

४६ कर्मधारयेऽनिष्ठा ।❀

४७ अहीने द्वितीया ।

*अहीने द्वितीयाऽनुपसर्गे ॥ १ ॥

४८ तृतीया कर्मणि ।❀

४९ गतिरनन्तरः ।

*गतेरनन्तरग्रहणमनर्थकं गतिर्गताविति वचनात्॥१॥

*तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तत्वप्रसङ्गः॥२॥

*प्रकृतिस्वरवचनाच्चानन्तोदात्तत्वम् ॥ ३ ॥

*प्रकृतिस्वरवचनं किमर्थमिति चेत् एकगत्यर्थम् ॥४॥

*अपूर्वपदार्थमिति चेत् कारकेऽतिप्रसङ्गः ॥ ५ ॥

*सिद्धं तु गतेरन्तोदात्तप्रसङ्गात् ॥ ६ ॥

५० तादौ च निति कृत्यतौ ।

*तादौ निति कृद्ग्रहणानर्थक्यम् ॥ १ ॥

*कृदुपदेशे वा ताद्यर्थमिडर्थम् ॥ २ ॥

५१ तवै चान्तश्च युगपत् ।❀

५२ अनिगन्तोऽञ्चतौ वप्रत्यये ।

*अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्गः ॥ १ ॥

*अनिगन्तवचनं किमर्थमिति चेद्यणादिष्टार्थम् ॥२॥

*उक्तं वा ॥ ३ ॥

*चोरनिगन्तोऽञ्चतावप्रत्यये ॥ ४ ॥

*न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादः ॥ ५ ॥

*विभक्तीषत्स्वरात्कृत्स्वरः ॥ ६ ॥

*चित्स्वराद्धारिस्वरः ॥ ७ ॥

*न वा हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य ॥८॥

५३ न्यधी च ।❀

५४ ईषदन्यतरस्याम् ।❀

५५ हिरण्यपरिमाणं धने ।❀

५६ प्रथमोऽचिरोपसंपत्तौ ।❀

५७ कतरकतमौ कर्मधारये ।❀

५८ आर्यो ब्राह्मणकुमारयोः ।❀

५९ राजा च ।❀

६० षष्ठी प्रत्येनसि ।❀

६१ क्के नित्यार्थे ।❀

६२ ग्रामः शिल्पिनि ।❀

६३ राजा च प्रशंसायाम् ।❀

६४ आदिरुदात्तः ।❀

६५ सप्तमी हारिणौ धर्म्येऽहरणे ।❀

६६ युक्ते च ।❀

६७ विभाषाध्यक्षे ।❀

६८ पापं च शिल्पिनि ।❀

६९ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।❀

७० अङ्गानि मैरेये ।❀

७१ भक्ताख्यास्तदर्थेषु ।❀

७२ गोबिडालसिंहसैन्धवेषूपमाने ।❀

७३ अके जीविकार्थे ।❀

७४ प्राचां क्रीडायाम् ।❀

७५ अणि नियुक्ते ।❀

७६ शिल्पिनि चाकृञः ।❀

७७ संज्ञायां च ।❀

७८ गोतन्तियवं पाले ।❀

७९ णिनिः ।❀

८० उपमानं शब्दार्थप्रकृतावेव ।

८१ युक्तारोह्यादयश्च ।❀

८२ दीर्घकाशतुषभ्राष्ट्रवटं जे ।

८३ अन्त्यात्पूर्वं बह्वचः ।❀

८४ ग्रामेऽनिवसन्तः ।❀

८५ घोषादिषु च ।❀

८६ छात्र्यादयः शालायाम् ।❀

८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ।❀

८८ मालादीनां च ।❀

८९ अमहन्नवं नगरेऽनुदीचाम् ।❀

९० अर्मे चावर्णं द्व्यच्त्र्यच् ।❀

९१ न भूताधिकसञ्जीवमद्राश्मकज्जलम् ।

९२ अन्तः ।

९३ सर्वं गुणकार्त्स्न्ये ।

*गुणात्तरेण समासस्तरलोपश्च ॥ १ ॥

९४ संज्ञायां गिरिनिकाययोः ।❀

९५ कुमार्यां वयसि ।❀

९६ उदकेऽकेवले ।❀

९७ द्विगौ क्रतौ ।❀

९८ सभायां नपुंसके ।❀

९९ पुरे प्राचाम् ।❀

१०० अरिष्टगौडपूर्वे च ।❀

१०१ न हास्तिनफलकमार्देयाः ।❀
१०२ कुसूलकूपकुम्भशालं बिले ।❀
१०३ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।❀
१०४ आचार्योपसर्जनश्चान्तेवासिनि ।❀
१०५ उत्तरपदवृद्धौ सर्वं च ।
१०६ बहुव्रीहौ विश्वं संज्ञायाम् ।
*बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः ॥ १ ॥
१०७ उदराश्वेषुषु ।
१०८ क्षेपे ।
*उदरादिभ्यो नञ्सुभ्याम् ॥ १ ॥
१०९ नदी बन्धुनि ।❀
११० निष्ठोपसर्गपूर्वमन्यतरस्याम् ।❀
१११ उत्तरपदादिः ।❀
११२ कर्णो वर्णलक्षणात् ।❀
११३ संज्ञौपम्ययोश्च ।❀
११४ कण्ठपृष्ठग्रीवाजङ्घं च ।❀
११५ शृङ्गमवस्थायां च ।❀
११६ नञो जरमरमित्रमृताः ।❀
११७ सोर्मनसी अलोमोषसी ।
*सोर्मनसोः कपि ॥ १ ॥
११८ क्रत्वादयश्च ।❀
११९ आद्युदात्तं द्व्यच्छन्दसि ।❀
१२० वीरवीर्यौ च ।❀
१२१ कूलतीरतूलमूलशालाक्षसममव्ययीभावे ।
*पर्यादिभ्यः कूलादीनामाद्युदात्तत्वम् ॥ १ ॥
१२२ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।❀
१२३ तत्पुरुषे शालायां नपुंसके ।❀
१२४ कन्था च ।❀
१२५ आदिश्चिहणादीनाम् ।❀
१२६ चेलखेटकटुककाण्डं गर्हायाम् ।
१२७ चीरमुपमानम् ।❀
१२८ पललसूपशाकं मिश्रे ।❀
१२९ कूलसूदस्थलकर्षाः संज्ञायाम् ।❀
१३० अकर्मधारये राज्यम् ।
*चेलराज्यादिभ्योऽव्ययम् ॥ १ ॥
१३१ वर्ग्यादयश्च ।❀
१३२ पुत्रः पुम्भ्यः ।❀
१३३ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।❀
१३४ चूर्णादीन्यप्राणिषष्ठ्याः ।❀
१३५ षट् च काण्डादीनि ।❀
१३६ कुण्डं वनं वनम् ।
*कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् ॥ १ ॥
१३७ प्रकृत्या भगालम् ।❀
१३८ शितेर्नित्याबह्वज्बहुव्रीहावभसत् ।❀
१३९ गतिकारकोपपदात्कृत् ।
*गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमनस्योत्तरपदस्याभावात् ॥ १ ॥
*कृत्प्रकृतौ वा गतित्वादधिकार्थं कृद्ग्रहणम् ॥ २ ॥
१४० उभे वनस्पत्यादिषु युगपत् ।❀
१४१ देवताद्वन्द्वे च ।❀
१४२ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।❀
१४३ अन्तः ।
*अन्तोदात्तत्वं समासस्येति चेत्कप्युपसंख्यानम् ॥१॥
*उत्तरपदान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् ॥ २ ॥
*न वा कपि पूर्ववचनं ज्ञापकमुत्तरपदान्तोदात्तत्वस्य ॥ ३ ॥
*प्रकरणाच्च समासान्तोदात्तत्वम् ॥ ४ ॥
१४४ थाथघञ्क्ताजबित्रकाणाम् ।❀
१४५ सूपमानात् क्तः ।❀
१४६ संज्ञायामनाचितादीनाम् ।❀
१४७ प्रवृद्धादीनां च ।❀
१४८ कारकाद्दत्तश्रुतयोरेवाशिषि ।
*कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधः ॥ १ ॥
*सिद्धं तूभयनियमात् ॥ २ ॥
१४९ इत्थंभूतेन कृतमिति च ।❀
१५० अनो भावकर्मवचनः ।❀
१५१ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।❀
१५२ सप्तम्याः पुण्यम् ।❀
१५३ ऊनार्थकलहं तृतीयायाः ।❀
१५४ मिश्रं चानुपसर्गमसंधौ ।❀
१५५ नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ।❀
१५६ ययतोश्चातदर्थे ।❀
१५७ अच्कावशक्तौ ।❀
१५८ आक्रोशे च ।❀
१५९ संज्ञायाम् ।❀
१६० कृत्योकेष्णुच्चार्वादयश्च ।❀
१६१ विभाषा तृन्नन्नतीक्ष्णशुचिषु ।❀
१६२ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।❀

१६३ संख्यायाः स्तनः ।❀
१६४ विभाषा छन्दसि ।❀
१६५ संज्ञायां मित्राजिनयोः ।
*ऋषिप्रतिषेधो मित्रे ॥ १ ॥
१६६ व्यवायिनोऽन्तरम् ।❀
१६७ मुखं स्वाङ्गम् ।❀
१६८ नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टि-
पृथुवत्सेभ्यः ।❀
१६९ निष्ठोपमानादन्यतरस्याम् ।❀
१७० जातिकालसुखादिभ्योऽनाच्छादनात्
क्तोऽकृतमितप्रतिपन्नाः ।❀
१७१ वा जाते ।❀
१७२ नञ्सुभ्याम् ।❀
१७३ कपि पूर्वम् ।❀
१७४ ह्रस्वान्तेऽन्त्यात्पूर्वम् ।❀
१७५ बहोर्नञ्वदुत्तरपदभूम्नि ।
*बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् ॥ १ ॥
१७६ न गुणादयोऽवयवाः ।❀
१७७ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ।
*मुखस्यान्तोदात्तत्वादुपसर्गात्स्वाङ्गं ध्रुवम् ॥ १ ॥
१७८ वनं समासे ।❀
१७९ अन्तः ।❀
१८० अन्तश्च ।❀
१८१ न निविभ्याम् ।❀
१८२ परेरभितो भाविमण्डलम् ।❀
१८३ प्रादस्वाङ्गं संज्ञायाम् ।❀
१८४ निरुदकादीनि च ।❀
१८५ अभेर्मुखम् ।
१८६ अपाच्च ।
*अभेर्मुखमपाच्चाध्रुवार्थम् ॥ १ ॥
*अबहुव्रीह्यर्थौ वा ॥ २ ॥
१८७ स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनाम
नाम च ।
*स्फिगपूतग्रहणं च ॥ १ ॥
१८८ अधेरुपरिस्थम् ।❀
१८९ अनोरप्रधानकनीयसी ।❀
१९० पुरुषश्चान्वादिष्टः ।❀
१९१ अतेरकृत्पदे ।
*अतेर्धातुलोपे ॥ १ ॥
१९२ नेरनिधाने ।❀
१९३ प्रतेरंश्वादयस्तत्पुरुषे ।❀
१९४ उपाद्द्व्यजजिनमगौरादयः ।❀

१९५ सोरवक्षेपणे ।❀
१९६ विभाषोत्पुच्छे ।❀
१९७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ।
*द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्त-
स्योपसंख्यानम् ॥ १ ॥
*नकारान्तेऽकारान्तस्य ॥ २ ॥
*उदात्तलोपात्सिद्धम् ॥ ३ ॥
१९८ सक्थं चाक्रान्तात् ।❀
१९९ परादिश्छन्दसि बहुलम् ।
*अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दसि ॥ १ ॥
बहुव्रीहावाशङ्का गौः साद क्ते नित्यार्थे युक्ता
न हास्तिन कूलतीर देवता विभाषा न
निव्येकोनविंशतिः ।

---

अथ तृतीयः पादः ।

१ अलुगुत्तरपदे ।
*उत्तरपदाधिकारस्य प्रयोजनं स्तोकादिभ्यो-
ऽलुगानङिकोह्रस्वनलोपाः ॥ १ ॥
*एकवच्च ॥ २ ॥
*एकवद्वचनमनर्थकम् ॥ ३ ॥
*द्विबहुष्वसमासः ॥ ४ ॥
*उक्तं वा ॥ ५ ॥
*एकवचने हि गोषुचरेऽतिप्रसङ्गः ॥ ६ ॥
*वर्षाभ्यश्च जे ॥ ७ ॥
*अपो योनियन्मतिषु चोपसंख्यानम् ॥ ८ ॥
२ पञ्चम्याः स्तोकादिभ्यः ।
*पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम् ॥ १ ॥
*अन्यार्थे च ॥ २ ॥
३ ओजःसहोऽम्भस्तमसस्तृतीयायाः ।
*तृतीयाया अञ्जस उपसंख्यानम् ॥ १ ॥
*पुंसानुजो जनुषान्धो विकृताक्ष इति च ॥ २ ॥
४ मनसः संज्ञायाम् ।❀
५ आज्ञायिनि च ।
*आत्मनश्च पूरणे ॥ १ ॥
*अन्यार्थे च ॥ २ ॥
६ आत्मनश्च पूरणे ।❀
७ वैयाकरणाख्यायां चतुर्थ्याः ।
८ परस्य च ।
*आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम् ॥ १ ॥

१ वार्तिकमेतत्सूत्रेषु पठ्यते ॥

९ हलदन्तात्सप्तम्याः संज्ञायाम् ।
*हृद्युभ्यां ङेरुपसंख्यानम् ॥ १ ॥
*अन्यार्थे च ॥ २ ॥
*हलदन्ताधिकारे गोरुपसंख्यानम् ॥ ३ ॥
*लुकोऽवादेशो विप्रतिषेधेनेति चेत् भूसि-पाशेऽतिप्रसङ्गः ॥ ४ ॥
*अकोऽत इति वा तत्सम्ध्यक्षरार्थम् ॥ ५ ॥

१० कारनाम्नि च प्राचां हलादौ ।
*कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गः ॥ १ ॥
*अप्राप्ते समासविधानम् ॥ २ ॥
*योगविभागात्सिद्धम् ॥ ३ ॥

११ मध्याद्गुरौ ।
*गुरावन्ताच्च ॥ १ ॥

१२ अमूर्धमस्तकात्स्वाङ्गादकामे ।❀

१३ बन्धे च विभाषा ।

१४ तत्पुरुषे कृति बहुलम् ।
*तत्पुरुषे कृति बहुलमकर्मधारये ॥ १ ॥
*लुगलुगनुकर्षणं बहुलवचनस्याकृत्स्नत्वात् ॥ २ ॥

१५ प्रावृट्शरत्कालदिवां जे ।❀

१६ विभाषा वर्षक्षरशरवरात् ।❀

१७ घकालतनेषु कालनाम्नः ।❀

१८ शयवासवासिष्वकालात् ।❀

१९ नेन्सिद्धबध्नातिषु च ।❀

२० स्थे च भाषायाम् ।❀

२१ षष्ठ्या आक्रोशे ।
*षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम् ॥ १ ॥
*आमुष्यायणामुष्यपुत्रिका ॥ २ ॥
*देवानांप्रिय इति च ॥ ३ ॥
*शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामुपसंख्यानम् ॥ ४ ॥
*दिवश्च दासे ॥ ५ ॥

२२ पुत्रेऽन्यतरस्याम् ।❀

२३ ऋतो विद्यायोनिसंबन्धेभ्यः ।
*विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणम् ॥ १ ॥

२४ विभाषा स्वसृपत्योः ।❀

२५ आनङ् ऋतो द्वन्द्वे ।
*ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम् ॥ १ ॥
*कार्यी चानिर्दिष्टः ॥ २ ॥
*अविशेषेण पितृपितामहादिष्वतिप्रसङ्गः ॥ ३ ॥

४९ ष० पा०

२६ देवताद्वन्द्वे च ।
*देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः ॥ १ ॥
*ब्रह्मप्रजापत्यादीनां च ॥ २ ॥

२७ ईदग्नेः सोमवरुणयोः ।❀

२८ इद्वृद्धौ ।
*इद्वृद्धौ विष्णोः प्रतिषेधः ॥ १ ॥

२९ दिवो द्यावा ।❀

३० दिवसश्च पृथिव्याम् ।❀

३१ उषासोषसः ।❀

३२ मातरपितरावुदीचाम् ।

३३ पितरामातरा च छन्दसि ।

३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।
*पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत् तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम् ॥ १ ॥
*प्रातिपदिकस्य च प्रत्यापत्तिः ॥ २ ॥
*स्थानिवत्प्रसङ्गश्च ॥ ३ ॥
*वतण्ड्यादिषु पुंवद्वचनम् ॥ ४ ॥
*स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत् सर्वप्रसङ्गोऽविशेषात् ॥ ५ ॥
*भाषितपुंस्कानुपपत्तिश्च ॥ ६ ॥
*अर्थातिदेशे विप्रतिषेधानुपपत्तिः ॥ ७ ॥
*पूरण्यां प्रधानपूरणीग्रहणम् ॥ ८ ॥

३५ तसिलादिष्वा कृत्वसुचः ।
*तसिलादी त्रतसौ ॥ १ ॥
*तरप्तमपौ ॥ २ ॥
*चरड्जातीयरौ ॥ ३ ॥
*कल्पप्देशीयरौ ॥ ४ ॥
*रूपप्पाशपौ ॥ ५ ॥
*थमुथालौ ॥ ६ ॥
*दार्हिलौ ॥ ७ ॥
*तिल्थ्यनौ ॥ ८ ॥
*शसि बह्वल्पार्थस्य ॥ ९ ॥
*त्वतलोर्गुणवचनस्य ॥ १० ॥
*भस्यादे तद्धिते ॥ ११ ॥
*ठक्छसोश्च ॥ १२ ॥

३६ क्यङ्मानिनोश्च ।
*मानिन्ग्रहणमरुयर्थमसमानाधिकरणार्थं च ॥ १ ॥

३७ न कोपधायाः ।
*कोपधप्रतिषेधे तद्धितवुग्रहणम् ॥ १ ॥

३८ संज्ञापूरण्योश्च ।❀
३९ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ।❀
४० स्वाङ्गाच्चेतः ।
*स्वाङ्गाच्चेतोऽमानिनि ॥ १ ॥
४१ जातेश्च ।❀
४२ पुंवत्कर्मधारयजातीयदेशीयेषु ।
*पुंवत्कर्मधारये प्रतिषिद्धार्थम् ॥ १ ॥
*कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् ॥ २ ॥
*न वाऽस्त्रीपूर्वपदविवक्षितत्वात् ॥ ३ ॥
*अग्नेरीत्वाद्ध्रस्वत्ववृद्धिविप्रतिषेधेन ॥ ४ ॥
*पुंवद्भावात् ह्रस्वत्वं खिद्धादिकेषु ॥ ५ ॥
४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।
४४ नद्याः शेषस्यान्यतरस्याम् ।❀
४५ उगितश्च ।❀
४६ आन्महतः समानाधिकरणजातीययोः ।
*महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् ॥ १ ॥
*अष्टनः कपाले हविषि ॥ २ ॥
*गवि च युक्ते ॥ ३ ॥
४७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।
४८ त्रेस्त्रयः ।❀
४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ।
५० हृदयस्य हृल्लेखयदण्लासेषु ।
*यदण्ग्रहणे रूपग्रहणं लेखग्रहणात् ॥ १ ॥
५१ वा शोकष्यञ्रोगेषु ।❀
५२ पादस्य पदाज्यातिगोपहतेषु ।
*पदादेशेऽन्तोदात्तनिपातनं पदोपहतार्थम् ॥ १ ॥
*उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् ॥ २ ॥
५३ पद्यत्यतदर्थे ।
*पद्भावे इके चरतावुपसंख्यानम् ॥ १ ॥
५४ हिमकाषिहतिषु च ।❀
५५ ऋचः शे ।❀
५६ वा घोषमिश्रशब्देषु ।
*निष्के चोपसंख्यानम् ॥ १ ॥
५७ उदकस्योदः संज्ञायाम् ।
*संज्ञायामुत्तरपदस्य च ॥ १ ॥
५८ पेषंवासवाहनधिषु च ।❀
५९ एकहलादौ पूरयितव्येऽन्यतरस्याम् ।
६० मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ।❀
६१ इको ह्रस्वोऽङ्यो गालवस्य ।
*इको ह्रस्वत्वमुत्तरपदमात्रे ॥ १ ॥
*सर्वान्ते लोकविज्ञानम् ॥ २ ॥
*इयङुवङ्भाव्ययप्रतिषेधः ॥ ३ ॥
६२ एकतद्धिते च ।
६३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ।❀
६४ त्वे च ।❀
६५ इष्टकेषीकामालानां चिततूलभारिषु ।❀
६६ खित्यनव्ययस्य ।
*खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् ॥ १ ॥
*सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् ॥ २ ॥
*सन्नियोगाद्वा ॥ ३ ॥
६७ अरुर्द्विषदजन्तस्य मुम् ।❀
६८ इच एकाचोऽम्प्रत्ययवच्च ।
*अमः प्रत्ययवदनुदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः ॥ १ ॥
*अमः प्रत्ययवदनुदेशे आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् ॥ २ ॥
*सामान्यातिदेशे हि विशेषानतिदेशः ॥ ३ ॥
*सिद्धं तु द्वितीयैकवचनवद्वचनात् ॥ ४ ॥
*एकशेषनिर्देशाद्वा ॥ ५ ॥
६९ वाचंयमपुरंदरौ च ।❀
७० कारे सत्यागदस्य ।
*अस्तुसत्यागदस्य कार उपसंख्यानम् ॥ १ ॥
*भक्षस्य च्छन्दसि ॥ २ ॥
*धेनोर्भव्यायाम् ॥ ३ ॥
*लोकस्य पृणे ॥ ४ ॥
*इत्येऽनभ्याशस्य ॥ ५ ॥
*भ्राष्ट्राग्न्योरिन्धे ॥ ६ ॥
*गिलेऽगिलस्य ॥ ७ ॥
*गिलगिले च ॥ ८ ॥
*उष्णभद्रयोः करणे ॥ ९ ॥
*सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा ॥ १० ॥
७१ श्येनतिलस्य पाते ञे ।❀
७२ रात्रेः कृति विभाषा ।
७३ नलोपो नञः ।
*नञो नलोपे अवक्षेपे तिङ्युपसंख्यानम् ॥ १ ॥

७४ तस्माच्चुडचि ।
७५ नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ।❀
७६ एकादिश्चैकस्य चादुक् ।
७७ नगोऽप्राणिष्वन्यतरस्याम् ।❀
७८ सहस्य सः संज्ञायाम् ।
*सहस्य हलोपवचनम् ॥ १ ॥
७९ ग्रन्थान्ताधिके च ।
८० द्वितीये चानुपाख्ये ।❀
८१ अव्ययीभावे चाकाले ।❀
८२ वोपसर्जनस्य ।
*उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् ॥ १ ॥
*सिद्धं तु बहुव्रीहिनिर्देशात् ॥ २ ॥
८३ प्रकृत्याशिषि ।
*प्रकृत्याशिष्यगवादिषु ॥ १ ॥
८४ समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ।❀
८५ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ।❀
८६ चरणे ब्रह्मचारिणि ।
*ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च ॥ १ ॥
८७ तीर्थे ये ।❀
८८ विभाषोदरे ।❀
८९ दृग्दृशवतुषु ।
*दृग्दृशवतुषु दृक्ष उपसंख्यानम् ॥ १ ॥
९० इदंकिमोरीश्की ।❀
९१ आ सर्वनाम्नः ।❀
९२ विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ।
९३ समः समि ।
९४ तिरसस्तिर्यलोपे ।❀
९५ सहस्य सध्रिः ।
*अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् ॥ १ ॥
९६ सध मादस्थयोश्छन्दसि ।❀
९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ।
*समाप ईत्वप्रतिषेधः ॥ १ ॥
९८ ऊदनोर्देशे ।
९९ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ।
१०० अर्थे विभाषा ।❀
१०१ कोः कत्तत्पुरुषेऽचि ।
*कद्भावे त्राबुपसंख्यानम् ॥ १ ॥
१०२ रथवदयोश्च ।❀
१०३ तृणे च जातौ ।❀
१०४ का पथ्यक्षयोः ।❀
१०५ ईषदर्थे ।❀
१०६ विभाषा पुरुषे ।❀
१०७ कवं चोष्णे ।❀
१०८ पथि च च्छन्दसि ।❀
१०९ पृषोदरादीनि यथोपदिष्टम् ।
*दिक्शब्देभ्यस्तीरस्य तारभावो वा ॥ १ ॥
*वाचो वादेर्डत्वं वलभावश्चोत्तरपदस्येञि ॥ २ ॥
*षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च ॥ ३ ॥
*धासु वा ॥ ४ ॥
*स्वरो रोहतौ छन्दस्युत्वम् ॥ ५ ॥
*पीवोपवसनादीनां छन्दसि लोपः ॥ ६ ॥
११० संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ।❀
१११ ढ्रलोपे पूर्वस्य दीर्घोऽणः ।
११२ सहिवहोरोदवर्णस्य ।
११३ साढ्यै साढ्वा साढेति निगमे ।❀
११४ संहितायाम् ।❀
११५ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ।❀
११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।
*अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन् विधिस्तदादावल्ग्रहणे ॥ १ ॥
११७ वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् ।❀
११८ वले ।❀
११९ मतौ बह्वचोऽनजिरादीनाम् ।❀
१२० शरादीनां च ।❀
१२१ इको वहेऽपीलोः ।
१२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् ।
*सादकारयोः कृत्रिमे ॥ १ ॥
*प्रतिवेशादीनां विभाषा ॥ २ ॥
१२३ इकः काशे ।❀
१२४ दस्ति ।
१२५ अष्टनः संज्ञायाम् ।❀

१२६ छन्दसि च ।❀
१२७ चितेः कपि ।❀
१२८ विश्वस्य वसुराटोः ।❀
१२९ नरे संज्ञायाम् ।❀
१३० मित्रे चर्षौ ।❀
१३१ मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।❀
१३२ ओषधेश्च विभक्तावप्रथमायाम् ।❀
१३३ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।❀
१३४ इकः सुञि ।❀
१३५ द्व्यचोऽतस्तिङः ।❀
१३६ निपातस्य च ।❀
१३७ अन्येषामपि दृश्यते ।❀

**१३८ चौ ।**

**१३९ सम्प्रसारणस्य ।**

*इको ह्रस्वात्सम्प्रसारणदीर्घत्वं विप्रतिषेधेन ॥ १ ॥

॥ अलुक् षष्ठ्या जातेरिकोऽव्ययीभावे कोः

कत्तदिको वहे एकोनविंशतिः ॥

---

### अथ चतुर्थः पादः ।

**१ अङ्गस्य ।**

*अङ्गस्येति स्थानषष्ठी चेत्पञ्चम्यन्तस्य चाधिकारः ॥ १ ॥
*अवयवषष्ठ्यादीनां चाप्रतिपत्तिः ॥ २ ॥
*सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञायाम् ॥ ३ ॥
*सम्बन्धषष्ठीनिर्देशश्च ॥ ४ ॥
*सम्प्रसारणदीर्घत्वे ॥ ५ ॥
*नाम्सनोर्दीर्घत्वे ॥ ६ ॥
*लिङ्यत्वे ॥ ७ ॥
*अतो भिस ऐस्त्वे ॥ ८ ॥
*लुङादिष्वडाटौ ॥ ९ ॥
*इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्के-ह्रस्वयिदीर्घभितत्वानि ॥ १० ॥
*अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् ॥ ११ ॥

**२ हलः ।**

*अण्प्रकरणादकारस्याप्राप्तिः ॥ १ ॥
*इग्ग्रहणस्य चाविशेषणत्वात् ॥ २ ॥

**३ नामि ।**

४ न तिसृचतसृ ।❀
५ छन्दस्युभयथा ।❀
६ नृ च ।❀
७ नोपधायाः ।❀
८ सर्वनामस्थाने चासंबुद्धौ ।❀
९ वा षपूर्वस्य निगमे ।❀
१० सान्तमहतः संयोगस्य ।❀
११ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृ-प्रशास्तृणाम् ।❀

**१२ इन्हन्पूषार्यम्णां शौ ।**

**१३ सौ च ।**

*हनः क्वावुपधादीर्घत्वप्रसङ्गः ॥ १ ॥
*नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः ॥ २ ॥

**१४ अत्वसन्तस्य चाधातोः ।**

*अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् ॥ १ ॥

१५ अनुनासिकस्य क्विझलोः क्ङिति ।❀

**१६ अज्झनगमां सनि ।**

*गमेर्दीर्घत्वे इङ्ग्रहणम् ॥ १ ॥
*अग्रहणे ह्यनादेशस्यापि दीर्घप्रसङ्गः ॥ २ ॥
*न वा छन्दस्यनादेशस्यापि दीर्घत्वदर्शनात् ॥ ३ ॥
*सनि दीर्घ उपधाधिकारश्चेत् व्यञ्जनप्रतिषेधः ॥ ४ ॥
*अनधिकारे उक्तम् ॥ ५ ॥

१७ तनोतेर्विभाषा ।❀
१८ क्रमश्च क्त्वि ।❀

**१९ च्छ्वोः शूडनुनासिके च ।**

२० ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।❀
२१ राल्लोपः ।❀

**२२ असिद्धवदत्राभात् ।**

*असिद्धवचने उक्तम् ॥ १ ॥
*अत्रग्रहणं विषयार्थम् ॥ २ ॥
*प्रयोजनं शैत्वं धित्वे ॥ ३ ॥
*तास्तिलोपेण्यणादेशा अडाड्विधौ ॥ ४ ॥
*अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च ॥ ५ ॥
*संप्रसारणमवर्णलोपे प्रयोजनम् ॥ ६ ॥
*रेभाव आल्लोपे प्रयोजनम् ॥ ७ ॥
*आरभ्यमाणेऽप्येतस्मिन्योगे सिद्धं वसुसंप्र-सारणमज्विधौ ॥ ८ ॥
*बहिरङ्गलक्षणत्वादसिद्धत्वाच्च ॥ ९ ॥
*आत्वं यलोपाल्लोपयोः पप्रुषो न वाजान् चाखायिता चाखायितुम् ॥ १० ॥

*ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि सिद्धा वक्तव्याः ॥ ११ ॥
*वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ १२ ॥
*प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् ॥ १३ ॥
*आ भादिति चेद्वसुसंप्रसारणयलोपप्रस्थादीनां प्रतिषेधः ॥ १४ ॥

२३ श्नान्नलोपः।

२४ अनिदितां हल उपधायाः क्ङिति।

*अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् ॥ १ ॥
*वृंहेरच्यनिटी ॥ २ ॥
*रञ्जेर्णौ मृगरमणे ॥ ३ ॥
*घिनुणि च ॥ ४ ॥
*रजकरजनरजःसूपसंख्यानम् ॥ ५ ॥

२५ दंशसञ्जस्वञ्जां शपि।❀
२६ रञ्जेश्च।❀
२७ घञि च भावकरणयोः।❀
२८ स्यदो जवे।❀
२९ अवोदैधोद्मप्रश्रथहिमश्रथाः।❀
३० नाञ्चेः पूजायाम्।❀
३१ क्त्वि स्कन्दिस्यन्दोः।❀
३२ जान्तनशां विभाषा।❀
३३ भञ्जेश्च चिणि।❀

३४ शास इदङ्हलोः।

*शास इत्वे आशासः क्वावुपसंख्यानम् ॥ १ ॥

३५ शा हौ।❀
३६ हन्तेर्जः।❀

३७ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति।

*अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च ॥ १ ॥
*वाऽमः ॥ २ ॥

३८ वा ल्यपि।❀
३९ न क्तिचि दीर्घश्च।❀

४० गमः क्वौ।

*ऊङ् च ॥ १ ॥

४१ विड्वनोरनुनासिकस्यात्।❀

४२ जनसनखनां सञ्झलोः।

*सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेन ॥ १ ॥

४३ ये विभाषा।❀
४४ तनोतेर्यकि।❀

४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम्।

४६ आर्धधातुके।

४७ भ्रस्जो रोपधयोरमन्यतरस्याम्।

*भ्रस्जादेशात्सम्प्रसारणं विप्रतिषेधेन ॥ १ ॥
*रसोर्वचनात्सिद्धम् ॥ २ ॥

४८ अतो लोपः।

*ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् ॥ १ ॥

४९ यस्य हलः।

*यलोपो वर्णग्रहणं चेत्सङ्घातवन्तस्य प्रतिषेधः ॥ १ ॥
*सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषः ॥ २ ॥

५० क्यस्य विभाषा।❀

५१ णेरनिटि।

५२ निष्ठायां सेटि।

*निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तत्सिद्धम् ॥ १ ॥
*एकाचौ हि प्रतिषेधः ॥ २ ॥
*इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य ॥ ३ ॥
*अवचने हि णिलोप इट्प्रतिषेधप्रसङ्गः ॥ ४ ॥
*वृद्धिरमिश्रधीनामुपसंख्यानं सार्वधातुकत्वात् ॥ ५ ॥

५३ जनिता मन्त्रे।❀
५४ शमिता यज्ञे।❀

५५ अयामन्ताल्वाय्येत्न्विष्णुषु।

*क्त्वाविटि णेर्गुणवचनम् ॥ १ ॥
*इत्नौ प्रत्ययान्तरकरणम् ॥ २ ॥

५६ ल्यपि लघुपूर्वात्।

*ल्यपि लघुपूर्वस्येति चेत् व्यञ्जनान्तेषूपसंख्यानम् ॥ १ ॥
*ल्यपि लघुपूर्वादिति वचनात् सिद्धम् ॥ २ ॥

५७ विभाषाऽऽपः।

*आपः सानुबन्धकस्य निर्देशादिङि सिद्धम् ॥ १ ॥

५८ युप्लुवोर्दीर्घश्छन्दसि।❀
५९ क्षियः।❀
६० निष्ठायामण्यदर्थे।❀
६१ वा क्रोशदैन्ययोः।❀

६२ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च।

*चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात् ॥ १

*वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन ॥ २ ॥
*हनिणिङादेशप्रतिषेधश्च ॥ ३ ॥
*अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् ॥४॥
६३ दीङो युडचि क्ङिति ।❀
६४ आतो लोप इटि च ।
*इड्ग्रहणमक्ङिदर्थम् ॥ १ ॥
६५ ईद्यति ।❀
६६ घुमास्थागापाजहातिसां हलि ।
*ईत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् ॥ १ ॥
*धीवरी पीवरीति चोक्तम् ॥ २ ॥
६७ एर्लिङि ।❀
६८ वाऽन्यस्य संयोगादेः ।❀
६९ न ल्यपि ।❀
७० मयतेरिदन्यतरस्याम् ।❀
७१ लुङ्लङ्लृङ्क्ष्वडुदात्तः ।❀
७२ आडजादीनाम् ।❀
७३ छन्दस्यपि दृश्यते ।❀
७४ न माङ्योगे ।
७५ बहुलं छन्दस्यमाङ्योगेऽपि ।❀
७६ इरयो रे ।❀
७७ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।
*इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम् ॥ १ ॥
७८ अभ्यासस्यासवर्णे ।❀
७९ स्त्रियाः ।❀
८० वाऽम्शसोः ।❀
८१ इणो यण् ।❀
८२ एरनेकाचोऽसंयोगपूर्वस्य ।
*यणादेशः स्वरपदपूर्वोपधस्य च ॥ १ ॥
*असंयोगपूर्वे ह्यनिष्टप्रसङ्गः ॥ २ ॥
८३ ओः सुपि ।❀
८४ वर्षाभ्वश्च ।
*वर्षाभूपुनर्भ्वश्च ॥ १ ॥
८५ न भूसुधियोः ।❀
८६ छन्दस्युभयथा ।❀
८७ हुश्नुवोः सार्वधातुके ।
*हुश्नुग्रहणानर्थक्यमन्यस्याभावात् ॥ १ ॥
८८ भुवो वुग्लुङ्लिटोः ।❀
८९ ऊदुपधाया गोहः ।
*गोहिग्रहणं विषयार्थम् ॥ १ ॥
*इस्वादेशे ह्ययादेशप्रसङ्ग उत्वस्यासिद्धत्वात् ॥ २ ॥

९० दोषो णौ ।
*दोषिग्रहणे च ॥ १ ॥
९१ वा चित्तविरागे ।❀
९२ मितां ह्रस्वः ।❀
९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।
*चिण्णमुलोर्णिज्यचेतानां यङ्लोपे च ॥ १ ॥
९४ खचि ह्रस्वः ।❀
९५ ह्लादो निष्ठायाम् ।❀
९६ छादेर्घेऽद्व्युपसर्गस्य ।
९७ इस्मन्त्रन्क्विषु च ।❀
९८ गमहनजनखनघसां लोपः क्ङित्यनङि ।❀
९९ तनिपत्योश्छन्दसि ।❀
१०० घसिभसोर्हलि ।
*हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात् ॥ १ ॥
१०१ हुझल्भ्यो हेर्धिः ।
*हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ॥ १ ॥
१०२ श्रुशृणुपॄकृवृभ्यश्छन्दसि ।❀
१०३ अङितश्च ।❀
१०४ चिणो लुक् ।
*चिणो लुकि तग्रहणम् ॥ १ ॥
*चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात् ॥ २ ॥
*तलोपस्य चासिद्धत्वात् ॥ ३ ॥
*कार्यकृतत्वाद्वा ॥ ४ ॥
१०५ अतो हेः ।❀
१०६ उतश्च प्रत्ययादसंयोगपूर्वात् ।
*उतश्च प्रत्ययाच्छन्दोवावचनम् ॥ १ ॥
*उत्तरार्थं च ॥ २ ॥
१०७ लोपश्चास्यान्यतरस्यां म्वोः ।❀
१०८ नित्यं करोतेः ।❀
१०९ ये च ।❀
११० अत उत् सार्वधातुके ।
*कृञ उत्व उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः ॥१॥
१११ श्नसोरल्लोपः ।
११२ श्नाभ्यस्तयोरातः ।❀
११३ ई हल्यघोः ।❀
११४ इद्दरिद्रस्य ।
*दरिद्रातेरार्धधातुके लोपः ॥ १ ॥
*सिद्धश्च प्रत्ययविधौ ॥ २ ॥
*अद्यतन्यां वा ॥ ३ ॥

११५ भियोऽन्यतरस्याम् ।❀
११६ जहातेश्च ।❀
११७ आ च हौ ।❀
११८ लोपो यि ।❀
११९ घ्वसोरेद्धावभ्यासलोपश्च ।❀
१२० अत एकहल्मध्येऽनादेशादेर्लिटि ।
*णकारषकारादेरेत्ववचनं लिटि ॥ १ ॥
*फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशसिद्धत्वस्य॥२॥
*प्रथमतृतीयादीनामादेशादित्वादेत्वाभावः ॥ ३ ॥
*न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्वविज्ञानस्य ॥ ४ ॥
*दम्भ एत्वम् ॥ ५ ॥
*नलोपस्यासिद्धत्वात् ॥ ६ ॥
१२१ थलि च सेटि ।
*थल्ग्रहणमक्ङिदर्थम् ॥ १ ॥
१२२ तॄफलभजत्रपश्च ।❀
१२३ राधो हिंसायाम् ।
*राधादिषु स्थानिनिर्देशः ॥ १ ॥
१२४ वा जॄभ्रमुत्रसाम् ।❀
१२५ फणां च सप्तानाम् ।❀
१२६ न शसददवादिगुणानाम् ।❀
१२७ अर्वणस्त्रसावनञः ।
१२८ मघवा बहुलम् ।
१२९ भस्य ।❀
१३० पादः पत् ।
*पाद उपधाह्रस्वत्वम् ॥ १ ॥
*आदेशे हि सर्वादेशप्रसङ्गः ॥ २ ॥
*न वा निर्दिश्यमानस्यादेशात् ॥ ३ ॥
*प्रयोजनं सुप्तिङादेशेषु ॥ ४ ॥
*ल्यब्भावे च ॥ ५ ॥
१३१ वसोः संप्रसारणम् ।❀
१३२ वाह ऊठ् ।
*वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् ॥ १ ॥
*गुणः प्रत्ययलक्षणत्वात् ॥ २ ॥
*एज्ग्रहणा वृद्धिः ॥ ३ ॥
१३३ श्वयुवमघोनामतद्धिते ।
*श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ॥ १ ॥
*उक्तं वा ॥ २ ॥
१३४ अल्लोपोऽनः ।❀
१३५ षपूर्वहन्धृतराज्ञामणि ।
*षपूर्वादीनां पुनर्वचनमल्लोपार्थम् ॥ १ ॥
*अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः ॥ २ ॥
१३६ विभाषा ङिश्योः ।❀
१३७ न संयोगाद्वमन्तात् ।❀
१३८ अचः ।❀
१३९ उद ईत् ।❀
१४० आतो धातोः ।
*आतोऽनापः ॥ १ ॥
१४१ मन्त्रेष्वाङ्यादेरात्मनः ।
*आदिग्रहणानर्थक्यमाकारप्रकरणात् ॥ १ ॥
१४२ ति विंशतेर्डिति ।
१४३ टेः ।
१४४ नस्तद्धिते ।
*नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ॥ १ ॥
*अव्ययानां च सायम्प्रातिकाद्यर्थम् ॥ २ ॥
१४५ अह्नष्टखोरेव ।❀
१४६ ओर्गुणः ।❀
१४७ ढे लोपोऽकद्र्वाः ।❀
१४८ यस्येति च ।
*यस्येत्यादौ श्यां प्रतिषेधः ॥ १ ॥
*इयङुवङ्भ्यां लोपो विप्रतिषेधेन ॥ २ ॥
*गुणवृद्धी च ॥ ३ ॥
*न वेयङुवङादेशस्यान्यविषयवचनात् ॥ ४ ॥
*तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः ॥ ५ ॥
१४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।
*सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् ॥ १ ॥
*सिद्धं तु स्थानिवत्प्रतिषेधात् ॥ २ ॥
*उपधाग्रहणानर्थक्यं च ॥ ३ ॥
*विषयपरिगणनं च ॥ ४ ॥
*सूर्यमत्स्ययोर्ङ्याम् ॥ ५ ॥
*सूर्यागस्त्ययोश्छे च ॥ ६ ॥
*तिष्यपुष्ययोर्नक्षत्राणि ॥ ७ ॥
*अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ॥ ८ ॥
१५० हलस्तद्धितस्य ।❀

१५१ आपत्यस्य च तद्धितेऽनाति ।❀
१५२ क्यच्व्योश्च ।❀
१५३ बिल्वकादिभ्यश्छस्य लुक् ।
१५४ तुरिष्ठेमेयःसु ।
*सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् ॥ १ ॥
१५५ टेः ।
*णाविष्ठवत्प्रातिपदिकस्य ॥ १ ॥
*पुंवद्भावरभावटिलोपयणादिपरार्थम् ॥ २ ॥
१५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।❀
१५७ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।❀
१५८ बहोर्लोपो भू च बहोः ।❀
१५९ इष्ठस्य यिट् च ।
१६० ज्यादादीयसः ।
१६१ र ऋतो हलादेर्लघोः ।
१६२ विभाषर्जोश्छन्दसि ।❀
१६३ प्रकृत्यैकाच् ।
*प्रकृत्यैकाजिष्ठेमेयस्सु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः ॥ १ ॥
*प्रकृत्याऽके राजन्यमनुष्ययुवानः ॥ २ ॥
१६४ इनण्यनपत्ये ।❀
१६५ गाथिविदथिकेशिगणिपणिनश्च ।❀
१६६ संयोगादिश्च ।❀
१६७ अन् ।❀
१६८ ये चाभावकर्मणोः ।❀
१६९ आत्माध्वानौ खे ।❀
१७० न मपूर्वोऽपत्येऽवर्मणः ।
१७१ ब्राह्मोऽजातौ ।
*तत्राप्राप्तविधाने प्राप्तप्रतिषेधः ॥ १ ॥
*न वा पर्युदाससामर्थ्यात् ॥ २ ॥
१७२ कार्मस्ताच्छील्ये ।
१७३ औक्षमनपत्ये ।❀
१७४ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ।
*भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् ॥ १ ॥
*ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य ॥ २ ॥
*ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन ॥ ३ ॥
*मैत्रेये यादिलोपनिपातनम् ॥ ४ ॥
*हिरण्मये यलोपवचनम् ॥ ५ ॥
*हिरण्मये छन्दसि मलोपवचनात्सिद्धम् ॥ ६ ॥
१७५ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ।❀
॥ अङ्गस्य राल्लोपो विड्वनोर्वाऽऽक्रोशेणो हुझल्भ्यः स्थलि च मन्त्रेषु र ऋतः पञ्चदशः ॥

॥ सवार्तिकः षष्ठोऽध्यायः समाप्तः ॥



# ॥ अथ समग्रभाष्यगतश्लोकवार्तिकसंग्रहः ॥

## अइउण् ॥ १ ॥

स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् ॥

## हयवरट् ॥ ५ ॥

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ॥
आचारात्, अप्रधानत्वात्, लोपश्च बलवत्तरः ॥
ऊकालोऽजिति वा योगस्तत्कालानां यथा भवेत् ।
अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥
ह्रस्वादीनां वचनात्प्राग्यावत्तावदेव योगोऽस्तु ।
अच्कार्याणि यथा स्युस्तत्कालेष्वक्षु कार्याणि ॥
अनुवर्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम् ॥
नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित् स्यात् ॥

## लण् ॥ ६ ॥

सवर्णेऽण् तु परं ह्युक्तत् ।
ग्वोरन्यत्र परेणेण् स्यात् ।
व्याख्यानाच्च द्विरुक्तितः ।

## ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥

अक्षरं नक्षरं विद्यात्, अश्नोतेर्वा सरोऽक्षरम् ॥
वर्णं वाऽऽहुः पूर्वसूत्रे, किमर्थमुपदिश्यते ॥
वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ॥
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥

## इको गुणवृद्धी ॥ १ । १ । ३ ॥

णिश्विभ्यां तौ निमातव्यौ ॥

## ईदूतौ च सप्तम्यर्थे ॥ १ । १ । १९ ॥

ईदूतौ सप्तमीत्येव, लुप्तेऽर्थग्रहणाद्भवेत् ॥
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ॥ १ ॥
वचनाद्यत्र दीर्घत्वं, तत्रापि सरसी यदि ॥
ज्ञापकं स्यात्तदन्तत्वे, मा वा पूर्वपदस्य भूत् ॥ २ ॥

## तद्धितश्चासर्वविभक्तिः ॥ १।१।३७ ॥

[1][ एवं गते कृत्यपि तुल्यमेत-
न्मान्तस्य कार्यं ग्रहणं न तत्र ॥
ततः परे चाभिमता न कार्या-
स्त्रयः कृदर्था ग्रहणेन योगाः ॥ १ ॥
कृततद्धितानां ग्रहणं तु कार्यं
संख्याविशेषं ह्यभिनिश्रिता ये ॥
तस्मात् स्वरादिग्रहणं च कार्यं
कृत्तद्धितानां ग्रहणं च पाठे ॥ ]

## अचः परस्मिन् पूर्वविधौ ॥ १।१।५७ ॥

स्तोष्याम्यहं पादिकमौदवाहिं
ततः श्वोभूते शातनीं पातनीं च ॥
नेतारावागच्छतं धारणिं रावणिं च
ततः पश्चात् स्रंस्यते ध्वंस्यते च ॥
आरभ्यमाणे नित्योऽसौ, परश्चासौ व्यवस्थया ॥
युगपत् सम्भवो नास्ति, बहिरङ्गेण सिध्यति ॥
काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति ॥
कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि ॥

## अणुदित्सवर्णस्य चाप्रत्ययः ॥१।१।६९॥

वचनाद्यत्र तन्नास्ति ॥

## इको झल् ॥ १ । २ । ९ ॥

इकः कित्वं गुणो मा भूत्, दीर्घारम्भात्, कृते भवेत् ॥
अनर्थकं तु, ह्रस्वार्थं, दीर्घाणां तु प्रसज्यते ॥ १ ॥
सामर्थ्याद्धि पुनर्भाव्यम्, ऋदित्वं दीर्घसंश्रयम् ॥
दीर्घाणां नाकृते दीर्घे, णिलोपस्तु प्रयोजनम् ॥ २ ॥

## स्थाघ्वोरिच्च ॥ १ । २ । १७ ॥

इच्च कस्य तकारेत्वं, दीर्घो मा भूत्, ऋतेऽपि सः ॥
अनन्तरे प्लुतो मा भूत्, प्लुतश्च विषये स्मृतः ॥१॥

## न क्त्वा सेट् ॥ १ । २ । १८ ॥

न सेडितिकृतेऽकित्त्वे, निष्ठायामवधारणात् ॥
ज्ञापकान्न परोक्षायां, सनि झल्ग्रहणं विदुः ॥ १ ॥
इत्त्वं कित्संनियोगेन, रेण तुल्यं सुधीवनि ॥
वस्वर्थं, किदतीदेशात्, गृहीतिः, क्त्वा च विग्रहात् २

## इद्गोण्याः ॥ १ । २ । ५० ॥

इद्गोण्या नेति वक्तव्यं, ह्रस्वता हि विधीयते ॥
इति वा वचने तावत्, मात्रार्थं वा कृतं भवेत् ॥१॥
गोण्या इत्त्वं प्रकरणात्, सूच्याद्यर्थमथापि वा ॥

## लुपि युक्तवद्व्यक्तिवचने ॥ १।२।५१ ॥

प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम् ॥
वक्तुश्च कामचारः प्राग्वृत्तेर्लिङ्गसंख्येये ॥ १ ॥

## सरूपाणामेकशेष एकविभक्तौ ॥१।२।६४॥

संस्त्यानप्रसवौ लिङ्गम् ॥ १ ॥
संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान् ॥२॥

## भूवादयो धातवः ॥ १ । ३ । १ ॥

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ॥ १ ॥

## दाणश्च सा चेच्चतुर्थ्यर्थे ॥ १ । ३ । ५५ ॥

सहयुक्ते तृतीया स्याद्व्यतिहारे तङो विधिः ॥ १ ॥

१ [ ] एतच्चिह्निता भाष्यश्लोका इति केचित् । वार्तिकसदृशा इत्यत्रोपात्ताः ॥

**बहुषु बहुवचनम् ॥ १ । ४ । २१ ॥**

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ॥
प्रसिद्धो नियमस्तत्र, नियमः प्रकृतेषु वा ॥ १ ॥

**अकथितं च ॥ १ । ४ । ५१ ॥**

[[1]दुहियाचिरुधिप्रच्छिभिक्षिचिञा-
मुपयोगनिमित्तमपूर्वविधौ ॥
ब्रुविशासिगुणेन च यत्सचते
तदकीर्तितमाचरितं कविना ॥ ]
कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे ॥
अकारकं ह्यकथितात्, कारकं चेत्तु नाकथा ॥
कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् ॥
कथितेऽभिहिते त्वविधिस्त्वमति-
र्गुणकर्मणि लादिविधिः सपरे ॥
ध्रुवचेष्टितयुक्तिषु चाप्यगुणे
तदनल्पमतेर्वचनं स्मरत ॥
प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ॥
अप्रधाने दुहादीनां, ण्यन्ते कर्तुश्च कर्मणः ॥
[ नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥ ]
सिद्धं वाऽप्यन्यकर्मणः ।
अन्यकर्मेति चेद्ब्रूयाल्लादीनामविधिर्भवेत् ॥
कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ॥
[1][ विपरीतं तु यत्कर्म तत्कल्म कवयो विदुः ॥ ]

**प्राग्रीश्वरान्निपाताः ॥ १ । ४ । ५६ ॥**

रीश्वराद्वीश्वरान्मा भूत्, कृन्मेजन्तः परोऽपि सः ॥
समासेष्वव्ययीभावः, लौकिकं चातिवर्तते ॥

**परः संनिकर्षः संहिता ॥ १।४।१०९ ॥**

[1][बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः ।
शब्देनार्थान्वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ॥]

---

## अथ द्वितीयोऽध्यायः ॥

**समर्थः पदविधिः ॥ २ । १ । १ ॥**

सुब्लोपो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः ।
सङ्ख्याविशेषोव्यक्ताभिधानमुपसर्जनविशेषणम् ॥

**अक्षशलाकासंख्याः परिणा ॥२।१।१०॥**

अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् ॥
कितवव्यवहारे च, एकत्वेऽक्षशलाकयोः ॥

**नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ २ । ४ । ८३ ॥**

तुर्नियामकः ॥

## अथ तृतीयोऽध्यायः ॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३ । १ । २२ ॥**

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ॥
आमश्च प्रतिषेधार्थमेकाचश्चेड्उपग्रहात् ॥

**सार्वधातुके यक् ॥ ३ । १ । ६७ ॥**

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ॥
प्रसिद्धो नियमस्तत्र, नियमः प्रकृतेषु वा ॥
भावकर्मणोरित्यननुवृत्त्यैव
सिद्धे सत्यनुवृत्तिर्यको भावाय ॥
कर्तरीति च योगविभागः
श्यनः पूर्वविप्रतिषेधावचनाय ॥

**धातोः ॥ ३ । १ । ९१ ॥**

आद्ये योगे न व्यवाये तिङः स्युः
न स्यादेत्वं टेष्टितां यद्विधत्ते ॥
एशः शित्वं, यच्च लोटो विधत्ते
यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात् ॥

**भृञोऽसंज्ञायाम् ॥ ३ । १ । ११२ ॥**

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ॥
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ॥
अथवा बहुलं कृत्याः संज्ञायामिति तत् स्मृतम् ॥
यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा ॥

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ३ । १ । ११४ ॥**

सूसर्तिभ्यां सर्तेरुत्वं सुवतेर्वा रुडागमः ॥

**अमावस्यदन्यतरस्याम् ॥ ३।१।१२२ ॥**

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ॥
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥

**छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छयप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ ३ । १ । १२३ ॥**

निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् ॥
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥ १ ॥
ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः ॥
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ २ ॥

**कर्मण्यण् ॥ ३ । २ । १ ॥**

न त्वम्भोभिगमा ।

---

१ [ ] एतच्चिन्हिता भाष्यश्लोका इति केचित्। वार्तिकसदृशा इत्यत्रोपाचाः ॥

**कर्तरि भुवः खिष्णुच्खुकञौ ॥३।२।५७॥**

इष्णुच इकारादित्वमुदात्तत्वात्कृतं भुवः ॥
नञस्तु स्वरसिध्यर्थमिकारादित्वमिष्णुचः ॥

**उपेयिवाननाश्वाननूचानश्च॥३।२।१०९॥**

नोपेयिवान्निपात्यो द्विर्वचनादिड्भविष्यति परत्वात्॥
अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥ १ ॥
अस्य पुनरिट्च नित्यो द्विर्वचनं च विहन्यते ह्यस्य ॥
द्विर्वचने चैकाच्त्वात्, तस्मादिड्बाधते द्वित्वम् ॥२॥

**परोक्षे लिट् ॥ ३ । २ । ११५ ॥**

परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।
उत्वं वादेः परादक्ष्णः, सिद्धं वाऽस्मान्निपातनात् ॥

**लट् स्मे ॥ ३ । २ । ११८ ॥**

स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति ॥
न स्म पुराद्यतन इति ब्रुवता कात्यायनेनेह ॥ १ ॥
अनुवृत्तिरनद्यतनस्य
लट् स्म इति तत्र नास्ति नञ्कार्यम् ॥
अपरोक्षानद्यतनौ
ननौ च नन्वोश्च विनिवृत्तौ ॥ २ ॥
न पुराद्यतन इति भवे-
देतद्वाच्यं तत्र चापि लुङ्ग्रहणम् ॥
अथ बुद्धिरविशेषात्स्मपुरा
हेतू तत्र चापि शृणु भूयः ॥ ३ ॥
अपरोक्षे चेत्येष प्राक्पुरिसंशब्दनादविनिवृत्तः ॥
सर्वत्रानद्यतनस्तथा सति नञा किमिह कार्यम् ॥४॥
स्मादावपरोक्षे चेत्यकार्यमिति शक्यमेतदपि विद्धि
शक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र ॥५॥
स्यादेषा तव बुद्धिः स्मलक्षणेऽप्येवमेव सिद्धमिति ॥
लट् स्म इति भवेन्नार्थस्तस्मात्कार्यं परार्थं तु ॥ ६ ॥

**तौ सत् ॥ ३ । २ । १२७ ॥**

अवधारणं लटि विधानं योगविभागतश्च विहितं सत्
उत्तरयोर्लादेशे वावचनं साधनाभिधानञ्च ॥

**ग्लाजिस्थश्च ग्स्नुः ॥ ३ । २ । १३९ ॥**

क्ङोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्वशासनात् ॥
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः ॥

**मतिबुद्धिपूजार्थेभ्यश्च ॥ ३।२।१८८ ॥**

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ॥
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ १ ॥
हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ ॥
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥ २ ॥

**उणादयो बहुलम् ॥ ३ । ३ । १ ॥**

बाहुलकं प्रकृतेस्तनुदृष्टेः,प्रायसमुच्चयनादपि तेषाम्॥
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु॥

नाम च धातुजमाह निरुक्ते
व्याकरणे शकटस्य च तोकम् ॥
यन्न विशेषपदार्थसमुत्थं
प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ १ ॥

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ ३ । ३ । १६१ ॥**

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ॥
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥

**करणे हनः ॥ ३ । ४ । ३७ ॥**

हन्तेः पूर्वविप्रतिषेधो वार्तिकेनैव ज्ञापितः ॥

---

**अथ चतुर्थोऽध्यायः ॥**

**स्त्रियाम् ॥ ४ । १ । ३ ॥**

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥
लिङ्गात् स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप् प्रसज्यते ॥
नत्वं खरकुटीः पश्य, खट्वावृक्षौ न सिध्यतः ॥
नापुंसकं भवेत्तस्मिन्, तदभावे नपुंसकम् ॥
असत्तु मृगतृष्णावत्, गन्धर्वनगरं यथा ॥
आदित्यगतिवत्सन्न, वस्त्रान्तर्हितवच्च तत् ॥
तयोस्तु तत्कृतं दृष्ट्वा, यथाऽऽकाशेन ज्योतिषः ॥
अन्योन्यसंश्रयं त्वेतत्, प्रत्यक्षेण विरुध्यते ॥
तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति ॥
संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः ॥
संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान् ॥
तस्योक्तौ लोकतो नाम, गुणो वा लुपि युक्तवत् ॥

**न षट्स्वस्रादिभ्यः ॥ ४ । १ । १० ॥**

षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ॥
प्रत्याहाराच्चापा सिद्धम्, दोषस्त्वित्वे, तस्मान्नोभौ ॥

**सर्वत्र लोहितादिकतन्तेभ्यः ॥४।१।१८॥**

कण्वात्तु शकलः पूर्वः, कतादुत्तर इष्यते ॥
पूर्वोत्तरौ तदन्तादी, ष्फाणौ तत्र प्रयोजनम् ॥

**अन्तर्वत्पतिवतोर्नुक् ॥ ४ । १ । ३२ ॥**

अन्तर्वत्पतिवतोस्तु, मतुब्वत्वे निपातनात् ॥
गर्भिण्यां जीवपत्यां च, वा च च्छन्दसि नुग्भवेत् ॥

**वोतो गुणवचनात् ॥ ४ । १ । ४४ ॥**

[1][ सत्वे निविशतेऽपैति पृथक् जातिषु दृश्यते ॥
आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः ॥
उपैत्यन्यज्जहात्यन्यत् दृष्टो द्रव्यान्तरेष्वपि ॥
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥]

---

१ [ ] एतच्चिह्निता भाष्यश्लोकाः । वार्तिकसदृशा इत्यत्रोपात्ताः ॥

## पुंयोगादाख्यायाम् ॥ ४ । १ । ४८ ॥

त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च ।
एतच्छिवं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ४ । १ । ५४ ॥

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ॥
अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथा युतम् ॥

## जातेरस्त्रीविषयादयोपधात् ॥४।१।६३॥

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥
प्रादुर्भावविनाशाभ्यां सत्वस्य युगपद् गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ४ । १ । ७८ ॥

प्रकर्षे चेत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु ।
आम्विधिः केन ते न स्यात् प्रकर्षे यद्ययं तमः ॥
उद्गतस्य प्रकर्षोऽयं गत्रशब्दोऽत्र लुप्यते ॥
नाव्ययार्थप्रकर्षोऽस्ति धात्वर्थोऽत्र प्रकृष्यते ॥
उद्गतोऽपेक्षते किंचित् त्रयाणां द्वौ किलोद्गतौ ॥
चतुष्प्रभृतिकर्तव्यो वाराह्यायां न सिध्यति ॥
भिद्यतेऽस्य स्वरस्तेन विधिश्चामो न लक्ष्यते ।
शब्दान्तरमिदं विद्याद् दृष्टमभ्यन्तरं त्रिषु ॥
अनुबन्धौ त्वया कार्यौ चावर्थं टाब्विधिर्मम ॥
उक्तेऽपि हि भवन्त्येते ।
अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति ॥
त्वयाऽप्यत्र विशेषार्थं कर्तव्यं स्याद् विशेषणम् ॥
अक्रियैव विशेषोऽत्र सानुबन्धो विशेषवान् ॥
पाद्यायां ते कथं न स्यात्, एको मे स्याद्विशेषणम् ॥
अन्यस्मिन् सूत्रभेदः स्यात्, षिति लिङ्गं प्रसज्यते ॥
ङिति चेत्क्रीयते दोषः, व्यवधानान्न दुष्यति ॥
योऽनन्तरो न धातुः सः, यो धातुः सोऽननन्तरः ॥
न चेदुभयतः साम्यमुभयत्र प्रसज्यते ॥

यङा विशेष्येत यदीह धातु-
र्यङ् धातुना वा यदि तुल्यमेतत् ॥
उभौ प्रधानं यदि नात्र दोषः,
तथा प्रसार्येत तु वाक्पतिस्ते ॥

धातुप्रकरणस्येह न स्थानमिति निश्चयः ॥
आत्वार्थं यदि कर्तव्यं तत्रैवैतत्करिष्यते ॥
उपदेशे यदेजन्तं तस्य चेदात्वमिष्यते ॥
उद्देशो रूढिशब्दानां तेन गोर्न भविष्यति ॥

## गोत्रेऽलुगचि ॥ ४ । १ । ८९ ॥

भूम्नीति च लुक् प्राप्तो बाह्ये चार्थे विधीयतेऽजादिः ।
बहिरङ्गमन्तरङ्गाद् विप्रतिषेधादयुक्तं स्यात् ॥
भूम्नि प्राप्तस्य लुको यदजादौ तद्धितेऽलुकं शास्ति ॥
एतद् ब्रवीति कुर्वन् समानकालावलुग्लुक् च ॥
यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोऽस्य
लुग्वाऽलुकः प्रसङ्गं प्रतीक्षते छेऽलुगस्य तथा ॥

## यूनि लुक् ॥ ४ । १ । ९० ॥

राजन्यात् वुञ् मनुष्याच्च ज्ञापकं लौकिकं परम् ॥

## तस्यापत्यम् ॥ ४ । १ । ९२ ॥

तस्येदमित्यपत्येऽपि, बाधनार्थं कृतं भवेत् ॥
उत्सर्गः शेष एवासौ, वृद्धान्यस्य प्रयोजनम् ॥

## एको गोत्रे ॥ ४ । १ । ९३ ॥

अपत्यं समुदायश्चेन्नियमोऽत्र समीक्षितः ।
तस्मिन्त्सुबहवः प्राप्ता नियमोऽस्य भविष्यति ॥

## स्त्रीभ्यो ढक् ॥ ४ । १ । १२० ॥

वडवाया वृषे वाच्ये, अण् कुञ्चाकोकिलात्स्मृतः ॥
आरक् पुंसि ततोऽन्यत्र, गोधाया ढ्रक् विधौ स्मृतः ॥

## मनोर्जातावञ्यतौ षुक् च ॥४।१।१६१॥

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ॥
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

## वाऽन्यस्मिन्सपिण्डे स्थविरतरे जीवति ॥ ४ । १ । १६५ ॥

गोत्रयूनोः समावेशे को दोषस्तत्कृतं भवेत् ॥
यस्कादिषु न दोषोऽस्ति न यूनीत्यनुवर्तनात् ॥
दोषोऽत्रिबिदपञ्चाला न यूनीत्यनुवर्तनात् ॥
कण्वादिषु न दोषोऽस्ति न यून्यस्ति ततः परम् ॥
एको गोत्रे प्रतिपदं, गोत्राद्यूनि च तत्स्मरेत् ॥
राजन्याद्वुञ् मनुष्याच्च ज्ञापकं लौकिकं परम् ॥

## दृष्टं साम ॥ ४ । २ । ७ ॥

दृष्टे सामनि जाते चाप्यण् ड्डिर्वा विधीयते ॥
तीयादीकक्, न विद्यायाः, गोत्रादङ्कवदिष्यते ॥
सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ॥
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥

## कौमारापूर्ववचने ॥ ४ । २ । १३ ॥

कौमारापूर्ववचने कुमार्या अण् विधीयते ॥
अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥

## खण्डिकादिभ्यश्च ॥ ४ । २ । ४५ ॥

अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ॥
गोत्राद्वुञ् न च तद्गोत्रं, तदन्तान्न स सर्वतः ॥
ज्ञापकं स्यात्तदन्तत्वे, तथा चापिशलेर्विधिः ॥
सेनायां नियमार्थं वा, यथा बाध्येत वाऽञ् वुञा ॥

**क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ४।२।६० ॥**

अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः ॥
इकन् पदोत्तरपदात्, शतषष्टेः षिकन् पथः ॥

**कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु ॥ ४ । २ । ९६ ॥**

कुक्षिग्रीवातु कन् ढञः ॥

**अव्ययात्त्यप् ॥ ४ । २ । १०४ ॥**

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ॥

**अन्तः पूर्वपदात् ठञ् ॥ ४ । ३ । ६० ॥**

समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ॥
ऊर्ध्वं दमाच्च देहाच्च, लोकोत्तरपदस्य च ॥ १ ॥
मुखपार्श्वतसोरियः, कुग्जनस्य परस्य च ॥
ईयः कार्योऽथ मध्यस्य, मण्मीयौ चापि प्रत्ययौ ॥२॥
मध्यो मध्यं दिनण् चास्मात्, स्थाम्नो लुगजिनात्तथा॥
बाह्यो दैव्यः पाञ्चजन्यो गांभीर्यं च ञ्य इष्यते ॥३॥

**विदूराञ्ञ्यः ॥ ४ । ३ । ८४ ॥**

वालवायो विदूरं च प्रकृत्यन्तरमेव वा ॥
न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥

**तस्य विकारः ॥ ४ । ३ । १३३ ॥**

बाधनार्थं कृतं भवेत् ॥
उत्सर्गः शेष एवासौ ॥

---

**अथ पञ्चमोऽध्यायः ॥**

**आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ ५ । १ । १९ ॥**

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ॥
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥
भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्च न ॥

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥५।२।३७॥**

प्रमाणं प्रत्ययार्थौ न, तद्वति, अस्येति वर्तनात् ॥
प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ॥
प्रमाणे लः, द्विगोर्नित्यं,डट् स्तोमे, शच्शनोर्डिनिः ॥
प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये ॥

**यत्तदेतेभ्यः परिमाणे वतुप् ॥५।२।३९॥**

डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ॥
मात्राद्यप्रतिघाताय, भावः सिद्धश्च डावतोः ॥

**तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ५ । २ । ४५ ॥**

अधिके समानजातौ इष्टं शतसहस्रयोः ॥
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ॥

**संख्याया गुणस्य निमाने मयट् ॥५।२।४७॥**

निमेये चापि दृश्यते ॥

**तदस्यास्त्यस्मिन्निति मतुप् ॥ ५।२।९४ ॥**

( शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ॥
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥ )
भूमनिन्दप्रशंसासु नित्ययोगेऽतिशायने ॥
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥
सन्मात्रे चर्षिदर्शनात् ॥

**अत इनि ठनौ ॥ ५ । २ । ११५ ॥**

एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ ॥

**कुत्सिते ॥ ५ । ३ । ७४ ॥**

कुत्सितस्यानुकम्पायां भविष्यत्यनुकम्पितस्य कुत्सायाम् ॥
स्वार्थमभिधाय शब्दो
निरपेक्षो द्रव्यमाह समवेतम् ॥
समवेतस्य च वचने लिङ्गं वचनं विभक्तिं च ॥
अभिधाय तान्विशेषानपेक्षमाणश्च कृत्स्नमात्मानम् ॥
प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः ॥

**ठाजादावूर्ध्वं द्वितीयादचः ॥५।३।८३॥**

चतुर्थात्, अनजादौ च, लोपः पूर्वपदस्य च ॥
अप्रत्यये तथैवेष्टः, उवर्णाल्ल इलस्य च ॥

---

**अथ षष्ठोऽध्यायः ॥**

**बन्धुनि बहुव्रीहौ ॥ ६ । १ । १४ ॥**

मातज्मातृकमातृषु ष्यङ् प्रसार्यो विभाषया ॥

**इको यणचि ॥ ६ । १ । ७७ ॥**

जश्त्वं न सिद्धं यणमत्र पश्य
यश्चापदान्तो हलचश्च पूर्वः ॥
दीर्घस्य यण्, ह्रस्व इति प्रवृत्तं
सम्बन्धवृत्त्या गुणवृद्धिबाध्यः ॥ १ ॥
नित्ये च यः शाकलभाक्समासे
तदर्थमेतद्भगवांश्चकार ॥
सामर्थ्ययोगान्न हि किंचिदस्मिन्पश्यामि शास्त्रे यदनर्थकं स्यात् ॥ २ ॥

**आद्गुणः ॥ ६ । १ । ८७ ॥**

आदेकश्चेद्गुणः केन, स्थानेऽन्तरतमो हि सः ॥
एदैतौ नैचि तावुक्तौ, ऋकारो नोभयान्तरः ॥ १ ॥
आकारो नर्ति धातौ सः, प्लुतश्च विषये स्मृतः ॥
आन्तर्यात्त्रिचतुर्मात्राः, तपरत्वान्न ते स्मृताः ॥ २ ॥

**तस्माच्छसो नः पुंसि ॥ ६ । १ । १०३ ॥**

नत्वं पुंसां बहुत्वे चेत्पुंशब्दादिष्यते स्त्रियाम् ॥
नपुंसके तथैवेष्टं, स्त्रीशब्दाच्च प्रसज्यते ॥ १ ॥

पुंशब्दादिति चेदिष्टं स्थूरापत्यं न सिध्यति ॥
कुण्डिन्या अररकायाः, पुंस्प्राधान्यात् प्रसिध्यति ॥२॥
पुंस्प्राधान्ये त एव स्युर्ये दोषाः पूर्वचोदिताः ॥
तस्मादर्थे भवेन्नत्वं वध्रिकादिषु युक्तवत् ॥ ३ ॥

**दिव उत् ॥ ६ । १ । १३१ ॥**

तदर्थं तपरः कृतः ॥

**अनुदात्तं पदमेकवर्जम् ॥ ६।१।१५८ ॥**

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ॥
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥ १ ॥
यौगपद्यं तवै सिद्धं, पर्यायो रिक्तशासनात् ॥
उदात्ते ज्ञापकं त्वेतत्, स्वरितेन समाविशेत् ॥ २ ॥

**बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ ६ । २ । १ ॥**

बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् ॥
नञ्सुभ्यां नियमार्थं तु, परस्य शितिशासनात् ॥१॥
क्षेपे विधिर्नञोऽसिद्धः, परस्य नियमो भवेत् ॥
अन्तश्च वाप्रिये सिद्धः, सम्भवात्, प्रकृताद्विधेः ॥२॥
बहुव्रीहावृते सिद्धम्, इष्टतश्चावधारणम् ॥
द्विपादिष्टेर्वितस्तेश्च पर्यायो न प्रकल्पते ॥ ३ ॥
उदात्ते ज्ञापकं त्वेतत्, स्वरितेन समाविशेत् ॥

**सर्वं गुणकात्स्न्र्ये ॥ ६ । २ । ९३ ॥**

गुणात्तरेण समासस्तरलोपश्च ॥

**आन्महतः समानाधिकरणजाती-
ययोः ॥ ६ । ३ । ४६ ॥**

अन्यप्रकृतिस्त्वमहान्भूतप्रकृतौ महान्महत्येव ॥
तस्मादात्वं न स्यात्, पुंवत्तु कथं भवेदत्र ॥ १ ॥
अमहति महान्हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम्।
तस्मात् सिध्यति पुंवत्, निवर्त्यमात्वं तु मन्यन्ते ॥२॥
यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्वम् ॥
कर्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ॥ ३ ॥
शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः ॥
तस्मात् सिध्यति तस्मिन्, प्रधानतो वा यतो वृत्तिः॥४

**नामि ॥ ६ । ४ । ३ ॥**

नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड्भवेत् ॥
वचनाद्यत्र तन्नास्ति, नोपधायाश्च चर्मणाम् ॥

**सौ च ॥ ६ । ४ । १३ ॥**

दीर्घविधिर्य इहेन्प्रभृतीनां
तं विनियम्य सुटीति सुविद्वान् ॥
शौ नियमं पुनरेव विदध्यात्
भ्रूणहनीति तथाऽस्य न दुष्येत् ॥ १ ॥
शास्सि निवर्त्य सुटीत्यविशेषे
शौ नियमं कुरु वाऽप्यसमीक्ष्य ॥
दीर्घविधेरुपधानियमान्मे-
हन्त यि दीर्घविधौ च न दोषः ॥ २ ॥
सुट्यपि वा प्रकृतेऽनवकाशः
शौ नियमोऽप्रकृतप्रतिषेधे ॥
यस्य हि शौ नियमः सुटि नैत-
त्तेन न तत्र भवेद्विनियस्यम् ॥ ३ ॥

**च्छ्वोः शूडनुनासिके च ॥ ६ । ४ । १९ ॥**

शूट्त्वे क्ङिदधिकारश्चेच्छः षत्वं, तुक् प्रसङ्गश्च ॥
निवृत्ते दिव ऊड्भावः, तदर्थं तपरः कृतः ॥

**असिद्धवदत्राभात् ॥ ६ । ४ । २२ ॥**

उत्तु कृञः कथमोर्विनिवृत्तौ
णेरपि चेटि कथं विनिवृत्तिः ॥
अब्रुवतस्तव योगमिमं स्यात्
लुक्च चिणो नु कथं न तरस्य ॥ १ ॥
यं भगवान् कृतवांस्तु तदर्थं
तेन भवेदिटि णेर्विनिवृत्तिः ॥
य्वोरपि ये च तथाऽप्यनुवृत्तौ,
चिण्लुकि च क्ङित एव हि लुक्स्यात् ॥२॥

**आर्धधातुके ॥ ६ । ४ । ४६ ॥**

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ॥
आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि ॥

**स्यसिच्सीयुट्तासिषु भावकर्मणोरुप-
देशेऽज्झनग्रहदृशां वा चिण्व-
दिट् च ॥ ६ । ४ । ६२ ॥**

वृद्धिश्चिण्वद्युक्च हन्तेश्च घत्वं
दीर्घश्चोक्तो यो मितां वा चिणीति ॥
इट्चासिद्धस्तेन मे लुप्यते णि-
र्नित्यश्चायं वलिनिमित्तो विघाती ॥

**न माङ्योगे ॥ ६ । ४ । ७४ ॥**

अजादीनां अटा सिद्धं, वृध्यर्थमिति चेदटः ॥
अस्वपो हसतीत्यत्र, धातौ वृद्धिमटः स्मरेत् ॥ १ ॥
पररूपं गुणेनाटः, ओमाङोरुसि तत्समम् ॥
छन्दोर्थं बहुलं दीर्घम्, इणस्त्योरन्तरङ्गतः ॥ २ ॥

**अत उत्सार्वधातुके ॥ ६ । ४ । ११० ॥**

अनुप्रयोगे तु भुवाऽस्त्यबाधनं
स्मरन्ति कर्तुर्वचनान्मनीषिणः ॥
लोपे द्विर्वचनासिद्धिः ।
स्थानिवदिति चेत्कृते भवेद्दित्वे ॥ १ ॥
नैवं सिध्यति कस्मात्प्रत्यङ्गत्वाद्भवेद्धि पररूपम् ॥
तस्मिंश्च कृते लोपो दीर्घत्वं बाधकं भवेत्तत्र ॥ २ ॥

## इद्दरिद्रस्य ॥ ६ । ४ । ११४ ॥

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ॥
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥ १ ॥

## अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६ । ४ । १२० ॥

नशिमन्योरलिट्येत्वं, छन्दस्यमिपचोरपि ॥
अनेशं मेनकेत्येतद्व्येमानं लिङि पेचिरन् ॥ १ ॥
यजू आयेजे वपू आवेपे दम्भ एत्त्वमलक्षणम् ॥
श्नसोरत्वे तकारेण ज्ञाप्यते त्वेत्त्वशासनम् ॥ २ ॥

## अर्वणस्त्रसावनञः ॥ ६ । ४ । १२७ ॥

## मघवा बहुलम् ॥ ६ । ४ । १२८ ॥

अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ॥
मतुब्वन्योर्विधानाच्च, छन्दस्युभयदर्शनात् ॥ १ ॥

## सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ ६ । ४ । १४९ ॥

तसीत्येष न वक्तव्यो दृष्टो दाशतयेऽपि हि ॥
द्यौ लोपोऽन्तिषदित्यत्र, तथाऽद्यौ येऽन्त्यथर्वसु ॥

---

## अथ सप्तमोऽध्यायः ॥

## अतो भिस ऐस् ॥ ७ । १ । ९ ॥

कृत एत्वे भौतपूर्व्यात्, ऐस्तु नित्यस्तथा सति ॥
एत्वं भिसि परत्वाच्चेदत ऐस्क भविष्यति ॥
कृत एत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

## अष्टाभ्य औश् ॥ ७ । १ । २१ ॥

औशघौ, अस्तु लुक्तत्र, षड्भ्योऽप्येवं प्रसज्यते ॥
अपवादः, यस्य विषये, यो वा तस्मादनन्तरः ॥ १ ॥
आत्वं यत्र तु तत्रौश्त्वं, तथा ह्यस्य ग्रहः कृतः ॥
स्वमोर्लुक् च त्यदादीनां कृते ह्यत्वे न लुग्भवेत् ॥ २ ॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ७ । १ । ३७ ॥

किं नञः प्रतिषेधेन न गतिर्न च कारकम् ।
यावता नञि पूर्वे तु ल्यब्भावो न भविष्यति ॥
प्रतिषेधात्तु जानीमस्तत्पूर्वं नेह गृह्यते ।
प्रत्ययग्रहणे यावत्तावद्भवितुमर्हति ॥

## अमो मश् ॥ ७ । १ । ४० ॥

अमो मश्च मकारस्य, वचनादन्यबाधनम् ॥
द्विमकार ईडपृक्के, यकारादौ न दुष्यति ॥ १ ॥

## इकोऽचि विभक्तौ ॥ ७ । १ । ७३ ॥

इकोऽचि व्यञ्जने मा भूत्, अस्तु लोपः,स्वरः कथम् ॥
स्वरो वै श्रूयमाणेऽपि, लुप्ते किं न भविष्यति ॥ १ ॥

रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ॥
नुड्वाच्य उत्तरार्थं तु इह किंचित्त्रपो इति ॥ २ ॥

## तृज्वत्क्रोष्टुः ॥ ७ । १ । ९५ ॥

## स्त्रियां च ॥ ७ । १ । ९६ ॥

तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिर्न सिध्यति ॥
ईकारे तन्निमित्तः सः, गौरादिषु न पठ्यते ॥
तेनैव भावनं चेत्स्यादनिष्टोऽपि प्रसज्यते ॥

## वदव्रजहलन्तस्याचः ॥ ७ । २ । ३ ॥

एकाचस्तौ वलीति वा ॥

## त्यदादीनामः ॥ ७ । २ । १०२ ॥

त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः ॥
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ॥ १ ॥
अपि वोपसमस्तार्थमत्वाभावात्कृतं भवेत् ॥
टिलोपश्चाबभावार्थः कर्तव्य इति तत्स्मृतम् ॥ २ ॥
अथवा शेषसप्तम्या शेषे लोपो विधीयते ॥
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥ ३ ॥

## अदस औ सुलोपश्च ॥ ७ । २ । १०७ ॥

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ॥
ह्रस्वाल्लुप्येत संबुद्धिः, न हलः, प्रकृतं हि तत् ॥ १ ॥
आप एत्वं भवेत्तस्मिन्, न झलीत्यनुवर्तनात् ॥
प्रत्ययस्थाच्च कादित्वं, शीभावश्च प्रसज्यते ॥ २ ॥

## न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ७ । ३ । ३ ॥

य्वाभ्यां परस्य वृद्धित्वम्, अपवादौ वृद्धेर्हितौ ॥
नित्यावैचौ तयोर्वृद्धिः, किमर्थं नेति शिष्यते ॥ १ ॥
यत्र य्वाभ्यां परा वृद्धिस्तत्राध्यश्वेर्यथा न तौ ॥
अचामादेर्य्वाभ्यां हि तौ, कथं द्व्याशीतिके न तौ ॥ २ ॥
यत्र वृद्धिरचामादेस्तत्रैचावत्र घोर्हि सा ॥
अथ कस्मात्पदान्ताभ्यां, यथेणो न भवेद्यणः ॥ ३ ॥

## पुगन्तलघूपधस्य च ॥ ७ । ३ । ८६ ॥

संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ॥
विध्यपेक्षं लघोश्चासौ, कथं कुण्डिर्न दुष्यति ॥ १ ॥
धातोर्नुमः, कथं रञ्जेः, स्यन्दिश्रन्थ्योर्निपातनात् ॥
अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ २ ॥
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ॥
कुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥ ३ ॥

## शाच्छोरन्यतरस्याम् ॥ ७ । ४ । ४१ ॥

( देवत्रातो गलोग्राह इति योगे च सद्विधिः ॥ )
( मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥ )

**दो दद्घोः ॥ ७ । ४ । ४६ ॥**

( अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ॥)
( सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥ )
तान्ते दोषो दीर्घत्वं स्यात्, दान्ते दोषो निष्ठानत्वम् ॥
धान्ते दोषो धत्वप्राप्तिः, थान्तेऽदोषस्तस्मात्थान्तः ॥

**अपो भि ॥ ७ । ४ । ४८ ॥**

स्ववस्स्ववतसोर्मास उषसश्च त इष्यते ॥

---

## अथाष्टमोऽध्यायः ॥

**कुत्सने च सुप्यगोत्रादौ ॥ ८।१।६९ ॥**

सुपि कुत्सने क्रियाया
मकारलोपोऽतिङीति चोक्तार्थम् ॥
पूतिश्च चानुबन्धो वि-
भाषितं चापि बह्वर्थम् ॥
गतिना तु विशिष्टस्य गतिरेव विशेषकः ।
साधने केन ते न स्याद्बाह्यमाभ्यन्तरो हि सः ॥

**धि च ॥ ८ । २ । २५ ॥**

धिसकारे सिचो लोपः, चकाद्धीति प्रयोजनम् ॥
आशाध्वं तु कथं ते स्यात्, जश्त्वं सस्य भविष्यति॥१॥
सर्वत्रैवं प्रसिद्धं स्यात्, श्रुतिश्चापि न भिद्यते ॥
लुङश्चापि न मूर्धन्ये ग्रहणं, सेटि दुष्यति ॥ २ ॥
घसिभस्योर्न सिध्येत्तु, तस्मात्सिज्ग्रहणं न तत् ॥
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ॥

**अनुपसर्गात् फुल्लक्षीबकृशो-
ल्लाघाः ॥ ८ । २ । ५५ ॥**

कृशेः क एष विहित इगुपधात्,
स्वरे हि दोषो भवति परिकृशे ॥
पदस्य लोपो विहित इति मतम्,
जगत्यनूना भवति हि रुचिरा ॥

**वित्तो भोगप्रत्यययोः ॥ ८ । २ । ५८ ॥**

यस्य विदेः श्नशकौ तपरत्वे
तनवचने तदु वाप्रतिषेधौ ॥
श्यन्विकरणान्न विधिश्छिदितुल्यो
लुग्विकरणो वलि पर्यवपन्नः ॥
( यवोर्विदोः श्नशावुक्तौ तयोर्नत्वस्य वा नञौ
ययोस्तु श्यँलुकौ ताभ्यां छिदिवच्चेट्च इष्यते
वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः )

**नित्यं समासेऽनुत्तरपद-
स्थस्य ॥ ८ । ३ । ४५ ॥**

नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः ॥
तस्मिन्षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥ १ ॥
ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ॥
तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥ २ ॥
अथ चेत्कृदन्तमेतत्ततोऽधिके नैव मे भवेत् प्राप्तिः॥
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥ ३ ॥
अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् ॥
सिद्धं च मे समासे, प्रतिषेधार्थस्तु यत्नोऽयम् ॥४॥

**सुविनिर्दुर्भ्यः सुपिसूति-
समाः ॥ ८ । ३ । ८८ ॥**

सुपेः षत्वं स्वपेर्मा भूत्, विसुष्वापेति केन न ॥
हलादिशेषान्नसुपिः, इष्टं पूर्वं प्रसारणम् ॥ १ ॥
स्वादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः ॥
अनर्थके विषुषुपुः, सुपिभूतो द्विरुच्यते ॥ २ ॥

**अनितेः ॥ ८ । ४ । १९ ॥**

**अन्तः ॥ ८ । ४ । २० ॥**

यो वा तस्मादनन्तरः ॥

**उभौ साभ्यासस्य ॥ ८ । ४ । २१ ॥**

साभ्यासस्य द्वयोरिष्टम् ॥

**उपसर्गादनोत्परः ॥ ८ । ४ । २८ ॥**

भाविन्यप्योति नेष्यते ॥

**अ अ इति ॥ ८ । ४ । ६८ ॥**

आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः ॥
आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ ॥ १ ॥

**॥ इत्यष्टमोऽध्यायः ॥**



॥ श्रीः ॥

# ॥ अथ षष्ठाध्यायभाष्योपात्तसूत्रसूचिः ॥


| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| **अ** | |
| अकर्मधारये राज्यम् ॥ ६ । २ । १३० ॥ | २०२ |
| अकः सवर्णे दीर्घः ॥ ६ । १ । १०१ ॥ | १०८ |
| अङ्गस्य ॥ ६ । ४ । १ ॥ | २६७ |
| अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥६।४।७७॥ | ३३१ |
| अजादेर्द्वितीयस्य ॥ ६ । १ । २ ॥ | १२ |
| अज्झनगमां सनि ॥ ६ । ४ । १६ ॥ | २८० |
| अत उत् सार्वधातुके ॥ ६ । ४ । ११० ॥ | ३४१ |
| अत एकहल्मध्येऽनादेशादेर्लिटि ॥६।४।१२०॥ | ३३४ |
| अतेरकृत्पदे ॥ ६ । २ । १९१ ॥ | २०९ |
| अतो रोरप्लुतादप्लुते ॥ ६ । १ । ११३ ॥ | १२३ |
| अतो लोपः ॥ ६ । ४ । ४८ ॥ | ३१२ |
| अत्वसन्तस्य चाधातोः ॥ ६ । ४ । १४ ॥ | २७८ |
| अनिगन्तोऽञ्चतौ वप्रत्यये ॥६।२।५२॥ | १९६ |
| अनिदितां हल उपधायाः क्ङिति ॥६।४।२४॥ | ३०० |
| अनुदात्तस्य च यत्रोदात्तलोपः ॥६।१।१६१॥ | १५१ |
| अनुदात्तं पदमेकवर्जम् ॥ ६ । १ । १५८ ॥ | १४३ |
| अनुदात्ते च ॥ ६ । १ । १९० ॥ | १७० |
| अनुदात्तोपदेशवनति० ॥ ६ । ४ । ३७ ॥ | ३०३ |
| अन्तः ॥ ६ । २ । ९२ ॥ | २०० |
| अन्तः ॥ ६ । २ । १४३ ॥ | २०५ |
| अन्तादिवच्च ॥ ६ । १ । ८५ ॥ | ८६ |
| अन्तोऽवत्याः ॥ ६ । १ । २२० ॥ | १७८ |
| अन्तोदात्तादुत्तरपदाद० ॥ ६ । १ । १६९ ॥ | १६० |
| अपरस्पराः क्रियासातत्ये ॥६।१।१४४॥ | १४० |
| अपस्पृधेथामानृचु० ॥६।१।३६॥ | ४५ |
| अपाच्च ॥ ६ । २ । १८६ ॥ | २०८ |
| अपाच्चतुष्पाच्छकुनिष्वालेखने ॥६।१।१४२॥ | १४० |
| अप्लुतवदुपस्थिते ॥ ६ । १ । १२९ ॥ | १३१ |
| अभेर्मुखम् ॥ ६ । २ । १८५ ॥ | २०८ |
| अभ्यस्तस्य च ॥ ६ । १ । ३३ ॥ | ४३ |
| अमि पूर्वः ॥ ६ । १ । १०७ ॥ | ११६ |
| अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ६ । ४ । ५५ ॥ | ३१८ |
| अर्वणस्त्रसावनञः ॥ ६ । ४ । १२७ ॥ | ३४७ |
| अलुगुत्तरपदे ॥ ६ । ३ । १ ॥ | २१२ |
| अवङ् स्फोटायनस्य ॥ ६ । १ । १२३ ॥ | १२६ |
| अव्यक्तानुकरणस्यात इतौ ॥ ६ । १ । ९८ ॥ | १०७ |
| अषष्ठ्यतृतीयास्थस्यान्यस्य० ॥६।३।९९॥ | २६० |
| अष्टनो दीर्घात् ॥ ६ । १ । १७२ ॥ | १६० |
| असिद्धवदत्राभात् ॥ ६ । ४ । २२ ॥ | २८५ |
| अहीने द्वितीया ॥ ६ । २ । ४७ ॥ | १९१ |
| **आ** | |
| आङोऽनुनासिकश्छन्दसि ॥ ६ । १ । १२६ ॥ | १२९ |
| आङ्माङोश्च ॥ ६ । १ । ७४ ॥ | ७५ |
| आचार्योपसर्जनश्चान्तेवासी ॥ ६ । २ । ३६ ॥ | १८९ |
| आज्ञायिनि च ॥ ६ । ३ । ५ ॥ | २१५ |
| आटश्च ॥ ६ । १ । ९० ॥ | ९९ |
| आतो धातोः ॥ ६ । ४ । १४० ॥ | ३५२ |
| आतो लोप इटि च ॥ ६ । ४ । ६४ ॥ | ३२७ |
| आदिः सिचोऽन्यतरस्याम् ॥ ६ । १ । १८७ ॥ | १७० |
| आदेच उपदेशेऽशिति ॥ ६ । ४ । ४५ ॥ | ४९ |
| आद्गुणः ॥ ६ । १ । ८७ ॥ | ९५ |
| आनङ् ऋतो द्वन्द्वे ॥ ६ । ३ । २५ ॥ | २२१ |
| आन्महतः समाना० ॥ ६ । ३ । ४६ ॥ | २३९ |
| आर्धधातुके ॥ ६ । ४ । ४६ ॥ | ३०७ |
| आशितः कर्ता ॥ ६ । १ । २०७ ॥ | १७७ |
| आश्चर्यमनित्ये ॥ ६ । १ । १४७ ॥ | १४१ |
| **इ** | |
| इको यणचि ॥ ६ । १ । ७७ ॥ | ७५ |
| इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥६।१।१२७॥ | १३० |
| इको वहेऽपीलोः ॥ ६ । ३ । १२१ ॥ | २६४ |
| इको ह्रस्वोऽङ्यो गालवस्य ॥ ६ । ३ । ६१ ॥ | २४७ |
| इगन्तकालकपाल० ॥ ६ । २ । २९ ॥ | १८८ |
| इच एकाचोऽम्प्रत्ययवच्च ॥ ६ । ३ । ६८ ॥ | २५० |
| इद्दरिद्रस्य ॥ ६ । ४ । ११३ ॥ | ३४३ |
| इद्वृद्धौ ॥ ६ । ३ । २८ ॥ | २२३ |
| इन्द्रे च ॥ ६ । १ । १२४ ॥ | १२७ |
| इन्हन्पूषार्यम्णां शौ ॥ ६ । ४ । १२ ॥ | २७५ |
| इष्टस्य यिट् च ॥ ६ । ४ । १५९ ॥ | ३६२ |
| **ई** | |
| ईश्चाक्रवर्मणस्य ॥ ६ । १ । १३० ॥ | १३२ |
| ईवत्याः ॥ ६ । १ । २२१ ॥ | १७८ |
| **उ** | |
| उतश्च प्रत्ययादसंयोगपूर्वात् ॥६।४।१०६॥ | ३६२ |
| उत्तरपदवृद्धौ सर्वञ्च ॥ ६ । २ । १०५ ॥ | २०० |
| उदकस्योदः संज्ञायाम् ॥ ६ । ३ । ५७ ॥ | २४६ |
| उदराश्वेषुषु ॥ ६ । २ । १०७ ॥ | २०१ |
| उदात्तयणो हल्पूर्वात् ॥ ६ । १ । १७४ ॥ | १६१ |


५१ प०पा०

| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| उपमानं शब्दार्थप्रकृतावेव ॥ ६ । २ । ८० ॥ | १९९ |
| उपसर्गादृति धातौ ॥ ६ । १ । ९१ ॥ | ९९ |
| उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ॥ ६ । २ । १७० ॥ | २०८ |
| उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ ६।३।१२२ ॥ | २६४ |
| उपोत्तमं रिति ॥ ६ । १ । २१७ ॥ | १७७ |
| उभे अभ्यस्तम् ॥ ६ । १ । ५ ॥ | १८ |
| उस्य पदान्तात् ॥ ६ । १ । ९६ ॥ | १०७ |
| **ऊ** | |
| ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ ६ । १ । १७१ ॥ | १६० |
| ऊदनोर्देशे ॥ ६ । ३ । ९८ ॥ | २५९ |
| ऊदुपधाया गोहः ॥ ६ । ४ । ८९ ॥ | ३३४ |
| **ऋ** | |
| ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ ६ । ३ । २३ ॥ | २२१ |
| ऋत्यकः ॥ ६ । १ । १२८ ॥ | १३१ |
| **ए** | |
| एकतद्धिते च ॥ ६ । ३ । ६२ ॥ | २४८ |
| एकहलादौ पूरयि० ॥ ६ । ३ । ५९ ॥ | २४६ |
| एकः पूर्वपरयोः ॥ ६ । १ । ८४ ॥ | ८० |
| एकाचो द्वे प्रथमस्य ॥ ६ । १ । १ ॥ | १ |
| एकादिश्चैकस्य चादुक् ॥ ६ । ३ । ७६ ॥ | २५५ |
| एङि पररूपम् ॥ ६ । १ । ९४ ॥ | १०६ |
| एङ्ह्रस्वात्सम्बुद्धेः ॥ ६ । १ । ६९ ॥ | ६९ |
| एत्येधत्यूठ्सु ॥ ६ । १ । ८९ ॥ | ९७ |
| एरनेकाचोऽसंयोगपूर्वस्य ॥ ६ । ४ । ८२ ॥ | ३३२ |
| **ओ** | |
| ओजःसहोऽम्भस्तमसस्तृ० ॥ ६ । ३ । ३ ॥ | २१४ |
| ओमाङोश्च ॥ ६ । १ । ९५ ॥ | १०७ |
| **औ** | |
| औतोम्शसोः ॥ ६ । १ । ९३ ॥ | १०४ |
| **क** | |
| कर्षात्वतो घञोऽन्त उदात्तः ॥६।१।१५९॥ | १५१ |
| कारकाद्दत्तश्रुतयोरेवाशिषि ॥६।२।१४८॥ | २०७ |
| कारनाम्नि च प्राचां हलादौ ॥६।३।१०॥ | २१७ |
| कारे सत्यागदस्य ॥ ६ । ३ । ७० ॥ | २५२ |
| कार्मस्ताच्छील्ये ॥ ६ । ४ । १७२ ॥ | ३७० |
| कुण्डं वनम् ॥ ६ । २ । १३६ ॥ | २०२ |
| कुरुगार्हपतरिक्तगुर्वं० ॥ ६ । २ । ४२ ॥ | १९० |
| कुलतीरतूलमूल० ॥ ६ । २ । १२१ ॥ | २०१ |
| कोः कत्तत्पुरुषेऽचि ॥ ६ । ३ । १०१ ॥ | २६० |
| क्यङ्मानिनोश्च ॥ ६ । ३ । ३६ ॥ | २३४ |
| क्रय्यस्तदर्थे ॥ ६ । १ । ८२ ॥ | ७९ |
| क्रीङ्जीनां णौ ॥ ६ । १ । ४८ ॥ | ५५ |

| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| क्षेपे ॥ ६ । २ । १०८ ॥ | २०१ |
| **ख** | |
| खित्यनव्ययस्य ॥ ६ । ३ । ६६ ॥ | २४९ |
| ख्यत्यात्परस्य ॥ ६ । १ । ११२ ॥ | १२२ |
| **ग** | |
| गतिरनन्तरः ॥ ६ । २ । ४९ ॥ | १९१ |
| गतिकारकोपपदात्कृत् ॥ ६ । २ । १३९ ॥ | २०२ |
| गमः क्वौ ॥ ६ । ४ । ४० ॥ | ३०३ |
| गोष्पदं सेवितासेवितप्रमाणेषु ॥६।१।१४५॥ | १४१ |
| ग्रन्थान्ताधिके च ॥ ६ । ३ । ७९ ॥ | २५६ |
| ग्रहिज्यावयिव्यधिवष्टि० ॥६।१।१६॥ | ३६ |
| **घ** | |
| घरूपकल्पचेलड्० ॥ ६ । ३ । ४३ ॥ | २३७ |
| घसिभसोर्हलि ॥ ६ । ४ । १०० ॥ | ३३७ |
| घुमास्थागापाजहातिसां हलि ॥ ६।४।६६ ॥ | ३२८ |
| **च** | |
| चतुरः शसि ॥ ६ । १ । १६७ ॥ | १५७ |
| चरणे ब्रह्मचारिणि ॥ ६ । ३ । ८६ ॥ | २५७ |
| चिणो लुक् ॥ ६ । ४ । १०४ ॥ | ३३९ |
| चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ६ । ४ । ९३ ॥ | ३३६ |
| चितः ॥ ६ । १ । १६३ ॥ | १५५ |
| चेलखेटकटुककाण्डं गर्हायाम् ॥ ६।२।१२६॥ | २०२ |
| चौ ॥ ६ । ३ । १३८ ॥ | २६५ |
| चौ ॥ ६ । १ । २२२ ॥ | १७८ |
| च्छ्वोः शूडनुनासिके च ॥ ६ । ४ । १९ ॥ | २८२ |
| **छ** | |
| छादेर्घेऽद्व्युपसर्गस्य ॥ ६ । ४ । ९६ ॥ | ३३६ |
| **ज** | |
| जक्षित्यादयः षट् ॥ ६ । १ । ६ ॥ | २१ |
| जनसनखनां सञ्झलोः ॥ ६ । ४ । ४२ ॥ | ३०४ |
| ज्यादादीयसः ॥ ६ । ४ । १६० ॥ | ३६२ |
| **ट** | |
| टेः ॥ ६ । ४ । १४३ ॥ | ३५४ |
| टेः ॥ ६ । ४ । १५५ ॥ | ३६१ |
| **ढ** | |
| ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ६ । ३ । १११ ॥ | २६३ |
| **ण** | |
| णेरनिटि ॥ ६ । ४ । ५१ ॥ | ३१५ |
| णो नः ॥ ६ । १ । ६५ ॥ | ६३ |
| **त** | |
| तत्पुरुषे कृति बहुलम् ॥ ६ । ३ । १४ ॥ | २१९ |
| तत्पुरुषे तुल्यार्थ० ॥ ६ । २ । २ ॥ | १८६ |
| तसिलादिष्वाकृत्वसुचः ॥ ६ । ३ । ३५ ॥ | २३१ |

| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| तस्माच्छसो नः पुंसि ॥ ६ । १ । १०३ ॥ | ११५ |
| तस्मान्नुडचि ॥ ६ । ३ । ७४ ॥ | २५४ |
| तादौ च निति कृत्यतौ ॥ ६ । २ । ५० ॥ | १९५ |
| तास्यनुदात्तेन्ङि० ॥ ६ । १ । १८६ ॥ | १६६ |
| तित्स्वरितम् ॥ ६ । १ । १८५ ॥ | १६५ |
| ति विंशतेर्डिति ॥ ६ । ४ । १४२ ॥ | ३५४ |
| तिसृभ्यो जसः ॥ ६ । १ । १६६ ॥ | १५६ |
| तुजादीनां दीर्घोऽभ्यासस्य ॥ ६ । १ । ७ ॥ | २२ |
| तुरिष्ठेमेयःसु ॥ ६ । ४ । १५४ ॥ | ३६१ |
| **थ** | |
| थलि च सेटि ॥ ६ । ४ । १२१ ॥ | ३४६ |
| थलि च सेटीडन्तो वा ॥ ६ । १ । १९६ ॥ | १७४ |
| **द** | |
| दस्ति ॥ ६ । ३ । १२४ ॥ | २६५ |
| दाण्डिनायनहास्तिनायना० ॥ ६।४।१७४ ॥ | ३७० |
| दाश्वान्साह्वान्मीढ्वांश्च ॥ ६ । १ । १२ ॥ | २८ |
| दिव उत् ॥ ६ । १ । १३१ ॥ | १३३ |
| दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ६ । २ । ८२ ॥ | १९९ |
| दीर्घात् ॥ ६ । १ । ७५ ॥ | ७५ |
| दृग्दृशवतुषु ॥ ६ । ३ । ८९ ॥ | २५८ |
| देवताद्वन्द्वे च ॥ ६ । ३ । २६ ॥ | २२२ |
| दोषो णौ ॥ ६ । ४ । ९० ॥ | ३३५ |
| द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ ६।२।१९७॥ | २०९ |
| द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ६ । ३ । ९७ ॥ | २५९ |
| द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥६।३।४७॥ | २४४ |
| **ध** | |
| धातोः ॥ ६ । १ । १६२ ॥ | १५४ |
| धातोस्तन्निमित्तस्यैव ॥ ६ । १ । ८० ॥ | ७९ |
| **न** | |
| न कोपधायाः ॥ ६ । ३ । ३७ ॥ | २३४ |
| न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥६।१।१८२॥ | १६४ |
| न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥६।२।९१॥ | १९९ |
| न मपूर्वोऽपत्येऽवर्मणः ॥ ६ । ४ । १७० ॥ | ३६८ |
| न माङ्योगे ॥ ६ । ४ । ७४ ॥ | ३२९ |
| न न्द्राः संयोगादयः ॥ ६ । १ । ३ ॥ | १७ |
| नलोपो नञः ॥ ६ । ३ । ७३ ॥ | २५४ |
| न वशः ॥ ६ । १ । २० ॥ | ४० |
| न संप्रसारणे संप्रसारणम् ॥ ६ । १ । ३७ ॥ | ४६ |
| नस्तद्धिते ॥ ६ । ४ । १४४ ॥ | ३५४ |
| नहिवृतिवृषिव्यधि० ॥ ६ । ३ । ११६ ॥ | २५८ |
| नान्तः पादमव्यपरे ॥ ६ । १ । ११५ ॥ | १२५ |
| नामन्यतरस्याम् ॥ ६ । १ । १७७ ॥ | १६३ |

| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| नामि ॥ ६ । ४ । ३ ॥ | २७४ |
| नाम्रेडितस्यान्तस्य तु वा ॥ ६ । १ । ९९ ॥ | १०८ |
| निष्ठा च द्व्यजनात् ॥ ६ । १ । २०५ ॥ | १७६ |
| निष्ठायां सेटि ॥ ६ । ४ । ५२ ॥ | ३१६ |
| **प** | |
| पञ्चम्याः स्तोकादिभ्यः ॥ ६ । ३ । २ ॥ | २१४ |
| पद्दन्नोमास्हृन्निशस० ॥ ६ । १ । ६३ ॥ | ६१ |
| पद्यत्यतदर्थे ॥ ६ । ३ । ५३ ॥ | २४६ |
| परस्य च ॥ ६ । ३ । ८ ॥ | २१५ |
| परादिश्छन्दसि बहुलम् ॥ ६ । २ । १९९ ॥ | २११ |
| परिप्रत्युपापा वर्ज्यमाना० ॥ ६ । २ । ३३ ॥ | १८८ |
| पादः पत् ॥ ६ । ४ । १३० ॥ | ३४८ |
| पादस्य पदाज्यातिगोपहतेषु ॥ ६ । ३ । ५२ ॥ | २४५ |
| पारस्करप्रभृतीनि च संज्ञायाम् ॥ ६।१।१५७ ॥ | १४३ |
| पितरामातरा च च्छन्दसि ॥ ६ । ३ । ३३ ॥ | २२३ |
| पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ६।३।४२ ॥ | २३५ |
| पूर्वोऽभ्यासः ॥ ६ । १ । ४ ॥ | १७ |
| पृषोदरादीनि यथोपदिष्टम् ॥ ६ । ३ । १०९ ॥ | २६० |
| प्यायः पी ॥ ६ । १ । २८ ॥ | ४१ |
| प्रकृत्याऽऽशिषि ॥ ६ । ३ । ८३ ॥ | २५७ |
| प्रकृत्यैकाच् ॥ ६ । ४ । १६३ ॥ | ३६५ |
| प्रथमयोः पूर्वसवर्णः ॥ ६ । १ । १०२ ॥ | १०८ |
| प्लुतप्रगृह्या अचि नित्यम् ॥ ६ । १ । १२५ ॥ | १२८ |
| **ब** | |
| बन्धुनि बहुव्रीहौ ॥ ६ । १ । १४ ॥ | ३६ |
| बन्धे च विभाषा ॥ ६ । १ । १३ ॥ | २१९ |
| बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ ६ । २ । १ ॥ | १८३ |
| बहुव्रीहौ विश्वं संज्ञायाम् ॥ ६ । २ । १०६ ॥ | २०१ |
| बहोर्नञ्वदुत्तरपदभूम्नि ॥ ६ । २ । १७५ ॥ | २०७ |
| बिभेतेर्हेतुभये ॥ ६ । १ । ५६ ॥ | ५९ |
| बिल्वकादिभ्यश्छस्य लुक् ॥ ६ । ४ । १५३ ॥ | ३६० |
| ब्राह्मोऽजातौ ॥ ६ । ४ । १७१ ॥ | ३६८ |
| **भ** | |
| भय्यप्रवय्ये च छन्दसि ॥ ६ । १ । ८३ ॥ | ८० |
| भीह्रीभृहुमदजनधनद० ॥ ६ । १ । १९२ ॥ | १७१ |
| भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ६।४।४७ ॥ | ३१० |
| **म** | |
| मघवा बहुलम् ॥ ६ । ४ । १२८ ॥ | ३४७ |
| मध्याह्गुरौ ॥ ६ । ३ । ११ ॥ | २१९ |
| मन्त्रेष्वाङ्यादेरात्मनः ॥ ६ । ४ । १४१ ॥ | ३५३ |
| मस्करमस्करिणौ वेणु० ॥ ६ । १ । १५४ ॥ | १४१ |
| महान् व्रीह्यपराह्णगृष्टी० ॥ ६।२।३९ ॥ | १८९ |

| सूत्राणि | पृष्ठाङ्काः |
|---|---|
| मातरपितरावुदीचाम् ॥ ६ । ३ । ३२ ॥ | २२३ |
| मीनातिमिनोतिदीङां ल्यपि च ॥ ६।१।५० ॥ | ५७ |
| **य** | |
| यस्य हलः ॥ ६ । ४ । ४९ ॥ | ३१३ |
| यस्येति च ॥ ६ । ४ । १४८ ॥ | ३५५ |
| ये च तद्धिते ॥ ६ । १ । ६१ ॥ | ६० |
| **र** | |
| र ऋतो हलादेर्लघोः ॥ ६ । ४ । १६१ ॥ | ३६३ |
| रात्रेः कृति विभाषा ॥ ६ । ३ । ७२ ॥ | २५४ |
| राधो हिंसायाम् ॥ ६ । ४ । १२३ ॥ | ३४७ |
| रिक्ते विभाषा ॥ ६ । १ । २०८ ॥ | १७७ |
| **ल** | |
| लिटि धातोरनभ्यासस्य ॥ ६ । १ । ८ ॥ | २३ |
| लिट्यभ्यासस्योभयेषाम् ॥ ६ । १ । १७ ॥ | ३८ |
| लोपो व्योर्वलि ॥ ६ । १ । ६६ ॥ | ६४ |
| ल्यपि लघुपूर्वस्य ॥ ६ । ४ । ५६ ॥ | ३१९ |
| **व** | |
| वर्षाभ्वश्च ॥ ६ । ४ । ८४ ॥ | ३३३ |
| वश्चास्यान्यतरस्यां किति ॥६।१।३९॥ | ४९ |
| वा घोषमिश्रशब्देषु ॥ ६ । ३ । ५६ ॥ | २४६ |
| वान्तो यि प्रत्यये ॥ ६ । १ । ७९ ॥ | ७८ |
| वाह ऊठ् ॥ ६ । ४ । १३२ ॥ | ३५० |
| विभाषा चत्वारिंशत्प्रभृतौ० ॥६।३।४९॥ | २४४ |
| विभाषाऽऽपः ॥ ६ । ४ । ५७ ॥ | ३२० |
| विभाषा लीयतेः ॥ ६ । १ । ५१ ॥ | ५९ |
| विभाषा श्वेः ॥ ६ । १ । ३० ॥ | ४२ |
| विष्वग्देवयोश्च टेरद्र्यञ्चतौ० ॥६।३।९२॥ | २५९ |
| विष्किरः शकुनौ वा ॥ ६ । १ । १५० ॥ | १४१ |
| वेरपृक्तस्य ॥ ६ । १ । ६७ ॥ | ६६ |
| वैयाकरणाख्यायां चतुर्थ्याः ॥ ६ । ३ । ७ ॥ | २१५ |
| वोपसर्जनस्य ॥ ६ । ३ । ८२ ॥ | २५६ |
| **श** | |
| शतुरनुमो नद्यजादी ॥ ६ । १ । १७३ ॥ | १६१ |
| शास इदङ्हलोः ॥ ६ । ४ । ३४ ॥ | ३०२ |
| शीर्षंश्छन्दसि ॥ ६ । १ । ६० ॥ | ६० |
| शृतं पाके ॥ ६ । १ । २७ ॥ | ४० |
| शेश्छन्दसि बहुलम् ॥ ६ । १ । ७० ॥ | ७२ |
| श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥ | ३४३ |
| श्नान्नलोपः ॥ ६ । ४ । २३ ॥ | २९९ |
| श्वयुवमघोनामतद्धिते ॥ ६ । ४ । १३३ ॥ | ३५१ |
| **ष** | |
| षत्वतुकोरसिद्धः ॥ ६ । १ । ८६ ॥ | ९३ |
| षपूर्वहन्धृतराज्ञामणि ॥ ६ । ४ । १३५ ॥ | ३५२ |
| षष्ठ्या आक्रोशे ॥ ६ । ३ । २१ ॥ | २२० |
| ष्यङः संप्रसारणं पुत्रपत्यो० ॥६।१।१३॥ | ३१ |
| **स** | |
| सदृशप्रतिरूपयोः सादृश्ये ॥ ६ । २ । ११ ॥ | १८७ |
| सन्यङोः ॥ ६ । १ । ९ ॥ | २४ |
| सनः क्तिचि लोपश्चा० ॥६।४।४५॥ | ३०७ |
| समः समि ॥ ६ । ३ । ९३ ॥ | २५८ |
| समासस्य ॥ ६ । १ । २२३ ॥ | १८० |
| संप्रसारणस्य ॥ ६ । ३ । १३९ ॥ | २६५ |
| संप्रसारणाच्च ॥ ६ । १ । १०८ ॥ | ११६ |
| सर्वस्य सुपि ॥ ६ । १ । १९१ ॥ | १७१ |
| सर्वं गुणकार्त्स्न्ये ॥ ६ । २ । ९३ ॥ | २०० |
| सहस्य सः संज्ञायाम् ॥ ६ । ३ । ७८ ॥ | २५६ |
| सहस्य सध्रिः ॥ ६ । ३ । ९५ ॥ | २५९ |
| सहिवहोरोदवर्णस्य ॥ ६ । ३ । ११२ ॥ | २६३ |
| संहितायाम् ॥ ६ । १ । ७२ ॥ | ७४ |
| संज्ञायां मित्राजिनयोः ॥ ६ । २ । १६५ ॥ | २०७ |
| संज्ञायामुपमानम् ॥ ६ । १ । २०४ ॥ | १७४ |
| सावेकाचस्तृतीयादिर्विभक्तिः ॥६।१।१६८॥ | १५८ |
| सिध्यतेरपारलौकिके ॥ ६ । १ । ४९ ॥ | ५६ |
| सुट् कात्पूर्वः ॥ ६ । १ । १३५ ॥ | १३३ |
| सूर्यतिष्यागस्त्यमत्स्यानां० ॥ ६ । ४ । १४९ ॥ | ३५७ |
| सृजिदृशोर्झल्यमकिति ॥ ६ । १ । ५८ ॥ | ५९ |
| सोर्मनसी अलोमोषसी ॥ ६ । २ । ११७ ॥ | २०१ |
| सौ च ॥ ६ । ४ । १३ ॥ | २७५ |
| स्यसिच्सीयुट्तासिषु० ॥६।४।६२॥ | ३२१ |
| स्त्रियाः पुंवद्भाषितपुंस्का० ॥६।३।३४॥ | २२४ |
| स्फिगपूतवीणाऽञ्जोऽध्व० ॥ ६ । २ । १८७ ॥ | २०९ |
| स्वपादिर्हिंसामच्यनिटि ॥ ६ । १ । १८८ ॥ | १७० |
| स्वाङ्गाच्चेतः ॥ ६ । ३ । ४० ॥ | २३५ |
| स्वापेश्चङि ॥ ६ । १ । १८ ॥ | ४० |
| **ह** | |
| हलदन्तात्सप्तम्याः संज्ञायां ॥ ६ । ३ । ९ ॥ | २१६ |
| हलः ॥ ६ । ४ । २ ॥ | २७३ |
| हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥६।१।६८॥ | ६७ |
| हुझल्भ्यो हेर्धिः ॥ ६ । ४ । १०१ ॥ | ३३७ |
| हुश्नुवोः सार्वधातुके ॥ ६ । ४ । ८७ ॥ | ३३३ |
| हृदयस्य हृल्लेखयदण्लासेषु ॥ ६ । ३ । ५० ॥ | २४४ |
| ह्रस्वनुड्भ्यां मतुप् ॥ ६ । १ । १७६ ॥ | १६३ |
| ह्रस्वस्य पिति कृति तुक् ॥ ६ । १ । ७१ ॥ | ७२ |
| ह्वः सम्प्रसारणम् ॥ ६ । १ । ३२ ॥ | ४३ |




॥ इति सूत्रसूचिः ॥

